महाकाव्यसंग्रहे संगृहीतानां काव्यानां तदीयटीकानां तत्प्रणेतृणां १९३३ खिस्ताब्दमारभ्य भविष्यन्तीषु विशारद-परीक्षासु नियतीकृतानां तदंशानां च नामादिज्ञापिका

# विषयसूची



## परिशिष्टखण्डम्



नोट—अस्यां दर्शितविषयसूच्यां अङ्कितांशौ १९३३ खिस्ताब्द-मारभ्य भविष्यन्तीसु विशारदपरीक्षासु नस्तः, अतस्तौ न पठनीयौ तस्मिन्नब्दे विशारदपरीक्षायां प्रविविक्षुभिश्छात्रैः। इति।

व्याकरणम्—यशोधन -यश एव धन यस्य स ( बहु० ) जायाप्रतिग्राहितगन्धमाल्याम्—जायतेऽस्या सन्ततिरूपेण स्वयमिति जाया, गन्धश्च माल्यञ्च गन्धमाल्ये, ( द्व० ) जायया प्रतिग्राहिते ( तत्पु० ) गन्धमाल्ये यया ताम्, ( बहु० ) प्रतिग्राहितेति णिजन्ताद् गृह्णाते कर्मणि क्त, गन्धमाल्ये इति तत्कर्म, जाया प्रयोजककर्त्री, ययेत्यन्यपदार्थो धेनुस्तु प्रयोज्यकर्त्री। धेनुर्गन्धमाल्ये प्रत्यग्रहीत्, ता जाया प्रैरिरदिति जाया धेन्वा ( यया ) गन्धमाल्ये प्रतिग्राहितवतीति कर्तरि प्रयोग । मालैव माल्यम्, स्वार्थे ष्यञ्। पीतप्रतिबद्धवत्साम्—पूर्वं पीत पश्चात् प्रतिबद्धो वत्सो यस्यास्ताम् ( बहु० )। पानम्—पीतम्, "नपुंसके भावे क्त" तत पीतमस्यास्तीति विग्रहे अर्शआद्यच्प्रत्ययो मत्वर्थीय । 'भुक्ता ब्राह्मणा' इत्यादिवत्। यद्वा-अविवक्षितकर्मत्वेनाकर्मकत्वमभ्युपगम्य "गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च" इति पा धातो कर्तरि क्त । प्रतिबद्ध इति प्रतिपूर्वाद् बध्नाते क्त, क्त्वान्नलोप । प्रजायन्त इति प्रजा, प्रपूर्वाज्जने "उपसर्गे च संज्ञायाम्" इति ड । अधिपातीत्यधिप, "आतश्चोपसर्गे" इति क । वनायेति "क्रियार्थोपपदस्य च कर्मणि स्थानिन" इति तुमुन्नर्थयोगे चतुर्थी । मुमोच-तौदादिकमुचतेर्लिटि रूपम् । अत्र-अथेत्यव्यय पूर्वोक्तानन्तर्ये, प्रजानामित्यधिपसम्बन्धे षष्ठी, अधिप इति मुमोच-क्रियाया कर्ता, लकारेण उक्ते कर्तरि प्रातिपदिकार्थमात्रे प्रथमा, प्रभाते-इति कालस्याधिकरणत्वविवक्षया सप्तमी, जायाप्रतिग्राहितगन्धमाल्यामिति पीतप्रतिबद्धवत्सामिति च धेनुविशेषणद्वयम् । वनायेत्यध्याहृतगमनक्रियाया कर्म । यशोधन इति कर्तृविशेषणम्, धेनुमिति प्रधानक्रियाया कर्म । ऋषेरिति धेनोस्सम्बन्धे षष्ठी । मुमोचेति भूतानद्यतनपरोक्षार्थक कर्तृवाचको लकार । एव सर्वत्रानुसन्धेयम् ।

व्याख्या—अथ-रात्रिनयनानन्तरम्, यशोधन -यश —कीर्तिरेव धन-द्रविण यस्य, तथाभूत, प्रजानाम्-जनानाम्, अधिप -स्वामी, राजा, दिलीप इति यावत्, प्रभाते-प्रात काले, जायाप्रतिग्राहितगन्धमाल्याम्—जायया—भार्यया —सुदक्षिणयेति यावत्, प्रतिग्राहिते-स्वीकारिते, गन्धमाल्ये-अर्चनाङ्गभूते चन्द-

---

* प्रजा स्यात्सन्ततौ जने-इत्यमर ।

नत्वजौ यया तयोक्ताम्, पीतप्रतिबद्धवत्साम्-पूर्वं पीत-कृतस्तन्यपानं पश्चाच्च स्वस्थाने प्रतिबद्धो वत्सो यस्यास्तथोक्ताम्, ऋषेः-वशिष्ठस्य, धेनुम्-गां नन्दिनीम्, वनाय-वनं गन्तुम्, मुमोच-अनिवारितगमनां चकार।

भावार्थ —दिलीपः प्रातरेव कृतस्तन्यपानं नन्दिन्या वत्सं स्वस्थाने बद्ध्वा सुदक्षिणया गन्धमाल्यादिभिः पूजितां नन्दिनीं धेनुं वने स्वच्छन्द-विहारार्थं मुमोच।

अलङ्कारादि —यशोधन इति यशसि धनत्वारोपेण निरङ्गरूपकमर्था-लङ्कारः। शब्दालङ्कारश्च छेकानुप्रासो वृत्त्यनुप्रासश्च। अमन्ततावपि सुदक्षि-णाया जायापदप्रयोगात्तस्याः पुत्रोत्पत्तियोग्यता व्यज्यते। यशोधन इति राज्ञः प्रवृत्तिरस्मिन् कर्मणि पुत्रतपःपायश पालनार्थमिति ध्वन्यते, प्रजानामधिप इति पुत्रोत्पादनस्यावश्यकतां व्यनक्ति, तेन साभिप्रायविशेषणद्वयेन परिकरोऽप्य-लङ्कारः। जायाप्रतिग्राहितेति च जायायां अनुरागं व्यनक्ति। अस्मिन् सर्गे इन्द्रवज्रोपेन्द्रवज्रयोर्योगादुपजातिश्छन्दः।

**तस्याः खुरन्यासपवित्रपांसुमपांसुलानां धुरि कीर्तनीया।**
**मार्गं मनुष्येश्वरधर्मपत्नी श्रुतेरिवार्थं स्मृतिरन्वगच्छत्॥ २॥**

अन्वय —अपांसुलानाम् धुरि कीर्तनीया मनुष्येश्वरधर्मपत्नी तस्याः खुर-न्यासपवित्रपांसुम् मार्गम् स्मृतिः श्रुतेः अर्थम् इव अन्वगच्छत्।

व्याकरणम्—अपांसुलानाम् न पांसुलानाम्, (न० त०) पांसवो दोषा आसां सन्तीति पांसुलाः, सिध्मादित्वाल्लच् प्रत्ययस्तद्धितः। मनुष्याणा-मीश्वरः, (ष०त०) तस्य धर्मपत्नी (ष० त०) मनुष्येश्वरधर्मपत्नी। धर्मार्था पत्नीति मध्यमपदलोपी तत्पुरुषः धर्मस्य पत्नीति-अश्वघासादिवत्स-म्बन्धसामान्ये षष्ठीसमासो वा। खुरन्यासपवित्रपांसुम्-खुराणां न्यासैः (ष० त०) पवित्राः (तत्पु०) पांसवो यस्मिन् (बहु०) तम्। कीर्तनीया-कीर्त-यितुं योग्येति कृतधातोर्णिजन्तात् कर्मणि 'अनीयर्'। ईश्वर-'ईष्टे' इति विग्रहे "स्थेशभासपिसकसो वरच्" इति वरच्। पत्नी-पतिशब्दस्य "पत्युर्नो यज्ञसंयोगे" इति नकारान्तादेशः, नान्तत्वात् ङीप् च। श्रुतिः, स्मृतिः-उभयत्र

* "नन्वहार क्वचित्"।

क्रमश शृणोते स्मरतेश्च क्तिन , "श्रुयजीषिस्तुभ्य करणे" इति पूर्वत्र । अन्वगच्छत्-अनुपूर्वाद्गमेर्लङि "इषुगमियमां छ" । श्रुतेरिति तत्पदयो न्याया येनोरुपमानविशेषणम् । स्मृतिरिति च धर्मपत्न्या उपमानविशेषणम् । इवेति सादृश्यार्थकमव्ययम् ।

व्याख्या—अपांसुलानाम्-पापरहितानाम्, पतिव्रतानाम्, धुरि-अग्रे, कीर्तनीया—कथयितुं योग्या-परिगणनीया, मनुष्येश्वरस्य—राज्ञो दिलीपस्य, धर्मपत्नी-भार्या-सुदक्षिणा, तस्या नन्दिन्या, *खुराणां न्यासै -निक्षेपै , पवित्रा , †पांसव -धूलयो यस्मिन्, तथोक्तम्, मार्ग-पन्थानम्, स्मृति -मन्वादिप्रणीत धर्मशास्त्रम् , श्रुते -वेदस्य, अर्थम्-वाच्य यथा, तथा अन्वगच्छत्, अनुसृतवती ।

भावार्थ —यथा स्मृति श्रुतिविहितमेव पवित्रमर्थमनुविदधती श्रुतिमनुगच्छति, तथैव पतिव्रताशिरोमणि सुदक्षिणापि तां गामनुजगाम, तस्या पादै पवित्रे पथि स्वयमपि गन्तुं प्रवृत्ता बभूवेति ।

अलङ्कारादि —उपमात्रार्थालङ्कार स्फुट । स्मृतिरुपमानम्, सुदक्षिणा चोपमेया, अनुगमन साधारणो धर्म , गो-श्रुत्यो पथ्यर्थयोश्च बिम्बप्रतिबिम्बभाव उपमाप्रयोजक । वृत्त्यनुप्रास शब्दालङ्कार । पांसुले पथि प्रवृत्तापि सुदक्षिणा स्वयमपांसुलेति विरोधाभासो व्यज्यत इति मल्लिनाथ । धर्मपत्नीति सुदक्षिणाया धर्माचरणयोग्यता व्यज्यते । यथा श्रुतिमनुगतैव स्मृति सुफला, तथा गामनुगच्छन्ती सुदक्षिणेति च व्यङ्ग्यम् ।

**निवर्त्य राजा दयितां दयालुस्तां सौरभेयीं सुरभिर्यशोभि ।**
**पयोधरीभूतचतु समुद्रां जुगोप गोरूपधरामिवोर्वीम् ॥ ३ ॥**

अन्वय —दयालु यशोभि सुरभि राजा दयिताम् निवर्त्य पयोधरीभूतचतु समुद्राम् गोरूपधराम् उर्वीमिव तां सौरभेयीं जुगोप ।

व्याकरणम्—पयोधरीभूतचतु समुद्राम्—धरन्तीति धरा , पचाद्यच । पयसां धरा पयोधरा ,(ष०त०) अपयोधरा पयोधरा यथा सम्पद्यन्ते, तथा भूता पयो-

* शफं क्लीबे खुर पुमान्—इत्यमर ।

† रेणुर्द्वयो स्त्रियां धूलि पांसुर्ना न द्वयो रज —इत्यमर ।

धरीभूता अभूततद्भावेऽर्थे "कृभ्वस्तियोगे सपद्य कर्तरि च्वि" इति च्विप्रत्यय ईत्वम् । "कुगतिप्रादय" इति समास । तथाभूता चत्वार समुद्रा यस्यास्ताम् ( बहु० ) । धेनुपक्षे तु-अनधरा अधरा सपद्यमाना अधरीभूता ( तत्पु० ) चत्वार समुद्रा यस्यास्ताम् ( बहु० ) इति मल्लिनाथ । गोरूपधराम्—गोरूपस्य ( ष०त० ) धराम् ( ष०त० ) । निवर्त्य—नि-इत्युपसर्गपूर्वकाद्वृतेर्णिजन्तात् पूर्वकाले क्त्वा तस्य समासे ल्यबादेश । दयालु —दयधातो —"स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच्" । सुरभेरपत्य सौरभेयी, ढक्प्रत्ययस्तद्धित । दयितामिति निवर्त्येत्यप्रधानक्रियाया कर्म । यशोभिरिति हेतौ तृतीया ।

व्याख्या—दयालु —कृपावान्, यशोभि —कीर्तिभि, *सुरभि —मनोज्ञ, राजा—नृपति—दिलीप दयिता-प्रिया—सुदक्षिणाम्, निवर्त्य—गमनान्निवार्य, † पयोधरीभूता —स्तनता प्राप्ता इव चत्वार समुद्रा यस्यास्तथाभूताम् यद्वा पयोधरीभूता —स्तनस्थानस्थिता, लोकाना पय प्रदत्वेन पयोधरत्वाच्च चत्वार समुद्रा ‡ यस्यास्तथाभूतामिति पृथ्वीपक्षे, पयसा दुग्धेन अधरीभूतास्तिरस्कृताश्चत्वार समुद्रा यस्यास्तथोक्ताम्-इति धेनुपक्षे, गोरूपधराम्-धेन्वाकारधारिणीम्, उर्वीम्-पृथ्वीम् इव भासमानाम्, ता-पूर्वोक्ताम्, सौरभेयीम्-सुरभे —कामधेनो सुताम्, नन्दिनीम, जुगोप-ररक्ष ।

भावार्थ —भूपति किञ्चिद्दूर गत्वा-अनुयान्ती प्रिया सुदक्षिणा 'परिश्रान्ता मा भूद्'—इत्याश्रम प्रति निवर्तयामास । स्वय च येन प्रयत्नेन समुद्रमेखला कृत्स्ना पृथ्वी रक्षति स्म, तेनैव ता गामपि ररक्ष । यत इय गोरूपधारिणी साक्षात् पृथिवीव सभाविता । अस्या स्तनाश्च समुद्रत्वेन सम्भाविता, उभयो पय प्रदत्व सम्यस्थितत्व च सादृश्यमिति ।

अलङ्कारादि —उत्प्रेक्षानामार्थालङ्कार, उपमाया गोरूपधरामिति विशेषणस्यानन्वयप्रसङ्गात् । निरुक्तसादृश्येन केवलोर्व्या अप्युपमानत्वसम्भवात् । न

---

* सुरभि स्यान्मनोज्ञेऽपि—इति विश्व ।

† स्त्रीस्तनाब्दौ पयोधरौ—इत्यमर ।

‡ समुद्रोऽब्धिरकूपार —इत्यमर ।

च गोरूपधारिण्या कयाचिदन्ययोर्व्या महेव नन्दिन्युपमातुमिष्टा, अपि त्वत्रैव गोरूपधरोर्वीत्व सम्भाव्यत इत्येव कवेरभिप्राय प्रतीयते । पयोधरीभूतचतु समुद्राम्-इति सभावनाप्रयोजकम् । स्तनेषु समुद्रत्व-सम्भावनाया गवि पृथिवीत्व-सम्भावनायामङ्गभूतत्वात् । अस्य विशेषणस्यार्थद्वय मल्लिनाथरीतिमनुरुध्यैव व्याख्यातम, वस्तुतस्तु उपमाया अत्राभावेन धर्मस्योभयत्रानुगतयेऽर्थद्वय-कल्पना व्यर्था । स्तनेषु समुद्रत्व सम्भाव्यते-इत्येव ज्याय । दयितामिति दयालुरिति च-निवर्तनहेतुतया साभिप्राये विशेषणे, सुरभिरिति सौरभेयीमिति च रक्षणे तथेति परिकर कुवलयानन्दमते। राजा सुरभि , धेनुस्तु सुरभेरपत्य-मिति रक्षा युक्तैवेत्यभिसन्धि । अनुप्रासश्च शब्दालङ्कार । ससमुद्रसकल-पृथिवीरक्षणप्रयत्नेन गोरक्षा व्यज्यते ।

**व्रताय तेनानुचरेण धेनोर्न्यषेधि शेषोऽप्यनुयायिवर्ग ।**
**न चान्यतस्तस्य शरीररक्षा स्ववीर्यगुप्ता हि मनो प्रसूति ॥ ४ ॥**

अन्वय —व्रताय धेनो अनुचरेण तेन शेष अपि अनुयायिवर्ग· न्यषेधि। तस्य शरीररक्षा च अन्यत. न (अस्ति), हि मनो. प्रसूति स्ववीर्यगुप्ता (अस्ति) ।

व्याकरणम्—स्वस्य वीर्येण ( ष० त० ) गुप्ता स्ववीर्यगुप्ता, "कर्तृ-करणे कृता बहुलम्" इति तत्पुरुष । व्रतायेति तादर्थ्ये चतुर्थी । अनुचर इति अनुचरतीति "चरेष्ट"। शिष्यत इति शेष , "अकर्तरि च कारके सञ्ज्ञायाम" इति कर्मणि घञ् । अनुयान्ति तच्छीला अनुयायिन , यातेस्ताच्छील्ये णिनि । न्यषेधीति निपूर्वात् सेधते कर्मणि लुङ् , चिण "प्राक् सितादड्व्यवायेऽपि" इति षत्वम् । रक्षण रक्षा, "गुरोश्च हल" इति स्त्रियामप्रत्यय । अन्यत पञ्चम्यर्थे तसिल् । प्रसूति —"स्त्रिया क्तिन्" । गुप्ता-गोपायते क्त ।

व्याख्या-व्रताय-गोसेवारूपनियमार्थम् , धेनो -गो -नन्दिन्या , अनुचरेण अनुयायिना, सेवकेनेत्यर्थ , तेन दिलीपेन, शेष -सुदक्षिणातिरिक्तोपि, अनुयायि-वर्ग -अनुचरसमूह , न्यषेधि-निवर्तित । तस्य-दिलीपस्य, शरीररक्षा-शरी-रस्य-देहस्य, रक्षा-गोपनम् , च, अन्यत -अन्य पुरुष निमित्तीकृत्य नास्ति । हि यत , मनो प्रसूति -सन्तति , स्ववीर्यगुप्ता-स्वस्यात्मनो वीर्येण पराक्रमेणैव गुप्ता-रक्षिता सततमस्ति, नान्येन ।

भावार्थ —भूपतिं सह गच्छन्तमितरमप्यनुचरवर्गं निवर्तयाचकार। यतो व्रतनिष्ठस्यास्य न प्रभावदर्शनार्थमनुचरापेक्षा, व्रते कर्मणा स्वेनैव सम्पाद्यत्वात्। स्वशरीररक्षार्थं तु न कदाप्यस्यानुचरापेक्षा जायते स्म, यतो मनुवंशजा आत्मरक्षणमात्मपराक्रमेणैव विदधते, परान्नापेक्षन्त एव।

अलङ्कारादि —अत्र व्रतायेत्यनेन व्रतायैव धेनोरनुचरणम्, न पुनरन्यस्मै जीवनादिप्रयोजनायेति मल्लिनाथः तेन परिसंख्यालङ्कारः सिद्ध्यति। वयन्तु जीवनादिव्यावृत्तेर्नात्र प्रयोजनं चमत्कृतिं वा पश्यामः। व्रतायेति—अनुयायिनिवर्तने हेतूपन्यासात् काव्यलिङ्गम्। एवं पूर्वार्धवाक्यार्थे-उत्तरार्धवाक्यार्थस्य हेतुत्वेनापि काव्यलिङ्गम्। उत्तरार्धवाक्ये पूर्वस्यांशस्य परेणांशेन समर्थनादर्थान्तरन्यासश्च। अनुप्रासस्तु कथंचित् सर्वत्र स्थित एव।

आस्वादवद्भिः कवलैस्तृणानां कण्डूयनैर्दंशनिवारणैश्च।
अव्याहतैः स्वैरगतैः स तस्याः सम्राट् समाराधनतत्परोऽभूत् ॥५॥

अन्वय —सम्राट् सः आस्वादवद्भिः तृणानाम् कवलैः कण्डूयनैः दंशनिवारणैः अव्याहतैः स्वैरगतैः च तस्याः समाराधनतत्परः अभूत्।

व्याकरणम्—*सम्राट्-सम्यग् राजत इति राजतेः क्विप्, "मो राजि समः क्वौ" इत्यनुस्वारनिषेधः। न व्याहतैः अव्याहतैः (न० त०) व्याहतैरिति व्याङ्पूर्वकाद्धन्तेः कर्मणि क्तः। स्वैरं गतानि—"सह सुपा" इति केवलसमासः गतानीति गच्छतेः "नपुंसके भावे क्तः"। तदेव परं यस्य स तत्परः (बहु०) समाराधने तत्परः समाराधनतत्परः। (तत्पु०) आस्वादवद्भिः-आस्वादो विद्यते येषु तैरिति घञन्तात् आस्वादशब्दादस्त्यर्थे मतुप्। 'मादुपधायाः' इत्यादिना मस्य वः। कण्डूयनैः—कण्डूञ्धातोर्ल्युट्, कण्ड्वादित्वाद् यक् च। निवारणम्, समाराधनम्, इति च णयन्ताल्ल्युट्। दशन्तीति दंशाः, पचाद्यच्।

व्याख्या—सम्राट्-मण्डलेश्वरः, चक्रवर्तीति यावत्, सः-दिलीपः, आस्वादवद्भिः-रसविशिष्टैः तृणानाम्-घासानाम्, [1] कवलैः-ग्रासैः, कण्डूयनैः-

* येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः। शास्ति यश्चाज्ञया राज्ञः स सम्राट्—इत्यमरः। [1]—ग्रासस्तु कवलार्थकः—इत्यमरः।

नखादिना खर्जनै , दशनिवारणै -[1]दंशाना वनमक्षिकाणाम् ,निवारणै -दूरीकरणै , अव्याहतै -अप्रतिरुद्धै , [2]स्वैरगतै -स्वच्छन्दगमनैश्च, तस्या -नन्दिन्या , समाराधने-सेवायाम्, [3] तत्पर -आसक्त -संलग्न , अभूत् ।

भावार्थ —दिलीप कदाचित् कोमलतृणग्रासानुपानयति स्म कदाचिन्नखादिना गात्र विघृष्य खर्जू विनोदयति स्म, वनमक्षिकाणा च दूरीकरणेन सतत रक्षति स्म । न च कुत्रापि यथेच्छ गच्छन्तीं ता निवर्तयामास-इत्येव सेवाया प्रवृत्त । सम्राडप्येवमाराधयतीत्यहो !

अलङ्कारादि —अत्रैकस्मिन् समाराधने कार्येऽनेकेषा साधनानामुपादानात् समुच्चयोऽलङ्कार । सम्राडपि समाराधनतत्पर इति विरोधालङ्कारोऽपि । गोविषयिणी भक्ति प्राधान्येन व्यज्यते, तस्याश्च गोर्देवरूपत्वाद्भावध्वनि ।

**स्थित स्थितामुच्चलित प्रयाता निषेदुषीमासनबन्धधीर ।**
**जलाभिलाषी जलमाददाना छायेव ता भूपतिरन्वगच्छत् ॥ ६ ॥**

अन्वय —भूपति ताम् स्थिताम् ( सतीमनु ) स्थित ( सन् ) प्रयाताम् ( सतीमनु ) उच्चलित ( सन् ) निषेदुषीम् ( सतीमनु ) आसनबन्धधीर ( सन् ) जलम् आददानाम् ( सतीमनु ) जलाभिलाषी ( सन् ) छायेव अन्वगच्छत् ।

व्याकरणम्—आसनस्य बन्धे ( ष० त० ) धीर ( तत्पु० ) आसनबन्धधीर । आस्यतेऽस्मिन्निति-आसनम् , अधिकरणे ल्युट् । बन्धन बन्ध , भावे घञ् । जलमभिलष्यतीति जलाभिलाषी " सुप्यजातौ णिनिस्ताच्छील्ये " क्वचिज्जातावपि, उपपदसमास । छायेव—" इवेन नित्यसमासो विभक्त्यलोपश्च " इति केवलसमास । स्थित , स्थिताम् , उच्चलित , प्रयाताम् इति कर्तरि क्तान्ता , आद्ययोरकर्मकत्वादन्त्ययोर्गत्यर्थत्वात् । आद्ययो ' द्यतिस्यतिमास्थामित्ति किति " इति स्थाधातोरित्वम् । निषेदुषीम् निषसादेति विग्रहे निपूर्वात् ' षद्लृ ' धातो "भाषाया सदवसश्रुव " इति क्वसु , स्त्रीत्वविवक्षायामुगित्त्वान्ङीप् , वसोरिति सम्प्रसारणम् । आददानाम्-आङ्पूर्वाद्दाधातो " आङो दोऽनास्यविहरणे " इत्यनेनात्मनेपदे शानच्प्रत्यय । स्थिताम् , प्रयाताम् , निषेदु-

---

१—दंशस्तु वनमक्षिका—इत्यमर. । २—स्वेच्छा यदृच्छा स्वच्छन्द· स्वैरता चेति ते समा.—इति केशव । ३—तत्परे प्रसितासक्तौ—इत्यमर ।

र्णाम् जलमाददानामिति सदन्तानि कर्मविशेषणानि, स्थित इत्यादीनि च तथैव कर्तुः ।

व्याख्या—भूपतिः-राजा दिलीपः ताम्-नन्दिनीम्, स्थिताम्-निवृत्तगमनाम्-स्वेच्छया स्थिता सतीमनु-तथा दृष्ट्वा ततः पश्चादिति भावः, ( एवमग्रेऽपि ) स्थितः-निवृत्तगमनः सन् प्रयाताम्-प्रस्थिता सतीम्, उच्चलितः-प्रस्थितः सन् निषेदुषीम्-उपविष्टा सतीम् आसनबन्धधीरः-आसनबन्धे उपवेशने, धीरोऽव्याकुलः उपविष्ट सन्निति यावत् जलम्-पानीयम् आददानाम्-गृह्णतीम्-पिबन्तीं सतीम् जलाभिलाषी-जलेच्छुः स्वयमपि जल पिबन् सन्, इत्थं छायेव-प्रतिबिम्बमिव अन्वगच्छत्-अनुसृतवान् ।

भावार्थ—यथा छाया छायिनि चेष्टमान एव स्वयमपि तद्वच्चेष्टते, न तु स्वतन्त्रा, तथैव दिलीपोऽपि गवि तत्तदवस्थानप्रस्थानोपवेशनादिक्रिया कुर्वत्यामेव स्वयमपि तास्ता क्रियाश्चकार, न तु स्वय ता कस्यामपि क्रियाया प्रेरयामास ।

अलङ्कारादि—पूर्णोपमालङ्कार । छायोपमानम्, राजा चोपमेय । अनुगमन सामान्यधर्म । भूपतिरप्येवमन्वगच्छदिति विरोधोऽप्यलङ्कार । पूर्ववद् भावध्वनि । अत्र प्रक्रमभङ्गदोषमप्याहु, 'स्थित स्थिताम्' इत्यत्रेव 'उच्चलित प्रयाताम्' इत्यादिषु येन धातुना प्रक्रान्त तेन न निर्वाह इति ।

**स न्यस्तचिह्नामपि राजलक्ष्मीं तेजोविशेषानुमिता दधान ।**
**आसीदनाविष्कृतदानराजिरन्तर्मदावस्थ इव द्विपेन्द्र ॥७॥**

अन्वय—न्यस्तचिह्नाम् अपि तेजोविशेषानुमिताम् राजलक्ष्मीम् दधानः स अनाविष्कृतदानराजि अन्तर्मदावस्थः द्विपेन्द्र इव आसीत् ।

व्याकरण—न्यस्तानि चिह्नानि यस्यास्ता न्यस्तचिह्नाम् । ( बहु० ) निवृत्तिदन्तरे कर्मणि तत्प्रत्ययेन्यस्तानि । तेजसो विशेषेण ( ष० त० ) अनुमिताम् ( तत्पु० ) तेजोविशेषानुमिताम्, अन्वमायीत्यनुमिता, मिनोतेः कर्मणि क्त । न आविष्कृता ( न० त० ) दानस्य राजि ( ष० त० ) यस्य ( येन वा ) स ( बहु० ) अनाविष्कृतदानराजि । आसीत्-इत्यव्यये

उपपदे करोते क्तप्रत्यये आविष्कृता । " इदुदुपधस्य चाप्रत्ययस्य " इति षत्वम् । अन्तर्मदस्यावस्था ( ष० त० ) यस्य ( बहु० ) सोऽन्तर्मदावस्थः । अवस्था-इत्यत्रावपूर्वकात्तिष्ठते " व्यवस्थायाम् " इति निर्देशाज्ज्ञापकादङ् स्त्रियाम् । द्वाभ्यां पिबन्तीति द्विपाः—" सुपि " इति योगविभागात्कः, तेषामिन्द्रः ( ष० त० ) द्विपेन्द्रः । दधान-इति धाधातोः ' लक्षणहेत्वोः क्रियायाः ' इति शानच् ।

व्याख्या—न्यस्तानि-परिहृतानि, चिह्नानि-लक्षणानि छत्रचामरादीनि यस्याः, तथाभूताम् अपि, तेजसः-कान्तेः, विशेषोऽतिशयस्तेनानुमिताम्, ' सर्वथा राजैवायम् ' इत्यूहिताम्, राजलक्ष्मीम्-नृपश्रियम्, दधानः-धारयन्, सः दिलीपः, अनाविष्कृता-बहिरप्रकटिता, दानराजिर्मदरेखा यस्य, येन वा, एवंभूतोऽपि, अन्तर्मदावस्थः-अन्तः-अभ्यन्तरे मदस्यावस्थितिर्यस्य तथाभूतः, यद्वा-अन्तः स्थितमदा अवस्था-दशा यस्य तथाभूतः, द्विपेन्द्रः-उत्कृष्टो हस्तीव आसीत्-अशोभतेति यावत् ।

भावार्थः—नन्दिनीं परिचरन् दिलीपो यद्यपि छत्रचामरादिराजचिह्नत्यक्तवान्, तथापि केनचिदाकृतौ लक्ष्यमाणेन स्वाभाविकेन राजतेजसा ' राजैवायम् ' इति लोकैरन्वमीयत । यथा गण्डस्थलेऽनालक्षितमदरेखोऽपि गजेन्द्र आकारेणैव मत्त इत्यनुमीयते, तद्वदिति ।

अलङ्कारादि—राजलक्ष्मीमदावस्थयोर्बिम्बप्रतिबिम्बभावात् पूर्णोपमा । न्यस्तचिह्नापि राजलक्ष्मीरन्वमीयतेति विभावना च ।

**लताप्रतानोद्ग्रथितैः स केशैरधिज्यधन्वा विचचार दावम् ।**
**रक्षापदेशान्मुनिहोमधेनोर्वन्यान् विनेष्यन्निव दुष्टसत्त्वान् ॥८॥**

अन्वयः—लताप्रतानोद्ग्रथितैः केशैः ( उपलक्षितः ) सः अधिज्यधन्वा ( सन् ) मुनिहोमधेनोः रक्षापदेशात् वन्यान् दुष्टसत्त्वान् विनेष्यन्निव दावम् विचचार ।

व्याकरणम्—लतानां प्रतानैः ( ष० त० ) उद्ग्रथिताः ( तत्पु० ) लताप्रतानोद्ग्रथिताः, तैः । प्रतन्यन्त इति प्रतानाः, तनोतेरकर्तरि कारके घञ् । उद्ग्रथितैरिति ग्रन्थ्यातोः निष्ठायां क्त्वान्नलोपः । ज्यामधिगतमधिज्यम्,

"अन्यादय क्रान्ताद्यर्थे द्वितीयया" इति तत्पुरुष । अधिज्य धनुर्यस्य सोऽधिज्यधन्वा बहुव्रीहि "धनुषश्च" इत्यनङ् समासान्त । होमार्था धेनुर्होमधेनु शाकपार्थिवादित्वान्मध्यमपदलोप होमस्य धेनुरिति (ष० त०) वा, धर्मपत्नीवत् । दुष्टान् सत्त्वान् दुष्टसत्त्वान् इति कर्मधारय । विनेष्यन्-विपूर्वान्नीधातो "लृट् सद्वा" इति हेतौ लृट् शत्रादेश । विचचारेति चरतेर्लिट् । केशैरिति "इत्थंभूतलक्षणे" तृतीया । दावमिति "देश कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञक" इति कर्मत्वम् । अपदेश -दिशेर्घञ् । वन्यान् वनशब्दाद् यत् ताद्धित । दुष्ट इति दुष्यते क्त ।

व्याख्या—लतानाम्-वल्लीनाम् प्रतानै कुटिलतन्तुभि , उद्ग्रथिता उन्नमय्य बद्धा ये [1]केशास्तैरुपलक्षित तेन चिह्नेन विहित इति यावत् , स - दिलीप अधिज्यधन्वा-अधिज्यमारोपितमौर्वीकम्, धनुर्यस्य (हस्ते) तथाभूत सन् मुनिहोमधेनो -मुने -वसिष्ठस्य होमधेनो -होमसाधनभूताया गो , रक्षापदेशाद्-रक्षाया अपदेशाद्-व्याजात् , वन्यान् आरण्यकान्, दुष्टसत्त्वान्-क्रूरजन्तून्, विनेष्यन्निव-शिक्षयिष्यन्निव-दमयिष्यन्निवेति, तद्दमनार्थमिति यावत् [3] दावम्-वनम् तत्रेत्यर्थ , विचचार-परिवव्राज ।

भावार्थ —दिलीप इतस्तत प्रकीर्णान् स्वान् केशान् लतातन्तुभिरूर्ध्वं नयन्स्य सज्य धनुरादाय गामनुगच्छति स्म, तत्स्वरूपेणायं प्रतीयते स्म, यदयं वन्यानां दुष्टजन्तूना प्रजासूपद्रवकारिणा शासनार्थमेव वने भ्रमति, गोरक्षा तु तत्र व्याजमात्रमिति ।

अलङ्कारादि —रक्षापदेशेत्यत्रापदेशशब्देन प्रकृतगोरक्षणस्यापह्नवेनापहृतिरस्ति दुष्टसत्त्वविनयस्य अनेराफलत्वेन सम्भावनात्फलोत्प्रेक्षा मुख्या । तया च दिलीपस्य राजकर्तव्यनिष्ठानामुत्कर्षो व्यज्यते ।

विसृष्टपार्श्वानुचरस्य तस्य पार्श्वद्रुमा पाशभृता समस्य ।
उदीरयामासुरिवोन्मदानामालोकशब्दं वयसा विरावै ॥ ९ ॥

---

१—चिकुर कुन्तलो बाल कच केश शिरोरुह -इत्यमर. । २—द्व्यानुत्ववमायेपु ... नु जन्तुषु—इत्यमर. । ३—वने च वनवह्नौ च दवो दाव इतीष्यते—इति यादव: ।

अन्वय —विसृष्टपार्श्वानुचरस्य पाशभृता समस्य तस्य पार्श्वद्रुमाः उन्मदानाम् वयसाम् विरावैः आलोकशब्दम् उदीरयामासुः इव ।

व्याकरणम्-पार्श्वेऽनुचराः पार्श्वानुचराः, (तत्पु०) विसृष्टाः पार्श्वानुचराः येन, (बहु०) तस्य विसृष्टपार्श्वानुचरस्य । उत्कृष्टो मदो येषां (बहु०) तेषामुन्मदानाम् । व्यसृज्यतेति विसृष्टा, विपूर्वात् सृजेर्निष्ठा, जस्य "व्रश्चे"-इति षत्वम् । पार्श्वम्-पर्शूनां समूहः, "पर्श्वा णस् वक्तव्यः" इत्यनेन पर्शुशब्दात् णस् तद्धितः, लक्षणया चायं पार्श्वशब्दः समीपवाची। पाशभृता-पाशं बिभर्तीति पाशोपपदाद् बिभर्तेः क्विप्, "ह्रस्वस्य"-इति तुक् "तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम्" इत्यनेन तृतीया । विरावः-विपूर्वाद् रौतेर्घञ् । उदीरयामासुः-उत्पूर्वकस्य चौरादिकस्येरयतेर्लिटि रूपम् । विरावैरालोकशब्दमिति प्रकृत्यादित्वात् तृतीया ।

व्याख्या—विसृष्टाः-निर्वर्तिताः, पार्श्वानुचराः-समीपवर्तिनः सेवकाः येन तथाभूतस्य, पाशभृता-वरुणेन, समस्य-तुल्यस्य, तस्य-राज्ञो दिलीपस्य, पार्श्वद्रुमाः पार्श्वयोः वामदक्षिणभागयोः स्थिताः, द्रुमाः-वृक्षाः, उन्मदानाम्-निरतिशयं मत्तानाम्-अतिहर्षाविष्टानाम्, वयसाम्-पक्षिणाम्, विरावैः-शब्दैः, आलोकशब्दम्-'क्षमया आलोकय, जय, जीव,' इत्यादिकं राजोचितं जयशब्दम् उदीरयामासुः-उच्चारयामासुरिव ।

भावार्थ —यथा वरुणो जलाभिवर्षणेन समस्तं वनस्पतिजातमभिवर्धयति, तथैवायमपि महाराजो दिलीपो रक्षणशिक्षणादिना प्रजाः परिपोषयति । अत एव वरुणदेवतुल्यस्य असहाय वने भ्रमतोऽस्य पार्श्ववर्तिनो वृक्षाः, अस्य दर्शनेन हृष्टानां पक्षिणां कलकूजितैः स्वागतमिव कुर्वन्तो जयशब्दवादिनामनुचराणां कार्यं निर्वर्तयामासुरिति सम्भाव्यते ।

अलङ्कारादि—पक्षिणां स्वाभाविके कूजने स्वागताभिसन्धिकृतजयशब्दत्वसम्भावनादुत्प्रेक्षा । पाशभृता समस्येति धर्मलुप्तोपमा । पार्श्वानुचरत्यागेऽपि जयशब्दलाभात् पूर्वरूपं च । उत्प्रेक्षया पूर्वरूपस्याङ्गाङ्गिभावसङ्करः, उपमया तु संसृष्टिः । पूर्वार्धे पाशब्दस्यासकृदावर्तनाद् वृत्त्यनुप्रासः । राज्ञः प्रभावातिशयव्यञ्जनाद् ध्वनिः ।

१—नगवाप्यादिनोर्वयः—इत्यमरः । २—आलोको जयशब्दः स्यात्-इति विश्वः ।

मरुत्प्रयुक्ताश्च मरुत्सखाभं तमर्च्यमारादभिवर्तमानम् ।

अवाकिरन् बाललताः प्रसूनैराचारलाजैरिव पौरकन्याः ॥ २१ ॥

अन्वयः—मरुत्प्रयुक्ताः बाललताः मरुत्सखाभम् आरात् अभिवर्तमानम् अर्च्यम् तं पौरकन्याः आचारलाजैरिव प्रसूनैः अवाकिरन् ।

व्याकरणम्—मरुता प्रयुक्ता मरुत्प्रयुक्ता, "कर्तृकरणे कृता बहुलम्" इति क्तान्तेन तत्पुरुषः । बाला लता बाललता इति कर्मधारयः । मरुत्सखाभम्—मरुतः सखा मरुत्सखः (तत्पु०) स इवाभातीति तम्, निरुपपदादाभाते "आतश्चोपसर्गे" इति कः तत्र "उपमानानि सामान्यवचनैः" इति समासः । मरुत्सखस्येवाभा यस्येति लाक्षणिकपूर्वपदो बहुव्रीहिर्वा । मरुत्सख इति "राजाहःसखिभ्यष्टच्" इति समासान्तः । आचारलाजैः-आचारार्थाः आचारस्य वा लाजास्तैः, मध्यमपदलोपी षष्ठीतत्पुरुषो वा । पुरे भवाः पौराः, अण्-तद्धितः । तेषां कन्याः पौरकन्याः । अर्चितुं योग्यम् अर्च्यम् अर्चतेरर्हार्थे ण्यत् । अभिवर्तमानमिति वर्ततेः शानच् । अवाकिरन्-तौदादिकात्किरतेर्लङ् ।

व्याख्या—मरुता-वायुना प्रयुक्ताः-प्रेरिताः आन्दोलिताः, बालाः-नवाः, लताः*, मरुत्सखाभम्-अग्नितुल्यम्-तथा प्रतापशालिनमितियावत्, आरात्†-समीपे अभिवर्तमानम्-आगच्छन्तम् अर्च्यम्-पूजनीयम्, तम्-दिलीपम्, पौरकन्याः-पौराः-नगरवासिन्यः कन्याः-सुताः, आचारलाजैरिव-आचारार्थैर्लाजैः-धान्यैरिव प्रसूनैः-कुसुमैः अवाकिरन्-राज्ञ उपरि-पुष्पाणि ववृषुरिति ।

भावार्थः—नगरे हि राज्ञः प्रचारे पौरकन्याः गृहेभ्यो लाजान् प्रक्षिपन्ति इत्याचारः । स एव आचारोऽत्र कन्यानामभावेऽपि वायुनान्दोलिताभिर्लताभिर्लाजतुल्यपुष्पवर्षेण सम्पादित । अग्निः खलु वायोर्मित्रम् दिलीपश्चाग्निसदृशः, अतएव पूज्यश्च अतः एवैतस्य मित्रस्थानीयीभूतस्य स्वागतं कर्तुं वायुना लताः प्रेरिता इति । महापुरुषस्य प्रयाणे शुभसूचकस्य मन्दस्य वायोः प्रचार प्रदर्शितः । मित्रमहत्त्वस्य राज्ञ आतिथ्य हेतुतया निगूढमुत्प्रेक्षितं कविना ।

अलङ्कारादि—पूर्वोपमा लुप्ता । भावे प्रदर्शनतया लीला गूढोत्प्रेक्षा । मरुत्प्रयुक्त मरुत्सखाभमिति साभिप्रायविशेषणोपादानात् परिकरश्चो-

---

*लता तु व्रततिः प्रतानिनी—इत्यमरः । †आरात् दूरसमीपयोः—इत्यमरः ।

अन्वय —विसृष्टपार्श्वानुचरस्य पाशभृता समस्य तस्य पार्श्वद्रुमा उन्मदानाम् वयसाम् विरावैः आलोकशब्दम् उदीरयामासु इव ।

व्याकरणम्–पार्श्वेऽनुचरा पार्श्वानुचरा, (तत्पु०) विसृष्टा पार्श्वानुचरा येन, (बहु०) तस्य विसृष्टपार्श्वानुचरस्य । उत्कटो मदो येषा (बहु०) तेषामुन्मदानाम् । व्यसृज्यतेति विसृष्टा, विपूर्वात् सृजतेर्निष्ठा, जस्य "व्रश्चे"–इति षत्वम् । पार्श्वम्-पर्शूना समूह, "पर्श्वा णस् वक्तव्य" इत्यनेन पर्शुशब्दाण्णम् तद्धित, लक्षणया चायं पार्श्वशब्द समीपवाची। पाशभृता-पाश बिभर्तीति पाशोपपदाद् बिभर्तेः क्विप्, "ह्रस्वस्य"–इति तुक् "तुल्यार्थैरतुलोपमाभ्या तृतीयान्यतरस्याम्" इत्यनेन तृतीया । विराव -विपूर्वाद् रौतेर्घञ् । उदीरयामासु -उत्पूर्वकस्य चौरादिकस्येरयतेर्लिटि रूपम् । विरावैरालोकशब्दमिति प्रकृत्यादित्वात् तृतीया ।

व्याख्या—विसृष्टा -निवर्तिता, पार्श्वानुचरा -समीपवर्तिन सेवका येन तथाभूतस्य, पाशभृता-वरुणेन, समस्य-तुल्यस्य, तस्य-राज्ञो दिलीपस्य, पार्श्वद्रुमा पार्श्वयो वामदक्षिणभागयो स्थिता, द्रुमा -वृक्षा, उन्मदानाम्-निरातिशय मत्तानाम्-अतिहर्षाविष्टानाम्, वयसाम्-पक्षिणाम्, विरावै -शब्दै, आलोकशब्दम्-'क्षमया आलोकय, जय, जीव,' इत्यादिक राजोचित जयशब्दम्, उदीरयामासु -उच्चारयामासुरिव ।

भावार्थ —यथा वरुणो जलाभिवर्षणेन समस्तं वनस्पतिजातमभिवर्धयति, तथैवायमपि महाराजो दिलीपो रक्षणशिक्षणादिना प्रजा परिपोषयति । अत एव वरुणदेवतुल्यस्य असहाय वने भ्रमतोऽस्य पार्श्ववर्तिनो वृक्षा, अस्य दर्शनेन हृष्टाना पक्षिणा कलकूजितै स्वागतमिव कुर्वन्तो जयशब्दवादिनामनुचराणा कार्य्य निर्वर्तयामासुरिति सम्भाव्यते ।

अलङ्कारादिः—पक्षिणा स्वाभाविके कूजने स्वागताभिसन्धिकृतजयशब्दत्वसंभावनादुत्प्रेक्षा । पाशभृता समस्येति धर्मलुप्तोपमा । पार्श्वानुचरत्यागेऽपि जयशब्दलाभात् पूर्वरूप च । उत्प्रेक्षया पूर्वरूपस्याङ्गाङ्गिभावसंकर, उपमया तु संसृष्टि । पूर्वार्धे पाशब्दस्यासकृदावर्तनाद् वृत्त्यनुप्रास । राज्ञ प्रभावातिशयव्यञ्जनाद् ध्वनि ।

---

१—खगबाल्यादिनोर्वय –इत्यमर । २–आलोको जयशब्दः स्यात्-इति विश्वः ।

मरुत्प्रयुक्ताश्च मरुत्सखाभं तमर्च्यमारादभिवर्तमानम् ।
अवाकिरन् बाललता प्रसूनैराचारलाजैरिव पौरकन्या: ॥ २१ ॥

अन्वय —मरुत्प्रयुक्ता बाललता: मरुत्सखाभम् आरात् अभिवर्तमानम् अर्च्यम् तं पौरकन्या: आचारलाजैरिव प्रसूनैः अवाकिरन् ।

व्याकरणम्—मरुता प्रयुक्ता मरुत्प्रयुक्ता, "कर्तृकरणे कृता बहुलम्" इति क्तान्तेन तत्पुरुष । बाला लता बाललता इति कर्मधारय । मरुत्सखाभम्—मरुत सखा मरुत्सख, (तत्पु०) स इवाभातीति तम्, निरुपपदादाभाते "आतश्चोपसर्गे" इति क, तत "उपमानानि सामान्यवचनैः" इति समास । मरुत्सखस्येवाभा यस्येति लाक्षणिकपूर्वपदो बहुव्रीहिर्वा । मरुत्सख इति "राजाह सखिभ्यष्टच्" इति समासान्त । आचारलाजै -आचारार्था ,आचारस्य वा लाजास्तै , मध्यम पदलोपी, षष्ठीतत्पुरुषो वा । पुरे भवा पौरा , अण्-तद्धित । तेषां कन्या पौरकन्या । अर्चितु योग्यम् अर्च्यम्, अर्चतेरर्हार्थे ण्यत् । अभिवर्तमानमिति वर्तते शानच् । अवाकिरन्-तौदादिकात्किरतेर्लङ् ।

व्याख्या—मरुता-वायुना, प्रयुक्ता -प्रेरिता आन्दोलिता , बाला -नवा , लता *, मरुत्सखाभम्-अग्नितुल्यम्-तथा प्रतापशालिनमितियावत्, आरात् †-समीपे अभिवर्तमानम्-आगच्छन्तम्, अर्च्यम्-पूजनीयम्, तम्-दिलीपम्, पौरकन्या -पौराणा-नगरवासिना, कन्या -सुता , आचारलाजैरिव-आचारार्थैर्लाजैधान्यैरिव, प्रसूनै -कुसुमै , अवाकिरन्-राज्ञ उपरि-पुष्पाणि ववृषुरिति ।

भावार्थ —नगरे हि राज्ञ प्रचारे पौरकन्या गृहेभ्यो लाजान् प्रक्षिपन्ति इत्याचार । स एष आचारोऽत्र कन्यानामभावेऽपि वायुनान्दोलिताभिर्लताभिर्लाजसदृशपुष्पवर्षणेन सरक्षित । अग्नि खलु वायोर्मित्रम्, दिलीपश्चाग्निसदृश , प्रभावेण पूज्यश्च, अत एवेदृशस्य मित्रस्यातिथीभूतस्य स्वागत कर्तुं वायुना लता प्रेरिता इति । महापुरुषस्य प्रयाणे शुभसूचकस्य मन्दस्य वायो प्रचार प्रकृतिसिद्ध । मित्रसदृशस्य राज्ञ आतिथ्य हेतुतया निगूढमुत्प्रेक्षित कविना ।

अलङ्कारादि –पूर्णोपमा मुख्या । भावार्थे प्रदर्शितया रीत्या गूढोत्प्रेक्षाऽपि । मरुत्प्रयुक्ता , मरुत्सखाभमिति साभिप्रायविशेषणोपादानात् परिकरस्यो-

*वल्ली तु व्रततिर्लता इत्यमरः । †आराद् दूरसमीपयोः—इत्यमरः ।

त्प्रेक्षया संकरवाचकानुप्रवेशसंकर, ताभ्यां च लाटानुप्रासस्य स एव संकर । प्रभावातिशयस्य ध्वनि पूर्ववत् ।

**धनुर्भृतोऽप्यस्य दयार्द्रभावमाख्यातमन्त करणैर्विशङ्कै ।**
**विलोकयन्त्यो वपुरापुरक्ष्णां प्रकामविस्तारफलं हरिण्य ॥ ११ ॥**

अन्वय - विशङ्कै. अन्त करणै: दयार्द्रभावम् (इति) आख्यातम् धनुर्भृत अपि अस्य वपुः विलोकयन्त्य. हरिण्य अक्ष्णाम् प्रकामविस्तारफलम् आपु ।

व्याकरणम्—विशङ्कै -विगता शङ्का येभ्यस्तै (बहु०) शङ्का-शङ्कते स्त्रियामप्रत्यय । दयया आर्द्रो (तत्पु०) भावो यस्य (बहु०) तद् दयार्द्रभावम् । धनुर्भृत -धनुर्बिभर्तीति तस्य, 'क्विप्' तुक् च । प्रकामविस्तारफलम्—प्रकाम विस्तार "सुपा" इति समास, तस्य फलम् (ष०त०) आख्यातम्—आङ्पूर्वाच्चक्षिडो धातो क्त, "चक्षिङ ख्याञ्" इति ख्यादेश । गौणक्रियेयम्, अन्त करणैरित्यस्या कर्तृपदम्, दयार्द्रभावमित्यस्या कर्म । विलोकयन्त्य —चौरादिकाल्लोकयते शतृप्रत्यय, उगित्त्वान्ङीप् । विस्तार -"प्रथने वावशब्दे" इति स्तृणातेर्घञ् । वपुरिति विलोकनक्रियाकर्म ।

व्याख्या—विशङ्कै -भयरहितै, अन्त करणै -चित्तै, दयार्द्रभावम्-दयया-कृपया, आर्द्र -स्निग्ध -अकलुषित, *भाव -आन्तरोऽभिप्रायो यस्य, तथाभूतम् आख्यातम्-कथितम्, 'एतद् न हिंसाशीलम्' इत्येव बोधितमिति यावत् धनुर्भृत -धनुर्धारिण, अपि, अस्य दिलीपस्य, वपु –शरीरम्, विलोकयन्त्य -विशेषेण पश्यन्त्य, हरिण्य -मृग्य, †अक्ष्णाम्—नेत्राणाम् प्रकामविस्तारस्य—निरतिशयप्रसारस्य, फलम्, आपु –लेभिरे ।

भावार्थ —यद्यपि कार्मुकधारिणो दिलीपाद बाह्यदृष्ट्या भय सभावितम तथापि हरिणीना मनसि त दृष्ट्वा भय न जातमिति–'विमल कलुषीभवच्च चेत कथयत्येव हितैषिण रिपु च' इति न्यायेन 'दयाशीलोऽयं राजा नास्मान् हिंस्यात्' इति हरिण्यो विश्वस्ता । तत एव च निर्भीका अतिशयेन मनोहारि शरीरमस्यालोक्यालोक्य स्वनेत्राणा विस्तारस्य साफल्यममन्यन्त ।

---

* -भाव सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु-इत्यमरः ।

† लोचन नयन नेत्रमीक्षण चक्षुरक्षिणी इत्यमरः ।

अलङ्कारादि —धनुर्भृतोऽपि दयार्द्रभावमिति विरोधालङ्कृति । आख्यातामिति विलोकने कारणोपन्यासात् काव्यलिङ्गम् । राज्ञ सौन्दर्येण हरिणीना नेत्रविस्तारफललाभोक्तिरुल्लास । राज्ञ सौन्दर्यातिशयो धर्मप्रवणता चात्र व्यज्यते ।

स कीचकैर्मारुतपूर्णरन्ध्रै कूजद्भिरापादितवशकृत्यम् ।
शुश्राव कुञ्जेषु यश स्वमुच्चैरुद्गीयमान वनदेवताभि ॥ १२ ॥

अन्वय —स कुञ्जेषु मारुतपूर्णरन्ध्रै (अत एव) कूजद्भि कीचकै आपादितवशकृत्यम् वनदेवताभि उच्चै उद्गीयमानम् स्वम् यश शुश्राव ।

व्याकरणम्—मारुतपूर्णरन्ध्रै —मारुतेन पूर्णानि (तत्पु०) रन्ध्राणि येषा (बहु०) तै, पूर्णमिति "वा दान्त शान्त–"इत्यादिना पूरयतेर्निष्ठान्त निपात्यते । आपादितवशकृत्यम्—आपादित वशकृत्य यस्मिन् कर्मणि यथा भवति तथेति, क्रियाविशेषणत्वात्कर्मत्वम्, तेन द्वितीया । आपादितेति णिजन्तात्पद्यतेर्निष्ठा, कृत्यमापद्यत, तत्कीचकैरापादीति । कृत्यम्–कर्तु योग्यम्, करोते क्यप् तुक् च । कूजद्भि –कूजते शतृप्रत्यय । गीयमानम्–गैधातो कर्मणि शानच्, यक्प्रत्ययो मुगागमश्च, घुमास्थेतीत्वम् । देव एव देवता, स्वार्थे तल् । शुश्राव–श्रुधातोर्लिट प्रथमपुरुषैकवचनम् । कीचकैरित्यापादने प्रयोजककर्तृ । वनदेवता उद्गाने कर्त्र्य ।

व्याख्या—स –दिलीप, १ कुञ्जेषु–लतागृहेषु, मारुतेन–वायुना, पूर्णानि, २ रन्ध्राणि–छिद्राणि येषा तथाभूतै, कूजद्भि –शब्दायमानै, ३ कीचकै –वेणुविशेषै, आपादितम्–सम्पादितम्, ४ वशकृत्यम्–वेणवाख्यवाद्यकार्यम्, यस्मिन् कर्मणि यथा भवति तथा, वनदेवताभि –अरण्याधिष्ठात्रीभिर्देवताभि,

१—निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे—इत्यमर । २—छिद्र निर्व्यथन रोक रन्ध्र श्वभ्र वपा सुषि —इत्यमर । ३—वेणव कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धता–इत्यमर । तेन तादृशविशिष्टार्थबोधकमपि कीचकपदमत्र 'मारुतपूर्णरन्ध्रै' इति विशेषणसद्भावात् केवलवेणुबोधकम् । 'सति विशेषणसमभिव्याहारे विशिष्टबोधकाना विशेष्यमात्रपरता' इति न्यायात् ।

४—वशादिक तु सुषिरम्–इत्यमर ।

उच्चै - तारस्वरेण, उद्गीयमानम्-उत्कण्ठया गीयमानम् , स्वम्-स्वकीयम् , यश -कीर्तिम् , शुश्राव-आकर्णितवान् ।

भावार्थ —वने विचरता दिलीपेन तत्र तत्र कुञ्जेषु वनदेवता दृष्टा , तन्मुखादुच्चैस्स्वकीर्तिगान च श्रुतम् , वायुना नि स्वनन्तो वंशा एव तत्र गाने वंशवाद्यतामाप्ता अभूवन ।

अलङ्कारादि —वंशवाद्यकृत्यस्य वेणुसपाद्यत्वोक्त्या सादृश्ये पर्यवसानात् पदार्थवृत्तिर्निदर्शना । अद्भुतयशोवर्णनाच्चात्युक्ति । राज्ञोऽतिशयित महत्त्व व्यङ्ग्यम् ।

**पृक्तस्तुषारैर्गिरिनिर्झराणामनोकहाकम्पितपुष्पगन्धी ।**

**तमातपक्लान्तमनातपत्रमाचारपूत पवन सिषेवे ॥ १३ ॥**

अन्वय —गिरिनिर्झराणाम् तुषारै पृक्त अनोकहाकम्पितपुष्पगन्धी पवन अनातपत्रम् ( अत एव ) आतपक्लान्तम् आचारपूतम् तम् सिषेवे ।

व्याकरणम्—अनोकहाकम्पितपुष्पगन्धी-आकम्पितानि पुष्पाणि, आकम्पितपुष्पाणि ( कर्म० ) अनोकहानाम्-आकम्पितपुष्पाणि, ( ष०त० ) तेषा गन्ध , ( ष०त० ) सोऽस्यास्तीति "अत इनिठनौ" इति इनिप्रत्ययस्तद्धित , नान्तस्य सौ रूपम् । अनोकह इति अनसाम् ( शकटानाम् ) अकम् ( कुटिलगमनम् ) हन्तीति, "अन्येभ्योऽपि दृश्यते" इति डप्रत्यय । आतपक्लान्तम्-आतपेन क्लान्तम् "कर्तृकरणे कृता बहुलम्" इति तत्पुरुष । तथैवाचारपूतमिति । आतपतीति-आतप , पचाद्यच, क्लान्तेति-'क्लमु ग्लानौ' क्त, "अनुनासिकस्य क्विझलो क्ङिति" इत्युपधादीर्घ । आचार -चरतेर्घञ् , पूतेति पुनाते क्त । अनातपत्रम्-न आतपत्र यस्य तम् । आतपात् त्रायते-इत्यातपत्रम् , त्रायते कप्रत्यय , "आतो लोप इटि च" । पृक्त -'पृची सम्पर्के' निष्ठा । तुषारैरिति पृणक्ते कर्तरि तृतीया ।

व्याख्या—गिरीणाम् पर्वतानाम् ,१ निर्झरा वारिप्रवाहा , तेषा २ तुषारै सीकरै जलकणैरिति यवत् , पृक्त -सम्मिश्र , ३ अनोकहानाम्-वृक्षाणाम , आक

१—प्रवाहो निर्झरो झर -इत्यमर ।

२—तुषारो हिमसीकरो—इत्यमर ।

३—वृक्षो महीरुह शाखी विटपः पादपस्तरु , अनोकह कुट शाल.—इत्यमर ।

म्मितानि-ईषत्कम्मितानि पुष्पाणि तेषां गन्धो यत्रास्ति स, पवन -वायु, अनातपत्रम्-अविद्यमानच्छत्रम् अत एव आतपक्लान्तम-आतपेन-घर्मेण क्लान्तम्-ग्लानम्, आचारेण-सदाचरणेन, पूत पवित्रम्, तम्, सिषेवे-परिचचार।

भावार्थ –सदाचरणेन परिपूतस्यास्य दिलीपस्य आतपजनिता श्रान्ति स्वय जगत्पावन शीतलो मन्द सुगन्धिश्च पवनो विनोदयामासेति ।

अलङ्कारादि —सेवनाक्रियायामाचारपूतत्वस्य हेतोरुपादानात्पदार्थहेतुक काव्यलिङ्गम् । तथैवातपक्लमे-अनातपत्रताया हेतुत्वोक्त्यापि । शीतलो मन्द पवन इत्यनुक्त्वा 'पृक्तस्तुषारै' इत्युक्त्या पर्यायोक्तम् । आतपशब्दावृत्त्या लाटानुप्रास । छेकश्चान्यत्र पकारावृत्त्या । आचारप्रभावातिशयो व्यङ्ग्य ।

**शशाम वृष्ट्यापि विना दवाग्निरासीद्विशेषा फलपुष्पवृद्धि ।**
**ऊन न सत्त्वेष्वधिको बबाधे तस्मिन् वन गोप्तरि गाहमाने ॥१४॥**

अन्वय –गोप्तरि तस्मिन् वनम् गाहमाने ( सति ) वृष्ट्या विना अपि दवाग्नि शशाम, फलपुष्पवृद्धि विशेषा आसीत्, सत्त्वेषु अधिकः ऊन न बबाधे ।

व्याकरणम्—दवाग्नि दवश्चासावग्नि [ कर्म० ] । फलपुष्पवृद्धि – [ द्वन्द्वगर्भस्तत्पुरुष ] वृद्धिरिति वर्धते "स्त्रियां क्तिन्" । गोप्तरि-गोपायतीति तस्मिन् 'गुपू रक्षणे' इत्यत कर्तरि तृच् । गाहमाने-'गाहू विलोडने' इत्यत कर्तरि शानच्, "यस्य च भावेन भावलक्षणम्" इति सप्तमी । वृष्ट्या 'वृषु वर्षणे' इत्यत क्तिन् "पृथग्विनानानाभिस्तृतीयान्यतरस्याम्" इति तृतीया । शशाम–'शमु उपशमे' इत्यतो दैवादिकात् परोक्षे लिट् । विशिष्यत इति विशेषा 'शिष्लृ विशेषणे' इत्यत कर्मणि घञ् । "अकर्तरि च कारके संज्ञायाम्" इति सूत्रे संज्ञाग्रहणस्य प्रायिकत्वात् । सत्त्वेषु "यतश्च निर्धारणम्" इति निर्धारणे सप्तमी ।

व्याख्या—गोप्तरि-रक्षके तस्मिन्-राजनि-दिलीपे, वन गाहमाने-तत्र पर्यटति सति, *दवाग्नि-वनाग्नि, वृष्ट्या-जलवर्षणेन विना, अपि, शशाम-शान्तिमाप। फलपुष्पवृद्धि-फलानाम् पुष्पाणाम्-कुसुमाना च वृद्धि-समृद्धि, विशेषा-अधिका आसीत्-अभवत्। †सत्त्वेषु-जन्तुषु, अधिक-बलवान्, ऊनम्-निर्बलम्,

*—दवदावौ वनानले–इति हैम । †—सत्त्वमस्त्री तु जन्तुषु–इत्यमर ।

न बबाधे-न पीडयामास ।

**भावार्थः**—दिलीपस्य वने प्राप्तिमात्रेणैव तस्यालौकिकप्रभावात् तत्र तत्र स्वभावेन वने प्रज्वलन् दवानलो वर्षणमन्तरेणैव शान्तिमवाप । वृक्षाः पूर्वापेक्षयाधिकं पुष्पफलभाजोऽभवन् । सिंहादिर्हिंस्रजन्तवो निर्बलमृगादिकान् नाबाधन्तेति ।

**अलङ्कारादि**—वृष्टिरूपकारणमन्तरेणैव तत्कार्यस्याग्निशमनस्य फल-पुष्पवृद्धेश्च प्रतिपादनेन विभावनालङ्कारः । राज्ञो महत्त्वेन वनस्य समृद्धिरित्यु-ल्लासः । राज्ञः प्रभावातिशयो व्यङ्ग्यः ।

सञ्चारपूतानि दिगन्तराणि कृत्वा दिनान्ते निलयाय गन्तुम् ।
प्रचक्रमे पल्लवरागताम्रा प्रभा पतङ्गस्य मुनेश्च धेनुः ॥१५॥

**अन्वयः**—पल्लवरागताम्रा पतङ्गस्य प्रभा मुनेः धेनुः च दिगन्तराणि सञ्चारपूतानि कृत्वा दिनान्ते निलयाय गन्तुम् प्रचक्रमे ।

व्याकरणम्—पल्लवरागताम्रा-पल्लवस्य रागः, ( ष० त० ) तेन ताम्रा, तद्वत्ताम्रा वा । ( तृ० त० ) "उपमानानि सामान्यवचनैः" इति वा । राग-शब्दे रज्यतेऽनेनेति करणे घञ् । सञ्चारः-सम्पूर्वकाच्चरतेर्भावे घञ् । अपाविपत-इति पूतानि, कर्मणि क्तः । निलीयन्तेऽस्मिन्निति निलयः, प्रभापक्षे तु निल-यनं निलयः, निपूर्वात् 'लीङ् श्लेषणे' इत्यतः "एरच्" तस्मै निलयाय, "गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि" इत्यनेन चतुर्थी । गन्तुम्-गच्छतेस्तुमुन् "शकधृषज्ञाग्ला" इत्यादिसूत्रेण । प्रचक्रमे-प्रपूर्वात् 'क्रमु पाद-विक्षेपे' इत्यतो लिट्, "प्रोपाभ्यां समर्थाभ्याम्" इत्यात्मनेपदम् ।

व्याख्या—*पल्लवरागताम्रा-पल्लवस्य-नूतनपत्रस्य, †रागो वर्णस्तेन-तत्सम्ब-न्धेन, ताम्रा, तद्वत्ताम्रेति वा, ताम्रवर्णा-ईषद्रक्ता, ‡पतङ्गस्य-सूर्यस्य, प्रभा-कान्तिः, मुनेः-वशिष्ठस्य, धेनुः-गौश्च, दिगन्तराणि-दिशाम् §अन्तराणि-अवकाशान्, सञ्चारपूतानि-सञ्चारेण-गमनेन, पूतानि- पवित्राणि, कृत्वा-विधाय, दिनान्ते-दिन

*—पल्लवोऽस्त्री किसलयम्—इत्यमरः । †—रागोऽनुरक्तौ मात्सर्ये क्लेशादौ लोहितादिषु- इति शाश्वतः । ‡—पतङ्गः पक्षिसूर्ययोः - इति शाश्वतः । §—अन्तर-मवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये -इत्यमरः ।

स्य-दिवसस्य, अन्ते-अवसाने-सायकाले, निलयाय-अस्तमयाय ,धेनुपत्ते-स्वगृहाय आश्रमायेति यावत् गन्तुम्-यातुम्, प्रचक्रमे- प्रवृत्ता ।

भावार्थ —सर्व दिन वने विभिन्नासु दिक्षु परिभ्रम्य सायं समय आसन्ने गौराश्रमाभिमुखी प्रस्थिता । सूर्यप्रभापि तथैवेति तयोरेकधर्मतया सदृशत्व प्रति भातम् । उभयोस्ताम्रवर्णतयापि सदृशता प्रतीयते स्म ।

अलङ्कारादि –प्रस्तुताया गौरप्रस्तुतायास्सूर्यप्रभायाश्चैकगुणक्रियान्वय-प्रतिपादनाद्दीपकम् । पल्लवरागताम्रेति लुप्तोपमा, निलयायेति श्लेषश्च तदङ्गम् । सञ्चारपूतानि कृत्वेति पर्यायोक्तम् , सूर्यास्तकालस्य भङ्ग यन्तरेणाभिधानेऽपि पर्यायोक्तम् । निलयायेति धेनुपक्षेऽमङ्गलव्यञ्जकमश्लील दोष सम्भाव्यते, किन्तु श्लेषहेतोरदोष एवेति ।

**ता देवतापित्रतिथिक्रियार्थामन्वग्ययौ मध्यमलोकपाल ।**
**बभौ च सा तेन सतां मतेन श्रद्धेव साक्षाद् विधिनोपपन्ना ॥१६॥**

**अन्वय** —मध्यमलोकपाल देवतापित्रतिथिक्रियार्थाम् ताम् अन्वग् ययौ, सा च सता मतेन तेन उपपन्ना ( सतां ) ( सताम्, मतेन ) विधिना (उपपन्ना) साक्षात् श्रद्धेव बभौ ।

व्याकरणम्—मध्यमश्चासौ लोको मध्यमलोक ( कर्म० ) त पालयतीति मध्यमलोकपाल ( उप० स० ) णिजन्तात्पाते पालयतेर्वा कर्मण्यण् । देवताश्च पितरश्च अतिथयश्च देवतापित्रतिथय (द्व०) तेषा क्रिया (ष० त०) एवार्थो यस्या (बहु०) ता देवतापित्रतिथिक्रियार्थाम् । देवतापित्रतिथिक्रियाभ्य इति देवतापित्रतिथिक्रियार्था, इति वा । " अर्थेन नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्यम् " इति तत्पुरुष । ययौ यातेर्लिटि प्रथमपुरुषैकवचनम् । सताम्—" क्तस्य च वर्तमाने " इत्यनेन मतशब्दयोगे षष्ठी । मतेन—' मतिबुद्धिपूजार्थेभ्यश्च " इत्यनेन वर्तमाने क्त । श्रद्धा-श्रत्-सत्य धीयते ऽस्यामिति श्रत्पूर्वाद् ' धा ' धातोरङ् प्रत्यय । ' श्रदन्तरोरुपसर्गवद् वृत्ति ' विधिना-विधान विधि , दधाते " उपसर्गे घो कि " इति कि । उपपन्नेति– उपपूर्वकात्पद्यते क्त ।

*–निकाय्यनिलयालया -इत्यमर ।

व्याख्या—स यमलोकपाल -मध्यमलोकम्-भूलोकं पालयति-रक्षतीति तथाभूतो भूमिपति -दिलीप , देवतापित्रतिथिक्रियार्थाम्-देवता इन्द्रादय , पितरोऽग्निष्वात्तादय , अतिथयश्च गृहागता मनुष्या , तेषां कृते क्रिया -याग , श्राद्धम् , वैश्वदेवे भोजनं च, ता एवार्थ प्रयोजनं यस्यास्तथाभूताम् , देवतादिसर्वकार्यनिष्पादिकामिति यावत्, ताम्-नन्दिनीम् , अन्वक्-अनुपदम् , ययौ-जगाम । सा-नन्दिनी च, सताम् सज्जनानाम् , सतेन-(तै ) पूज्यमानेन, तेन-दिलीपेन, उपपन्ना-युक्ता सता, सता सतेन विधिना-अनुष्ठानेन उपपन्ना, †साक्षात्-प्रत्यक्षा, आकारधारिणी , श्रद्धेव-आस्तिक्यबुद्धिरिव बभौ-शुशुभे । श्रद्धापि देवतापित्रतिथिक्रियार्था भवति, यागश्राद्धवैश्वदेवादीनां श्रद्धयैव निष्पादनीयत्वात् । विधिरपि च मध्यमं लोकं पालयति, कर्मभूमित्वादस्य लोकस्य, कर्मानुष्ठानादिभिरेव च वृष्ट्यादिप्रवृत्तेरिति उपमानेऽप्यार्थो विशेषणयोग ।

भावार्थः—आश्रमं गच्छन्तीं गां दिलीपोऽप्यनुजगाम । तेनानुगम्यमाना च सा, अनुष्ठानानुगता श्रद्धेव शुशुभे । कर्मसु केवलं श्रद्धैव न कौशलहेतु किन्तु ' यस्तु क्रियावान् कुशल स एव ' इत्याभियुक्तोक्त्या अनुष्ठानानुगता श्रद्धा लोके विशेषेण प्रशंसामर्हति । तथैव राजानुगता गौरपि विशेषेण प्रशंसास्पदं जाता । परस्परं सादृश्यं विशेषणाभ्यां व्याख्यातमेव ।

अलङ्कारादि —पूर्णोपमा । साक्षात्पदस्वारस्यादुत्प्रेक्षा वा । अनुरूपयोर्योगाख्यानात्समालङ्कारोऽपि । राजगता भक्ति , गो स्वाच्छन्द्यम् , कामधेनुरप्यनेनानुगता शोभत इति राज्ञो महत्त्वं चेति व्यङ्ग्यानि ।

स पल्वलोत्तीर्णवराहयूथान्यावासवृक्षोन्मुखबर्हिणानि ।
ययौ मृगाध्यासितशाद्वलानि श्यामायमानानि वनानि पश्यन् ॥१७॥

**अन्वय** —स पल्वलोत्तीर्णवराहयूथानि आवासवृक्षोन्मुखबर्हिणानि मृगाध्यासितशाद्वलानि श्यामायमानानि वनानि पश्यन् ययौ ।

व्याकरणम्—पल्वलेभ्य उत्तीर्णानि ( त० ) वराहाणां यूथानि

* अन्वगन्वक्षमनुगे ऽनुपदं क्लीवमव्ययम्—इत्यमर. ।
† साक्षात् प्रत्यक्षतुल्ययो —इत्यमर ।

( प० त० ) येषु ( बहु० ) तानि पल्वलोत्तीर्णवराहयूथानि । उत्तीर्णेत्युपपूर्व-कात्तरते क्त, " ऋत इद्धातो " इतीर्, " रदाभ्यामिति " निष्ठानत्वम् । आवासस्य वृक्षा आवासवृक्षाः ( प० त० ) वर्हाण्येषा सन्तीति बर्हिणा', " फलवर्हाभ्यामिनच् " इतीनच्प्रत्ययस्ताद्धित । उद्-ऊर्ध्वं मुख येषा ते उन्मुखा ( बहु० ) आवासवृक्षाणामुन्मुखा (ष० त०) बर्हिणा येषु (बहु०) तानि आवासवृक्षोन्मुखबर्हिणानि मृगैरध्यासिता ( तत्पु० ) शाद्वला येषु तानि मृगाध्यासितशाद्वलानि । अध्यासितेति आस्ते कर्मणि क्त । शाद्वला-इति 'नडशादाड्ड्वलच्" इति शादशब्दाड्ड्वलच् प्रत्यय । श्यामायमानानि-अश्यामानि श्यामानि भवन्ति श्यामायमानानि । " लोहितादिडाज्भ्य क्यष् " 'वा क्यष " इत्यात्मनेपदम् । भाष्यसिद्धान्ते तु भृशादित्वात्-क्यङ् । पश्यन् ययौ इति " धातुसम्बन्धे प्रत्यया " इत्यनेन भूते लट् ।

व्याख्या—स -दिलीपः, पल्वलेभ्यः-अल्पजलाशयेभ्य , उत्तीर्णानि-बहिर्निर्गतानि वराहाणाम्-शूकराणा यूथानि-समूहा , येषु तथाभूतानि, आवा-सस्य-निवासस्य, ये वृक्षा'-तरव . नीडाश्रयतरव इति यावत्, तेषामुन्मुखा -तत्र गन्तुमुत्सुका †बर्हिणाः-मयूरा येषु तथाभूतानि, मृगैः-हरिणैः, अध्यासिता-अधिष्टिता , ‡शाद्वला -बालतृणैर्हरिता प्रदेशा येषु तथाभूतानि, श्यामायमानानि श्यामवर्णमाप्नुवन्ति वनानि-अरण्यप्रदेशान्, पश्यन्-अवलोकयन्, ययौ-जगाम।

भावार्थ —सूर्येऽस्तमुपगच्छति तम प्रसारेण श्यामीभवति तत्रारण्ये स राजा क्वचिज्जलाशयेभ्यो निर्गच्छतो वराहान्, क्वचिच्च स्वनीडेषु गन्तुमुत्सु-कान मयूरान् क्वचिच्च स्वैरविहाराद्विरम्य तृणहरितप्रदेशेषु विश्राम्यतो मृगान् पश्यन वशिष्ठाश्रम प्रति ययौ ।

अलङ्कारादि.—स्वभावोक्ति । वने श्यामताख्यानात्तद्गुणश्च । सर्वेषा प्राणिना स्वगृहगमनोत्कण्ठा व्यङ्ग्या ।

---

—पल्वलोऽल्पजलाशय —इत्यमर ।

†—मयूरो बर्हिणो वर्हो—इत्यमर ।

‡—शाद्वल शादहरिते—इत्यमर । शाद कर्दमशष्पयो इति विश्व ।

आपीनभारोद्वहनप्रयत्नाद् गृष्टिर्गुरुत्वाद्वपुषो नरेन्द्रः ।
उभावलञ्चक्रतुरञ्चिताभ्यां तपोवनावृत्तिपथं गताभ्याम् ॥ १८ ॥

अन्वयः—गृष्टिः नरेन्द्रः (च) उभौ ( यथाक्रमम् ) आपीनभारोद्वहनप्रयत्नात् वपुषः गुरुत्वात् ( च ) अञ्चिताभ्याम् गताभ्याम् तपोवनावृत्तिपथम् अलञ्चक्रतुः ।

व्याकरणम्—आपीनस्य भारः, (ष० त०) तस्योद्वहनम्, (ष० त०) तत्र प्रयत्नात् ( त० ) आपीनभारोद्वहनप्रयत्नात् । आपीनम्- इत्याङ्पूर्वकाद् 'ओप्यायी वृद्धौ' धातोः क्तः । "प्यायः पी" इति 'पी' आदेशः, ओदितश्चेति निष्ठानत्वम् । भार इति भरते कर्मणि घञ् । उद्वहनम्-वहेर्ल्युट् । प्रयत्नः- "यजयाचयतविच्छप्रच्छरक्षो नङ्" । तपसो वनम्, ( ष०त० ) तस्मादावृत्तिः [ त० ] तस्याः पन्थानम् [ ष० त० ] तपोवनावृत्तिपथम् "ऋक्पूरब्धूः पथामानक्षे" इत्यप् प्रत्ययः समासान्तः, भत्वादिनो लोपः । आवृत्तिः वर्तते क्तिन् । अञ्चिताभ्याम्-पूजार्थकाद्-'अञ्चु' धातोः क्तप्रत्ययः, "अञ्चेः पूजायाम्" इतीडागमः । गताभ्याम्-गमनं गतमिति "नपुंसके भावे क्तः" ।

व्याख्या—*गृष्टिः-सकृत्प्रसूता वशिष्ठधेनुः, नरेन्द्रः-नृपतिः-दिलीपश्च, इति, उभौ-द्वावपि, यथाक्रमम्, †आपीनस्य-ऊधसः, भारस्योद्वहने-धारणे प्रयत्नात्-प्रयासाद् [ धेनुः ] वपुषः-शरीरस्य, गुरुत्वात्-साराच्च [ नरेन्द्रः ] अञ्चिताभ्याम्-मनोहराभ्याम्, गताभ्याम्, तपोवनाद् आवृत्तेः-परावर्तनस्य, पन्थानम्-मार्गम्, अलंचक्रतुः-भूषयामासतुः ।

भावार्थः—दुग्धबाहुल्यात् स्थूलस्योधसो भारान्नन्दिनी शरीरगौरवाच्च दिलीपः, इत्युभावपि मन्दगामिनौ । मन्दा च गतिः शोभते इति तयोस्तथा गमनेन मार्गस्यापि शोभाभवदिति ।

अल०—प्रस्तुतयोर्नन्दिनीदिलीपयोः समानधर्मसम्बन्धबोधनात् तुल्ययोगिता । चारुत्वे हेतूपन्यासाच्च काव्यलिङ्गम् । नन्दिनीदिलीपयोर्गुणेन मार्गस्य शोभारूपगुणाभिधानादुल्लासश्च ।

---

* गृष्टिः सकृत्प्रसूता गौः-इति हलायुधः ।

† ऊधस्तु क्लीबमापीनम्-इत्यमरः ।

**वशिष्ठधेनोरनुयायिन तमावर्तमान वनिता वनान्तात् ।**
**पपौ निमेषालसपक्ष्मपङ्क्तिरुपोषिताभ्यामिव लोचनाभ्याम् ॥१६॥**

**अन्वय**—वनिता निमेषालसपक्ष्मपङ्क्ति ( सती ) वसिष्ठधेनोः अनुयायिनम् वनान्ताद् आवर्तमानम् तम् उपोषिताभ्यामिव लोचनाभ्याम् पपौ ।

व्याकरणम्—निमेषेष्वलसा (तत्पु०) पक्ष्मणा पङ्क्ति (प० त०) यस्या (बहु०) सा निमेषालसपक्ष्मपङ्क्ति । अनुयायिनम्-अनुपूर्वाद् यातेः "सुप्यजातौ णिनिस्ताच्छील्ये" इति णिनि । आवर्तमानम्-वर्तते शानच् । उपोषिताभ्याम्-उपपूर्वाद् वसते कर्तरि क्तः, सम्प्रसारणम्, "शासिवसिघसीना च" इति षत्वम् । पपौ-पिबतेर्लिटि । वनान्ताद्-अपादाने पञ्चमी ।

व्याख्या—वनिता-दिलीपधर्मपत्नी सुदक्षिणा, निमेषेषु निमीलनेषु, अलसा-प्रवृत्तिशून्या, *पक्ष्मणाम्-अक्षिलोम्नाम्, पङ्क्तिर्यस्यास्तादृशी सती, पक्ष्मपात परित्यज्येतियावत्, वशिष्ठस्य धेनो -नन्दिन्याः, अनुयायिनम्-अनुगामिनम्, वनस्य अरण्यस्य, अन्तात् प्रान्तभागाद्, आवर्तमानम्-प्रत्यागच्छन्तं तम्-दिलीपम्, उपोषिताभ्यामिव-कृतोपवासाभ्यामिव, लोचनाभ्याम्-नेत्राभ्याम्, पपौ-सोत्कण्ठं-मातिशय चावलोकयामासेति ।

भा०—सर्व दिन प्रियस्यादर्शनेन सुदक्षिणाया नेत्रयोरुपवास इव जात, तेन च यथा कश्चन कृतोपवासः सञ्जातकण्ठशोषस्तृष्णाया करोहत्य पय पिबति, तथैव सुदक्षिणाऽपि धेन्वा सहायान्त दिलीपं तृष्णातिशयेन निमेषमपि परित्यज्य पपाविव, सोत्कण्ठ ददर्शेति ।

अलं०—अदर्शने नेत्रयोरुपोषितत्वसम्भावनादनुक्तास्पदा स्वरूपोत्प्रेक्षा । धेनोरनुयायिनमिति दिवसवियोग स्मारयत्तत्र हेतुगर्भमिति परिकर । निमेषालसपक्ष्मपङ्क्तिरिति पर्यायोक्तम् । पपाविति पानार्थक पा धातुर्विलोकने लाक्षणिक, उत्कण्ठातिशयश्च तत्र व्यङ्ग्य इति अविवक्षितवाच्यो ध्वनि, शृङ्गाररसध्वनिश्चापि 'पपौ' पदगतः । उभयोरङ्गाङ्गिभाव । रस प्रधानम् ।

**पुरस्कृता वर्त्मनि पार्थिवेन प्रत्युद्गता पार्थिवधर्मपत्न्या ।**
**तदन्तरे सा विरराज धेनुर्दिनक्षपामध्यगतेव सन्ध्या ॥ २० ॥**

---

*—पक्ष्माक्षिलोम्नि किञ्जल्के—इत्यमरः ।

**अन्वय**—वर्त्मनि पार्थिवेन पुरस्कृता पार्थिवधर्मपत्न्या प्रत्युद्गता ( च ) सा धेनुः तदन्तरे दिनक्षपामध्यगता सन्ध्येव विरराज।

व्याक०—दिनं च क्षपा च दिनक्षपे, ( द्व० ) तयोर्मध्ये ( ष०त० ) गता दिनक्षपामध्यगता। पार्थिवेन-पृथिव्या ईश्वर इति पृथिवीशब्दात् "तस्येश्वरः" इत्यञ्प्रत्ययस्ताद्धितः। पुरस्कृता-पुरोऽकारीति करोतेः कर्मणि निष्ठा, "नमस्पुरसोर्गत्योः" इति विसर्गस्य सत्वम्। प्रत्युद्गता-प्रत्युदगामीति प्रतिपूर्वादुत्पूर्वाच्च गम्धातोः कर्मणि निष्ठा। विरराज राजृधातोर्लिट्। पार्थिवेन धर्मपत्न्या इति क्तान्तयोः कर्तृपदे, अनुक्ते कर्तरि तृतीया। सन्ध्येति धेनोरुपमानविशेषणम्।

व्याख्या– वर्त्मनि-मार्गे, पार्थिवेन-पृथिव्या ईश्वरेण, दिलीपेन, पुरस्कृता अग्रतः कृता, पार्थिवस्य दिलीपस्य, धर्मपत्न्या सुदक्षिणया, प्रत्युद्गता-सम्मुखमागच्छन्त्याभिमुखीकृता च, सा धेनुः नन्दिनी, तदन्तरे-तयोः-दिलीपसुदक्षिणयोः, अन्तरे-मध्ये, दिनक्षपयोः † दिवसरात्र्योः, मध्यगता-मध्ये स्थिता, सन्ध्येव विरराज-विशेषेण बभौ।

भा०-दिलीपस्याग्रतो भूत्वा तपोवनात् प्रत्यागच्छन्तीं धेनुं सत्कर्तुं यदा सुदक्षिणा आश्रमात् कियन्ति पदानि सम्मुखे जगाम, तदा ( दिलीपः पुरुषत्वात्तेजस्वितया च दिवससदृशः, सुदक्षिणा तु स्त्रीत्वात् सौम्यतया च रात्रिसदृशीति ) तयोर्दम्पत्योर्मध्यस्थिता ताम्रवर्णा सा धेनुः दिनक्षपयोर्मध्यस्थिता ताम्रवर्णा सन्ध्येव व्यराजत।

अल०—पूर्णोपमा। राजसुदक्षिणयोर्दिनक्षपासादृश्यं व्यङ्ग्यम्। सन्ध्यासादृश्याद्धेनोराराध्यता च व्यङ्ग्या। भूतकालिकक्रियाया उपमानेऽन्वयाविवक्षणान्न कालभेददोषः। मध्यगतत्वं तु सादृश्यमुक्तमेव।

**प्रदक्षिणीकृत्य पयस्विनीं तां सुदक्षिणा साक्षतपात्रहस्ता।**
**प्रणम्य चानर्च विशालमस्याः शृङ्गान्तरं द्वारमिवार्थसिद्धेः ॥ २१ ॥**

**अ०**—साक्षतपात्रहस्ता सुदक्षिणा पयस्विनीम् ताम् प्रदक्षिणीकृत्य प्रणम्य च अर्थसिद्धेः द्वारमिव अस्याः विशालम् शृङ्गान्तरम् आनर्च।

---

*—अयनं वर्त्म मार्गाध्वपन्थानः पदवी सृतिः-इत्यमरः।

† निशा निशीथिनी रात्रिस्त्रियामा क्षणदा क्षपा—इत्यमरः।

व्याक०—अक्षतपात्रेण सह वर्तते-इति साक्षतपात्र । "तेन सहेति तुल्ययोगे" इति बहुव्रीहि , सहस्य च सादेश । तथा हस्तो यस्या सा साक्षत-पात्रहस्ता ( बहु० ) । अप्रदक्षिणा प्रदक्षिणा कृत्वा प्रदक्षिणीकृत्य, 'च्वि' "कुगतिप्रादय" इति समास , क्त्वास्थाने ल्यप् । पयस्विनीम् प्रशस्त पयो यस्या "अस्मायामेधास्रजो विनि" इति प्राशस्त्ये विनि । प्रणम्य-क्त्वा. ल्यप्, "उपसर्गादसमासेऽपि" इति णत्वम् । सिद्धि -सिद्ध्यते क्तिन । आनर्चेति-अर्चते भौवादिकाल्लिट् ।

व्याख्या-अक्षतानाम्-पूजोपयोगिना जलक्षालिततण्डुलाना पात्रेण-भाजनेन, सह वर्तमानो हस्त पाणिर्यस्यास्तथाभूता, अक्षतपात्र हस्ते दधानेति यावत् , सुदक्षिणा-दिलीपपत्नी, पयस्विनीम्-प्रशस्तक्षीराम् , ताम्-नन्दिनीम् , प्रदक्षिणीकृत्य परिक्रम्य, प्रणम्य-प्रणाम कृत्वा च, अर्थसिद्धे -इष्टसिद्धे , द्वार मिव-प्रवेशमार्गमिव, तस्या , शृङ्गान्तरम्-शृङ्गयोरन्तरम्-मध्यम् , ललाटपट्टमिति-यावत् , आनर्च-पूजयामास ।

भा०—सुदक्षिणा ता नन्दिनी परिक्रम्य, प्रणम्य च अक्षतादिभिस्तस्या नन्दिन्या भालमर्थसिद्धेर्द्वार मत्वा पूजयामास ।

अल०—शृङ्गान्तरे अर्थसिद्धिद्वारत्वोत्प्रेक्षणादुत्प्रेक्षालङ्कार । गोविषयकभक्तेर्व्यङ्ग्यत्वाद् भावध्वनि ।

**वत्सोत्सुकापि स्तिमिता सपर्यां प्रत्यग्रहीत्सेति ननन्दतुस्तौ ।**
**भक्त्योपपन्नेषु हि तद्विधाना प्रसादचिह्नानि पुर फलानि ॥ २२ ॥**

अ०-सा वत्सोत्सुका अपि स्तिमिता ( सती ) सपर्याम् प्रत्यग्रहीद्-इति तौ ननन्दतु , भक्त्या उपपन्नेषु तद्विधानाम् प्रसादचिह्नानि हि पुर फलानि (भवन्ति)

व्याक०—वत्से उत्सुका वत्सोत्सुका ( तत्पु० ) । तस्या विधेव विधा येषा तेषा तद्विधानाम् , (बहु०) मध्यमपदलोपश्च । सा विधा येषामिति लाक्षणिकपूर्वपदो वा, उष्ट्रमुखादिवत् । विधेति विपूर्वाद् दधाते स्त्रियामङ् । पुर फलानि येषा तानि पुर फलानि (बहु०) । स्तिमितेति ष्टिमधातोर्निष्ठा । सपर्या-सपर पूजायाम्' इत्यत "कण्ड्वादिभ्यो यक्" इति यक् प्रत्यय , तदनु

*—विशङ्कट पृथु बृहद् विशाल पृथुल महत—इत्यमर ।

"अ प्रत्ययात्" इति स्त्रीत्वविशिष्टे भावे अप्रत्यय । प्रत्यग्रहीत्–प्रतिपूर्वाद् गृह्णातेर्लुङ्। हान्तत्वाद् वृद्धिनिषेध । भक्ति भजधातो 'क्तिन प्रत्यय । उपपन्नेषु-उपपूर्वात् पद्धातो क्तप्रत्यय "रदाभ्यामिति" नत्वम् ।

व्याख्या—सा-धेनु , वत्से-वत्सलालनार्थम्, उत्सुका–उत्कण्ठिता अपि, स्तिमिता-निश्चला सती, *सपर्याम्-पूजाम्, प्रत्यग्रहीत्-स्वीचकार, इति हेतो , तौ सुदक्षिणादिलीपौ, ननन्दतु -आनन्द प्रापतु । भक्त्या-पूज्येष्वनुरागो भक्ति तया उपपन्नेषु-युक्तेषु, तद्विधानाम्-तादृशानाम्, धेनुसदृशाना महतामितियावत्। †प्रसादस्य-प्रसन्नतायाः, ‡चिह्नानि-लक्षणानि पूजास्वीकारादीनि, हि-निश्चयेन, पुरःफलानि-पुर -प्रत्यासन्नानि, फलानि येषा तथाभूतानि, भवन्तीति शेष ।

भा०–वनात् परावृत्य स्ववत्समवलोकयितुमुत्कण्ठमानापि सा धेनुर्निश्चलभावेन सुदक्षिणया विहिता पूजा स्वीचकार । तेन स्वविषये तस्या प्रसन्नतामनुमायसुदक्षिणादिलीपौ परममानन्द प्रापतु । यतश्च नन्दिनीसदृशाना महानुभावाना प्रसन्नता अविलम्बिता फलसिद्धिं सूचयति ।

अल०—अत्रानन्दे प्रसादस्य हेतुत्वेनोपादानात् काव्यलिङ्गम् । वत्सोत्सुकापि स्तिमितेति विरोध । अर्थान्तरन्यासश्च । धेनुगत राजवात्सल्य व्यङ्ग्यम् ।

**गुरो सदारस्य निपीड्य पादौ समाप्य सान्ध्यं च विधिं दिलीप ।**
**दोहावसाने पुनरेव दोग्ध्रीं भेजे भुजोच्छिन्नरिपुर्निषण्णाम् ॥२३॥**

अ०—भुजोच्छिन्नरिपु दिलीप सदारस्य गुरो पादौ निपीड्य सान्ध्यम् विधिम् समाप्य च दोहावसाने निषण्णाम् दोग्ध्रीम् एव पुन भेजे ।

व्याक०—भुजाभ्यामुच्छिन्ना ( तत्पु० ) रिपवो येन ( बहु० ) स भुजोच्छिन्नरिपु । उच्छिन्नेति छिनत्तेर्निष्ठा, नत्वम् । दारै सह वर्तत इति सदार "तेन सहेति तुल्ययोगे" इति ( बहु० ) समास । "वोपसर्जनस्य" इति सहस्य स । निपीड्य-निपूर्वात् पीडयतेश्चौरादिकात् क्त्वास्थाने ल्यप् । सान्ध्यम्-

*—पूजा नमस्यापचितिः सपर्याऽर्चार्हणा समा -इत्यमर ।

†—प्रसादस्तु प्रसन्नता-इत्यमर ।

‡—चिह्न लक्ष्म च लक्षणम्–इत्यमर. ।

सन्ध्याया भवं सान्ध्यम्, भवार्थे शैषिकोऽण्। विधिरिति "उपसर्गे घो कि" समाप्य-संपूर्वादाप्नोतेर्ल्यप्। दोहेति दोग्धेर्भावे घञ्। अवसानम् अवपूर्वाद् 'षोऽन्तकर्मणि' इत्यतो ल्युट्, धातोरात्वम्, "युवोरनाकौ"। अवसाने-इति "यस्य च भावेन भावलक्षणम्" सप्तमी। दोग्ध्रीम्-दोग्धि तच्छीला दोग्ध्रीम्, दुहधातो "तृन्" इति ताच्छील्ये तृन्, ऋदन्तत्वाद् ङीप्। भेजे-भौवादिका द्भजधातोर्लिट्, "तृफलभजत्रपश्च' इति एत्वाभ्यासलोपौ।

व्याख्या—भुजोच्छिन्नरिपु -*भुजाभ्याम् स्वबाहुभ्याम्, उच्छिन्ना -विनाशिता, रिपव -शत्रवो येन तथाभूत, दिलीप, †सदारस्य -अरुन्धत्या पत्न्या सहितस्य गुरो -वशिष्ठस्य पादौ-चरणौ, निपीड्य-सवाह्य, वन्दित्वेति यावत्, सान्ध्यम् सायकालिकम्, विधिम् अनुष्टान सन्ध्योपासनादिकम्, समाप्य-प्रपूर्य, दोहावसाने दोहस्य दुग्धदोहनस्य. अवसाने-अन्ते, निषण्णाम्-भूमावुपविष्टाम् दोग्ध्रीम्-कामदुघाम्, नन्दिनीम्, एव, पुन -भूय, भेजे-सिषेवे। न तु राज्यादिचिन्तापरो बभूव।

भा०—तपोवनादाश्रम प्राप्तो दिलीप पूर्वमरुन्धतीसहितं वशिष्ठं प्रणनाम, तदनु सायकालिकीं सन्ध्यामुपासाञ्चक्रे, अथ दुग्धदोहनानन्तर भूमावुपविष्टायास्तस्या एव कामदुघाया नन्दिन्या परिचरणे तत्परो बभूव। न च तदानीं तच्चेतसि राज्यचिन्ता पदमकरोत्, यत स पूर्वमेव स्वरिपून् उत्सादितवान्।

अल०—अत्र निपीडनसमापनभजनरूपास्वनेकक्रियासु एकस्यैव कारकस्योपादानेन दीपकालङ्कार प्राप्नोति, चमत्कृतिस्तु न तथेति सहृदया एव प्रमाणम्। दोग्ध्रीति कामदोहनबोधकस्य विशेषणस्य साभिप्रायत्वात् परिकरालङ्कारश्च। भेजे भुजोच्छिन्नेत्यनुप्रासाद्भुजोच्छिन्नेति विशेषणे नापुष्टार्थतादोष। भावार्थोक्तरीत्या साभिप्रायत्वमेव वा तस्य। भावो व्यज्यते।

तामन्तिकन्यस्तबलिप्रदीपामन्वास्य गोप्ता गृहिणीसहाय।
क्रमेण सुप्तामनुसंविवेश सुप्तोत्थितां प्रातरनूदतिष्ठत् ॥२४॥

*—भुजबाहू प्रवेष्टो दो इत्यमर।

†—भार्या जायाथ पु भूम्नि दारा इत्यमर।

अ०--- गोप्ता गृहिणीसहाय (सन्) अन्तिकन्यस्तबलिप्रदीपाम् ताम् अन्वास्य क्रमेण सुप्ताम् अनु संविवेश, प्रातः सुप्तोत्थिताम् अनु उदतिष्ठत् ।

व्याक०—गृहिणी सहायो यस्य स गृहिणीसहाय (बहु०)। गृहशब्दाद् " अत इनिठनौ " इतीनिप्रत्ययस्तद्धित , नान्तत्वात् स्त्रिया ङीप् , गृह विद्यते यस्याः सा गृहिणीति । सह-अयते इति सहाय "पचाद्यच्" । अन्तिके न्यस्ता ( तत्पु० ) बलयश्च प्रदीपाश्च ( द्व० ) यस्या ( बहु० ) ताम् । 'ताम्' इति अनोः कर्मप्रवचनीयस्य योगे " कर्मप्रवचनीययुक्ते द्वितीया " इति द्वितीया । तथैव सुप्तामुत्थितामित्यत्रापि । पूर्वं सुप्ता पश्चादुत्थिता सुप्तोत्थिताम्, स्नातानुलिप्तवत् 'पूर्वकालेति" तत्पुरुष । गोप्ता-गोपायतीति विग्रहे 'गुपू रक्षणे' इत्यतः कर्तरि तृच् । अन्वास्य—'आस् उपवेशने' ल्यप् । सुप्तामिति स्वपितेः कर्तरि क्त , अकर्मकत्वात्, " वचिस्वपियजादीनां किति " इति सम्प्रसारणम् । तथैवोत्थितामिति क्तः, इति "उद स्थास्तम्भो पूर्वस्य " इति पूर्वसवर्णः । उदतिष्ठत्-उत्पूर्वात् 'ष्ठा गतिनिवृत्तौ' इत्यतो लङ्, " पाघ्राध्मेति " तिष्ठादेश , अनूर्ध्वकर्मणीति निषेधादात्मनेपदं न ।

व्याख्या—गोप्ता-रक्षक , राजा-दिलीप , गृहिणीसहाय -गृहिणी-पत्नी, सहायो यस्य तथाभूत सन्, सुदक्षिणासहित. सन्निति यावत्, अन्तिके-समीपे, न्यस्ता.-स्थापिता , बलय -उपहारा , प्रदीपा दीपकाश्च, यस्यास्तथाभूताम्, ताम्-नन्दिनीम्, अन्वास्य-तत्समीपे परिचर्यार्थमुपविश्य, क्रमेण सुप्ताम्, ताम् अनु-तत्स्वापानन्तरम्, संविवेश सुष्वाप । प्रात , सुप्तोत्थिताम्-जागरिताम् अनु, उदतिष्ठत् उत्थितवान् । यद्यपि सेवकस्य जागरणं पूर्वमेवोचितम्, तथापि पाद-शब्दादिना गोनिद्राक्षयो मा भूदिति शयनादुत्थानं तदुत्थानानन्तरमेवेति ।

भा०—सुदक्षिणादिलीपावुभावपि तस्या नन्दिन्या समीपे बलिद्रव्याणि भक्तपायसादीनि दीपाश्च स्थापयामासतु । अथ तस्या भूमावुपविष्टाया सत्या स्वयमप्युपाविशताम्, सुप्तायामस्वपिताम्, प्रात पुनरुत्थिताया चोत्थितौ तथैव पूर्वदिवसोक्तं सर्वमकुरुताम् ।

अल०—पूर्ववद्दीपक सम्भाव्यत एव । भावध्वनि । अनुशब्देन गोव्या-

*—सपर्या तर्पणं बलि -इत्यमरः ।

पारराजव्यापारयो पौर्वापर्यमुच्यते, क्रमशब्देन तु गोव्यापाराणा पौर्वापर्यमिति न पुनरुक्तादोष ।

**इत्थ व्रत धारयत प्रजार्थं सम महिष्या महनीयकीर्तेः ।**
**सप्त व्यतीयुस्त्रिगुणानि तस्य दिनानि दीनोद्धरणोचितस्य ॥ २५ ॥**

अ०—इत्थम् प्रजार्थम् महिष्या समम् व्रतम् धारयत महनीयकीर्तेः दीनोद्धरणोचितस्य तस्य त्रिगुणानि सप्त दिनानि व्यतीयु ।

व्याक०—प्रजायै-इति प्रजार्थम् "अर्थेन नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्यम्" इति (तत्पु०)। महनीया कीर्तिर्यस्य (वहु०) तस्य महनीयकीर्ते कीर्तिरिति "ऊतियूतिजूतिसातिहेतिकीर्तयश्च" इति कृतधातो क्तिनि निपातितः। दीनानामुद्धरणे (तत्पु०) उचितस्य (तत्पु०) दीनोद्धरणोचितस्य। दीनेति दीङ्धातोः क्त, "स्वादय ओदित" "ओदितश्च" इति निष्ठानत्वम्। त्रयो गुणा येषा तानि त्रिगुणानि । 'महिष्या' इत्यत्र समशब्दयोगे "सहयुक्तेऽप्रधाने" इति तृतीया। इत्थम् "इदमस्थमु" इति थमुप्रत्यय । व्यतीयु —'वि' 'अति' इत्येतदुभयोपसर्गपूर्वाद् एतेर्लिट्, प्रथमपुरुषवहुवचने "दीर्घ इण किति" इति दीर्घ ।

व्याख्या–इत्थम्-अनेन प्रकारेण, प्रजार्थम्-सन्ततिप्राप्तये, *महिष्या-कृताभिषेकया राज्या सुदक्षिणया, समम्-सह, व्रतम् गोसेवारूप नियमम्, धारयत -अनुतिष्ठत , महनीयकीर्ते -प्रशस्तयशस , दीनानाम्-क्षीणानाम्, अकिञ्चनानामिति यावत्, उद्धरणे-रक्षणे, उचितस्य-परिचितस्य-जाताभ्यासस्येति यावत्, तस्य-नृपस्य, त्रिगुणानि-त्रिरावृत्तानि, सप्त दिनानि-एकविंशतिदिनानीत्यर्थ, व्यतीयु -गतानि।

भा०—उक्तेनैव प्रकारेण स पत्नीसहितो दिलीपः सन्तानार्थमेकविंशति दिनपर्यन्तं गोसेवारूप व्रतमकरोत् ।

अल०—अनुप्रास । सममिति पदेन महिष्यामपि व्रतसम्बन्धबोधनात्सहोक्ति सम्भाव्यते, न तु तथा चमत्कार । दीनोद्धरणोचितस्येति विशेषणेन दीनरक्षणार्थमुपयुक्तोऽस्य काल इत्येकविंशतेर्दिनाना महत्त्व व्यज्यते। महनीयकीर्तेरिति च तत्रैव व्यञ्जनाया सहकारि ।

---

* कृताभिषेका महिषी-इत्यमर ।

**अन्येद्युरात्मानुचरस्य भावं जिज्ञासमाना मुनिहोमधेनुः ।**
**गङ्गाप्रपातान्तविरूढशष्पं गौरीगुरोर्गह्वरमाविवेश ॥ २६ ॥**

अ०—अन्येद्युः मुनिहोमधेनुः आत्मानुचरस्य भावम् जिज्ञासमाना (सती) गङ्गाप्रपातान्तविरूढशष्पं गौरीगुरोः गह्वरम् आविवेश ।

व्याक०—आत्मनोऽनुचर आत्मानुचर, ( ष० त० ) तस्य । प्रपतत्यस्मिन्निति प्रपात, "हलश्च" इत्यधिकरणे घञ्, गङ्गाया प्रपातस्य ( ष०त० ) अन्ते ( ष० त० ) विरूढानि ( तत्पु० ) शष्पाणि यस्मिन् ( बहु० ) तद् गङ्गाप्रपातान्तविरूढशष्पम्, विरूढेति विपूर्वकाद्रोहतेः क्त, ढत्वधत्व, ष्टुत्वढलोपदीर्घाः । अन्येद्युः—"सद्य परुत्परारि" इत्यादिना निपातितमव्ययमिदम् । जिज्ञासमाना-ज्ञातुमिच्छन्तीति विग्रहे जानाते सन्नन्ताद् "ज्ञाश्रुस्मृदृशा सन" इत्यात्मनेपदे "लक्षणहेत्वो क्रियाया" इति शानच् । भावम्-भूधातो प्राप्त्यर्थाच्चुरादिण्यन्तात्पचाद्यच् ।

व्याख्या—अन्येद्युः—अन्यस्मिन्दिने, द्वाविंशदिवसे मुनिहोमधेनुः—मुने वशिष्ठस्य, होमार्था-होमसाधनभूता, धेनु-नन्दिनी, आत्मानुचरस्य-स्वसेवकस्य, दिलीपस्य, *भावम्-अभिप्रायम्, जिज्ञासमाना-ज्ञातुमिच्छन्ती, गङ्गाया-भागीरथ्या, प्रपातस्य-पतनप्रदेशस्य, अन्ते-समीपे, विरूढानि-उत्पन्नानि, †शष्पाणि-बालतृणानि यस्मिंस्तथाभूतम्, गौरीगुरो-गौर्य्या -पार्वत्या, गुरो जनकस्य, हिमालयस्य, गह्वरम्-गुहाम्, आविवेश-प्रविशति स्म, ।

भा०-द्वाविंशे दिवसे नन्दिनी दिलीपस्य भाव परीक्षितुमियेष, 'सत्यमयं मद्भक्त, कृत्रिमा वास्य भक्तिरिति' परीक्षेच्छया च गङ्गाप्रपातसमीपवर्तिन्या हिमालयगुहाया प्रविवेश । यत्र हरितहरितो घास प्ररूढ आसीत् ।

अल—प्रवेशे जिज्ञासाया हेतुत्वेनोपन्यासात् काव्यलिङ्गम् । विरूढशष्पमिति गोप्रवेशयोग्यत्वाभिप्रायात्परिकर । मुनिहोमधेनुरिति गोर्महत्त्वं व्यञ्जयद्भावपरीक्षणस्यौचित्यं द्योतयति ।

**सा दुष्प्रधर्षा मनसाऽपि हिंस्रैरित्यद्रिशोभाप्रहितेक्षणेन ।**
**अलक्षिताभ्युत्पतनो नृपेण प्रसह्य सिंह किल तां चकर्ष ॥ २७ ॥**

---

*—भावोऽभिप्राय आशय इति यादव । †—शष्पं बालतृणं घास-इत्यमर' ।

अ०—सा हिंस्रै मनसा अपि दुष्प्रधर्षा इति अद्रिशोभाप्रहितेक्षणेन नृपेण अलक्षिताभ्युत्पतनः सिंहः ताम् प्रसह्य चकर्ष किल ।

व्याक०—अद्रेः शोभायाम् ( ष० त० ) प्रहिते ईक्षणे येन ( बहु० ) तेन अद्रिशोभाप्रहितेक्षणेन । शोभा शोभते. स्त्रियाम् अः, बाहुलकात् । प्रहितेति हिनोतेः क्त । अलक्षितमभ्युत्पतनं यस्य (बहु०) सोऽलक्षिताभ्युत्पतनः । हिंस्रैरिति हिनस्ते "नमिकम्पिस्म्यजसकमहिंसदीपो र" इति कर्तरि रप्रत्ययः । दुष्प्रधर्षा-दुःखेन प्रधृष्यते इति 'ञिधृषा प्रागल्भ्ये' इत्यत "ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्" इति कर्मणि खल् प्रत्यय । नृपेण-नॄन्पातीति विग्रहे "आतोऽनुपसर्गे कः" इति क । प्रसह्य-प्रपूर्वात् सहतेर्ल्यप् । हिंस्रैरिति धृषेः कर्तरि तृतीया । मनसेति तस्यैव करणम् । नृपेणेत्यलक्षणक्रियाया कर्तृपदम् ।

व्याख्या—सा-नन्दिनी, हिंस्रैः-हिंसाशीलैर्व्याघ्रादिभिः, मनसा-चेतसापि, दुष्प्रधर्षा-दुःखेन धर्षयितुं शक्या-अनाक्रमणीया इति ( विचिन्त्य ) तत एव, *अद्रिशोभायाम्-पर्वतच्छव्याम्, प्रहिते-अवलोकनार्थं प्रेरिते, ईक्षणे-नेत्रे येन, तथाभूतेन नृपेण-राज्ञा दिलीपेन, अलक्षितम्-अज्ञातम्, अभ्युत्पतनम्-गोराभिमुख्येनाक्रमणम्, यस्य तथाभूतः, †सिंहः, ताम्-धेनुम्, ‡प्रसह्य-हठात्, चकर्ष-आकृष्टवान्, आक्रान्तवान् । किलेत्यलीके । नैतद्यथार्थम्, अपि तु मायामात्रमिति ।

भा०—'इमां नन्दिनीं प्रभावाद् व्याघ्रादयो मनसाप्याक्रमितुं न समर्था' इति विचार्य निश्चिन्तो राजा क्षणं पर्वतशोभादर्शनासक्तोऽन्यमनस्क आसीत्, परमत्रान्तरे अकस्माद्राज्ञाऽदृष्ट एव कश्चन सिंहस्तामाक्रान्तवान् ।

अल०-शोभाप्रेक्षणे, अलक्षणे च समुचितहेतूपन्यासात्काव्यलिङ्गम् ।

तदीयमाक्रन्दितमार्तसाधोर्गुहानिबद्धप्रतिशब्ददीर्घम् ।
रश्मिष्विवादाय नगेन्द्रसक्तां निवर्तयामास नृपस्य दृष्टिम् ॥२८॥

* शोभा कान्तिर्द्युतिश्छविः —इत्यमरः ।

† सिंहो मृगेन्द्रः पञ्चास्यः —इत्यमरः ।

‡ प्रसह्य तु हठार्थकम्—इत्यमरः ।

अ०—गुहानिबद्धप्रतिशब्ददीर्घम् तदीयम् आक्रन्दितम् आर्तसाधो नृपस्य नगेन्द्रसक्ताम् दृष्टिम् रश्मिषु आदायेव निवर्तयामास ।

व्याक०—गुहाया निबद्धेन ( तत्पु० ) प्रतिशब्देन ( कर्मधा० ) दीर्घम् ( तत्पु० ) गुहानिबद्धप्रतिशब्ददीर्घम् । आर्तेषु साधो आर्तसाधो (तत्पु०)। तस्या इदं तदीयम्, त्यदादीना वृद्धत्वाद् "वृद्धाच्छ" तस्येयादेश । आक्रन्दितम् क्रन्दते "नपुंसके भावे क्त"। निवर्तयामास णिजन्ताद् वर्ततेर्लिट्, आमन्तादस्तेरनुप्रयोग । दृष्टिम्-पश्यते क्तिन् ।

व्याख्या— गुहायाम्-गह्वरे,* निबद्धो निनदितो य प्रतिशब्द-प्रतिध्वनि, तेन दीर्घम्, तदीयम्-नन्दिन्या, आक्रन्दितम्-आर्तनाद (कर्तृभूत) आर्तसाधो-पीडितरक्षणपरस्य, नृपस्य-राज्ञो दिलीपस्य, नगेन्द्रे-पर्वते, सक्ताम्-संलग्नाम् दृष्टिम्, †रश्मिषु-रश्मयो नेत्रकिरणा एव रश्मय (अश्व) प्रग्रहा, तेषु, आदायेव गृहीत्वेव, निवर्तयामास-पर्वतात्परावर्तयति स्म ।

भा०—सिंहेनाक्रान्ता नन्दिनी दु खाक्रन्दनमकरोत् । तच्चाक्रन्दन पर्वतगुहायामुच्चै प्रतिध्वनितम् । ततश्च यथान्यमनस्कमश्वमश्वारोहो वल्गामाकृष्य कुमार्गान्निवर्त्य मार्गं आनयति, तथैव दीर्घं तदाक्रन्दन नेत्रकिरणरूपा वल्गामाकृष्य राज्ञो नेत्र पर्वतान्निवर्त्य नन्दिन्याभिमुखमकरोत् ।

अल०—अत्र रश्मय एव रश्मय इति रश्मिषु प्रग्रहत्वरूपणाच्छ्लिष्टरूपकम् । आदायेवेति उत्प्रेक्षा च । अनयोरङ्गाङ्गिभावेन सङ्कर । आर्तसाधोरिति राज्ञ, दीर्घमिति च शब्दस्य विशेषण साभिप्रायमिति परिकरोऽपि । राजगतआवेगो भावो व्यङ्ग्य ।

स पाटलायां गवि तस्थिवांसं धनुर्धर केसरिणं ददर्श ।
अधित्यकायामिव धातुमय्या लोध्रद्रुमं सानुमत प्रफुल्लम् ॥२९॥

अ०—धनुर्धर स पाटलायाम् गवि तस्थिवासम् केसरिणम् सानुमत धातुमय्याम् अधित्यकायाम् प्रफुल्लम् लोध्रद्रुममिव ददर्श ।

व्याक०—धरतीति धर, पचाद्यच्, धनुषो धरो धनुर्धर (ष० तत्पु०)।

*—दरी तु कन्दरो वाऽस्त्री देवखातबिले गुहा-इत्यमर ।

†—किरणप्रग्रहौ रश्मी—इत्यमर ।

तास्थिवासमिति तस्थाविति तिष्टतेर्लिटि "क्सुश्च" इति क्सुरादेश "वस्वेकाजाद्घसाम्" इतीड् द्वित्वम् । केसरिणमिति-केसरा अस्य सन्तीति केसरशब्दाद 'इनि'। सानुमानिति सानुशब्दान्मतुप् । धातुमयीति धातुशब्दाद्विकारे मयट् टित्वाद् ङीप् । अधित्यका-अधिशब्दाद् 'उपाधिभ्या त्यकन्नासन्नारूढयो" इति त्यकन्प्रत्यय । प्रफुल्लमिति फुल्लते पचाद्यच् ।

व्याख्या—धनुर्धर -कार्मुकधारी. स -दिलीप , पाटलायाम्-ईषद्रक्तवर्णायाम् गवि-धेनौ नन्दिन्याम् तास्थिवासम् स्थितम् केसरिणम्-सिहम् † सानुमत -पर्वतस्य धातुमय्याम-धातोर्गैरिकस्य विकारो धातुमयी, तस्याम् ‡ अधित्यकायाम् ऊर्ध्वभूमौ. प्रफुल्लम्-विकसितम् , (सिंहपक्षे प्रसन्नं च) लोध्रद्रुमम्-लोध्राख्य वृक्षमिव ददर्श ।

भा०—यथा गैरिकधातुना रक्तवर्णाया पर्वतस्योर्ध्वभूमौ पुष्पितो लोध्रवृक्षो लक्ष्यते, तथैव रक्तवर्णा नन्दिनीमाक्रम्य स्थित प्रसन्नमूर्ति सिहोऽपि पर्वतात् परावृत्तचक्षुषा दिलीपेन लक्ष्यते स्म ।

अल०—उपमा । धनुर्धर इति वक्ष्यमाणस्य क्रोधस्य योग्यता ध्वनयति ।

**ततो मृगेन्द्रस्य मृगेन्द्रगामी वधाय वध्यस्य शर शरण्य ।**
**जाताभिषङ्गो नृपतिर्निषङ्गादुद्धर्तुमैच्छत् प्रसभोद्धृतारि ॥३०॥**

अ०—तत मृगेन्द्रगामी शरण्य प्रसभोद्धृतारि नृपतिः जाताभिषङ्ग (सन्) वध्यस्य मृगेन्द्रस्य वधाय निषङ्गात् शरम् उद्धर्तुम् ऐच्छत् ।

व्याक०—मृगेन्द्र इव गच्छतीति मृगेन्द्रगामी, "कर्तर्युपमाने' इति गच्छतेर्णिनि । जातोऽभिषङ्गो यस्य स जाताभिषङ्ग । प्रसभमुद्धृता (केव०) अरयो येन (बहु०) स प्रसभोद्धृतारि । शरणे साधु शरण्य, "तत्र साधु" इति यत् । अभिषङ्ग -इति निषङ्ग इति च उभयत्र सञ्जधातोर्घञ्, पूर्वत्र भावे उत्तरत्र "हलश्च" इत्यनेनाधिकरणे । वध्यस्येति वधमर्हतीति विग्रहे वधशब्दाद् अर्हार्थे "दण्डादिभ्यो यत्" । वधाय—"हनश्च वध'

* "श्वेतरक्तस्तु पाटलः" इत्यमर ।

† 'स्नु' प्रस्थ सानुरस्त्रियाम्' इत्यमर ।

‡ "उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधित्यका" इत्यमर ।

इत्यनेन हन्तेरप्प्रत्ययो वधादेशश्च । उद्धर्तुम्-उत्पूर्वाद् हरतेः 'समानकर्तृकेषु तुमुन् । ऐच्छत्-इच्छतेर्लङ् 'इषुगमियमां छः" इति छः ।

व्याख्या—ततः-सिंहदर्शनानन्तरम्, मृगेन्द्रगामी-सिंहसदृशगमनशीलः शरण्यः-शरणे-रक्षणे, साधुः-निपुणः प्रसभम्-हठात् उद्धृताः-उन्मूलिताः अरयः-शत्रवो येन तथाभूतः, नृपतिः-दिलीपः जातः-उत्पन्नः अभिषङ्गः-पराभवो यस्य तथाभूतः सन् वध्यस्य-हन्तुं योग्यस्य मृगेन्द्रस्य-सिंहस्य वधाय-नाशाय निषङ्गात्-तूणीरात्, शरम्-बाणम् उद्धर्तुम्-निष्कासयितुम् ऐच्छत्-अकामयत ।

भा०—येन सर्वे स्वशत्रवो बलाद् विनाशिताः तादृशः स शरणागत-रक्षको दिलीपः स्वसमक्षं गवि सिंहस्याक्रमणं दृष्ट्वा स्वपराभवममन्यत । अत एव स्वपराभवकर्तुर्वधयोग्यस्य तस्य सिंहस्य वधाय तूणीराद् बाणं निष्कासयि-तुमैच्छत् ।

अलं०—मृगेन्द्रगामीति वाचकलुप्तोपमा । विशेषणानां साभिप्रायत्वात् परिकरः । लाटानुप्रासश्चमत्कारी । वृत्त्यनुप्रासोऽपि । शरः शरण्य-इति यमकम् । राज्ञः क्रोधव्यञ्जनाद् रौद्ररसध्वनिः । सिंह आलम्बनम् तत्कृत पराभव उद्दीपनम्, बाणनिष्कासनम्-अनुभावः । अमर्ष आवेग गर्वश्च सञ्चारिण इति ।

वामेतरस्तस्य करः प्रहर्तुर्नखप्रभाभूषितकङ्कपत्रे ।
सक्ताङ्गुलिः सायकपुङ्ख एव चित्रार्पितारम्भ इवावतस्थे ॥२१॥

अ०—प्रहर्तुः तस्य वामेतरः करः नखप्रभाभूषितकङ्कपत्रे सायकपुङ्खे एव सक्ताङ्गुलिः (सन्) चित्रार्पितारम्भ इव अवतस्थे ।

व्याक०—वामादितरो वामेतरः (तत्पु०) । न खं येषु (व० ब्री०) ते नखाः 'नभ्राण्नपात्" इत्यादिनिपातनाद् नखो नलोपाभावः । नखानां प्रभाभिः (तत्पु०) भूषितानि (तत्पु०) कङ्कस्य पत्राणि (तत्पु०) यस्य (बहु०) तस्मिन् नखप्रभाभूषितकङ्कपत्रे । सक्ता अङ्गुलयो यस्य (बहु०) स सक्ताङ्गुलिः । चित्रे अर्पितः (तत्पु०) आरम्भो यस्य (बहु) स चित्रार्पितारम्भः । करः-कृधातोः

* "अभिषङ्गः पराभवे" इत्यमरः ।

पचाद्यच् । सायक इति स्यतेर्दैवादिकाद् रावुल आलम , युगागमश्च । अर्पित इति णिजन्ताद् 'ऋ' धातोर्निष्ठा "अर्तिह्री " इत्यादिना पुक् । आरम्भ इति रभ्' धातोर्घञ् "रभेरशब्लिटो" इत्यनेन नुम् । अवतस्थे-इति "समव-प्रविभ्य स्थ" इत्यात्मनेपदम् ।

व्याख्या—प्रहर्तु -प्रहारकर्तु तस्य-दिलीपस्य, वामेतर -दक्षिण , कर -हस्त नखाना प्रभाभि -कान्तिभि भूषितानि कङ्कस्य-पक्षिविशेषस्य † पत्राणि-पक्षा यस्य तथाभूते ‡ सायकस्य-शरस्य पुङ्खे-मूलप्रदेशे सक्ता' सलग्ना अङ्गुलयो यस्य तथाभूत , सन् चित्रे-आलेख्ये, अर्पित -आलिखित आरम्भ -तूणीराच्छरनिष्कासनोद्योगो यस्य तथाभत इव अवतस्थे-स्थित ।

भा०—यदा दिलीप पृष्ठभागे लम्बमानात् तूणीराद् बाणनिष्कासनाय स्वदक्षिणहस्ताङ्गुली' पुङ्खे योजितवान्, तदाङ्गुलयस्तत्रैव संश्लिष्टा निश्चेष्टा अभवन्, बाणम्बहिराकर्ष्टुं नाशक्नुवन् । अत एव यथा चित्रलिखित वस्तु स्पन्दशून्यम्भाति, तथैव दिलीपस्य दक्षिणहस्तोऽपि भाति स्म ।

अलं०—चित्रार्पितारम्भ इवेत्युत्प्रेक्षा । नखप्रभाविभूषितत्वोक्तिस्तत्-पोषिका । विस्मयो व्यज्यते ।

**बाहुप्रतिष्टम्भविवृद्धमन्युरभ्यर्णमागस्कृतमस्पृशद्भि ।**
**राजा स्वतेजोभिरदह्यतान्तर्भोगीव मन्त्रौषधिरुद्धवीर्यः ॥३२॥**

अ०—बाहुप्रतिष्टम्भविवृद्धमन्यु राजा अभ्यर्णम आगस्कृतम् अस्पृशद्भि स्वतेजोभि मन्त्रौषधिरुद्धवीर्य भोगीव अन्त अदह्यत ।

व्या०—बाहो प्रतिष्टम्भेन (त०) विवृद्धो (त०) मन्युर्यस्य (ब०) स बाहुप्रतिष्टम्भविवृद्धमन्यु । मन्त्रैश्चौषधिभिश्च (द्वं०) रुद्धम (त०) वीर्यं यस्य (ब०) स मन्त्रौषधिरुद्धवीर्य । प्रतिष्टम्भ इति स्तम्भधातोर्घञ, "प्रतेश्च"

---

* "कङ्कः पक्षिविशेषे स्याद् गुप्ताकारे युधिष्ठिरे" इति विश्वः ।

† 'शीघ्रगतिसम्पादनाय बाणमूलप्रदेशे कङ्कपक्षिण पक्षा योज्यन्ते ' इति धनुर्विद्यासम्प्रदायविद ।

‡ "शरे खड्गे च सायक ' इत्यमर ।

इत्यनेन हन्तेरप्प्रत्ययो वधादेशश्च । उद्धर्तुम्-उत्पूर्वाद् हरतेः 'समानकर्तृकेषु तुमुन्' । ऐच्छत्-इच्छतेर्लङ् 'इषुगमियमां छः'' इति छः ।

व्याख्या—ततः-सिंहदर्शनानन्तरम्, मृगेन्द्रगामी-सिंहसदृशगमनशील शरण्य -शरणे-रक्षणे, साधुः-निपुणः प्रसभम्-हठात् उद्धृता -उन्मूलिताः अरयः-शत्रवो येन तथाभूतः नृपतिः-दिलीपः जातः-उत्पन्नः अभिषङ्गः-पराभवो यस्य तथाभूतः सन् वध्यस्य-हन्तुं योग्यस्य मृगेन्द्रस्य-सिंहस्य वधाय-नाशाय निषङ्गात्-तूणीरात्, शरम्-बाणम् उद्धर्तुम्-निष्कासयितुम् ऐच्छत्-अकामयत ।

भा०—येन सर्वे स्वशत्रवो बलाद् विनाशिताः तादृशः स शरणागत-रक्षको दिलीपः स्वसमक्षं गवि सिंहस्याक्रमणं दृष्ट्वा स्वपराभवममन्यत । अत एव स्वपराभवकर्तुर्वधयोग्यस्य तस्य सिंहस्य वधाय तूणीराद् बाणं निष्कासयि-तुमैच्छत् ।

अल०—मृगेन्द्रगामीति वाचकलुप्तोपमा । विशेषणानां साभिप्रायत्वात् परिकरः । लाटानुप्रासश्चमत्कारी । वृत्त्यनुप्रासोऽपि । शरः शरण्य-इति यमकम् । अत्र क्रोधव्यञ्जनाद् रौद्ररसध्वनिः । सिंहः आलम्बनम्, तत्कृत पराभवः उद्दीपनम्, बाणनिष्कासनम्-अनुभावः । अमर्षः आवेगः गर्वश्च सञ्चारिणः इति ।

**वामेतरस्तस्य करः प्रहर्तुर्नखप्रभाभूषितकङ्कपत्रे ।**
**सक्ताङ्गुलिः सायकपुङ्ख एव चित्रार्पितारम्भ इवावतस्थे ॥३१॥**

अ०—प्रहर्तुः तस्य वामेतरः करः नखप्रभाभूषितकङ्कपत्रे सायकपुङ्खे एव सक्ताङ्गुलिः (सन्) चित्रार्पितारम्भः इव अवतस्थे ।

व्याक०—वामादितरो वामेतरः (तत्पु०) । न खं येषु (ब० व्री०) ते नखाः "नभ्राण्नपात्" इत्यादिनिपातनाद् नञो नलोपाभावः । नखानां प्रभाभिः (तत्पु०) भूषितानि (तत्पु०) कङ्कस्य पत्राणि (तत्पु०) यस्य (बहु०) तस्मिन्, नखप्रभाभूषितकङ्कपत्रे । सक्ता अङ्गुलयो यस्य (बहु०) स सक्ताङ्गुलिः । चित्रे अर्पितः (तत्पु०) आरम्भो यस्य (बहु) सः चित्रार्पितारम्भः । करः-कृधातोः

* "अभिषङ्गः पराभवे" इत्यमरः ।

पचाद्यच् । सायक इति स्यतेर्देवादिकाद् ण्वुल्, आत्वम, युगागमश्च । अर्पित इति णिजन्ताद् 'ऋ' धातोर्निष्ठा "अर्तिह्री " इत्यादिना पुक् । आरम्भ इति रभ्' धातोर्घञ् "रभेरशब्लिटो" इत्यनेन नुम् । अवतस्थे-इति "समवप्रविभ्य स्थ" इत्यात्मनेपदम् ।

व्याख्या—प्रहर्तु -प्रहारकर्तु तस्य-दिलीपस्य, वामेतर -दक्षिण, कर -हस्त नखाना प्रभाभि -कान्तिभि . भूपितानि कङ्कस्य-पक्षिविशेषस्य † पत्राणि-पक्षा यस्य तथाभूते ‡ सायकस्य-शरस्य पुङ्खे-मूलप्रदेशे सक्ता सलग्ना अङ्गुलयो यस्य तथाभूत . सन् चित्रे-आलेख्ये अर्पित -आलिखित आरम्भ -तूणीराच्छरनिष्कासनोद्योगो यस्य तथाभूत इव अवतस्थे-स्थित ।

भा०—यदा दिलीप पृष्ठभागे लम्बमानात् तूणीराद् बाणनिष्कासनाय स्वदक्षिणहस्ताङ्गुलीः पुङ्खे योजितवान्, तदाङ्गुलयस्तत्रैव संश्लिष्टा निश्चेष्टा अभवन् बाणम्बहिराकर्ष्टुं नाशक्नुवन् । अत एव यथा चित्रलिखित वस्तु स्पन्दशून्यम्भाति तथैव दिलीपस्य दक्षिणहस्तोऽपि भाति स्म ।

अलं०—चित्रार्पितारम्भ इवेत्युत्प्रेक्षा । नखप्रभाविभूषितत्वोक्तिस्तत्-पोषिका । विस्मयो व्यज्यते ।

**बाहुप्रतिष्टम्भविवृद्धमन्युरभ्यर्णमागस्कृतमस्पृशद्भि ।**
**राजा स्वतेजोभिरदह्यतान्तर्भोगीव मन्त्रौषधिरुद्धवीर्यः ॥३२॥**

अ०—बाहुप्रतिष्टम्भविवृद्धमन्यु राजा अभ्यर्णम आगस्कृतम् अस्पृशद्भि स्वतेजोभि मन्त्रौषधिरुद्धवीर्य भोगीव अन्त अदह्यत ।

व्या०—बाहो प्रतिष्टम्भेन (त०) विवृद्धो (त०) मन्युर्यस्य (ब०) स बाहुप्रतिष्टम्भविवृद्धमन्यु । मन्त्रैश्चौषधिभिश्च (द्व०) रुद्धम् (त०) वीर्यं यस्य (ब०) स मन्त्रौषधिरुद्धवीर्य । प्रतिष्टम्भ इति स्तम्भधातोर्घञ, "प्रतेश्च"

---

* "कङ्क पक्षिविशेषे स्याद् गुप्ताकारे युधिष्ठिरे" इति विश्वः ।

† 'शीघ्रगतिसम्पादनाय बाणमूलप्रदेशे कङ्कपक्षिण पक्षा योज्यन्ते' इति धनुर्विद्यासम्प्रदायविद ।

‡ "शरे खड्गे च सायक" इत्यमर ।

इति पञ्चमी । विवृद्ध इति 'वृधु' धातोः क्तः । अभ्यर्णमिति अर्दतेः क्तः, निष्ठायां दस्य च नत्वम्, "अभेश्चाविदूर्ये" इतीडभावः । आगस्कृदिति "क्विप् च" इत्यनेन कर्तरि क्विप्, तुगागमः "अतः कृकमि" सः । अदह्यत कर्मणि लङ् "सार्वधातुके यक्" ।

व्याख्या—बाहोः-भुजस्य प्रतिष्टम्भेन-प्रतिरोधेन विवृद्धो-वृद्धिं गतो मन्युः-क्रोधो यस्य, तथाभूतः, राजा-दिलीपः, अभ्यर्णम्-समीपस्थितम् आगस्कृतम्-अपराधिनम्, अस्पृशद्भिः-अनामृशद्भिः दण्डयितुमशक्नुवद्भिरिति यावत् स्वस्य-आत्मनः, † तेजोभिः-प्राणात्ययेऽपि पराधिक्षेपाद्यसहनशीलानि तेजांसि तैः करणभूतैः, मन्त्रौषधिभिश्च रुद्धम्-प्रतिबद्धम् वीर्यम्-शक्तिः यस्य तथाभूतः, ‡ भोगी-सर्प इव अन्तः-स्वहृदये अदह्यत-अत्यन्तं ताप्यते स्म ।

भा०—स्वबाहोः प्रतिरोधेन दिलीपस्य क्रोधो ववृधे । न च समीपस्थस्यापि सिंहस्य किमपि कर्तुं शक्तोऽभूत् । तेन यस्य सर्पस्य पराक्रमो मन्त्रौषधेन च निरुद्धः स्यात्, स यथा किञ्चिदकुर्वाणः स्वहृदय एव ज्वलति, तथैव राजापि तेजसा स्वयमेव मनसि जज्वाल, अत्यन्तं सन्तप्यमान इवाभवदिति ।

अल०—उपमालङ्कारः । काव्यलिङ्गञ्च । तेजोभिः शत्रौ करणीयो दाहो राज्ञि कृत इत्यसङ्गतिश्चालङ्कारः । "अन्यत्र करणीयस्य ततोऽन्यत्र कृतिश्च सा" इति तल्लक्षणात् (कुवल०) । विषादाभिव्यञ्जनाद् भावध्वनिः ।

**तमार्यगृह्यं निगृहीतधेनुर्मनुष्यवाचा मनुवंशकेतुम् ।**
**विस्माययन् विस्मितमात्मवृत्तौ सिंहोरुसत्त्वं निजगाद सिंहः ॥३३॥**

अ०—निगृहीतधेनुः सिंहः आर्यगृह्यम् मनुवंशकेतुम् सिंहोरुसत्त्वम् आत्मवृत्तौ विस्मितम् तम् मनुष्यवाचा विस्माययन् निजगाद ।

व्या०—निगृहीता धेनुर्येन सः (ब०) निगृहीतधेनुः । निगृहीतेति गृह्णातेः क्तः, "ग्रहो लिटि दीर्घः" । उरु सत्त्वं यस्य तमुरुसत्त्वम्, (ब०)

* "प्रतिबन्धः प्रतिष्टम्भः" इत्यमरः ।

† "अधिक्षेपाद्यसहनं तेजः प्राणात्ययेष्वपि" इति यादवः ।

‡ "भोगी राजभुजङ्गयोः" इति शाश्वतः ।

सिंहमिवोरुसत्त्वम् सिंहोरुसत्त्वम्, "उपमानानि सामान्यवचनै" इत्यनेन तत्पुरुष । आर्येति 'ऋ'धातो "ऋहलोर्ण्यत्" । गृह्येति गृह्णाते "पदास्वैरि बाह्यापक्ष्येषु च" इति क्यप् । मनुष्यवाचेति विस्मयोत्पादने साधकतमत्वेन करणे तृतीया । विस्माययन्निति णिजन्तात् स्मयते "धातुसम्बन्धे प्रत्ययाः" इति लट् । तस्य शत्रादेश । मनुष्यवाग्रूपात्करणादत्र विस्मय, अत एव "नित्य स्मयते" "भीस्म्योर्हेतुभये" इत्याभ्यामात्वमात्मनेपदञ्च न, "हेतुभये" इति प्रयोजककर्तृसकाशादेव भयस्मयोत्पत्तौ तदुभयविधानात् । क्वचित्तु 'विस्मापयन' इत्यपि पाठ. । स च णिच्प्रत्ययद्वयेन पूर्वस्मिन् णिचि मनुष्यवाच, द्वितीये च सिंहस्य प्रयोजककर्तृत्वमभ्युपगम्य समर्थितः कौमुद्याम्भट्टोजिदीक्षितेन । "राजा विस्मयते, त मनुष्यवाक् प्रेरयति. इति मनुष्यवाग् राजानं विस्मापयते, विस्मापयमाना वाच सिंह प्रेरयतीति सिंहो मनुष्यवाचा राजान विस्मापयति" । पूर्वत्र प्रयोजकादेव स्मयसत्त्वेन पुगात्मनेपदे, उत्तरत्र तु प्रयोजकात् स्मया-भावान्नात्मनेपदम् पुक् तु पूर्वज्ञात स्थित एवेति ।

व्याख्या—निगृहीता-आक्रान्ता धेनुर्येन स सिंह, आर्याणाम्-श्रेष्ठ पुरुषाणा गृह्यम्-पक्ष्यम्, सज्जनपक्षपातिनमिति यावत्, मनोर्वंश-कुलमेव वंश.-वंशयष्टि, तत्र केतुम्-ध्वजम्, ध्वजवद्वंशाग्रे स्थितम्, सिंहमिवोरुसत्त्वम् महाबलम्, आत्मन-स्वस्य वृत्तौ-बाहुस्तम्भरूपे व्यापारे, विस्मितम्-आश्चर्य-युक्तम्, तम्-राजानम्, मनुष्यवाचा-मनुष्यस्येवार्थबोधिन्या वर्णात्मिकया वाण्या विस्माययन् अधिकमाश्चर्यान्वित कुर्वन्, निजगाद-उवाच ।

भा०—दिलीपोऽभूतपूर्वं स्वभुजप्रतिरोधमनुभूय विस्मयम्प्राप्त एव, पुनरपि स सिंहो मानवीं वाचमवलम्ब्य तस्याऽधिकमाश्चर्यमुत्पादयन् त सम्बोधयामास ।

अल०—मनुवंशकेतुम्-इति राज्ञि केतुत्वारोपाय कुले वंशयष्टित्वारोप इति श्लिष्टपरम्परितरूपकम् । सिंहोरुसत्त्वमित्यत्र लुप्तोपमा । एकेन हेतुना जायमाने विस्मये हेत्वन्तरस्य सहायकत्वोक्त्या समाधिरलङ्कार । लाटानुप्रासस्य प्रकर्ष । विस्मयस्य स्वशब्दोक्त्या नाद्भुतरसध्वनि । यदि तु विस्मयशब्द आश्चर्यचेष्टामात्रबोधक, तर्हि आन्तरस्य भावस्य व्यङ्ग्यत्वे सम्भवत्येव रसध्वनि. ।

**अलम्महीपाल तव श्रमेण प्रयुक्तमप्यस्त्रमितो वृथा स्यात् ।**
**न पादपोन्मूलनशक्ति रंहः शिलोच्चये मूर्च्छति मारुतस्य ॥३४॥**

अ०—(हे !) महीपाल ! तव श्रमेण अलम्, इतः प्रयुक्तम् अपि अस्त्रम् वृथा स्यात्, पादपोन्मूलनशक्ति मारुतस्य रंहः शिलोच्चये न मूर्च्छति ।

व्या०—पादपानामुन्मूलने (त०) शक्तिर्यस्य तत् पादपोन्मूलनशक्ति "सप्तमीविशेषणे बहुव्रीहौ" इति सप्तमीपूर्वनिपातविधिसामर्थ्याद्व्यधिकरणपदो बहुव्रीहिः । पादप इति पादैः पिबन्तीति विग्रहे पादोपपदात् पिबतेः "सुपि स्थ" इत्यत्र सुपीति योगविभागात् कः । उच्चय इति चिनोतेः "एरच्" । श्रमेणेति श्राम्यतेर्घञ् उदात्तोपदेशत्वाद् वृद्धिनिषेधः । गम्यमानापि क्रिया कारकविभक्तीनाम्प्रयोजिकेति स्वीकाराद्गम्यमानसाधनक्रियायाः करणत्वात्तृतीया ।

व्याख्या—(हे) महीपाल-राजन् ! तव-भवतः श्रमेण * अलम्-साध्यं नास्ति, निष्फलस्ते मम हननोद्योग इत्यर्थः इतः-अस्यां दिशि-मयि इति यावत्, प्रयुक्तम्-क्षिप्तमपि अस्त्रम्-बाणादिकम्, वृथा-निष्फलम्, स्यात् । पादपानाम्-वृक्षाणामुन्मूलने-उत्पाटने, शक्तिः-सामर्थ्यं यस्य तथाभूतम् मारुतस्य-वायोः, रंहः-वेगः, शिलोच्चये-पर्वते, न मूर्च्छति-न क्रमते ।

भा०—सिंहो वदति—हे राजन ! मा स्म कृथा वृथा श्रमम्, यतः प्रथमन्तु त्वमस्त्रचालन एवासमर्थः, यदि कथञ्चिच्चालयेरपि तथाप्यल्पबलत्वात् हिंसितुं शक्तमपि तवास्त्रं मम न किञ्चिदप्यपकर्तुं शक्नोति इति । यथा वृक्षाणामुत्पाटने समर्थोऽपि वायोर्वेगः न पर्वतमुत्पाटयितुं समर्थः ।

अलं०—अत्र "वृथा स्यात्" "न मूर्च्छति" इत्युभयोर्वाक्ययोर्वैयर्थ्य एव पर्यवसानात् प्रतिवस्तूपमालङ्कारः । सिंहगतस्य गर्वस्य प्राधान्येनाभिव्यञ्जनाद्भावध्वनिः ।

**कैलासगौरं वृषमारुरुक्षोः पादार्पणानुग्रहपूतपृष्ठम् ।**
**अवेहि मां किङ्करमष्टमूर्तेः कुम्भोदरं नाम निकुम्भमित्रम् ॥३५॥**

अ०—कैलासगौरम् वृषम् आरुरुक्षोः अष्टमूर्तेः पादार्पणानुग्रहपूतपृष्ठम् किङ्करम् निकुम्भमित्रम् कुम्भोदरम् नाम माम् अवेहि ।

---

* "अलम्भूषणपर्याप्तिशक्तिवारणवाचकम्" इत्यमरः ।

व्या०—कैलासमिव गौरम्, कैलासगौरम (त०) । पादयोरर्पणमेव (त०) अनुग्रह मयूरव्यंसकादित्वात्समास., तेन पूतं पृष्टं यस्य तम् (ब०) पादार्पणानुग्रहपूतपृष्टम् । अष्टौ मूर्तयो यस्य, तस्याष्टमूर्तें (ब०) । कुम्भ इवोदरो यस्य त कुम्भोदरम् । आरुरुक्षो इति-आरोढुमिच्छोरिति रुहधातो सन् तदन्ताच्च 'सनाशंसभिक्ष उ'' । वृषमित्यारोहणक्रियाया. कर्म । तत्र ''कर्तृकर्मणो कृति' इति षष्ठ्याः ''न लोकाव्ययनिष्ठाखलर्थतृनाम्'' इति निषेध । मर्तिरिति मूर्च्छते. क्तिन्. ''राल्लोप' इति च्छकारलोपः । अनुग्रह इति 'ग्रहवृदृनिश्चिगमश्च'' इति गृह्णातेरप्प्रत्यय । किङ्करः-किङ्करोतीति 'किंयत्तद्बहुषु कृञोऽज्विधानम्'' इत्यच् प्रत्यय' ।

व्याख्या—कैलासगौरम्-कैलासवच्छुभ्रम्, वृषम्-वृषभम्, आरुरुक्षो.-आरोढुमिच्छो., अष्टौ-पृथिव्यादयोऽष्टसङ्ख्याका मूर्तयः-आकारा यस्य तथाभूतस्य, शिवस्येति यावत्, पादार्पणम्-पादस्थापनमेवानुग्रह -प्रसाद, तेन पूतम्-पवित्रीकृत पृष्टम्-पृष्ठभागो यस्य तथाभूतम्, किङ्करम्-सेवकम्, निकुम्भ मित्रकस्य किङ्करस्य मित्रम्, कुम्भोदरं नाम-कुम्भोदरनाम्नाख्यातं माम्, अवेहि जानीहि ।

भा०—हे राजन् ! नाह सामान्यः सिंहो यं त्वं हन्या, अपि तु कुम्भोदरनिकुम्भनामानौ यौ द्वौ प्रसिद्धौ भगवत श्रीशङ्करस्य गणौ, तयोरन्यतरोऽहम् । यदा शिवो वृषभं स्ववाहनमारोढुमिच्छति, तदानीं तस्याऽनुग्रहतया मम पृष्ठदेशे पाद न्यस्य तमारोहति इति मम सेवा ।

अल०—कैलासगौरमिति लुप्तोपमा । पादार्पणेऽनुग्रहत्वारोपाद् रूपकम् । पादार्पणेत्यादि पर्यायोक्तमपि । पूर्वपद्योक्तमस्त्रवैयर्थ्यमनेन समर्थितमिति काव्य लिङ्ग । गर्वाभिव्यञ्जनाद्भावध्वनि ।

**अमुम्पुर पश्यसि देवदारुं पुत्रीकृतोऽसौ वृषभध्वजेन ।**
**यो हेमकुम्भस्तननि सृताना स्कन्दस्य मातु पयसां रसज्ञ ॥३६॥**

---

* ''पृथिवी सलिल तेजो वायुराकाशमेव च । सूर्याचन्द्रमसौ सोमयाजी चेत्यष्टमूर्तय. ॥'' (शिवस्य) इति यादव. ।

अ०—पुर अमुम् देवदारुम् पश्यसि, असौ वृषभध्वजेन पुत्रीकृत , य स्कन्दस्य मातु हेमकुम्भस्तननि सृतानाम् पयसाम् रसज्ञ (अस्ति)।

व्या०—वृषभो ध्वजे यस्य तेन (व०) वृषभध्वजेन । "वाहिताग्न्यादिषु" इति सप्तम्याः परनिपात । हेम्न कुम्भ (त०) एव स्तन (त०), तस्मात् सृतानाम् (त०) हेमकुम्भस्तननि सृतानाम। पुत्रीकृत इति च्वि । रसज्ञ इति-रसञ्जानातीति "आतोनुपसर्गे क" "आतो लोप इटि च" इत्यालोप ।

व्याख्या—पुर अग्रे, अमुम्-देवदारुम्-देवदारुवृक्षम् पश्यसि-अवलोकसे ? प्रश्नकाकु । अपि पश्यसि ? इति प्रश्न । असौ-देवदारु, वृषभो ध्वजे-पताकाया यस्य तेन, शिवेनेति यावत्, पुत्रीकृत पुत्रवत्सम्भावित इति । य -देवदारु, स्कन्दस्य-कार्तिकेयस्य, मातु -पार्वत्याः, हेम्न -स्वर्णस्य कुम्भ -कलश एव स्तन , तस्मात् सृतानाम्-निर्गतानाम , पयसाम्-जलानाम , रसज्ञ -रसम्-आस्वादम्, जानाति-परिचिनोति, तथाभूत , अनुभूतास्वाद इति यावत्, अस्तीति शेष-। हेमकुम्भसदृशाभ्या स्तनाभ्या नि सृताना पयसाम्-दुग्धाना रसज्ञ इति स्कन्देऽपि विशेषण मल्लिनाथसूरियोजयामास ।

भा०—हे राजन् ! सम्मुखस्थित देवदारुवृक्षमेतमप्यवलोकसे ? एष खलु शिवेन पुत्रवन्मानितः । यतश्चाय स्कन्दस्य जनन्या पार्वत्या स्वकुचसदृशै. पय सदृशजलपूरितैर्हेमकुम्भै सिक्त । अत एवायमुभयोरुमामहेश्वरयो स्कन्दवत् प्रिय ।

अल०—हेमकुम्भेत्यादौ रूपकम् । स्कन्दमात्रा सिक्तत्वेन देवदारुवृक्षस्य गौरवाख्यानादुदात्तालङ्कार । वृक्षे स्कन्दसादृश्य स्कन्दसोदरत्व वा व्यङ्ग्यम् ।

कण्डूयमानेन कट कदाचिद्वन्यद्विपेनोन्मथिता त्वगस्य ।
अथैनमद्रेस्तनया शुशोच सेनान्यमालीढमिवासुरास्त्रै ॥२७॥

अ० —कदाचित् कटम् कण्डूयमानेन वन्यद्विपेन अस्य त्वक् उन्मथिता, अथ अद्रे तनया असुरास्त्रै. आलीढम् सेनान्यम् इव एनम् शुशोच ।

व्या०—वने भवो वन्य , स चासौ द्विप. (कर्म०), तेन वन्यद्विपेन, उन्मथनक्रियायाः कर्तरि तृतीया । कदेति किंशब्दात् "सर्वैकान्यकियत्तद काले

* "पार्वतीनन्दनः स्कन्द " इत्यमर ।

दा" इति दा तद्धित, "प्राग्दिशो विभक्ति" इति विभक्तित्वात्कादेशः । कण्डूयमानेति 'कण्डूञ्'धातोर्ञित्त्वात् कर्तृगामिनि क्रियाफले आत्मनेपदम्, "कण्ड्वादिभ्यो यक्" । कटम्-इति कण्डूयनस्य कर्म । एनम्-अन्वादेशे "द्वितीयाटौस्स्वेन." इति इदम एनादेशः । सेनान्यम्-"सत्सुद्विष" इत्यादिना क्विप्, "एरनेकाचोऽसयोगपूर्वस्य" इति यण् । आलीढमिति आङ्पूर्वा लिहधातो· क्त ।

व्याख्या—कदाचित्-कस्मिश्चित्समये, कटम्-गण्डस्थलम्, कण्डूयमानेन- निघर्षयता, वन्य -आरण्यक, * द्विपो हस्ती, तेन, अस्य,देवदारुवृक्षस्य, † त्वक्-वल्कलम्, उन्मथिता-उत्पाटितम्, अथ-अनन्तरम्, अनेन हेतुना, अद्रे -पर्वतस्य, हिमालयस्य, तनया पुत्री, पार्वती असुरास्त्रै - असुराणाम् दैत्यानाम्, अस्त्रै आयुधै, आलीढम्-क्षतम्, सेनान्यम्-सेना नयति परिचालयति इति सेनानी -स्कन्द, तमिव, एनम्-देवदारुम्, शुशोच, एनं दृष्ट्वा शोकातुराभूदिति ।

भा०—एकदा कश्चनारण्यो हस्ती खर्ज्वपनोदाय स्वगण्डस्थलमस्मिन् देवदारौ घर्षयामास । तेनास्य वल्कलमुत्पाटितमभूत्, तच्च दृष्ट्वा पार्वती देवासुरसङ्ग्रामेऽसुराणा शस्त्रै क्षतं कार्तिकेयं विलोक्य यथा, तथैव शोकातुराऽभूत् ।

अल०—उपमालङ्कार । शोकस्य त्वगुन्मथनहेतुकत्वाद् वाक्यार्थहेतुकं काव्यलिङ्गञ्च । पार्वत्या वात्सल्य व्यङ्ग्यम् ।

तदा प्रभृत्येव वनद्विपानां त्रासार्थमस्मिन्नहमद्रिकुक्षौ ।
व्यापारितः शूलभृता विधाय सिंहत्वमङ्कागतसत्त्ववृत्ति ॥३८॥

अ०—तदाप्रभृति एव शूलभृता वनद्विपानाम् त्रासार्थम् अङ्कागतसत्त्ववृत्ति सिंहत्वम् विधाय अस्मिन् अद्रिकुक्षौ अहम् व्यापारित ।

व्या०—अङ्कमागताः (त०) सत्त्वा वृत्तिर्यस्मिन् (ब०) तदङ्कागतसत्त्ववृत्ति । तदेति-तच्छब्दात् 'सर्वैकान्यकियत्तद काले दा" । तदा प्रभृति-

* "दन्ती दन्तावला हस्ती द्विरदोऽनेकपो द्विपः" इत्यमर ।
† "सारो मज्जा नरि त्वक् स्त्री वल्क वल्कलमस्त्रियाम्" इत्यमर ।

इत्युभे अप्यव्यये। व्यापारित-इति व्याध्रियतेस्तौदादिकाण्णिजन्तात् क्त। शूलभृता शूलं बिभर्तीति शूलोपपदाद् भरतेर्बिभर्तेर्वा क्विप्। विधायेति विदधातेः क्त्वा, ततो ल्यप्। व्यापारणमत्र क्रिया, कर्मणि प्रयोगः। शूलभृद् मा व्यापारितवानिति कर्तरि। सिंहत्वमिति विधाने कर्म।

व्याख्या—तदा प्रभृत्येव-हस्तिकृतोन्मथनसमयमारभ्यैव, शूलभृता-शूलधारिणा, महादेवेन, वनद्विपानाम् आरण्यकगजानाम्, त्रासार्थम-त्रासाय, भयाय, अङ्कम्-समीपमागता प्राप्ता, सत्त्वाः-प्राणिन एव वृत्ति जीवनोपायो यस्मिंस्तथाभूतम्, सिंहत्वम्-सिंहरूपम्, विधाय कृत्वा, अस्मिन् पुरो दृश्यमाने, अद्रेः-पर्वतस्य, कुक्षौ गुहायाम्, अहम्, व्यापारितः-नियोजितः।

भा०—यदा वन्यगजेनास्य देवदारोस्त्वगुत्पाटिता, तत आरभ्यैव वन्यगजानाम्भीत्युत्पादनार्थं महादेवो मम सिंहरूपं विधाय मामत्र न्ययोजयत्। आदिशच्च मां यत् "त्वया स्वसमीपागतान्-प्राणिनो व्यापाद्य स्वजीवनं निर्वोढव्यम्, न पुनरिमम्परित्यज्य भोजनाय क्वापि गन्तव्यम्" इति।

अलं०—व्यापारणे हेतूपन्यासात्काव्यलिङ्गम्। अङ्कागताः सत्त्वा एव वृत्तिरित्युक्त्या समीपागताया गोरत्याज्यता व्यज्यते। तेन परिकरोऽपि।

**तस्यालमेषा क्षुधितस्य तृप्त्यै प्रदिष्टकाला परमेश्वरेण।**
**उपस्थिता शोणितपारणा मे सुरद्विषश्चान्द्रमसी सुधेव॥३९॥**

अ०—क्षुधितस्य तस्य मे तृप्त्यै अलम् परमेश्वरेण प्रदिष्टकाला एषा शोणितपारणा सुरद्विषः चान्द्रमसी सुधेव उपस्थिता।

व्या०—परमेश्वरेणेति "सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः" इत्यनेन कर्मधारयः। प्रदिष्टः कालो यस्याः सा प्रदिष्टकाला (ब०)। शोणितं पारणा शोणितपारणा। तृप्त्यै-"नमःस्वस्ति" इत्यादिना अलंशब्दयोगे चतुर्थी प्रदिष्ट-इति प्रदिशतेः क्तः, "व्रश्च" इति षत्वम्, ष्टुत्वञ्च। सुरद्विषः-सुरान् द्वेष्टीति सुरद्विट्, तस्य, सुरोपपदाद् द्विषधातोः कर्तरि क्विप्। चन्द्रमस इयं चान्द्रमसी, चन्द्रमःशब्दात् "तस्येदम्" इति शैषिकोऽण्। अणन्ताद् ङीप्। क्षुधित इति "वसतिक्षुधोरिट्"।

व्याख्या—क्षुधितस्य-बुभुक्षितस्य, तस्य अङ्कागतसत्त्ववृत्तेः, मे-मम,

शिवकिङ्करस्य सिंहरूपस्य, तृप्त्यै-प्रीणनाय, अलम् पर्याप्ता, परमेश्वरेण-महादेवेन, प्रदिष्ट निर्दिष्ट, काल, मदन्तिकागमनावसरो यस्यास्तथाभूता, एषा-पुरोवर्तिनी गोरूपा, शोणितपारणा शोणितमय व्रतान्तभोजनम्, सुरद्विषः-राहो, चान्द्रमसी-चन्द्रसम्बन्धिनी, सुधा-अमृतमिव, उपस्थिता-प्राप्ता ।

भा०—एकादश्यादिपर्वसु कृतोपवासा जना उपवासान्ते पारणां यथा विदधते, तथा चिराद्भोजनालाभात् कृतोपवासस्य मम पारणायै महादेवेन तृप्तिजननयोग्येय गौरत्र प्रेषिता । राहुणा यथा चन्द्रमण्डलामृत प्राप्यते, तथा मयेय प्राप्तेति ।

अल०—उपमा बिम्बप्रतिबिम्बभावमूलिका । इष्टार्थसिद्ध्यभिधानात् तृतीयसमोऽलङ्कार । हर्षाभिव्यञ्जनाद्भावध्वनि । गवि शोणितपारणेति "अवयवावयविभाव"मूलिका सारोपा शुद्धा लक्षणामाश्रित्य प्रयोग । शोणित-बाहुल्य तेन व्यङ्ग्यम । गोरवश्यभक्षणीयता च पारणापदव्यङ्ग्या ।

स त्व निवर्तस्व विहाय लज्जा गुरोर्भवान् दर्शितशिष्यभक्ति ।
शस्त्रेण रक्ष्य यदशक्यरक्ष न तद्यश शस्त्रभृता क्षिणोति ॥४०॥

अ०—स त्वम् लज्जाम् विहाय निवर्तस्व, भवान् गुरोः दर्शितशिष्य-भक्ति, [ अस्ति ], यद् रक्ष्यम् शस्त्रेण अशक्यरक्ष्यम् तद् शस्त्रभृता यश न क्षिणोति ।

व्या०—दर्शिता शिष्योचिता भक्ति (स० प० लो० त०), येन (ब०), स दर्शितशिष्यभक्ति । शिष्य इति शास्ते "एतिस्तुशास्वृदृजुष क्यप्" इति क्यप् । "शास इदङ्हलो." इतीत्वम्, "शासिवसिघसीनाञ्च" इति षत्वम् । न शक्या रक्षा यस्य (ब०) तदशक्यरक्षम्, शक्येति-शक्नोते "शकिसहोश्च" इति यत् । रक्ष्यमिति रक्षतेर्ण्यत । निवर्तस्वेति निपूर्वाद् वर्ततेर्लोटि मध्यमपुरुषैकवचने रूपम् । शस्त्रेण-शसधातो. "दाम्नीशसयुयुज्" इत्यादिना करणे ष्ट्रन् । लज्जेति लज्जते "गुरोश्च हल." इत्यप्रत्यय । क्षिणोति क्षिधातो स्वादित्वात् (श्नु) ।

व्याख्या—स-एवमुपायशून्य, त्वम्-दिलीप., लज्जाम्, विहायपरित्यज्य निवर्तस्व वृथागोरक्षणप्रयासाद् विरम्य गृह गच्छेत्यर्थ. । भवान्,

गुरौ-वशिष्ठस्य, दर्शिता-प्रकटिता, शिष्योचिता भक्तिर्येन, तथाभूतः, अस्तीति शेष । ( गुरुधनं विनाश्य गमने मम यशोहानिरिति चेच्छृणु ) यद् रक्ष्यम्-रक्षायोग्यम्, वस्तु, शस्त्रेण-आयुधेन, अशक्यरक्षम्-रक्षितुमशक्यम्, तद् नष्टम् अपि शस्त्रभृताम्-आयुधधारिणाम्, यशः-कीर्तिम्, न क्षिणोति-न विनाशयति ।

भा०—हे ! दिलीप ! "क्षत्रियोऽहमिमां रक्षितुं नाऽशकम्" इति हेतोर्मा स्म यात् पद् ते चेतसि लज्जा । यतस्त्वया यावच्छक्यमिमां रक्षितु प्रयास कृत्वा गुरुभक्तिः प्रदर्शितैव । अस्यास्तु गोर्विनाशो जगदीश्वरेणैव रचितः, तथा च प्रतिविधातुमशक्तस्य तव का लज्जा ? न चाशक्ये वस्तुनि यशोहानिरपि । तस्माद् गृहं त्वया गन्तव्यम् ।

अल०—शस्त्रेण रक्ष्यमित्याद्युत्तरेण राज्ञो गवारक्षणजन्यलापयशोविषयकप्रश्नस्योन्नयनादुत्तरालङ्कार । गोररक्षणे लज्जात्यागस्य विशेषस्य सामान्येनोत्तरेण समर्थनादर्थान्तरन्यासो वा । गर्वो भाव सिंहगतो व्यज्यते ।

**इति प्रगल्भं पुरुषाधिराजो मृगाधिराजस्य वचो निशम्य ।**
**प्रत्याहतास्त्रो गिरिशप्रभावादात्मन्यवज्ञां शिथिलीचकार ॥ ४१ ॥**

अ०—पुरुषाधिराजः इति प्रगल्भं मृगाधिराजस्य वचः निशम्य गिरिशप्रभावात् प्रत्याहतास्त्रः ( इति ) आत्मनि अवज्ञाम् शिथिलीचकार ।

व्याक०—अधिको राजा अधिराजः, प्रादिसमासः समासान्तष्टच् । पुरुषाणामधिराज पुरुषाधिराजः । तथैव मृगाधिराजः । प्रकृष्टो भावः प्रभावः प्रादिसमासः । प्रत्याहतमस्त्रं यस्य स प्रत्याहतास्त्रः, ( बहु० ) आत्मनि-इति वैषयिकेऽधिकरणे सप्तमी । अवज्ञेति-"आतश्चोपसर्गे" इत्यङ्, आलोप, टाप् । गिरिश-इति गिरिशब्दाल्लोमादित्वात् शप्रत्ययो मत्वर्थीयः । शिथिलीचकार 'च्विः' ।

व्याख्या—पुरुषाधिराज-नृप, इति पूर्वोक्तम्, प्रगल्भम्-धृष्टम्, सगर्वमिति यावत्, मृगाधिराजस्य-मृगाणां पशूनामधिराजस्य स्वामिनः सिंहस्येति यावत्, वचः-वाक्यम्, निशम्य श्रुत्वा, गिरिशप्रभावात्-गिरिशस्य महादेवस्य प्रभावात्, प्रत्याहतास्त्रः-प्रत्याहतं प्रतिरुद्धम्, अस्त्रम्-आयुधं यस्य

तथाभूत, इति हेतो, आत्मनि-स्वविषये, अवज्ञाम्-अपमानम्, तिरस्कारमिति यावत्, शिथिलीचकार-शिथिलं विदधौ, तत्याज ।

भा०—सिंहस्य वाक्यमिदं श्रुत्वा "श्रीशङ्करप्रभावान्मदस्त्रप्रतिबन्धो जात" इति राज्ञा ज्ञातम्। तेन या पूर्वमात्मनि तस्यावज्ञा प्रादुरासीत् 'काले मदस्त्र व्यर्थं जातम्, धिङ् माम्" इति-सा निवृत्ता। समानात्पराभावो व्रीडा जनयति, न तु सर्वेश्वरादिति। अधिराजत्वेन सिंहस्य साम्याद् व्रीडाया योग्यता, परं स शङ्करस्यानुभावेन गर्वित इति निवृत्ति.।

अल०—अवज्ञाशिथिलीकरणस्य हेतुना समर्थनात् काव्यलिङ्गम्। आत्मावज्ञारूपस्य कार्यस्य निवृत्त्या कारणीभूताया व्रीडाया निवृत्तिर्व्यञ्जितेति भावशान्तिध्वनि। अवज्ञाशिथिलीकारे स्वास्त्रप्रतिघातस्य गिरिशप्रभावजन्यत्वज्ञानं हेतु., स तु शब्दमर्यादया न प्रतीयते, प्रत्याहतास्त्र इत्यनुवाद्यविशेषणस्य शिथिलीकारे ऽन्वयालाभात्। "प्रत्याहतास्त्र इत्यवज्ञा शिथिलीचकार" इत्युक्तौ तु 'इति' शब्देन हेतुता प्रतीयते। तस्मान्न्यूनपदत्वमत्र दोष ।

प्रत्यब्रवीच्चैनमिषुप्रयोगे तत्पूर्वभङ्गे वितथप्रयत्न ।
जडीकृतस्त्र्यम्बकवीक्षणेन वज्रं मुमुक्षन्निव वज्रपाणिः ॥ ४२ ॥

अ०—तत्पूर्वभङ्गे इषुप्रयोगे वितथप्रयत्न. ( अतएव ) वज्रम् मुमुक्षन्, त्र्यम्बकवीक्षणेन जडीकृत. वज्रपाणिरिव (स्थित स नृप॰) एनं प्रत्यब्रवीत् च ।

व्याक०—स एव पूर्वो भङ्गो यस्य, तस्मिन् तत्पूर्वभङ्गे। भङ्ग-इति भनक्तेर्घञ्। वितथ प्रयत्नो यस्य स वितथप्रयत्नः, प्रयत्न इति यतते "यजयाचयतविच्छप्रच्छरक्षो नङ्" इति नङ् प्रत्यय। त्रीण्यम्बकानि यस्य स त्र्यम्बक, तस्य वीक्षणेन त्र्यम्बकवीक्षणेन, वीक्षणमिति विपूर्वादीक्षतेर्ल्युट्। वज्रं पाणौ यस्य स वज्रपाणि (बहु०) प्रहरणार्थेभ्यः परे निष्ठासप्तम्याविति पाणेः परनिपात। मोक्षुमिच्छतीति मुमुक्षन्, मुञ्चते. सन्, तत. "लक्षणहेत्वो क्रियाया" इति लक्षणे शतृप्रत्यय.। सकर्मकत्वाद् "मुचोऽकर्मकस्य गुणो वा" "अत्र लोपोऽभ्यासस्य" इति गुणाभ्यासलोपौ न ।

व्याख्या—स एव पूर्व-प्रथमो भङ्ग-प्रतिबन्धो यस्य, तथाभूते, इषो बाणस्य, प्रयोगे-व्यवहारे, वितथ.-विफल, प्रयत्न-प्रयासो यस्य, तथाभूतः

अत एव वज्रम्, मुमुक्षन् मोक्तुमिच्छन, त्र्यम्बकस्य¹-महादेवस्य, वीक्षणेन-दृष्टिपातेन, जडीकृत -निश्चेष्टता प्रापित·, वज्रपाणि·-इन्द्रइव स्थित, स नृप·, एनम सिहम्, प्रत्यब्रवीत्-प्रत्यवादीत् । च इति पूर्वापेक्षम्, "शिथिलीचकार, प्रत्यब्रवीच्च" इति । "बाहुं सवज्रं शक्रस्य क्रुद्धस्यास्तम्भयत् प्रभु" इति महादेवकृतस्य महेन्द्रबाहुस्तम्भनस्य कथा महाभारतादनुसन्धेया ।

भा०—यद् दिलीपो गा भक्षयितुमुद्यत सिंह हन्तु धनुषि बाणं संधातुं नाशक्नत्, तदिद दिलीपप्रयत्नस्य प्रथममेव वैफल्यम्, इत पूर्वं कदापि तेन शस्त्रप्रयोगे निष्फलता नानुभूता। ततश्च वज्रप्रयोग चिकीर्षुर्महेन्द्रो महादेव प्रभावाद् निश्चेष्टो या दशामनुभूतवान्, सैव दशा दिलीपस्यापि तदवसरे जाता । तेन विवश स वाङ्मात्रेणोत्तर दत्तवान् । अन्यथा पराभवकर्तुरग्रे क्षत्रियाणा शस्त्रेणैवोत्तरं शस्तम्, न तु वाङ्मात्रेण ।

अलं—उपमा । "वितथप्रयत्न प्रत्यब्रवीत्"-इत्युक्तरीत्या साभिप्रायत्वात्परिकर । अत्र शरप्रयोगभङ्गे प्राथम्य बोधयितुमिष्टम, तच्च समासे गुणीभूतमिति विधेयाविमर्शो दोष । यद्वा प्रयत्नवितथताया प्राथम्य विधातुमुचितम्, तत्तु "इषुप्रयोगे" अनुवाद्ये विशेषणीकृतमित्यनुवादायुक्ततार्थदोष ।

**संरुद्धचेष्टस्य मृगेन्द्र कामं हास्य वचस्तद्यदहं विवक्षु ।**

**अन्तर्गत प्राणभृता हि वेद सर्वं भवान् भावमतोऽभिधास्ये ॥४३॥**

अ०—(हे) मृगेन्द्र संरुद्धचेष्टस्य (मम) तद् वच· कामम् हास्यम्, यद् (वचः) अहं विवक्षुः, (अस्मि) हि भवान् प्राणभृताम् अन्तर्गत सर्वम् भावम् वेद, अतः अभिधास्ये ।

व्याक०—संरुद्धा चेष्टा यस्य, तस्य संरुद्धचेष्टस्य । संरुद्धेति-संपूर्वाद् रुधधातो क्तप्रत्यय । चेष्टेति चेष्ट धातो "गुरोश्च हल" इत्यप्रत्यय । हास्यमिति-हसतेः "ऋहलोर्ण्यत" । विवक्षुरिति ब्रूञ्धातो सन्, "ब्रुवो वचि." "सनाशंसभिक्ष उ" इत्युप्रत्ययः । प्राणभृताम् बिभर्तेः क्विप्, उपपदसमास· । वेद वेत्तेर्लट्, "विदो लटो वा" इति णलादेश हास्यमित्यत्र "त्वया" इति "जनै" इति वा कर्तृपदमध्याहारलभ्यम् ।

---

१—दृग्दृष्टिनेत्रलोचनचक्षुर्नयनाम्बकेक्षणाक्षीणि—इति हलायुध ।

व्याख्या—हे मृगेन्द्र—हे सिंह, संरुद्धा-प्रतिबद्धा, चेष्टा-व्यापारो यस्य, तथाभूतस्य मम-तद्वच -तत् वाक्यम्, कामम्-यथेच्छम्, हास्यम्-परिहास-योग्यम्, यद् वाक्यम्, अहम् विवक्षु अस्मि-वक्तुमिच्छामि, तर्हि तूष्णीं स्थातव्यमिति सम्भावनायामाह, हि-यत., भवान्, प्राणभृताम्-देहिनाम्, अन्तर्गतम्-मनसि स्थितम्, वाग्वृत्त्या बहिरप्रकाशितमपि सर्वं भावम्- अभिप्रायम्, वेद-जानाति अत -अस्मात्कारणाद्, अभिधास्ये-वक्ष्यामि ।

भा०—हे मृगेन्द्र ! यद्यपि समर्थस्यैव वचस्यादर प्रायेण सर्वेषां भवति, किमपि कर्तुमशक्तस्तु यदपि वदति, तत्केवल लोके परिहासयोग्यं मन्यते अत एव यदहं त्वां वक्तुमिच्छामि, तच्छ्रुत्वापि " अहो अशक्तोऽप्ययं वीर इव प्रलपति " " असम्भावितमेतत्कथनम् " इत्यादिरूपेण प्राकृतो जनो मामुपहसेत्, अतो न वाच्यमन्येष्वेतत् । किन्तु त्वं शिवसेवकत्वात् सर्वज्ञोऽसि, मम वाङ्मनसयोरेकरूपतां ज्ञातु प्रभवसि, अतस्त्वां प्रति वच्म्येव । अनुक्तमपि त्वया ज्ञायते, तत कथने को दोष. ।

अल०—संरुद्धचेष्टस्येति हास्यताया हेतुगर्भमिति परिकर· । अभिधानस्य स्पष्ट समर्थनात् काव्यलिङ्गम् । अनुप्रासः । निश्छलत्वं व्यङ्ग्यम् । उत्तर-वाक्यगते यच्छब्दे तच्छब्दो नापेक्ष्यते इति नियमाद्यद्यपि " वचस्तद् " इति तच्छब्दोऽधिक , तथापि यत्किमपि ब्रूयाम्—तत्सर्वं हास्यमेव भवेदिति विशिष्य बोधनाय तदुपादान सम्यक् प्रतीयते ।

मान्य. स मे स्थावरजङ्गमाना सर्गस्थितिप्रत्यवहारहेतु ।
गुरोरपीदं धनमाहिताग्नेर्नश्यत् पुरस्तादनुपेक्षणीयम् ॥४४॥

अ०—स्थावरजङ्गमाना सर्गस्थितिप्रत्यवहारहेतुः स. मे मान्य·, पुरस्तात् नश्यद् इदम् आहिताग्ने गुरो धनम् अपि अनुपेक्षणीयम् ।

व्याक०—स्थावराश्च जङ्गमाश्च स्थावरजङ्गमा. ( द्वन्द्व ) तेषाम् । स्थावर इति तिष्ठते " स्थेशभासपिसकसो वरच् " इति वरच्, जङ्गम इति यङ्लुगन्ताद् गच्छते पचाद्यच् । सर्गस्य च स्थितेश्च प्रत्यवहारस्य च ( द्वन्द्व ) हेतु ( ष० त० ) सर्गस्थितिप्रत्यवहारहेतु । सर्ग इति सृजतेर्घञ्, प्रत्यवहार इति प्रत्यवपूर्वाद् हरतेर्घञ् । आहितोऽग्निर्येन तस्य

आहिताग्नेः, आहित इत्यत्र आङ्पूर्वाद्धातेः क्तः "दधातेर्हिः" । न उपेक्षणीयम्-अनुपेक्षणीयम्, नञ्समासः, मान्य -मानयते "अचो यत्" णिलोपश्च । पुरस्तादिति-पूर्वशब्दाद्, "दिक्शब्देभ्यः सप्तमी" इत्यादिना अस्तातिः तद्धित, "अस्ताति च" इत्यनेन पूर्वशब्दस्य पुरादेश । नश्यत्-नशधातो शतृप्रत्ययः । मे-इति "कृत्यानां कर्तरि वा" इति कर्तरि षष्ठी । "अनुपेक्षणीयम्" इत्यत्रापि तदेव कर्तृपद सम्बध्यते ।

व्याख्या—तिष्ठन्तीति स्थावरा -वृक्षादय , जङ्गमतीति जङ्गमा —मनुष्यादय', तेषाम्-सर्गस्य उत्पत्तेः, स्थिते अवस्थानस्य, प्रत्यवहारस्य-प्रलयस्य, च हेतु -कारणम्, स -सुप्रसिद्धो भगवान् शिव , मे मम, मान्य. मानयितु योग्य , इष्टदेवः, अलङ्घ्यशासन इत्यर्थ , तर्हि किमिति न निवर्तसे इति तत्राह-पुरस्तात्-अक्ष्णोरग्रे, नश्यत्-नाशं प्राप्नुवद्, इदम्-सन्निकृष्टम्, आहितः-स्थापित , अग्नि'-वह्निर्येन तथाभूतस्य, अग्निहोत्र कुर्वाणस्येति यावत्, गुरो.-वसिष्ठस्य, धनम्—गोरूपम्, अनुपेक्षणीयम्—न उपेक्षा-योग्यम् ।

भा०—हे मृगेन्द्र ! अस्य देवदारो' समीपमागता' प्राणिनस्तव भक्ष्यमिति जगदीश्वरस्य भगवत शङ्करस्य शासनं मया शिरसैव धार्यते, तेन "त्वमेना कृपया त्यज" इति न वक्तुं शक्नोमि । किन्तु गुरोर्धननाशमपि नोपेक्षितुं शक्तोऽस्मि । गुरुश्चाहिताग्निरिति गौस्तस्य मुख्य धनम, हविःसाधनत्वात् । एतदभावे घृतरूपहविषोऽनुपलम्भे स कथमग्निहोत्र होष्यति ?

अलं०—पूर्वार्धे सर्गस्थितिप्रत्यवहारहेतुरिति मान्यत्वे, उत्तरार्द्धे आहिताग्नेरिति गोधनत्वे हेतुगर्भमिति परिकरः। ईश्वरे गुरौ च श्रद्धाख्या रतिर्व्यज्यते। द्वयोश्च विरुद्धकार्यत्वात् सधिः ।

**स त्वं मदीयेन शरीरवृत्तिं देहेन निर्वर्तयितु प्रसीद ।**
**दिनावसानोत्सुकबालवत्सा विसृज्यतां धेनुरियं महर्षेः ॥४९॥**

अ०—सः त्वम् मदीयेन देहेन शरीरवृत्तिं निर्वर्तयितुम् प्रसीद, दिनावसानोत्सुकबालवत्सा इयम् महर्षे. धेनुः विसृज्यताम् ।

व्याक०—दिनस्यावसाने (त० ) उत्सुको (त० ) बालो वत्सो यस्याः

सा ( बहु० ) दिनावसानोत्सुकबालवत्सा । मदीयेनेति अस्मच्छब्दात् "वृद्धाच्छ" । "प्रत्ययोत्तरपदयोश्च" इति मादेश । निर्वर्तयितुमिति णिजन्ताद् वृतुधातोस्तुमुन । प्रसीदेति षट्लृधातोर्लोटि मध्यमपुरुषैकवचनम् । "पाघ्राध्मेति' सीदादेश । अवसानमिति अवपूर्वात् स्यतेर्ल्युट्, "आदेच उपदेशेऽशिति" इत्यात्वम् । विसृज्यतामिति सृजते कर्मणि लोट् । धेनु. कर्म, त्वयेत्येतत्कर्तृपदमभ्याहारलभ्यम् ।

व्याख्या—स -अङ्कागतसत्त्ववृत्ति , -त्वम्-सिंह , मदीयेन देहेन मम शरीरेण शरीरवृत्तिम्-स्वशरीरस्य * वृत्तिम्-जीवनम्, निर्वर्तयितुम् सम्पादयितु प्रसीद-प्रसाद कुरु । कृपया एतदनुमन्यस्वेति । दिनस्यावसाने-अन्ते सायङ्काले, उत्सुक -उत्कण्ठितो बालो वत्सो यस्यास्तथाभूता, इयम्, महर्षे -वशिष्ठस्य, धेनु -गौ , विसृज्यताम्-त्यज्यताम् ।

भा०—हे मृगेन्द्र ! त्वं कृपया -गो प्रातिनिध्येन मदीय शरीर भुक्त्वा जीवन निर्वह । इमा महर्षेर्धेनु परित्यज । इदानीं साय जातम्, एतस्या लघुवत्स एतदागमन सोत्कण्ठ प्रतीक्षमाणो भवेत् । स इमामदृष्ट्वा कथ जीविष्यति ।

अल०—दिनावसानेत्यादिविशेषणस्य साभिप्रायत्वात्परिकर । मच्छरीरं भुङ्क्ष्वेत्यर्थस्य भङ्ग्यन्तरेण कथनात्पर्यायोक्तम् । दयावीरोऽत्र रस स्फुट । धेनुरालम्बनम्, शरीरत्यागचेष्टाऽनुभाव । औत्सुक्य संचारि ।

अथान्धकार गिरिगह्वराणा दंष्ट्रामयूखै शकलानि कुर्वन् ।
भूय स भूतेश्वरपार्श्ववर्ती किञ्चिद् विहस्यार्थपति बभाषे ॥४६॥

अ०—अथ स. भूतेश्वरपार्श्ववर्ती गिरिगह्वराणाम् अन्धकारम् दंष्ट्रामयूखै शकलानि कुर्वन् किञ्चिद् विहस्य अर्थपतिम् भूय बभाषे ।

व्याक०—पार्श्ववर्तीति, "सुप्यजातौ णिनिस्ताच्छील्ये" इति वर्ततेर्णिनि । अन्धकार इति अन्ध करोतीति विग्रहे करोते कर्मण्यण् । दंष्ट्रेति "दाम्नीशसयुयुज" इत्यादिना दशतेः ष्ट्रन् । गौरादिषु मातामहीशब्दस्य पाठात् पित्वप्रयुक्तस्य ङीपोऽनित्यत्वान्न ङीप् । शकलानीत्यन्धकारस्य विधेय-

* वृत्तिर्वर्तनजीवने—इत्यमर ।

विशेषणम्, अन्धकारमिति कुर्वन्नित्यस्य कर्म । दंष्ट्रामयूखैरिति तत्रैव करणम् कुर्वन्निति लक्षणे शतृप्रत्यय ।

व्याख्या—अथ-नरपतिवचनश्रवणमनन्तरम्, स-पूर्वप्रस्तुत , भूतेश्वरस्य-महादेवस्य, पार्श्ववर्ती-अनुचर , गिरे -पर्वतस्य, गह्वराणाम्-गुहानाम्, अन्धकारम्-तम , दंष्ट्रामयूखै -दंष्ट्राणां मयूखै -किरणैः, शकलानि-खण्डानि कुर्वन्-विदधत्, तमो दूरीकुर्वन्नित्यर्थ , किञ्चिद् विहस्य-स्मितं कृत्वा, अर्थपतिम्-राजानम्, भूय -पुन., बभाषे-उक्तवान ।

भा०—राज. कथनं श्रुत्वा सिंह ईषद् विजहास । तदनु राजानमुवाच । हास्यकाले निर्गतैस्तद्दंष्ट्राणां किरणैर्गुहान्धकारो विनष्ट ।

अलं०—दंष्ट्रामयूखानामन्धकारशकलीकरणासम्बन्धेऽपि सम्बन्धबोधनात्सम्बन्धातिशयोक्ति । हास्येन सिंहगतो गर्वः प्राधान्येन व्यज्यते ।

**एकातपत्रं जगत प्रभुत्वं नवं वय कान्तमिदं वपुश्च ।**
**अल्पस्य हेतोर्बहु हातुमिच्छन् विचारमूढः प्रतिभासि मे त्वम् ॥४७॥**

अ०—एकातपत्रं जगत प्रभुत्वम्, नवम् वय , इदम् कान्तम् वपुश्च (इति) बहु अल्पस्य हेतो हातुम् इच्छन् त्वम् विचारमूढः मे प्रतिभासि ।

व्याक०—एकमातपत्रं यस्मिन् तदेकातपत्रम् । मूढ इति मुह्यते क्त । एकातपत्रमित्यादीनि पूर्वार्धपदानि प्रथमान्तानि, प्रातिपदिकार्थमात्रे प्रथमा । इति शब्दमध्याहृत्य तेन तेषां हाने कर्मत्वं निर्वाह्यम् । अन्यथा बहुशब्दस्यानन्वयापत्तिरिति । हेतो.—"षष्ठी हेतुप्रयोगे" इति षष्ठी । मे-सम्बन्धसामान्ये षष्ठी । प्रभुत्वमिति, "विप्रसम्भ्यो ड्वसंज्ञायाम्" इति प्रपूर्वाद् भवतेर्डु । ततः "तस्य भावस्त्वतलौ" इति भावे त्वप्रत्यय । कान्तम् कमुधातो क्तः, "अनुनासिकस्य क्विझलोः क्ङिति" इति दीर्घ. । हातुम्-जहाते "समानकर्तृकेषु तुमुन्" इति सूत्रेण इच्छतावुपपदे तुमुन् । इच्छन्निति हेतौ शतृप्रत्यय ।

व्याख्या—एकातपत्रम्-एकच्छत्रम्, जगत. लोकस्य, प्रभुत्वम् स्वामित्वम्, नवम्-नवीनम्, वय -अवस्था, इदम्-पुरो दृश्यमानम्, कान्तम् रम्यम्, वपु. शरीरम् च, इति एतद् बहु, अल्पस्य गोरक्षणमात्रस्य, हेतो -कारणाद्, केवल-

मेकधेनुरक्षारूपाल्पफलायेति यावत्, हातुम्-त्यक्तुम्, इच्छन्-कामयमानः, त्वम् विचारे-कार्याकार्यविवेके, मूढ -मूर्ख , मे-मम दृष्टौ, प्रतिभासि-प्रतीयसे ।

भा०—राजन्! त्वं यत्सत्यमिदं कर्तव्यमिदमकर्तव्यमिति विवेक्तुं न जानासि । यदेकस्या लघीयस्या गोः कृते स्वशरीरं मह्यं दातुमुद्यतोऽसि । अनेन ते माहसेन एकच्छत्र राज्यम्, नवीनमुपभोगोचित यौवनम्, मनोहरं शरीर चैतत्सर्वमपि एकपदे त्यक्तं स्यात् ।

अलं०—एकेन जगत्प्रभुत्वत्यागेनापि विचारमूढत्वसिद्धौ हेत्वन्तरापादानात् समुच्चय । विचारमूढत्वस्याल्पफलकबहुत्यागेनानुमितत्वाद् अनुमानालङ्कार । राज्ञोऽवज्ञया सिंहस्य गर्वो व्यङ्ग्यः ।

**भूतानुकम्पा तव चेदियं गौरेका भवेत् स्वस्तिमती त्वदन्ते ।**
**जीवन् पुन शश्वदुपप्लवेभ्यः प्रजाः प्रजानाथ पितेव पासि ॥ ४८ ॥**

अ०—चेत् तव भूतानुकम्पा ( वर्तते, तर्हि ) त्वदन्ते एका इयम् गौः स्वस्तिमती भवेत्, हे प्रजानाथ ! जीवन् पुनः ( त्वम् ) पितेव प्रजाः उपप्लवेभ्य शश्वत् पासि ।

व्याक०—भूतेष्वनुकम्पा भूतानुकम्पा ( तत्पु० ) अनुकम्पेति कम्पते "गुरोश्च हल " इत्यप्रत्यय । तवान्ते त्वदन्ते, "प्रत्ययोत्तरपदयोश्च" इति त्वादेश । स्वस्तिमती- अस्त्यर्थे मतुप् । उगित्त्वात् ङीप् । उपप्लव इति "ऋदोरप्, इत्यप्प्रत्यय' । "भीत्रार्थाना भयहेतुः" इत्यपादाने पञ्चमी । जीवन् "लक्षणहेत्वो क्रियाया " इत्यनेन हेतौ शतृप्रत्यय । पासीति पा रक्षणे लट् ।

व्याख्या—चेद्-यदि, तव-भवत , भूतेषु प्राणिषु, अनुकम्पा-दया वर्तते, ( तया शरीर त्यजसि चेत् ) तर्हि ( इद विचारय ) तव भवत , अन्ते-विनाशे सति, एका इयम् गौ -नन्दिन्येव, स्वस्तिमती-*स्वस्ति-क्षेमं विद्यते यस्यास्तथाभूता सुरक्षिता, भवेत्, हे प्रजानाथ ! हे राजन् ! जीवन् पुन -देह धारयँस्तु, त्वम्, पितेव-जनक इव, प्रजा'-प्रकृती ( पितृपक्षे सन्तती ) उपप्लवेभ्य -उपद्रवेभ्य , शश्वत्-सर्वदा, पासि-रक्षसि । सतत रक्षसि, जीवन्नग्रेऽपि रक्षि-

---

* स्वस्त्याशी क्षेमपुण्यादौ—इत्यमर ।

प्यसि, इति तात्पर्यम् ।

भा०—हे दिलीप ! यदि त्वं प्राणिषु कृपालुतयेमां गां रक्षितुं स्वशरीरं मह्यमर्पयसि, तर्हि मुधा ते विचारः । कुतः ? त्वद्विनाशे केवलमियं मुनिधेनुर्जीवनदानेनानुकम्पिता स्यात्, किन्तु याभिस्त्वं 'प्रजानाथः' इति व्यपदिश्यसे, तास्त्वदीया बहुप्राणिसकुला प्रजास्त्वदभावे बहूपद्रवैराक्रान्ता नितरां पीडिताः स्युः । त्वमेव खलु तासां पितृवद्रक्षक इति अनेकान् पीडयित्वैकरक्षणं किं दयाधर्मः ? 'प्रजानाथ' इति सम्बोधनेन प्रजारक्षणहेतुके जीवने न त्वं धर्मेण स्वतन्त्र इति द्योतयति ।

अल०—अनुकम्पाविचारे प्रकृते तत्कार्यस्य रक्षणस्य निबन्धनादप्रस्तुतप्रशंसा मुख्या । पितेवेत्युपमा । प्रजा इति श्लेषस्तदङ्गम् । प्रजानाथ इति सम्बोधनस्य विशेष्यस्य साभिप्रायत्वात् परिकराङ्कुरः । प्रजाः-प्रजेतिलाटानुप्रासः ।

**अथैकधेनोरपराधचण्डाद् गुरोः कृशानुप्रतिमाद् बिभेषि ।**
**शक्योऽस्य मन्युर्भवता विनेतुं गाः कोटिशः स्पर्शयता घटोध्नीः ॥४९॥**

अ०—अथ एकधेनोः अपराधचण्डात् कृशानुप्रतिमाद् गुरोः बिभेषि, (तर्हि) अस्य मन्युः घटोध्नीः कोटिशः गाः स्पर्शयता भवता विनेतुं शक्यः ।

व्याक०—कृशानुः प्रतिमा यस्य ( बहु० ) तस्मात् कृशानुप्रतिमात् । प्रतिमेति प्रति-मीयतेऽनयेऽति विग्रहे माधातोः "आतश्चोपसर्गे" इत्यङ् । घटा इव ऊधांसि यासां ( बहु० ) ताः घटोध्नीः । "ऊधसोऽनङ्" इत्यनङ्, "बहुव्रीहेरूधसो ङीष्" इति ङीष् । गुरोरित्यत्र "भीत्रार्थानां भयहेतुः" इत्यपादानत्वात् पञ्चमी । शक्यः-"शकिसहोश्च" इति कर्मणि यत्प्रत्ययः । मन्युरित्यस्याः क्रियायाः प्रथमान्तं कर्म । स्पर्शयता-दानार्थकाच्चौरादिकस्पर्शधातोः शतृप्रत्ययः । विनेतुम्-विपूर्वकान्नयतेः, "शकधृष्" इति सूत्रेण तुमुन् ।

व्याख्या—अथेति पक्षान्तरे, यदि तु एकैव धेनुः-गौर्यस्य, तथाभूतात्, किञ्च-अपराधे सति चण्डाद्-अतिकोपनात्, अतएव कृशानुः-अग्निः, प्रतिमा-उपमा यस्य, तथाभूताद्, अग्निसदृशादिति यावत्, गुरोः-वशिष्ठाद्, बिभेषि-

प्यसि, इति तात्पर्यम् ।

भा०—हे दिलीप ! यदि त्व प्राणिषु कृपालुतयेमा गा रक्षितु स्वशरीर मह्यमर्पयसि, तर्हि मुधा ते विचार । कुतः ? त्वद्विनाशे केवलमियं मुनिधेनुजीवनदानेनानुकम्पिता स्यात्, किन्तु याभिस्त्व ' प्रजानाथ ' इति व्यपदिश्यसे, तास्त्वदीया बहुप्राणिसकुला प्रजास्त्वदभावे बहूपद्रवैराक्रान्ता नितरा पीडिता स्यु । त्वमेव खलु तासा पितृवद्रक्षक इति अनेकान् पीडयित्वैकरक्षण किं दयाधर्म ? ' प्रजानाथ ' इति सम्बोधनेन प्रजारक्षणहेतुके जीवने न त्व धर्मेण स्वतन्त्र इति बोधयति ।

अल०—अनुकम्पाविचारे प्रकृते तत्कार्यस्य रक्षणस्य निबन्धनादप्रस्तुतप्रशसा मुख्या । पितेवेत्युपमा । प्रजा इति श्लेषस्तदङ्गन् । प्रजानाथ इति सम्बोधनस्य विशेष्यस्य साभिप्रायत्वात् परिकराङ्कुर । प्रजा -प्रजेतिलाटानुप्रास ।

अथैकधेनोरपराधचण्डाद् गुरो कृशानुप्रतिमाद् बिभेषि ।
शक्योऽस्य मन्युर्भवता विनेतु गा कोटिश स्पर्शयता घटोध्नी ॥४९॥

अ०—अथ एकधेनो अपराधचण्डात् कृशानुप्रतिमाद् गुरो बिभेषि, (तर्हि) अस्य मन्यु घटोध्नी कोटिश गा स्पर्शयता भवता विनेतु शक्य ।

व्याक०—कृशानु प्रतिमा यस्य ( बहु० ) तस्मात् कृशानुप्रतिमात् । प्रतिमेति प्रति-मीयतेऽनयेऽति विग्रहे माधातो " आतश्चोपसर्गे " इत्यङ् । घटा इव ऊधासि यासा ( बहु० ) ताः घटोध्नी । " ऊधसोऽनङ् " इत्यनङ्, " बहुव्रीहेरूधसो ङीष् " इति ङीष् । गुरोरित्यत्र " भीत्रार्थाना भयहेतु " इत्यपादानत्वात् पञ्चमी । शक्य -" शकिसहोश्च " इति कर्मणि यत्प्रत्यय । मन्युरित्यस्या क्रियाया प्रथमान्त कर्म । स्पर्शयता-दानार्थकाचौरादिकस्पर्शधातो शतृप्रत्यय । विनेतुम्-विपूर्वकान्नयते, " शकधृष् " इति सूत्रेण तुमुन् ।

व्याख्या—अथेति पक्षान्तरे, यदि तु एकैव धेनु गौर्यस्य, तथाभूतात्, किञ्च-अपराधे सति चण्डाद्-अतिकोपनात्, अतएव कृशानु अग्नि., प्रतिमा-उपमा यस्य, तथाभूताद्, अग्निसदृशादिति यावत्, गुरो -वशिष्ठाद्, बिभेषि-

भय प्राप्नोषि, तर्हि तदपि मुधैव, यद्, अस्य-गुरोः, मन्यु -क्रोध , घटाः-कुम्भा इवोधासि आपीनानि यासा तथाभूता कोटिश -कोटिसख्याका , गा -धेनू , स्पर्शयता-ददता, भवता विनेतुम्-दूरीकर्तुम , शक्य ।

भा०—हे नृप ! यदि गोविनाशेन गुरुमह्य क्रोत्स्यति, शाप च दास्यतीति तव चेतसि भयम्, तर्हि तदपि व्यर्थमेव । यत -एकस्या अस्या गो स्थाने कोटिसख्याका गावो भवता दातु शक्यन्ते, अल्पस्थाने वहु लब्ध्वा च तस्य क्रोध शाम्येदेव ।

अल० "न भेतव्यम्" इति वक्तव्ये भयकारणानिवारणोपन्यासादप्रस्तुतप्रशसा । कृशानुप्रतिमादित्यार्थ्युपमा ।

**तद् रक्ष कल्याणपरम्पराणा भोक्तारमूर्जस्वलमात्मदेहम् ।**
**महीतलस्पर्शनमात्रभिन्नमृद्ध हि राज्य पदमैन्द्रमाहु ॥ ५० ॥**

अ०—तत् कल्याणपरम्पराणा भोक्तारम् ऊर्जस्वलम् आत्मदेहम् रक्ष, हि ऋद्धम् राज्यम् महीतलस्पर्शनमात्रभिन्नम् ऐन्द्रम् पदम् आहु (लोका इति शेष )।

व्याक०—मह्यास्तलस्य ( तत्पु० ) स्पर्शनमेव ( मयूर० तत्पु० ) महीतलस्पर्शनमात्रम्, तेन भिन्नम्, करणतृतीयया तत्पुरुष । स्पर्शनमिति स्पृशतेर्ल्युट् । भोक्तारम्-भुनक्ति कर्तरि तृच् । ऊर्जस्वलमिति ऊर्जोऽस्यास्तीति "ज्योत्स्नातमिस्रा" इत्यादिना वलच् प्रत्यय । ऋद्धम् ऋद्ध्यते क्त । राज्यमिति राज्ञ कर्म भावो वेति विग्रहे राजन्शब्दात् "पत्यन्तपुरोहितादिभ्यो यक्" "नस्तद्धिते" इति टिलोप । ऐन्द्रम्-इन्द्रस्येदम्-"तस्येदमिति" शैषिकोऽण् ।

व्याख्या—तत्-तस्मात्पूर्वोक्तात् कारणात्, कल्याणपरम्पराणाम् कल्याणानाम् लौकिकसुखानाम्, परम्परा -सन्ततयः, तासाम्, भोक्तारम्-अनुभवितारम्, ऊर्जस्वलम्-बलवन्तम् , आत्मदेहम्-स्वशरीरम्, रक्ष-त्रायस्व, मा नीनश , हि निश्चयेन, ऋद्धम्-समृद्धियुतम्, राज्यम्, महीतलस्पर्शनमात्रभिन्नम्-महीतलस्य-भूतलस्य, स्पर्शनमात्रेण सम्पर्केणैव केवलम्, भिन्नम्-पृथग्भूतम्, ऐन्द्रम्-इन्द्रसम्बन्धि, पदम्-स्थानम्, इन्द्राधिकारमिति यावद्, आहु अभिज्ञा लोका कथयन्ति ।

भा०—सिंह उपदिशति-राजन्! तस्मात्सुखमनन्तानुपभुञ्जानेन त्वया स्वशरीर रक्षणीयमेव। गोरुपेक्षणेन स्वर्गहानिस्तु न शङ्कनीया, यत सम्पत्तिशालि राज्यमिन्द्रपदान्न किञ्चिदपि भिद्यते, यदि तयोः कश्चन भेदोऽस्ति, तर्हि स इयानेव यदिन्द्रो भूतलं न स्पृशति, राजा तु स्पृशतीति, ( देवाना भूतलस्पर्शाभाव आगमसिद्ध ) अन्यत्तु सुखैश्वर्यादिक समानमेव । ततश्च प्रत्यक्ष स्वर्गं राज्यं परित्यज्य कोऽयं परोक्षस्वर्गप्राप्ते प्रयत्न इति ।

अल०—देहस्य विशेषणद्वय रक्षणीयत्वे साभिप्रायमिति परिकर । राज्य ऐन्द्रपदत्वारोपाद्, महीतलस्पर्शेन भेदस्य किञ्चिन्न्यूनतायाश्च स्थापनान्न्यूनताद्रूप्यरूपकम्। स्वस्य हितोपदेशकत्व व्यङ्ग्यम्।

**एतावदुक्त्वा विरते मृगेन्द्रे प्रतिस्वनेनास्य गुहागतेन ।**
**शिलोच्चयोऽपि क्षितिपालमुच्चैः प्रीत्या तमेवार्थमभाषतेव ॥ २१ ॥**

अ०—मृगेन्द्रे एतावद् उक्त्वा विरते, ( सति ) गुहागतेन अस्य प्रतिस्वनेन शिलोच्चयः अपि प्रीत्या क्षितिपालम् तम् अर्थम् उच्चैः अभाषत इव ।

व्याक०—शिलानामुच्चय शिलोच्चयः। उच्चय इति चिनोते "एरच्", क्षितिपालमिति-क्षिति पालयतीति-" कर्मण्यण् " । " अकथितं च " इति गौणकर्मत्वेन द्वितीया। अर्थमिति प्रधान-कर्मणि द्वितीया । प्रतिस्वनेन पूर्वं स्वन् धातो " स्वनहसोर्वा " इत्यप्प्रत्यय । तदनु प्रतिशब्देन प्रादिसमास, विरते विरमते. क्तः । अनुदात्तोपदेश इतिमलोप । " यस्य च भावेन भावलक्षणम्, इत्यनेन सप्तमी । उक्त्वा ब्रुवे क्त्वा, वच्यादेशश्च ।

व्याख्या—मृगेन्द्रे-सिंहे, एतावत्-पूर्वोक्तम, उक्त्वा-कथयित्वा, विरते तूष्णीं भूते सति, गुहागतेन गुहायामुत्थितेन, अस्य सिंहवाक्यस्य, प्रतिस्वनेनप्रतिध्वनिना, शिलोच्चय-पर्वत , अपि, प्रीत्या-प्रेम्णा, क्षितिपालम्-राजानं प्रति, तमेव-सिंहोक्तमेव, अर्थम् , उच्चैः-स्वरेण, अभाषतेव-अकथयदिव ।

भा०—एकातपत्रमित्यादि तदरक्षकल्याणेत्यन्तमुक्त्वा सिंहो यदा विरराम तदा स एव तस्य शब्दो गुहायामुच्चैः प्रतिध्वनितोऽभूत्। तत्र कविरुत्प्रेक्षते-यद्राज्ञि प्रेम्णा हेतुना पर्वतोऽपि " आत्मदेहं रक्ष " इति सिंहोक्तमनुवदन् राजानं मरणव्यवसायान्निवारयति स्म ।

अल०—प्रतिध्वने पर्वतकर्तृकभाषणत्वेन सम्भावनादुत्प्रेक्षा, तया च न केवल सिंह एव, किन्तु पर्वताद्या· स्थावरा अपि राज्ञि प्रेमाणमुपदर्शयन्तस्त मरणव्यवसायान्निवारयन्तीति कठिनस्तस्य परीक्षावसरो व्यज्यते ।

**निशम्य देवानुचरस्य वाच मनुष्यदेवः पुनरप्युवाच ।**
**धेन्वा तदध्यासितकातराक्ष्या निरीक्ष्यमाण सुतरा दयालु ॥५२॥**

अ०—देवानुचरस्य वाचम् निशम्य तदध्यासितकातराक्ष्या धेन्वा निरीक्ष्य-माणः सुतरा दयालु मनुष्यदेव. पुन अपि उवाच ।

व्याक०—अध्यासनमध्यासितम्-आस्ते ' नपुसके भावे क्त " तेना-ध्यासित तदध्यासितम्, कर्तरि तृतीयायास्तत्पुरुष , तेन कातरे अक्षिणी यस्या ( बहु० ) तया तदध्यासितकातराक्ष्या, " बहुव्रीहौ सक्थ्यक्ष्णो· स्वाङ्गात् षच् " । तत षित्वान्ङीप् । अथवा अध्यासितेत्यत्र कर्मणि क्त, ततश्च तदध्यासिता चासौ कातराक्षी चेति कर्मधारयपूर्वपदस्य पुंवद्भाव । धेन्वा निरीक्षणक्रियाया अनुक्ते कर्तरि तृतीया । निरीक्ष्यमाण -इति निर्पूर्वा-दीक्षते कर्मणि शानच् । सुतरामिति-सुशब्दात् " द्विवचनविभज्यो " इत्या-दिना " तरप् । किमेतिङव्ययघा इति तरबन्तादामु । दयालुरिति, दयते " स्पृहिगृहि " इत्यादिना आलुच् ।

व्याख्या—देवानुचरस्य-देवस्य-महादेवस्य, अनुचर -किङ्कर सिंहः, तस्य वाचम्, निशम्य-श्रुत्वा, तदध्यासितकातराक्ष्या-तेन-सिंहेन यदध्यासितम्-आ क्रमणम्, तेन कातरे-दीने, अक्षिणी-नेत्रे यस्यास्तथाभूतया, धेन्वा-गवा, निरी-क्ष्यमाण -अवलोक्यमान , सुतराम्-अत्यन्तम्, दयालु ,-कारुणिक , मनुष्य-देव. नृपति , पुनरपि, उवाच-जगाद ।

भा०—एकत सिंहेन हितमुपदिशता शरीररक्षणायानुरोध कृत , अपरतस्तु तेनाक्रान्ता गौ. ' किमिदानीमय वदति, अपि मा मोचयति, शरीर वा रक्षति " इति दीनया दृष्ट्या तन्मुख प्रेक्षते । एवं सङ्कटावसरेऽपि झटिति स्वकर्तव्य निर्धार्य राजा सिंह प्रति पुनर्जगाद ।

अल०—कातराक्ष्या निरीक्ष्यमाण -इति दयाया हेतुगर्भाद्विशेषणात्परि-कर , काव्यलिङ्ग वा । कातराक्ष्येत्यादिना परिपोष्यमाणस्य रसस्योद्दीपनविभाव

सम्यगुपस्थापितः, देवानुचरत्वाद्यद्यपि तद्वाक्यं माननीयम्, पर राजा स्वयमपि "मनुष्यदेवः" इति देवस्य देवानुचरवाक्यप्रत्याख्याने को दोष.-इति निगूढ पदद्वयेन ध्वनितम्।

क्षतात्किल त्रायत इत्युदग्र क्षत्रस्य शब्दो भुवनेषु रूढ ।
राज्येन किं तद्विपरीतवृत्ते प्राणैरुपक्रोशमलीमसैर्वा ॥ ५३ ॥

अ०—उदग्र क्षत्रस्य शब्द क्षतात् त्रायते इति भुवनेषु रूढः किल, तद्विपरीतवृत्ते राज्येन किम् ? उपक्रोशमलीमसै प्राणै वा किम् ?

व्याक०—तद्विपरीतवृत्ते. तस्माद विपरीता (तत्पु०) वृत्तिर्यस्य (बहु०) तस्य । विपरीतेति 'वि' 'परि' एतदुपसर्गद्वयपूर्वाद् इण धातो क्त, मलीमसैरिति मलशब्दाद् "ज्योत्स्नातमिस्रा •" इत्यादिना ईमसप्रत्ययो निपातित । "राज्येन" "प्राणै" उभयत्र गम्यमान-प्रयोजनक्रिया-करणत्वेन तृतीया । रूढ -रोहते क्त । क्षतात्-क्षणुधातोर्भावे क्त, अनुनासिकलोप· । क्षत्त्रस्येति-क्षणन क्षत्, क्षणु धातो सम्पदादित्वाद् भावे क्विप् । "गमादीनामिति वक्तव्यम्" इत्यनुनासिकलोप । ह्रस्वस्येति तुगागम, क्षतस्त्रायत इति क्षत्त्र । मूलोक्त त्वर्थतोऽनुवाद इति मल्लिनाथ । मूलोक्तरीत्या क्षतशब्दस्यैव पृषोदरादित्वादकारलोपो वा ।

व्याख्या—उदग्र उन्नत, क्षत्रस्य-क्षत्रियवर्णस्य, शब्द -शब्द्यते-प्रतिपाद्यतेऽनेनेति शब्दो वाचक, क्षत्रियवर्णवाचकक्षत्रशब्द इति यावत्, क्षताद्-नाशात्, त्रायते-रक्षति-इति व्युत्पत्त्या, भुवनेषु-लोकेषु रूढ प्रसिद्ध, किल । क्षत्रशब्दोऽक्षौहिणीरथन्तरादिवत् केवलया रूढ्या स्वार्थं न प्रतिपादयति, किन्तु पङ्कजादिवदवयवार्थपुरस्कारेणेति भाव । तस्मात् क्षतत्राणरूपात् क्षत्रशब्दावयवार्थाद्, विपरीता-विरुद्धा, वृत्ति व्यापारो यस्य, तथाभूतस्य क्षतत्राणमकुर्वत पुरुषस्य, राज्येन, किम्, ( प्रयोजनम् ) निष्फल तस्य राज्यमित्यर्थ, उपक्रोशमलीमसै *उपक्रोश. निन्दा, तेन † मलीमसै मलिनै, दूषितैरिति यावत्, प्राणैर्वा किम् ? निन्दितस्य जीवनमपि निष्फलमित्यर्थः ।

---

* उपक्रोशो जुगुप्सा च कुत्सा निन्दा च गर्हणे—इत्यमर ।

† मलीमस तु मलिनम्—इत्यमर ।

भा०—हे सिंह ! स्वकर्तव्यं पालयत एव पुरुषस्यैश्वर्यभोगो जीवनं च श्लाघ्ये, न तु कर्तव्यविमुखस्य लोकनिन्दितस्य । वयं हि लोके "क्षत्रा" इति व्यवह्रियामहे । क्षतात्-नाशात् साधून् प्राणिनस्त्रायामहे इत्येव क्षत्रशब्द-प्रवृत्तिरस्मासु । तद्यदि सम्मुखे हन्यमानां गामुपेक्ष्य जीवनं रक्षेयम्, तर्हि कर्तव्यविमुखो लोकनिन्दितः स्याम्, वृथा च तथा सति मे जीवनं राज्यं चेति ।

अल०—' गामुपेक्षमाणस्य मम जीवनं व्यर्थं स्याद् ' इति वक्तव्ये सामान्येनोपक्षेपादप्रस्तुतप्रशंसा । विपरीतवृत्तेः पुरुषस्य राज्यसम्बन्धस्यासमञ्जसत्ववर्णनाद्विषमं । राज्यस्य प्राणानां च किंशब्दप्रतिपादितव्यर्थत्वरूपैकधर्म-सम्बन्धात्तुल्ययोगिता । दयावीरोऽत्र रस इति बहवः । वस्तुतस्तु कर्तव्यपालनोत्साहस्यात्र प्राधान्येन व्यञ्जनाद् रसगङ्गाधरे पण्डितराजैः पृथक्त्वेन स्वीकृतो धर्मवीर एव रसोऽत्र । दयापि स्वविभावेनोपस्थिता धर्मोत्साहस्यैव पोषिका । राज्यप्राणादिषूपेक्षाऽनुभावः ।

**कथं नु शक्योऽनुनयो महर्षेर्विश्राणनाच्चान्यपयस्विनीनाम् ।**
**इमामनूनां सुरभेरवेहि रुद्रौजसा तु प्रहृतं त्वयास्याम् ॥ ४८ ॥**

अ०—महर्षेः अनुनयः ( च ) अन्यपयस्विनीनाम् विश्राणनात् कथं नु शक्यः ? इमाम् सुरभेः अनूनाम् ( त्वम् ) अवेहि, त्वया तु अस्याम् रुद्रौजसा प्रहृतम् ।

व्याक०—महत् ऋषेः-महर्षेः, " सन्महत्परम " इति कर्मधारयः, " आन्महतः समानाधिकरणजातीययोः " इति पूर्वपदस्यात्वम् । अन्यासाम् पयस्विनीनाम् (कर्म०) अन्यपयस्विनीनाम् । "सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः" इति पूर्वपदस्य पुंवत्त्वम्, पयस्विनीति-पयश्शब्दाद् विनिस्तद्धितः, ङीप् । अनुनयः कर्म, मयेति कर्तृपदमध्याहार्यम् । त्वयेति प्रहरणकर्तरि तृतीया, निष्ठाया " न लोकेति " षष्ठीनिषेधात् । सुरभेः-" पञ्चमी विभक्ते " इत्यनेन पञ्चमी । विश्राणनम् विपूर्वाच्चौरादिकात् ' श्रणु दाने ' इत्यतो ल्युट् । कथम्-"किमश्च" किंशब्दात्थमु, विभक्तित्वात्कादेशः । अवेहि-अवपूर्वाद् इण् धातोर्लोटि मध्यमपुरुषैकवचनम् । प्रहृतम्-प्रपूर्वाद् हरतेरकर्मकत्वविवक्षया भावे निष्ठा ।

व्याख्या—महर्षेः-वशिष्ठस्य, अनुनयः-क्रोधापनोदश्च, अन्यपयस्विनी-

नाम अ यासां दोग्ध्रीणां गवाम्, * विश्राणनात्-दानात्, कथं नु केन प्रकारेण, शक्यः, कर्तुं युज्येत, काक्वा न शक्य इति लभ्येत । यत -इमाम्-नन्दिनीम्, सुरभेः कामधेनोः ( तदपेक्षया ) अनूनाम्-अन्यूनाम्, अवेहि-जानीहि, त्वया तु अस्याम्, रुद्रस्य महादेवस्य, ओजसा-प्रभावेण, प्रहृतम्-प्रहारः कृत इति ।

भा०—यत्त्वयोक्तम् ' अर्थकवेनोरित्यादि " तदपि न, यत , अन्यासां दुग्धवतानां बह्वीनां गवां प्रदानेनापि महर्षेः प्रसादनं दुष्करम् । इयं हि नन्दिनी न केवलं दुग्धदोहनमात्रोपयुक्ता, अपि त्वसौ कामधेनुः । यद्यदपि कामयते, तत्सर्वमेषा दोग्धि, अतो नास्या अन्यधेनुसादृश्यम् । नन्वीदृशी चेत्कथं मद्वशगा इति मा स्म शङ्कथाः, त्वया खल्वस्या उपरि महादेवप्रभावेणैव प्रहारः कृतः । अन्यस्य नास्ति सामर्थ्यमिमां प्रहर्तुम् ।

अल०—अन्यधेनुवैलक्षण्यस्य सुरभिसादृश्यरूपकारणमुखेनाख्यानादप्रस्तुतप्रशंसा । यदि तु सुरभिसादृश्यमेवान्यवैलक्षण्यं मन्यते, तर्हि भङ्ग्यन्तरेण कथनात्पर्यायोक्तम् । प्रहारस्य रुद्रौजसा समर्थनात्काव्यलिङ्गम्, चतुर्थपादेन प्रश्नोन्नयनादुत्तरालङ्कारो वा । सुरभिसादृश्यमन्यधेनुवैलक्षण्यं च यद् बोधितम् तेन गवि भक्तिः, गुरोरनुनयस्यावश्यकत्वेन गुरुभक्तिश्च व्यज्यते, ताभ्यां च तद्विषये कर्तव्यपालनस्यावश्यकतमता व्यज्यते इति धर्मवीरस्य पोषण एव पर्यवसानम् ।

**सेयं स्वदेहार्पणनिष्क्रयेण न्याय्या मया मोचयितुं भवत्तः ।**
**न पारणा स्याद्विहता तवैवं भवेदलुप्तश्च मुनेः क्रियार्थः ॥ ५५ ॥**

अ०—सा इयम् मया स्वदेहार्पणनिष्क्रयेण भवत्तः मोचयितुम् न्याय्या, एवम् तव पारणा विहता न स्यात्, मुनेः क्रियार्थश्च अलुप्तः भवेत् ।

व्याक०—स्वदेहस्यार्पणमेव निष्क्रयः, ( तत्पु० ) तेन स्वदेहार्पणनिष्क्रयेण । निष्क्रय इति निष्क्रीयतेऽनेनेति विग्रहे क्रीणातेः " एरच् " । मोचनस्य करणे तृतीया । क्रियैवार्थः क्रियार्थः ( तत्पु० )। भवत्त इति भवच्छब्दात् " पञ्चम्यास्तसिल् " । मोचयितुम्-मुचतेर्णिजन्तादर्हार्थकन्याय्यशब्दयोगे, अध्याहृतास्तिक्रियायोगे वा तुमुन् । न्याय्या-न्यायादनपेतेतिविग्रहे "धर्म-

* विश्राणनं वितरणम्—इत्यमरः ।

पथ्यर्थन्यायादनपेते ' इति यत् प्रत्यय । इद तद्धितान्तमपि अर्हार्थकत्वात्तद्धितस्य क्रियाबोधकत्वाच्च क्रियारूपेणात्र वाक्ये व्यवहृतम् । अस्यैव कर्तरि मयेति तृतीया, इयमिति कर्मणि प्रथमा च । यद्वा निपूर्वादयतेर्ण्यत्प्रत्ययेन कृदन्तमेवेदम्-तत्कर्तृत्वादिक मयेत्यादिपूपपन्नमेवेति । अस्तिक्रिया वाऽत्राध्याहृत्य तत्कर्तरि ' इयम् ' इति प्रथमा, न्याय्येति तत्र विधेय विशेषणम्. मयेति तृतीया तु मोचनक्रियाकर्तृत्वादिति । पारणा-पारयतेश्चौरादिकाद् " ण्यासश्रन्थो युच् " इति युच् । विहनने कर्मेदम् । तवेत्यस्य कर्तरि षष्ठी ।

व्याख्या—सा-पूर्ववर्णिता प्रसिद्धगौरवा वा, इयम्-नन्दिनी, मया, स्वदेहस्य-स्वशरीरस्यार्पणम्-उपहरणमेव, निष्क्रयो-मूल्यम्. तेन, भवत्त -त्वत्सकाशाद् . मोचयितुम्-त्याजयितु न्याय्या योग्येत्यर्थ , एवम्-मया स्वदेहे तुभ्यनुपहारीकृते सति तव-भवत , पारणा-व्रतान्तभोजनम , विहता-निवारिता न स्यात्, मुने - वशिष्ठस्य, क्रियार्थ -यागश्राद्धादिकर्मकलापरूप पुरुषार्थश्च, अलुप्त -अविनष्ट , भवेत् , न विनश्येदिति ।

भा०—अत एव हे सिंह ! एतस्या गो परिवर्ते तुभ्यमह स्वशरीरमुपहरामि, उचितमेवैतत्, न तु विचारमूढतालक्षणम् । स्वप्राणव्ययेनापि परस्य प्राणिन , विशेषेण गो , तत्राप्येवविशिष्टाया , तत्रापि च गुरुसम्बन्धिन्या , रक्षणीयत्वात् । एव च सति तव व्रतान्तभोजनमपि न विनश्येत्, गुरोर्वशिष्ठस्याग्निहोत्रादिक्रियापि सुख निर्वहेद्-इति द्वयोरेव न काचिद्धानि । " अह च तथा स्वकर्तव्यपालनेन कृतार्थ " इत्यर्थादनुसन्धेयम् ।

अल०—अत्रारोप्यमाणस्य निष्क्रयस्य विषयात्मतयैव प्रकृतोपयोगित्वात् परिणामालङ्कार । ' स्वदेहनिष्क्रयार्पणेन ' इति वक्तव्ये 'स्वदेहार्पणनिष्क्रयेणेति ' वचनात् ' तुच्छो देहो नेदृश्या गो निष्क्रय', अपि तु कर्तव्यबुद्ध्या क्रियमाण देहार्पण धर्म इति निष्क्रयो भवितुमर्हति ' इति निगूढ व्यज्यते । धर्मवीरो रस' स्फुट एव । अलुप्त इति क्रियान्वयित्वेनोचितस्य नञ' समासे गुणीभावाद्विधेयाविमर्शदोषोपि ।

भवानपीद परवानवैति महान् हि यत्नस्तव देवदारौ ।
स्थातु नियोक्तुर्न हि शक्यमग्रे विनाश्य रक्ष्य स्वयमक्षतेन ॥५६॥

अ०—परवान् भवान् अपि इदम् अवैति, हि तव देवदारौ महान् यत्न, हि रक्ष्यम् विनाश्य स्वयम् अक्षतेन नियोक्तु अग्रे स्थातुम् न शक्यम् ।

व्याक०—परवान्-परोऽस्य नियोक्तृत्वेनास्तीति परशब्दान्मतुप् । अवैति एतेर्लट्, "एत्येधत्यूठ्सु" इति वृद्धिः । यत्नः-यततेर्नङ् । रक्ष्यम्-रक्षतेर्ण्यत्, नियोक्तु-युजक्तेस्तृच् ।

व्याख्या—* परवान्-स्वामिपरतन्त्र, भवानपि, इदम् वक्ष्यमाणम्, अवैति जानाति, हि यत, तव-भवत, देवदारौ-देवदारुवृक्षविषये, तद्रक्षायामिति यावत्, महान्-सातिशय, यत्न -प्रयास, अस्तीति शेष । पूर्वोक्तमिदं शब्दं विवृणोति-हि-निश्चयेन, रक्ष्यम्-रक्षितु योग्यम्, वस्तु, विनाश्य-उपेक्षया नाशं प्रापय्य, स्वयम् अक्षतेन-अव्रणेन-कामपि हानिमसोढवता पुरुषेण, नियोक्तु-प्रेषकस्य, स्वामिन, अग्रे-सम्मुखे, स्थातुम्-वर्तितुम्, न शक्यम्-न स तत्र स्थातुं प्रभवेदिति ।

भा०—हे सिंह ! स्वामिपरतन्त्रस्त्वमप्येतदवश्य जानासि, यत्सेवको मौनमास्थाय पाणिपादमस्पन्दयित्वा स्वय कांचिदपि हानिमसोढ्वा स्वामिधन चेन्नाशयेत्, तर्हि व्रीडाविनतकन्धरो दण्डभयभीतश्च स्वामिनोऽग्रे स्थातुं न शक्नोति । यद्येवं नाभविष्यत्, तर्हि त्वमपि एतद्देवदारुवृक्षविषय एव यत्नवान् नाभविष्य ।

अल०—सिंहनिदर्शनेन सामान्यस्य समर्थनादर्थान्तरन्यासः । कर्तव्यनिष्ठैव व्यङ्ग्या ।

**किमप्यहिंस्यस्तव चेन्मतोऽहं यशःशरीरे भव मे दयालु ।**
**एकान्तविध्वंसिषु मद्विधानां पिण्डेष्वनास्था खलु भौतिकेषु ॥२७॥**

अ०—चेद् अहम् किमपि अहिंस्यः तव मत, तर्हि मे यश शरीरे दयालु भव, खलु एकान्तविध्वंसिषु भौतिकेषु पिण्डेषु मद्विधानाम् अनास्था ( भवति ) ।

व्या०—हिंस्य इति हिनस्तेर्ण्यत् । मत-"मतिबुद्धिपूजार्थेभ्यश्च" इति मनुधातोः क्तः । तवेति तद्योगे कर्तरि षष्ठी । अहं विधा येषां तेषां मद्विधानाम्, "प्रत्ययोत्तरपदयोश्च" इति मादेशः । विध्वंसो येषामस्तीति

* परतन्त्र, पराधीनः परवान् नाथवानपि-इत्यमर ।

विश्वसितः इत्तिभित्यथाय । अथवा विध्वसन्ते तच्छीला, इति, विग्रहे ध्वंसतेः सुप्यजाताविति णिनिः । एकान्त विध्वंसिष्वेकान्तविध्वसिषु, केवलसमास, । दयालु दयतेरालुच् । भौतिकेषु-भूतशब्दाद्विकारार्थे ठक् "ठस्येक" इतीकादेश,।

व्याख्या—चेद्-यदि, अहम् , किमपि-केनापि हेतुना, किञ्चिदपि वा, अहिंस्य -हिंसितुमयोग्य., तव-भवत., मत इष्ट , तर्हि मे-मम, यश,-कीर्तिरेव शरीरम्, तस्मिन्. दयालु -दयावान्, भव, तच्छरीरं रक्षेति भाव । ननु मुख्यं शरीरमुपेक्ष्यामुख्ये यशःशरीरे किमर्थमाग्रह इत्यत आह, खलु-निश्चयेन, एकान्तविध्वसिषु-अवश्य विनश्वरेषु, भौतिकेषु-भूताना विकारा भौतिकास्तेषु, पृथिव्यादिभूतनिर्मितेषु पिण्डेषु, शरीरपदवाच्येषु, मद्विधानाम्-मत्सदृशानाम्, अनास्था-अनादर एव ।

भा०—हे सिंह ! यदि त्वं मा केनापि हेतुना ' अवध्यम ' मन्यसे, तत एव मम देहरक्षणमुपदिशसि, तर्हि कृपया मे यश शरीरं मा हिंसी । इद तु भौतिक पिण्ड वपुराख्य काम स्वभोजनायोपयुङ्क्ष्व । विवेकिन खलु भौतिकेषु शरीरेषु नाग्रहपरा., यतस्तेषा भूतपिण्डरूपत्वाद्विनाशोऽवश्यं भावी, यश शरीरन्तु स्थिर ते सर्वात्मना रक्षन्ति ।

अल०—यश शरीरमिति यशसि शरीरत्वारोपाद्, मुख्यशरीरादुत्कर्षप्रतिपादनाच्चाधिकताद्रूप्यरूपकम् । यद्वा-यश एव शरीरम्, इदं दृश्यमानं शरीरत्वेन व्यवहृत तु भौतिकपिण्डमात्रमिति यशस्यारोपार्थं शरीरे शरीरत्वापह्नवात्पर्यस्तापह्नुतिरियम् । मा हिंसीरिति वक्तव्ये दयालुशब्दोक्त्या पर्यायोक्तम् । अनास्थायामेकान्तविध्वसीति हेतुगर्भत्वात् परिकर. । मतिरत्र व्यभिचारिभावोऽभिव्यक्तो धर्मवीररस सम्यक् पुष्णाति । यशोरक्षणोत्कण्ठापि धर्मवीरस्यैवाङ्गम् ।

**सम्बन्धमाभाषणपूर्वमाहुर्वृत्त स नौ संगतयोर्वनान्ते ।**
**तद् भूतनाथानुग नार्हसि त्व सम्बन्धिनो मे प्रणयं विहन्तुम् ॥५८॥**

अ०—(लोका०) सम्बन्धम् आभाषणपूर्वम् आहु , सः वनान्ते सङ्गतयोः नौ वृत्त., तद् हे भूतनाथानुग त्वम् सम्बन्धिन. मे प्रणयम् विहन्तुम् न अर्हसि ।

व्याक०—आभाषण पूर्वं यस्य तद् आभाषणपूर्वम् ( बहु० ) आभाषणमिति भाषतेर्ल्युट् । सङ्गतयो.-गमधातो. कर्तरि क्त । वृत्त इत्यपि तथा ।

अनुग इति अनुगच्छतीति विग्रहे "अन्यत्रापि दृश्यते" इति ड। सम्बन्धी- "अत इनिठनौ" इति इनि प्रत्यय। प्रणय-प्रपूर्वान्नयते "एरच्"। आहु.-ब्रूधातोर्लटि प्रथमपुरुषबहुवचनम्। "ब्रुवः पञ्चनामादित आहो ब्रुव" इत्यनेनोस्, आहादेशश्च।

व्याख्या—सम्बन्धम्-सख्यम्, आभाषणम्-आलाप, पूर्वम्-कारण यस्य तथाभूतम्, आहु-कथयन्ति, लोका इति शेष। स तादृक् सम्बन्ध, वनान्ते-वनप्रदेशे, सङ्गतयो-सम्मिलितयो, नौ-आवयो, वृत्त-जात, तत्-तस्मात्कारणाद्, हे भूतनाथानुग! हे महेश्वरानुचर! त्वम्, सम्बन्धिन-सख्यु, मे-मम, *प्रणयम्-विश्रम्भयाचनाम्, निहन्तुम्-विफलयितुम्, नार्हसि-न योग्योऽसि।

भा०—हे सिंह! परस्परमालाप एव सौहार्दस्य हेतु। तत्रापि च वने, (वने साहचर्यस्य मैत्रीलक्षणेषु गणनात्) स चालापो वने सम्मिलितयोरावयोर्जात एव। अत एवेदानीं त्वमहं च सुहृदौ भवाव। सुहृदो मे पूर्वोक्ता प्रार्थना न त्वया विफलीकरणीया। यतस्त्वं भूतनाथस्येश्वरस्यानुग-इति भवादृशे सौहार्दवैफल्यं न सम्भाव्यत एव।

अलं०—सम्बन्धित्वस्य प्रणयाविहनने हेतुत्वात् काव्यलिङ्गम्। भूतनाथानुगेति सम्बोधनस्य साभिप्रायत्वात्परिकरश्च। प्रार्थनया 'औत्सुक्यम्' व्यभिचारी व्यज्यते, सोऽपि धर्मवीर रसमत्यर्थं पोषयति।

**तथेति गामुक्तवते दिलीपः सद्यः प्रतिष्टम्भविमुक्तबाहुः।**
**स न्यस्तशस्त्रो हरये स्वदेहमुपानयत् पिण्डमिवामिषस्य॥ ५९॥**

अ०—सद्य प्रतिष्टम्भविमुक्तबाहु स दिलीप न्यस्तशस्त्र (सन्) तथा इति गाम् उक्तवते हरये स्वदेहम् आमिषस्य पिण्डमिव उपानयत्।

व्याक०—प्रतिष्टम्भाद्विमुक्तः (त०) बाहुर्यस्य (बहु०) स प्रतिष्टम्भविमुक्तबाहु। न्यस्तं शस्त्रं येन स न्यस्तशस्त्र। उक्तवते-ब्रूञ्धातो कर्तरि क्तवतुः। सद्य-"सद्य परुत्परार्यैषम" इत्यादिना निपात्यते। उपानयत्-उपपूर्वान्नयतेर्लङ्। देह इति देग्धेर्घञ्। हरये इति सम्प्रदाने चतुर्थी।

व्याख्या—सद्य तत्क्षणे, प्रतिष्टम्भात्-प्रतिबन्धाद्, विमुक्त-रहित,

---

* विश्रम्भयाच्ञा प्रणय—इत्यमर।

वाहु -भुजो यस्य तथाभूत , स -दिलीप , न्यस्तम्-त्यक्तम्, शस्त्रम्-आयुध येन तथाभूत सन् , तथा एवमस्तु, इति गाम्-वाणीम् ,उक्तवते, † हरये-सिंहाय, स्वस्य-आत्मन , देहम्-शरीरम् , ‡ आमिषस्य-मासस्य पिण्डमिव कवलमिव, उपानयत्-उपहाररूपेण समार्पयत् ।

भा०—दिलीपस्य प्रार्थना स्वीकुर्वन् सिंह ' यथा भवते रोचते, तथैव भवतु ', इत्युवाच । 'किमय सत्यं ददाति देहम्, उत वाङ्मात्रमिदम् ' इति परीक्षणे तत्तात्पर्यम् । तत्क्षण एव राज्ञो वाहुरपि प्रतिवन्धरहितो जात. । ' अपनीते वन्धने प्राकृतजनवत्पुनरप्यय शस्त्रचालनायाविष्टो यतेत, उत प्रतिज्ञामनुस्मरन् शरीरमर्पयेत ' इति परीक्षणे तात्पर्यम् । अथ स दिलीपस्तु शस्त्रादिकमेकतः परित्यज्य स्वप्रतिज्ञानुसारेण स्वदेहं सिंहस्याग्रे न्यपातयदेव । यथा कश्चित्साधारण मासग्रासमखिन्न एव दद्यात्, तथैवाखिन्नस्य सुप्रसन्नस्य दिलीपस्य देहदानमिति ।

अल०—उपमा, मासपिण्डस्य देहस्य चोपहारीकरणं साधारणो धर्मः । प्रायेण महाकविरस्मिन् प्रकरणे ' नृपति. ' ' राजा ' ' प्रजानाथ. ' इत्यादिभिरेव पदैर्दिलीप व्याहरत्, इह तु ' दिलीपः ' इति नामग्रहणम्- ' ईदृशेऽनन्यसाधारणे महति साहसे नामग्राहमेव कीर्तिघण्टाघोष आवश्यक ' इत्यभिप्रायेणैव । राज्ञ स्तुतिरत्र प्राधान्येन व्यङ्ग्या, वीररसस्तदङ्गमिति रसवदलङ्कारमालङ्कारिका आहु , विस्तरस्त्वत्राप्रकृत इति ।

तस्मिन्क्षणे पालयितु प्रजानामुत्पश्यत. सिंहनिपातमुग्रम् ।
अवाङ्मुखस्योपरि पुष्पवृष्टि. पपात विद्याधरहस्तमुक्ता ॥ ६० ॥

अ०—तस्मिन् क्षणे उग्रम् सिंहनिपातम् उत्पश्यतः अवाङ्मुखस्य प्रजानाम् पालयितु उपरि विद्याधरहस्तमुक्ता पुष्पवृष्टिः पपात ।

व्याक०—अवाङ् मुख यस्य ( वहु० ) तस्यावाङ्मुखस्य । सिंहः-इति हिनस्ति पचाद्यचि पृषोदरादित्वाद् वर्णविपर्ययात् साधु । निपात इति पततेर्भावे घञ् । पालयितु.-पालयतेस्तृच् । प्रजानामिति तद्योगे कर्मणि षष्ठी ।

---

† कपौ सिंहे सुवर्णे च वर्णे विष्णौ हरि विदु —इत्यमर. ।

‡ पलल क्रव्यमामिषम् — इत्यमरः ।

उत्पश्यत -उत्पूर्वाद् दृशेः "अप्रथमासमानाधिकरणे" शतृप्रत्ययः, "पाघ्राध्मा" इति पश्यादेशः । अवाङ्-अवपूर्वादञ्चतेर् ऋत्विगादिना क्विन् । पुष्प-शब्दे 'पुष्प विकसने' इत्यतः पचाद्यच् ।

व्याख्या—तस्मिन् क्षणे-देहोपहरणावसरे, उग्रम्-भयङ्करम्, सिंहस्य, निपातम् निपतनम्-आक्रमणमिति यावत्, उत्पश्यत -उत्प्रेक्षमाणस्य अवाङ् मुखस्य-अधोमुखस्य, प्रजानाम्, पालयितुः-रक्षकस्य, राज्ञो दिलीपस्य, उपरि विद्याधराणाम् तत्र स्थितानां देवयोनिविशेषाणाम्, हस्तैः, विमुक्ता-त्यक्ता, पुष्पाणाम्-कुसुमानाम्, वृष्टिः पपात ।

भा०—'सिंहस्याग्रेऽधोमुखः शयानो राजा एष मयि निपतित सिंह' इति सिंहाक्रमणं निध्यायति स्म । परं सिंहस्तु न निपतितः, तत्स्थाने पुष्प-वृष्टिस्तद्देहोपरि निपतिता । तत्रैव हिमगिरिगुहायां स्थिताः संवादमिममाकर्ण-यन्तो विद्याधरा राज्ञो महत्त्वेन विमुग्धाः पुष्पाणि ववृषुरिति ।

अल०—'वाञ्छितादधिकार्थस्य संसिद्धिश्च प्रहर्षणम्' इति (कुवल०) लक्षितं प्रहर्षणमत्रालङ्कारः 'धर्मे दृढतया कदापि नानिष्टम्, अपि त्वनिष्टप्र सङ्गेऽपीष्टप्राप्तिः, स्थिरसत्कीर्तिलाभश्च' इति फलं व्यङ्ग्यम् ।

**उत्तिष्ठ वत्सेत्यमृतायमानं वचो निशम्योत्थितमुत्थितः सन् ।**
**ददर्श राजा जननीमिव स्वां गामग्रतः प्रस्रविणीं न सिंहम् ॥ ६१ ॥**

अ०—हे वत्स ! उत्तिष्ठ इति उत्थितम् अमृतायमानम् वचः निशम्य उत्थितः सन् राजा अग्रतः प्रस्रविणीं गां स्वां जननीमिव ददर्श, सिंहम् न (ददर्श) ।

व्या०क०—उत्तिष्ठ उत्पूर्वात् स्थाधातोर्लोट्, तिष्ठादेशः, हेर्लुक् । अमृताय मानम्-अमृतशब्दाद् "उपमानादाचारे" इति क्यङ् । अग्रतः अग्रशब्दात्तसि । प्रस्रविणी-स्रवणं स्रवः, "ऋदोरप्" प्रकृष्टः स्रवः प्रस्रवः, ततः प्रस्रवोऽस्या अस्तीति "अत इनिठनौ" इति मत्वर्थीय इनिः । नान्तत्वाद् ङीप् । प्रस्रवण प्रस्रव इति तु न विग्रहीतव्यम्—"प्रे द्रुस्तुस्रुवः" इति घञापत्तेः । जननीम्-जनयतेर्ल्युट्, टित्त्वान्ङीप् ।

व्याख्या—हे वत्स ! हे पुत्र ! उत्तिष्ठ, इत्येवम् उत्थितम्-प्रादुर्भूतम्, अमृतायमानम् अमृतवत् सुखदम्, वचः वाक्यम्, निशम्य श्रुत्वा, उत्थितः

सन्, राजा, अग्रत -अग्रे, प्रस्नविणीम् क्षीरं स्रवन्तीम्, गाम्-नन्दिनीम्, स्वाम् स्वकीयाम्, जननीमिव मातरमिव, ददर्श-आलोकयामास, सिंहम्, न ददर्श ।

भा०—अथ नृपति, "वत्स ! उत्तिष्ठ" इति मधुरा गिरमुपश्रुत्योदतिष्ठत् । उत्थितश्च क्षीर स्रवन्तीं स्वमातृसदृशीं नन्दिनीमपश्यत् । सिंह तु नापश्यत् ।

अल०—अमृतायमानम्, जननीमिवेत्युपमाद्वयम् । न सिंहम् इति परिसंख्यापि । प्रस्नविणीमित्यनेन नन्दिनीगत राजविषय वात्सल्यं व्यज्यते । राज्ञो हर्षविस्मयौ च व्यङ्ग्यौ ।

**त विस्मित धेनुरुवाच साधो ! माया मयोद्भाव्य परीक्षितोऽसि ।**
**ऋषिप्रभावान्मयि नान्तकोऽपि प्रभु प्रहर्तुं किमुतान्यहिंस्रा ॥६२॥**

अ०—विस्मितम् तम् धेनु उवाच, हे साधो ! मया मायाम् उद्भाव्य परीक्षित असि, ऋषिप्रभावाद् मयि अन्तक अपि प्रहर्तु प्रभु न, ( अस्ति ) अन्यहिंस्रा किमुत ( भवेयु• ) ।

व्याक०—विस्मितम् विपूर्वात्स्मयते "गत्यर्थाकर्मकश्लिष" इत्यादिना कर्तरि क्त । साधो-साध् धातो "कृवापाजिमिसाध्यशूभ्य उण्" इत्यौणादिकसूत्रेण उण् । परीक्षित -परिपूर्वादीक्षते कर्मणि क्त । प्रभाव इति भवतेर्घञ्, तत प्रादिसमास । अन्तक -अन्त करोतीति अन्तशब्दात् "प्रातिपदिकाद् धात्वर्थे" इत्यनेन णिच्, ततो णिजन्तात् "ण्वुल्तृचौ" इति ण्वुल् । प्रहर्तुम्-शक्नोत्यर्थकप्रभुशब्दयोगे, अस्तियोगे वा तुमुन् । प्रभु -प्रपूर्वाद् भवतेः डु । हिंस्रा हिनस्ति "नमिकम्पिस्म्यजसकमहिंसदीपो र" । तम्-"अकथित च" इति गौणे कर्मणि द्वितीया ।

व्याख्या—विस्मितम्-आश्चर्यं प्राप्तम्, तम् नरेन्द्रम्, धेनु -नन्दिनी, उवाच-इद कथयामास, यद् हे साधो ! हे परोपकारप्रवण राजन्!, त्वम्, मायाम्-कपटरूपम्, उद्भाव्य कल्पयित्वा, परीक्षित -कृतपरीक्ष असि, ऋषे -वशिष्टस्य, प्रभावात्, मयि ममोपरि, अन्तक -यमराजोऽपि, प्रहर्तुम्-प्रहार कर्तुम्, न प्रभु न समर्थोऽस्ति, अन्यहिंस्रा -अन्ये हिंसकजन्तव. सिंहाद्या,

किमुत-कथं समर्थाः स्युः ।

भा०—अतर्कितोपनतया पुष्पवृष्ट्या सिंहस्यादर्शनेन च राजा विस्मयं गतः । नन्दिनी च तदा तमित्थमुवाच । हे परोपकारिन् दिलीप ! मयैव कपटसिंहमुत्पाद्य तव भक्तेः परीक्षा कृता । वस्तुतस्तु मां वशिष्ठप्रभावेण सर्वजीवनाशको यमोऽपि पीडयितुं न समर्थः । अन्येषां हिंसकजन्तूनां कथैव का ।

अल०—कैमुतिकन्यायोद्भावनात्-काव्यार्थापत्तिः, 'साधो ! परीक्षितोसि' इति परीक्षायामुत्तीर्णता व्यज्यते ।

**भक्त्या गुरौ मय्यनुकम्पया च प्रीतास्मि ते पुत्र वरं वृणीष्व ।**
**न केवलानां पयसां प्रसूतिमवेहि मां कामदुघां प्रसन्नाम् ॥६३॥**

अ०—हे पुत्र ! गुरौ भक्त्या, मयि अनुकम्पया च ( अहम् ) ते प्रीता अस्मि, ( त्वम् ) वरम् वृणीष्व, माम् केवलानाम् पयसाम् प्रसूतिम् न अवेहि ( किंतु ) प्रसन्नाम् ( सतीम् ) कामदुघाम् ( अवेहि )।

व्याक०—ते-"क्रियया यमभिप्रैति सोऽपि सम्प्रदानम्" इति सम्प्रदानत्वाच्चतुर्थी, सम्बन्धसामान्ये षष्ठी वा । भक्त्या अनुकम्पया-इति हेतौ तृतीया । 'गुरौ' इति 'मयि' इति च वैषयिकेऽधिकरणे सप्तमी । पयसाम् "जात्याख्यायाम्" इति बहुवचनम् । प्रीता-कर्तरि क्तः । वरः-वृ इति क्रैयादिकाद् "ऋदोरप्", अथवा वृणोतेः "ग्रहवृदृनिश्चिगमश्च" इत्यप् । प्रसूति-प्रपूर्वात् सूङ्धातोः क्तिन् । कामदुघा-" दुहः कब् घश्च " इति दोग्धेः कप्, घादेशश्च ।

व्याख्या—हे पुत्र ! गुरौ-वशिष्ठे, भक्त्या, मयि अनुकम्पया-दयया च, ( एतदुभयोत्थापितधर्मोत्साहप्रयोज्यं कर्तव्यपालनं ते दृष्ट्वेति तात्पर्यम् ) ते-तुभ्यम्, तव वा, प्रीता-प्रसन्नास्मि, अतः त्वम् वरम्-अभीप्सितमर्थम्, वृणीष्व याचस्व । माम्, केवलानां पयसाम्-दुग्धमात्रस्य, प्रसूतिम्-उत्पादयित्रीम्, नावेहि-न जानीहि, किन्तु प्रसन्नाम्-प्रसादमुपगतां सतीम्, कामदुघाम्-यथेच्छफलदात्रीम्, अवेहि ।

भावा०—हे दिलीप ! गुरौ भक्तिं मद्विषयेऽनुकम्पां च निरीक्ष्य निरतिशयं

प्रसीदामि । अतस्त्व मत्सकाशात् स्वाभिमत वर प्रार्थयस्व । एषा धेनु दुग्धातिरिक्त किं दद्यात्' इति त्वया न शङ्कितव्यम् । यतोऽह प्रसन्ना सती यथेच्छ कामानपि पूरयितु शक्नोमि ।

अल०—वरप्रर्थनाया कामदुघात्वेन समर्थनात् काव्यलिङ्गम् । धेनुगत-वात्सल्यस्य प्राधान्येन व्यञ्जनाद् भावध्वनि ।

**तत समानीय स मानितार्थी हस्तौ स्वहस्तार्जितवीरशब्द. ।**
**वशस्य कर्तारमनन्तकीर्तिं सुदक्षिणायां तनय ययाचे ॥ ६४ ॥**

अ०—तत· मानितार्थी स्वहस्तार्जितवीरशब्द स हस्तौ समानीय सुद-क्षिणायाम् वशस्य कर्तारम् अनन्तकीर्तिम् तनयम ययाचे ।

व्याक०—मानिता अर्थिनो येन स मानितार्थी । मानिता· णिजन्तान्मा-नयते· क्त । अर्थीति अर्थशब्दात्, 'अर्थाच्चासन्निहिते" इतीनि । स्वस्य हस्ताभ्याम् ( ष० त० ) अर्जित: वीर इति शब्दो येन स स्वहस्तार्जितवीर-शब्द । वीर-इति वीरयते पचाद्यच् । न अन्तो यस्या सा अनन्ता, तथा कीर्तिर्यस्य तमनन्तकीर्तिम् । तत-तच्छब्दात्तसिल् प्रत्यय· । समानीय-'सम्' 'आङ्' एतदुपसर्गद्वयपूर्वान्नीधातोर्ल्यप् ।

व्याख्या—तत-'वर वृणीष्व' इति नन्दिनीवचनानन्तरम्, मानिताः-दानमानाभ्या सत्कृताः, अर्थिनः-याचका येन तथा-भूत, स्वहस्ताभ्याम्-स्वभुजाभ्याम्, अनन्यसाहाय्येनेति यावत्, अर्जित-कर्म कृत्वा प्राप्त, वीर इति शब्दो येन तथाभूत, स राजा, हस्तौ करौ, समानीय-सयोज्य, अञ्जलि बद्ध्वा, सुदक्षिणायाम्-स्वभार्यायाम् तत्कुक्षौ, वंशस्य-कुलस्य, कर्तारम्-अग्रे प्रवर्तयितारम्, अविच्छिन्नसन्ततिमिति यावत्, अनन्ता-चिरस्थायिनी कीर्तिर्यस्य तथाभूतम्, तनयम् पुत्रम् । ययाचे-प्रार्थयामास ।

भा०—धेन्वा वरयाचनायै प्रेरितोऽतिवदान्य शौर्यशाली स दिलीपो बद्धाञ्जलिर्भूत्वा वशप्रवर्तक यशस्विन पुत्र वरत्वेन याचितवान् । दिगन्तविश्रा न्तकीर्तयो महारथा कल्पद्रुमवद् याचकेभ्योऽभिलषित वितरीतु समर्था अपि ऋणत्रयापाकरणाय देवानामग्रे याचनार्थं हस्तौ प्रसारयन्तीति कवेराकूतम् ।

अल०—मानीय मानितेति-लाटानुप्रास । मानितार्थ्यपि ययाच इति

विरोधालङ्कृति । पुत्रप्राप्तय उत्कण्ठा व्यज्यते ।

सन्तानकामाय तथेति कामं राज्ञे प्रतिश्रुत्य पयस्विनी सा ।
दुग्ध्वा पयः पत्रपुटे मदीयं पुत्रोपभुङ्क्ष्वेति तमादिदेश ॥ ६५ ॥

अ०—सा पयस्विनी सन्तानकामाय राज्ञे तथा इति कामम् प्रतिश्रुत्य ( हे ) पुत्र ! ( त्वम् ) मदीयम् पयः पत्रपुटे दुग्ध्वा उपभुङ्क्ष्व इति तम् आदिदेश ।

व्याक०—सन्तानं कामयत इति तस्मै सन्तानकामाय, "कर्मण्यण्" उपपदसमासः । राज्ञे "प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता" इति सम्प्रदानत्वाच्चतुर्थी । प्रतिश्रुत्येति आदिशतिना समानकर्तृकत्वात् प्रतिश्रृणोतेः क्त्वास्थाने ल्यप् । काममिति प्रतिश्रवणे कर्म । दुग्ध्वा दुहप्रपूरणे, इत्यतः 'उपभुङ्क्ष्वेति' क्रियया समानकर्तृकत्वात् क्त्वा । मदीयम्-अस्मच्छब्दाद्-"वृद्धाच्छः" इति शैषिकश्छप्रत्ययः । मम-इदं मदीयम्, 'त्यदादीनि च' इति वृद्धत्वम् "प्रत्ययोत्तरपदयोश्च" इति मादेशः । उपभुङ्क्ष्व-भुनक्तेर्लोटि मध्यमपुरुषैकवचनम् । 'भुजोऽनवने' इत्यात्मनेपदम् । इयमप्रधानक्रिया, त्वमित्यस्या-कर्तृपदमध्याहारलभ्यम्, 'आदिदेश' इति प्रधानक्रिया । इतिशब्दगृहीतो वाक्यार्थ आदेशने कर्म, तमिति तस्यैव द्वितीयं कर्म । भू धातुना समानार्थत्वाद् द्विकर्मकत्वम् ।

व्याख्या—सा-प्रक्रान्ता, पयस्विनी-धेनुः, नन्दिनी, सन्तानकामाय-सन्तानं-पुत्रं कामयते-इच्छति इति तथाभूताय, राज्ञे-नृपतये, दिलीपाय, तथा-'एवमस्तु' इति कामम् काम्यत इति कामो वरः, तम्, प्रतिश्रुत्य-प्रतिज्ञाय हे पुत्र ! त्वं मदीयम्, पयः दुग्धम्, पत्रपुटे-पत्रनिर्मिते द्रोणे, दुग्ध्वा, उपभुङ्क्ष्व-पिब, इति-एवम्, तम्-राजानाम्, आदिदेश आज्ञापितवती ।

भा०—नन्दिनी पुत्राभिलाषिणे तस्मै नरेन्द्राय 'तथास्तु' इति वरं प्रादात् । तदुपायरूपेण च एकस्मिन्पत्रपुटके स्वकीयं दुग्धं दुग्ध्वा पातुं तमाज्ञापयामास ।

अलं०—सन्तानकामायेति विशेषणेन राज्ञः सन्तानातिरिक्तसर्वैश्वर्यसम्पन्नत्वं सूचितम्, 'सन्तानमेव कामयते' इति साभिप्रायत्वात्परिकरः । धेनुगतं वात्सल्यं व्यङ्ग्यम् ।

**वत्सस्य होमार्थविधेश्च शेषमृषेरनुज्ञामधिगम्य मात ।**
**ऊधस्यमिच्छामि तवोपभोक्तु षष्ठांशमुर्व्या इव रक्षिताया ॥ ६६ ॥**

अ०—(हे) मात ! ऋषे अनुज्ञाम् अधिगम्य वत्सस्य होमार्थविधेश्च शेषम् तव ऊधस्यम् रक्षितायाः उर्व्याः षष्ठांशमिव उपभोक्तुम् इच्छामि ।

व्याक०—होमाय इति होमार्थ, स चासौ विधिश्च, तस्य होमार्थविधे । षष्ठ-षण्णा पूरण इति षष्शब्दात्-" तस्य पूरणे डट् " तस्य " षट्कतिपयचतुरा थुक् " । अनुज्ञा " आतश्चोपसर्गे " इत्यनेन अनुपूर्वाज्ज्ञानातेरङ् प्रत्यय । अधिगम्य-अधिपूर्वाद् गच्छतेर्ल्यप्, " वा ल्यपि " इत्यनेन वैकल्पिकानुनासिकलोपविधानान्मलोपाभाव । ऊधस्यम्-ऊधसि भवमिति-ऊध० शब्दाद् 'शरीरावयवाद्यत्" । ' औधस्यम् ' इति त्वपपाठ । स्वार्थिकेन प्रज्ञादयणा वा कथंचित् समाधेय । उपभोक्तुम्-इच्छतियोगे तुमुन् ।

व्याख्या—राजा वदति, हे मात ! ऋषे -वशिष्ठस्य, अनुज्ञाम्-आज्ञाम्, अधिगम्य-लब्ध्वा, वत्सस्य वत्सपानस्य, होमोऽग्निहोत्रहवनम्, तदर्थो विधि -अनुष्ठानम्, श्रपणादि, तस्य च शेषम्-एतद्द्वयसम्पादनानन्तरम् अवशिष्टम्, तव ऊधस्यम्-दुग्धम्, रक्षिताया -पालिताया , उर्व्या -पृथिव्या , षष्ठांशम्-षष्ठभागमिव-उपभोक्तुम्-पातुम्, इच्छामि ।

भा०—हे मातृकल्पे ! नन्दिनि ! यथाहं प्रजाभ्यो रक्षणानन्तरं न्याय्य षष्ठांश स्वोपभोगार्थमाददे, तथैव वत्सपानाद् गुरोरग्निहोत्रोपयोगाच्चावशिष्टं मदर्थं न्याय्य तव पय पास्यामि, तदपि च गुरोराज्ञयैव । अन्यथाऽननुज्ञातं गुरुद्रव्य विशेषतश्च यज्ञार्थं तदज्ञातप्रागुपभुञ्जानस्य मे पातित्यप्रसङ्ग इति ।

अल०—उपमा । न्याय्यत्वमुभयानुगतो धर्म । राज्ञ कर्तव्यनिष्ठाया उत्कर्षो व्यङ्ग्य ।

**इत्थं क्षितीशेन वसिष्ठधेनुर्विज्ञापिता प्रीततरा बभूव ।**
**तदन्विता हैमवताच्च कुक्षे प्रत्याययावाश्रममश्रमेण ॥ ६७ ॥**

अ०—इत्थम् क्षितीशेन विज्ञापिता वसिष्ठधेनु प्रीततरा बभूव, तदन्विता च अश्रमेण हैमवतात् कुक्षे' आश्रमम् प्रत्याययौ ।

व्याक०—क्षियन्ति निवसन्त्यस्यामिति क्षिति , ' क्षि निवासगत्यो॰ '

अधिकरणे "स्त्रियां क्तिन्" । अन्विता एतैः क्त , तेनान्वितेति कर्तरि तृतीयया समास । कुक्षेः-"ध्रुवमपाये ऽपादानम् " इत्यपादानत्वात्पञ्चमी । वसिष्ठ वसुमच्छब्दाद् " अतिशायने तमबिष्ठनौ " इतीष्ठन् प्रत्यय , मतुब्लोप , टिलोपश्च । विज्ञापिता-विपूर्वाद् ' ज्ञा नियोगे ' इति चौरादिकधातो. क्तः, अतिह्रीति पुक् । प्रीततरा-"द्विवचनविभज्योपपदे " " इति तरप् । हैमवतात् हिमवतो ऽयमिति-हिमवच्छब्दाच्छैषिकोऽण् । श्रम -आश्रम , उभयत्र क्रमेण भावे ऽधिकरणे च " भावे " " हलश्च " आभ्यां घञ् ।

व्याख्या—इत्थम्-पूर्वोक्तप्रकारेण, क्षितीशेन-राज्ञा दिलीपेन, विज्ञापिता निवेदिता, वसिष्ठस्य, धेनु', प्रीततरा-पूर्वापेक्षयाप्याधिक प्रसन्ना, बभूव । च पुन -, तदन्विता तेन दिलीपेनान्विता-सहिता, हैमवतात्-हिमाचलस्य, कुक्षे - गुहाया', ( सकाशात् ) अश्रमेण-अनायासेन, आश्रमम्-वसिष्ठनिवासस्थानम् , प्रत्याययौ प्रत्याजगाम ।

भा०—' वत्सस्य होमार्थविधेश्च ' इति राज्ञो वचनमाकर्ण्य वशिष्ठधेनु पूर्वतोऽप्यधिक तुतोष । ' यथा विपत्काले, तथा सम्पत्कालेऽप्ययं धर्मं रक्षति ' इति धर्मनिष्ठायास्तोषहेतुत्वात् । ततश्च हिमालयगुहातस्तेन साक श्रम विनैवाश्रममाजगाम । ( उक्तयोर्द्वयो पद्ययो परस्पर सम्बन्धेनैव प्रकरणाङ्गता ) ।

अल०—पूर्वोक्तराजवचनस्याधिकप्रीतौ हेतुत्वात् काव्यलिङ्गम् । आश्रममश्रमेणेति वृत्त्यनुप्रासश्चमत्कारी । श्रमकारणे गमने सत्यपि श्रमाभावाद् विशेषोक्ति । सा च प्रीततरत्वरूपनिमित्तोपादानात् सनिमित्ता, मार्गश्रमोऽपि नानुभूयत इति ।

तस्या प्रसन्नेन्दुमुख प्रसाद गुरुर्नृपाणां गुरवे निवेद्य ।
प्रहर्षचिह्नानुमित प्रियायै शशंस वाचा पुनरुक्तयेव ॥ ६८ ॥

अ०—प्रसन्नेन्दुमुख. नृपाणाम् गुरु प्रहर्षचिह्नानुमितम् तस्या प्रसादम् पुनरुक्तयेव वाचा गुरवे निवेद्य प्रियायै शशंस ।

व्याक०—प्रसन्नश्चासाविन्दु' प्रसन्नेन्दुः, ( कर्म० ) स इव मुख यस्य स प्रसन्नेन्दुमुख., प्रसन्न इति प्रसीदते क्त', दकारतकारयोर्नत्वम् । प्रहर्षस्य

चिह्नैरनुमित प्रहर्षचिह्नानुमितम्, प्रहर्ष इति हृष्यतेर्घञ्, प्रसाद -प्रसीदतेर्घञ् । गुरवे, प्रियायै-उभयत्र "क्रियया यमभिप्रैति" इति सम्प्रदानत्वाच्चतुर्थी । प्रियाशब्दे "इगुपधज्ञाप्रीकिर कः" इति प्रीञ् धातोः क । निवेद्य-निपूर्वाद् विद्धातो हेतुमरिणच्, तदन्तात् क्त्वा, ल्यप् च ।

व्याख्या—प्रसन्नेन्दु निष्कलङ्कश्चन्द्र, स इव मुख यस्य तथाभूत, नृपाणाम्-राज्ञाम्, गुरु -शासको दिलीप, प्रहर्षस्य-प्रसन्नताया, चिह्नै -लक्षणै, अनुमितम्-ऊहितम्, तस्या. नन्दिन्या, प्रसादम वरप्रदानलक्षणा कृपाम्, पुनरुक्तयेव कथितानुवादरूपयेव, वाचा, गुरवे वशिष्ठाय, निवेद्य विज्ञाप्य, पश्चात्, प्रियायै दयितायै सुदक्षिणायै, शशस आख्यातवान् ।

भा०—मुखे चन्द्रवदुज्ज्वला लक्ष्मीं दधत् स दिलीपो नन्दिन्या वरदानवृत्त पूर्वं वसिष्ठाय पश्चात् सुदक्षिणायै च सूचितवान् । परन्तु तस्य तत्सूचन पिष्टपेषणवज्जातम् । यतो वशिष्ठ' सुदक्षिणा च दिलीपकथनात्पूर्वमेव मुखप्रमोदेन तद्वृत्तमन्वमिनुताम् ।

अल०—प्रसन्नेन्दुमुख इत्यत्र लुप्तोपमा । अपुनरुक्तस्य पुनरुक्तत्वेन सम्भावनादुत्प्रेक्षा । हर्षो व्यङ्ग्य ।

**स नन्दिनीस्तन्यमनिन्दितात्मा सद्वत्सलो वत्सहुतावशेषम् ।**
**पपौ वसिष्ठेन कृताभ्यनुज्ञ शुभ्र यशो मूर्तमिवातितृष्ण ॥६९॥**

अ०—अनिन्दितात्मा सद्वत्सल वसिष्ठेन कृताभ्यनुज्ञ स वत्सहुतावशेषम् नन्दिनीस्तन्यम् शुभ्रम् मूर्तम् यशइव अतितृष्ण. ( सन् ) पपौ ।

व्याक०—न निन्दित आत्मा यस्य ( बहु० ) सोऽनिन्दितात्मा, निन्दित इति निन्दते क्त । सत्सु मता वा वत्सल सद्वत्सल । वत्सल इति "वत्सांसाभ्या कामबले" इति वत्सशब्दाल्लच् । कृता अभ्यनुज्ञा यस्मै स कृताभ्यनुज्ञ, वत्सश्च हुतञ्च वत्सहुते ( द्वन्द्व ) तयोरवशेष वत्सहुतावशेषम्, वत्सपदं लाक्षणिकम्, हुतमिति जुहोते कर्मणि क्त । अवशेष -शिष्लृ धातोः कर्मणि घञ् । वसिष्ठेन-करोते कर्तरि तृतीया । अतिशयिता तृष्णा यस्य सोऽतितृष्णः, "गोस्त्रियोरुपसर्जनस्य" इत्युपसर्जनत्वाद् ह्रस्व । स्तन्यम्-स्तनशब्दात् "शरीरावयवाद्यत्" । पपौ-पा पाने इत्यस्माल्लिटि । मूर्तम् मूर्छते क्त, "राल्लोपः" इति

च्ललोप ।

व्याख्या—अनिन्दित'-अविगर्हित , आत्मा स्वभावो यस्य तथाभूत , सत्सु-साधुपुरुषेषु, वत्सल -प्रेमवान्, वशिष्ठेन, कृता-विहिता, अभ्यनुज्ञा-अनुमति यस्मै तथोक्त., सः राजा, वत्सस्य-वत्सपीतस्य, हुतस्य-होमोपयुक्तस्य च, अवशेषम्-अवशिष्टम्, नन्दिन्याः एतन्नामिकाया मुनिहोमधेनो , स्तन्यम्-क्षीरम्, शुभ्रम-स्वच्छम्, मूर्तम्-आकारधारि, यशइव-कीर्तिमिव, अति-अतिशयिता, तृष्णा-लालसा यस्य तथाभूत सन्, पपौ-पीतवान् ।

भा०—दिलीप. स्वगुरोर्वसिष्ठस्याभ्यनुज्ञा प्राप्य वत्सपीतादग्निहोत्रहोमार्थाच्चावशिष्ट नन्दिन्या पयोऽतितृष्णया पपौ। यथास्य यशसि नितरा तृष्णा, तथैव श्वेततया यश.सदृशे प्रसादभूते तस्मिन् पयस्यपि बभूव। विशिष्ट कर्म सम्पाद्य तत्फलभूत यशइवेदं पयोऽनेन प्राप्तमित्यपि यश माहात्म्यमभिसन्धेयम् । तेन तत्पयो यशस्त्वेन सम्भावितम् ।

अल०—छेकानुप्रासलाटानुप्रासौ शब्दालङ्कारौ । दुग्धस्य मूर्तिमद्यश-स्त्वसम्भावनादुत्प्रेक्षा । अनया चोत्प्रेक्षया जनिष्यमाणदिलीपपुत्रस्य यशस प्राचुर्यं व्यज्यते। यशःपानजन्यस्य यशस्वित्वौचित्यात् । राजगतो हर्षश्च व्यङ्ग्यः ।

**प्रातर्यथोक्तव्रतपारणान्ते प्रास्थानिक स्वस्त्ययन प्रयुज्य ।**
**तौ दम्पती स्वा प्रति राजधानी प्रस्थापयामास वशी वशिष्ठ ॥७०॥**

अ०—वशी वशिष्ठ॰ प्रातः यथोक्तव्रतपारणान्ते प्रास्थानिकम् स्वस्त्ययनम् प्रयुज्य तौ दम्पती स्वाम् राजधानीम् प्रति प्रस्थापयामास ।

व्याक०—उक्तमनतिक्रम्य यथोक्तम् ( अव्ययी० ) तच्च तद्व्रत च, ( कर्म० ) तस्य पारणाया अन्ते यथोक्तव्रतपारणान्ते । ईयते प्राप्यते नेनेत्ययनम्, एतेः करणे ल्युट्, स्वस्ति-अयनम्-स्वस्त्ययनम् । जाया च पतिश्च दम्पती। राजदन्तादिषु निपातनाद् जायाशब्दस्य दंभाव । राजधानी-धीयतेऽस्यामिति धानी "करणाधिकरणयोश्च" इति दधाते॰ अधिकरणे ल्युट्। टित्त्वान्ङीप् । राज्ञो धानी राजधानीम् । "अभित परित समयानिकषाहाप्रति-योगेऽपि" इत्यनेन प्रतियोगे द्वितीया । प्रास्थानिकम्-प्रस्थानकाले भवमिति

विग्रहे प्रस्थानशब्दस्य लक्षणया तत्कालवाचकत्वात् "कालाठञ्" । प्रयुज्य-प्रपूर्वाद्युनक्ते क्त्वा, ल्यप् च । प्रस्थापयामास तिष्ठतेर्णिजन्ताल्लिटि रूपम् । वसिष्ठ प्रयोजककर्ता, दम्पती च प्रयोज्यकर्तारौ "अर्तिही · · " इति पुगागम । अस्तेरनुप्रयोग ।

व्याख्या — वशी जितेन्द्रियः, वशिष्ठ., प्रात· प्रभाते, यथोक्तम् पूर्वोक्तम्, व्रतम्-गोसेवारूपनियम, तस्य पारणा समापनम्, तस्या अन्ते अवसाने, व्रतसमाप्तावावश्यकेषु ब्राह्मणभोजनादिषु सपन्नेष्विति यावत्, प्रास्थानिकम्-प्रस्थानकालोचितम्, स्वस्त्ययनम् शुभावहमाशीर्वादम्, प्रयुज्य विधाय, तौ, दम्पती-जायापती, सुदक्षिणादिलीपौ, स्वाम्-स्वकीयाम्, राजधानीम्-राजावासनगरीं प्रति, प्रस्थापयामास-प्रेषयति स्म ।

भा०—प्रभाते यदा सुदक्षिणादिलीपौ पारणा विहितवन्तौ, तदा वसिष्ठो मार्गविघ्नपरिहाराय प्रस्थानकालोचित स्वस्तिवाचन विधाय तौ तदीया राजधानी प्रति प्रेषयति स्म ।

अल—वशी-वशिष्ट इति यमकम् । स्वामिति राजधानीविशेषण प्रस्थानौचित्य व्यनक्तीति परिकर· ।

**प्रदक्षिणीकृत्य हुत हुताशमनन्तरं भर्तुररुन्धतीं च ।**
**धेनु सवत्सा च नृप प्रतस्थे सन्मङ्गलोदग्रतरप्रभाव ॥७१॥**

अ०—नृप हुतम् हुताशम् च भर्तु अनन्तरम् अरुन्धतीम् च सवत्साम् धेनुम् प्रदक्षिणीकृत्य सन्मङ्गलोदग्रतरप्रभाव ( सन् ) प्रतस्थे ।

व्याक०—हुतमश्नातीति हुताशस्तम्, "कर्मण्यण्", वत्सेन सह वर्तमाना सवत्साम् "तेन सहेति तुल्ययोगे" इति बहुव्रीहि. । "वोपसर्जनस्य" इति सहस्य सादेश । सता मङ्गलेन ( कर्म० ) उदग्रतर प्रभावो यस्य ( बहु० ) स सन्मङ्गलोदग्रतरप्रभाव । उदग्रतर इति उदग्रशब्दात्तरप् । प्रदक्षिणीकृत्य प्रगतो दक्षिणमिति प्रदक्षिणम् "तिष्ठद्गुप्रभृतीनि च" इत्यव्ययीभावः । तत कृञो योगे च्वि, "ऊर्यादिच्विडाचश्च" इति गतिसञ्ज्ञा, "कुगतिप्रादय·" इत्यनेन समास । हुताशादीनि प्रदक्षिणीकरणे कर्माणि । भर्तु भरतेस्तृच् । नृप-नॄन् पातीति "आतोऽनुपसर्गे कः" । प्रतस्थे प्रपूर्वात्तिष्ठतेलिट् "समवप्र-

विभ्य. स्थ." इत्यात्मनेपदम् ।

व्याख्या—नृप -राजा दिलीप , हुतम्-दत्ताहुतिम्, हुताशम्-अग्निम्, च पुन॰, भर्तु -पत्यु -मुने., अनन्तरम्-पश्चात्, अरुन्धतीम्-वसिष्ठपत्नीम्, च-पुन , सवत्साम्-वत्सेन सहिताम, धेनुम्-नन्दिनीम्, प्रदक्षिणीकृत्य, सता शोभनेन प्रदक्षिणादिना, मङ्गलेन मङ्गलाचरणेन, उदग्र -उत्कृष्टतर॰, प्रभाव -तेजोविशेषो यस्य तथाभूत सन्, प्रतस्थे-प्रस्थितवान् ।

भा०—राजा दिलीप क्रमशो वह्निम्, वसिष्ठम्, तत्पत्नीमरुन्धतीम्, सवत्सा धेनु च प्रदक्षिण परिक्रम्याश्रमात् स्वा पुरीं प्रति प्रस्थान चक्रे । तदानीं प्रतिष्ठमानस्य तस्य तेजः पूज्यपरिक्रमणस्वस्तिवाचनादिना मङ्गलाचारेणात्युत्कृष्टमभूत् ।

अल०—लाटानुप्रासः, वशिष्ठप्रदक्षिणाया भङ्ग्यन्तरेण बोधनात्पर्यायोक्तमपि कथंचित् । प्रभावजनने सर्वेषा प्रदक्षिणाया हेतुत्वविवक्षाया समुच्चय. । देवगुर्वादिभक्ति , कर्तव्यश्रद्धा च राजगता व्यङ्ग्या ।

**श्रोत्राभिरामध्वनिना रथेन स धर्मपत्नीसहित सहिष्णु. ।**
**ययावनुद्धातसुखेन मार्गं स्वेनेव पूर्णेन मनोरथेन ॥७२॥**

अ०—धर्मपत्नीसहित. सहिष्णुः स श्रोत्राभिरामध्वनिना अनुद्धातसुखेन पूर्णेन स्वेन मनोरथेनेव रथेन मार्गम् ययौ ।

व्याक०—श्रोत्रयोरभिराम॰ ( तत्पु० ) ध्वनिर्यस्य ( बहु० ) तेन श्रोत्राभिरामध्वनिना । अभिराम इति अभिरम्यतेऽस्मिन्नित्यभिराम "हलश्च" इति घञ् । अथवा "अकर्तरि च कारके सज्ञायाम्" इत्यत्र सज्ञायामित्यस्य प्रायिकत्वाद् अभिरम्यतेऽनेनेति करणे घञ् । ध्वनि.-"इक् कृष्यादिभ्य " इति ध्वनतेरिक् प्रत्ययः । उद्धन्यते-इत्युद्धातः, नोद्धातोऽनुद्धात., स चासौ सुखश्चेत्यनुद्धातसुखस्तेन, उद्धात इति हन्तेर्घञ्, "हनस्तोऽचिण्णलो " इति नस्य त. । सुखयतीति सुख , सुखशब्दात् "तत्करोति तदाचष्टे" इति णिच्, तदन्तात् पचाद्यच् । सहिष्णु -सह धातो "अलकृञ् निराकृञ् . " इत्यादिनेष्णुच् प्रत्यय । सहित -संपूर्वाद्धाधातो क्त. । "दधातेर्हि " इति हि., "लुम्पेदवश्यमः कृत्ये तुं काममनसोरपि । समो वा हिततततयो "

इत्यादिश्लोकवार्तिकेन समो वैकल्पिको मलोप । पूर्ण.-पूरयतेनिष्ठाया " वादान्तशान्तपूर्ण " इत्यादिना वैकल्पिक इडभावो निपात्यते ।

व्याख्या—धर्मपत्न्या-सुदक्षिणया, सहितः-युक्त, सहिष्णु व्रतादिदु.ख सहनशील, स -नृप., श्रोत्रयो -कर्णयो, अभिराम -आह्लादकर, ध्वनिः-स्वन, यस्य तथाभूतेन, मनोरथपक्षे तु कर्णाह्लादकरः, ध्वनि.-श्रवणम्, यस्य तथाभूतेन, अनुद्घात -मृत्पाषाणादिप्रतिवन्धरहित, अत एव सुख. सुखकर, तथाविधेन, मनोरथोऽपि पुत्रप्राप्तिलक्षण. प्रतिवन्धरहितो जात इति सुखकरः, पूर्णेन-रथपक्षे मार्गापेक्षितसकलवस्तुपरिपूर्णेन, मनोरथपक्षे च सम्पन्नता प्राप्तेन, स्वेन-स्वकीयेन, मनोरथेनेव-मनोभिलाषसदृशेन, रथेन-यानेन, मार्गम्-अध्वानम्, ययौ-जगाम ।

भा०—दिलीप -सुदक्षिणया सह रथमारुह्य जगाम । स रथ. पुत्रप्राप्ति-लक्षणस्वीयमनोरथसदृशोऽभूत्। यत रथस्य ध्वनिः कर्णयो सुखकर., मनो-रथस्य श्रवणमात्रमपि कर्णसुखदम्, किं च स रथो विशिष्टतया मार्गे न प्रति-हन्यते इति सुखकरोऽभवत्, मनोरथोऽपि प्रतिवन्धरहितो जात इति सुखकर । रथ सामग्रीभि पूर्ण, मनोरथोऽपि पूर्ण सम्पन्न इति। यस्य मनोरथः पूर्णो भवति, त मार्गश्रमो न वाधते, हर्षेणोल्लसित. सोऽनायास गच्छतीति पूर्णस्य मनोरथस्यापि रथस्येव गमनसाधनत्वमभिसहित कविना ।

अल—रथमनोरथयोरुपमा पूर्णा । राज्ञो हर्षोल्लासो व्यङ्ग्य ।

**तमाहितौत्सुक्यमदर्शनेन प्रजा' प्रजार्थव्रतकर्शिताङ्गम् ।**
**नेत्रै. पपुस्तृप्तिमनाप्नुवद्भिर्नवोदय नाथमिवौषधीनाम् ॥ ७३ ॥**

अ०—प्रजाः अदर्शनेन आहितौत्सुक्यम् प्रजार्थव्रतकर्शिताङ्गम् नवोद-यम् ओषधीनाम् नाथमिव तम् तृप्तिम् अनाप्नुवद्भि नेत्रै पपु ।

व्याक०—उत्सुकस्य भाव, औत्सुक्यम् " गुणवचनब्राह्मणादिभ्य कर्मणि च " इति ष्यञ् । आहितमौत्सुक्य येन तमाहितौत्सुक्यम्, आहितम्-दधाते क्त, हिरादेश । प्रजायै इति प्रजार्थम्, तच्च तद् व्रतम्, ( कर्म० ) तेन कर्शितम् ( त० ) अङ्ग यस्य ( बहु० ) त प्रजार्थव्रतकर्शिताङ्गम् । नव उदयो यस्य त नवोदयम् । उदय-इति " एरच् " । आप्नुवन्-आप्नोते शतृ-

प्रत्यय । "स्वादिभ्य श्नु." उवङ् च । नेत्रम्-"दाम्नीशस्युयुज् .. .." इत्यनेन करणे ष्ट्रन् ।

व्याख्या—प्रजा, अदर्शनेन-प्रवासनिमित्तेन, चन्द्रपक्षे कलाक्षयनिमित्तेन च, अनवलोकनेन, ( करणभूतेन ) आहितम्-जनितम्, औत्सुक्यम्-उत्कण्ठा, येन तथाभूतम्, प्रजार्थम्-सन्तानार्थम्, चन्द्रपक्षे लोकहितार्थम्, यद् व्रतम्-गोसेवारूपनियम, चन्द्रपक्षे-देवताभ्य. कलादाननियम, तेन कर्शितम्-क्षीणम्, अङ्गं यस्य तथाभूतम्, नवः-अभिनव, उदय पुत्रप्राप्तिवरलक्षणोऽभ्युदयो यस्य तथाभूतम्, चन्द्रपक्षे-नव उदयः द्वितीयाया नवीन प्रादुर्भावो यस्य तथाभूतम्, अत एव ओषधीना नाथम्-चन्द्रमिव स्थितम्, तम् दिलीपम्, तृप्तिम् तृष्णाशान्तिम्, अनाप्नुवद्भिः अलभमानै अतिगृध्नुभिरिति यावत् नेत्रै.-चक्षुर्भि, पपुः-अतिलालसया ददृशुरिति ।

भा०—पुरवासिनश्चिराददर्शनेन दिलीप द्रष्टु नितरामुत्कण्ठिता आसन्, अत एव स पुत्रप्राप्तिवरदानरूप नवमभ्युदयं प्राप्य यदा स्वपुरं प्रविवेश, तदा तेऽत्यादरेण तं ददृशु. । तस्य शरीर तदा सन्तानार्थं कृतेन व्रतेन कृशमासीत् । स दिलीपस्तदानीमेवमशोभत, यथा लोकहितार्थं स्वाः कला देवेभ्यो दत्त्वा क्षीणो नवोदितो द्वितीयाचन्द्र । ओषधीना नाथमित्युक्त्या चन्द्रस्य सोमरूपता ध्वन्यते । तेन च देवपानयोग्यता । देवाः कृष्णपक्षे चन्द्रकला पिबन्ति, तेन च वृष्ट्यादि लोकहितं जायते इति पुराणोक्ति * ।

अल०—उपमा, प्रजाः प्रजा इति लाटानुप्रासश्च । 'पपु' इति पदस्य उत्कण्ठया दर्शने लक्षणा, उत्कण्ठातिशयो व्यङ्ग्य इत्यविवक्षितवाच्यो ध्वनि. । राजविषयक प्रजागतो रतिभाव प्राधान्येन व्यङ्ग्य ।

**पुरन्दरश्री पुरमुत्पताकं प्रविश्य पौरैरभिनन्द्यमान. ।**
**भुजे भुजङ्गेन्द्रसमानसारे भूय. स भूमेर्धुरमाससञ्ज ॥७४॥**

अ०—पुरन्दरश्री. स पौरै. अभिनन्द्यमान. ( सन् ) उत्पताकम् पुरम् प्रविश्य भुजङ्गेन्द्रसमानसारे भुजे भूय. भूमे धुरम् आससञ्ज ।

व्याक०—पुरो दारयतीति पुरन्दर "पू सर्वयोर्दारिसहो" इति खच्,

* तं च सोम पपुर्देवा. पर्यायेणानुपूर्वशः इति पुराणम् ।

"वाचयमपुरन्दरौ च" इति निपातनात् पुरशब्दस्यामन्तत्वम्, तस्येव श्रीर्यस्य स पुरन्दरश्रीः, लाक्षणिकपूर्वपदो वहुव्रीहिः। ऊर्ध्वाभूता पताका यस्मिंस्तद् उत्पताकम् । भुजङ्गानामिन्द्रेण (तत्पु०) समान (तत्पु०) सारो यस्य (वहु०) तस्मिन् भुजङ्गेन्द्रसमानसारे । भुजङ्ग इति भुजोपपदाद् गच्छते "गमे सुपि वाच्य" इति खच्, "खच्च डिद्वा वाच्य" इति डित्त्वाट्टिलोप । पौरै पुरे भवा पौरा, पुरशब्दाद् भवार्थकोऽण्, अभिनन्दन-कर्तरि तृतीया । अभिनन्द्यमान अभिपूर्वान्नन्दतेः कर्मणि लट्, तस्य लक्षणेऽर्थे शानजादेशः । "सार्वधातुके यक्" इति यक् । आससञ्ज-सजतेर्लिट् ।

व्याख्या—पुरन्दरस्य इन्द्रस्येव, श्री लक्ष्मीर्यस्य, तथाभूतः, सः-दिलीप, पौरै नगरवासिभि., अभिनन्द्यमानः-क्रियमाणस्वागतः सन्, उत्पताकम्-उच्छ्रितध्वजम्, पुरम् नगरम्, राजधानीम्, प्रविश्य, भुजङ्गेन्द्रेण सर्पराजेन, शेषनागेनेति यावत्, समानः, *सार-वल यस्य तथाभूते भुजे-वाहौ, भूय.-पुन, भूमे पृथिव्या, धुरम्-भारम्, राज्यशासनसूत्रमिति यावद्, आससञ्ज-स्थापितवान्, जग्राहेति भाव ।

भा०—दिलीपो यदा पुर प्रविवेश, तदानीं तत्र पौराणा भवनेषूत्सवार्थं राष्ट्रियपताका उदडीयन्त । नगरवासिनश्च तस्याभिनन्दनं चक्रु । अथ स पूर्वं गुरोराश्रम गच्छता मन्त्रिणा हस्ते समर्पितं राज्यभारं पुन स्वहस्तगतमकरोत्।

अल०—पुरशब्दावृत्त्या भुजशब्दावृत्त्या च लाटानुप्रासः । भूयो भूमेरित्यादौ वृत्त्यनुप्रासश्च । पुरन्दरश्री इति 'मृगलोचना' इत्यादिवत् समासगा त्रिलुप्तोपमा । भुजङ्गेन्द्रसमानसारे-इति तुल्यपर्यायसमानशब्दोपादाना दार्था समासगोपमा धर्मलुप्ता । भुजङ्गेन्द्रभुजसारयोरुपमया भुजङ्गेन्द्रभुजयोरुपमा व्यङ्ग्या, तथैव पुरन्दरराज्ञोरपि । भुजङ्गेन्द्रसमानसारे इति च भुजे भूमिधूर्व-हत्वयोग्यता प्रकाशितेति परिकर ।

अथ नयनसमुत्थं ज्योतिरत्रेरिव द्यौः
सुरसरिदिव तेजो वह्निनिष्ठ्यूतमैशम् ।

* सारो वले स्थिरांशे च—इत्यमर. ।

नरपतिकुलभूत्यै गर्भमाधत्त राज्ञी
गुरुभिरभिनिविष्टं लोकपालानुभावैः ॥ ७५ ॥

इति महाकविकालिदासकृते रघुवंशे महाकाव्ये नन्दिनीवरप्रदानो नाम द्वितीयः सर्गः ।

अ०—अथ द्यौरिव अत्रेः नयनसमुत्थम् ज्योतिः, सुरसरिदिव वह्निनिष्ठ्यूतम् ऐशम् तेजः, राज्ञी नरपतिकुलभूत्यै गुरुभिः लोकपालानुभावैः अभिनिविष्टम् गर्भम् आधत्त ।

व्याक०—नयनयोः समुत्थं नयनसमुत्थम्, समुत्थमिति तिष्ठतेः "आतश्चोपसर्गे" इति कर्तरि कप्रत्ययः । वह्निना निष्ठ्यूतम्, वह्निनिष्ठ्यूतम्, "कर्तृकरणे कृता बहुलम्" । निष्ठ्यूतम् निपूर्वात् 'ष्ठिवु' धातोः क्तः, "च्छ्वोः शूडनुनासिके च" इत्यनेनोठ् । ऐशम् ईशशब्दाच्छैषिकोऽण् । राज्ञी राजन्शब्दान्नान्तत्वाद् ङीप् । भूत्यै-भवतेः क्तिन्, तादर्थ्ये चतुर्थी । अनुभाव इति भवतेर्भावे घञ् । अभिनिविष्टम्-'अभि' 'नि' एतत्पूर्वाद्विशतेः क्तः, व्रश्चेति षत्वम्, ष्टुत्वम् ।

व्याख्या—अथ-राज्ञो राज्यभारग्रहणानन्तरम्, द्यौरिव-सुरलोको यथा, अत्रेः एतत्सञ्ज्ञकस्य महर्षेः, नयनयोः नेत्रयोः, समुत्थम्-उत्पन्नम्, ज्योतिः तेजः, * चन्द्रमिति यावत्, सुरसरिदिव-गङ्गेव, वह्निना † निष्ठ्यूतम्-विक्षिप्तम्, ऐशम्-महादेवसम्बन्धि, तेजः वीर्यम्, ‡ स्कन्दमिति यावद्, राज्ञी-सुदक्षिणा,

---

* नेत्राभ्यां वारि सुस्राव दशधा द्योतयद्दिशः । तद् गर्भविधिना हृष्टा दिशो देव्यो दधुस्तदा । समेत्य धारयामासुर्न च ते समशक्नुवन् । स ताभ्यः सहसैवाथ दिग्भ्यो गर्भः प्रभान्वितः । पपात भासयँल्लोकान् शीतांशुः सर्वभावनः, इति चन्द्रस्याऽत्रिनेत्रोद्भूतत्वकथा हरिवंशे द्रष्टव्या ।

† सुतनुत्रास्तनिष्ठ्यूतविद्धक्षिप्तेरिताः समाः—इत्यमरः ।

‡ ते गत्वा पर्वतं राम कैलासं धातुमण्डितम् ।
अग्निं नियोजयामासुः पुत्रार्थे सर्वदेवताः ॥ १ ॥
देवकार्यमिदं देव समाधत्स्व हुताशन ।

नरपते दिलीपस्य, कुलम् वंश., तस्य भूत्यै विवृद्धये, गुरुभि महद्भिः, लोकपालानाम्-इन्द्रवरुणयमकुबेराद्यष्टदिक्पालानाम्, अनुभावैः तेजोभि., अभिनिविष्टम् अनुप्रविष्टम्, अनुगतमिति यावद्, गर्भम्, आधत्त-धृतवती । आङ्पूर्वको धा-धातुर्यद्यपि स्थापने विशेषेण प्रयुज्यते, 'पुरुषः स्त्रिया गर्भमाधत्ते' इति हि व्यवहार, तथाप्यत्र धारणेऽर्थ एव प्रयुक्तः, 'एव त्व गर्भमाधेहि दशमे मासि सूतवे' इत्यादौ धारणार्थोऽपि व्यवहृत एवेति ।

भा०—किञ्चिद्दिनानन्तर दिलीपकुलविवृद्धये सुदक्षिणा गर्भं दधार, तत्रोपमा-यथात्रिमहर्षेर्नेत्रयोरुत्पन्नं चन्द्ररूप तेजो द्युलोको धत्ते, यथा वा वह्निना क्षिप्त महादेवस्य कार्तिकेयरूपं ज्योतिर्गङ्गा दधार, तथेति । पूर्व पार्वत्या तदनु वह्निना पुनर्गङ्गादिभिर्भगवत शङ्करस्य वीर्यं धृतमिति षाण्मातुरस्य कार्तिकेयस्योत्पत्तिकथा द्रष्टव्या । किं च यतस्तद्गर्भजात एव बालको राजपदमारोक्ष्यति, अत एव 'अष्टाना लोकपालाना वपुर्धारयते नृप' इति मनुवचनानुसारेण इन्द्राद्या अष्टौ दिक्पालास्त गर्भं स्वस्वांशैरनुजग्मु ।

अल०—मालोपमा । जनिष्यमाणस्य शिशोश्चन्द्रादिसादृश्य व्यङ्ग्यम् । मालिनी छन्द॰ । इत्थ फलप्राप्तिं वर्णयित्वा सर्ग समाप्तिं नीत ।

इति च्छात्रोपकारिण्या व्याख्याया प्रथम सर्ग ।

---

शैलपुत्र्या महातेजो गङ्गाया तेज उत्सृज ॥ २ ॥
देवताना प्रतिज्ञाय गङ्गामभ्येत्य पावक ।
गर्भं धारय वै देवि ! देवतानामिद प्रियम् ॥ ३ ॥
इत्येतद्वचन श्रुत्वा दिव्य रूपमधारयत् ।
स तस्या महिमा दृष्ट्वा समन्तादवकीर्य च ॥ ४ ॥
समन्ततस्तु ता देवीमभ्यसिञ्चत पावकः ।
सर्वस्रोतांसि पूर्णानि गङ्गाया रघुनन्दन ॥ ५ ॥
इति रामायणे श्रीवाल्मीकीये स्वामिकार्तिकेयोत्पत्तिकथा द्रष्टव्या ।

# महाकाव्य-संग्रहः ।

## ( संग्रहे द्वितीयः, रघुवंशे त्रयोदशः सर्गः )

कथासम्बन्ध —दिलीपपुत्रस्य रघोर्महाराजस्य वंशे साक्षाद्भगवान्नारायणो रावणत्रासितानां देवानां प्रार्थनया रामरूपेणावततार । सोऽयं भगवान् पितुराज्ञया राज्यं परित्यज्य वनं गतो वनाद्भार्यां भगवतीं सीतामपहृतवन्तं रावणं सकुटुम्बं युद्धे जघान, तद्भ्रातरं च स्वशरणागतं विभीषणं शरण्यो लङ्काराज्ये ऽभिषिषेच । अथ भार्यया सीतया, लक्ष्मणेन, सुहृदा वानरराजेन सुग्रीवेण, तदनुयायिभिरन्यैर्वानरपुङ्गवैर्विभीषणेन च सत्कारार्थमनुगच्छता सह पुष्पकं विमानमारुह्य स्वपुरीमयोध्यां प्रति प्रतस्थे इति द्वादशसर्गस्यान्तः । तदुत्तरं वृत्तमुच्यते ।

**अथात्मनः शब्दगुणं गुणज्ञः पदं विमानेन विगाहमानः ।**
**रत्नाकरं वीक्ष्य मिथः स जायां रामाभिधानो हरिरित्युवाच ॥ १ ॥**

अ०—अथ गुणज्ञः रामाभिधानः हरिः शब्दगुणम् आत्मनः पदम् विमानेन विगाहमानः ( सन् ) रत्नाकरम् वीक्ष्य मिथः जायाम् इति उवाच ।

व्याक०—राम इत्यभिधानं यस्य स रामाभिधानः । अभिधानमिति, अभिधीयतेऽनेनेति विग्रहे धाधातोर्ल्युट् । आकरमिति आङ्पूर्वात् किरतेः " पुंसि सञ्ज्ञायां घः प्रायेण " इत्यधिकरणे घः । गुणज्ञ-इति ज्ञाधातोः "इगुपधज्ञाप्रीकिरः कः" इति कप्रत्ययान्तस्य ज्ञशब्दस्य गुणशब्देन षष्ठ्यन्तेन समासः । अथवा गुणान् जानातीति विग्रहे " आतोऽनुपसर्गे कः " । विगाहमानः विपूर्वाद्गाहतेर्लक्षणे शानच् । पदमिति विगाहने कर्म, रत्नाकरमिति वीक्षणे । जायामिति, इतिशब्दसूचितवक्ष्यमाणवाक्यार्थसमूहश्चेति वचने कर्मद्वयम् ।

व्याख्या—अथ अयोध्यां प्रति प्रस्थानानन्तरम्, गुणानाम् वर्णनीय-समुद्रसम्बन्धिमहत्त्वादीनाम्, ज्ञः-अभिज्ञः, सः पूर्वोक्तः, रामाभिधानः-रामनाम्ना

प्रसिद्धः, हरि विष्णु, शब्दो गुणो यस्य तथाभूतम्, शब्दाश्रयम् आत्मन स्वस्य, विष्णो, ‡ पदम्-चरणम्, विष्णुपदमिति प्रसिद्ध-माकाशमिति यावद् विमानेन पुष्पकाख्येनाकाशचारिणा यानेन, विगाहमान - अतिक्राम्यन् सन्, रत्नाकरम् समुद्रम्, वीक्ष्य-विलोक्य, जायाम् पत्नीम्, सीताम् मिथ -रहसि, इति-वक्ष्यमाणम्, उवाच ।

भा०—अथ भगवान् रामचन्द्रो वियति पुष्पकेण गच्छन् समुद्रोपरि प्राप्त प्रियया सीतया विश्रम्भगोष्ठीविनोदमिच्छन्, ता समुद्र प्रदर्शयन्नेवमाह ।

अल०—गुणशब्दावृत्त्या लाटानुप्रास। । आकाशमिति वक्तव्ये शब्द-गुणमात्मन पदमिति कथनेन ' पदार्थे वाक्यरचनमिति ' लक्षित ओजोगुण. । रामस्य हरिपदेनाभिधान तस्य सर्वातिशायिमहिमस्मारणेन तद्वचस्यादरातिशयाय आकाशेन पदत्वरूपसम्बन्धख्यापनाय च । पदस्य चावगाहनकरणतया प्रथितस्यावगाहनकर्मत्वोक्त्या विरोधालङ्कृति । किं च शब्दगुण स्थान योऽधितिष्ठति, तच्चाप्यात्मीयम्, अधिष्ठाता चापि गुणज्ञ इति तस्य शब्दप्रवृत्तेरौचित्यमावेदयन्ति विशेषणानि साभिप्रायाणीति पारकर । गुणज्ञ एव गुणान् वर्णयितु समर्थइत्यपि साभिप्रायत्व विभाव्यम् ।

**वैदेहि पश्यामलयाद् विभक्त मत्सेतुना फेनिलमम्बुराशिम् ।**
**छायापथेनेव शरत्प्रसन्नमाकाशमाविष्कृतचारुतारम् ॥ २ ॥**

अ०—( हे ) वैदेहि । आ मलयाद् म सेतुना विभक्तम् फेनिलम् अम्बु-राशिम् छायापथेन ( विभक्तम् ) शरत्प्रसन्नम् आविष्कृतचारुतारम् आकाशमिव पश्य ।

व्याक०—आ मलयाद्-" आङ् मर्यादावचने " इत्यनेन आङ कर्म-प्रवचनीयत्वम्, " पचम्यपाङ्परिभि " इत्यनेन पञ्चमी । छायाया पन्था छायापथ., तेन छायापथेन " ऋक्पूरब्धू. पथामानक्षे " इत्यप्समासान्त । शरदा प्रसन्न शरत्प्रसन्नम् । आविष्कृता चारव तारा यस्मिन्, तदाविष्कृत-चारुतारम्, वैदेहि विदेहशब्दादपत्यार्थे " तस्यापत्यम " इत्यण्, अणन्ताद् ङीप्, सम्बुद्धौ " अम्बार्थनद्योर्ह्रस्व " । फेनिल " फेनादिलच " इति

* नियोऽन्योऽन्य रहस्यपि—इत्यमर ।

फेनशब्दान्मत्वर्थाय इलच् । प्रसन्नम्-सीदतेर्निष्ठा, ' रदाभ्याम् '' इति दत-योर्नत्वम् ।

व्याख्या—हे वैदेहि हे सीते ! आमलयाद्-मलयाचलपर्यन्तम्, मद्र-चितेन सेतुना, ( मध्यस्थितेन ) विभक्तम्-द्विधाकृतम्, फेनिलम्-फेनयुक्तम्, अम्बुराशिम्-समुद्रम्, छायापथेन-छायापथो नाम गगने नक्षत्रसमूहमध्यवर्ता कश्चित्तिरश्चीनो मार्ग, तेन विभक्तम्, शरदा शरदृतुना, प्रसन्नम् स्वच्छम्, आविष्कृता -प्रकटिता, चारव -शोभना, तारा -ज्योतींषि यस्मिंस्तथाभूतम्, आकाशमिव-आकाशसदृशम्, पश्य ।

भा०—हे सीते ! इमं जलनिधि पश्य, य एष मलयाचलपर्यन्त मया निर्मापितेन महता सेतुना मध्यस्थितेन द्वयोर्भागयोर्विभक्त इव निरतिशय फेना-यमानश्च तथा शोभते, यथा मध्ये तिष्ठता छायापथेन विभक्त शरदि निर्मल तारकितं नभ ।

अल०—उपमा । स्वच्छनीलवर्णेनाकाशसमुद्रयो सादृश्यम्, छायापथ-स्थानीयोऽत्र सेतु, तारकाचक्रस्थानीयश्च फेनसमह इति । समुद्रविभाजकत्वेन सेतोर्महत्त्वं व्यज्यते । तेन च ' त्वदर्थमियान् प्रयास ' इति प्रेमनिवेदने तात्पर्यम् ।

गुरोर्यियक्षो कपिलेन मेध्ये रसातल संक्रमिते तुरङ्गे ।
तदर्थमुर्वीमवदारयद्भि पूर्वै किलायं परिवर्धितो न ॥ ३ ॥

अ०—यियक्षो गुरो मेध्ये तुरङ्गे कपिलेन रसातलम् संक्रमिते ( सति ) तदर्थम् उर्वीम् अवदारयद्भि न पूर्वै अयम् परिवर्धित, किल ।

व्याक०—तस्मै इति तदर्थम् । यियक्षो -यष्टुमिच्छतीति विग्रहे यजते " धातो कर्मण. समानकर्तृकादिच्छाया वा " इति सन्, सन्नन्ताद् उप्रत्ययः । मेध्ये-इति मेधशब्दादर्हार्थे यत् प्रत्यय. । संक्रमिते-सम्पूर्वाण्णिजन्तात् क्रमुधातो कर्मणि क्त, णिचि मित्त्वाद् ह्रस्वः । तुरङ्ग प्रयोज्यकर्ता " गतिबुद्धि " इति कर्मत्व गत सामानाधिकरण्येन निर्दिष्ट । कपिल प्रयोजककर्ता । अवदारयद्भि -णिजन्ताद् ' दृ विदारणे ' धातो शतृप्रत्यय । उर्वी प्रयोज्यकर्त्री कर्मता गता । परिवर्धित -णिजन्ताद्

' वृधु वर्धने ' धातो क्त , समुद्र॰ प्रयोज्यकर्ता, प्रयोजका पूर्वे ।

व्याख्या—यियक्षो -अश्वमेधेन यष्टुकामस्य, गुरो -पूज्यस्य पितु सगरस्य, मेध-यज्ञमर्हतीति मेध्यस्तस्मिन् मेध्ये यज्ञिये, तुरङ्गे अश्वे, कपिलेन-कपिलमहर्षिणा रसातलम्-पातालम्, सक्रमिते-प्रापिते सति, तदर्थम्-तत्प्राप्तये उर्वाम्-पृथ्वीम्, अवदारयद्भि खनद्भि , न -अस्माकम, पूर्वे -पूर्वजे॰, सगरसुतै अयम् समुद्र , परिवर्धितः-वृद्धि प्रापित॰ किल । यद्यपीन्द्रस्तुरङ्ग जहार, तथापि त तुरग कपिलाश्रमस्थ विज्ञाय ' कपिल एव तुरग हृतवान् ' इति सगर-सुताना भ्रान्तिरुद्भूता, कपिलाश्रमे गन्तुमेव च भूस्तै खाता-इति तज्ज्ञानमनु-कुर्वतैव कविना ' कपिलेन ' इति प्रयुक्त द्रष्टव्यम् ।

भा॰—हे सीते ! एवं खल्वैतिहासिका आहु , यदेकदास्मत्पूर्वजो महा-राज. सगरोऽश्वमेधेन यजते स्म । भगवान् कपिलो भ्राम्यन्त यज्ञियमश्वं रसा तलमनयत् । अतस्तदन्वेषणाय यतमाना महाराजसगरसुता इमामुर्वीमखनन् । तत आरभ्यैवाय जलनिधिरियन्त महान्तमाकार दधौ ।

अल॰—उर्व्यवदारणे हेतूपन्यासात्काव्यलिङ्गम् । सगरचरितेन समुद्र-महत्त्वोक्त्या 'उदात्तम्' । स्वस्य समुद्रेण सम्बन्ध , स्वकुलस्य महत्त्वख्यापनं च व्यज्ञयन् ।

**गर्भं दधत्यर्कमरीचयोऽस्माद् विवृद्धिमत्राश्नुवते वसूनि ।**
**अविन्धन वह्निमसौ बिभर्ति प्रह्लादन ज्योतिरजन्यनेन ॥४॥**

अ॰—अर्कमरीचय. अस्माद् गर्भम् दधति, अत्र वसूनि विवृद्धिम् अश्नुवते, असौ अविन्धनम् वह्निम् बिभर्ति, अनेन प्रह्लादनं ज्योति अजनि ।

व्याक॰—अस्माद्-"ध्रुवमपायेऽपादानम्" इति अपादानत्वेन पञ्चमी, गम्यमानादानक्रियाया विभागनियतत्वात् । आप एवेन्धन यस्य तदविन्धनम्, इन्धनम् 'निइन्धी दीप्तौ' करणे ल्युट् । अश्नुवते-अश्नोतेर्लटि प्रथमपुरुष-बहुवचनम् । प्रह्लादनम्-प्रपूर्वाद् ह्लादयते "नन्दिग्रहि " इत्यादिना कर्तरि ल्यु । अजनि-जनयतेर्णिजन्तात् कर्मणि लुङ् । ज्योति प्रयोज्यकर्तृ, समद्र प्रयोजककर्ता, 'गतिबुद्धि ' इति प्रयोज्यस्य कर्मत्वम्, जनेरकर्मकत्वात् ।

व्याख्या—अर्कस्य-सूर्यस्य, मरीचय -रश्मय , अस्मात्-सागराद्, गर्भम्-

सूक्ष्मजलरूपम्, दधति धारयन्ति, वृष्ट्यर्थमिति भाव । अत्र-सागरे, *वसूनि-धनानि रत्नानि, विवृद्धिम्, अश्नुवते-प्राप्नुवन्ति । असौ-सागर, आप-जलान्येव, इन्धनम्-प्रदीपन यस्य तथाभूतम्, वह्निम्-वडवानलम्, विद्युदाख्य वा तेजो, बिभर्ति-धारयति । अनेन-सागरेण ( कर्त्रा ) प्रह्लादनम्-आह्लादकरम्, ज्योति -चन्द्राख्य तेज, अजनि-उत्पादितम् ।

भा०—इत समुद्रादेवाप आकृष्य सूर्यरश्मयोऽम्मयं गर्भं दधति । तेनैव काले वृष्टिर्जायते । एष एव महान्त रत्नराशि स्वान्तरे पोषयति । एतस्यैवोदरे विद्युदिति प्रसिद्धोऽग्निस्तिष्ठति विद्युतो जलादेवोत्पद्यमानत्वात्, समुद्रस्य च जलराशिरूपत्वात् । लोकलोचनरञ्जनश्चन्द्रोऽपीत एव जन्म लेभे, समुद्रादेव चन्द्रस्योत्पत्ते. पुराणे प्रसिद्धत्वात् ।

अलं०—चतुर्भिरपि पादै सागरस्य लोकातिशायि महत्त्व लोकोपकारित्व च व्यज्यते । वृष्ट्या, रत्नै., विद्युता, चन्द्रेण च लोकस्य परमोपकारदर्शनात् । स्वात्मभूतं जल दहन्तमपि वह्निं बिभर्तीति शरणागतरक्षणप्रवणतापि व्यज्यते, चन्द्रोत्पत्तिकथनेन च सन्ततिरप्यस्य लोकोत्तरेति । चन्द्रोत्पत्त्यादिभि समुद्रमहत्त्वख्यापनादुदात्तालङ्कार ।

**तां तामवस्था प्रतिपद्यमानं स्थित दश व्याप्य दिशो महिम्ना ।**
**विष्णोरिवास्यानवधारणीयमीदृक्तया रूपमियत्तया वा ॥२॥**

अ०—ताम् ताम् अवस्थाम् प्रतिपद्यमानम् महिम्ना दश दिश व्याप्य स्थितम् विष्णोरिव अस्य रूपम् ईदृक्तया इयत्तया वा अनवधारणीयम् ।

व्याक०—प्रतिपद्यमानम्-प्रतिपूर्वात्पद्यते. शानच् । व्याप्य-'वि' 'आङ्' एतत्पूर्वादाप्नोतेर्ल्यप् । महिम्ना-महच्छब्दाद् भावे "पृथ्वादिभ्य इमनिज्वा" इत्यनेनेमनिच् प्रत्यय । ईदृक्तया-इदशब्दोपपदाद् दृश्‌धातो. "त्यदादिषु दृशोऽनालोचने कञ् च" इत्यनेन क्विप् । "इदकिमोरीश्की" इतीदशब्दस्येशादेश, ततश्च भावे तल्, इदमिव दृश्यते-इतीदृक्, तस्य भाव ईदृक्ता इति । इयत्ता-इद शब्दाद् "किमिदम्भ्या वो घ" इति वतुप्, वस्य च घ, घस्येयादेश, "इदम इश्" इति इदम इशादेश. । ततो भावे तल्, इदमस्य

* धने रत्ने वसु स्मृतम्-इत्यमर. ।

परिमाणमितीयत्, तस्य भाव इयत्तेति । उभयत्र अवधारणकरणात्वा- त्तृतीया । अवधारणीयामिति धारयते. "शकि लिङ् च" इत्यनीयर् ।

व्याख्या—ता ताम् लुब्धत्वालुब्धत्वादिरूपेण, विभिन्नै. वर्णादिभि, वाष्पमेघादिरूपेण चानेकाम्, विष्णुपक्षे मत्स्यकूर्मवराहादिरूपेणानेकाम्, अथवा सत्त्वादिभेदेन ब्रह्मादिरूपाभनेकाम्, अथवा भूतभौतिकरूपेणानेकशो विवर्तमानाम्, अवस्थाम्-दशाम्, प्रतिपद्यमानम्-प्राप्नुवत्, महिम्ना-महत्त्वेन, दश, दिश पूर्वपश्चिमाद्या, व्याप्य-आक्रम्य, स्थितम् वर्तमानम्, विष्णोः- वेवेष्टीति विष्णुस्तस्य व्यापकस्य भगवत इव, अस्य समुद्रस्य रूपम्-स्वरूपम, ईदृकया-इदमित्थंभूतामित्येवरूपेण, इयत्तया-इदमस्य परिमाणमित्येवंरूपेण च, अनवधारणीयम्-निश्चेतुमशक्यम् ।

भा०—यथैकोपि विष्णु मत्स्यकूर्मादिनानावताररूपेण, ब्रह्म-विष्णु- शिवरूपेण, स्वकार्यभूतभौतिकरूपेण चानेकधा विवर्तमान., सर्वत्र व्यापकश्च 'इत्थ भूतोऽयम्' 'इयदस्य परिमाणम्' इति च न शक्योऽवधारयितुम्, तथैवैकोऽपि विभिन्नाकारेण विपरिणममानो दशसु दिक्षु व्याप्तोऽयं महानम्बु- राशि परिमाणेन स्वरूपेण च सर्वथा दुष्परिच्छेद । समुद्रो हि कदाचित्तरङ्ग- मालासकुलः, कदाचिच्च प्रशान्त इवावलोक्यते, वर्णाश्चास्य विविधा. काले कालेऽनुभूयन्ते, वाष्पमेघादिरूपाश्चावस्था अयमेव धत्ते इतीदृक्तयावधारण न शक्यम् । दशसु दिक्षु व्याप्त्या चेयत्तावधारण न शक्यमिति द्वेधानवधारणे क्रमेण द्वय हेतुत्वेनान्वेति ।

अलङ्का०—उपमा । हेतुद्वयस्य क्रमेण कार्यद्वयेऽन्वयाद्यथासंख्यम्, हेतुनाऽनवधारणीयतायाः समर्थनात् काव्यलिङ्ग च । अतिशयितं महत्त्वं समु- द्रस्य व्यङ्ग्यम् ।

* नाभिप्ररूढाम्बुरुहासनेन सस्तूयमानः प्रथमेन धात्रा ।
अमुं युगान्तोचितयोगनिद्रः संहृत्य लोकान् पुरुषोऽधिशेते ॥ ६ ॥

अ०—युगान्तोचितयोगनिद्र. पुरुष. लोकान् संहृत्य नाभिप्ररूढाम्बुरुहास-

* साहित्यदर्पणोद्धृतेऽस्मिन् पद्ये 'नाभिप्रभिन्नाम्बुरुहा' इति पाठ. समुपलभ्यते ।

नेन प्रथमेन धात्रा मस्तूयमान अमुम् अधिशेते।

व्याक०—युगस्यान्ते ( त० ) उचिता ( त० पु० ) योगरूपा निद्रा ( कर्म० ) यस्य ( बहु० ) स युगान्तोचितयोगनिद्रः, उचित-इति 'उच समवाये' क्तः, योग इति समाध्यर्थाद्युज्यतेर्घञ्। निद्रेति द्राते. "आतश्चोपसर्गे" इत्यङ्। नाभ्या प्ररूढम् ( त० ) अम्बुरुहम् ( कर्म० ) आसन यस्य ( बहु० ) तेन, नाभिप्ररूढाम्बुरुहासनेन, प्ररूढमिति प्रपूर्वाद्रोहते क्तः, अम्बुरुहम्-अम्बुनि रोहतीति विग्रहे, अम्बुपूर्वाद्रुहधातोः मूलविभुजादित्वात् क। मस्तूयमानः-संपूर्वात् स्तौतेः कर्मणि शानच्। धात्रा इति स्तौतेः कर्तरि तृतीया। अमुमधिशेते-" अधिशीङ्स्थासां कर्म " इति कर्मत्वाद् द्वितीया। अधिशेत इति लट् तु सर्गप्रलययोः सातत्यबोधनाय वर्तमानत्वविवक्षया समाधेय।

व्याख्या—युगस्य कल्पस्य, अन्ते-अवसाने, उचिता परिचिता अभ्यस्ता, योगः-आत्मनिष्ठैव निद्रा यस्य, तथाभूतः, पुरुषः-विष्णु, लोकान्-चतुर्दशभुवनानि, संहृत्य-स्वात्मनि प्रविलाप्य, नाभ्याम् ( स्वस्यैव नाभिप्रदेशे ) प्ररूढम् प्रादुर्भूत यदम्बुरुहम्-कमलम्, तदेवासनम्-स्थितिस्थान यस्य, तथाभूतेन, प्रथमेन-सृष्टौ सर्वतो ज्येष्ठेन, धात्रा हिरण्यगर्भेण, ब्रह्मणा सस्तूयमान, अमुम्-सागरम्, अधिशेते अस्मिन् स्वपिति। यद्यपि नाभावम्बुजप्ररोह, तत्र ब्रह्मणः स्थितिः, तत्कर्तृका स्तुतिश्चेति सर्व न प्रलयकाले स्मर्यते, तदा ब्रह्मादीनामपि प्रलीनताख्यानात्, तथापि समुद्रे शयान एव यदा पुन सृष्टिमभिलष्यति, तदा सर्वमिद जायते-इति सैवावस्थात्र निरूपिता द्रष्टव्या। भूर्भुवस्वरिति लोकत्रयप्रलयात्मकखण्डप्रलयविषयतया वा व्याख्येयम्।

भा०—कल्पान्ते लोकान्संहृत्य योगनिद्रामास्थितो भगवान् विष्णुरस्मिन्नेव जलनिधौ शेते। अत्र शयान चेम नाभिकमलस्थितो ब्रह्मा स्तौति। कल्पान्ते विष्णोः शयनमन्तरिक्षरूपे समुद्र एवोपपद्यते, भूतस्य जलस्य पूर्वमेव विनाशे तदा जलरूपसमुद्रासम्भवात्, तथाप्युभयोः समुद्रयोरभेदाध्यवसायेनेद निरूपितमिति न विरोधः।

अल०—अत्र समुद्रवर्णनाङ्गतया विष्णुचरितवर्णनेनोदात्तालङ्कार। प्रलयेऽपि न समुद्रस्य नाश इति तन्महत्त्व व्यङ्ग्यम्। 'अमुमधिशयितो

नाभिप्ररूढाम्बुरुहासनेन धात्रा स्तूयते' इति वक्तव्ये व्युत्क्रमेणोक्त्या 'विध्ययुक्तत्वम्' 'दुष्क्रमत्वम्' वात्रार्थदोष ।

**पक्षच्छिदा गोत्रभिदात्तगन्धा शरण्यमेन शतशो महीध्राः ।**

**नृपा इवोपप्लविन. परेभ्यो धर्मोत्तर मध्यममाश्रयन्ते ॥ ७ ॥**

अ०—पक्षच्छिदा गोत्रभिदा आत्तगन्धा: शतश महीध्रा. शरण्यम् एनम परेभ्य उपप्लविन नृपा धर्मोत्तरम् मध्यममिव आश्रयन्ते ।

व्याक०—पक्षारिछनत्तीति तेन पक्षच्छिदा (उप० स०)। 'सत्सुद्विष ' इत्यादिना क्विप् । गोत्रान् भिनत्तीति तेन गोत्रभिदा, पूर्ववत् । आत्तो गन्धो येषा त आत्तगन्धा । आत्त इति आङ्पूर्वाद् ददाते. क्त, "अच उपसर्गात्त." इत्याकारस्य तकारादेश । धर्म एवोत्तरो यस्य तं धर्मोत्तरम्, उत्तर इति उदित्यव्ययात् 'तरप्' । परेभ्यः- 'भीत्रार्थाना भयहेतु." इत्युपप्लवयोगेऽपादानत्वात्पञ्चमी । शतश.-शतशब्दात् "सख्यैकवचनाच्च वीप्सायाम्" इत्यनेन शस्, महीध्रा-धृधातो "मूलविभुजादिभ्य उपसंख्यानम्" इति कप्रत्यय । उपप्लविन उपप्लवशब्दाद् "अत इनिठनौ" इति मत्वर्थीय इनि । मध्यम.- मध्यान्म" ।

व्याख्या—पक्षच्छिदा-पक्षच्छेदनकर्त्रा, * गोत्रभिदा-इन्द्रेण, आत्तगन्धाः- आत्त -परिहृत , † गन्ध. गर्वो येषा तथाभूता , अभिभूता इति यावत्, शतश - शत शत शतश , अनेके, महीध्रा -पर्वता., शरण्यम्-शरणागतरक्षकम्, एनम्-समुद्रम्, परेभ्य -शत्रुभ्य , उपप्लविन उपप्लवो भयम्, स येषामस्तीत्युपप्लविन भीता , नृपा. राजान., धर्मोत्तरम्-धर्मैकपक्षपातिनम्, ‡ मध्यमम्-अरिविजिगीपुभ्यामतिरिक्त मध्यवर्तिन भूपालम् यथा, तथा आश्रयन्ते- अवलम्बन्ते ।

भा०—यथा शत्रुपीडिता राजान स्वरक्षानिमित्त मध्यस्थं धर्मप्रधानं

---

* सुत्रामा गोत्रभिद्वज्री—इत्यमर ।

† गन्धो गन्धक आमोदे लेशे सम्बन्धगर्वयो. इति, आत्तगन्धो ऽभिभूत स्यात्—इति च अमर ।

‡ अरेश्च विजिगीपोश्च मध्यमो भूम्यनन्तर.—इति कामन्दक ।

राजानं शरणमुपयान्ति, तथैवेन्द्रेण स्वशत्रुणा पक्षच्छेदादिभिरभिभूताः पर्वता इममम्बुराशिमात्मरक्षार्थं प्रपद्यन्ते । इन्द्रो हि पर्वतानां पक्षाञ्छिनत्ति, तद्भयेनोर्ऽस्य अन्तरान्तः प्रविष्टानां तेषां पक्षच्छेदभयं निवर्तत इति भावः ।

अलं०—उपमा । इन्द्रादपि पर्वतान् रक्षतीति महाप्रभावता, शरणागतवात्सल्यं च समुद्रस्य व्यज्यते ।

**रसातलादादिभवेन पुंसा भुवः प्रयुक्तोद्वहनक्रियायाः ।**
**अस्याच्छमम्भः प्रलयप्रवृद्धं मुहूर्तवक्त्राभरणं बभूव ॥ ८ ॥**

अ०—प्रलयप्रवृद्धम् अस्य अच्छम् अम्भः आदिभवेन पुंसा रसातलात् प्रयुक्तोद्वहनक्रियायाः भुवः मुहूर्तवक्त्राभरणम् बभूव ।

व्याक०—आदौ भवनादादिभवेन, भवतीति भवः इति पचाद्यच् । रसायास्तलाद् रसातलात्, अपादाने पञ्चमी । प्रयुक्ता उद्वहनमेव क्रिया यस्याः ( बहु० ) तस्याः प्रयुक्तोद्वहनक्रियायाः, मुहूर्तं वक्त्राभरणं मुहूर्तवक्त्राभरणम् ( केवलसमास ), आभरणमिति भरतेः करणे ल्युट् । प्रलय इति प्रपूर्वकाल्लीयतेरच् । पुंसेति प्रयुक्तेत्यस्य कर्तरि तृतीया ।

व्याख्या—प्रलये-कल्पान्तकाले, प्रवृद्धम् वृद्धिं गतम्, अस्य सागरस्य, अच्छम्-निर्मलम्, अम्भः-जलम्, आदिभवेन, पुंसा-पुरुषेण वराहावतारधारिणा विष्णुना, रसातलात्-पातालात्, प्रयुक्ता विहिता उद्वहनरूपा, उद्धरणरूपा, ( पक्षे विवाहरूपा च ) क्रिया यस्यास्तथाभूतायाः, भुवः-पृथिव्याः, मुहूर्तम्-मुहूर्तमात्रकालं यावत्, वक्त्रस्य अग्रभागस्य ( पक्षे आननस्य ) आभरणम्-शोभाजनकम्, ( पक्षे मुखावगुण्ठनम् ) बभूव-जातम् ।

भा०—वराहावतारे भगवान् विष्णुर्यदेमां भुवं रसातलादुज्जहार, तदानीं प्रलयहेतुना संवर्धितमस्य सागरस्य निर्मलं जलं पृथिव्या अग्रभागमावृण्वत्तथा शोभमानं लक्ष्यते स्म, यथा वराहेण कृतोद्वाहयाऽनया पृथिव्या लज्जारक्षार्थं मुखावगुण्ठनं कृतं भवेत् । अन्यापि नवपरिणीता लज्जया मुखमवगुण्ठयति इति प्रसिद्धम् । मुहूर्तमात्रमिय शोभासीत्, तदुत्तरं तु भगवता वराहेण पृथिवीयमुपरि स्थापितैव ।

अलं०—आदिवराहेणोद्ध्रियमाणायां भुवि परिणीयमाननायिकात्वव्यवहार-

समारोपात् समसोक्ति । यदि तु मुहूर्तवक्त्राभरणमित्युक्तिसामर्थ्याद् 'उद्वहनमेवोद्वहनम्' 'सागरजल वक्त्राभरणरूपमवगुण्ठनम्' इति प्रत्येक शाब्द एवारोप आश्रीयते, तदैकदेशविवर्ति रूपकम् । भुवि नायिकात्वारोपो वराहे नायकत्वारोपश्च व्यङ्ग्य । सर्वादिभूतत्वकथनात्सागरमहत्त्व व्यङ्ग्यम् ।

मुखार्पणेषु प्रकृतिप्रगल्भा स्वय तरङ्गाधरदानदक्ष ।
अनन्यसामान्यकलत्रवृत्ति पिबत्यसौ पाययते च सिन्धूः ॥६॥

अ०—अनन्यसामान्यकलत्रवृत्ति स्वयम् तरङ्गाधरदानदक्ष, असौ मुखार्पणेषु प्रकृतिप्रगल्भा· सिन्धू पिबति पाययते च ।

व्याक०—न अन्येषा सामान्या कलत्रेषु वृत्ति· यस्य सोऽनन्यसामान्य-कलत्रवृत्ति , नञ्समासादिगर्भितो बहुव्रीहिः । तरङ्ग एवाधर', (मयूर०तत्पु०) तस्य दाने दक्ष तरङ्गाधरदानदक्ष । सिन्धू -"गतिबुद्धि " इत्यनेन कर्मत्वम्, पिबते प्रत्यवसानार्थत्वात् । प्रगल्भन्त इति प्रगल्भा । प्रपूर्वाद् गल्भेत पचाद्यच् । पाययते-णिजन्तात् 'पा पाने' धातोर्लट्, "निगरण-चलनार्थेभ्यश्च" इति नित्यं प्राप्तस्य परस्मैपदस्य "नपादम्याङ्यमाङ्" इत्यनेन निषेध ।

व्याख्या—अनन्यसामान्या पुरुषान्तरे न दृश्यमाना, * कलत्रेषु-दारेषु, वृत्ति·-भोगरूपो व्यवहारो यस्य तथाभूत , स्वयमेव, तरङ्ग -वीचिरेव, अधर -अधरोष्ठ , तस्य दाने-चुम्बनार्थं समर्पणे, दक्षः-चतुरः, असौ-सागर , मुखानाम्-आननानाम्, अर्पणेषु वितरणेषु-स्वाधर चुम्बयितुमितिशेष , प्रकृत्या-स्वभावेन, प्रार्थनादिमन्तरेणैवेति यावत्, प्रगल्भा -धृष्टा , †सिन्धू -नदी·, पिबति तदधररस गृह्णाति, पाययते-स्वाधररस ताभिर्ग्राहयति च ।

भा०—वेगाद् द्रवन्तीना नदीना मुखरूपाग्रभागजल झटिति सागरे प्रविशति, तरङ्गचालित तासु नद्याप्यपि किञ्चित्प्रविशति, तत्रेत्थ कविरुत्प्रेक्षते-यथा इमा नद्य स्वाधररस पिपासवे स्वपतयेऽस्मै समुद्राय स्वयमेव स्वमुख-मर्पयन्ति, अयमपि च समुद्र स्वाधर पातुकामाभ्य स्वपत्नीभ्यो नदीभ्य

---

* कलत्र श्रोणिभार्ययो —इत्यमर ।

† सिन्धु समुद्रे नद्या च इत्यमर ।

स्वयमेव तरङ्गरूपमधरं निवेदयति, एवमेतेषामसाधारणं दाम्पत्यमाभाति। अन्यत्र पुरुषा एव प्रियाणामधररसं पिबन्ति, इह तु परस्परं पानमित्यनन्यसाधारणत्वं मल्लिनाथ आह। परस्परं स्वयं समर्पणमनन्यसाधारणमिति तु युक्तमाभाति।

अलं०—परस्परं जलप्रवेशे परस्पराधररसपानोत्प्रेक्षणादनुक्तास्पदा स्वरूपोत्प्रेक्षा। अनन्यसामान्यकलत्रवृत्तिरिति सागरे नायकान्तरापेक्षो व्यतिरेकः।

**ससत्त्वमादाय नदीमुखाम्भः सम्मीलयन्तो विवृताननत्वात्।**
**अमी शिरोभिस्तिमयः सरन्ध्रैरूर्ध्वं वितन्वन्ति जलप्रवाहान्॥१०॥**

अ०—अमी तिमयः विवृताननत्वात् ससत्त्वम् नदीमुखाम्भः आदाय सम्मीलयन्तः सरन्ध्रैः शिरोभिः जलप्रवाहान् ऊर्ध्वम् वितन्वन्ति।

व्याक०—विवृतमाननं येषां, तेषां भावो विवृताननत्वम्। सत्त्वैः सह वर्त्तत इति ससत्त्वम्, "तेन सहेति तुल्ययोगे" इत्यनेन समासः। तथैव 'सरन्ध्रैः' इत्यपि। नदतीति नदी, पचाद्यच्, 'नदट्' इति टित्त्वनिपातनाद् ङीप्। सम्मीलयन्तः-सपूर्वान्मील्धातोर्णिच्, तदन्ताद् हेतौ शतृप्रत्ययः। शिरोभिरिति करणे तृतीया।

व्याख्या—अमी-पुरस्ताद् दूरे दृश्यमानाः, *तिमयः-मत्स्यजातिविशेषाः, विवृताननत्वाद्-उन्मुद्रितमुखतया, मुखं व्यादायेति यावत्, सत्त्वैः-प्राणिभिः सहितम्, नदीनाम्-सागरे निपतन्तीनां नर्मदादिमहानदीनाम्, मुखम्-अग्रभागः तस्याम्भः-जलम्, आदाय-गृहीत्वा, तदनु, सम्मीलयन्तः-स्वमुखानि मुद्रयन्तः सन्तः, सरन्ध्रैः-छिद्रसहितैः, शिरोभिः, जलप्रवाहान्-जलस्य निर्गमान्, ऊर्ध्वम्-उपरि वितन्वन्ति-विस्तारयन्ति।

भा०—अमी तिमिनामानो महामत्स्याः स्वमुखानि व्यादाय, तेषु क्षुद्रमत्स्यादिसहितं जलमापूर्य यदा स्वोष्ठपुटं मेलयन्ति, तदानीं मुखावरोधेन तेषां मुखस्थमुदकं शिरश्छिद्रैर्वेगेनोर्ध्वगामि भूत्वा जलयन्त्रशोभां दर्शयति इति।

अल०—स्वभावोक्तिरलङ्कारः। विवृताननत्वादिति सम्मीलनपूर्वकालिकः पश्चात्पठितमिति 'अस्थानस्थपदत्वम्' वाक्यदोषः।

---

* अस्ति मत्स्यस्तिमिर्नाम शतयोजनमायतः।

**मातङ्गनक्रै. सहसोत्पतद्भिर्भिन्नान् द्विधा पश्य समुद्रफेनान् ।**
**कपोलससर्पितया य एषा व्रजन्ति कर्णक्षणचामरत्वम् ॥११॥**

अ०—सहसा उत्पतद्भि मातङ्गनक्रै द्विधा भिन्नान् समुद्रफेनान् पश्य, ये एषाम् कपोलससर्पितया कर्णक्षणचामरत्वम् व्रजन्ति ।

व्याक०—मातङ्गाकारैर्नक्रैर्मातङ्गनक्रै । कपोलयो ससर्पन्तीति कपोलससर्पिण , तेषा भाव कपोलससर्पिता, तया । ससर्पीति सर्पते "सुप्यजातौ " इति णिनि , ततो भावे तल् । कर्णयो क्षणचामरत्व कर्णक्षणचामरत्वम्, ( केवलसमासगर्भस्तत्पुरुष ) उत्पतद्भि-उत्पूर्वात् पतते शतृप्रत्यय । द्विधा-द्विशब्दाद् "अधिकरणविचाले च" इत्यनेन धा प्रत्यय ।

व्याख्या—( हे सीते ! त्वम् ) सहसा-बलेन, उत्पतद्भि -उच्छलद्भि , मातङ्ग -हस्ती तदाकारैर्नक्रै -ग्राहै , कर्तृभूतै , द्विधा भिन्नान्-मध्ये विच्छिद्य द्वेधा विभक्तान् समुद्रस्य-सागरस्य, फेनान् डिण्डीरपिण्डान् पश्य-अवलोकय । ये फेना., एषाम्-मातङ्गनक्राणाम्, कपोलयो.-गण्डस्थलयो , ससर्पितया-प्रसरणशीलतया क्षणम्-क्षणमात्रम्, कर्णयो चामरत्वम्, व्रजन्ति- प्राप्नुवन्ति ।

भा०—सीते ! पश्य वेगेनोच्छलद्भिर्महद्भिर्मकरैर्द्विधा विभक्ताः समुद्रफेना एतेषाम् ( मकराणाम् ) उभयो. कपोलयो ससर्पन्त श्वेतवर्णसाम्यात् कर्णचामरवद् भान्ति । मकरा महत्त्वेन गजसदृशा , गजाना च प्रशस्तानामलङ्करणार्थं कर्णयोरुपरि चामरे बध्येते इति तत्सादृश्यमत्रापि फैने सम्पादितम् ।

अल०—चामरत्वस्य समुद्रफेनेष्वसम्भवात् फेनचामरयो सादृश्ये पर्यवमानम्-इति निदर्शनालङ्कार । मातङ्गनक्रैरिति लुप्तोपमा ।

**वेलानिलाय प्रसृता भुजङ्गा महोर्मिविस्फूर्जथुनिर्विशेषा. ।**
**सूर्यांशुसपर्कसमृद्धरागैर्व्यज्यन्त एते मणिभि. फणस्थै ॥ १२ ॥**

अ०—वेलानिलाय प्रसृता महोर्मिविस्फूर्जथुनिर्विशेषा एते भुजङ्गा सूर्यांशुसपर्कसमृद्धरागै फणस्थै मणिभि व्यज्यन्ते ।

व्याक०—वेलानिलायेति वेलानिल पातुम्' इत्यर्थे "क्रियार्थोपपदस्य च कर्मणि स्थानिन" इति चतुर्थी, प्रसृता इति चात्र क्रियार्था क्रिया । महतान् ऊर्मीणाम् ( कर्म० ) विस्फूर्जथो ( तत्पु० ) निर्विशेषा -( निर्गतो

विशेषो येषाम् ) महोर्मिविस्फूर्जथुनिर्विशेषा , विस्फूर्जथुरिति स्फूर्जते " ट्वि-तोऽथुच् " । सूर्यस्यांशूनाम् ( तत्पु० ) सम्पर्केण समृद्धो रागो येषां तैः सूर्यांशुसंपर्कसमृद्धरागैः, सम्पर्क इति पृची धातोर्घञ्, रागैरिति रञ्ज धातोः " अकर्तरि च कारके " इत्यादिना घञ्, " घञि च भावकरणयोः " इति नलोपः । व्यज्यन्ते-विपूर्वाद् अनक्तेः कर्मणि लट्, प्रथमपुरुषबहुवचनम् ।

व्याख्या—वेला-समुद्रतटम्, तत्रत्योऽनिलः-वायुः, तस्मै तं पातुम्, प्रसृताः-चलिताः, महोर्मीणाम्-महतां तरङ्गाणां विस्फूर्जथुः-उद्रेकः, तस्मान्निर्विशेषाः-भिन्नतया ज्ञातुमशक्याः, एते पुरो दृश्यमानाः, भुजङ्गाः-सर्पाः, सूर्यस्य, अंशूनाम्-किरणानाम्, सम्पर्केण सम्बन्धेन, समृद्धः-प्रवृद्धः, रागः कान्तिः, येषां तथाभूतैः, फणस्थैः-फणोपरि स्थितैः, मणिभिः सर्परत्नैः, व्यज्यन्ते पृथग् ज्ञायन्ते ।

भा०—समीरमासेवितुं तटमुपेता इमे समुद्रस्था महान्तो भुजगा वर्णाकारसाम्यात् पूर्वं तरङ्गा एवेति प्रतीता अपि सूर्यकिरणसम्बन्धात् सुस्पष्टं प्रकाशमानैः फणामणिभिस्तरङ्गेभ्यो भेदे सिद्धे भुजगा इति ज्ञायन्ते ।

अल०—सामान्यमत्रालङ्कारः । तदुक्तं दर्पणे-" सामान्यं प्रकृतस्यान्यतादात्म्यं सदृशैर्गुणैः " इति । कुवलयानन्दमते तु विशेषतायाः प्रतिभासस्योक्त्या विशेषोऽलङ्कारः ।

**तवाधरस्पर्धिषु विद्रुमेषु पर्यस्तमेतत्सहसोर्मिवेगात् ।**
**ऊर्ध्वाङ्कुरप्रोतमुखं कथंचित् क्लेशादपक्रामति शङ्खयूथम् ॥ १३ ॥**

अ०—तव अधरस्पर्धिषु विद्रुमेषु सहसा ऊर्मिवेगात् पर्यस्तम् ऊर्ध्वाङ्कुरप्रोतमुखम् एतत् शङ्खयूथम् कथंचित् क्लेशाद् ( इव ) अपक्रामति ।

व्याक०—अधरं स्पर्धन्त इत्यधरस्पर्धिनः तेषु । ऊर्मिवेगादिति हेतौ पञ्चमी । ऊर्ध्वे अङ्कुरैः ( कर्म० ) प्रोतं ( तत्पु० ) मुखं यस्य तद्, ऊर्ध्वाङ्कुरप्रोतमुखम्, प्रोतमिति प्रपूर्वाद् वेञ् धातोः क्तः, " वचिस्वपियजादीनां किति " इति सम्प्रसारणम्, अपक्रामति अपपूर्वात् क्रमु धातोर्लट् । " वा भ्राशभ्लाश० " इति पाक्षिकः श्यनोऽभावः ।

व्याख्या—तव-भवत्याः, अधरस्पर्धिषु-अधरोष्ठसदृशेषु, विद्रुमेषु-प्रवालेषु

महसा बलेन, ऊर्मीणाम्-तरङ्गाणाम्, वेगाद्-जवात्, पर्यस्तम् क्षिप्तम्, ऊर्ध्वा-उच्चै, ये-अङ्कुरा, तैः प्रोतम् स्यूतम्, मुखम्-अग्रभागो यस्य तथाभूतम्, एतत्-पुरोवर्ति, शङ्खयूथम्-शङ्खाना, यूथम्-समूह, कथचित्-केनापि प्रकारेण, शनै शनैस्तरङ्गपरिचालितम्, क्लेशात् कष्टादिव, अपक्रामति अपसरति, पृथग् भवतीत्यर्थ ।

भा०—प्रिये ! पश्यसि पुर -तरङ्गवेगात् क्षिप्त एष शङ्खसमूह प्रवालेषु पतन्, तेषामङ्कुरेषु प्रोतत्वाच्चिर तत्रैव तिष्ठति, भूयो भूयस्तु तरङ्गपरिचालितः कथचिच्छनैरपक्रामति । तत्रेत्थ सभावये-विद्रुमेषु तवाधरसादृश्येन, ततोऽपगमने जडस्य शङ्खसमूहस्यापि क्लेश इति । अधरस्पर्धिषु इत्युक्त्या ‘ कामोमिवेगात् तवाधरे क्षिप्तस्तत्रैव च रागाच्चिरममृतमास्वादयन् स्थितः प्रोत इव, श्वेततया शङ्खसदृशो मदीयो दन्तसमूहस्ततः क्लेशादिवापसरतीति, विनोदार्थं रहोवृत्त स्मर्यते ।

अल०--शङ्खयूथस्य शनै शनैरपसरणे क्लेशहेतुकत्वोत्प्रेक्षणादुत्प्रेक्षालङ्कार । सा चेवादिव्यञ्जकाप्रयोगाद् गम्या । भावार्थोक्तरीत्या अप्रस्तुतवृत्तान्तान्तरप्रतीत्या समासोक्तिश्च ।

**प्रवृत्तमात्रेण पयासि पातुमावर्तवेगाद्भ्रमता घनेन ।**
**आभाति भूयिष्ठमय समुद्र प्रमथ्यमानो गिरिणेव भूय ॥ १४ ॥**

अ०—पयासि पातुम् प्रवृत्तमात्रेण आवर्तवेगाद् भ्रमता घनेन अयम् समुद्र भूय गिरिणा प्रमथ्यमानइव भूयिष्ठम् आभाति ।

व्याक०—प्रवृत्त एव प्रवृत्तमात्रस्तेन, मयूरव्यंसकादित्वात्समास, पातुम्-पिबतेस्तुमुन् । भूयिष्ठम्-बहुशब्दाद् “ अतिशायने तमबिष्ठनौ ” इतीष्ठन् प्रत्यय, “ बहोर्लोपो भू च बहो. ” इति बहोर्भूरादेश, ‘ इष्ठस्य यिट् च ’ इति यिडागम । प्रमथ्यमान -प्रपूर्वाद् मथ्नाते. कर्मणि लट् । घनेनेत्यानानहेतौ तृतीया । गिरिणेति प्रमथनकर्तरि तृतीया । वेगादिति भ्रमणहेतौ पञ्चमी ।

व्याख्या० – पयासि-जलानि, पातुम्-ग्रहीतुमिति यावत्, प्रवृत्तमात्रेण जलग्रहणारम्भ कृतवता, न तु गृहीतवता, *आवर्तस्य-अम्भसा भ्रमस्य, वेगाद्

* स्यादावर्तोऽम्भसा भ्रम -इत्यमर ।

जवाद्, भ्रमता-घूर्णमानेन, घनेन-मेघेन, अयम् समुद्र, भूय -पुनरपि गिरिणा पर्वतेन-मन्दरेण, प्रमथ्यमान -विलोड्यमानइव, भूयिष्ठम्-अत्यन्तम् आभाति-शोभते।

भा०—जलपात्राणीव मेघाः समुद्रं गत्वा जलं गृह्णन्तीति लोकप्रसिद्धि तामास्थायोच्यते समुद्राद् जलमादातुं प्रवृत्त एष घन, आवर्तवेगाद् भ्राम्यति भ्राम्यंतेन एष समुद्र तथा प्रतीयते यथाऽत्र मन्दरेण गिरिणा पुनरपि प्रमथ्यते देवासुरैरेकदा मन्दरपर्वतेन प्रमथ्य समुद्रं चतुर्दश रत्नानि लब्धानि इति पुराण प्रसिद्धि। मेघगिर्यो सादृश्यं चापि कविसम्प्रदाये प्रसिद्धम्। तन्मूलक पुन प्रमथनमत्रोत्प्रेक्षितम्। देवासुरकर्तृकप्रमथनादिकं यद्यपि क्षीरसमुद्रस्य, तथापि कविसम्प्रदाये सर्वेषां समुद्राणामैक्यमेवेत्याविरोध।

अल०—उत्प्रेक्षालङ्कार.। मेघस्य वस्तुतोऽभ्रमणेऽपि भ्रमणसम्बन्धोक्त्याऽतिशयोक्तिरपि।

**दूरादयश्चक्रनिभस्य तन्वी तमालतालीवनराजिनीला।**
**आभाति वेला लवणाम्बुराशेर्धारानिबद्धेव कलङ्करेखा॥ १९॥**

अ०—अयश्चक्रनिभस्य लवणाम्बुराशे. तन्वी तमालतालीवनराजिनीला वेला धारानिबद्धा कलङ्करेखेव दूराद् आभाति।

व्याक०—अयश्चक्रस्येव, अयश्चक्रनिभस्य। निभादिशब्दैरस्वपदविग्रहो नित्य· षष्ठीसमास, निभादिशब्दाना स्वभावेन समासोत्तरपद एवार्थवोधकत्व-नियमात्। तमालाना तालीना च (द्वन्द्व) वनानि तमालतालीवनानि, तेषां राज्या नीला तमालतालीवनराजिनीला। धारया निबद्धा। दूराद्-" दूरान्तिकार्थेभ्यो द्वितीया च" इत्यनेन पञ्चमी। तन्वी तनुशब्दात् "वोतो गुणवचनात्" इत्यनेन ङीप्।

व्याख्या—अयस·-लोहस्य चक्रम्, तन्निभस्य-तत्सदृशस्य, नैल्यगुणसाम्यान्नीलरूपेण च दृश्यमानत्वाल्लोहचक्राकारस्य, लवणाम्बुराशे लवणसमुद्रस्य, तन्वी-कृशा, तमाला -तमालवृक्षा, ताल्य तालीवृक्षा·, तेषां वनानाम्, राज्या-पङ्क्त्या, नीला-नीलवर्णा, वेला-तीरभूमि, धारया धारारूपेण, निबद्धा-

सलमा, कलङ्करेखा-कलङ्कस्य-मालिन्यस्य, रेखा लेखेव, दूराद्, आभाति-प्रतीयते ।

भा०—एष समुद्रो नीलवर्णसाम्याद्वर्तुलरूपेण दृश्यमानत्वाच्च लोहचक्रवदाभाति। किं चास्य तटमनुपाश्रिता सन्ततैषा तमाल-तालीवनपङ्क्तिर्दूरात्क्शतरा चक्रप्रान्ते सन्ततमालिन्यरेखावत् प्रतीयते ।

अल०—अयश्चक्रनिभस्येत्यत्र निभशब्दस्य तुल्यार्थत्वादार्थी उपमा । वेलया तमालराजिगुणग्रहणात्तद्गुण, नीलवर्णायाश्च तीरभूमेर्मालिन्यरेखात्वसम्भावनयोत्प्रेक्षा । सा च पूर्वाभ्यामङ्गाङ्गिभावेन सङ्कीर्यते । लकारस्यासकृदावृत्त्या वृत्त्यनुप्रासश्च शब्दालङ्कार ।

**वेलानिल केतकरेणुभिस्ते सम्भावयत्याननमायताक्षि ।**
**मामक्षम मण्डनकालहानेर्वेत्तीव विम्वाधरबद्धतृष्णम् ॥ १५ ॥**

अ०—( हे ) आयताक्षि ! वेलानिल केतकरेणुभि. ते आननम् सम्भावयति, विम्बाधरबद्धतृष्णम् माम् मण्डनकालहाने अक्षमम् वेत्ति इव ।

व्याक०—आयते अक्षिणी यस्याः सा आयताक्षी, सम्बोधने आयताक्षि ! "बहुव्रीहौ सक्थ्यक्ष्णो स्वाङ्गात् षच्" इति षच्, षित्त्वान्ङीष् । केतकस्य पुष्प केतकम्, "तस्य विकार" इत्यनेन विहितस्याण "पुष्पमूलेषु बहुलम्" इत्यनेन लुप्, वृद्ध्यभाव । विम्वसदृशे अधरे ( तत्पु० ) बद्धा तृष्णा यस्य येन वा तम् ( बहु० ) विम्वाधरबद्धतृष्णम् । मण्डनस्य काल, तस्य हाने मण्डनकालहाने., "कर्तृकर्मणो कृति" इति कर्मणि षष्ठी। मण्डनम्–'मडि भूषायाम्' भावे ल्युट् ।

व्याख्या—हे आयताक्षि ! आयते–विस्तृते, अक्षिणी–नेत्रे यस्यास्तथाभूते, सीते ! वेलाया तीरस्य, अनिल वायु, केतकस्य-केतककुसुमस्य, रेणुभि. परागै, ते-तव, आननम् वदनम्, सम्भावयति-अलङ्करोति । विम्वाधरे विम्वसदृशे त्वदोष्ठे, बद्धा तृष्णा लालसा, येन तथाभूतम्, माम्-रामम्, मण्डनस्य-भूषणक्रियाया, काल समय तस्य हानेः, विलम्बस्येति यावद्, अक्षमम् अनहिष्णुम, वेत्तीव-जानातीव, तत एव स्वय मण्डनकार्यं सपादयतीति ।

भा०—समुद्रतटे वायुनोद्धीय जानकीमुखे सलग्न केतकीपुष्परागं विलोक्य राम कथयति—हे आयताक्षि ! वेलानिल केतकपरागैस्ते मुखमलंकरोति। यद्यपि मुखालङ्करणमिदं मदीय कर्तव्यम्, परमेष वेलानिलो वेत्ति, यद्दीर्घेण वियोगेनाद्य तवाधरपाने निरतिशय सतृष्ण, अत एव स्वहस्तेनालङ्करणे कालक्षेप सोढुमसमर्थ, तत एव मदीय कर्तव्यमेष स्वय संपादयतीव।

अल०—पूर्वार्धे मुखे रेणुस्पर्शस्यानिलनकर्तृकालङ्करणत्वसम्भावनादुत्प्रेक्षा। सा च व्यञ्जकाप्रयोगाद्गम्या। उत्तरार्धे तत्रैव हेतुसम्भावनाद् हेतूत्प्रेक्षा, सा चेवशब्दप्रयोगाद्वाच्या। आभ्या चोत्प्रेक्षाभ्या वायोर्नर्मसाचिव्य वस्तु व्यज्यते।

**एते वय सैकतभिन्नशुक्तिपर्यस्तमुक्तापटल पयोधे।**
**प्राप्ता मुहूर्तेन विमानवेगात् कूल फलावर्जितपूगमालम्॥ १७॥**

अ०—एते वयम् सैकतभिन्नशुक्तिपर्यस्तमुक्तापटल फलावर्जितपूगमालम् पयोधे. कूल विमानवेगाद् मुहूर्तेन प्राप्ता।

व्याक०—सैकते भिन्नाभ्य (तत्पु०) शुक्तिभ्य (कर्म०) पर्यस्तानि (तत्पु०) मुक्ताना (कर्म०) पटलानि (तत्पु०) यस्मिन् (बहु०) तत् सैकतभिन्नशुक्तिपर्यस्तमुक्तापटलम्, सैकतमिति सिकताशब्दाद् वैकारिकोऽण्, पर्यस्तम्-परिपूर्वादस्यतेः क्त। फलैरावर्जिता (तत्पु०) पूगाना माला (तत्पु०) यस्मिन् (बहु०) तत् फलावर्जितपूगमालम्, आवर्जितेति-वर्जयते क्त। पयोधि -' कर्मण्यधिकरणे च " इत्यनेन धा धातो कि।

व्याख्या—एते-विमानस्था, वयम्, सैकते-वालुकामयप्रदेशे पुलिने, भिन्नाभ्य -स्फुटिताभ्य, शुक्तिभ्य, पर्यस्तानि परित क्षिप्तानि, मुक्तानाम्-मौक्तिकानाम्, पटलानि-समूहा यस्मिंस्तथाभूतम्, फलै, आवर्जिता-आनमिता, पूगानाम्-क्रमुकवृक्षाणाम्, माला-राजि, यस्मिंस्तथाभूतम्, पयोधे समुद्रस्य, कूलम्-तटम्, विमानवेगाद्-विमानस्य, वेगाद्-जवात्, मुहूर्तेन मुहूर्तमात्रकालेन, स्वल्पसमयेनेति यावत्, प्राप्ता आगता।

भा०—वय विमानवेगान्मुहूर्तमात्रकालेनैव विस्तार्णस्य समुद्रस्य तट प्राप्ता स्म, यत्र भिन्नाभ्य-शुक्तिभ्यो मौक्तिकपटल विकीर्णमास्ते, फलनम्राश्च

पूगवृक्षा श्रेणिशो दृश्यन्ते।

**कुरुष्व तावत् करभोरु ! पश्चान्मार्गे मृगप्रेक्षिणि दृष्टिपातम् ।**
**एषा विदूरीभवत समुद्रात् सकानना निष्पततीव भूमिः ॥ १८ ॥**

अ०—( हे ) करभोरु ! मृगप्रेक्षिणि ! तावत् पश्चात् मार्गे दृष्टिपातम् कुरुष्व सकानना एषा भूमिः विदूरीभवत समुद्रात् निष्पतति इव ।

व्याक०—करभ इव ऊरुर्यस्या सा करभोरूः, सम्बुद्धौ करभोरु, "ऊरूत्तरपदादौपम्ये" इति ऊरुशब्दान्तादूङ् । मृग इव प्रेक्षत इति मृगप्रेक्षिणी, सम्बुद्धौ मृगप्रेक्षिणि ! "कर्तर्युपमाने" इति णिनि । कुरुष्व-'डुकृञ्' धातोर्लोटि मध्यमपुरुषैकवचनम, ञित्वात् कर्तृगे फले आत्मनेपदम् । विदूरीभवत -विदूरशब्दात् च्वि । निष्पतति-"इदुदुपधस्य चाप्रत्ययस्य" इति विसर्गस्य षत्वम् ।

व्याख्या—हे करभोरु! *करभ इव ऊरु जानूपरिभागो यस्यास्तथाभूते, मृगप्रेक्षिणि ! हरिणालोकिनि ! तावत्, पश्चात् स्वपृष्ठादिशि, मार्गे-अतीतेऽध्वनि, दृष्टिपातम्, कुरुष्व । सकानना काननैः-वनैः सहिता, एषा भूमिः, विदूरीभवत क्रमेण दूरता-प्राप्नुवत, समुद्रात्-सागराद्, निष्पतति-निष्क्रामतीव ।

भा०—हे मृगनयने ! मनाक् स्वपृष्ठदिशि दृष्टिपात विधेहि, पूर्वं समुद्रोपरि गच्छद्भिरस्माभिर्जलमेव परितो दृश्यते स्म, इदानीं तु समुद्रोऽस्माभिर्यथा यथा दूरे त्यज्यते, तथा समुद्रे दृष्टिं निपातयद्भिरित्थं प्रतीयते यद् वनसहिता भूमिः मन्ये समुद्रमध्याद् बहिर्निस्सरति । वेगवद्यानमारूढेन भूमिवृक्षादिषु गतिः प्रतीयते-इति स्वाभाविकम् ।

अल०—जलादनन्तरमकस्माद् दृश्यमानाया भुवो व्याप्तौ समुद्रान्निस्सरणमुत्प्रेक्ष्यते इत्यनुक्तास्पदा स्वरूपोत्प्रेक्षा ।

**क्वचित्पथा सचरते सुराणां क्वचिद् घनानां पततां क्वचिच्च ।**
**यथाविधो मे मनसोऽभिलाषः प्रवर्तते पश्य तथा विमानम् ॥ १९ ॥**

अ०—हे प्रिये ! पश्य मे मनसः अभिलाषः यथाविधः, तथा विमानम्

---

* मणिबन्धादाकनिष्ठं करस्य करभो बहिः—इत्यमरः ।

प्रवर्तते, क्वचित् सुराणाम् पथा सचरते, क्वचिद् घनानाम्, क्वचित् च पततां (पथा) (सचरते)।

व्याक०—क्वचित्-किंशब्दात् "किमोऽत्" इत्यनेनात्-प्रत्ययः। "क्वाति" इत्यनेन क्वादेशः। चिदित्यव्ययान्तरम्। सचरते सपूर्वाच्चरतेर्लट् "समस्तृतीयायुक्तात्" इत्यात्मनेपदम्। पतताम्-पतधातोः शतृप्रत्ययः। अभिलाषः अभिपूर्वाल्लष्यतेर्घञ्। यथा विधा यस्य स यथाविधः। 'पथा' इति 'संचरण' करणे तृतीया।

व्याख्या—हे प्रिये! पश्य आलोकय, मे-मम, मनसः-चेतसः, अभिलाषः इच्छा, यथाविधः-यादृशः, भवतीति शेषः। तथा तेन प्रकारेण, विमानम्-पुष्पकम्, प्रवर्तते-चलतीत्यर्थः, तथाहि, क्वचित्-कुत्रचित्, सुराणाम् देवानाम्, पथा-मार्गेण, संचरते चलति, क्वचिद् घनानाम् मेघानाम्, क्वचिच्च पतताम्-पक्षिणाम्, 'पथा सचरते' इत्युभयत्र षष्ठ्यन्ताभ्या सम्बध्यते।

भा०—सीते पश्य! एतद् विमानं यथाहमिच्छामि तथैव चलति। कदाचिद्भूमेरत्यूर्ध्वं व्रजति, कदाचित्ततोऽधो भवति, कदाचिच्च ततोऽप्यधो भूमेः समीपमिवागच्छति। भूमेरुपर्यन्तरिक्षे पक्षिणां मार्गः, ततः ऊर्ध्वं मेघानाम्, ततोऽप्युपरि देवविमानानाम्। इदं तु सर्वेष्वपि मार्गेषु यथेच्छं गच्छति।

**असौ महेन्द्रद्विपदानगन्धिस्त्रिमार्गगावीचिविमर्दशीतः।**
**आकाशवायुर्दिनयौवनोत्थानाचामति स्वेदलवान्मुखे ते॥ २०॥**

अ०—महेन्द्रद्विपदानगन्धि त्रिमार्गगावीचिविमर्दशीतः असौ आकाशवायुः ते मुखे दिनयौवनोत्थान् स्वेदलवान् आचामति।

व्याक०—महेन्द्रस्य द्विपः, (त० पु०) तस्य दानम्, (त० पु०) तदिव गन्धो यस्य (बहु०) स महेन्द्रद्विपदानगन्धिः *। "उपमानाच्च" इति समासान्त इकारः। त्रिभिर्मार्गैर्गच्छतीति त्रिमार्गगा, "अन्यत्रापि दृश्यते" इति डः, तस्या वीचीनां (त० पु०) विमर्देन (त० पु०) शीतः, विमर्द इति मृद्धातोर्घञ्, शीतः-श्यैङ् धातोः क्तः, "द्रवमूर्तिस्पर्शयोः श्यः"

* 'दानगन्धी' इति दीर्घपाठो युक्तः प्रतिभाति। दानस्य गन्धः सोऽस्यास्ति-इति व्युत्पत्तेः।

इति सम्प्रसारणम्, "श्योऽस्पर्शे" इति स्पर्शपर्युदासान्नत्व न । दिनस्य यौवनादुत्तिष्ठन्तीति दिनयौवनोत्था, तान्, यौवनम्-युवन्शब्दाद्भावे 'हायनान्तयुवादिभ्योऽण' "अन्" इत्यनेन प्रकृतिभाव, उत्थशब्दे "सुपि" इति योगविभागात्क । आचामति-आङ्पूर्वाच्चमुधातोर्लट्, "ष्ठिवुक्लमुचमा शिति' इत्यनेन दीर्घ । स्वेद-'जिष्विदा गात्रप्रक्षरणे ' भावे घञ् । लव - लूञ् छेदने ' "ऋदोरप्" ।

व्याख्या—महेन्द्रस्य-इन्द्रस्य, द्विप हस्ती, ऐरावत इति यावत्, तस्य दानम्-मदजलम्, तत्सपर्कात् तद्वद गन्ध.-सौरभम यस्य तथाभूत, त्रिमार्गगाया गङ्गाया, वीचीनाम्-तरङ्गाणाम, विमर्देन-सम्पर्केण, शीत·-शीतलः, असौ-अनुभूयमान, आकाशवायु -अन्तरिक्षगत पवनः, ते-मुखे, दिनस्य, यौवनम्-युवावस्था, मध्याह्न इति यावत्, तदुत्थान्-तदुत्पन्नान्, स्वेदलवान्-स्वेदस्य-घर्मोदकस्य, लवान्-विन्दून्, आचामति पिवति, शोषयतीति यावत् । अनेन सुरपथसञ्चारो दर्शित, सुरतरङ्गिण्यास्तत्रैव सम्भवात् ।

भा०—त्रिपथगातरङ्गसम्पर्केण शीतल, ऐरावतगण्डसपर्कात्तन्मदवारिवत् सुगन्धिश्चैप मन्द मन्द प्रवहन् समीरस्ते मुखे मध्याह्नजनित घर्मोदक शोषयति ।

अल०—वायो शैत्ये सौरभे चोपयुक्तकारणाभिधानात्काव्यलिङ्गम् । वायुपदप्रयोगेणाश्लीलत्वशङ्का न कार्या, केवलस्यैव तस्य जुगुप्सितार्थस्मारकत्वेन तथात्वाभ्युपगमात् । आकाशपदस्यापुष्टार्थत्वमपि न शङ्क्यम, सुरमार्गसचारबोधनाय तस्य युक्तत्वात् । सुरमार्गसचारो व्यङ्ग्य ।

करेण वातायनलम्बितेन स्पृष्टस्त्वया चण्डि ! कुतूहलिन्या ।
आमुञ्चतीवाभरण द्वितीयमुद्भिन्नविद्युद्वलयो घनस्ते ॥ २१ ॥

अ०—(हे) चण्डि ! कुतूहलिन्या त्वया वातायनलम्बितेन करेण स्पृष्ट उद्भिन्नविद्युद्वलय घन ते द्वितीयम् आभरणम् आमुञ्चति इव ।

व्याक०—उद्भिन्न विद्युतो वलय (त० पु०) यस्मिन् (बहु०) स उद्भिन्नविद्युद्वलय, विद्युदिति विद्योतते इति 'द्युत्' धातो "भ्राजभासधुर्विद्युतोर्जि" इत्यादिना कर्तरि क्विप् । कुतूहलिनी-कुतूहलशब्दाद् "अत इनिठनौ" इत्यनेन

इनिः, नान्तत्वाद् " ऋन्नेभ्यो ङीप् । द्वितीयम् द्वयो पूरणमिति "द्वेस्तीय" ।

व्याख्या—हे चण्डि ! कोपशीले ! सीते ! कुतूहलिन्या कुतूहलमस्या अस्तीति कुतूहलिनी, तया, कौतुकिन्या, त्वया-भवत्या, वातायने-गवाक्षे, लम्बितेन, करेण-हस्तेन, स्पृष्ट घट्टित, अत एव उद्भिन्नम्-प्रादुर्भूतम्, विद्युताम्-तडिताम्, वलयम्-समूह एव विद्युद्वलयम् दीप्तिमत् कङ्कण यस्मिंस्तथाभूत घन -मेघ, ते-तव, द्वितीयम्-अपरम्, आभरणम्-भूषणम्, कङ्कणम्, आमुञ्चतीव परिधापयतीव ।

भा०—हे सीते ! यदा त्वया कौतुकेन गवाक्षमार्गाद् हस्त निस्सार्य मेघ स्पृष्ट, तदानीं तस्माद्विद्युन्मण्डल प्रकाशते स्म, तेन त्वत्करे द्वितीय वलयरूपमाभरण न्यस्तमिव ।

अल०—विद्युद्वलयमित्यत्र श्लेषमूल रूपकम् । तच्चाभरणमामुञ्चतीवेत्युत्प्रेक्षया सकीर्यते । विमानस्य मेघमार्गसञ्चारश्चैतेन पद्येन व्यञ्जित. । चण्डीत्यनेन कोपनशीलत्वाद्भीत क्षिप्र त्वा मुञ्चति मेघ इति व्यज्यत-इति मल्लिनाथ आह । ईदृशमेघस्पर्शादिसाहसादपि कोपभयान्न निवार्यसे इति व्यज्यत इति तु वयम् ।

**अमी जनस्थानमपोढविघ्नं मत्वा समारब्धनवोटजानि ।**
**अध्यासते चीरभृतो यथास्वं चिरोज्झितान्याश्रममण्डलानि ॥२२॥**

अ०—अमी चीरभृत जनस्थानम् अपोढविघ्नम् मत्वा समारब्धनवोटजानि चिरोज्झितानि आश्रममण्डलानि यथास्वम् अध्यासते ॥

व्याक०—चीर बिभ्रतीति चीरभृत, बिभर्ते. क्विप् । अपोढा विघ्ना यस्मात् तदपोढविघ्नम्, अपोढशब्दे अपपूर्वाद् वहते क्त । विघ्न इति विपूर्वाद् हन्ते " घनर्थे कविधानम् " । समारब्धा नवा उटजा येषु तानि समारब्धनवोटजानि, समारब्धा इति ' सम् ' ' आङ् ' पूर्वाद रभ्धातो क्त । आश्रममण्डलानि, इति " अधिशीङ्स्थासा कर्म " इत्यनेन कर्मत्वम् । स्वम नतिक्रम्य यथास्वम्, यथार्थेऽव्ययीभाव. ।

व्याख्या—अमी पुरो दृश्यमाना:, चीरभृत.-चीरम्-जीर्णवल्कलादिवस्त्रम्, बिभ्रति-धारयन्ति, तथाभूता. तपस्विन, जनस्थानम् दण्डकारण्यम्,

अपोढा -अपास्ता, विघ्ना -अन्तराया यस्मात्तथाभूतम्, मत्वा बुद्ध्वा, समारब्धा -सम्यक् निर्मातुमुपक्रान्ता, नवा नूतना, *उटजा -पर्णशाला, येषु तथाभूतानि, चिराद्-बहो कालाद्, उज्झितानि-राक्षसभयात्त्यक्तानि आश्रमाणाम्, मण्डलानि-विभागान्, यथास्वम्-स्व-स्व स्थानेषु, अध्यासते-अधितिष्ठन्ति।

भा०—अमी तपस्विनो राक्षसभयादाश्रमस्थानानि परित्यज्य पुरा इत स्तत प्रयाता, इदानीं तु राक्षसविनाशाद् दण्डकारण्य भयरहित मत्वा स्वस्थानेषु पुनर्नवा पर्णशाला निर्माय तेषु निवसन्ति। राक्षसविनाशादेवमेतेषा सुख जातमिति ।

**सैषा स्थली यत्र विचिन्वता त्वा भ्रष्ट मया नूपुरमेकमुर्व्याम् ।**
**अदृश्यत त्वच्चरणारविन्दविश्लेषदु खादिव बद्धमौनम् ॥ २३ ॥**

अ०—एषा सा स्थली ( अस्ति ) यत्र त्वाम् विचिन्वता मया त्वच्चरणारविन्दविश्लेषदु खादिव बद्धमौनम् उर्व्याम् भ्रष्टम् एकम् नूपुरम् अदृश्यत ॥

व्याक०—तव चरणम् ( त० पु० ) अरविन्दमिव, ( उपमित-समास ) तस्य विश्लेष, तस्य ( ष० त० ) दु खात् । ( त० पु० ) त्वच्चरणारविन्दविश्लेषदु खात । विश्लेष इति श्लिषधातोर्घञ् । बद्ध मौन येन (बहु) तद्बद्धमौनम् । स्थली-स्थलशब्दाद् जानपदकुण्डगोणस्थल " इत्यादिना ङीप् । विचिन्वता विपूर्वाच्चिनोते शतृप्रत्यय । भ्रष्टम्-भ्रश्यते क्त, व्रश्चेति षत्वम् । उर्वी-उरुशब्दाद् " वोतो गुणवचनात् " इत्यनेन ङीप् । ' मया नूपुरम् अदृश्यत ' इति कर्मणि प्रयोगोऽत्र । ' अह नूपुरमपश्यम् ' इति कर्तरि वाच्यान्तरम् ।

व्याख्या—एषा पुरोवर्तिनी, सा पूर्वदृष्टा, स्थली-अकृत्रिमा समतला भूमिरस्ति । यत्र-यस्या भूमौ, त्वाम्-भवतीम् ( सीताम् ) विचिन्वता अन्विष्यता, मया, ( रामेण ) तव-भवत्या, चरणारविन्दस्य-कमलसदृशस्य पदस्य विश्लेषाद्-वियोगाद्, यद् दु:ख १ क्लेश, ततो हेतोरिव, बद्धम्-कृतम्, मौनम्-वाक्संयमो येन तथाभूतम्, नीरवमिति यावद्, उर्व्याम् पृथिव्याम्, भ्रष्टम्-

* पर्णशालोटजोऽस्त्रियाम्—इत्यमर ।

पतितम्, एकम्, नूपुरम्-मञ्जीरं, ( पादभूषणम् ) अदृश्यत-दृष्टम् ।

भा०—अयि प्रिये ! अत्र भूम्यां त्वामन्विष्यता मया तव चरणात्पतित नीरवमेकं नूपुरं प्राप्तमासीत् । तस्य नीरवत्वे कारणं च त्वच्चरणारविन्दवियोग दुःखमेव मया सम्भावितम् । नूपुरं हि पादस्य पादसञ्चालने शब्दायते, पादाद नष्टस्य तु नीरवता सिद्धैव, तत्र हेतुरुत्प्रेक्षित ।

अल०—हेतूत्प्रेक्षा । पादेऽरविन्दसादृश्योक्त्या नूपुरेपि भ्रमरसादृश्य व्यञ्जितम् । तेन कमलविश्लेषमाप्तस्य भ्रमरस्य मौनं युक्तमेवेत्युत्प्रेक्षा परिष्क्रियते। अस्मिन् पद्ये महाकविना निगूढ वाग्बीज निहितमिति सम्प्रदायिका आहु । वियोगदु खस्मरणमित प्रभृति प्रकान्तम् । तत्र सर्वत्र स्मृतिर्भाव प्रधानम्, विप्रलम्भस्तु तदङ्गमिति रसवदलङ्कार ।

**त्वं रक्षसा भीरु यतोऽपनीता तं मार्गमेताः कृपया लता मे ।**
**अदर्शयन् वक्तुमशक्नुवत्य शाखाभिरावर्जितपल्लवाभि ॥ २४ ॥**

अ०—भीरु ! त्वम् रक्षसा यत अपनीता, तम् मार्गम् वक्तुम् अशक्नुवत्य एता लता आवर्जितपल्लवाभि शाखाभि कृपया मे अदर्शयन् ॥

व्याक०—आवर्जिताः पल्लवा याभिस्ताभिरावर्जितपल्लवाभि । भीरु ! भीरुशब्दाद् “ ऊङुत ” इत्यनेनोङ्, सम्बुद्धौ नदीत्वाद् ह्रस्व । यत -यच्छब्दात् सार्वविभक्तिकस्तसिल् तृतीयार्थे । कृपा-‘ क्रप ’ धातो ‘ षिद्भिदादिभ्योऽङ् ” इत्यनेनाङ्, “ क्रपे सम्प्रसारणं च ” इत्यनेन सम्प्रसारणम् । अदर्शयन्-णिजन्ताद् दृश्धातोर्लङि प्रथमपुरुषबहुवचनम् । अहमिति प्रयोज्यकर्ता, तत्र यद्यपि “ दृशेश्च ” इति कर्मत्व प्राप्तम्, तथापि तदविवक्षया ‘मे’ इति सम्बन्धसामान्ये षष्ठी कृता । वक्तुमिति-शक्नोतावुपपदे तुमुन् । शक्नुवत्य - शक्लृधातो. शतृप्रत्यय, उगित्त्वाद् ङीप् ।

व्याख्या—हे भीरु ! भयशीले ! त्वम्, रक्षसा राक्षसेन रावणेन, यत येन मार्गेण, अपनीता-अपहृता, तं मार्गम्-पन्थानम्, वक्तुम्-वदितुम्, अशक्नुवत्य -असमर्थाः, एता -पुरोवर्तिन्य, लता, आवर्जिता -नामिता, पल्लवा -पाणिसदृशानि पत्राणि याभिस्तथाभूताभि, यद्वा-आ समन्तादू वर्जिता त्यक्ता, पल्लवा पत्राणि, याभिस्तथाभूताभि -भुजस्थानीयैर्विटपै, कृपया दयया,

मे मम, अदर्शयन्-अबोधयन् ।

भा०—हे भीरु ! रावणो येन पथा त्वामपजहार, तं पन्थानं जिज्ञासमान मा दयालव इमा लता अबोधयन् । यद्यपि वागासा नास्ति, तथापि यथा कश्चिन्मूकोऽपि हस्तचेष्टया बोधयति तथा शाखाना पल्लवास्तस्या दिशि नमयन्त्यो ऽबोधयन्नेव, त्वद्गमनादिश्यैवासा पत्त्राणि नतान्यासन्निति । यद्वा-यस्मिन् मार्गे त्व गता, तत्र लता वियोगदु खाच्छुष्का आसन, तास्तथाविधा दृष्ट्वा मे त्वन्मार्गबोध समजनि ।

अल०—वचन विनापि बोधनाद्विभावना । द्वितीयव्याख्याया तूत्प्रेक्षापि । वृक्षलतादीना ज्ञानमत्र मल्लिनाथेन समर्थितम् ।

**मृग्यश्च दर्भाङ्कुरनिर्व्यपेक्षास्तवागतिज्ञ समबोधयन्माम् ।**
**व्यापारयन्त्यो दिशि दक्षिणस्यामुत्पक्ष्मराजीनि विलोचनानि ॥२५॥**

अ०—(किं) च दर्भाङ्कुरनिर्व्यपेक्षा मृग्यः उत्पक्ष्मराजीनि विलोचनानि दक्षिणस्या दिशि व्यापारयन्त्य ( सत्यः ) तव अगतिज्ञम् माम् समबोधयन् ।

व्याक०—दर्भाणामङ्कुरेषु ( त० पु० ) निर्गता विशेषेण अपेक्षा यासा ( बहु० ) ता दर्भाङ्कुरनिर्व्यपेक्षा, व्यपेक्षा 'वि' 'अप' एतत्पूर्वादीक्षते अकारप्रत्यय । उद्गता पक्ष्माणा राजि ( प० त० ) येषा (बहु०) तान्युद्गतपक्ष्मराजीनि । गम्यतेऽनेनेति गतिर्मार्ग., ता जानातीति गतिज्ञः, "आतोनुपसर्गे क । न गतिज्ञोऽगतिज्ञ । मृग्य-मृगशब्दाद् "जातेरस्त्री विषयादयोपधात्" इत्यनेन ङीप् । व्यापारयन्त्य-"वि" "आङ्" एतत्पूर्वात् 'पृङ् व्यायामे' धातोर्णिच्, ( विलोचनानि प्रयोज्यकर्तृणि ) तदन्ताच्छतृप्रत्यय., उगित्त्वान्ङीप् ।

व्याख्या—किं च दर्भाणाम्-कुशानाम्, अङ्कुरेषु-प्ररोहेषु, निर्व्यपेक्षा निःस्पृहा, मृग्य-हरिण्य, उद्गता-उर्ध्वीभूता, पक्ष्मणाम्-नेत्रलोम्नाम्, राजि पङ्क्ति, येषा तथाभूतानि, विलोचनानि-नेत्राणि, दक्षिणस्याम्, दिशि, व्यापारयन्त्य-प्रेरयन्त्य, तव-भवत्या, अगतिज्ञम्-मार्गानभिज्ञम्, माम्, समबोधयन्-व्यज्ञापयन्, मार्गमितिशेष ।

भा०—इतस्ततस्तवमार्गमन्विष्यन्त मामवलोक्य हरिण्यो दर्भाङ्कु-

मुपेत्य दक्षिणादिशि स्वदृष्टिनिपातेन, ' सीता कश्चिद्दक्षिणस्या दिशि निनाय ' इत्येव मह्य तव मार्गमसूचयन् । त्यक्तकवला हरिण्योपि त्वद्गमन-दिश्येव बद्धदृष्टय आसन्निति सार ।

अल०—दर्भाङ्कुरेत्यादिविशेषणेन मृगाणामपि दु खितत्व व्यज्यते । तासा दृष्टिनिपातने बोधनफलकत्वसम्भावनाद्गम्या फलोत्प्रेक्षा । मृगीगतो विषादोऽत्र स्मृतेरङ्गमिति प्रेय ऊर्जस्विद् वालङ्कार ।

**एतद्गिरेर्माल्यवत पुरस्तादाविर्भवत्यम्बरलेखि शृङ्गम् ।**
**नव पयो यत्र घनैर्मया च त्वद्विप्रयोगाश्रु सम विसृष्टम् ॥ २६ ॥**

अ०—माल्यवत गिरे अम्बरलेखि शृङ्गम् एतत् पुरस्ताद् आविर्भवति, यत्र घनै नवम् पय मया च त्वद्विप्रयोगाश्रु मम विसृष्टम् ।

व्याक०—अम्बर लिखतीत्यम्बरलेखि, " सुप्यजातौ णिनिस्ताच्छील्ये "। माल्यवत माल्यशब्दाद् मतुप् । पुरस्तात् सप्तम्यन्तात् पूर्वशब्दाद् "दिक्छब्देभ्य सप्तमी पञ्चमी" इत्यादिना सूत्रेण अस्तातिप्रत्यय । "अस्ताति च " इत्यनेन पूर्वशब्दस्य ' पुर् ' इत्यादेश । विसृष्टम् विपूर्वात्सृजते क्त । ' घनै ' ' मया ' इत्युभयत्र विसर्जनकर्तरि तृतीया । सममिति क्रियाविशेषण द्वितीयान्तम् ।

व्याख्या—माल्यवत एतन्नामकस्य, गिरे -पर्वतस्य, अम्बरलेखि आकाश-चुम्बि, शृङ्गम् शिखरम्, एतत्-( अङ्गुल्यभिनयेन निर्देश एष ) पुरस्ताद-अग्रे, आविर्भवति-प्रकाशते । यत्र-यस्मिन् शृङ्गे, घनै- मेघै , नवम्-नवीन वर्षा रम्भकालिकम्, पय -जलम्, मया च, तव-भवत्या, विप्रयोगेण विरहेण, जातम्, अश्रु-नेत्रजलम्, समम्-युगपत्-तुल्यकालम्, विसृष्टम्-त्यक्तम् ।

भा०—एतत्पुरो माल्यवत पर्वतस्य गगनचुम्बि शृङ्गमाभाति । यत्र वर्षारम्भे यदा मेघैर्नव जल वृष्टम्, तदानीमेव मेघदर्शनाद्दीपित त्वद्विरहमस-हमानेन मयाप्यश्रुजल वृष्टम् । अत्रैव वर्षा आरब्धा इति तात्पर्यम् ।

अल०—अत्र कारणेन मेघाना नवजलत्यागेन सहैव कार्यस्याश्रुपातस्य वर्णनादक्रमातिशयोक्ति । ' अक्रमातिशयोक्तिस्तु पौर्वापर्यव्यतिक्रमे ' इति । कुवलयानन्दे तल्लक्षणात् । विप्रलम्भ स्मृतेरङ्गमिति रसवदलङ्कार ।

**गन्धश्च धाराहतपल्वलानां कादम्बमर्धोद्गतकेसरं च।**
**स्निग्धाश्च केकाः शिखिनां बभूवुर्यस्मिन्नसह्यानि विना त्वया मे ॥२७॥**

अ०—(किं च) यस्मिन् धाराहतपल्वलानाम् गन्धश्च अर्धोद्गतकेसरम् कादम्बं च शिखिनाम् स्निग्धाः केकाः च त्वया विना मे असह्यानि बभूवुः।

व्याक०—धाराभिराहतानां (त० पु०) पल्वलानाम् (कर्म०) धाराहतपल्वलानाम्। अर्धमुद्गतं केसरं यस्य तदर्धोद्गतकेसरम्। कादम्बम्-कदम्बशब्दात् "तस्य विकारः" इत्यनेनाण्, तस्य "पुष्पमूलेषु बहुलम्" इति वार्तिकेन बाहुलकाल्लुबभावः। स्निग्धाः-स्निह्धातोः क्त, "वा द्रुहमुहष्णुहष्णिहाम्" इत्यनेन हस्य घत्वम्। शिखिनाम्-शिखाशब्दात् "व्रीह्यादिभ्यश्च" इत्यनेन इनिः। असह्यानि-सह्धातोः "शकिसहोश्च" इति यत्प्रत्ययः। असह्यः (गन्धः) श्च, असह्यम् (केसरम्) च असह्याः (केकाः) च इत्यसह्यानि। "नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्" इत्यनेन नपुंसकैकशेषः। त्वयेति विनाशब्दयोगे "पृथग्विनानानाभि" इत्यनेन तृतीया।

व्याख्या—यस्मिन् माल्यवतः शिखरे, धाराभिः वर्षधाराभिः, आहतानाम्-ताडितानाम्, पल्वलानाम् अल्पसरसाम्, गन्धः सौरभम्, अर्धम्-अपूर्णम्, उद्गतम् आविर्भूतम् केसरम् किंजल्को यस्य तथाभूतम्, कादम्बम्-कदम्बपुष्पं च, †शिखिनाम् मयूराणाम्, स्निग्धाः मधुराः, ॐकेकाः-वाण्यश्च, त्वया-भवत्या, विना, मे मम असह्यानि-सोढुमशक्यानि, बभूवुः-जातानि।

भा०—ग्रीष्मे शुष्कप्रायेषु अल्पसरःसु नववर्षारम्भे किमपि सौरभं प्रादुर्भवति, कदम्बकुसुमानि च फुल्लन्ति, मयूराश्च नृत्यन्तः केकाः कुर्वन्ति, सर्वेन्द्रियाकर्षकमेतत्सर्वमुद्दीपनतया त्वद्वियोगार्तस्य पर्वतेऽस्मिन्निवसतो मेऽसह्यमभूत्।

अल०—एकमेवासह्यम्, तत्रान्यदन्यदपि सहकारितामायातीति समुच्चयः। उद्दीपनकीर्तनेन रसवदलङ्कारश्च पूर्ववत्।

---

† शिखिनौ वह्निबर्हिणौ—इत्यमरः।
ॐ केका वाणी मयूरस्य—इत्यमरः।

**पूर्वानुभूतं स्मरता च यत्र कम्पोत्तरं भीरु ! तवोपगूढम् ।**
**गुहाविसारीण्यतिवाहितानि मया कथंचिद् घनगर्जितानि ॥ २८ ॥**

अ०—(हे) भीरु ! यत्र पूर्वानुभूतम् कम्पोत्तरम् तव उपगूढम् स्मरता मया गुहाविसारीणि घनगर्जितानि कथं चिद् अतिवाहितानि ।

व्याक०—पूर्वमनुभूतं पूर्वानुभूतम्, केवलसमास । कम्प इति कम्पतेर्घञ् । गर्जितानीति उपगूढम् इति च गर्जतेः, गूहतेश्च " नपुंसके भावे क्त " ' स्मरता ' इति " धातुसम्बन्धे प्रत्ययाः " इति लट् । तस्य शत्रादेश । तवेति उपगूहते कर्तरि षष्ठी । भीरु-ऊङ् स्त्रीप्रत्यय , सम्बुद्धौ ह्रस्व । अतिवाहितानि-णिजन्ताद्वहते क्त । गर्जितानीति प्रयोज्यकर्ता कर्मता गत ।

व्याख्या—हे भीरु ! भयशीले ! यत्र माल्यवत शृङ्गे, पूर्वम्-संयोगकाले, अनुभूतम्-अनुशीलितम्-आस्वादितम्, कम्प-वेपथु, उत्तर-प्रधान यत्र तथाभूतम्, कम्पादुत्तर जायमान वा, तव भवत्या कृतम्, उपगूढम्-आश्लेषम्, स्मरता-अनुध्यायता, मया, गुहायाम्-गह्वरे, विसारीणि-प्रतिध्वनिवशान्महत्त्वमुपयान्ति, घनगर्जितानि घनानाम् मेघानाम्, गर्जितानि निर्घोषा, कथ चित्-केनापि प्रकारेण, अतिशयेन उद्दीपकत्वादतिक्लेशेनेति यावद्, अतिवाहितानि नीतानि व्यतिगमितानि ।

भा०—अयि भीरु ! पूर्वमावयो सहस्थितौ यदा घनगर्जितमुदीर्णं भवति स्म, तदा त्व तेन भीता सकम्पं मामाश्लिष्टवती, तत पूर्वानुभूत त्वदाश्लेष स्मारयन्ति घनगर्जितानि उद्दीपनतया वियोगकाले मयातिक्लेशेन सोढानि ।

अलं०—पूर्वानुभूतालिङ्गनस्मरणस्य घनगर्जितासहने निमित्तत्वात् काव्यलिङ्गम् । भीरु-इति साभिप्रायविशेषणेन परिकर । रसवदलङ्कार पूर्ववत् ।

**आसारसिक्तक्षितिबाष्पयोगान्मामक्षिणोद्यत्र विभिन्नकोशैः ।**
**विडम्ब्यमाना नवकन्दलैस्ते विवाहधूमारुणलोचनश्रीः ॥ २९ ॥**

अ०—यत्र विभिन्नकोशैः नवकन्दलैः आसारसिक्तक्षितिबाष्पयोगाद् विडम्ब्यमाना ते विवाहधूमारुणलोचनश्रीः माम् अक्षिणोत् ।

व्याक०—विभिन्ना कोशा येषा तैर्विभिन्नकोशैः । कन्दल्याः पुष्पाणि कन्दलानि, नवैः कन्दलैर्नवकन्दलैः । आसारेण सिक्ताया ( त० पु० ) क्षिते

( कर्म० ) वाष्पस्य ( त० पु० ) योगाद् ( त० पु० ) आसारसिक्तक्षितिवाष्पयोगात् । आसार इति सरतेर्घञ् । सिक्त इति सिञ्चतेः क्तः । विवाहस्य धूमेन ( त० पु० ) अरुणयो ( त० पु० ) लोचनयो ( कर्म० ) श्रीः ( त० पु० ) विवाहधूमारुणलोचनश्रीः । विवाह इति वहतेर्घञ् । विडम्ब्यमाना--चुरादेराकृतिगणत्वात्, चौरादिकाद्विडम्बयते कर्मणि शानच् ।

व्याख्या—यत्र-यस्मिन्, विभिन्ना विकसिता, कोशा कुड्मलानि येषां तथाभूते, नवैः नूतनैद्रुतै, कन्दलैः-कन्दलीपुष्पैः, आसारेण धारासंपातेन, सिक्ताया, क्षितेः-पृथिव्या, वाष्पस्य जलनिपातेन तप्ते स्थले जनितस्य धूमविशेषस्य, योगात् सम्बन्धाद् ( हेतोः ) विडम्ब्यमाना-अनुक्रियमाणा, ते तव, विवाहधूमेन विवाहसंस्काराङ्गभूतहोमजनितेन धूमेन, अरुणयोः, लोचनयोः-नेत्रयोः, श्रीः-लक्ष्मीः, ( सादृश्यात्स्मर्यमाणा सती ) माम् अचिरेणोद्-अपीडयत् ।

भा०—ग्रीष्मे सौरतेजसा सन्तप्ताया पृथिव्या वर्षासु धारासंपातसेकेन वाष्पमुद्गच्छतीति स्वाभाविकी वस्तुस्थितिः । धूमाकारेण तेन वाष्पेण युक्तानि नवविकसितरक्तकन्दलीकुसुमानि दृष्ट्वाऽहं विवाहसमये होमधूमारुणयोः तव लोचनयोः शोभा स्मरन् विरहव्यथामन्वभवम् ।

अल०—सादृश्यमूलकेन स्मरणेन स्मरणालङ्कारः । स्मरणस्य विरहव्यथानुभवे हेतुत्वात् काव्यलिङ्गम् ।

उपान्तवानीरवनोपगूढान्यालक्ष्यपारिप्लवसारसानि ।
दूरावतीर्णा पिबतीव खेदादमूनि पम्पासलिलानि दृष्टिः ॥३०॥

अ०—उपान्तवानीरवनोपगूढानि आलक्ष्यपारिप्लवसारसानि अमूनि पम्पासलिलानि दूरावतीर्णा दृष्टिः खेदात् पिबति इव ।

व्याक०—उपान्ते वानीराणाम् वनेन ( तत्पु० ) उपगूढानि उपान्तवानीरवनोपगूढानि । उपगूढानि उपगूहतेः क्तः । आलक्ष्याः पारिप्लवाः सारसा येषु तान्यालक्ष्यपारिप्लवसारसानि, लक्ष्या इति लक्षयतेश्चौरादिकाद् "अचो यत्", पारिप्लवा इति परिपूर्वात् प्लवतेः पचाद्यच्, स्वार्थिकः प्रज्ञाद्यण् ।

* धारासंपात आसारः—इत्यमरः ।

अवतीर्णेति तरते क्त । "ऋत इद्धातोः" । "रदाभ्याम्..." इति निष्ठाया नत्वं च ।

व्याख्या—उपान्ते-समीपदेशे, वानीरवनेन वञ्जुलविपिनेन, उपगूढानि-आच्छादितानि, आलक्ष्या. ईषद्दृश्या, * पारिप्लवा चञ्चला, सारसा-तदाख्यपक्षिविशेषा येषु तथाभूतानि, अमूनि विप्रकर्षे दृश्यमानानि, पम्पाया. पम्पाख्यसरसः, सलिलानि-जलानि, दूरावतीर्णा-दूराद् (अस्माद्विमानप्रदेशाद्) अवतीर्णा (अस्माकम्) दृष्टि, खेदात्-श्रमाद् (हेतो) पिबतीव-पान करोतीति सम्भाव्यते ।

भा०—पुर एतत्पम्पासर आभाति । एतत्पार्श्वे वञ्जुलवनराजि शोभते। अत्र क्रीडन्तस्तरला सारसा अपि दूरत्वहेतुना दृष्टिपथमीषदायान्ति । एतस्मिन् रम्ये दृश्ये दृष्टिश्चिराय निबद्धा तिष्ठति । यथा कश्चित् पथिकोऽध्वखेदापनोदाय जलाशयमुपगम्य जलमापिबति, तथैव दूरादस्मात्प्रदेशादत्र पम्पासरसि निपतिता मे दृष्टि. श्रमापनोदाय तज्जल पिबतीति सम्भाव्यते ।

अलं०—सोत्कण्ठ चिरदर्शने खेदहेतुकपानसम्भावनादुत्प्रेक्षा । पम्पासरस सुषमातिशयो व्यङ्ग्य । छेकानुप्रासवृत्त्यनुप्रासौ शब्दालङ्कारौ ।

**अत्रावियुक्तानि रथाङ्गनाम्नामन्योऽन्यदत्तोत्पलकेसराणि ।**
**द्वन्द्वानि दूरान्तरवर्तिना ते मया प्रिये ! सस्पृहमीक्षितानि ॥२१॥**

अ०—(हे प्रिये) अत्र अवियुक्तानि अन्योऽन्यदत्तोत्पलकेसराणि रथाङ्गनाम्नाम् द्वन्द्वानि ते दूरान्तरवर्तिना मया सस्पृहम् ईक्षितानि ।

व्याक०—अन्योन्यस्मै दत्तानि (तत्पु०) उत्पलस्य केसराणि (तत्पु०) यै. (बहु०) तान्यन्योऽन्यदत्तोत्पलकेसराणि । अन्योऽन्यस्मै "कर्मव्यतिहारे सर्वनाम्नो द्वे वाच्ये" "समासवच्च बहुलम्" इत्यनेनान्यशब्दस्य द्वित्वम्, बहुलग्रहणात् समासवद्भावो न । "असमासवद्भावे पूर्वपदस्थस्य सुप सुर्वक्तव्य" इत्यनेन पूर्वपदस्थस्य सुप स्थाने सुरादेश, रुत्वोत्वे । रथाङ्गस्य नामेव नाम येषा तेषा रथाङ्गनाम्नाम् । दूरे-अन्तरे (कर्म०) वर्तते (उपप०) तथाभूतेन दूरान्तरवर्तिना, णिनि. । स्पृहया सहेति सस्पृहम्, सहार्थे

* चञ्चले तरल चैव पारिप्लवपरिप्लवे—इत्यमर. ।

ऽव्ययीभावः। "अव्ययीभावे चाकाले" इति सहस्य सादेशः। क्रियाविशेषणत्वेन कर्मत्वाद् द्वितीया। द्वन्द्वानि "द्वन्द्वं रहस्यमर्यादा" इत्यनेन द्विशब्दस्य द्विर्भावः, पूर्वपदस्याम्भावः, उत्तरपदस्यात्वम्, समुदितस्य नपुंसकत्वं च निपात्यते।

व्याख्या—अत्र पम्पासरसि, अवियुक्तानि नित्यं संयुक्तानि, अन्योऽन्यस्मै परस्परस्मै, दत्तानि-अर्पितानि, उत्पलस्य कमलस्य, केसराणि-किंजल्काः यैस्तथाभूतानि, *रथाङ्गनाम्नाम्-चक्रवाकाणाम्, द्वन्द्वानि मिथुनानि, ते-तव, दूरान्तरवर्तिना दूरान्तरे-दूरदेशे, वर्तते तिष्ठति, तथाभूतेन त्वद्वियुक्तेनेत्यर्थः, मया-सस्पृहम्-साभिलाषम्, ईक्षितानि अवलोकितानि।

भा०—हे सीते! अत्र पम्पासरसि क्रीडन्ति, प्रेम्णा परस्परमुत्पलपरागमर्पयन्ति चक्रवाकमिथुनान्यवलोक्य त्वद्विरहव्यथितोऽहम् 'अहो एतेषां सौभाग्यम्, यद्यहमपि प्रियया न व्ययोक्ष्ये, तर्ह्येवमेव सानन्दं व्यहरिष्यम्' इति सोत्कण्ठं साभ्यसूयमिवाचिन्तयम्।

अल०—प्रिये इति सम्बुद्ध्यन्तविशेष्यस्य विरहासहिष्णुताया साभिप्रायत्वात् परिकराङ्कुरालङ्कारः। दूरान्तरवर्तिनेति सस्पृहताया हेतुत्वात्परिकरः। उद्दीपनविभावादिनोपस्थापितो विप्रलम्भः स्मृतेरङ्गमिति रसवदलङ्कारः।

इमां तटाशोकलतां च तन्वीं स्तनाभिरामस्तबकाभिनम्राम्।
त्वत्प्राप्तिबुद्ध्या परिरब्धुकामः सौमित्रिणा साश्रुरहं निषिद्धः ॥३२॥

अ०—च स्तनाभिरामस्तबकाभिनम्राम् तन्वीम् इमाम् तटाशोकलताम् त्वत्प्राप्तिबुद्ध्या परिरब्धुकामः साश्रुः अहम् सौमित्रिणा निषिद्धः।

व्याक०—स्तनाभ्यामिवाभिरामाभ्याम् (उपमितसमासः) स्तवकाभ्याम् (कर्म०) अभिनम्राम् (तत्पु०) स्तनाभिरामस्तवकाभिनम्राम्। अभिनम्रा नमते "नमिकम्पि" इति रः। तटेऽशोकः, (तत्पु०) तस्य लताम् (तत्पु०) तटाशोकलताम्। तव प्राप्तिः (तत्पु०) बुद्ध्या (तत्पु०) त्वत्प्राप्तिबुद्ध्या। परिरब्धुम् कामो यस्य स परिरब्धुकामः, परिरब्धुमिति रभतेस्तुमुन् "तु काममनसोरपि" इति तुमुनो मलोपः। अश्रुणा सह वर्तते

* कोकश्चक्रश्चक्रवाको रथाङ्गाह्वयनामकः—इत्यमरः।

इति साश्रु । सौमित्रि -सुमित्राया अपत्यमिति सुमित्राशब्दाद् ढक बाधित्वा "बाह्वादिभ्यश्च" इति इञ् । निषिद्ध -निपूर्वात् 'षिध्' धातो. कर्मणि क्त, अहमिति कर्म, सौमित्रि कर्ता । इमामिति परिरम्भणे कर्म ।

व्याख्या—किं च स्तनौ कुचाविव, अभिरामौ मनोहरौ, यौ स्तवको-गुच्छकौ, ताभ्यामभिनम्राम्-अवनताम्, तन्वीम्-कृशाम्, इमाम्-पुरोवर्तिनीम्, तटे तीरे, स्थितस्याशोकस्य लताम् शाखाम्, त्वत्-भवत्या, प्राप्तेः बुद्ध्या-भ्रान्त्या 'इयं त्वमेवासि' इति भ्रमेणेति यावत्, परिरब्धुकाम -आलिङ्गितु-मिच्छु, साश्रु -आनन्दवाष्पजलमुद्गिरन्, अहम्, सौमित्रिणालक्ष्मणेन, निषिद्ध., 'इयं सीता न' इति परिरम्भान्निवारित । यद्वा माश्रुरिति विधेय विशेषणम् । सौमित्रिणा निषिद्धोऽहम्, साश्रु -शोकेनाश्रुसहित. अभवामिति शेष । साम्रमहं निषिद्ध इति तु काचित्क पाठ सम्यक् । साम्रमिति क्रियाविशेषणम्, सौमित्रिस्तथाविधं मां दृष्ट्वाऽश्रूणि मुञ्चन्निवारयामासेति ।

भा०—त्वद्विरहव्याकुलोऽहं त्वामन्विष्यन् यदा स्तनसदृशाभ्यां कुसुम गुच्छकाभ्यां विनतामिमां पम्पातटस्थितामशोकलतामपश्यम्, तदा सादृश्यात् सीता प्राप्तेति बुद्धिर्मे जाता । तया च प्रेरित आलिङ्गितुं यावदहं कामये, तावल्लक्ष्मणो मां 'नेयं जानकी' इति सखेदं निवारयामास ।

अल०—स्तनाभिरामेत्यत्रोपमा । तन्मूलया लताया सीताभ्रान्त्या भ्रान्तिमानलङ्कारश्च । रसवदलङ्कार. पूर्ववत् ।

**अमूर्विमानान्तरलम्बिनीनां श्रुत्वा स्वनं काञ्चनकिङ्किणीनाम् ।**
**प्रत्युद्व्रजन्तीव खमुत्पतन्त्यो गोदावरीसारसपङ्क्तयस्त्वाम् ॥२२॥**

अ०—विमानान्तरलम्बिनीनाम् काञ्चनकिङ्किणीनाम् स्वनम् श्रुत्वा खम् उत्पतन्त्य अमू. गोदावरीसारसपङ्क्तय त्वाम् प्रत्युद्व्रजन्ति इव ।

व्याक०—विमानस्यान्तरेषु ( त० पु० ) लम्बन्ते ( उपा० ) इति तासां विमानान्तरलम्बिनीनाम्, लम्बिनीशब्दे लम्बतेः " सुप्यजातौ० " इति णिनि । स्वन -स्वन्धातो. " स्वनहसोर्वा " इत्यनेन विकल्पेनाप् प्रत्यय. ।

व्याख्या—विमानस्य पुष्पकस्य, अन्तरेषु-अन्तरालेषु, लम्बन्ते-अवल-

सन्ते इति तथाभूतानाम्, काञ्चनस्य-स्वर्णस्य, *किङ्किणीनाम्-क्षुद्रघण्टिकानाम्, स्वनम्-शब्दम्, श्रुत्वा आकर्ण्य, ( स्वयूथशब्दभ्रमात् ) खम्-आकाशम्, उत्पतन्त्य.-उड्डीयमाना, अमू -दृश्यमाना, गोदावर्या -गोदावरीनद्या., सारसानाम्, पङ्क्तय, त्वाम्, प्रत्युद्व्रजन्तीव स्वागतार्थं तव सम्मुखमागच्छन्तीति सम्भाव्यते।

भा०—विमानचलने विमानलम्बिनीना क्षुद्रघण्टिकाना स्वनं श्रुत्वा सादृश्यात् स्वयूथशब्दभ्रान्त्याकाशमुत्पतन्त्य इमा गोदावरीस्थाः सारसपङ्क्तयरतथा ज्ञायन्ते, यथा मन्ये तव स्वागत कर्तुं सम्मुखमायान्ति ।

अल०—सारसाना वियदुत्पतने प्रत्युद्गमनसंभावनादुत्प्रेक्षा । वियदुत्पतनञ्च किङ्किणीस्वने स्वयूथस्वनभ्रान्तिमूलमिति भ्रान्तिमानलङ्कारो व्यङ्ग्य', स चोत्प्रेक्षोपपादकत्वाद् गुणीभूत ।

**एषा त्वया पेशलमध्ययापि घटाम्बुसवर्धितबालचूता ।**
**आनन्दयत्युन्मुखकृष्णसारा दृष्टा चिरात् पञ्चवटी मनो मे ॥ ३४ ॥**

अ०—पेशलमध्यया अपि त्वया घटाम्बुसवर्धितबालचूता उन्मुखकृष्णसारा चिराद् दृष्टा एषा पञ्चवटी मे मन आनन्दयति ।

व्याक०—पेशलो मध्यो यस्यास्तया पेशलमध्यया । घटस्याम्बुना (त०) सवर्धिता ( तत्पु० ) बाला चूता ( कर्म० ) यस्या ( बहु० ) सा घटाम्बुसवर्धितबालचूता । उन्मुखा कृष्णसारा यस्या सा उन्मुखकृष्णसारा । पञ्चाना वटाना समाहारः पञ्चवटी, तदाश्रयत्वात् तत् स्थानमपि लक्षणया पञ्चवटी, " तद्धितार्थोत्तरपदसमाहारे च " इत्यनेन समासः । " अकारान्तोत्तरपदो द्विगु स्त्रियामिष्टः ", " द्विगोः " इति ङीप । आनन्दयति 'टुनदि समृद्धौ ' हेतुमण्णिच् ।

व्याख्या—पेशल.-कृशः, मध्य -कटिप्रदेशो यस्यास्तथाभूतया अपि-भारं सोढुमशक्यापीति यावत्, त्वया-भवत्या, घटाम्बुना-कलसजलेन, संवर्धिता - पोषिता, बालाः-अल्पवयस्क., चूता रसालाः, यस्या तथाभूता, उन्मुखा - ऊर्ध्वमुखा -औत्सुक्यादस्मदभिमुखा., कृष्णसारा -त्वत्पालिता कृष्णमृगाः, यस्या तथाभूता, चिराद् बहो कालाद्, दृष्टा-अवलोकिता, एषा पञ्चवटी, मे-

* किङ्किणी क्षुद्रघण्टिका ।

मम, मन , आनन्दयति-आह्लादयति ।

भा०—यत्र वयं पुरा स्थिता , यत्र त्वयातिपरिश्रम स्वस्यानुपयुक्तं सोढ्-आपि द्रुमा सिक्ता , सेय पञ्चवटी प्राप्ता । चिरादिमा दृष्ट्वा मे मानस मोदते। अत्रत्या मृगाश्चाप्यस्मान् द्रष्टुमद्याप्युत्सुका ।

अल०—पेशलमध्ययापि घटाम्बुना सेकः कृत इति विरोधः । पञ्चवट्या प्रेम व्यज्यते ।

**अत्रानुगोद मृगयानिवृत्तस्तरङ्गवातेन विनीतखेद ।**
**रहस्त्वदुत्सङ्गनिषण्णमूर्धा स्मरामि वानीरगृहेषु सुप्त ॥ ३५ ॥**

अ०—अत्र अनुगोदम् मृगयानिवृत्त तरङ्गवातेन विनीतखेद ( अहम् ) रह त्वदुत्सङ्गनिषण्णमूर्धा ( सन् ) वानीरगृहेषु सुप्त ( इति ) स्मरामि ।

व्याक०—गोदामनु इति अनुगोदम्, ' अनुर्यत्समया ' " इत्यनेनाव्ययीभाव । मृगयाया निवृत्तो मृगयानिवृत्त , ' पञ्चमी " इति योगविभगात्समास' । विनीत खेदो यस्य स विनीतखेद , खेद इति खिद्यतेर्घञ् । तवोत्सङ्गे ( त० पु० ) निषण्णो मूर्धा यस्य (बहु०) स त्वदुत्सङ्गनिषण्णमूर्धा। उत्सङ्ग इति उत्सजन्त्यस्मिन्निति विग्रहे ' हलश्च " इति घञ् । सुप्त-ञिष्वप् शये ' इत्यत कर्तरि क्त । " वचिस्वपि ' " इत्यनेन सम्प्रसारणम् । तरङ्गवातेनेति विनयनकर्तरि तृतीया । रह इति "देश कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञक " इति कर्मत्वम् । सुप्त इत्यन्तस्य वाक्यस्यार्थ स्मरणे कर्म ।

व्याख्या—अत्र-पञ्चवट्याम् , अनुगोदम गोदावरीतारे, मृगयाया - आखेटकाद् , निवृत्त-विरत , तरङ्गाणाम्-वीचीनाम् , वातेन वायुना, तरङ्गसीकरसिक्तेन शीतलेन समीरेण, विनीत दूरीकृत , खेदः श्रम यस्य तथाभूत , अहम् , रह -एकान्ते, तव-भवत्या , उत्सङ्गे क्रोडे, निषण्ण स्थित , मूर्धा शिरः, यस्य तथाभूत सन् , वानीरगृहेषु-वञ्जुललतामण्डपेषु, सुप्त शयित इति स्मरामि ।

भा०—हे प्रिये ! यदत्र गोदावरीतारे शीतल पवनो मृगयाजनिता मे श्रान्तिमपनिनाय, किञ्चैकान्ते त्वदङ्के शिरो निधाय बहुशः सुखमस्वाप्सम् इति

सर्वं पूर्ववृत्त मया पञ्चवटी दृष्ट्वा स्मर्यते ।

अलं०—स्मर्यमाणाः सम्भोगशृङ्गारस्य विभावानुभावा स्मृतेरङ्गता यान्ति स्मृतिस्तु शब्दवाच्येति न भावध्वनि । स्मृतिरिदानीं रति पुष्णातीति विभावरूपताया पर्यवसानम् ।

**भ्रूभेदमात्रेण पदान्मघोनः प्रभ्रंशया यो नहुषं चकार ।**
**तस्याविलाम्भःपरिशुद्धिहेतोर्भौमो मुनेः स्थानपरिग्रहोऽयम् ॥३६॥**

अ०—यः भ्रूभेदमात्रेण नहुषम् मघोन पदात् प्रभ्रंशयांचकार, तस्य आविलाम्भःपरिशुद्धिहेतो. मुने अयम् भौम. स्थानपरिग्रह (अस्ति)।

व्याक०—भ्रुवो भेदेन (तत्पु०) एव (मयूरव्यंसकादि तत्पु०) भ्रूभेदमात्रेण । आविलस्य अम्भसः (कर्म०) परिशुद्धे, हेतोः आविलाम्भ - परिशुद्धिहेतो, परिशुद्धि 'शुध्' धातो क्तिन् । स्थानमेव परिग्रह स्थानपरिग्रह', परिग्रह इति गृह्णातेरप्प्रत्यय । प्रभ्रंशयाञ्चकार इति प्रपूर्वाद्भ्रंशधातोर्णिजन्ताल्लिटि कृञोऽनुप्रयोग., यद्यपि कृञादीनामनुप्रयोगोऽव्यवधानेनैव विहित इति मध्ये यच्छब्दप्रयोगो न समञ्जस, तथापि निरङ्कुशा कवय, यद्वा-प्रभ्रंश यातीति प्रभ्रंशया, विश्वपावत्, त प्रभ्रंशयामिति द्वितीयान्त चकारेत्यस्य कर्मतया व्याख्येयम् ।

व्याख्या—य -मुनि., भ्रूभेदमात्रेण भ्रूभङ्गेनैव, नहुष राजानम्, मघोन -इन्द्रस्य, पदात् स्थानाद् अधिकारात्, प्रभ्रंशयाञ्चकार-प्रच्यावयति स्म, तस्य, आविलस्य वर्षर्तुना पङ्किलस्य, अम्भस -जलस्य, परिशुद्धे· प्रसादस्य, हेतो -निदानस्य, मुने -अगस्त्यस्य, अयम्-पुरोदृश्यमान, भौम भूमिष्ठ, स्थानपरिग्रह -आश्रमपदम्, अस्ति-इति शेषः । तेन दिवि तस्य पर स्थानमिति सूचितम् । वर्षाकालादनन्तरमगस्त्यस्य (तन्नाम्न्यास्तारायाः) उदये जल स्वच्छ भवतीति प्रकृतिनियम. ।

भा०—य· खलु भ्रुकुटिक्षेपमात्रेण नहुषमिन्द्रपदात् प्रच्यावयति स्म, यस्य चोदये सरित्कासारादयः सर्वे जलाशया स्वच्छा जायन्ते, तस्यागस्त्यमुनेस्तारारूपेण दिवि स्थितस्यापि भूम्यामयमाश्रमो विद्यते ।

अल०—अत्र वर्ण्यमानाश्रमाङ्गतयागस्त्यमुनिवर्णनेनोदात्तालङ्कार. ।

त्रेताग्निधूमाग्रमनिन्द्यकीर्तेस्तस्येदमाक्रान्तविमानमार्गम्।
घ्रात्वा हविर्गन्धि रजोविमुक्तः समश्नुते मे लघिमानमात्मा ॥३७॥

अ०—अनिन्द्यकीर्तेः तस्य आक्रान्तविमानमार्गम् हविर्गन्धि इदम् त्रेताग्निधूमाग्रम् घ्रात्वा रजोविमुक्तः मे आत्मा लघिमानम् अश्नुते।

व्याक०—न निन्द्या कीर्तिर्यस्य तस्यानिन्द्यकीर्तेः, निन्द्या-निन्दतेर्ण्यत्। आक्रान्तो विमानस्य मार्गो (तत्पु०) येन (बहु०) तदाक्रान्तविमानमार्गम्, आक्रान्तः-क्रमुधातोः क्तः। हविषो गन्धः हविर्गन्धः, सोऽस्मिन्नस्तीति हविर्गन्धि "अत इनिठनौ" नान्तस्य द्वितीयैकवचनम्। रजसा विमुक्तः-रजोविमुक्तः। "कर्तृकरणे कृता बहुलम्" इति तृतीयातत्पुरुषः। लघिमानम्-लघुशब्दात् "पृथ्वादिभ्य इमनिज्वा" इत्यनेन इमनिच् प्रत्ययः। त्रेताग्नेः, धूमस्य (ष० त०) अग्रम्, त्रेताग्निधूमाग्रम्, त्रेता त्रयाणां भावस्त्रेता, पृषोदरादित्वादेत्वम्, तदाश्रयत्वादग्नयोऽपि 'त्रेता' इति व्यपदिश्यन्ते।

व्याख्या—अनिन्द्या-निन्दितुमयोग्या, महनीयेति यावत्, कीर्तिः यशो यस्य तथाभूतस्य, तस्य-अगस्त्यमुनेः, आक्रान्तः व्याप्तः, विमानस्य पुष्पकस्य, मार्गः-पन्था येन, तथाभूतम्, हविषः हुतद्रव्यस्य, गन्धः-सौरभं यस्मिन्नस्तीति तथाभूतम्, इदम्, त्रेताग्नेः गार्हपत्याहवनीयदक्षिणाग्निनामभिः ख्यातस्य श्रौताग्नित्रितयस्य यो धूमः, तस्याग्रम् अग्रभागम्, घ्रात्वा-आघ्राय, रजोविमुक्तः-रजोगुणरहितः, मे मम, आत्मा-अन्तःकरणम्, लघिमानम्-लघुत्वगुणम्, सत्त्वोत्कर्षम् (लघुत्वस्य † सत्त्वकार्यत्वात्) समश्नुते प्राप्नोति।

भा०—हे प्रिये! आहिताग्नेस्तस्यागस्त्यस्याश्रमतो निर्गतं विमानमार्गे सञ्चरन्तम् हविर्गन्धेन सुगन्धिमिमं धूममाघ्राय मे मनसि सत्त्वगुणोद्रेको जायते।

अल०—'आश्रमेऽग्नयो हूयन्ते' इति कारणे प्रस्तुते कार्याभिधानादप्रस्तुतप्रशंसा। आश्रमस्य पावनत्वातिशयो व्यङ्ग्यः।

एतन्मुनेर्मानिनि शातकर्णेः पञ्चाप्सरो नाम विहारवारि।

---

* अग्नित्रयमिदं त्रेता—इत्यमरः।

† सत्त्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलं च रजः—इति साङ्ख्यतत्त्वकौमुदी।

**आभाति पर्यन्तवन विदूरान्मेघान्तरालक्ष्यमिवेन्दुबिम्बम् ॥ ३८ ॥**

अ०—मानिनि ! शातकर्णे मुने, पञ्चाप्सरोनाम पर्यन्तवनम् एतद् विहार-वारि विदूराद् मेघान्तरालक्ष्यम् इन्दुविम्बमिव आभाति ।

व्याक०—पञ्चाप्सरसो यत्र तत् पञ्चाप्सर, पञ्चाप्सर इति नाम यस्य तत् पञ्चाप्सरोनाम । नाम इति पृथक् पद वा प्रसिद्धार्थकम् । विहारार्थं वारि विहारवारि, विहार इति हरतेर्घञ् । पर्यन्तेषु वनानि यस्य तत् पर्यन्तवनम् । मेघानामन्तरे ( तत्पु० ) आलक्ष्यम्, (तत्पु०) मेघान्तरालक्ष्यम् । मानिनि-मानशब्दाद् इनिर्मत्वर्थाय, तदन्ताद् "ऋन्नेभ्यो ङीप्", तत्सम्बुद्धौ मानिनि । शातकर्णि -शतकर्णशब्दाद् "अत इञ्" इत्यपत्यार्थ इञ् ।

व्याख्या—हे मानिनि ! मानशीले ! शातकर्णे शतकर्णस्यापत्यं पुमान् शातकर्णि, तस्य, मुने, पञ्चाप्सरोनाम-पञ्चाप्सर इति नाम्ना प्रसिद्धम्, पर्यन्तेषु प्रान्तभागेषु, वनानि-अरण्यानि यस्य तथोक्तम्, एतत्-पुरोवर्ति, विहार-वारि-विहारार्थम्-क्रीडार्थम्, वारि-जलम्, क्रीडासर इति यावद्, विदूराद्-दूर-देशाद्, मेघानाम्-घनानाम्, अन्तर-मध्ये, आलक्ष्यम् ईषद्दृश्यम्, इन्दो -चन्द्रमस, विम्वम्-मण्डलमिव, आभाति शोभते ।

भा०—शातकर्णिमुनेरेतत् क्रीडासरो वृक्षमध्यगतं दूरात् तथा दृश्यते यथा मेघान्तराले चन्द्रमा दृश्येत ।

अल०—उपमा ।

**पुरा स दर्भाङ्कुरमात्रवृत्तिश्चरन्मृगै साधमृषिर्मघोना ।**
**समाधिभीतेन किलोपनीत पञ्चाप्सरोयौवनकूटवन्धम् ॥ ३९ ॥**

अ०—पुरा दर्भाङ्कुरमात्रवृत्तिः मृगै सार्धम् चरन् स ऋषि समाधि-भीतेन मघोना पञ्चाप्सरोयौवनकूटवन्धम् उपनीत किल ।

व्याक०—दर्भाणाम् अङ्कुरा ( तत्पु० ) एव ( मयूर० ) वृत्तिर्यस्य ( बहु० ) स दर्भाङ्कुरमात्रवृत्ति । समाधेर्भीतेन समाधिभीतेन, "भयभीत-भीतिभीभिरिति वाच्यम्" इति पञ्चमीतत्पुरुष । समाधि "करणाधिकरण-योश्च" इति धा धातो कि । पञ्चानामप्सरसा यौवनम् पञ्चाप्सरोयौवनम्,

* आ ईषदर्थेऽभिव्याप्तौ—इत्यमर ।

"तद्धितार्थोत्तरपद · ·" इत्यनेनोत्तरपदे द्विगुसमास, तदेव कूटबन्ध पञ्चाप्सरोयौवनकूटबन्धम् । मृगैः सार्धम्-"सहयुक्तेऽप्रधाने" इत्यनेन तृतीया ।

व्याख्या—पुरा-पूर्वस्मिन् काले, दर्भाणाम्-कुशानाम्, अङ्कुरा -प्ररोहा एव वृत्ति -जीवनोपाय, यस्य तथाभूत, मृगैः, सार्धम्-सह, चरन् इतस्ततो विहरन्, स -पूर्ववर्णित., ऋषि -शातकर्णि, समाधे -योगात् तपस इति यावद् भीतेन-भयवता, मघोना इन्द्रेण पञ्चानामप्सरसाम्-स्वर्वेश्यानाम्, यौवनम एव कूटबन्धः-कूटयन्त्रम, तद्, उपनीत -प्रापित, किलेत्यैतिह्ये ।

भा०—अत्रेदमैतिह्यमाचक्षते लोका -यत् पुरा किल स शातकर्णिर्ऋषि-र्मृगैः सह चरन् दर्भाङ्कुरैश्च प्राणयात्रा निर्वहन् महत्तपस्तेपे । तत्तपोभीत-श्चेन्द्रो वागुरासदृशीभिर्युवतिभि पञ्चभिरप्सरोभिस्त प्रलोभ्य तपोमार्गाद् भ्रंश यति स्म ।

अल०—यौवने कूटबन्धत्वारोपाद्रूपकम् । मृगवद्‌वृत्त्या मृगसहचारेण च तस्मिन्नृषौ मृगत्वारोपो व्यङ्ग्य, तत एव च मृगवदेव तस्य बन्ध उपपा-दित इति ।

**तस्यायमन्तर्हितसौधभाजः प्रसक्तसङ्गीतमृदङ्गघोष ।**
**वियद्गतः पुष्पकचन्द्रशाला क्षण प्रतिश्रुन्मुखरा करोति ॥ ४० ॥**

अ०—अन्तर्हितसौधभाज तस्य अयम् प्रसक्तसगीतमृदङ्गघोष वियद्गत (सन्) पुष्पकचन्द्रशाला क्षणम् प्रतिश्रुन्मुखरा करोति ।

व्याकु०—अन्तर्हित सौध भजतीति तस्य अन्तर्हितसौधभाज, अन्त-रित्यत्र भजते. "भजो ण्वि" । सङ्गीते मृदङ्गस्य घोष सङ्गीतमृदङ्गघोष । प्रसक्तश्चासौ सङ्गीतमृदङ्गघोष (कर्म०) इति । प्रसक्त -प्रसजतेः क्त । सङ्गी-तम्-सपूर्वाद् 'गै शब्दे' धातो क्त, "आदेच उपदेशे " इत्यात्वम् "घुमास्थागापा ·" इतीत्वम् । प्रतिश्रवण प्रतिश्रुत्, तया मुखरा. प्रति-श्रुन्मुखराः, प्रतिश्रुत्-प्रतिपूर्वाच्छ्रुधातोर्भावे 'सम्पदादिभ्य क्विप्", मुखरा -मुखशब्दाद् "रप्रकरणे खमुखकुञ्जेभ्य उपसख्यानम्" इत्यनेन र. ।

व्याख्या—अन्तर्हितम्-दृष्टेरविषय जलान्तर्गतम्, सौधम् प्रासादम्, भजति य, तथाभूतस्य तस्य-शातकर्णे, अयम्-श्रूयमाणः, प्रसक्त -सन्ततः,

सङ्गीते गानादौ, मृदङ्गस्य-वाद्यविशेषस्य घोष.-शब्द, वियद्-आकाशम्, गत - प्राप्त सन्, पुष्पकस्य-अस्मद्विमानस्य, * चन्द्रशालाः-शिरोगृहाणि, क्षणम्, † प्रतिश्रुता-प्रतिध्वनिना, मुखरा. शब्दवती, करोति-विदधाति ।

भा०—पूर्वोक्त स शातकर्णिमुनिर्जलान्तर्गते प्रासादे तपसा कल्पिते स्वैरदृष्टो निवसति । तत्राप्सरोभिः सङ्गीतेन रममाणस्य तस्य मृदङ्गघोषो वियति प्रसरन्नस्मद्विमानेऽपि प्राप्तः, विमानस्योच्चभागस्तेन शब्दायमानो जात, परं विमानवेगात् क्षणमात्रमेवैषा घटना समपद्यत ।

अल०—कार्यमुखेन निरन्तरं जायमानस्य सङ्गीतादे. प्रत्यायनादप्रस्तुत-प्रशसा । अपरत्यन्त भोगप्रसक्तो व्यङ्ग्य ।

**हविर्भुजामेधवतां चतुर्णां मध्ये ललाटन्तपसप्तसप्तिः ।**
**असौ तपस्यत्यपरस्तपस्वी नाम्ना सुतीक्ष्णश्चरितेन दान्तः ॥ ४१ ॥**

अ०—नाम्ना सुतीक्ष्ण चरितेन दान्त असौ अपर तपस्वी एधवताम् चतुर्णाम् हविर्भुजाम् मध्ये ललाटन्तपसप्तसप्ति ( सन् ) तपस्यति ।

व्याक०—हवि भुञ्जत इति तेषा हविर्भुजाम्, भुनक्ते' कर्तरि क्विप् । ललाट तपतीति ललाटन्तपः, " असूर्यललाटयोर्दृशितपो. " इति खश्, खित्त्वान्नुमागम । सप्त ‡ सप्तयो यस्य स सप्तसप्ति', ललाटन्तप. सप्तसप्ति-र्यस्य स ललाटन्तपसप्तसप्ति । एधवताम् एधशब्दात् " तदस्यास्त्यस्मिन् · " इत्यनेन मतुप् । तपस्यति-तपश्शब्दात् "कर्मणो रोमन्थतपोभ्या वर्तिचरोः " इत्यनेन क्यङ्, " तपस. परस्मैपद च " इति परस्मैपदम् । तपस्वी तप-श्शब्दात् " अस्मायामेधा " इत्यादिना विनि. । दान्त. ' दमु धातो. ' क्त । नाम्ना, चरितेन, उभयत्र " प्रकृत्यादिभ्य उपसख्यानम् " इत्यनेन तृतीया ।

व्याख्या—नाम्ना-अभिधानेन, सुतीक्ष्ण., सुतीक्ष्णाभिध इति यावत्, चरितेन-आचारेण, दान्त -सौम्य, असौ, अपरः, तपस्वी-तापस, एधवताम्-

* चन्द्रशाला शिरोगृहम्-इति हलायुध ।

† स्त्री प्रतिश्रुत् प्रतिध्वाने—इत्यमरः ।

‡ वाजिवाहार्वगन्धर्वहयसैन्धवसप्तय.—इत्यमर. ।

*एध·-इन्धनम्, तद्वताम्, इन्धनैः प्रज्वलताम्, चतुर्णाम् चतुर्दिगवस्थितानाम्, हविर्भुजाम्-अग्नीनाम, मध्ये-अन्तराले, ललाटन्तप -शिरस्तापक·, पञ्चमाग्नि स्थानीय·, सप्तसप्ति सूर्यो यस्य तथाभूतः सन, तपस्यति तपश्चरति ।

भा०—असौ सुतीक्ष्णाभिधस्तपस्वी चतसृषु दिक्षु प्रज्वलतश्चतुरोऽग्नीन प्रतिष्ठाप्य, वियद्गत चण्डरश्मि सूर्यं पञ्चममग्नि मत्वा तन्मध्ये स्थित पञ्चाग्नि तपस्यामाचरति । नाममात्रमस्य सुतीक्ष्ण इति कर्माणि तु पर सौम्यानि, न हि कदाप्यस्य क्रोध इति ।

अल०—अभिधानक्रिययोर्विरोधप्रदर्शनाद्विरोधालङ्कृति ।

**अमुं सहासप्रहितेक्षणानि व्याजार्धसंदर्शितमेखलानि ।**
**नाल विकर्तुं जनितेन्द्रशङ्क सुराङ्गनाविभ्रमचेष्टितानि ॥ ४२ ॥**

अ०—जनितेन्द्रशङ्कम् अमुम् सहासप्रहितेक्षणानि व्याजार्धसंदर्शितमेखलानि सुराङ्गन विभ्रमचेष्टितानि विकर्तुम् अलम् न ( बभूवु )।

व्याक०—जनिता इन्द्रस्य शङ्का ( त० पु० ) येन ( बहु० ) त जनितेन्द्रशङ्कम् । जनितेति णिजन्ताज्जनयतेः क्त । हासेन सह ( अव्य० ) प्रहितानि ( केव० ) ईक्षणानि येषु ( बहु० ) तानि सहासप्रहितेक्षणानि । अर्धं संदर्शिता, अर्धसंदर्शिता, केवलसमास, व्याजेनार्धसंदर्शिता (त० पु०) मेखला येषु ( बहु० ) तानि व्याजार्धसंदर्शितमेखलानि । विभ्रम इति भ्रमतेर्घञ् । उदात्तोपदेशत्वाद् वृद्धिनिषेध । अङ्गना-अङ्गशब्दाद ' अङ्गात् कल्याणे " इति मत्वर्थीयो नकार, ' अजाद्यतष्टाप् " । चेष्टितम् ' नपुंसके भावे क्त " विकर्तुम् पर्याप्तिवचनेऽलमुपपदे करोते -" पर्याप्तिवचनेष्वलमर्थेषु " इति तुमुन्, अमुमिति तुमुनन्ते कर्म ।

व्याख्या—जनिता-उत्पादिता, ( तपसेति शेष ) इन्द्रस्य-सुरपते, शङ्का-भय येन, तथाभूतम्, अमुम्-सुतीक्ष्णम्, सहासम् सस्मितम्, प्रहितानि नि क्षिप्तानि, ईक्षणानि दृष्टय, ( कटाक्षा ) येषु तथाभूतानि, कटाक्षविशिष्टानि, व्याजेन केनचिन्मिषेण, अर्धम्-ईषत्, संदर्शिता मेखला रशना येषु तथाभूतानि

* काष्ठ दार्विन्धन त्वेध —इत्यमर

सुराङ्गनानाम् दिव्यस्त्रीणाम् विभ्रमचेष्टितानि * विभ्रमेण-विलासेन सहितानि, सविलासानि, विलासरूपाणि वा, चेष्टितानि व्यापाराः, विकर्तुम्-स्खलयितुम्, अलम् समर्थानि न, बभूवुरितिशेषः।

भा०—एतत्तपोभीत सुरराज एनं तपोमार्गाद् भ्रंशयितुकामः, एतत्सविधे सुरसुन्दरीः प्रेषयामास. परं तासां सस्मयकटाक्षपातादयो मिषेण सुन्दराङ्गदर्शनादयश्च विलासा नास्य मनसि मनागपि विकारमुत्पादयितुमशक्नुवन्।

अल०—उद्दीपनहेतौ सत्यपि तत्कार्याभावाद्विशेषोक्तिः। जनितेन्द्रशङ्कमिति सुराङ्गनानां सहासप्रहितेक्षणादौ साभिप्रायमिति परिकरः। मुनिगता धृतिः प्राधान्येन व्यज्यत इति भावध्वनिः। सुराङ्गनानां शृङ्गाराभासस्तदङ्गमिति ऊर्जस्विदलङ्कारः।

**एषोऽक्षमालावलयं मृगाणां कण्डूयितारं कुशसूचिलावम्।**
**सभाजने मे भुजमूर्ध्वबाहुः सव्येतरं प्राध्वमितः प्रयुङ्क्ते ॥ ४३ ॥**

अ०—ऊर्ध्वबाहुः एषः अक्षमालावलयम् मृगाणाम् कण्डूयितारम् कुशसूचिलावम् सव्येतरम् भुजम् मे सभाजने इतः प्राध्वम् प्रयुङ्क्ते ॥

व्याक०—ऊर्ध्वौ बाहू यस्य स ऊर्ध्वबाहुः। अक्षाणां मालैव वलयं यस्य तमक्षमालावलयम्। कुशा एव सूचयः, ता लुनाति तं कुशसूचिलावम्, लुनातेः कर्मण्यण्। सव्येतरम्-सव्यादितरम्। कण्डूयितारम् 'कण्डूञ् गात्रविघर्षणे' कर्तरि तृच्, कण्ड्वादित्वाद्यक्। सभाजने-सभाजधातोश्चौरादिकाल्ल्युट्, "निमित्तात्कर्मयोगे" इत्यनेन सप्तमी। प्राध्वमित्यव्ययम्। प्रयुङ्क्ते-'युजिर् योगे' इति रौधादिकाल्लट्, "प्रोपाभ्यां " इत्यात्मनेपदम्। इतः-'इदम्' शब्दात्सप्तम्यर्थे सार्वविभक्तिकस्तसि। मृगाणामिति कण्डूयनकर्मणि षष्ठी "कर्तृकर्मणोः कृति"।

व्याख्या—ऊर्ध्वौ-उच्चैः स्थितौ, ऊर्ध्वमुत्थापितौ, बाहू भुजौ यस्य तथाभूतः, एषः-मुनीश्वरः, अक्षाणाम् रुद्राक्षाणाम्, मालैव जपमालैव, वलयम्-कङ्कणं यस्य तथाभूतम्, मृगाणाम्, कण्डूयितारम् खर्जूः अपनोदयितारम्, कुशाः-दर्भा एव सूचयः, ताः-तीक्ष्णान् कुशान्, लुनाति-छिनत्ति यस्तम्, सव्याद्-

* चेष्टाप्रकारे शङ्कायां च विभ्रमः—इत्यमरः।

वामाद्-इतरम्-अन्यम्, दक्षिणमिति यावत्, भुजम्, मे-मम, सभाजने सभाजननिमित्तम्, अभिनन्दनाय, इत -अस्या दिशि, प्रा ञ्चम् आनुकूल्येन बन्ध*-सन्निवेशो यथा स्यात्तथा, प्रयुङ्क्ते व्यापारयति।

भा०—बाहू ऊर्ध्वौ कृत्वा तपश्चरन्नेष सुतीक्ष्णो मुनिर्मां सभाजयितु दक्षिणभुजमस्मदभिमुखं सभाजनानुकूलया मुद्रया व्यापारयति। तत्र भुजे जपार्थमक्षमाला शोभते, येन भुजेन दयापरवशो मृगान् काले कण्डूयति, वैदिककर्मानुष्ठानार्थं कुशाश्च येन लुनाति। बाहो पवित्रकर्मनिष्ठता विशेषण-मुक्ता। तेन च तादृशेन भुजेन सभाजनप्राप्त्या स्वस्य सौभाग्य द्योत्यते।

अल०—भुजस्य पवित्रकर्मपरतायाः विशेषमुखेनाख्यानादप्रस्तुतप्रशंसा। मुनिगत रामविषयक वात्सल्य व्यङ्ग्यम्।

**वाचयमत्वात् प्रणतिं ममैष कम्पेन किंचित् प्रतिगृह्य मूर्ध्नः।**
**दृष्टिं विमानव्यवधानमुक्तां पुनः सहस्रार्चिषि संनिधत्ते ॥४४॥**

अ०—एष वाचयमत्वाद् मम प्रणतिम् मूर्ध्नः किञ्चित् कम्पेन प्रतिगृह्य विमानव्यवधानमुक्ताम् दृष्टिम् पुनः सहस्रार्चिषि सन्निधत्ते।

व्याक०—व्रतेन वाचं यच्छतीति वाचयमः, तस्य-भावस्तत्त्वम्, तस्मात् वाचयमत्वात्। "वाचि यमो व्रते" इति 'यम्' धातोः खच्, "वाचयम-पुरन्दरौ च" इति पूर्वपदस्यामन्तत्व निपात्यते। विमानेन व्यवधानात् (त०) मुक्ता विमानव्यवधानमुक्ताम् 'अपेतापोढमुक्त ' इत्यादिना पञ्चमीतत्पुरुष। व्यवधानमिति व्यवाभ्या परस्य दधातेर्ल्युट्। मुक्ताशब्दे मुच्यते क्त। सहस्रमर्चींषि यस्य तस्मिन् सहस्रार्चिषि। प्रणति -प्रपूर्वान्नमते क्तिन्। कम्प -कम्पतेर्घञ्। सन्निधत्ते-धाधातोर्लडात्मनेपद च, दृष्टिमित्यस्य कर्म। यद्यपि सन्निधानार्थे धाधातुरकर्मकः, तथाप्यत्र व्याख्योक्त स्थापनमर्थ-मभ्युपगम्य सकर्मकत्वमस्य समाधेयम्।

व्याख्या—एष -सुतीक्ष्ण, वाचयमत्वाद्-मौनव्रतित्वात्, मम-प्रणतिम्-प्रणामम्, मूर्ध्न -शिरस, किञ्चित्-ईषत्, कम्पेन-चालनेन, प्रतिगृह्य-स्वीकृत्य विमानेन-पुष्पकेण, व्यवधानम्-विच्छेद, तस्मान्मुक्ताम्-च्युताम्, दृष्टिम्-दर्शन,

---

* आनुकूल्यार्थक प्राञ्चम्—इत्यमर।

पुन -भूय , सहस्रम्-सहस्रसख्याकानि, अर्चीषि-रश्मयो यस्य तथाभूते, सूर्ये, सनिधत्ते-सम्यक् स्थापयति, वध्नातीत्यर्थ ।

भा०—यतोऽय सुतीक्ष्णो मौनव्रती, अतो मम प्रणामं शिर कम्पेनैव प्रत्यग्रहीत्, न तु वाचाशिष प्रायुङ्क्त। अस्मद्विमानेन च मध्यगतेनास्य सूर्यसलग्ना दृष्टिर्व्यवहिताभूत्, तच्चलिते विमाने पुनरेष दृष्टिं यथापूर्वं सूर्ये मङ्क्षयति।

अल०—मूर्धकम्पेन प्रणतिग्रहणे समुचितस्य हेतोरुपनिवन्धात्का-व्यलिङ्गम्।

**अद शरण्य शरभङ्गनाम्नस्तपोवन पावनमाहिताग्नेः।**
**चिराय सतर्प्य समिद्भिरग्नि यो मन्त्रपूतां तनुमप्यहौषीत् ॥४५॥**

अ०—शरण्यम् पावनम् अद शरभङ्गनाम्नः आहिताग्नेः (मुने) तपोवनम् (अस्ति) य, चिराय अग्निम् समिद्भि सतर्प्य मन्त्रपूताम् तनुम् अपि अहौषीत।

व्याक०—शरभङ्ग इति नाम यस्य, तस्य शरभङ्गनाम्न। आहितोऽग्निर्येन तस्याहिताग्नेः, पावनम् णिजन्तात् 'पूङ् पवने' धातोर्नन्द्यादित्वाल्ल्युः। सतर्प्य-सपूर्वात्तर्पयतेर्ल्यप्। अहौषीत् 'हु दानादानयोः' लुङ्, "सिचि वृद्धि" इति वृद्धि।

व्याख्या—शरण्यम् शरणे प्राणिना रक्षणे. साधु, पावनम्-पावयतीति पावनम्-पवित्रकरम, अद -दूरे दृश्यमानम्, शरभङ्गनाम्न शरभङ्ग इति नाम्ना प्रसिद्धस्य, आहिताग्ने -आहित., विधिपूर्वकं स्थापित., अग्नि, येन तथाभूतस्य, अहरहरग्निहोत्र जुह्वत, मुने., तपोवनम् तपश्चर्यारण्यम्, अस्तीति शेष। य शरभङ्ग, चिराय चिरकाल यावद्, अग्निम्-वह्निम्, समिद्भि-काष्ठैः, सतर्प्य-प्रीणयित्वा, मन्त्रै -ऋगादिभि, पूताम्-पवित्राम्, तनुम्-स्वशरीरमपि, अहौषीत् हुतवान्।

भा०—यथा पूता समिधोऽग्नौ हूयन्ते, तथा मन्त्रपूतं शरीरमपि शरभङ्गेनाहुतमिति रामायणे प्रसिद्धा कथा, तस्य शरभङ्गस्येदं तपोवनम्।

अल०—शरभङ्गमहत्त्वस्याश्रमवर्णनाङ्गत्वादुदात्तालङ्कार.।

छायाविनीताध्वपरिश्रमेषु भूयिष्ठसम्भाव्यफलेष्वमीषु।

**तस्यातिथीनामधुना सपर्या स्थिता सुपुत्रेष्विव पादपेषु ॥४६॥**

अ०—अधुना अतिथीनाम् सपर्या छायाविनीताध्वपरिश्रमेषु भूयिष्ठसंभाव्यफलेषु अमीषु तस्य सुपुत्रेष्विव पादपेषु स्थिता ।

व्याक०—छायया विनीत ( तत्पु० ) अध्वन परिश्रम ( तत्पु० ) यैः ( वहु० ) तेषु छायाविनीताध्वपरिश्रमेषु । भूयिष्ठानि संभाव्यानि फलानि येषां तेषु भूयिष्ठसंभाव्यफलेषु, भूयिष्ठम् चतुर्दशे पद्ये गतम् , संभाव्यम्-संपूर्वकारिणजन्ताद्भूधातोः "अचो यत्"। अधुना-"इदम्" शब्दाद् ' अधुना" इति सूत्रेणाधुना प्रत्ययः, 'इदम इश्" "यस्येति च" इति इलोप । सपर्या-'सपर् पूजायाम्' कण्ड्वादित्वाद् यक् । 'अ प्रत्ययात्" इत्यनेनाकार-प्रत्यय । पादपा-पादैः पिबन्तीति पादपा ' सुपि" इति योगविभागात्क ।

व्याख्या—अधुना इदानीम , अतिथीनाम्-शरभङ्गस्याश्रम प्राप्तानाम्, सपर्या-पूजासत्कार , छायया, विनीतः-दूरीकृत , अध्वपरिश्रम -मार्गश्रान्तिः, यैस्तथाभूतेषु, भूयिष्ठानि-बहुतमानि, संभाव्यानि-श्लाघ्यानि, फलानि येषां तथाभूतेषु, अमीषु, दृश्यमानेषु, तस्य शरभङ्गस्य, सुपुत्रेष्विव-सुपुत्रसदृशेषु, पादपेषु-आश्रमवृक्षेषु, स्थिता-आयत्तास्ति ।

भा०—यद्यपि शरभङ्गस्याश्रमे इदानीं कोऽपि न निवसति, तथापि तत्पुत्रकल्पा इमे पादपा अस्मिन्नाश्रमे समागतान् अतिथीन् घनच्छायया मधुरैः फलैश्च सत्कुर्वन्ति । सद्गृहेषु अतिथिपरिचरण कदाचिदपि नोच्छिद्यते-इत्यभिसंधिः ।

अल०—पादपेषु पुत्रसादृश्यबोधनादुपमा । छायेत्यादि विशेषणद्वयस्य साभिप्रायत्वात्परिकरः । सपर्याकर्तुरभावेपि सपर्यावर्णनाद्विभावना च । पूर्वरूप वा कुवलयानन्दमते, तदुक्तम् ' पूर्वावस्थानुवृत्तिश्च विकृते सति वस्तुनि " इति ।

**धारास्वनोद्गारिदरीमुखोऽसौ शृङ्गाग्रलग्नाम्बुदवप्रपङ्कः ।**
**बध्नाति मे बन्धुरगात्रि ! चक्षुर्दृप्तः ककुद्मानिव चित्रकूटः ॥४७॥**

अ०—हे बन्धुरगात्रि ! धारास्वनोद्गारिदरीमुखः शृङ्गाग्रलग्नाम्बुदवप्रपङ्कः असौ चित्रकूटः दृप्तः ककुद्मानिव मे चक्षुः बध्नाति ।

व्याक०—वन्धुरं गात्रं यस्या सा वन्धुरगात्री, "अङ्गगात्रकण्ठेभ्यो वक्तव्यम्" इति गात्रशब्दात् ङीष् । दरी मुखमिवेति दरीमुखम्, ( उपमित समा० ) धाराणा स्वनमुद्गिरतीति धारास्वनोद्गारि, धारास्वनोद्गारि ( उपपद० ) दरीमुख यस्य ( वहु० ) स धारास्वनोद्गारिदरीमुख । स्वनशब्दे स्वनते "स्वनहसोर्वा" इत्यप् । उद्गारि इति गृणातेर्णिनि । वप्रस्य पङ्को वप्रपङ्क, अम्वुदो वप्रपङ्क इव इति अम्बुदवप्रपङ्कः (उपमित स०) शृङ्गस्याग्रे (तत्पु०) लग्न ( तत्पु० ) अम्वुदवप्रपङ्को यस्य (वहु०) स शृङ्गाग्रलग्नाम्वुदवप्रपङ्क । लग्नशब्दे लगतेर्निष्ठा, "क्षुब्धस्वान्तध्वान्तलग्न ..." इत्यनेन इडभावो निष्ठानत्व च निपात्यते । अम्बुद-अम्बु ददातीति ददातेः "आतोऽनुपसर्गे क." । चित्राणि कूटानि यस्य स चित्रकूट । योगरूढोऽयं शब्दः । दृप्त- इति दृप्यते. क्त । ककुद्मानिति ककुदशब्दान्मतुप्, ककुद विद्यते यस्य स ककुद्मान् इति । ककुदम्-वृषभस्य स्कन्धमूले स्थित उन्नत मासास्थिपिण्ड. ।

व्याख्या—हे वन्धुरगात्रि ! *वन्धुरम्-यथायथमुन्नतानतम्, गात्र-शरीरम्, यस्यास्तथाभूते-शोभनाङ्गि !, धाराणाम्-निर्झरधाराणाम्, स्वनम्-ध्वनिम्, उद्गिरन्ती-उद्वमन्ती-प्रकटयन्ती, दरी-गुहा, मुखमिव-मुखसदृशी यस्य तथाभूत । ( शृङ्गसदृशस्य ) शृङ्गस्य-शिखरस्य, अग्रे-शिरोभागे, लग्न-ससक्त, अम्वुद मेघः, वप्रपङ्कइव-वप्रक्रीडाप्रसङ्गे लग्नेन कर्दमेन सदृशो यस्य तथाभूत, असौ दृश्यमान, चित्रकूट -चित्रकूटाख्यो गिरि., दृप्त.-गर्वित., ककुद्मान्-वृषभइव, मे मम, चक्षु -नेत्रम, वध्नाति अनन्यासक्तं करोतीत्यर्थ ।

भा०—हे सीते ! दृप्तवृषभ इव शोभमान एष चित्रकूटो गिरिर्मदीय चक्षु स्वस्मिन्नाकृषति । यथा दृप्तो वृषभ स्वमुखेन वलवद् गर्जति, आर्द्रं मृत्तिचयमपास्किरमाणश्च विषाणयोः ( शृङ्गयो ) पङ्कं धत्ते । तथैवाय चित्रकूटोऽपि मुखसदृशीभिर्गुहाभिर्निर्झरशब्दमुद्भावयन् गर्जति, शृङ्गेषु (शिखरेषु) च कर्दमसदृशान् मेघान् धारयति ।

अल०—वृषभपर्वतयो पूर्णोपमा प्रधानम्, शृङ्गमित्यत्र श्लेष, धारास्वनस्य वृषभस्वनेन, दर्या मुखेन, अम्बुदस्य पङ्केन चोपमाश्च तदङ्गम् ।

---

* वन्धुर तून्नतानतम्—इत्यमर. ।

इह चित्रकूटे प्रधाने विशेषणान्वयः, तत्र च दर्याः, अम्बुदस्य च सम्बन्धः सम्यगुपपद्यते, न तु मुखस्य पङ्कस्य वा । तस्मादेव विनिगमकादुपमित समासो विशेषणयोर्व्याख्यातः । 'दरी एव मुखम्' 'अम्बुद एव वप्रपङ्कः' इति तत्रभवतो मल्लिनाथस्य व्याख्यानत्वनवधानादेवेति प्रतीमः ।

**एषा प्रसन्नस्तिमितप्रवाहा सरिद् विदूरान्तरभावतन्वी ।**
**मन्दाकिनी भाति नगोपकण्ठे मुक्तावली कण्ठगतेव भूमेः ॥४८॥**

अ०—प्रसन्नस्तिमितप्रवाहा विदूरान्तरभावतन्वी एषा मन्दाकिनी सरित् नगोपकण्ठे भूमेः कण्ठगता मुक्तावलीव भाति ।

व्याकृ०—प्रसन्नः स्तिमितः प्रवाहो यस्याः सा प्रसन्नस्तिमितप्रवाहा । प्रसन्नः-इति सीदतेः क्तः । स्तिमितः-स्तिमधातोः क्तः । विदूरं च तदन्तरम्, तस्य भावः, तेन तन्वी विदूरान्तरभावतन्वी । न गच्छतीति नगः, नञुप-पदाद् गच्छतेः "अन्यत्रापि दृश्यते" इति डः, 'नगोऽप्राणिष्वन्यतरस्याम्' इति नञो नलोपाभावः ।

व्याख्या—प्रसन्नः निर्मलः, स्तिमितः-निश्चल इव, धीरः, प्रवाहः-यस्यास्तथाभूता, विदूरस्य-अन्तरस्य-अवकाशस्य, भावेन सत्तया, तन्वी कृश-त्वेनावभासमाना, एषा-दृश्यमाना, *मन्दाकिनी मन्दाकिनीनाम्ना प्रसिद्धा, सरित् नदी, नगस्य-पर्वतस्य, चित्रकूटस्य, उपकण्ठे-समीपे, भूमेः, कण्ठगता कण्ठे धृता, मुक्तावलीव-मौक्तिकहारसदृशी, भाति-शोभते ।

भा०—हे प्रिये ! चित्रकूटगिरेः पार्श्वे धीरं प्रवहन्ती दूरत्वहेतुना कृशा प्रतीयमाना निर्मलजलैषा मन्दाकिनी नदी भूमिकण्ठधृता मुक्तावलीव शोभते पर्वतः शिर इव, तत्समीपभागः कण्ठसदृशः, तत्र मन्दाकिनी हारसदृशीति ।

अल०—नगोपकण्ठे प्रवहन्त्या मन्दाकिन्या भूमिकण्ठगतमुक्तावल्यु-त्प्रेक्षेयम्, न तूपमा, भूमेः कण्ठसम्बन्धासम्भवात्तद्गतमुक्तावल्या अप्यप्रसिद्ध-त्वात् । नगस्य तदुपकण्ठस्य च भूमेः शिरस्त्वेन कण्ठत्वेन च सम्भावनं व्यङ्ग्यम् ।

---

* एषा मन्दाकिनी काचिदन्यैव सरित्, न तु गङ्गा, तस्यास्तत्रासम्भवात् ।

अय सुजातोऽनुगिर तमाल' प्रवालमादाय सुगन्धि यस्य ।
यवाङ्कुरापाण्डुकपोलशोभी मयावतस. परिकल्पितस्ते ॥४६॥

अ०—अनुगिरम् सुजात अयम् तमाल (दृश्यते) यस्य सुगन्धि प्रवालम् आदाय मया ते यवाङ्कुरापाण्डुकपोलशोभी अवतस कल्पित: ।

व्याक०—गिरे समीपे अनुगिरम्, विभक्त्यर्थेऽव्ययीभावः, "गिरेश्च सेनकस्य" इति समासान्तष्टच् । शोभनो गन्धो यस्य तत्सुगन्धि, "गन्धस्येदुत्पूतिसुसुरभिभ्य" इतीकार समासान्त । यवाङ्कुर इव ( त० ) आपाण्डौ ( उपमित० ) कपोले ( कर्म० ) शोभते इति यवाङ्कुरापाण्डुकपोलशोभी । जात 'जनी प्रादुर्भावे' धातो क्त । "श्वीदितो निष्ठायाम्" इतीण्निषेध । "जनसनखना सन्झलो." इत्यात्वम् । अवतस -'तासि भूषणे', "अकर्तरि च कारके" इति घञ् । परिकल्पित.-कल्पयते क्तः ।

व्याख्या—अनुगिरम्-गिरे -पर्वतस्य समीपे, सुजात -शोभनः, अय तमालः-तमालवृक्ष , दृश्यते इति शेप । यस्य-तमालस्य, सुगन्धि-सुरभि, प्रवालम्-पल्लवम, आदाय-गृहीत्वा, मया, ते-तव, यवस्याङ्कुरेण सदृशे आपाण्डौ-ईषच्छुक्लवर्णौ गौरे इति यावत्, कपोले-गण्डस्थले, शोभते भाति इति तथाभूत , अवतस कर्णाभूषणम्, कल्पित -रचित ।

भा०—चित्रकूटसमीपवर्त्यय स तमालपादपो विद्यते यस्य सुरभिणा नूतनपल्लवेनाहं त्वदर्थं कर्णाभरणमरचयम् ।

अल०—स्मर्यमाणस्य सभोगश्रृङ्गारस्य स्मृतेरङ्गत्वाद्रसवदलङ्कारः । स्मृतिस्तु व्यज्यत इति भावध्वनि । यवाङ्कुरकपोलयोरुपमालङ्कार ।

अनिग्रहत्रासविनीतसत्त्वमपुष्पलिङ्गात् फलवन्धिवृक्षम् ।
वन तप.साधनमेतदत्रेराविष्कृतोदग्रतरप्रभावम् ॥५०॥

अ०—एतद् अनिग्रहत्रासविनीतसत्त्वम् अपुष्पलिङ्गात् फलबन्धिवृक्षम् आविष्कृतोदग्रतरप्रभावम् अत्रे. तप.साधनम् वनम् ( अस्ति ) ।

व्याक०—न निग्रहात् त्रास (त० ) येषा तथाभूता· ( अपि ) विनीता सत्त्वा. यस्मिन् तदनिग्रहत्रासविनीतसत्त्वम् । निग्रह इति गृह्वाते "ग्रहवृदृनिश्चिगमश्च" इत्यनेनाप् । त्रास.-त्रस्यतेर्घञ् । तत्पुरुषगर्भबहु-

व्रीहिगर्भो बहुव्रीहि । न पुष्पाद् लिङ्गाद् अपुष्पलिङ्गात् । फलानां बन्ध येषामस्तीति फलबन्धिन., "अत इनिठनौ" । तथाभूता वृक्षा यत्र तत फलबन्धिवृक्षम् । आविष्कृत उदग्रतर. प्रभावो येन तदाविष्कृतोदग्रतरप्रभावम् । आविष्कृत इति पूर्वसर्गे सप्तम पद्यं द्रष्टव्यम् । उदग्रतरप्रभाव पूर्वसर्गे एकसप्ततितम पद्य द्रष्टव्यम् । अपुष्पलिङ्गाद् इति सम्भाव्यमाने फलस्य ज्ञापके हेतौ पञ्चमी, 'देवदत्तस्य गुरुकुलम्' इति न्यायेन फले एकदेशान्वय । यद्वा-'पुष्पलिङ्गम् अप्राप्य' इति "ल्यब्लोपे" पञ्चमी ।

व्याख्या—एतत्-पुरोवर्ति, न वर्तते निग्रहाद् दण्डाद्, त्रास-भयम् येषाम्, तथाभूता अपि, विनीता नम्रा, सत्त्वा जन्तव, यस्मिंस्तथाभूतम्, पुष्परूपम् लिङ्गम्-निमित्तम, विनैव, फलबन्धिन-फलवन्त, वृक्षाः यत्र तथाभूतम्, अत एव, आविष्कृत-प्रकटित., उदग्रतर. उत्कृष्टतर., प्रभाव.-ऋषेस्तपश्चमत्कारो येन तथाभूतम्, अत्रे अत्रिनाम्न: ऋषे.,, तपस, साधनम् कारणम, तप.स्थानम्-अस्तीति शेष ।

भा०—हे सीते! इदमत्रिमहर्षेस्तपोवनमस्ति । अत्र महर्षेरलौकिकप्रभाव दर्शयन्त इव दण्डभयरहिता अपि जन्तवो विनय पालयन्ति, न हि प्रबला निर्बलॉस्त्रासयन्ति, वृक्षाश्च पुष्पोद्गममन्तरेणापि फलानि प्रसुवते ।

अल०—पशूना ताडनभयमन्तरेणापि विनयबोधनात्, पुष्परूपनिमित्त विना फलोत्पत्तिकथनाच्च उभयत्रापि विभावनालङ्कार. । ऋषेर्योगसम्पत्तिर्व्यज्यते, विस्मयस्तदङ्गमिति रसवदलङ्कारोऽपि ।

**अत्राभिषेकाय तपोधनानां सप्तर्षिहस्तोद्धृतहेमपद्माम् ।**
**प्रवर्तयामास * किलानुसूया त्रिस्रोतस त्र्यम्बकमौलिमालाम् ॥५१॥**

अ०—अत्र अनुसूया तपोधनानाम् अभिषेकाय सप्तर्षिहस्तोद्धृतहेमपद्माम् त्र्यम्बकमौलिमालाम् त्रिस्रोतसम् प्रवर्तयामास किल ।

व्याक०—तप एव धन येषा तेषां तपोधनानाम् । सप्त ऋषय, सप्तर्षय "दिक्संख्ये सञ्ज्ञायाम्" इति कर्मधारय, तेषां हस्तैरुद्धृतानि हेम्न. पद्मानि

* अस्या नाम्नि 'अनसूया' इति पाठोऽप्युपलभ्यते ग्रन्थान्तरे । युक्तश्च स, "न असूया यस्य" इत्यनुगतार्थत्वात् ।

यस्या ता सप्तर्षिहस्तोद्धृतहेमपद्माम् । उद्धृतशब्दे उत्पूर्वाद् हरते' क्त "झयो होऽन्यतरस्याम्" इति हस्य धत्वम् । त्रीण्यम्बकानि यस्य, तस्य मौले मौलाम् त्र्यम्बकमौलिमालाम्, त्रीणि स्रोतांसि यस्यास्ता त्रिस्रोतसम् । अभिषेक.-सिञ्चतेर्घञ्, "उपसर्गात् सुनोतीति" षत्वम् । प्रवर्तयामास-वृतु-धातोर्णिच्, लिट्, अस्तेरनुप्रयोगः ।

व्याख्या—अत्र-वने, अनुसूया-अत्रे' पत्नी, ( पतिव्रताशिरोमणि' ) तपोधनानाम्-तपस्विनाम्, अभिषेकाय-स्नानाय, सप्तर्षीणाम् मरीच्यादीनाम्, हस्तै.-करै, उद्धृतानि-अवचितानि, हेम्नः-स्वर्णस्य, पद्मानि-कमलानि, यस्या तथाभूताम्, त्र्यम्बकस्य-महादेवस्य, मौले.-शिरस, मालाम्-अलङ्काररूपा स्रजम्, त्रिस्रोतसम्, प्रवर्तयामास-प्रवाहयामास किल ।

भा०—हे सीते! एवं खल्वैतिहासिका आहुः, यदत्राश्रमे भगवती अत्रिपत्नी अनुसूया स्वस्यालौकिकेन माहात्म्येन ऋषीणा स्नानाय नूना गङ्गा प्रकटयाञ्चकार ।

अल०—अत्रिपत्नीमाहात्म्यवर्णनस्य तपोवनवर्णनाङ्गत्वादुदात्तालङ्कारः । मौलिमालामिति रूपकम् ।

**वीरासनैर्ध्यानजुषामृषीणाममी समध्यासितवेदिमध्या ।**
**निवातनिष्कम्पतया विभान्ति योगाधिरूढा इव शाखिनोऽपि ॥५२॥**

अ०—वीरासनै ध्यानजुषाम् ऋषीणाम् समध्यासितवेदिमध्या' अमी-शाखिन अपि निवातनिष्कम्पतया योगाधिरूढा इव विभान्ति ।

व्याक०—वीराणाम् आसनै-.वीरासनै । वीरा अत्र धर्मवीरा जापकादयो द्रष्टव्या, सञ्ज्ञेयमासनविशेषस्य, "जात्याख्यायाम्" इति बहुवचनम् । ध्यान जुषन्ते इति ध्यानजुषस्तेषाम्, जुषते. कर्तरि क्विप् । समध्यासितं वेदेर्मध्य यैस्ते समध्यासितवेदिमध्या । अध्यासितमिति आस्ते. क्त । आसनक्रियाया कर्तार शाखिन' । निर्गतो वातो यस्मात्स निवात प्रदेश । निर्गतः कम्पो

* एकपादमथैकस्मिन् विन्यस्योरुणि संस्थितम् ।
इतरस्मिंस्तथा चान्य वीरासनमुदाहृतम् ॥ इति
वीरासनलक्षण वसिष्ठ आह ।

येभ्यस्ते निष्कम्पा, निवाते ( प्रदेशे ) निष्कम्पा निवातनिष्कम्पा, यद्वा वातस्याभावो निवातम्, अर्थाभावेऽव्ययीभाव., तेन निष्कम्पा। तेषा भाव-स्तत्ता, तया। योगमधिरूढा, योगाधिरूढा.। "द्वितीया" इति योगविभागा-त्समास। अधिरूढशब्दे रोहते क्तः "यस्य विभाषा" इतीण्निषेध। शाखिन "व्रीह्यादिभ्यश्च" इति शाखाशब्दादिनिः। ऋषीणाम् इति षष्ठ्या शाखिभिरन्वयो मल्लिनाथेन व्याख्यात। वेदिमध्येनान्वयस्तु स्वारसिक. प्रतिभाति, तत्र चैकदेशान्वयद्वारेण समुदायान्वयमङ्गीकृत्य सामर्थ्यं कथंचिदु पपाद्यम्। वीरासनैरिति ध्याने साधकतमत्वात्तत्करणे तृतीया।

व्याख्या—वीरासनै-जपसाधनेन वीरासनसञ्ज्ञकेन आसनेन, (उपविश्य) ध्यानजुषाम् चित्तैकतानता ध्यानम् तज्जुषन्ते-सेवन्ते ये, तेषाम्, ऋषीणाम् ( मध्यभागेन सम्बन्धः ), समध्यासितम्-अधिष्ठितम्, वेदे उन्नतस्य चतुर-स्रस्थानस्य परिष्कृतभूमे, मध्यम मध्यभागो यैस्तथाभूता, अमी-पुरोवर्तिन., शाखिनः-वृक्षा अपि, निवातेन-वाताभावेन, निष्कम्पतया नि स्पन्दतया, योगम्-समाधिम्, अधिरूढा-अधिष्ठिताइव, समाधिनिष्ठा इवेति यावद्, विभान्ति शोभन्ते। मल्लिनाथरीत्या तु ऋषीणा वृक्षा ( तै पालिता परिगृहीता वा ) अधिष्ठितस्ववेदिमध्याः ( वृक्षवृद्धये कल्पितस्योन्नतप्रदेशस्य मध्ये स्थिता ) अत एवासनबन्धेनोपविष्टाइव . विभान्तीत्यादि व्याख्येयम्।

भा०—अत्राश्रमे स्थितये कल्पितासु वेदिकासु वीरासनेनोपविश्य समाधि-मभ्यस्यतामृषीणा मध्ये स्थिता अमी वृक्षाअपि समाधिस्था इव लक्ष्यन्ते। योगिनो निश्चलाङ्गा भवन्ति, इमे वृक्षा अपि वाताभावेन निश्चला वर्तन्ते इति।

अल०—शाखिना योगाधिरूढत्वसम्भावनादुत्प्रेक्षा। ऋषीणा मध्ये स्थितिः, निश्चलत्वेन साम्यं च तत्र हेतु। समध्या मध्या इति च्छेकानुप्रास।

**त्वया पुरस्तादुपयाचितो य सोऽय वट श्याम इति प्रतीत।**
**राशिर्मणीनामिव गारुडाना सपद्मराग फलितो विभाति॥ ५३॥**

अ०—त्वया य, पुरस्ताद् उपयाचितः स, श्यामः इति प्रतीत, अयम् वट फलित ( सन् ) सपद्मराग, गारुडानाम् मणीनाम् राशिरिव विभाति।

व्याक०—पद्मरागेण सह वर्तत इति सपद्मराग । पुरस्ताद् व्याख्यातम् । प्रतीत. प्रतिपूर्वादिण्धातो क्त. । गारुडानाम्-गरुडशब्दाच्छैषिकोऽण् । फलित फलानि संजातान्यस्येति "तदस्य संजातं तारकादिभ्य इतच्" ।

व्याख्या—हे सीते ! त्वया, य.-वट, पुरस्तात्-पूर्वम्, उपयाचित -व्रतपूर्तये *प्रार्थित., स , श्याम इति प्रतीत -'श्याम' इत्यभिधया प्रसिद्धः, अयम्-पुरो दृश्यमान , वट -वटवृक्षः. ( इदानीम् ) फलित -फलयुक्त. सन् सपद्मराग -पद्मरागै रक्तमणिभि सहित , गारुडानाम् ( हरितानाम् ) मरकत-मणीनाम्, राशि -समुदायइव, विभाति-विशेषेण राजते ।

भा०—हे सीते ! नाम्ना रूपेण च श्यामो यो वटतरुस्त्वया पूर्वं वनग-मनकाले प्रार्थितः, स एष पुरस्तिष्ठति । रक्तरक्तैः फलैर्युक्तोऽयं वृक्ष. पद्मराग-मणिसहिताना मरकतमणीना समूहइव शोभते । ( पद्मरागसदृशानि फलानि, वटस्तु मरकतसमूहसदृश इति ) इदानीं सिद्धमनोरथैः ( सफलै ) प्रत्यावृत्तैरस्माभिरयं वन्दनीय इति तात्पर्यम् ।

अल०—पूर्णोपमा । प्रयागस्थस्य वटस्याभिलषितपूरकत्व व्यङ्ग्यम् ।

अथ पद्यचतुष्टयात्मकेन कलापकेन प्रयागे गङ्गायमुनयो संगमं वर्णयति—

क्वचित्प्रभालेपिभिरिन्द्रनीलैर्मुक्तामयी यष्टिरिवानुविद्धा ।
अन्यत्र माला सितपङ्कजानामिन्दीवरैरुत्खचितान्तरेव ॥ ५४ ॥

क्वचित्खगाना प्रियमानसाना कादम्बसंसर्गवतीव पङ्क्तिः ।
अन्यत्र कालागुरुदत्तपत्रा भक्तिर्भुवश्चन्दनकल्पितेव ॥ ५५ ॥

क्वचित्प्रभा चान्द्रमसी तमोभिश्छायाविलीनैः शबलीकृतेव ।
अन्यत्र शुभ्रा शरदभ्रलेखा रन्ध्रेष्विवालक्ष्यनभ.प्रदेशा ॥ ५६ ॥

क्वचिच्च कृष्णोरगभूषणेव भस्माङ्गरागा तनुरीश्वरस्य ।
पश्यानवद्याङ्गि ! विभाति गङ्गा भिन्नप्रवाहा यमुनातरङ्गैः ॥ ५७ ॥

अ०—( हे ) अनवद्याङ्गि ! पश्य, यमुनातरङ्गैः भिन्नप्रवाहा गङ्गा क्वचित् प्रभालेपिभि इन्द्रनीलैः अनुविद्धा मुक्तामयी यष्टिरिव, अन्यत्र इन्दी-

* न्यग्रोधं तमुपस्थाय वैदेही वाक्यमब्रवीत् ।
नमस्तेऽस्तु महावृक्ष पालयन्मे व्रतं पतिं ॥ इति रामायणे

वर्रे उत्खचितान्तरा सितपङ्कजानाम् मालेव, क्वचित् कादम्बसंसर्गवती प्रियमानसानाम् खगानाम् पङ्क्तिरिव, अन्यत्र कालागुरुदत्तपत्रा चन्दनकल्पिता भुव भक्तिरिव, क्वचित् छायाविलीनैः तमोभिः शबलीकृता चान्द्रमसी प्रभेव, अन्यत्र रन्ध्रेषु आलक्ष्यनभःप्रदेशा शुभ्रा शरदभ्रलेखेव, क्वचिच्च कृष्णोरगभूषणा भस्माङ्गरागा ईश्वरस्य तनुरिव विभाति ॥ ( पृथक् पृथगेकैक पद्य व्याख्यातु प्रवृत्तैरपि 'हे अनवद्याङ्गि पश्य यमुनातरङ्गैः भिन्नप्रवाहा गङ्गा' इति आदौ 'विभाति' इति अन्ते च सर्वत्र योजनीयम् )

व्याक०—न अवद्यम् अङ्गं यस्याः सा अनवद्याङ्गी, सम्बुद्धावनवद्याङ्गि। अवद्यमिति नञुपपदाद् वद्धातोः "अवद्यपण्यवर्या..." इति यत्प्रत्ययः। "अङ्गगात्रकण्ठेभ्यो वक्तव्यम्" इति ङीप् "अम्बार्थनद्योर्ह्रस्वः"। भिन्नः प्रवाहो यस्याः सा भिन्नप्रवाहा। प्रभया लिम्पन्तीति प्रभालेपिनः तैः लिम्पतेर्णिनिः। उत्खचितमन्तरं यस्याः सा उत्खचितान्तरा, उत्खचितम्- 'खच भूतप्रादुर्भावे' इति धातोः क्तः। कादम्बानां संसर्गोऽस्या-अस्तीति कादम्बसंसर्गवती, संपूर्वात्सृजतेर्घञ्, तदन्तान्मतुप्, उगित्त्वान्ङीप्। कालागुरुणा दत्तं पत्रं यस्याः सा कालागुरुदत्तपत्रा। चन्दनेन कल्पिता चन्दनकल्पिता। चन्दनमिति चन्दतेः करणे ल्युट्। छायासु विलीनैः छायाविलीनैः, विलीनशब्दे लीयतेः क्तः, 'स्वादय ओदितः" इत्योदित्त्वाद् "ओदितश्च" इति निष्ठानत्वम्। अशबला शबला यथा सम्पद्यते तथा कृता शबलीकृता, अभूततद्भावे च्विः। आलक्ष्याः नभसः प्रदेशा यस्याः सा आलक्ष्यनभःप्रदेशा। कृष्णोरगो भूषणं यस्याः सा कृष्णोरगभूषणा, भूषणशब्दे भूषयतेः करणे ल्युट्। भस्मैव अङ्गस्य रागो यस्याः सा भस्माङ्गरागा। राग इति रञ्ज धातोः "अकर्तरि च" इति घञ्। "घञि च भावकरणयोः" इति नलोपः, मुक्तामयी-मुक्ताशब्दात् "तत्प्रकृतवचने मयट्" इत्यनेन मयट्, टित्त्वान्ङीप्। अनुविद्धा-अनुपूर्वाद् 'व्यध ताडने' धातोः क्तः। ग्रहिज्येति सम्प्रसारणम्। खगानाम्-खोपपदाद् गमेः "अन्यत्रापि दृश्यते" इति डः। पङ्क्तिः-'पचि विस्तारवचने' क्तिन्। अन्यत्र अन्यशब्दात् "सप्तम्यास्त्रल्"। प्रभा-"आतश्चोपसर्गे" इत्यनेन 'भा दीप्तौ'

चतोरङ् । चान्द्रमसी चन्द्रमश्शब्दाच्छैषिकोऽण् । अस्मिन् कलापके पश्य ' इति प्रधानक्रिया, अन्ये वाक्यार्थास्तत्र कर्मभूताः ।

व्याख्या—हे अनवद्याङ्गि ' अनवद्यम् अनिन्द्यम्, अङ्गम् शरीर यस्यास्तथाभूते सति ' पश्य-प्रेक्षस्व, यमुनायाः-कालिन्द्याः, तरङ्गैः वीचिभि, भिन्नः-विच्छुरित -व्यामिश्रः, प्रवाहो-यस्यास्तथाभूता, गङ्गा, क्वचित्-कस्मिश्चित्प्रदेशे, प्रभया लिम्पन्ति नीरन्ध्र प्रसृतया कान्त्या समीपस्थ व्याप्नुवन्ति, तथाभूतै इन्द्रनीलैः इन्द्रनीलमणिभि, अनुविद्धा सह गुम्फिता, मुक्तामयी-मौक्तिकप्रचुरा, यष्टिरिव-हारलतेव, विभाति ( इद सर्वत्र सबध्यते ) अन्यत्र-अपरत्र इन्दीवरैः-नीलकमलैः उत्खचितम्-सूतम्, अन्तरम्-मध्यभागो यस्यास्तथाभूता सितानाम् श्वेतानाम्, पङ्कजानाम्, माला-स्रगिव । क्वचित्, कादम्बानाम्-नीलवर्णाना हसानाम्, ससर्गः सम्बन्धो विद्यते, यस्यास्तथाभूता, प्रियमानसानाम् प्रिय मानसं सरो येषा तथाभूताना खगानाम्-हंसानाम्, पङ्क्तिरिव । अन्यत्र कालागुरुणा कृष्णागुरुपङ्केन, दत्तम्-रचितम्, पत्रम्-मकरिकापत्ररचना यस्या तथाभूता, चन्दनेन-मलयजेन, कल्पिता-सपादिता, भुवः-पृथिव्या, ( नायिकारूपाया ) भक्तिरिव अङ्गे रचनाविशेषइव । क्वचित्, छायासु वृक्षादिच्छायासु, विलीनैः आत्मान गोपायित्वा स्थितैः, तमोभि-अन्धकारै शबलीकृता-कर्बुरिता चान्द्रमसी चन्द्रमसम्बन्धिनी प्रभा-चन्द्रिकेव । अन्यत्र, इतरस्मिन्-प्रदेशे रन्ध्रेषु-विवरेषु आलक्ष्या -ईषदृश्या, नभस-आकाशस्य प्रदेशाः भागा, यस्या तथाभूता, शुभ्रा श्वेता, शरदि-शरत्काले, अभ्रलेखा घनराजिरिव । क्वचित्-कस्मिंश्चित् प्रदेशे च, कृष्णोरगा -कृष्णसर्पाः, भूषणानि आभरणानि यस्यास्तथाभूता, भस्मैव अङ्गराग -विलेपनम्, यस्यास्तथाभूता, ईश्वरस्य-महादेवस्य, तनु -शरीरमिव, विभाति-विशेषेण शोभते ।

भा०—प्रयागे गङ्गायमुनाप्रवाहयो सङ्गमे कृष्णवर्णेन यमुनाजलेन सम्मिश्रित शुभ्र गङ्गाजलं विविधसंनिवेशवशाद् विविधा सुषमा धत्ते । यत्र वेगवशादावर्तमान मण्डलाकारतामपद्य प्रवहति, तत्र क्वचित्सुस्निग्धप्रभ प्रतिबिम्बितसूर्यकान्ति नीलमणिभिरनुविद्धाना मौक्तिकाना हारइव प्रतीयते । क्वचित् नीलकमलानुविद्धविकसितशुक्लकमलमालाकार विभाति । यत्र च

परस्पर मिलत्सरला रेखामाश्रित्य प्रवहति, तत्र कृष्णवर्णकादम्बसम्पृक्तहं सपङ्क्तिसदृश शोभते । यत्र तु गङ्गाप्रवाहस्य मध्ये मध्ये यमुनाजलं प्रविष्टं तटप्रान्ते गाम्भीर्यस्याल्पतया च भूमिरप्यालोक्यते तत्रेत्थं विभाति-यथा भुवं नायिकाया अङ्गेषु चन्दनेन रचना कृता भवेत्, तन्मध्ये च कृष्णागुरुणा मकरिकापत्राणि रचितानि स्यु । अथ यत्र प्रवाहप्रान्तभागगत मन्दप्रवाह प्रशान्तमिव प्रतिबिम्बितसूर्यकान्ति च गङ्गाजलम्, यमुनाजलं तु न प्रतिबिम्बे नाभिज्वलितम्, तत्र तच्छायागतेन तमसा विच्छुरिता प्रसृता चन्द्रिकेवाभाति । यत्र च यमुनाजलं सूर्यप्रतिबिम्बेनाभिज्वलितम्, गङ्गाजलन्तु नाभिज्वलितम्, किन्तु घनतामिवापन्नं दृश्यते, तत्र तथा प्रतीयते-यथा शुक्ला शरन्मेघा अभिव्याप्ता स्यु, तेषामन्तराले च स्थाने स्थाने ऽन्तरिक्षं कृष्णवर्णं दृश्यते । अथ यत्र प्रशान्तप्रायस्य गङ्गाजलस्योपरि कृष्णा यमुनातरङ्गा मिलन्तस्तदा-वृत्तवत इव, तत्र कृष्णोरगवेष्टितं भगवत शङ्करस्य भस्मिन शरीरमिव तद्विभाति । एतत्सर्वं भगवान् राम सीतायै प्रदर्शयति ।

अल०—एकस्या गङ्गाया अनेकोपमानप्रदर्शनाद् मालोपमालङ्कार । प्रत्येक प्रदेशस्य भिन्नत्वेन दर्शने तुल्यमेव । अत्रोपमानेषु अन्यानि सर्वाणि प्रसिद्धान्येव, भुवश्चन्दनभक्तिस्तु न प्रसिद्धा, किन्तु कविकल्पितेव । तत्र कल्पितेनाप्युपमानेन सम्भावितोपमा स्वीकार्या, उपमामालायामध्ये उत्प्रेक्षा वा निवेशयितव्येत्यत्र सहृदया एव प्रमाणम् । प्रभालेपिभिरित्यत्र लेपन लक्षणया प्रभाया सन्निहिते पदार्थे सम्बन्ध बोधयति, दृश्यावयवव्याप्तिश्च व्यङ्ग्या ।

**समुद्रपत्न्योर्जलसन्निपाते पूतात्मनामत्र किलाभिषेकात् ।**
**तत्त्वावबोधेन विनापि भूयस्तनुत्यजां नास्ति शरीरबन्ध. ॥ ५८ ॥**

अ०—अत्र समुद्रपत्न्यो जलसन्निपाते अभिषेकात् पूतात्मनाम् तनुत्यजाम् तत्त्वावबोधेन विना अपि भूय शरीरबन्ध नास्ति ।

व्याक०—समुद्रस्य पत्न्यो. समुद्रपत्न्यो । पत्नीशब्दे 'पत्युनो यज्ञसंयोगे" इति पतिशब्दस्य नकारोऽन्तादेश, नान्तत्वाद् ङीप् । सन्निपतन्त्यस्मिन्निति सन्निपात. । अधिकरणे घञ् । जलानां सन्निपाते जलसन्निपाते । पूत आत्मा येषां तेषां पूतात्मनाम् । तनु त्यजन्तीति तनुत्यज, तेषाम् कर्तरि क्विप् ।

अवबोध बुद्धयतेर्घञ् ।

व्याख्या—अत्र अस्मिन्, समुद्रपत्न्यो समुद्रस्य भार्ययो., गङ्गायमुनयो- र्नद्यो., जलाना सन्निपाते-सङ्गमप्रदेशे, अभिषेकात् स्नानात्, पूत पवित्र, आत्मा-अन्त.करणम्, येषा तथाभूतानाम, तनुत्यजाम्-शरीरत्यागिनाम्, पुसाम्, तत्त्वावबोधेन तत्त्वस्य-'एकमेवाद्वितीय ब्रह्म' इत्यादिश्रुतिप्रतिपादिता- द्वैतपरमात्मतत्त्वस्य, अवबोध -याथात्म्येन ज्ञानम्, तेन विनाऽपि, भूय.-पुन, शरीरबन्धः-शरीरसम्बन्ध, जन्मेतियावत्, नास्ति न भवति, किल ।

भा०—तत्त्वज्ञानमेव मुक्तिहेतुरिति श्रुतिभिर्निर्णीतम्, परमत्र प्रयागे कृतस्नानाना पुरुषाणा तत्त्वज्ञान विनापि मोक्षलाभो भवति । अत्र प्रमाण 'सितासिते सरिते यत्र सङ्गते' इत्यादिश्रुतौ स्पष्टम् ।

अलं०—तत्त्वावबोधरूपकारणमन्तरेणापि मोक्षरूपकार्यप्रतिपादनाद् विभावना, तया च सगमस्य तीर्थान्तरेभ्यो व्यतिरेको व्यज्यते । पूतात्मनामिति साभिप्राय विशेषणम् । यथा ज्ञानेनात्मा पूतो भवति तथात्र स्नानेनापीति । तेन मोक्षलाभ समर्थ्यते, तस्मात् परिकर ।

**पुर निषादाधिपतेरिद तद्यस्मिन्मया मौलिमणिं विहाय ।**
**जटासु बद्धास्वरुदत् सुमन्त्र कैकेयि कामाः फलितास्तवेति ॥ ५९ ॥**

अ०—इदम् निषादाधिपते· तत् पुरम् यस्मिन् मया मौलिमणिम् विहाय जटासु बद्धासु ( सतीषु ) सुमन्त्र ( हे ) कैकेयि ! तव कामा· फलिता इति अरुदत् ।

व्याक०—निषादशब्दे सीदते. कर्तरि "ज्वलितिकसन्तेभ्यो ण" उपसर्गात्सुनोति " इति षत्वम् । विहाय-विपूर्वाज्जहाते क्त्वा, ल्यबादेशश्च । कैकेयि-केकयशब्दात् "जनपदशब्दात् क्षत्रियादञ्"। "अतश्च" इत्यनेनाञोऽकारलोपे प्राप्ते 'न प्राच्य " इत्यनेन निषेध । "केकयमित्रयुप्रलयाना यादेरिय " इत्यनेन यकारस्य 'इय्', ङीप्, सम्बुद्धौ ह्रस्वः, फलिता फलधातो क्तः । फलशब्दात् तारकादित्वादितच् वा । अरुदत् रोदिनर्लुङ्, "इरितो वा" इति च्लेरङ् । जटासु-"यस्य च भावेन भावलक्षणम्" इत्यनेन सप्तमी ।

व्याख्या--इदम्-पुरोवर्ति, निषादाधिपते -निषादराजस्य, गुहस्य, तत्-पूर्वदृष्टम्, पुरम् नगरम्, अस्तीति शेष', यस्मिन् पुरे, मया-रामेण, मौलि मणिम् शिरोरत्नम्, मणिजटित शिरोमुकुटम्, विहाय त्यक्त्वा, जटासु बद्धासु-रचितासु सतीषु, सुमन्त्र'-दशरथामात्य, 'हे कैकेयि! तव भवत्या, कामा.-मनोरथा, रामप्रवासभरतराज्यप्राप्तिरूपा, फलिता सफला जाता इति अरुदत् अश्रूण्यमुचत्।

भा०--एतद् गुहस्य पुर प्राप्तम्, यत्रास्माभी राजवेष विहाय आरण्यस्वेषो धृत.। सुमन्त्रश्च रुदन् रथेन सह निवर्तित.।

अल०--स्मर्यमाणः सुमन्त्रगत. करुणरस स्मृतेरङ्गम् इति रसवदलङ्कार।

अथ चतुर्भि सरयूं वर्णयति--

**पयोधरैः पुण्यजनाङ्गनानां निर्विष्टहेमाम्बुजरेणु यस्या।**
**ब्राह्म सर कारणमाप्तवाचो बुद्धेरिवाव्यक्तमुदाहरन्ति ॥ ६० ॥**

अ०--आप्तवाचः पुण्यजनाङ्गनानाम् पयोधरैः निर्विष्टहेमाम्बुजरेणु ब्राह्मम् सर बुद्धे. अव्यक्तमिव यस्या. कारणम् उदाहरन्ति।

व्याक०--आप्ता वाग् येषा ते, आप्ताना वाचः, आप्ताश्च ता वाच, इति वा आप्तवाच। पुण्यजनानामङ्गना पुण्यजनाङ्गनास्तासाम्, निविष्टो हेम्नो-ऽम्बुजाना रेणुर्यस्य तन्निर्विष्टहेम म्बुजरेणु। निविष्ट इति विशते क्त। अम्बुजशब्द. पङ्कजशब्दवत्। ब्राह्मम्-ब्रह्मनशब्दाच्छैषिकोऽण्, "नस्तद्धिते" इति टिलोपः। व्यक्तम्-अञ्जूधातो क्त।

व्याख्या--आप्ता-तथ्या, वाग्-वाणी, येषा तथाभूता ऋषय., अथवा, आप्तानाम्-साक्षात्कृतधर्माणाम्, वाच वेदरूपा वाण्य'। कर्मधारयपक्षे तु, आप्ता -अवाधितार्था इत्यर्थो बोध्य। *पुण्यजनानाम्-यक्षाणाम्, अङ्गनाः-स्त्रिय, तासाम्, पयोधरै स्तनै, ‡निविष्ट -उपभुक्त., हेमाम्बुजनाम् स्वर्णकमला नाम्, रेणु परागो यस्य तथा भूतम्, ब्राह्मम्-ब्रह्मण इद ब्राह्म ब्रह्मनिर्मितम्,

---

* भवेत् पुण्यजनो यक्षे राक्षसे सज्जनेऽपि च—इति विश्व।

‡ निर्वेशो भृतिभोगयो —इति।

नर-मानसाख्यं तडाकम्, बुद्धे महत्तत्त्वस्य, अव्यक्तम्-प्रधानमिव, यस्याः सरय्वाः, कारणम्-उत्पत्तिस्थानम्, उदाहरन्ति-कथयन्ति ।

भा०—हे सीते! एषा सरयूः प्रवहति। ऋषय कथयन्ति यद् यथा अव्यक्ताद् बुद्धिरुत्पद्यते, तथैवैषा सरिद् ब्रह्मनिर्मिताद मानसात् सरसः प्रभवति यस्मिन् सरसि स्नान्तीना यक्षसुन्दरीणा पयोधरा हेमाम्बुजपरागैरलंक्रियन्ते ।

अल०—उपमा । विशिष्टस्य हेतुत्वमेवात्र साधारणो धर्मः । धर्मान्तरस्याप्रसिद्धत्वात् । विशिष्टस्थानप्रभवत्वात् सरय्वा महत्त्वं व्यज्यते ।

**जलानि या तीरनिखातयूपा वहत्ययोध्यामनु राजधानीम् ।**
**तुरङ्गमेधावभृथावतीर्णैरिक्ष्वाकुभिः पुण्यतरीकृतानि ॥ ६१ ॥**

अ०—तीरनिखातयूपा या तुरङ्गमेधावभृथावतीर्णैः इक्ष्वाकुभिः पुण्यतरीकृतानि जलानि अयोध्याम् राजधानीम् अनु वहति ।

व्याक०—तीरे निखाता यूपा यस्याः सा तीरनिखातयूपा, निखात इति खनने क्तः । "जनसनखन .."इत्यात्वम् । तुरङ्गमेधेष्वभृथायावतीर्णैस्तुरङ्गमेधावभृथावतीर्णैः । अवतीर्णशब्दे तरते क्तः । अतिशयेन पुण्यानि पुण्यतराणि, अपुण्यतराणि पुण्यतराणि कृतानि पुण्यतरीकृतानि, पुण्यशब्दात्तरप्, तदन्तात् च्विः । अयोध्यामनु "लक्षणेत्थम् " इत्यनेन अनो कर्मप्रवचनीयत्वम् । "कर्मप्रवचनीययुक्ते द्वितीया" । इक्ष्वाकवः-इक्ष्वाकुशब्दात् "जनपदशब्दात् क्षत्रियाद् "इत्यनेनाञ् प्रत्ययः । बहुत्वविवक्षाया तद्राजत्वाद् "तद्राजस्य बहुषु "इत्यनेनाञो लुक् ।

व्याख्या—तीरे निखाता, यूपाः-पशुबन्धनार्हा यज्ञियस्तम्भा यस्यास्तथाभूता, या-सरयू, तुरङ्गमेधेषु-अश्वमेधेषु, अवभृथ दीक्षान्तस्नानम्, तदर्थमवतीर्णै-अवरुद्धै, सरयूजले प्रविष्टैः, इक्ष्वाकुभि-इक्ष्वाकुकुलोत्पन्नैरस्माकं पूर्वजै, पुण्यतरीकृतानि-अतिशयेन पवित्रता नीतानि, जलानि, अयोध्याम्-अयोध्यानाम्ना प्रसिद्धाम, राजधानीम्-नृपतिनिवासनगरीम्, अनु, अयोध्याराजधान्या समीप इति यावत्, वहति-प्रापयति ।

भा०—अस्यास्तीरेऽस्मत्पूर्वजैर्भूयासोऽश्वमेधाख्या महाक्रतवोऽनुष्ठिता, यत्प्रमाणभूता यज्ञयूपा अद्याप्येतत्तीरे निखाता दृष्टिपथमायान्ति, एषा चायोध्या-

मनुप्रवहति ।

अल०—पूर्वजकृतयज्ञानुष्ठानस्य भङ्गयन्तरेणाख्यानात् पर्यायोक्तम् । पूर्वज चरितैः सरय्वा महत्त्वबोधनाच्चोदात्तम् ।

**यां सैकतोत्सङ्गसुखोचितानां प्राज्यैः पयोभिः परिवर्धितानाम् ।**
**सामान्यधात्रीमिव मानसं मे सम्भावयत्युत्तरकोसलानाम् ॥ ६२ ॥**

अ०—याम् मे मानसम् सैकतोत्सङ्गसुखोचितानाम् प्राज्यैः पयोभिः परिवर्धितानाम् उत्तरकोसलानाम् सामान्यधात्रीमिव सम्भावयति ।

व्याक०—सैकत एवोत्सङ्गे (म० तत्पु०) सुखस्य (तत्पु०) उचितानाम् सैकतोत्सङ्गसुखोचितानाम् । सैकतशब्दे सिकताशब्दात् "सिकताशर्कराभ्यां च" इति मत्वर्थीयोऽण् । सामान्या च ता धात्री सामान्यधात्रीम् । धात्री दधातेस्तृच् "ऋन्नेभ्यो ङीप्" । मानसम्-मन एव मानसम्, मन शब्दात् प्रज्ञादित्वात् स्वार्थेऽण् ।

व्याख्या—याम्-सरयूम्, मे मम, मानसम्-मनः, सैकतम् पुलिनमेव, उत्सङ्गः क्रोडः, तत्र सुखम्, तस्योचितानाम्-परिचितानाम्, प्राज्यैः-प्रभूतैः, पयोभिः-जलैः, (पक्षे क्षीरैः) परिवर्धितानाम्-परिपोषितानाम्, उत्तरकोसलानाम् उत्तरकोसल-देशवासिनाम्, सामान्याम् साधारणीम्, धात्रीम् मातरमिव, सम्भावयति मन्यते ।

भा०—अहमिमां सरयूमुत्तरकोसलदेशवासिनां साधारणीं मातरं मन्ये । या नः सर्वान् स्वपुलिनोत्सङ्गे क्रीडयति, स्वपयोभिश्च पोषयति ।

अल०—सरय्वा साधारणधात्रीत्वसम्भावनादुत्प्रेक्षा । सा च सैकतोत्सङ्ग इति रूपकेण, पयोभिरिति श्लेषेण च सङ्कीर्यते ।

**सेयं मदीया जननीव तेन मान्येन राज्ञा सरयूर्वियुक्ता ।**
**दूरे वसन्तं शिशिरानिलैर्मां तरङ्गहस्तैरुपगूहतीव ॥ ६३ ॥**

अ०—मदीया जननीव मान्येन तेन राज्ञा वियुक्ता सा इयम् सरयूः दूरे वसन्तम् माम् शिशिरानिलैः तरङ्गहस्तैः उपगूहतीव ।

व्याक०—शिशिरोऽनिलो येषां ते शिशिरानिलैः । तरङ्गा हस्तास्तरङ्गहस्तैः ।

व्याख्या—मदीया, जननीव-माता कौसल्येव, मान्येन-पूज्येन, तेन प्रसिद्धेन, राज्ञा-दशरथेन, वियुक्ता-विरहिता, सा प्रकान्ता, इयम् पुरः प्रवहन्ती,

सरयू, दूरे-दूरदेशे, वसन्तम्-तिष्ठन्तमपि, माम्-पुत्रकल्पं रामचन्द्रम्, शिशिर-वारिसीकरसम्पर्केण शीतल., अनिलः वायु., येभ्य. प्रादुर्भवति तथाभूतै', तरङ्गैः-वीचिभिरेव, हस्तैः-करैः, उपगूहति-आलिङ्गतीव।

भा०—जननीव पित्रा दशरथेन वियुक्तैषा सरयू प्रवासादागच्छन्त पुत्रकल्प मा वारिसीकरैः पवन शिशिरयद्भिस्तरङ्गरूपैर्हस्तैरालिङ्गितुं यतत इव। अन्याऽपि जननी प्रोष्यागत श्रान्त पुत्र कराभ्या व्यजनपवनं सृजन्ती प्रेम्णा समालिङ्गति इति प्रकृतिसिद्धम्। पतिवियुक्तायाश्च जनन्या विशेषेण पुत्र एवाधारो भवतीति तत्रैव प्रेमातिशयप्रकटन युक्ततरम्।

अल०—उपमा। तरङ्गाणामूर्ध्वप्रसरण उपगूहनसभावनादुत्प्रेक्षा च। साभिप्रायैर्विशेषणै परिकरोऽपि।

**विरक्तसंध्याकपिश पुरस्ताद् यतो रज. पार्थिवमुज्जिहीते।**
**शङ्के हनूमत्कथितप्रवृत्ति प्रत्युद्गतो मा भरत. ससैन्य. ॥६४॥**

अ०—यतः पुरस्तात् विरक्तसध्याकपिशम् पार्थिवम् रजः उज्जिहीते ततः) हनूमत्कथितप्रवृत्तिः भरतः ससैन्य' (सन्) माम् प्रत्युद्गतः इति शङ्के।

व्याक०—विशेषेण रक्ता (त०) संध्येव (कर्म०) कपिशं (त०) विरक्तसध्याकपिशम्। सन्ध्याशब्दे ध्यायते "आतश्चोपसर्गे" इत्यङ्। हनुर्विद्यते यस्य स हनूमान् "शरदीना च" इति हनुशब्दस्य दीर्घे, तेन कथिता प्रवृत्तिर्यस्मै स हनूमत्कथितप्रवृत्ति'। इनेन सह वर्तत इति सेना, सेनैव सैन्यम, स्वार्थे ष्यञ्, तेन सह वर्तत इति ससैन्य., तुल्ययोगे बहुव्रीहि, "वोपसर्जनस्य' इति सहस्य सादेश'। उज्जिहीते-उत्पूर्वाद् 'ओहाङ्गतौ' इति धातोर्लट्। शङ्के-शकि धातोर्लडुत्तमपुरुषैकवचनम्।

व्याख्या—यत-यस्मात्कारणात्, पुरस्ताद्-अग्रे, विरक्ता-अतिरक्ता, या सन्ध्या-सन्ध्याकालिकी प्रभा, तद्वत् कपिशम् ताम्रवर्णम्, पार्थिवम्-पृथिव्या, रज-धूलि' उज्जिहीते-उद्गच्छति, तत, हनूमता, कथिता-निवेदिता, *प्रवृत्ति-अस्मदागमनवृत्तान्तो यस्मै, तथाभत, भरतः, ससैन्य सैन्यसहित. सन्, माम् रामम्, प्रत्युद्गत. स्वागतार्थं समागत इति शङ्के तर्कयामि।

* वार्ता प्रवृत्तिर्वृत्तान्त'—इत्यमर।

भा०—अयि प्रिये पुरस्ताद् वियति प्रसरन्त धूलिनिकरमवलोक्य तर्कयामि यद्धनूमता मदागमनविषये सूचितो भरत सैन्यपुरस्सर मत्स्वागत कर्तुमायाति ।

अल०—साधनेन साध्यज्ञानादनुमानालङ्कार ।

**श्रद्धा श्रिय पालितसङ्गराय प्रत्यर्पयिष्यत्यनघा स साधु ।**
**हत्वा निवृत्ताय मृधे खरादीन् संरक्षिता त्वामिव लक्ष्मणो मे ॥६४॥**

अ०—साधु सः पालितसङ्गराय मे अनघाम् संरक्षिताम् श्रियम्, मृधे खरादीन् हत्वा निवृत्ताय (मे) लक्ष्मणः (अनघाम् संरक्षिताम्) त्वामिव, प्रत्यर्पयिष्यति श्रद्धा।

व्याक०—पालित. सङ्गरो येन तस्मै पालितसङ्गराय। सङ्गरशब्दे गृणाते "ऋदोरप्"। अविद्यमानोऽघो यस्या तामनघाम्। खर आदिर्येषा तान् खरादीन्। खरशब्दे खशब्दाद् "रप्रकरणे खमुखकुञ्जेभ्य उपसंख्यानम्" इति र ।

व्याख्या—*साधु-सज्जन., स-भरत, पालित-निर्व्यूढ, सङ्गर-पितृप्रतिज्ञा, येन तथाभूताय, मे मह्यम्, अनघाम् अदोषाम्, भोगाभावादनुच्छिष्टाम्, संरक्षिताम्-न्यासरूपेण गोपायिताम्, श्रियम्-राजलक्ष्मीम्, मृधे संग्रामे, खरादीन्-खरप्रभृतीन् राक्षसान्, हत्वा, निवृत्ताय-प्रत्यागताय, मे, लक्ष्मण, अनघाम्-निष्पापाम्, संरक्षिताम्, त्वामिव-सीतामिव, प्रत्यर्पयिष्यति-प्रतिदास्यति, †श्रद्धा-सत्यम्।

भा०—ससैन्यमागच्छन्त भरतमुपश्रुत्य 'किमसौ भरतः स्वाधिगत राज्य निष्कण्टक विधातुमस्माभि सह योद्धुमायाति, किमद्याप्यस्माक दुर्दैव नावसितम्' इति संभाविता सीताया. शङ्कामपनोदयितुकामो राम. कथयति-हे प्रिये! त्वयैतद् विश्वसनीयम् यत् साधुमति स भरतश्चतुर्दशवर्षवनवासरूपा पितु प्रतिज्ञा परिपाल्य प्रतिनिवृत्ताय मे न्यासरूपेण रक्षिता स्वयमनुपभुक्ता राजलक्ष्मीमवश्य प्रत्यर्पयिष्यति। यथा वने खरादीन् राक्ष-

* साधुर्वार्धुषिके चारौ सज्जने चापि वाच्यवत्—इति विश्व.।

† सत्ये श्रद्धाऽञ्जसा द्वयम्—इत्यमर ।

सान् हत्वा प्रत्यागताय मे लक्ष्मण स्वरक्षिता निष्पापा त्वा प्रत्यार्पिपत्। अत्र शङ्कितहृदयया सीतयैव राजलक्ष्मीमुपमिमानस्य रामस्येद हृदयम्-यद् हे सीते ! मदनुपस्थितौ लक्ष्मणपार्श्ववर्तिन्यास्तव यथा स्वस्मिन् निष्पापत्वस्य लक्ष्मणे च साधुत्वस्य द्रढीयान् विश्वासस्तथैव भरतस्य राजलक्ष्म्यामनुरागकथापि नेति त्वया विश्वसनीयम् ।

अलं०—उपमा । अत्र भरत. प्रत्यर्पयिष्यति, लक्ष्मणस्तु प्रत्यार्पिपत्-इति भग्नप्रक्रमत्वमलङ्कारदोषस्तु न शङ्क्य, प्रत्यर्पणस्योपमाप्रयोजकत्वाऽविवक्षणात् । संरक्षितत्वानघत्वयोरेवोपमाप्रयोजकत्वात् । 'पालितसङ्गराय' 'साधु' इति विशेषणे प्रत्यर्पणस्य निश्चितत्वमभिव्यङ्क्त इति परिकरोऽपि । भावार्थोक्तरीत्या अलङ्कारेण वस्तुध्वनि ।

**असौ पुरस्कृत्य गुरु पदाति पश्चादवस्थापितवाहिनीक ।**
**वृद्धैरमात्यै सह चीरवासा मामर्घ्यपाणिर्भरतोऽभ्युपैति ॥ ६६ ॥**

अ०—पदाति, पश्चादवस्थापितवाहिनीक चीरवासा. अर्घ्यपाणि. असौ भरत गुरुम् पुरस्कृत्य वृद्धै. अमात्यै. सह माम् अभ्युपैति ।

व्याक०—पादाभ्यामततीति पदाति, पादोपपदादतते "अज्यतिभ्या पादे च" इतिण् प्रत्यय । "पादस्य पदाज्यातिगोपहतेषु" इति पादस्य पदादेशः । पश्चादवस्थापिता वाहिनी येन स पश्चादवस्थापितवाहिनीकः, "नद्यृतश्च" इति क । चीराण्येव वासासि यस्य स चीरवासा । अर्घ्यं पाणौ यस्य सोऽर्घ्यपाणि । अर्घ्यशब्दे "पादार्घाभ्या च" इति अर्घशब्दाद्यत् । पुरस्कृत्य-पुर पूर्वकात् 'कृ' धातो क्त्वा । "पुरोऽव्ययम्" इत्यनेन गतिसंज्ञा "कुगतिप्रादयः" इत्यनेन समास । "समासे नञ् " इत्यनेन क्त्वा, ल्यप्। "नमस्पुरसो . " इति सत्वम् । अमात्य-'अमा' इत्यव्ययाद् "अव्ययात् त्यप्" ।

व्याख्या—पदाति -पादाभ्या चलन्, पश्चात्-पृष्ठदेशे, अवस्थापिता, वाहिनी सेना, येन तथाभूत , चीराणि-वल्कलान्येव, वासासि वसनानि यस्य तथाभूत , अर्घ्यम् पूजोपचारार्थं वारि, पाणौ हस्ते यस्य तथाभूत , असौ भरत , गुरुन्-वसिष्ठन्, पुरस्कृत्य अग्रे कृत्वा, वृद्धै विद्यावयोवृद्धै , अमात्यै.-

मन्त्रिभिः, सह, माम्, अभ्युपैति-मत्समीपमागच्छति ।

भा०—सेनां पश्चात्कृत्वा गुरुं वसिष्ठमग्रगामिनं विधाय मन्त्रिभिः सह वल्कलवसनो हस्तेऽर्घोदकं दधानोऽसौ भरतः पद्भ्यामेव मत्समीपं आगच्छति । पदात्यादिविशेषणैः पूर्वपद्योक्तं भरतस्य साधुत्वं समर्थितम् ।

**पित्रा विसृष्टां मदपेक्षया यः श्रियं युवाप्यङ्कगतामभोक्ता ।**

**इयन्ति वर्षाणि तया सहोग्रमभ्यस्यतीव व्रतमासिधारम् ॥६७॥**

अ०—युवा अपि यः पित्रा विसृष्टाम् अङ्कगताम् (अपि) श्रियम् मदपेक्षया अभोक्ता (सन्) इयन्ति वर्षाणि तया सह उग्रम् आसिधारम् व्रतम् अभ्यस्यति इव ।

व्याकृ०—अङ्कमङ्के वा गताम् अङ्कगताम् । ममापेक्षया मदपेक्षया, अपेक्षा-ईक्षते. "गुरोश्चहल." इत्यप्रत्ययः । असेः-धाराया. (तत्पु०) इदम् आसिधारम्, "तस्येदम्" इति शैषिकोऽण् । न भोक्ता अभोक्ता । भुनक्ति "तृन्" इति सूत्रेण तद्धर्मार्थे तृन् । श्रियमिति तत्कर्मणि द्वितीया । षष्ठी तु न, "न लोकाव्यय " इत्यनेन निषेधात् । वर्षाणि-"कालाध्वनोरत्यन्तसंयोगे" इत्यनेन द्वितीया । विसृष्टाम्-सृजते. कर्मणि क्त. ।

व्याख्या—युवा प्राप्तयौवनोऽपि, यः-भरतः, पित्रा-जनकेन दशरथेन, विसृष्टाम्-दत्ताम्, अङ्कम्-उत्सङ्गम्, गताम्-प्राप्ताम् सर्वथा स्वाधीनामपि, श्रियम्-राजलक्ष्मीम्, मदपेक्षया-मद्भक्त्या, अभोक्ता अनुपभुञ्जानः सन्, इयन्ति वर्षाणि-चतुर्दश वत्सरान् यावत्, तया श्रिया (युवत्या इति च गम्यते) सह, उग्रम् अतिकठिनम्, *आसिधारम्-असिधाराचङ्क्रमणतुल्यत्वादासिधारपदव्यपदेश्यम्, व्रतम्-नियमम्, अभ्यस्यति-वर्तयतीव ।

भा०—यत्प्राप्तयौवनोऽप्येष भरतः केवलं मद्भक्त्या सर्वथा स्वाधीनामपि राजलक्ष्मीं न बुभुजे, तन्मन्येऽयं चतुर्दश वर्षाणि यावत् तया राजलक्ष्म्या सह उग्रमसिधाराचङ्क्रमणतुल्यं व्रतमनुष्ठितवान् । यथा असिधाराया

* युवा युवत्या सार्धं यन्मुग्धभर्तृवदाचरेत् ।
अन्तर्निवृत्तसङ्गः स्यादासिधारव्रतं हि तत् ॥ इति यादवः ।

चङ्क्रमणं दुष्करम्, तथैव युवावस्थायां प्राप्ताया युवत्या इव श्रियस्त्यागोऽपि दुष्कर इति भावः ।

अलं०—उपभोगहेतौ सत्यप्यनुपभोग इति विशेषोक्ति, सा च 'मदपेक्षया' इति निमित्तवचनात् सनिमित्ता । अभोक्ता-इति "आ क्वेस्तच्छीलतद्धर्मतत्साधुकारिषु" इत्याधिकारे विहितेन तद्धर्मार्थकेन तृना भरतेन श्रियोऽनुपभोगस्य धर्म्यत्व बोध्यते । असिधाराव्रतचरणोत्प्रेक्षा प्रधानम् । श्रिया युवतित्वारोपस्तत्प्रयोजक । भरतस्य धैर्यातिशयश्च व्यङ्ग्यः ।

एतावदुक्तवति दाशरथौ तदीया-
मिच्छां विमानमधिदेवतया विदित्वा ।
ज्योतिष्पथादवततार सविस्मयाभि-
रुद्वीक्षित प्रकृतिभिर्भरतानुगाभि ॥६८॥

अ०—दाशरथौ एतावद् उक्तवति विमानम् तदीयाम् इच्छाम् अधिदेवतया विदित्वा सविस्मयाभिः भरतानुगाभि प्रकृतिभि. उद्वीक्षितम् ( सत् ) ज्योतिष्पथाद् अवततार ।

व्याक०—अधिष्ठात्र्या देवतयाधिदेवतया, "कुगतिप्रादयः" इत्यनेन समास । देवताशब्दे देवशब्दात् स्वार्थे "देवात्तल्" । विस्मयेन सह वर्तमानाभि सविस्मयाभिः, विस्मय इति स्मयते. "एरच्" । भरतस्यानुगाभिर्भरतानुगाभि , अनुग शब्दे अनुगच्छतेर्डः । ज्योतिषा पथ -ज्योतिष्पथात् । "ऋक्पूरब्धू ०" इति समासान्तोऽप् । विमानमिति-अवतरणक्रियायाः कर्तृपदम्, अधिदेवतयेति वेदनकरणत्वेन विवक्षाया तृतीया, यद्वा वेदनकर्तरि तृतीया, प्रेरितामित्यध्याहार , अधिदेवतया रामेच्छां ज्ञात्वा प्रेरित विमानमवततारेत्यन्वयः ।

व्याख्या—दशरथस्यापत्य पुमान् दाशरथि , तस्मिन्दाशरथौ-रामे, एतावत् पूर्वोक्तम्, उक्तवति-कथितवति सति, विमानम्-पुष्पकम्, तदीयाम्-तस्येय तदीया, ताम्-रामसम्बन्धिनीम्, इच्छाम्-अभिलाषम्, अधिदेवतया-अधिष्ठातृदेवतया, द्वारभूतया, विदित्वा-ज्ञात्वा, तया प्रेर्यमाणमित्यर्थ , सविस्मयाभिः-अद्भुतविमानदर्शनेन चकिताभि , भरतानुगाभि -भरतमनुगच्छन्तीभि.,

प्रकृतिभि -प्रजाजनै , उद्वीक्षितम् ऊर्ध्वदिश्युत्कण्ठया दृष्टम्, ( सत् ) ज्योतिष्पथाद् ज्योतिषाम्-नक्षत्राणाम्, पन्था.-मार्ग आकाशम्, तस्माद्, अवततार-भूम्यामवरुरोह ।

भा०—एतावदुक्त्वा भगवान् रामचन्द्रो विरराम । अथ तस्य भूमाववरोहणेच्छा विज्ञातवत्या विमानाधिष्ठातृदेवतया प्रेरित पुष्पकमाकाशाद् भूमाववततार । तदानीं भूमाववतरत्तद्विमान भरतेन सह समायाता प्रजाजना: साश्चर्यमुदपश्यन् ।

अलं०—अवतरणे इच्छावेदनस्य हेतुत्वेनोपन्यासात् काव्यलिङ्गम्, जडस्य विमानस्यानुपपद्यमानं वेदनमधिदेवतयेत्यनेन समर्थितमिति तत्रापि काव्यलिङ्गम्, विस्मयस्य स्वशब्दोपात्ततयाऽद्भुतरसो विहत । इत प्रभृति 'वसन्ततिलका' छन्द ।

तस्मात्पुर सरविभीषणदर्शितेन
सेवाविचक्षणहरीश्वरदत्तहस्त. ।
यानादवातरददूरमहीतलेन
मार्गेण भङ्गिरचितस्फटिकेन राम ॥ ६९ ॥

अ०—राम: सेवाविचक्षणहरीश्वरदत्तहस्त: ( सन् ) पुर सरविभीषणदर्शितेन अदूरमहीतलेन भङ्गिरचितस्फटिकेन मार्गेण तस्माद् यानाद् अवातरत् ।

व्याक०—सेवाया विचक्षणेन (त० पु०) हरीणामीश्वरेण (त०पु०कर्म०) दत्तो हस्तो यस्मै स सेवाविचक्षणहरीश्वरदत्तहस्त । सेवा सेवते "गुरोश्च हल." इत्यप्रत्यय । विचक्षण.-चक्षिङ् धातो "अनुदात्तेतश्च हलादे" इति युच् । ईश्वर इति ईशेर्वरच् । पुरस्सरतीति पुरस्सर । "पुरोऽग्रतोऽग्रेषु सर्तेः" इति पुरउपपदात् सरतेष्टः । तेन विभीषणेन ( कर्म० ) दर्शितः ( त० पु० ) पुरस्सरविभीषणदर्शित , तेन । विभीषणशब्दे णिजन्ताद्भीधातोर्नन्द्यादित्वात् कर्तरि ल्यु , "भियो हेतुभये षुक्" । न दूर महीतल यस्मात्तेनादूरमहीतलेन । भङ्ग्या रचितानि स्फटिकानि यस्मिंस्तेन भङ्गिरचितस्फटिकेन । रचितशब्दे रचयतेर्निष्ठा । अवातरद् इति तरतेर्लङ् ।

व्याख्या—राम , सेवायाम् परिचर्यायाम्, विचक्षणेन-निपुणेन, हरी-

णाम्-वानराणाम्, ईश्वरेण स्वामिना-सुग्रीवेण, दत्त-समर्पित, हस्त.-हस्तावलम्बो यस्मै तथाभूत सन्, पुरस्सरेण-अग्रगामिना विभीषणेन, दर्शितेन-निर्दिष्टेन, अदूरम्-आसन्नम्, महीतलम्-भूतल यस्मात्तथाभूतेन, भङ्ग्या-विच्छित्या, रचितानि-बद्धानि, स्फटिकानि-यस्मिंस्तथाभूतेन, मार्गेण-सोपान-पथेन, तस्माद्-यानात्-पुष्पकाद्, अवातरत्-अवारोहत् ।

भा०—विमाने भूमिष्ठे जाते भगवान् रामचन्द्र सेवाकर्मकुशलेन सुग्रीवेण समर्पित हस्तसाहाय्यमवलम्ब्य मनोहारिणा स्फटिकरचितेन सोपानपथेन तस्मादवरोहति स्म । विभीषणश्चाग्रेसरो भूत्वा तस्मै मार्गमादिदेश ।

अल०—सेवाविचक्षणेत्यादिविशेषणाना साभिप्रायत्वात् परिकर ।

इक्ष्वाकुवशगुरवे प्रयत. प्रणम्य
स भ्रातरं भरतमर्घ्यपरिग्रहान्ते ।
पर्यश्रुरस्वजत मूर्धनि चोपजघ्रौ
तद्भक्त्यपोढपितृराज्यमहाभिषेके ॥ ७० ॥

अ०—प्रयत सः इक्ष्वाकुवशगुरवे प्रणम्य अर्घ्यपरिग्रहान्ते पर्यश्रुः ( सन् ) भ्रातरम् भरतम् अस्वजत, तद्भक्त्यपोढपितृराज्यमहाभिषेके मूर्धनि उपजघ्रौ च ।

व्याक०—इक्ष्वाकोर्वंशस्य गुरवे इक्ष्वाकुवंशगुरवे । "क्रियार्थोपपदस्य च । कर्मणि स्थानिन " इत्यनेन चतुर्थी । अर्घ्यशब्दे अर्घशब्दात् "पादार्घाभ्या च" इति यत् । अर्घ्यस्य परिग्रह, तस्यान्ते-अर्घ्यपरिग्रहान्ते । अश्रुभि परिगत पर्यश्रु.-"अवादय क्रुष्टाद्यर्थे तृतीयया" इत्यनेन समास. । परिगतान्यश्रूणि यस्येति बहुव्रीहिर्वा । तस्य तस्मिन्वा भक्त्या (तत्पु०) अपोढ (तत्पु०) पितृ राज्ये (तत्पु०) महान् अभिषेक (कर्म०, तत्पु०) येन (बहु०) तस्मिन् तद्भक्त्यपोढपितृराज्यमहाभिषेके । अपोढ इति वहते क्तः । राज्ञः कर्म भावो वा राज्यम्-इति राजन् शब्दात् "पत्यन्तपुरोहितादिभ्यो यक्" । प्रयत-प्रपूर्वकाद् यम् धातो. क्तः । प्रणम्य-नमते क्त्वा, ल्यप् । "उपसर्गादसमासेऽपि . "इति णत्वम् । अस्वजत-' स्वञ्ज परिष्वङ्गे ' लङ्, "दशसञ्जस्वञ्जा शपि" इति नलोप । मूर्धनि- 'विभाषा ङिश्योः' इति पाक्षिकोऽल्लोपो न । उपजघ्रौ-'घ्रा गन्धोपादाने' लिट् ।

व्याख्या—प्रयतः-जितेन्द्रिय, सः रामः, इक्ष्वाकुवंशस्य-इक्ष्वाकुकुलोत्पन्नाना राज्ञाम्, गुरवे-वसिष्ठाय, प्रणम्य-नमस्कृत्य, अर्घ्यस्य-अर्घोदकस्य, परिग्रह स्वीकारः, तदन्ते-तदवसाने, पर्यश्रु -अश्रुभिः-आनन्दवाष्पैः, परिगतः-व्याप्तः, आनन्दाश्रूणि मुञ्चन्, सन्, भ्रातरम्-भरतम्, अस्वजत आलिङ्गत् । सभ्रातरम् शत्रुघ्नसहितं भरतमालिङ्गदिति वा । तस्मिन्-रामे, भक्त्या-अनुरागेण, अपोढ-त्यक्तः, पितृराज्ये-पितृसमर्पितराज्यपदे, महाभिषेकः-राजसिंहासनारोहणोत्सवार्थ भूत स्नानं यस्मिंस्तथाभूतं, मूर्धानं-शिरसि, उपजघ्रौ-आघ्रातवांश्च ।

भा०—रामेण पूर्वं गुरवे वसिष्ठाय प्रणाम कृत, तदनु भरतदत्तमर्घ्यं गृहीत्वा भरतः प्रणमन् प्रेम्णा समाश्लिष्ट, वात्सल्येन शिरस्याघ्रातश्च, यस्मिन् भरतस्य शिरसि प्राप्तोऽपि राज्याभिषेको रामस्य भक्त्यैव प्रतिबद्धः, तस्मिन् शिरसि रामस्याघ्राणम्, पर्यश्रुतयाश्रुजलेन तदभिषेकश्च युक्त एवेत्याभिसन्धिः ।

अलं०—रामनिष्ठ भरतविषय वात्सल्यं व्यज्यते। तत्र भरत आलम्बनम्। अर्घोदकदानाद्युद्दीपनम्, आनन्दवाष्पालिङ्गनादयोऽनुभावा, अश्रुपातादिव्यञ्ग्यो हर्षश्च व्यभिचारी । तदङ्कत्यपोढेति-उपघ्राणयोग्यता दर्शिता, तेन परिकर ।

श्मश्रुप्रवृद्धिजनिताननविक्रियांश्च
प्लक्षान् प्ररोहजटिलानिव मन्त्रिवृद्धान् ।
अन्वग्रहीत् प्रणमत शुभदृष्टिपातै-
र्वार्तानुयोगमधुराक्षरया च वाचा ॥ ७१ ॥

अ०—श्मश्रुप्रवृद्धिजनिताननविक्रियान् (अत एव) प्ररोहजटिलान् प्लक्षानिव (स्थितान्) प्रणमत मन्त्रिवृद्धांश्च शुभदृष्टिपातै वार्तानुयोगमधुराक्षरया वाचा च अन्वग्रहीत् ।

व्याक०—श्मश्रूणां प्रवृद्धया (ष० तत्पु०) जनिता (तत्पु०) आननानां विक्रिया येषां तान् श्मश्रुप्रवृद्धिजनिताननविक्रियान्, विक्रियाशब्दे करोतेः "कृञ श च" इति भावे श । प्ररोहैर्जटिलान् प्ररोहजटिलान्। प्ररोहशब्दे रोहतेर्घञ्, जटिलान्-जटाशब्दात् "पिच्छादिभ्यश्च" इति 'इलच्' तद्धित । मन्त्रिणश्च ते वृद्धाश्च मन्त्रिवृद्धास्तान् । मन्त्री चौरादिकान्मन्त्रयतेः नन्दिग्रहि "

इत्यादिना णिनि। वार्तस्य वार्ताया वानुयोगे (तत्पु०) मधुराणि (तत्पु०) अक्षराणि (कर्म०) यस्या (वहु०) तया वार्तानुयोगमधुराक्षरया। अनुयोग इति युनक्तेर्घञ्। मधुरशब्दे मधुशब्दात् "ऊषसुषिमुष्कमधो र"। न क्षरन्तीत्यक्षराणि। क्षरते पचाद्यच्। क्लीवत्व लोकात्। अन्वग्रहीत् अनुपूर्वाद् 'ग्रह उपादाने' धातोर्लङ्। "ग्रहोऽलिटि दीर्घ"। हान्तत्वाद् वृद्धिर्न। प्रणमत -प्रपूर्वक नमतेः, अप्रथमासमानाधिकरणे शतृप्रत्यय। शुभदृष्टिपाते, वाचा, इति च तृतीया प्रकृत्यादित्वाद् वोद्धव्या, दृष्टिपातादिरूपमनुग्रहमकरोदिति। यद्वा ज्ञापके हेतौ तृतीया द्रष्टव्या, एभिरनुग्रह कृपा प्राकाशयदिति।

व्याख्या—श्मश्रूणाम-मुखरोम्णाम, प्रवृद्धया-क्षौराभावाद्वर्धनेन, जनिता-उत्पादिता, आननानाम्-मुखानाम, विक्रिया-वैवर्ण्यं येषा तथाभूतान्, अत एव प्ररोहै शाखावलम्बिभिरधोमुखैर्मूलै, जटिलान्-जटावत, *प्लक्षान्-प्लक्षवृक्षानिव स्थितान्, प्रणमत प्रणाम कुर्वतः, मन्त्रिवृद्धान् वयोवृद्धानमात्यॉश्च, शुभे -शोभने, कृपापूर्णे, दृष्टिपाते-अवलोकने, †वार्तस्य कुशलस्य §वार्ताया-वृत्तान्तस्य वा, अनुयोगे प्रश्ने, मधुराणि श्रुतिसुखकराणि, अक्षराणि-वर्णा यस्या तथाभूतया, वाचा-वाण्या च, अन्वग्रहीत्-अन्वकम्पत।

भा०—अथ चिराद् रामप्रवासेन विमनायमान, निर्वेदादकृतक्षौरसंस्कारतया प्रवृद्धकेशकलाप, विकृताकृतिर्जटिलप्लक्षपादपइव प्रतीयमान, विद्यया वयसा च वृद्ध, मन्त्रिवर्गो भगवन्त रामचन्द्र प्रणनाम। स च प्रणतान् तान् कृपार्द्रया दृशा सम्भाव्य तै सह कुशलप्रश्नपुरस्सर मधुर संललाप।

दुर्जातवन्धुरयमृक्षहरीश्वरो मे
पौलस्त्य एष समरेषु पुर प्रहर्ता।
इत्यादतेन कथितौ रघुनन्दनेन
व्युत्क्रम्य लक्ष्मणमुभौ भरतो ववन्दे ॥ ७२ ॥

अ०—अयम् मे दुर्जातवन्धु ऋक्षहरीश्वर (अस्ति) एष समरेषु पुर॰

---

* पिलखन' इति भाषाया प्रसिद्ध।

† वार्त फल्गुन्यरोगे च। §—वार्ता प्रवृत्तिर्वृत्तान्त इत्यमर।

प्रहर्ता पौलस्त्य (अस्ति) इति आदृतेन रघुनन्दनेन कथितौ उभौ लक्ष्मणम् व्युत्क्रम्य भरतः ववन्दे।

व्याक०—दुर्जाते बन्धुर्दुर्जातबन्धुः। दुर्जात इति जायतेरकर्मकत्वात् "गत्यर्थाकर्मक..." इत्यादिना कर्तरि क्तः। "जनसनखनाम्" इत्यात्वम्। ऋक्षाणां हरीणां च (द्वन्द्व०) ईश्वरः ऋक्षहरीश्वरः। "व्यन्तादजाद्यदन्तं विप्रतिषेधेन" इति ऋक्षस्य पूर्वनिपातः। प्रहर्तेति हरतेस्तृच्, तृन् वा। रघूणां नन्दनेन रघुनन्दनेन। ननु रघुशब्दस्य जनपदनामत्वाभावेन तत परस्यापत्यप्रत्ययस्य तद्राजत्वाभावेन 'तद्राजस्य बहुषु" इति लुकोऽप्राप्त्या राघवाणामिति रूपेण भाव्यम्, इति चेदत्र रघुशब्दस्य तद्वंश्ये लक्षणा बोध्या अत एव अपत्यार्थस्योक्तत्वात् 'उक्तार्थानामप्रयोगः' इति न्यायेन ततोऽपत्यप्रत्यय एव न जायते इति कथञ्चित्समाधेयम्। नन्दन इति नन्दयतेर्नन्द्यादित्वाल्ल्युः। पौलस्त्यः-पुलस्तिशब्दाद् गर्गादित्वाद्यञ्। आदृतेन 'दृङ्' धातोरकर्मकत्वविवक्षायां कर्तरि क्तः। अथवा भावनिष्ठान्तं विधाय अर्शआद्यचा समाधेयम्। व्युत्क्रम्य 'वि' 'उत्' एतदुपसर्गद्वयपूर्वात् क्रमु धातोः क्त्वा, ल्यबादेशश्च। ववन्दे वन्दतेर्लिट्।

व्याख्या—अयम्-पुरःस्थितः, मे-मम, दुर्जाते विपदि, बन्धुः-सहायः ऋक्षाणाम्-भल्लूकानाम्, हरीणाम् वानराणां च, ईश्वरः-प्रभुः सुग्रीवः, अस्ति। एष, समरेषु-सङ्ग्रामेषु, पुरः प्रहर्ता-सर्वाग्रगामी सन्छत्रुषु प्रहारकर्ता, पौलस्त्यः पुलस्तिऋषेर्गोत्रापत्यं विभीषणः, अस्ति। इति एवम्, आदृतेन-आदरेण ससम्मानम्, रघुनन्दनेन-रामेण, कथितौ परिचायितौ, उभौ-सुग्रीवविभीषणौ, लक्ष्मणम् सुमित्रानन्दनम्, भ्रातरमपि, व्युत्क्रम्य-उल्लङ्घ्य-अनभिवन्द्य, भरतः ववन्दे अभिवादयाञ्चक्रे।

भा०—राम 'अयमस्माकं विपद्बन्धुर्वानरराजः सुग्रीवः' अयं च संग्रामवीरः पुलस्तिऋषेः पौत्रो (मदर्थं गोत्रजेऽपि कृतवैरः) विभीषणः' इत्येवं सबहुमानं भरतेन सुग्रीवविभीषणयोः परिचयमकारयत्। अथ भरतो भ्रातरमपि लक्ष्मणमतिक्रम्य पूर्वं विपत्सहायत्वादिना माननीयौ

• दुर्जातं व्यसनं प्रोक्तम्—इति विशेषः।

तावेव ववन्दे । मल्लिनाथस्तु 'लक्ष्मणं व्युत्क्रम्य-आलिङ्गनशिरोघ्राणादिभिरमभाव्य' इति लक्ष्मणस्य कनिष्ठत्वमेवाभिसधाय व्याख्यातवान्। वस्तुतस्तु नात्रार्थे पद्यस्वरस प्रतीयते, अकृतप्रणामस्य कनिष्ठस्यालिङ्गनादिना असंभावनं स्वतःसिद्धमिति तत्प्रतिपादनार्थं व्युत्क्रम्य लक्ष्मणमिति वचनमपुष्टार्थमेव स्यात्। लक्ष्मणस्य ज्येष्ठत्वे तु तदतिक्रमणस्य सुग्रीवविभीषणयोर्गौरवप्रदर्शनार्थत्वाद् नापुष्टार्थता ।

अल०—व्युत्क्रमणे हेतूपन्यासात् काव्यलिङ्गम, रामस्य कृतज्ञत्वं भरतस्य तदुभौ श्रद्धातिशयश्च व्यज्यते ।

सौमित्रिणा तदनु ससृजे स चैन-
मुत्थाप्य नम्रशिरस भृशमालिलिङ्ग ।
रूढेन्द्रजित्प्रहरणव्रणकर्कशेन
क्लिश्नन्निवास्य भुजमध्यमुर स्थलेन ॥७३॥

अ०—तदनु सौमित्रिणा ससृजे, स च नम्रशिरसम् एनम् उत्थाप्य रूढेन्द्रजित्प्रहरणव्रणकर्कशेन उरःस्थलेन अस्य भुजमध्यम् क्लिश्नन्निव भृशम् आलिलिङ्ग ।

व्याक०—नम्र शिरो यस्य स नम्रशिरा , तम्। नम्रमिति "नमिकम्पि .. " इति नमतेः कर्तरि रप्रत्यय । रूढ , इन्द्रजित प्रहरणेन ( तत्पु० ) व्रण., ( कर्म० ) तेन कर्कश ( तत्पु० ) रूढेन्द्रजित्प्रहरणव्रणकर्कशः, तेन । रूढ इति रोहते क्त , अनिट्कत्वादिडभाव । इन्द्र जितवानितीन्द्रजित्, इन्द्रोपपदाद् जयते क्विप , तुगागमश्च । प्रहरणशब्दे हरते. करणे ल्युट् । सौमित्रि -सुमित्राशब्दाद "बाह्वादिभ्यश्च" इतीञ् । ससृजे 'सृज विसर्गे' इति धातो कर्तरि लिट्, पूर्वपद्योक्तो भरतश्चात्र ससर्जनक्रियाया कर्ता । एनम् अन्वादेशे 'इदम्' शब्दस्यैनादेश । उत्थाप्य-उत्पूर्वकणिजन्तात् तिष्ठते क्त्वा, ल्यप्। "उद स्थास्तम्भो" इति पूर्वसवर्ण । क्लिश्नन्निति क्लिश्नाते हेतौ शतृप्रत्यय ।

व्याख्या—तदनु-सुग्रीवविभीषणाभिवादनानन्तरम्, सौमित्रिणा-सुमित्राया अपत्येन लक्ष्मणेन, ससृजे-सगत , स च-लक्ष्मणश्च, नम्रम्-सम्मानप्रदर्शनाय

विनतम्, शिरः-मूर्धा यस्य तथाभूतम्, शिरो विनमय्य प्रणमन्तम्, एनम्-भरतम्, उत्थाप्य, रूढं किणतां प्राप्तं, इन्द्रजितः मेघनादस्य, प्रहरणेन अस्त्रेण, जनितो व्रणः क्षतम्, तेन कर्कशेन कठिनेन, उरःस्थलेन-स्ववक्षःस्थलेन, अस्य-भरतस्य, भुजमध्यम-भुजयोः बाह्वोः, मध्यम् मध्यभागम्, उरःस्थलम्, क्लिश्नन् पीडयन्निव, भृशम् अत्यर्थम्, आलिलिङ्ग-आशिश्लेष । व्याख्यानेऽस्मिन् भरतस्य प्रणामकरणाल्लक्ष्मणस्य तदपेक्षया ज्येष्ठत्वं प्रतीयते, प्रसिद्धन्तु रामायणादौ भरतस्य ज्येष्ठत्वम्, तदेतन्मतान्तरपरतया नेयम् भवन्ति हि ज्येष्ठत्वकनिष्ठत्वादौ बहुत्रैतिहासिकानां विसंवादाः, तथैवाय भरतलक्ष्मणयोर्ज्येष्ठत्वकनिष्ठत्वविषयेऽपि पुराणेतिहासानां विसंवाद एव । तत्र लक्ष्मणस्य ज्येष्ठत्वमतेनेदं द्रष्टव्यम् । यद्वा कनिष्ठोऽपि लक्ष्मणश्चिर रामानुवृत्त्या तत्सेवया च भरतस्य पूज्यतया मत इति तत एव भरतस्य प्रणामौचित्यं समर्थनीयम् । मल्लिनाथस्तु भरतस्यैव ज्येष्ठत्वं सिद्धान्तरूपेण मन्यमानः पद्यमिदमित्थं व्याचष्टे-स भरतः तदनु सौमित्रिणा ससृजे सगतः । च नम्रशिरसम् एनम् सौमित्रिम् उत्थाप्य कर्कशेन अस्य सौमित्रेः उरःस्थलेन, स्वीयं भुजमध्यं क्लिश्नन्निव, भृशमालिलिङ्ग, इति, तदेतत् क्लिष्टम् ।

भा०—पूर्वार्धं स्पष्टम् । उत्तरार्द्धस्य त्वयं भावः-यदिन्द्रजित्प्रहरणैर्ये व्रणा लक्ष्मणस्योरसि जाताः, कालक्रमेण प्ररूढाश्च, तैस्तस्योरसि कठोरता जाता । प्ररूढव्रणेऽङ्गे कठोरता स्फुटं सर्वे प्रतीयते । तयाऽनया ऽभिनवया कठोरतया लक्ष्मणो भरतहृदयं पीडयति स्मेति सम्भाव्यते । यथा कश्चिन्मल्लः स्वाङ्गे सविशेषां कठोरतामभिमन्यमानः परस्य मल्लस्याङ्गं पीडयितुं दृढमाश्लिष्येत्-तथैवायमाश्लेष इति तत्र क्लेशार्थत्वं कविनोत्प्रेक्षितम् । तादृशव्रणस्पर्शेन प्रहार मनुमाय प्रेम्णा भरतस्य हृदये क्लेशः इत्यप्यभिसन्धिः ।

अल०—मानार्थीकरीत्या हेतूत्प्रेक्षालङ्कारः । फलोत्प्रेक्षा वा ।

रामाज्ञया हरिचमूपतयस्तदानीं
कृत्वा मनुष्यवपुरारुरुहुर्गजेन्द्रान् ।
तेषु क्षरत्सु बहुधा मदवारिधाराः
शैलाधिरोहणसुखान्युपलेभिरे ते ॥ ७३ ॥

अ०—तदानीम् हरिचमूपतय. रामाज्ञया मनुष्यवपु. कृत्वा गजेन्द्रान् आरुरुहु., बहुधा मदवारिधारा. क्षरत्सु तेषु ते शैलाधिरोहणसुखानि उपलेभिरे ।

व्याक०—हरीणाम् चमूनाम् ( ष० त० ) पतयः (ष० त०) हरिचमूपतय । गजेष्विन्द्रान् गजेन्द्रान्, इन्द्रशब्दोऽत्र पुङ्गवादिशब्दवत् प्रशस्तवाची । शैलेष्वधिरोहणेन सुखानि शैलाधिरोहणसुखानि । अधिरोहणमिति रोहतेर्भावे ल्युट् । आज्ञा-आङ्पूर्वकज्ञाधातो "आतश्चोपसर्गे" इत्यङ् । तदानीम्-तच्छब्दाद् "दानीं च" इत्यनेन दानीप्रत्यय । "प्राग् दिशो विभक्ति." इति विभक्तित्वात्त्यदाद्यत्वम् । क्षरत्सु-क्षर् धातो लक्षणे हेतौ वा शतृप्रत्यय. । बहुधा बहुशब्दात् "सङ्ख्याया विधार्थे धा" इत्यनेन धा प्रत्यय. । उपलेभिरे-उपपूर्वाल्लभतेर्लिटि प्रथमपुरुषबहुवचनम् । एत्वाभ्यासलोपौ ।

व्याख्या—तदानीम्-तस्मिन्काले, हरीणाम्-कपीनाम्, चम्व. सेनाः, तासा पतय नायका, रामाज्ञया रामस्य, आज्ञया-अनुशासनेन, मनुष्यवपु -मानवोचितवेषभूषाविशिष्ट शरीरम्, कृत्वा, गजेन्द्रान्, आरुरुहु.-अधिरूढाः । बहुधा-बाहुल्येन, मदवारीणाम्-दानजलानाम्, धारा., क्षरत्सु-वर्षत्सु, तेषु-गजेन्द्रेषु, ते हरिचमूपतय, शैलेषु पर्वतेषु, अधिरोहणम्, तेन यानि सुखानि, तद्वत्सुखानि उपलेभिरे-प्राप्तवन्त ।

भा०—रामेण वानरचमूपतीना सभ्यमनुष्योचिता वेषभूषा कारिता, विशालेषु मत्तेषु च गजेन्द्रेषु त आरोहिता । तेन पर्वतारूढा इव ते ऽनुभूयन्ते स्म । पर्वते यथा वारिधारा, तथा गजेष्वपि मदजलधारा इति ।

अल०—शैलेन्द्रारोहणजन्यसुखस्य गजेन्द्रारोहणेऽसम्भवात् सादृश्ये पर्यवसानम्, अतो निदर्शना ।

सानुप्लव प्रभुरपि क्षणदाचराणा-
भेजे रथान् दशरथप्रभवानुशिष्ट ।
मायाविकल्परचितैरपि ये तदीयै-
र्न स्यन्दनैस्तुलितकृत्रिमभक्तिशोभा. ॥ ७२ ॥

अ०—सानुप्लव क्षणदाचराणाम् प्रभु. अपि दशरथप्रभवानुशिष्टः ( सन् ) रथान् भेजे, ये मायाविकल्परचितै. अपि तदीयै स्यन्दनै. तुलितकृत्रिमभक्ति-

शोभा न ( आसन् )।

व्याक०—अनुप्लवन्त इत्यनुप्लवा., प्लवते पचाद्यच्, तै सह वर्तते सानुप्लवः। क्षणं ददातीति क्षणदा, ददाते " आतोऽनुपसर्गे कः "। तस्या चरन्तीति क्षणदाचराः, तेषाम्, " चरेष्टः "। प्रभवन्त्यस्मादिति प्रभव भवते. " ऋदोरप् "। दशरथ. प्रभवो यस्य, (बहु०) तेनानुशिष्ट (त० पु०) दशरथप्रभवानुशिष्ट । अनुशिष्ट इति शास्ते क्त, ' शास इदङ्हलो " इत्युपधाया इत्वम्, " शासिवासि " इति षत्वम्। मायाया विकल्पै रचितानि मायाविकल्परचितानि, तै । विकल्पशब्दे ' कृपू सामर्थ्ये ' धातोर्घञ् । क्रियया निर्वृत्ता कृत्रिमा, करोते " ड्वित क्त्रि " " क्त्रेर्मप् नित्यम् "। तुलिता कृत्रिमा भक्ति शोभा येषा ते तुलितकृत्रिमभक्तिशोभा । तुलिता " अतुलोपमाभ्याम् " इति निपातनात् सिद्धादङन्ततुलाशब्दाण्णिच्, ततो निष्ठा। स्यन्दनम्-' स्यन्दू प्रस्रवणे ' ल्युट्।

व्याख्या–*सानुप्लव -सानुचर., †क्षणदाचराणाम् रात्रिचराणाम् राक्षसानाम्, प्रभु -राजा, विभीषणोऽपि, दशरथ प्रभव जनको यस्य तथाभूतेन-रामेण, अनुशिष्टः आज्ञप्त. सन्, रथान् स्यन्दनानि, भेजे-आरुरोह। ये-रथा , माया-विकल्पै -विविधेन्द्रजालै., रचितै निर्मितैरपि, तदीयै विभीषणस्य, स्यन्दनैः रथै., तुलिता उपमिता, कृत्रिमा-संस्कारोत्पादिता, भक्ते -रचनाविशेषस्य, शोभा-सौन्दर्यं येषा तथाभूता , न आसन्।

भा०—रामाज्ञया विभीषणोऽपि सुसज्जिते रथे समुपविष्ट । तदनुगाश्चापि तथविधेष्वन्येषु रथेषु । यद्यपि विभीषणादीना राक्षसाना मायानिर्मिता उत्कृष्टा रथा भवन्ति, तथापि कृत्रिमप्रसाधना अपि रामरथास्तदपेक्षया अत्युत्कृष्टा आसन्।

अल०—व्यतिरेक ।

भूयस्ततो रघुपतिर्विलसत्पताक-
मध्यास्त कामगति सावरजो विमानम्।

---

* अभिसारस्त्वनुसर सहायोऽनुप्लवोऽनुग —इति यादव. ।

† रात्रिस्त्रियामा क्षणदा क्षपा—इत्यमर ।

दोषातनं बुधबृहस्पतियोगदृश्य-
स्तारापतिस्तरलविद्युदिवाभ्रवृन्दम् ॥ ७६ ॥

अ०—ततः सावरजः रघुपतिः विलसत्पताकम् कामगति विमानम् बुध बृहस्पतियोगदृश्यः तारापतिः दोषातनम् तरलविद्युद् अभ्रवृन्दमिव भूयः अध्यास्त।

व्याक०—अवरं जातौ-अवरजौ, "अन्येष्वपि दृश्यते" इत्यवरोपपदाज्जनेर्डः। ताभ्यां सह वर्तत इति सावरजः। "तेन सहेति तुल्ययोगे" बहुव्रीहिः। विशेषेण लसन्ती पताका यस्मिंस्ताद्विलसत्पताकम्। कामं यथा स्यात्तथा गतिर्यस्य तत्कामगति। बुधश्च बृहस्पतिश्च बुधबृहस्पती, ताभ्यां योगेन (तत्पु०) दृश्य बुधबृहस्पतियोगदृश्यः। बुध इति बुध्यतेः "इगुपधज्ञाप्रीकिरः कः"। बृहतां पतिर्बृहस्पतिः-"तद्बृहतोः करपत्योश्चोरदेवतयोः सुट्तलोपश्च"। दृश्य इति पश्यते "ऋदुपधाच्चाक्लृपिचृतेः" इति क्यप्। तरला विद्युद् यस्मिंस्तत्तरलविद्युत्। अभ्राणां वृन्दमभ्रवृन्दम् "अधिशीङ्स्थासां कर्म" इति अध्यास्तेः कर्मणि द्वितीया। दोषातनम्-दोषेत्यव्ययात् "सायं चिरं प्राह्णे प्रगे ." इति सूत्रेण ट्युप्रत्ययस्तुडागमश्च, "युवोरनाकौ"। अध्यास्त अधिपूर्वात्-'आस् उपवेशने' इति धातोर्लङ्।

व्याख्या—ततः तदनन्तरम्, अवरजाभ्याम् भरतलक्ष्मणाभ्यां सहितः, रघुपतिः रामः, विलसन्ती विशेषेण शोभमाना, पताका-वैजयन्ती, यस्मिंस्तथाभूतम्, कामम्-यथेच्छम्, गतिः गमनं यस्य तथोक्तम्, विमानम् पुष्पकम्, बुधबृहस्पतिभ्याम्-तन्नामकाभ्याम् नक्षत्राभ्याम्, योगेन-सम्बन्धेन, दृश्यः-दर्शनीयः प्रियदर्शन इति यावत्, तारापतिः-चन्द्रमा, दोषातनम्-दोषा रात्रिः, तत्र भवम्, तरला-स्फुरन्ती, विद्युत् तडिद्, यस्मिंस्तथाभूतम्, अभ्राणाम्-मेघानाम्, वृन्दम्-समूहमिव, भूयः-पुनरपि, अध्यास्त-अधितष्ठौ।

भा०—प्रणामादिसम्भावनानन्तरं भरतलक्ष्मणाभ्यां सह रामः पुनः पुष्पकविमानमारूढः। तत्र च तस्य बुधबृहस्पतियुक्तस्य सायंतनाभ्रमध्यगतस्य चन्द्रस्येव शोभाऽभूत्। अभ्रे यथा विद्युद्, विमाने तथैव पताका राजते।

अल०—उपमा।

**तत्रेश्वरेण जगतां प्रलयादिवोर्वीं**
**वर्षात्ययेन रुचमभ्रघनादिवेन्दोः ।**
**रामेण मैथिलसुतां दशकण्ठकृच्छ्रात्**
**प्रत्युद्धृतां धृतिमतीं भरतो ववन्दे ॥ ७७ ॥**

अ०—तत्र भरतः जगताम् ईश्वरेण प्रलयात् (उद्धृताम्) उर्वीमिव वर्षात्ययेन अभ्रघनात् (उद्धृताम्) इन्दोः रुचमिव रामेण दशकण्ठकृच्छ्रात् प्रत्युद्धृताम् धृतिमतीम् मैथिलसुताम् ववन्दे ।

व्याक०—वर्षाणामत्ययो वर्षात्ययस्तेन । अत्यय इत्यतिपूर्वाद् एते "एरच्" । अभ्राणां घनोऽभ्रघनस्तस्माद्, घनशब्दे "मूर्तौ घनः" इति हन्तेः अप्, घनादेशश्च । दश कण्ठा यस्य स दशकण्ठः, स एव कृच्छ्रम्, तस्माद् दशकण्ठकृच्छ्रात् । मिथिलाया ईश्वरो मैथिलः, "तस्येश्वरः" इति मिथिलाशब्दादण् । तस्य सुता मैथिलसुताम् । जगताम् "वर्तमाने पृषन्महद्बृहज्जगच्छतृवच्च" इत्यनेनौणादिकसूत्रेण शतृप्रत्ययान्तो जगच्छब्दो निपात्यते । प्रलय-प्रोपसर्गाद् लीङ्धातोः "एरच्" । उर्वीम्-उरुशब्दाद् "वोतो गुणवचनात्" इति ङीप् । रुचम्-भावे क्विप् । प्रत्युद्धृता- 'प्रति' 'उत्' इत्युपसर्गद्वयपूर्वाद् 'हृ' धातोः क्तः ।

व्याख्या—तत्र विमाने, भरतः, जगतामीश्वरेण-जगत्प्रभुणा आदिवराहेण, प्रलयात्-प्रतिसर्गाद् (उद्धृताम्) उर्वीमिव पृथ्वीमिव, वर्षात्ययेन-शरदागमेन, अभ्रघनाद् मेघसंघाताद् (उद्धृताम्) इन्दोः चन्द्रमसः, रुचमिव-चन्द्रिकामिव, रामेण, दशकण्ठः रावण एव, कृच्छ्रम्-कष्टम्, तस्मात्, प्रत्युद्धृताम्-निष्कासिताम्, धृतिमतीम्-धैर्यवतीम्, मैथिलस्य-जनकस्य, सुताम्-पुत्रीम्, सीताम्, ववन्दे-प्रणनाम ।

भा०—सीता विमान एवारूढाभूत्, विमाने प्राप्तो भरतस्तां ववन्दे । स्य सीता कृच्छ्रगता रामेणोद्धृतास्ति । तत्रोपमाद्वय स्पष्टम् ।

अल०—मालोपमा ।

**लङ्केश्वरप्रणतिभङ्गदृढव्रतं तद्**
**वन्द्यं युगं चरणयोर्जनकात्मजायाः ।**

ज्येष्ठानुवृत्तिजटिल च शिरोऽस्य साधो-
रन्योऽन्यपावनमभूदुभय समेत्य ॥ ७८ ॥

अ०—लङ्केश्वरप्रणतिभङ्गदृढव्रतम् वन्द्यम् तद् जनकात्मजाया· चरणयो युगन् च ज्येष्ठानुवृत्तिजटिलम् साधो अस्य शिरः ( इति ) उभयम् समेत्य अन्योऽन्यपावनम् अभूत ।

व्याक०—लङ्काया ईश्वरस्य ( ष०तत्पु० ) प्रणतीना ( ष०त० ) भङ्गेन भङ्गे वा ( तत्पु० ) दृढ ( तत्पु० ) व्रत यस्य ( बहु० ) तल्लङ्केश्वरप्रणति भङ्गदृढव्रतम् । भङ्ग -भनक्तेर्घन् । दृढम्-दृह धातोर्निष्ठायाम् "दृढः स्थूल बलयो " इत्यनेन निपात्यते । अतिशयेन वृद्धो ज्येष्ठ । वृद्धशब्दाद् 'इष्ठन्' प्रत्यय , "वृद्धस्य च" इति ज्यादेश । तस्यानुवृत्त्या जटिलं ज्येष्ठानुवृत्ति-जटिलम् । जटिलशब्दे जटाशब्दात् सिध्मादित्वादिलच् , साधु· साध्नोति 'उः'। वन्द्यम् वन्दते "ऋहलोर्ण्यत्"। आत्मनो जातेत्यात्मजा, "पञ्चम्यामजातौ" इति ड । अन्योऽन्यशब्दे "कर्मव्यतिहारे सर्वनाम्नो द्वेवाच्ये" इत्यनेन वार्तिकेन द्वित्वम् । "असमासवद्भावे पूर्वपदस्य " इत्यनेन सुप सुरादेश. । पावनम्-णिजन्तपूङ्धातोर्ल्युप्रत्यय । उभयम् उभशब्दाद् "उभादुदात्तो नित्यम्" इत्ययच । समेत्य 'सम्' 'आङ्' एतदुपसर्गद्वयपूर्वाद् 'इण्' धातोर्ल्यप् , तुगागमश्च ।

व्याख्या—लङ्केश्वरस्य रावणस्य, प्रणतीनाम् प्रणामानाम्, भङ्गेन-तिरस्कारेण, दृढम् अस्खलितम्, व्रतम् नियमो, यस्य तथाभूतम्, यद्वा-प्रणामाना भङ्गे तिरस्कारे दृढ व्रत यस्य तथाभूतम्, अत एव वन्द्यम्, नमस्कर्तुं योग्यम्, तत् प्रसिद्धम्, जनकस्य-जनकवंशोत्पन्नस्य, सीरध्वजस्य, आत्मजाया -पुत्र्या , जाताया , चरणयो , युग्मम्, च-पुन , ज्येष्ठस्य-ज्येष्ठभ्रातृ रामचन्द्रस्य, अनुवृत्त्या-अनुसरणेन, जटिलम् जटायुक्तम्, साधो -सज्जनस्य, अस्य-भरतस्य, शिर -मूर्धा, इति एतद् , उभयम् द्वयम्, समेत्य मिलित्वा, अन्योऽन्यस्य परस्परस्य, पावनम्-पवित्रतासम्पादकम्, अभूत् ।

भा०—सीताचरणयुगलेन भूयो भूय प्रणमन् लङ्केश्वरोऽपि धर्मरक्षणाय निरस्त इति तदतिपवित्रम्, भरतस्य शिरसा च ज्येष्ठ भ्रातरं धर्मानुकूल्ये-

नानुवर्तमानेन राज्याभिषेकं परित्यज्य ज्येष्ठो भ्राता वने जटा बिभर्ति, स्वयमपि जटा विधृता तेन तदपि पवित्रतमम् । अनयोः कस्य पवित्रतायाः विशेष इति तारतम्यनिर्णयस्य कर्तुमशक्यत्वेन उभयोः परस्परं पावनत्व मभिहितम् ।

अल०—अत्र सीताचरणयुगभरतशिरसोः सदृशयोः समुदायवर्णनात्समो-ऽलङ्कारः । अत्र रावणादिपदान्यनुक्त्वा तत्स्थाने लङ्केश्वरादिपदन्यसनमतिशयेन चमत्कारमावहति । लङ्कायाः सुवर्णमय्याः ईश्वर-इन्द्रादीनपि पराजित्य स्वातन्त्र्येण तस्या उपभोक्ता, न तु साधारणः स्वामी, तस्यापि नानुरोधमात्रम्, अपि तु प्रणतिः, सापि न यथाकथंचिन्नमनमात्रम्, अपि तु चरणयुग विलुण्ठनम्, तस्या अपि न प्रत्याख्यानमात्रम्, अपि तु भङ्गः, सोऽपि नैकवारम्, किन्तु भूयोभूयस्तत्करणेन तद्व्रतत्वम्, तत्रापि च व्रते दृढत्व यस्य प्रतीतम् इति चरणयुगस्य लोकातिशायिनं महिमानमिमानि पदान्या- विष्कुर्वन्ति, जनकात्मजाया इति च तथा व्रते योग्यतां व्यनक्ति, यतो विज्ञातपरावरस्य साक्षाद्ब्रह्मविदो जनकस्येयमात्मजा, ततो युक्तमेव तस्या भग दृढव्रतत्वमिति । तथैव ज्येष्ठानुवृत्तिजटिलमित्यत्रापि रामस्य नेश्वरबुद्ध्या, न वा भयेनानुवृत्तिः, अपि तु ज्येष्ठो भ्रातेति धर्मबुद्ध्यैव, साप्यनुवृत्तिर्न वाङ्मात्रेण, अपि त्वभिषेकं परित्यज्य वन इव ब्रह्मचर्येण जटाधारणम् तेन भरतशिरसोऽपि लोकातिशायी महिमाविष्कृतः । तेनैतादृशार्थानामा विशेषणसङ्कुलत्वात्परिकरः । व्यङ्ग्यार्थचमत्कारातिशयाद्योतनमकाव्यमिदम् । परस्परं पावनत्वरूपोपकारकरणाच्चान्योन्यालङ्कारः ।

> क्रोशार्धं प्रकृतिपुरःसरेण गत्वा
> काकुत्स्थः स्तिमितजवेन पुष्पकेण ।
> शत्रुघ्नप्रतिविहितोपकार्यमार्यः
> साकेतोपवनमुदारमध्युवास ॥७९॥

इति महाकविकालिदासकृते रघुवंशे महाकाव्ये दण्डकाप्रत्यागमनो नाम त्रयोदशः सर्गः ॥

अ०—आर्यः काकुत्स्थः प्रकृतिपुरःसरेण स्तिमितजवेन पुष्पकेण क्रोशार्धम् गत्वा शत्रुघ्नप्रतिविहितोपकार्यम् उदारम् साकेतोपवनम् अध्युवास।

व्याक०—आर्य -ऋधातो "ऋहलोर्ण्यत्" । सरन्तीति सरा, पचाद्यच्, पुरः सरा इति पुरस्सरा, अथवा सरणं सरः, "पुंसि संज्ञायां घः प्रायेण", पुरः सरो यासां ताः पुरस्सराः । प्रकृतयः पुरस्सरा यस्य तत् प्रकृतिपुरस्सरम्, तेन । विशेष्यबोधकस्यापि प्रकृतिशब्दस्य पूर्वनिपात आहिताऽग्न्यादित्वं प्रकल्प्य पूर्वनिपातविधेरनित्यत्वाद्वा कथंचिदुपपाद्यः । यत्तु मल्लिनाथैः प्रकृतयः पुरस्सर्यो यस्य तदिति व्याख्यातम्, तत्तु न सङ्गतं भाति यद्यपि-"पुरोऽग्रतोऽग्रेषु सर्त्तेः" इत्यनेन ट प्रत्यये टित्त्वान्ङीपि पुरस्सरीशब्दः सिध्यति, तथापि तेन बहुव्रीहौ नदीत्वाद्, "नद्यृतश्च" इति कपा प्रकृतिपुरस्सरीकम् इति स्यात् । वस्तुतस्तु प्रकृतीनां पुरस्सरम् इति षष्ठीतत्पुरुषो युक्त आभाति । स्तिमितो जवो यस्य तेन स्तिमितजवेन । क्रोशस्यार्धं क्रोशार्धम् । "कालाध्वनोरत्यन्तसंयोगे" इत्यनेन द्वितीया । शत्रून् हन्तीति शत्रुघ्नः, मूलविभुजादित्वाच्छत्रूपपदाद् हन्तेः क, तेन प्रतिविहिता उपकार्या यत्र तच्छत्रुघ्नप्रतिविहितोपकार्यम् । उपक्रियत इत्युपकार्या, करोतेः "ऋहलोर्ण्यत्" । साकेतोपवनम् इति "उपान्वध्याङ्वसः" इत्यनेनाधिवसतेः कर्मणि द्वितीया ।

व्याख्या—आर्यः पूज्यः, काकुत्स्थः-ककुत्स्थकुलोत्पन्नो रामः, प्रकृतयः-प्रजाः, पुरस्सराः-अग्रगामिन्यो यस्य तथाभूतेन, यद्वा प्रजानां पुरःसरेण-अग्रगामिना, अत एव स्तिमितः मन्दः, जवः-वेगो यस्य तथाभूतेन, पुष्पकेण, क्रोशार्धम् क्रोशस्यार्धभागं यावद्, गत्वा, शत्रुघ्नेन-प्रतिविहिताः सज्जिताः, उपकार्याः-पटभवनानि, यत्र तथाभूतम्, उदारम् महत्, साकेतस्य अयोध्यायाः, उपवनम् आरामम्, अध्युवास-अधितष्ठौ ।

भा०—ततः प्रभृति प्रजाः पुष्पकस्याग्रे (व्याख्यान्तरानुसारेण तु * पृष्ठतः) गन्तुं प्रवृत्ता, तत एव पुष्पकस्य वेगो मन्दीकृतः, तेन च कियद्दूरं गत्वा रामेणायोध्याया बहिरेव पटमण्डपेषु शत्रुघ्नेन सज्जितेषु स्थितिः कृता ।

---

* राजा अग्रे याति, प्रजास्तु तमनुवर्तन्ते—इत्येवं समञ्जसमपि ।

अल०—प्रकृतिपुर मरेणेति जवमन्दीकरणे साभिप्रायम्, तेन परिकर । बहूना वाक्यानामर्थस्यैकेन वाक्येन प्रतिपादनादोजोगुण ।

इति च्छात्रोपकारिण्या व्याख्याया द्वितीय सर्ग. ।

सग्रहे द्वितीय सर्ग समाप्त ।



# महाकाव्य-संग्रहः ।

## ( संग्रहे तृतीयः-कुमारसम्भवे प्रथमः सर्गः )

अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः ।
पूर्वापरौ तोयनिधी वगाह्य स्थितः पृथिव्या इव मानदण्डः ॥१॥

अ०—उत्तरस्यान् दिशि देवतात्मा पूर्वापरौ तोयनिधी वगाह्य स्थितः पृथिव्या मानदण्डइव हिमालयः नाम नगाधिराजः अस्ति ।

व्याक०—देवता आत्मा यस्य स देवतात्मा । तोयानां निधी तोयनिधी । निधिशब्दे दधातेरधिकरणे कि । अवगाहनक्रियाकर्मणि द्वितीया । मानस्य मानार्थो वा दण्डो मानदण्ड, यद्वा मीयतेऽनेनेति मानम्, तच्चासौ दण्डश्चेति कर्मधारय । माधातोर्भावे करणे वा ल्युट् । हिमानामालयो हिमालय । आलय इति लीयते. "एरच्" । अधिको राजाधिराजः, प्रादिसमास । 'राजाह सखिभ्यष्टच्" । न गच्छन्तीति नगा', नञुपपदाद् गच्छतेर्ड । "नगोऽप्राणिष्वन्यतरस्याम्" इति नञो नलोपो न । तेषामधिराजो नगाधिराजः । वगाह्य-अवपूर्वाद् गाहते क्त्वा, ल्यप् । भागुरिमते अवोपसर्गस्याकारलोप, पिधेहीत्यादिवत् ।

व्याख्या—उत्तरस्याम्-उदीच्याम्, दिशि, देवता, आत्मा-स्वरूपम्, ( अधिष्ठाता ) यस्य तथाभूत, पूर्वापरौ-पूर्वपश्चिमौ, तोयनिधी-समुद्रौ, वगाह्य-आक्रम्य, स्थित., पृथिव्या, मानदण्डइव आयामपरिच्छेदकदण्डइव, हिमालयो नाम हिमाच्छादितत्वाद् हिमालयनाम्ना प्रसिद्ध, नगानाम्-पर्वतानाम्, अधिराज-सर्वश्रेष्ठो गिरि, अस्ति ।

भा०—देवभूम्यामुत्तरस्यां दिशि देवरूप सर्वगिरिश्रेष्ठ एको महान् गिरिरस्ति । य सर्वश हिमाच्छादितत्वाद् हिमालयनाम्ना लोके प्रसिद्ध ।

---

* "वारिनिधी विगाह्य"—इति पाठान्तरम् ।

किं च य पूर्वपश्चिमसमुद्रमध्यवर्तिनीं सर्वां भुवं व्याप्य तिष्ठति, अत एव भुव आयामपरिच्छेदाय प्रसारितो मानदण्डइव लक्ष्यते । देवतात्मेत्यनेन केवल स्थावरात्मत्व निराकृत्य वक्ष्यमाणचेतनोचितविवाहादिघटनायोग्यता सूच्यते।

अल०—हिमवतो मानदण्डत्वसम्भावनादुत्प्रेक्षा । हिमवतोऽतिमहत्त्व व्यज्यते ।

अतः प्रभृति षोडशभिर्हिमाद्रेर्वर्णनम्।

**यं सर्वशैला परिकल्प्य वत्स मेरौ स्थिते दोग्धरि दोहदक्षे ।**
**भास्वन्ति रत्नानि महौषधीश्च पृथूपदिष्टा दुदुहुर्धरित्रीम् ॥ २ ॥**

अ०—सर्वशैलाः यम् वत्सम् परिकल्प्य दोहदक्षे मेरौ दोग्धरि स्थिते (सति) पृथूपदिष्टाम् धरित्रीम् भास्वन्ति रत्नानि महौषधीश्च दुदुहु ।

व्याक०—पृथुनोपदिष्टा पृथूपदिष्टाम् । उपदिष्टामिति दिशे क्त । महत्य ओषध्यो महौषध्यस्ताः । "सन्महत्परमोत्तमोत्कृष्टा पूज्यमाने." इत्यनेन समास , पुंवद्भाव , "आन्महत समानाधिकरणजातीययो " इति महच्छब्द-स्यात्वम् । परिकल्प्य कल्पयते क्त्वा, ल्यप् । दोहे, दोग्धरि-उभयत्र दोग्धे क्रमेण भावे घञ् कर्तरि तृच् च । भास्वन्ति, भास् शब्दात् प्राशस्त्ये मतुप् । दुदुहुः दोग्धे कर्तरि लिट् । 'धरित्राम्' इति दोहनक्रियाया अकथित कर्म । रत्नानि, महौषधीश्चेति-ईप्सिततमत्वात् प्रधान कर्म । सर्वशैला इति च कर्तृपदम् । यद्यपि शैलाना दोहे प्रेरकत्वमेव, कर्तृत्व तु मेरो , तथापि ' पञ्च-भिर्हलै कर्षति ग्राम ग्रामणी ' इतिवत् प्रयोजकस्यापि कर्तृत्वेन व्यपदेश इति श्रीमन्मल्लिनाथ । श्रीमन्नारायणस्तु दुहेरन्तर्भावितण्यर्थत्वमाश्रित्य समादधे ।

व्याख्या—सर्वे, शैला -निषधविन्ध्यादयो गिरय , यम् हिमालयम्, ( प्रस्तुतये ) वत्सम्-परिकल्प्य विधाय, दोहे दोहनकर्मणि दक्षे चतुरे, महा-मेरुनाम्ना प्रसिद्धे गिरौ, स्थिते सति, पृथुना वेनसुतेन पृथुसंज्ञकेन राज्ञा, उपदि ष्टाम्- जनानामभीष्टदोहनार्थं त्वयानुकूलया भवितव्यम ' इत्येव प्रकार गामिनीम्, ( गोरूपधराम् ) धरित्रीम् पृथ्वीम् ( तस्या सकाशात ) भास्व प्रशस्तकान्तियुतानि, रत्नानि मरकतपद्मरागप्रभृतीन् मणीन् , महौषधी-

मृतसञ्जीविनीप्रभृतीनि भैषज्यानि च, - दुदुहु'-दुग्धवन्त', मेरुणा दोहितवन्त इतियावत् ।

भा०—पुरा किल पृथु क्षुत्क्षामदेहाना प्रजानामन्नपानाद्यभीष्टसिद्ध्यर्थं गोरूपधरामुर्वी प्रजाभिरात्माभीष्टमर्थं दोहयामास । तत्र तेषु तेषु वर्गेषु यथोक्त दोग्धारो वत्साश्च परिकल्पिता इति भागवती कथानेन पद्येन सूचिता । तदेव दोहनप्रसङ्गे यदा पर्वतैरेषा धरित्री दोग्धुमभिलषिता तदानीं मेरुर्दोग्धाऽभवत्, हिमालयश्च दोह्यप्रस्नुतये वत्स पर्यकल्प्यत, रत्नानि महौषध्यश्च दुह्यन्ते स्म, अनेन हिमालयस्य वत्सत्वरूप महत्त्व सूचितम् । हिमवतो वत्सत्वनिर्देशाद् वत्सपीतशेषस्यैवान्यैरुपयोगाद् वसुन्धरासारभूताना रत्नाना समृद्धिरत्रास्तीति सूचितम् । देवादीनामभीष्टदोहने स्वस्वजातिश्रेष्ठाना महेन्द्रादीनामेव वत्सत्व परिकल्पितम्, अतोऽस्यापि वत्सत्वकथनात् पूर्वपद्योक्त स्वजातिश्रेष्ठत्व समर्थित बोध्यम् ।

अल०—हिमवतो महत्त्वसमर्थनाय भूमिदोहनकथाया उपन्यासाद् उदात्तालङ्कार । व्यङ्ग्यार्थो भावार्थे दर्शित ।

**अनन्तरत्नप्रभवस्य यस्य हिम न सौभाग्यविलोपि जातम् ।**
**एको हि दोषो गुणसन्निपाते निमज्जतीन्दो किरणेष्विवाङ्क. ॥ ३ ॥**

अ०—हिमम् अनन्तरत्नप्रभवस्य यस्य सौभाग्यविलोपि न जातम्, (तथा) हि एक दोष. गुणसन्निपाते इन्दो किरणेषु अङ्क इव निमज्जति ।

व्याक०—न अन्तो येषा तेषाम्, रत्नाना प्रभवस्यानन्तरत्नप्रभवस्य । सौभाग्य विलुम्पतीति सौभाग्यविलोपि, लुम्पतेर्णिनि. । सौभाग्यम्-सुभगस्य भाव इति विग्रहे सुभगशब्दात् ष्यञ्, "हृद्भगसिन्ध्वन्ते पूर्वपदस्य च" इत्युभयपदवृद्धि । जातम्-जायतेरकर्मकत्वात् कर्तरि क्त, हिममिति तत्कर्तरि प्रथमा। दोष इति दुष्यतेर्घञ् । अङ्क इति-'अकि लक्षणे' धातोर्घञ् । निमज्जति-टुमस्जो शुद्धौ' लट् ।

---

* गौर्भूमिरचला सर्वं कर्तारोऽत्र पयांसि च ।
ओषध्यश्चैव भास्वन्ति रत्नानि विविधानि च ।
वत्सश्च हिमवानासीद् दोग्धा मेरुर्महागिरिः ॥ इति पुराणम् ।

कादिधातुसम्बन्धम्, वलाहकानान-मेघानाम्, छेदेषु खण्डेषु, विभक्त सक्रमित, राग रक्तिमा यया तथाभूताम्, अकालसन्ध्यामिव-सूर्यास्तमयात् प्रागेवोपस्थिता सन्ध्यामिव, शिखरै:-शृङ्गै, बिभर्ति-धारयति। मल्लिनाथस्तु 'वलाहकच्छेदविभक्तरागाम्' इति विशेषणम् धातुमत्तायामपि योजयति, गिरेरुच्चतया तच्छिखरगताना धातूना रागस्यापि मेघखण्डेषु संक्रमणात्। तन्मतेनान्वये 'वलाहकच्छेदविभक्तरागाम् धातुमत्ताम् अकालसन्ध्यामिव' इत्येव योज्यम्। धातुमत्ताया विशेषणद्वय चेदमकालसन्ध्यायामपि सगमनीयम्। सन्ध्यायामप्सरोभिरलङ्कारधारणात्।

भा०—अस्य हिमालयस्य शिखरेषु गैरिकादिधातव प्राचुर्येण वर्तन्ते, यान् अप्सरसः आत्मान विलासाय प्रसाधयितुमुपयुञ्जते। किं च धातूना रक्तिम्ना शिखराण्यपि रक्ततामुपेतानि, अत एव सम्भाव्यते-यदेष पर्वत सदातनीं सन्ध्या धारयति। सन्ध्या हि रक्ता, स्वरक्तिम्ना मेघखण्डानि रञ्जयति च, अत्रापि सन्ध्यास्थानीया गैरिकादिधातव, शिखराणि च मेघस्थानीयानि। धातव शिखराणि स्वरक्तिम्ना रञ्जयन्ति-इतिशिखरवलाहकयोर्बिम्बप्रतिबिम्बभाव उत्प्रेक्षाप्रयोजक इति प्रकाशिकाविवरणकारौ व्याचक्षाते। हिमालयस्योच्चै. शिखरेषु धृताना गैरिकादिधातूना रागो मेघखण्डेषु सङ्क्राम्यति, त च दृष्ट्वाऽप्सरसामकाल एव सन्ध्याभ्रम उदेति, तेन च तास्त्वरया रमणाय सज्जीभवन्त्यो मण्डनान्युपाददते-इत्यभिप्राय मल्लिनाथ आह। उभयो. सारासारौ सुधीभिर्विवेच्यौ.।

---

* प्रकाशिकाकारमते—अप्सरसा भ्रमाभावे सन्ध्योत्प्रेक्षा नि.सारा न कांचन चमत्कृतिमादधाति, रक्तिमसौन्दर्य्यबोधमात्राय तदुपपादनेऽपि अकालेति सन्ध्याविशेषण व्यर्थप्रायमेव। अस्य सन्ध्यासौन्दर्य्यस्य स्थिरत्वबोधनाय तदुपयोगे 'सदातनीं सध्याम्' इत्येव चारु भवेन्न त्वकालसध्यामिति। किं च—अकालसध्याया उत्प्रेक्ष्यमाणाया अवस्तुत्वेन तत्र वलाहकच्छेदेत्यादिविशेषणान्वयानुपपत्ति, सध्यारागस्य सक्रमणदर्शनेऽपि अकालसन्ध्यारागस्याप्रसिद्धत्वेन सक्रमणायोगात्। विशेषणविशिष्टाया सध्याया उत्प्रेक्षणे तु तदास्पदीभूताया धातुमत्तायामपि शिखरसक्रान्तरागत्व शब्देनोपादातुमावश्यकम्, तद्विशेषण विना बिम्बप्रतिबि-

अल०—वातुमत्ताया सन्ध्यात्वसम्भावनादुत्प्रेक्षा। शिखराणां सनाम्रकसादृश्यं व्यङ्ग्यम्। मल्लिनाथव्याख्यानुसारेण भ्रान्तिमानलङ्कारोऽपि व्यज्यते। इह मत्ताशब्दः क्षीबार्थे विशेषेण प्रसिद्ध इति पदैकदेशगतो निहतार्थतादोषो मम्मटाचार्यैरुक्तः।

**आमेखलं संचरतां घनानां छायामधः सानुगतां निषेव्य।**
**उद्वेजिता वृष्टिभिराश्रयन्ते शृङ्गाणि यस्यातपवन्ति सिद्धाः॥ ५॥**

अ०—सिद्धाः आमेखलम् सञ्चरताम् घनानाम् अधःसानुगताम् छायाम् निषेव्य वृष्टिभिः उद्वेजिताः (सन्तः) आतपवन्ति यस्य शृङ्गाणि आश्रयन्ते।

व्याक०—मेखलाभ्य आ इत्यामेखलम्, अभिविधावाङ्, "आङ्मर्यादाभिविध्योः" इत्यव्ययीभावः। अधः स्थिता सानवः अधःसानवः, तान् गताम्-अधःसानुगताम्, "द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः" इत्यनेन समासः। निषेव्य-सेवनेत्यर्थः, "परिनिविभ्यः सेवसित०" इति षत्वम्। उद्वेजिताः-णिजन्ताद् विजतेर्निष्ठा। आतपवन्ति-आतपशब्दात् प्राशस्त्ये मतुप्, द्वितीयाबहुवचनं शृङ्गाणीत्यस्य विशेषणम्। छायामिति निषेवणे कर्म।

व्याख्या—सिद्धाः-अणिमादिसिद्धिसहिता विश्वावसुप्रभृतयो देवयोनयः, †आमेखलम् नितम्बपर्यन्तम्, मध्यभागादप्यवस्तादेवेति यावत्, सञ्चरताम्-

---

स्वभावस्यानिर्वाहात्। शिखरैरिति तृतीयान्तेन तु बिम्बप्रतिबिम्बभावो न शाब्दो नापि शोभन इति। तस्माद्दक्षिणावर्त्तानुसारिणी मल्लिनाथव्याख्यैवात्र ज्यायसी प्रतिभाति। 'अप्सरसां भ्रमोऽत्र न केनचिच्छब्देन बोधितः, कविकृता धातुसन्ध्योत्प्रेक्षा तु नाप्सरस्सु भ्रमप्रतिपादने समर्था, व्यधिकरणत्वाद्' इति प्रकाशिकाया दक्षिणावर्तव्याख्यादूषणं तुच्छं, 'विभ्रममण्डनानां सम्पादयित्रीम्' 'विभक्तरागाम्' इति विशेषणद्वयेन भ्रमस्य व्यञ्जितत्वात्, तेन भ्रान्तिमदलङ्कारस्यापि व्यङ्ग्यत्वमित्यपरमनुकूलम्। इदं तु सत्यम् अकालसन्ध्याभ्रमनिरूपणं व्यधयता कविना स्वतन्त्रकालसन्ध्यानुत्प्रेक्ष्य व्यक्तिरकृतं नाना, 'अपुष्टार्थ' दोषोऽपि चोद्भावित इति॥

* सिद्धाश्च गुह्यकाः सिद्धा भूतोऽमी देवयोनयः—इत्यमरः।

† मेखला खड्गबन्धे स्यात् काञ्चीशैलनितम्बयोः—इति विश्वः।

भ्रमताम्, घनानाम् मेघानाम्, अध सानुगताम् नीचै शिखरेषु स्थिताम्, छायाम् अनातपम्, निषेव्य नितरा सेवित्वा, वृष्टिभि -वर्षाभि, उद्वेजिता -क्लेशिता सन्त, यस्य हिमालयस्य, आतपवन्ति प्रशस्तघर्मयुक्तानि, शृङ्गाणि-शिखराणि, आश्रयन्ते निषेवन्ते ।

भा०—एष हिमालयोतितरामुच्चतरो विद्यते । मेघमण्डलमस्य प्रत्यन्त-पर्वतेष्वेव भ्रमति, न जात्वप्यस्य शृङ्गाण्यधितिष्ठति । अत एव अत्र निवासिनो गन्धर्वसिद्धादय ग्रीष्मेषु घर्मबाधा परिहर्तुं मेघमण्डलाधोवर्तिषु सानुषु प्रवृता छाया सेवन्ते । मेघव्यवधानात्तत्र घर्मस्य सर्वथाऽप्रवेशात्, यदा च वर्षाभिरुद्वेजिता भवन्ति, तदा मेघमण्डलोपरिवर्तीन्यातपयुक्तान्यस्य शिखराण्यधिवसन्ति । अत एव सर्वर्तुरमणीयोय पर्वत ।

अल०—'अत्युच्चोऽय पर्वत' इति प्रकृते तत्कार्याभिधानादप्रस्तुतप्रशसा। हिमवतो मेघमार्गातिगामितयात्युन्नतत्व सर्वर्तुरमणीयत्व च व्यज्यते इति ।

**पद तुषारस्रुतिधौतरक्त यस्मिन्नदृष्ट्वापि हतद्विपानाम् ।**
**विदन्ति मार्गं नखरन्ध्रमुक्तैर्मुक्ताफलै केसरिणा किराता ॥६॥**

अ०—यस्मिन् किराता हतद्विपानाम् केसरिणाम् तुषारस्रुतिधौतरक्तम् पदम् अदृष्ट्वा अपि नखरन्ध्रमुक्तै मुक्ताफल मार्गम् विदन्ति ।

व्याक०—हता द्विपा यैस्तेषा हतद्विपानाम् । तुषारस्य स्रुत्या धौतं रक्तं यस्य तत् तुषारस्रुतिधौतरक्तम् । स्रुतिरिति स्रवते क्तिन्, धौतमिति 'धावु गतिशुद्धयो.' क्त । नखाना रन्ध्रेभ्यो मुक्तै: नखरन्ध्रमुक्तै । नखशब्दो व्याख्यात. । केसरिणाम्-केसरा सन्त्येषामिति केसरशब्दाद् "अत इनिठनौ" । पदमिति दर्शने कर्मत्वाद् द्वितीया । अदृष्ट्वा-पश्यते क्त्वा, नञ्पूर्वत्वाल्ल्यब् न । विदन्ति वेत्तेर्लट् । मुक्ताफलैरिति वेदनस्य करणे तृतीया ।

व्याख्या—यस्मिन् हिमालये, किराता वनेचरा, हता -मारिता, द्विपा -हस्तिन यै, तथाभूतानाम्, केसरिणाम्-सिंहानाम्, तुषारस्य-हिमस्य, स्रुत्या स्रवणेन-विलयनहेतुकेन स्यन्दनेन, धौतम् क्षालितम्, रक्तम् रुधिरम्, यस्य तथाभूतम्, पदम्-पदन्यासचिह्नम्, अदृष्ट्वा अनवलोक्यापि, नखानाम्-करजानाम्, रन्ध्रेभ्य छिद्रेभ्य, मुक्तै भूमौ पतितै, मुक्ताफलै:-गजमौक्तिकै,

मार्गम् आखेटाय अन्विष्यमाणाना सिंहाना पन्थानम्, विदन्ति जानन्ति।

भा०—अन्यत्र किराता प्रायो हतगजाना सिंहाना शोणिताक्तानि पदचिह्नान्येव दर्शं दर्शंताननुगच्छन्ति, परमत्र हिमालयेऽनवरतहिमजल स्रवणेन शोणितस्य क्षालिततया पदचिह्नानि स्फुट न प्रतिभासन्ते, तथापि सिंहाना सरन्ध्रेषु नखेषु गजमस्तकविदारणसमये यानि मौक्तिकानि मस्तृज्यन्ते, गमनसमये पदविन्यासवशात् तेषा गलनेन तान्येव दृष्ट्वा सिंहमार्ग किरातैरनुमीयते।

अल०—प्रसिद्धं हेतुमन्तरेणापि मार्गज्ञान कार्यं जातमिति विभावना, सा च हेत्वन्तरकथनात् सनिमित्ता, हिमवति मुक्ताबाहुल्य व्यङ्ग्यम्। मुक्तासम्पदो वर्णनादुदात्तमिति श्रीमन्नारायण। हिमालये प्रकृता मुक्तासम्पत् कार्यमुखेन वर्णितेत्यप्रस्तुतप्रशसा मुख्या।

**न्यस्ताक्षरा धातुरसेन यत्र भूर्जत्वच कुञ्जरबिन्दुशोणा।**
**व्रजन्ति विद्याधरसुन्दरीणामनङ्गलेखक्रिययोपयोगम्॥ ७॥**

अ०—यत्र धातुरसेन न्यस्ताक्षरा, (अत एव) कुञ्जरबिन्दुशोणा भूर्जत्वच, अनङ्गलेखक्रियया विद्याधरसुन्दरीणाम् उपयोगम् व्रजन्ति।

व्याक०—न्यस्तानि अक्षराणि यासु ता न्यस्ताक्षरा। कुञ्जो नाम हस्तिहनु, स विद्यते यस्य स कुञ्जर, कुञ्जशब्दाद् "र प्रकरणे खमुखकुञ्जेभ्य उपसख्यानम्" इति र, तस्य बिन्दव इव शोणा कुञ्जरबिन्दुशोणा। "उपमानानि सामान्यवचनै" इति समास, अनङ्गसूचको लेखोऽनङ्गलेख, शाकपार्थिवादित्वान्मध्यमपदलोप। तस्य क्रियया अनङ्गलेखक्रियया, प्रकृत्या दित्वात् तृतीया, अनङ्गलेखक्रियारूपमुपयोग व्रजन्तीति। करणे वा तृतीया। लेख इति लिखतेर्घञ्।

व्याख्या—यत्र हिमाद्रौ, धातूनाम्-सिन्दूरगैरिकादीनाम्, रसेन-द्रवेण, न्यस्तानि-लिखितानि, अक्षराणि-वर्णा, यासु तथाभूता, अत एव, कुञ्जरस्य-हस्तिन, (मस्तकात् किञ्चिदध शुण्डादण्डे) बिन्दव पद्मकाराख्या रक्तवर्णा बिन्दुसमूह, तद्वत् शोणा। (लिखितभागेष्वेव) रक्तवर्णा, भूर्जस्य-भूर्जत्व

वृक्षस्य वल्कलानि, अनङ्गलेख प्रियतमाय मन्मथव्यथामावेदयितुं कृतो वर्ण-विन्यास, तस्य क्रियया-सम्पादनेन, विद्याधरा-देवयोनिविशेषाः, तेषाम्, सुन्दरीणाम्-रमणीनाम्, उपयोग व्रजन्ति-प्रयोजनसपादकता प्राप्नुवन्ति ।

भा०—अत्र हिमाद्रौ विद्याधरस्त्रिय स्वकामुकेभ्य प्रेमसन्देशान् प्रेषयितु भूर्जवृक्षवल्कलानि पत्रत्वेन, गैरिकादिद्रव च मसीत्वेनोपयुञ्जते । भूर्जवाहुल्यम, धातुवाहुल्यम, विद्याधरस्त्रीणा विहारस्थानेन हिमालये वर्णितानि ।

अल०—कुञ्जरविन्दुशोणा इति लुप्तोपमा । पूर्ववदप्रस्तुतप्रशंसा । भूर्ज वाहुल्यादिक व्यङ्ग्यम् ।

**य पूरयन् कीचकरन्ध्रभागान् दरीमुखोत्थेन समीरणेन ।**
**उद्गास्यतामिच्छति किंनराणा तानप्रदायित्वमिवोपगन्तुम् ॥ ८ ॥**

अ०—य, दरीमुखोत्थेन समीरणेन कीचकरन्ध्रभागान् पूरयन् उद्गास्यताम् किन्नराणाम् तानप्रदायित्वम् उपगन्तुम् इच्छति इव ।

व्याक०—दरी एव मुख, तस्मादुत्तिष्ठतीति दरीमुखोत्थ, तेन । "आतश्चोपसर्गे" इति क । तान प्रददातीति तानप्रदायी, तस्य भावस्तत्त्वम्, ताच्छील्ये णिनि "आतो युक् चिण्कृतो" । समीरणेन-ईरयते-कर्तरि ल्यु, पूरणक्रिया-करणे तृतीया । पूरयन्-पूरयते हेतौ शतृप्रत्यय । उद्गास्यताम्-गायते "लृट सद्वा" इति लृट स्थाने शतृप्रत्यय । उपगन्तुम्-गच्छतेरिच्छतावुपपदे "समान कर्तृकेषु तुमुन्" ।

व्याख्या०—य-हिमालय, दरी-गुहा, सैव मुखम्-आननम, तदुत्थेन-तदुत्पन्नेन, समीरणेन-वायुना, * कीचकानाम्-वेणुविशेषाणाम्, रन्ध्रभागान्-छिद्राणि, पूरयन्-वमन्, उद्गास्यताम्-गान करिष्यताम्, किन्नराणाम्-देवयोनि-विशेषाणाम्, † तान-अशस्वरापरपर्याय स्वरविशेष, तत्प्रदानशीलत्वम्, उपगन्तुम्-प्राप्तुम, इच्छतीव-कामयत इव ।

भा०—अत्र हिमालये स्वभावत कीचकवेणवो गुहानि सृतेन वायुना पूर्यमाणाः स्वनन्ति । तत्र कविरुत्प्रेक्षते यथा लोके कस्यचिद् गायकस्य गानार-

*—कीचका वेणवस्तेस्युर्ये स्वनन्त्यनिलोद्धता.-इत्यमरः ।

†—तानस्त्वशस्वरो मत -इत्यभिनवगुप्तः ।

म्भात् पूर्वमपरस्तत्सहचर 'गाता य य स्वर गच्छेत्त त वशेन तानयेत्' इति सङ्गीतशास्त्रमनुरुध्य तान प्रदातु वेणुवाद्य समुरावानुना पूरयति, तथैवाय हिमाद्रिरपि तत्र वसता गायकाना किन्नराणा गानारम्भात् प्रागेव दरीरूपमुखा निर्गतेन वायुना वेणुवाद्यसदृशान् इमान् कीचकान् गायकस्वरताननेच्छया पूरयति इति।

अल०—उत्प्रेक्षालङ्कार', दरीमुखेत्येकदेशिविवर्ति रूपक तदङ्गन, हिमालये पुस्त्वारोप आर्थ । दरीगाम्भीर्येण, कीचकबाहुल्येन, किन्नरनिवासभूमित्वेन च हिमालयस्य महत्त्वं व्यज्यते॥

**कपोलकण्डूः करिभिर्विनेतुं विघट्टितानां सरलद्रुमाणाम्।**
**यत्र स्रुतक्षीरतया प्रसूतः सानूनि गन्धः सुरभीकरोति ॥ ९ ॥**

अ०—यत्र करिभि कपोलकण्डू विनेतु विघट्टिताना सरलद्रुमाणा स्रुतक्षीरतया प्रसूत गन्ध सानूनि सुरभीकरोति।

व्याक०—स्रुत क्षीर येषाम् तेषा भावस्तत्ता, तया स्रुतक्षीरतया। प्रसूयते कर्तरि तृतीया। स्रुतशब्दे स्रवते क्त । असुरभीणि सुरभीणि करोति। सुरभीकरोति। अभूततद्भावे च्वि, "च्वौ च" इति दीर्घ । करिभि करशब्दात् इनिर्मत्वर्थायः। विनेतुम्-नयतेस्तुमुन् । द्रुमशब्दे द्रुशब्दान्मस्तद्धित.। प्रसूत - सूते सूयतेर्वा क्त । गन्धोऽस्य कर्म। कपोलकण्डूर्विनयते कर्म, करिणो विनयने विघट्टने च कर्तार ।

व्याख्या—यत्र-हिमाचले, करिभि हस्तिभि, कपोलयो -गण्डस्थलयो, कण्डू खर्जू, विनेतुम-दूरीकर्तुम, विघट्टितानाम् सघर्षणेनोन्मृदितानाम्, सरलद्रुमाणाम् सरलसञ्ज्ञकाना वृक्षाणाम्, स्रुतम्-क्षरितम्, क्षीरम् दुग्धम्, यथा तथाभूततया-क्षरितेन क्षीरेण, प्रसूत उत्पादित, गन्ध सौरभम्, सानानि शिखरप्रदेशान्, सुरभीकरोति-सुगन्धीनि सपादयति।

भा०—अत्र हिमाद्रौ सरलाख्या पादपा प्रभूता सन्ति। हस्तिनो यदा स्वगण्डकण्डू विनोदयितुमिमान् स्वगण्डस्थलेन घर्षयन्ति, तदैतेभ्य सुगन्धि क्षीर निर्गच्छति, यस्य सुगन्धेनास्य हिमाद्रे सानुप्रदेशा अपि सुरभिता भवन्ति।

अल०—सरलवृक्षबाहुल्यस्य तत्प्राशस्त्यस्य गजबाहुल्यस्य च पर्वतवर्णने प्रकृतस्य कार्यमुखेनाख्यानात्पूर्ववदप्रस्तुतप्रशंसा । सरलैः शिखराणां सुरभित्वोक्तेरुल्लासः 'एकस्य गुणदोषाभ्यामुल्लासोऽन्यस्य तौ यदि' इति तल्लक्षणात् ।

**वनेचराणां वनितासखानां दरीगृहोत्सङ्गनिषक्तभासः ।**

**भवन्ति यत्रौषधयो रजन्यामतैलपूराः सुरतप्रदीपाः ॥ १० ॥**

अ०—यत्र रजन्याम् दरीगृहोत्सङ्गनिषक्तभासः ओषधयः वनितासखानाम् वनेचराणाम् अतैलपूराः सुरतप्रदीपाः भवन्ति ।

व्याक०—दर्य एव-गृहाः, ( मयूर० त० ) तेषाम् उत्सङ्गेषु निषक्ता भासो यासां ताः दरीगृहोत्सङ्गनिषक्तभासः । गृहशब्दे गृह्णातेः कः, उत्सङ्गनिषक्तयोः सजतेः कर्मणि घञ्, निष्ठा च । भास् शब्दे भासते भावे क्विप् । वनितानां सखायो वनितासखाः, "राजाहःसखिभ्यष्टच्" तेषाम् । प्रदीपसम्बन्धे षष्ठी । वने चरन्तीति वनेचराः, तेषाम् । 'चरेष्टः', उपपदसमासः । "तत्पुरुषे कृति बहुलम्" इति सप्तम्या अलुक् । न तैलपूरो येषु ते अतैलपूराः । सुरते प्रदीपाः सुरतप्रदीपाः । सुरतशब्दे रमतेः "नपुंसके भावे क्तः" रजन्याम्-रञ्ज्धातोर्ल्युट्, "अस्येकेन च रञ्जेर्नलोपो वाच्यः" इति नलोपः टित्वाद् ङीप् ।

व्याख्या—यत्र-हिमाद्रौ, रजन्याम्-रात्रौ, दर्यः कन्दरा एव, गृहाः, तेषाम् उत्सङ्गेषु-मध्यभागेषु, निषक्ता व्याप्ताः, भासः दीप्तयो यासां तथाभूताः, ओषधयः-जाज्वल्यमाना वृक्षविशेषाः, वनितासखानाम्-स्त्रीसहितानाम्, रममाणानाम्, वनेचराणाम् किरातानाम्, अतैलपूराः-तैलपूरणनिरपेक्षाः, सुरते-रमणकर्मणि, प्रदीपाः-प्रकाशसाधनानि भवन्ति ।

भा०—एतस्य हिमाद्रेः गुहासु निवासिनः किराता रात्रौ नगरसुलभप्रकाशनाधनदीपाद्यभावेपि दीपफलमनुभवन्ति, यतोऽत्र पर्वते सन्त्येतादृश्यो भूयस्य ओषधयो या रात्रौ प्रज्वलन्ति, अस्य गुहासु रममाणानां किरातानां ता एव दीपकार्यं निर्वहन्ति । दीपे भूयो भूयस्तैलपूरणापेक्षा, अन्यथा विलोपशङ्का, एते तु विलक्षणा दीपा विनापि तैलं विलोपशङ्कारहिता एवेति ।

अल—ओषधीषु दीपत्वारोपाद् 'अतैलपूरा' इति विशेषकथनाच्चाधिकतादूप्यरूपकम् । विचित्रौषधिसत्ताया कार्यमुखेन स्थापितत्वाच्च पूर्ववद्-प्रस्तुतप्रशसा ।

**उद्वेजयत्यङ्गुलिपार्ष्णिभागान् मार्गे शिलीभूतहिमेऽपि यत्र ।**
**न दुर्वहश्रोणिपयोधरार्ता भिन्दन्ति मन्दा गतिमश्वमुख्य ॥ ११ ॥**

अ०—यत्र शिलीभूतहिमे अङ्गुलिपार्ष्णिभागान् उद्वेजयति अपि मार्गे दुर्वहश्रोणिपयोधरार्ताः अश्वमुख्य मन्दाम् गतिम् न भिन्दन्ति ।

व्याक०—अशिला शिला यथा सम्पद्यते तथाभूत हिम यस्मिन तस्मिन् शिलीभूतहिमे । शिलीभूतमित्यत्र च्वि, ईत्वम । अङ्गुलयश्च पार्ष्णी च अङ्गुलिपार्ष्णि, "द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्" इति प्राण्यङ्गत्वादेकवद्भाव, तस्य भागान् । श्रोणिश्च पयोधरौ च श्रोणिपयोधरम्, पूर्ववदेकवद्भाव दुर्वहेण श्रोणिपयोधरेण आर्ता, दुर्वहश्रोणिपयोधरार्ता । दुर्वहशब्दे वहते खल्, आर्ता-आङ्पूर्वाद् ऋच्छतेः क्तः, "उपसर्गादृति धातौ" इत्यनेन वृद्धि । अश्वस्येव मुख यासा ता अश्वमुख्य, लाक्षणिकपूर्वपदो बहुव्रीहि, "स्वाङ्गाच्चोपसर्जनादसयोगोपधात्" इति परस्मैपदे शत्रादेश । अश्वमुख्य उद्विजन्ति, ता मार्ग प्रेरयतीति ।

व्याख्या—यत्र हिमाद्रौ, शिलीभूतम्-शिलावद् घनता कठिनता च प्राप्तम्, हिमम्-तुषार, यस्मिन्, तथाभूते, अत एव अङ्गुलिभागान्-अङ्गुलिप्रदेशान्, पार्ष्णिभागान्-पादमूलानि, ( गुल्फाधोवर्तिप्रदेशान् ) च उद्वेजयति-शैत्यातिशयेन पीडयत्यपि, मार्गे, दुर्वहेण-स्थूलतया दुर्धरेण, श्रोणिपयोधरेण श्रोण्या जघनस्थलेन, पयोधराभ्याम् स्तनाभ्या च, आर्ता खिन्ना, अश्वमुख्य. किन्नरस्त्रिय, मन्दाम् मन्थराम्, गतिम् गमनम्, न भिन्दन्ति-न त्यजन्ति, मन्दमेव गच्छन्तीति ।

भा०—यत्र हिमालये निवसन्त्योऽश्वमुख्य किन्नरस्त्रियो यदाऽन्य प्रदेशेषु विचरन्ति, तदा घनीभूतेन शीतलमेन हिमेन सुकुमारास्तासा पादा पीड्यन्ते । शीतभयात्समग्र पादतल न ता मार्गेऽर्पयन्ति, कदाचिदग्रभागेन

* तद्ग्रन्थी घुटिके गुल्फौ पुमान् पार्ष्णिस्तयोरधः—इत्यमर ।

चलन्ति, अङ्गुलीषु च सुकुमारासु वाधितासु पश्चाद्भागेन पार्ष्णिना गन्तु प्रक्रमन्ते, सोऽपि च शैत्येन वाध्यते, एव खिन्ना अपि तु ता न शीघ्र धावितु प्रभवन्ति, स्थूलस्य श्रोणिभागस्य पयोधरयोश्च दुर्वहत्वेन शीघ्र गन्तुमशक्तत्वात्। एतेन सर्वावयवसौन्दर्यं तासा व्यक्त भवति।

अल०—मन्दगमनत्यागकारणोपस्थितावपि त्यागाभावाद्विशेषोक्ति । दुर्वहेत्यादिविशेषण मन्दगमने, शिलीभूतेत्यादिविशेषण चोद्वेजने साभिप्रायमिति परिकरोऽपि । किन्नरीणा सौन्दर्याख्यान पर्वतवर्णनाङ्गमित्युदात्तम् ।

**दिवाकराद्रक्षति यो गुहासु लीन दिवाभीतमिवान्धकारम् ।**
**क्षुद्रेऽपि नून शरण प्रपन्ने ममत्वमुच्चैः शिरसामतीव ॥ १२ ॥**

अ०—यः दिवाभीतमिव गुहासु लीनम् अन्धकारम् दिवाकराद् रक्षति, उच्चै.शिरसाम् शरणम् (आत्मानम् ) प्रपन्ने क्षुद्रे अपि नूनम् अतीव ममत्व भवति ।

व्याक०—उच्चै शिरो येषा तेषामुच्चै शिरसाम् । भीतमिति बिभेते क्तः। लीनम्-लीयते क्त, "ओदितश्च" इति नत्वम् । अन्धं करोतीत्यन्धकार', तम्, "कर्मण्यण्"। दिवा करोतीति दिवाकर, तस्माद् । "दिवाविभानिशा • " इत्यादिना करोतेष्ट', " भीत्रार्थाना भयहेतु " इत्यपादानत्वात् पञ्चमी । प्रपन्ने पद्यते क्त, " रदाभ्याम् " इति दतयोर्नत्वम् । क्षुद्रे-इति सप्तमी वैषयिकाधारे । शरणमिति द्वितीयान्तस्य विशेष्यपदम् ' आत्मानम् ' इत्यध्याहार्यम् । ममत्वम्-ममेति षष्ठयन्तादस्मच्छब्दप्रतिरूपकादव्ययात्त्वप्रत्यय । ममेति षष्ठ्यन्तेन पदेन ममेति बुद्धिरभिधीयते, तद्बुद्धिमति लक्षणा, तस्मात्तदात्त्वप्रत्यय इत्यपि प्रकाशिकाविवरणयो ।

व्याख्या—य हिमालय , दिवा-दिवसे, भीतमिव-भयाविष्टमिव, ( श्लेषमाहात्म्याद् उलूकमिवेति च प्रतीयते ) अत एव गुहासु-कन्दरासु, लीनम्-अन्तर्हितम्, अन्धकारम्, दिवाकरात्-सूर्याद्, रक्षति । उच्चै शिरसाम्-उन्नतमस्तकानाम्, † शरण प्रपन्ने-' त्वमेव रक्षितासि ' इति बुद्धया स्वसमीप प्राप्ते क्षुद्रे-तुच्छेऽपि जने, नूनम् निश्चयेन, अतीव विशेषेण, ममत्वम् ममायमित्य

* ' शिरसा सतीव ' इति प्रकाशिका—विवरणकृत्सम्मत पाठ ।

† ' शरण गृहरक्षित्रोः '—इत्यमर. ।

भिमान, ( तेन च रक्षणे प्रवृत्ति ) भवतीति शेष । प्रकाशिकानिरणयोस्तु ( क्षुद्रेऽपि-अनार्येऽपि जने, सतीव-श्रेष्ठपुरुष इव ममत्व भवतीति ) पाठान्तरं व्याख्यातम् ।

भा०—अत्र हिमालये गभीरासु गुहासु सूर्यांशुसम्पर्काभावाद् रात्रावि दिवाप्यन्धकारस्तिष्ठति । तत्र कविना अन्धकारस्य गुहास्थितौ सूर्याद् भय हेतुमुत्प्रेक्ष्य भीतायान्धकाराय शरणप्रदानेन हिमालयस्य शरणागतरक्षकत्व सम्भावितम्, तदेव चोत्तरार्धेन समर्थितम् । ये हि उन्नतशिरस जगति लब्धप्रतिष्ठा ( हिमालयोऽप्युन्नतशिरस्त्वादुन्नतशिरा ) ते शरणागत क्षुद्रमपि रक्षन्तीति । दिवाभीता उलूका अप्यनेन गुहासु रक्ष्यन्ते इति च श्लेषमन- योपमया द्योत्यते ।

अल०—गुहास्वन्धकारसद्भावस्य भङ्ग्यन्तरेण कथनात्पर्यायोक्त मुख्यम् । अचेतनस्यान्धकारस्य भीतत्वसम्भावनयोत्प्रेक्षा, तत्प्रयोजिता हिमालयकर्तृ कान्धकाररक्षणोत्प्रेक्षा च तदङ्गम् । दिवाभीतपदस्योलूकवाचकत्वे उपमापि, सामान्येन विशेषस्य समर्थनादर्थान्तरन्यासश्च । सतीवेत्यत्र पाठेऽप्युपमा । अत्रासम्भविन उत्प्रेक्षितस्यार्थस्य रक्षणस्य समर्थनादनुचितार्थताख्यो दोष इति काव्यप्रकाशकार । अन्धकारस्य भीतत्वमात्रमुत्प्रेक्षितम्, रक्षणन्तु बाधकनिवर्तनरूप सिद्धमेव, तदेवोत्तरार्द्धेन साध्यते, तस्मान्न दोष इति प्रकाशिकाकृदरुणाचलनाथ आह । समर्थने प्रोक्ता रक्षणमूला शरणागतिरचेतने ऽन्धकारे न सम्भवति, तस्माच्छरणागतबुद्ध्या परित्राणमुत्प्रेक्षितमेव । तथाप्युत्प्रेक्षितस्यापि समर्थने चमत्काराधिक्योदयाद्दोषमूलस्योद्वेगस्य कथञ्चि दप्यसस्पर्शाद्दोषो नास्त्येवेति तु वयम् ।

लाङ्गूलविक्षेपविसर्पिशोभैरितस्ततश्चन्द्रमरीचिगौरै ।
यस्यार्थयुक्तं गिरिराजशब्द कुर्वन्ति वालव्यजनैश्चमर्य ॥१३॥

अ०—चमर्य इतस्तत लाङ्गूलविक्षेपविसर्पिशोभैः चन्द्रमरीचिगौरै वालव्यजनै यस्य गिरिराजशब्दम् अर्थयुक्तम् कुर्वन्ति ।

व्याक०—लाङ्गूलाना विक्षेप ( तत्पु० ) विसर्पिणी ( तत्पु० ) शोभा येषा ( बहु० ) तै लाङ्गूलविक्षेपविसर्पिशोभै । विक्षेप इतस्ततः क्षिपतेः ।

विसर्पिशब्दे ताच्छील्ये णिनि । "स्त्रिया पुंवद् " इत्यनेन पुंवद्भावः। चन्द्रस्य मरीचिभि (तत्पु०) इव गौरैः, चन्द्रमरीचिगौरैः, "उपमानानि सामान्यवचनैः" इत्यनेन समास। बाला एव व्यजनानि, तैः, करणे तृतीया। गिरिराज (इति) शब्द गिरिराजशब्द, तम्। कर्मधारय।

व्याख्या—चमर्य. वनचारिण्यश्चमरीत्याख्या गोशब्देनापि ख्याता मृगी विशेषा इतस्तत लाङ्गूलानाम्-पुच्छानाम्, विक्षेपै-विधूननैः, विसर्पिणी-इतस्तत प्रसरणशीला, शोभा-कान्ति, येषां तथाभूतैः, चन्द्रस्य-इन्दो, मरीचिभि-किरणैरिव, गौरैः-शुभ्रैः वालव्यजनैः पुच्छचामरैः, यस्य-हिमालयस्य, (बोधकम्) गिरिराजशब्दम्-गिरिराज इत्यभिधानम्, अर्थयुक्तम्-अन्वर्थम्, कुर्वन्ति विदधति।

भा०—अयं हि हिमालयो गिरिराज इति व्यवह्रियते। राज्ञश्च चामरादिसद्भावोऽप्यावश्यक। तदत्र सतत विचरन्त्यो बह्व्यश्चमर्यो लाङ्गूलचालनेन तदग्रभागभूतानि चामराण्यान्दोलयन्त्योऽस्य गिरिराजशब्द समर्थयन्ते। आन्दोलितानि चामराणि दृष्ट्वा राजत्वप्रतीति सर्वेषां जायत इति। लाङ्गूलानां व्यजनदण्डसाम्यं च द्योतितम्।

अल०—चमरीणां स्वाभाविके लाङ्गूलचालने राजसमाननार्थत्वोन्नयनाद्गम्या हेतूत्प्रेक्षा। चामरचालनस्यात्र युक्तत्वसमर्थनात्समालङ्कारोऽपि।

**यत्रांशुकाक्षेपविलज्जितानां यदृच्छया किंपुरुषाङ्गनानाम्।**
**दरीगृहद्वारविलम्बिबिम्बास्तिरस्करिण्यो जलदा भवन्ति ॥१४॥**

अ०—यत्र अंशुकाक्षेपविलज्जितानाम् किंपुरुषाङ्गनानाम् यदृच्छया दरीगृहद्वारविलम्बिबिम्बा जलदा तिरस्करिण्य, भवन्ति।

व्याक०—अंशुकस्य आक्षेपेण विलज्जितानाम् अंशुकाक्षेपविलज्जितानाम्। विलज्जितानाम्-'ओलस्जी व्रीडायाम्' "गुरोश्च हल." इत्यकारप्रत्यय तदन्ताच्च तारकादित्वाद् इतच्। दरीणामेव गृहाणां द्वारेषु विलम्बिनो बिम्बा येषां ते दरीगृहद्वारविलम्बिबिम्बा। विलम्बिशब्दे लम्बतेर्णिनि।

व्याख्या—यत्र हिमालये, अंशुकस्य-वसनस्य, आक्षेपेण-हरणेन, विल-

भिमानः, ( तेन च रक्षणे प्रवृत्ति ) भवतीति शेष । प्रकाशिकाविवरणयोस्तु ( क्षुद्रेऽपि-अनार्येऽपि जने, सतीव-श्रेष्ठपुरुष इव ममत्व भवतीति ) पाठान्तर व्याख्यातम् ।

भा०—अत्र हिमालये गभीरासु गुहासु सूर्यांशुसम्पर्काभावाद् रात्राविव दिवाप्यन्धकारस्तिष्ठति । तत्र कविना अन्धकारस्य गुहास्थितौ सूर्याद् भय हेतुमुत्प्रेक्ष्य भीतायान्धकाराय शरणप्रदानेन हिमालयस्य शरणागतरक्षकत्व सम्भावितम्, तदेव चोत्तरार्धेन समर्थितम् । ये हि उन्नतशिरस जगति लब्धप्रतिष्ठा ( हिमालयोप्युन्नतशिखरत्वादुन्नतशिरा ) ते शरणागत क्षुद्रमपि रक्षन्तीति । दिवाभीता उलूका अप्यनेन गुहासु रक्ष्यन्ते-इति च श्लेषमूल-योपमया द्योत्यते ।

अलं०—गुहास्वन्धकारसद्भावस्य भङ्गयन्तरेण कथनात्पर्यायोक्त मुख्यम् । अचेतनस्यान्धकारस्य भीतत्वसम्भावनयोत्प्रेक्षा, तत्प्रयोजिता हिमालयकर्तृ कान्धकाररक्षणोत्प्रेक्षा च तदङ्गम् । दिवाभीतपदस्योलूकवाचकत्वे उपमापि, सामान्येन विशेषस्य समर्थनादर्थान्तरन्यासश्च । सतीवेत्यत्र पाठेऽप्युपमा । अत्रासम्भविन उत्प्रेक्षितस्यार्थस्य रक्षणस्य समर्थनादनुचितार्थतालङ्कारदोष इति काव्यप्रकाशकार । अन्धकारस्य भीतत्वमात्रमुत्प्रेक्षितम्, रक्षणन्तु बाधकनिवर्तनरूप सिद्धमेव, तदेवोत्तरार्द्धेन समर्थ्यते, तस्मान्न दोष इति प्रकाशिकाकृदरुणाचलनाथ आह । समर्थने प्रोक्ता रक्षणमूला शरणागतिरचेतने ऽन्धकारे न सम्भवति, तस्माच्छरणागतबुद्धया परित्राणमुत्प्रेक्षितमेव । तथाप्युत्प्रेक्षितस्यापि समर्थने चमत्काराधिक्योदयाद्दोषमूलस्योद्वेगस्य कथञ्चि दप्यसस्पर्शाद्दोषो नास्त्येवेति तु वयम् ।

लाङ्गूलविक्षेपविसर्पिशोभैरितस्ततश्चन्द्रमरीचिगौरैः ।
यस्यार्थयुक्तं गिरिराजशब्द कुर्वन्ति बालव्यजनैश्चमर्यः ॥१३॥

अ०—चमर्यः इतस्ततः लाङ्गूलविक्षेपविसर्पिशोभैः चन्द्रमरीचिगौरैः बालव्यजनै यस्य गिरिराजशब्दम् अर्थयुक्तम् कुर्वन्ति ।

व्याक०—लाङ्गूलाना विक्षेपै ( तत्पु० ) विसर्पिणी ( तत्पु० ) शोभा येषा ( बहु० ) तै. लाङ्गूलविक्षेपविसर्पिशोभै । विक्षेप इत्यत्र क्षिपतेर्घञ् ।

विसर्पिशब्दे ताच्छील्ये णिनि । "स्त्रिया पुंवद्" इत्यनेन पुंवद्भावः। चन्द्रस्य मरीचिभि (तत्पु०। इव गौरै, चन्द्रमरीचिगौरै, "उपमानानि सामान्यवचनै" इत्यनेन समास। वाला एव व्यजनानि, तै., करणे तृतीया। गिरिराज (इति) शब्द गिरिराजशब्द, तम्। कर्मधारय।

व्याख्या—चमर्य. वनचारिण्यश्चमरीत्याख्या गोशब्देनापि ख्याता मृगी विशेषा इतस्तत लाङ्गूलानाम्-पुच्छानाम्, विक्षेपै-विधूननै, विसर्पिणी-इतस्तत प्रसरणशीला, शोभा-कान्ति, येषा तथाभूतै, चन्द्रस्य-इन्दो, मरीचिभि-किरणैरिव, गौरै-शुभ्रै वालव्यजनै पुच्छचामरै, यस्य-हिमालयस्य, (बोधकम्) गिरिराजशब्दम्-गिरिराज इत्यभिधानम्, अर्थयुक्तम्-अन्वर्थम्, कुर्वन्ति विदधति।

भा०—अय हि हिमालयो गिरिराज इति व्यवह्रियते। राज्ञश्च चामरादिसद्भावोऽप्यावश्यक। तदत्र सतत विचरन्त्यो वह्व्यश्चमर्यो लाङ्गूलचालनेन तदग्रभागभूतानि चामराण्यान्दोलयन्त्योऽस्य गिरिराजशब्द समर्थयन्ते। आन्दोलितानि चामराणि दृष्ट्वा राजत्वप्रतीति सर्वेषा जायत इति। लाङ्गूलाना व्यजनदण्डसाम्य च द्योतितम्।

अल०—चमरीणा स्वाभाविके लाङ्गूलचालने राजसमाननार्थत्वोत्प्रेक्षणा-द्गम्या हेतूत्प्रेक्षा। चामरचालनस्यात्र युक्तत्वसमर्थनात्समालङ्कारोऽपि।

**यत्रांशुकाक्षेपविलज्जितानां यदृच्छया किंपुरुषाङ्गनानाम्।**
**दरीगृहद्वारविलम्बिबिम्बास्तिरस्करिण्यो जलदा भवन्ति॥१४॥**

अ०—यत्र अंशुकाक्षेपविलज्जितानाम् किंपुरुषाङ्गनानाम् यदृच्छया दरी-गृहद्वारविलम्बिबिम्बा जलदा तिरस्करिण्य. भवन्ति।

व्याक०—अंशुकस्य आक्षेपेण विलज्जितानाम् अंशुकाक्षेपविलज्जिता-नाम्। विलज्जितानाम्-'ओलस्जी व्रीडायाम्' "गुरोश्च हल" इत्य-कारप्रत्यय तदन्ताच्च तारकादित्वाद् इतच्। दरीणामेव गृहाणा द्वारेषु विलम्बिनो बिम्बा येषा ते दरीगृहद्वारविलम्बिबिम्बा। विलम्बिशब्दे लम्बेर्णिनि।

व्याख्या—यत्र हिमालये, अंशुकस्य-वसनस्य, आक्षेपेण-हरणेन, विल-

जितानाम्-विशेषेण लज्जा प्राप्तानाम्, किंपुरुषाङ्गनानाम्-किन्नरस्त्रीणाम्, यदृच्छया-विनैव यत्नम्, दरीगृहाणाम्-गुहारूपाणां निधुवनभवनानाम्, द्वारेषु विलम्बिनः-लम्बमानाः *बिम्बाः-मण्डलानि येषां तथाभूताः, जलदाः-मेघाः, † तिरस्करिण्यः-जवनिकाः, भवन्ति।

भा०—अस्य हिमालयस्य गुहाद्वारेषु सततं मेघमण्डलानि भ्रमन्ति, तानि च सुरतकाले अपनीतवस्त्राणां किन्नरस्त्रीणां लज्जानिवारणाय जवनिकाकार्यं कुर्वन्ति।

अलं०—जलदेषु तिरस्करिणीत्वारोपाद् रूपकम्। किन्नरस्त्रीणामिष्टस्य गोपनस्य सिद्धयभिधानात्प्रहर्षणालङ्कारः। व्यज्यमानस्य शृङ्गारस्य हिमाद्रिवर्णनाङ्गत्वाद् रसवदलङ्कारश्च।

**भागीरथीनिर्झरसीकराणां वोढा मुहुः कम्पितदेवदारुः।**
**यद्वायुरन्विष्टमृगैः किरातैरासेव्यते भिन्नशिखण्डिबर्हः ‡ ॥ १५ ॥**

अ०—भागीरथीनिर्झरसीकराणाम् वोढा मुहुः कम्पितदेवदारुः भिन्नशिखण्डिबर्हः यद्वायुः अन्विष्टमृगैः किरातैः आसेव्यते।

व्याक०—भागीरथ्या निर्झरस्य सीकरा भागीरथीनिर्झरसीकराः, तेषाम्। "कर्तृकर्मणोः कृति" इति वोढेत्यस्य कर्मणि षष्ठी। भागीरथीशब्दे भगीरथशब्दादण् तद्धितः। मुहुः कम्पिता देवदारवो येन स मुहुः कम्पितदेवदारुः। भिन्नानि शिखण्डिनां बर्हाणि येन स भिन्नशिखण्डिबर्हः। अन्विष्टा मृगा यैस्तैरन्विष्टमृगैः, अन्विष्टशब्दे इषधातोः क्तः। वोढा वहेस्तृच्। आसेव्यते-सेवतेः कर्मणि लट्। किरातैरिति तस्यानुक्ते कर्तरि तृतीया। यद्वायुरिति कर्म। किराता यद्वायुमासेवन्ते इति कर्तरि प्रयोगः।

व्याख्या—भागीरथ्याः गङ्गायाः, निर्झरस्य-पततः प्रवाहस्य, सीकराणाम्-

---

*—बिम्बो ऽस्त्री मण्डलं त्रिषु—इत्यमरः।

†—प्रतिसीरा जवनिका स्यात् तिरस्करिणी च सा—इत्यमरः।

‡ 'भिन्नशिखण्डिबर्हः' इति प्रकाशिकाकृत्सम्मतः पाठः। तत्र 'भिन्नानि-इतस्ततो विकीर्णानि शिरसोऽवतारितानीति यावत्, शिरोमण्डनभूतानि शिखण्डिबर्हाणि यैः, तथाभूतैः किरातैरिति' तद् व्याख्यानम्।

जलकणानाम्, वोटा-वारयिता, सुरसरिद्वारिसम्पर्केण शीतल·, *मुहु -भूयो भूय, सद्यो वा, कम्पिता, देवदारव देवदारुवृक्षा येन तथाभूत, भूयोभूयो देवदारुकम्पनेन तत्सौरभशाली, भिन्नानि इतस्ततो विकीर्णानि, शिखण्डिनाम्-मयूराणाम्, वर्हाणि-पिच्छानि येन तथाभूत, यद्वा भिन्नानि किरातैर्मण्डनार्थं शिरस्सु धृतानि मयूरपिच्छानि येन तथाभूत·, †मन्द इति तात्पर्यम्, यस्य-हिमालयस्य वायु पवन, अन्विष्टा·-आखेटार्थं गवेपिता, मृगा-हरिणा, यैस्तथाभूतै, मृगान्वेपणजातपरिश्रमै, किरातै व्याधै, आसेव्यते ।

भा०—अत्र पर्वते मृगान्वेपणेन परिश्रान्ता किराताः श्रमापनोदनाय गङ्गातरङ्गसीकरशीतल देवदारुगन्धसुरभि मन्द च पवनमासेव्य सुखिनो जायन्ते ।

अल०—वायो शैत्यमान्द्यसौरभाणा कारणमुखेन प्रतिपादनाद् अप्रस्तुतप्रशसा । तादृशवायुप्रचारवोधनेन हिमालयस्य रमणीयत्व व्यङ्ग्यम् । किरातगत श्रमो भावो भावाभासो वा विभावानुभावव्यञ्जितः पर्वतवर्णनाङ्गमिति प्रेयः, ऊर्जस्विद् वा अलङ्कार· ।

**सप्तर्पिहस्तावचितावशेपाण्यधो विवस्वान् परिवर्तमानः ।**
**पद्मानि यस्याग्रसरोरुहाणि प्रवोधयत्यूर्ध्वमुखैर्मयूखै ॥ १६ ॥**

अ०—अधः परिवर्तमानः विवस्वान् ऊर्ध्वमुखै· मयूखै सप्तर्पिहस्तावचितावशेपाणि यस्य अग्रसरोरुहाणि पद्मानि प्रवोधयति ।

व्याक०—ऊर्ध्व मुख येपा तै ऊर्ध्वमुखै· । सप्तर्पीणा हस्तै अवचितेभ्य अवशेपाणि सप्तर्पिहस्तावचितावशेपाणि । सप्तर्पिशब्दे "दिक्सङ्ख्ये सज्ञायाम्" इति द्विगु· । अवशेपाणीत्यत्र शिप्धातोः कर्मणि घञ् । नित्य पुस्त्व भावघञन्तानामेवेत्यत्र विशेष्यानुसारि नपुसकत्व वोध्यम् । अग्रे सरस्सु रुहाणि अग्रसरोरुहाणि । रुहशब्दे "इगुपधज्ञाप्रीकिर· क·" । विवस्वान्-विवस् इति शब्दाद् मतुप्, 'तसौ मत्वर्थे' इति भत्वाद् रुत्वाभाव । प्रवोधयति वुध्यतेर्णिजन्ताल्लट्, "वुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णे" इति

* पौन पुन्ये भृशार्थे च सद्योऽर्थे स्यान्मुहु· पदम् इत्यजय· ।

† शिखण्डिवर्हाणि विकिरत्येव नतूत्पाटयतीति मन्दत्व सूचितम् ।

परस्मैपदम् । मयूखैरिति प्रबोधनकरणे तृतीया । पद्मानीति प्रयोज्यकर्तृ कर्मतां गतम् ।

व्याख्या--अध-शिखराणामधःप्रदेशे, परिवर्तमानः-भ्रमन्, विवस्वान्-सूर्यः, ऊर्ध्वमुखैः-ऊर्ध्वं गच्छद्भिः, मयूखैः-किरणैः, सप्तर्षीणाम्-मरीच्यादीनाम्, हस्तैः, अवचितेभ्यः लूनेभ्यः, अवशेषाणि-अवशिष्टानि, यस्य हिमाद्रेः, अग्रे-शिखरप्रदेशे, सरस्सु, रुहाणि-उत्पन्नानि, पद्मानि-कमलानि, प्रबोधयति-विकासयति ।

भा०—अन्यत्राधःपातिभिः सूर्यकिरणैः कमलानि विकास्यन्ते, हिमालयस्योच्चशिखरेभ्यस्तु सूर्यभ्रमणमार्गोऽप्यधस्तादेवेति तत्र स्थितेषु सरस्सु जातानि कमलान्यूर्ध्वमुखैः सूर्यकिरणैर्विकास्यन्ते । सप्तर्षयश्च प्रातःसन्ध्याकाले मुकुलितान्येव तानि सूर्यार्घ्यदानाय प्रथमं हरन्ति इति । उत्तरस्या दिश उच्चत्वाभिमानाद्, दक्षिणस्याश्चाधस्त्वमननाद्धिमालयाद्दक्षिणस्यामेव भ्रमतः सूर्यस्याधः परिवर्तनं कथंचित् समर्थनीयम्, अत्युक्तिरूपं वा तदिति ।

अल०—हिमालयस्य मार्तण्डमण्डलातिगामित्वं सूच्यते । तत्र सम्बन्धातिशयोक्तिः, अत्युक्तिर्वा मतान्तरे । पद्मानि सरोरुहाणि इति पुनरुक्तवदाभासश्च ।

**यज्ञाङ्गयोनित्वमवेक्ष्य यस्य सारं धरित्रीधरणक्षमं च ।**
**प्रजापतिः कल्पितयज्ञभागं शैलाधिपत्यं स्वयमन्वतिष्ठत् ॥ १७ ॥**

अ०—प्रजापतिः यस्य यज्ञाङ्गयोनित्वम् धरित्रीधरणक्षमम् सारम् च अवेक्ष्य स्वयमेव कल्पितयज्ञभागम् शैलाधिपत्यम् अन्वतिष्ठत् ।

व्याक०—यज्ञस्य अङ्गानां योनिः, यज्ञाङ्गयोनिः, तस्य भावस्तत्त्वम् । यज्ञशब्दे यजधातोः "यजयाचयतविच्छप्रच्छरक्षो नङ्" । कल्पितो यज्ञे भागो यस्मिन्, तत् कल्पितयज्ञभागम् । भागशब्दे भजतेर्घञ् । अधिकः पतिरधिपतिः, तस्य भावः कर्म वा आधिपत्यम्, "पत्यन्तपुरोहितादिभ्यो यक्" । शैलानामाधिपत्यं शैलाधिपत्यम् । अन्वतिष्ठत्-अनुपूर्वात् तिष्ठतेर्लङ् । अनुपूर्वकस्तिष्ठतिरत्र करोत्यर्थे, यज्ञमनुतिष्ठतीत्यादौ तथा दर्शनात् ।

व्याख्या—प्रजापतिः-ब्रह्मा, यस्य-हिमालयस्य, यज्ञस्य अङ्गानाम्-सोमलतादीनां साधनानाम्, योनिः-उत्पत्तिस्थानम्, तद्रूपताम्, धरित्र्याः पृथिव्याः,

धरणे, क्षमम्-योग्यम्, सारम्-दृढता च, अवेक्ष्य ज्ञात्वा, स्वयमेव कल्पित.-निर्धारित, यज्ञे, भाग -अंश, यस्मिन् ( आधिपत्ये ) तथाभूतम्, शैलाधिपत्यम्-गिरिराजत्वम्, अन्वतिष्ठत्-अकरोत् ।

भा०—ब्रह्मणाऽस्य हिमालयस्य यज्ञे भाग क्लृप्त, सर्वेषा पर्वतानामधिराजत्वे चाय स्थापित, यतोऽय हिमालयो यज्ञाङ्गाना सोमलतादीनामुत्पत्तिस्थानम्, पृथिव्या धारणे ( संस्तम्भने ) च अस्यैव प्राधान्येन शक्तिरिति ।

अल०—यज्ञाङ्गयोनित्वादेर्द्वयस्य क्रमेण द्वये कारणत्वाद्यथासख्यमलङ्कार । यज्ञभागकल्पने यज्ञाङ्गयोनित्वमिति विशेष्यस्य साभिप्रायत्वात् परिकराङ्कुर, धरित्रीधरणक्षममिति विशेषणस्य च आधिपत्यप्रदाने साभिप्रायत्वात् परिकर । यज्ञांशभागित्वाद् हिमालयस्य देवत्व व्यङ्ग्यम् ।

**स मानसीं मेरुसख पितृणा कन्या कुलस्य स्थितये स्थितिज्ञ. ।**
**मेना मुनीनामपि माननीयामात्मानुरूपा विधिनोपयेमे ॥ १८ ॥**

अ०—मेरुसख स्थितिज्ञः स कुलस्य स्थितये पितृणाम् मानसीम् कन्याम् मुनीनाम् अपि माननीयाम् आत्मानुरूपाम् मेनाम् विधिना उपयेमे ।

व्याक०—मेरो सखा मेरुसख, "राजाह सखिभ्यष्टच्" । स्थितिं जानातीति स्थितिज्ञ, जानातेः "आतोनुपसर्गे कः" । अनुकूल रूपं यस्याः सा अनुरूपा, आत्मन अनुरूपामात्मानुरूपाम् । मानसीम् मनश्शब्दाच्छैषिकेण, ङीप् । माननीयाम-मानयतेरनीयर् । उपयेमे-उपपूर्वाद् यम् धातोर्लिट्, 'उपायमः स्वकरणे" इत्यनेनात्मनेपदम् । विधिनेत्युपयमनकरणे तृतीया । स्थितये-तादर्थ्ये चतुर्थी ।

व्याख्या—मेरोः-सुमेरुपर्वतस्य, सखा-मित्रम्, स्थितिज्ञ -मर्यादाभिज्ञः, स -हिमालय, कुलस्य वंशस्य, स्थितये रक्षणाय, पितृणाम् *अग्निष्वात्तादीनाम्, मानसीम्-मन.सङ्कल्पजन्याम, अयोनिजाम्, कन्याम-सुताम्, मुनीनामपि, माननीयाम्-आदरणीयाम्, आत्मानुरूपाम् कुलशीलसौन्दर्य्यादिभिः स्वसदृशीम्, मेनाम्-मेनानाम्नीम्, विधिना-शास्त्रोक्तरीत्या, उपयेमे परिणिनाय ।

---

* तेभ्य. शुभास्पद जज्ञे मेनका धारिणी तथा । ते उभे ब्रह्मवादिन्यौ योगिन्यौ चाप्युभे द्विज—इति विष्णुपुराणम् ।

भा०—हिमालयेन (पर्वताभिमानिना देवेन) मेनाया विवाह कृत.। यद्यपि कामार्थमस्य धर्मरतस्य न विवाहापेक्षा, तथापि कुलमन्ततिमर्यादार क्षणाय धर्मरूपेण विवाह इति। इय मेना पितॄणा मानसी कन्या, धर्मभावेन च मुनिभिरप्यादरणीया। विवाहेऽन्यसाहाय्यस्यापेक्षितत्वेन मेरोस्तत्र माहात्म्यसूचनाय मेरुसख-इत्युक्तम्।

अलं०—उत्तरार्धे वृत्त्यनुप्रासश्चमत्कारी। अनुरूपयो. सङ्घटनवर्णनात् समालङ्कार', कुलस्य स्थितये इत्यनेनोपयमस्य विषयभोगार्थत्वव्यपोहनेन परिसंख्यालङ्कार इति विवरणम्। मुनानीमपि माननीयामित्युक्त्या तस्या ब्रह्मवादिनीत्व च व्यञ्जितम्।

***कालक्रमेणाथ तयोः प्रवृत्ते स्वरूपयोग्ये सुरतप्रसङ्गे।**

**मनोरमं यौवनमुद्वहन्त्या गर्भोऽभवद् भूधरराजपत्न्याः॥ १९॥**

अ०—अथ कालक्रमेण तयो स्वरूपयोग्ये सुरतप्रसङ्गे प्रवृत्ते (सति) मनोरमम् यौवनम् उद्वहन्त्या भूधरराजपत्न्या गर्भः अभवत्।

व्याक०—रमयतीति रमम्, पचाद्यच्, मनसा रम मनोरमम्। भूधराणा राज्ञ. पत्न्या भूधरराजपत्न्या। गर्भसम्बन्धे षष्ठी। यौवनम् युवादित्वाद् भावेऽण् तद्धित। सुरतप्रसङ्गे इति "यस्य च भावेन भावलक्षणम्" इति सप्तमी। घञन्त प्रसङ्गशब्दो व्याख्यातपूर्वः।

व्याख्या—अथ-विवाहानन्तरम्, कालक्रमेण-वयस आनुकूल्येन, तयो मेनाहिमालययोः, स्वरूपयोग्ये-सौन्दर्य्यानुरूपे, सुरतप्रसङ्गे रमणकर्मणि, प्रवृत्ते सति, मनोरमम्-मनोहारि, यौवनम्-तारुण्यम्, उद्वहन्त्या दधत्या., भूधरराजस्य-गिरिराजस्य-हिमालयस्य, पत्न्या. मेनाया, गर्भ, अभवत्, मेना गर्भवती बभूवेत्यर्थ.।

भा०—स्पष्टतरः।

अल०—यौवनमुद्वहन्त्या इति गर्भधारणे हेतुगर्भ साभिप्राय विशेषणमिति परिकर। विभावादीना चमत्कृतिजनकतयानुपस्थितेर्न शृङ्गाररसध्वनिर्वक्तु शक्य.।

---

* पद्यमिद केषुचित् पुस्तकेषु नास्ति। प्रकाशिकाविवरणयोरपि न व्याख्यानम्।

असूत सा नागवधूपभोग्य मैनाकमम्भोनिधिवद्धसख्यम् ।
क्रुद्धेऽपि पक्षच्छिदि वृत्रशत्राववेदनाज्ञं कुलिशक्षतानाम् ॥ २० ॥

अ०—सा नागवधूपभोग्यम् अम्भोनिधिवद्धसख्यम् पक्षच्छिदि वृत्रशत्रौ क्रुद्धेऽपि कुलिशक्षतानाम् अवेदनाज्ञम् मैनाकम् असूत ।

व्याक०—नागवधूनाम उपभोग्य नागवधूपभोग्यम, उपभोग्यमिति भुनक्तेर्ण्यत्, नागवधूनामिति तत्सम्बन्धे "कर्तरि वा" इति विकल्पिता षष्ठी । अम्भसा निधिना वद्ध सख्य येन तम्, अम्भोनिधिवद्धसख्यम । सख्यमिति सखिशब्दात् "सख्युर्य." । पक्षान् छिनत्ति तस्मिन् पक्षच्छिदि, "सत्सूद्विष ." इत्यादिना कर्तरि क्विप् । न वेदना जानातीत्यवेदनाज्ञ , तम, कप्रत्ययान्तस्य कृतोपपदसमासस्य नञा समास , मैनाकम्-मेनैव मेनाका स्वार्थे कप्रत्यय , 'आदाचार्याणाम्" इति कात्पूर्वस्यात्वम । तस्या अपत्यमिति शिवादित्व मत्वा अण्प्रत्यय. । यद्वा 'मेनाकाया अयमिति' सम्वन्धसामान्यविवक्षाया शेषत्वमाश्रित्य शैषिकोऽण्, असूत आददिकात् सूतेर्लङ् ।

व्याख्या—सा-मेनका हिमाद्रिपत्नी नागवधूनाम नागलोकसुन्दरीणाम्, उपभोग्यम् उपभोगयोग्यम्, निरतिशयरमणीयम, अम्भोनिधिना समुद्रेण सह बद्धम्-स्थिरीकृतम, सख्यम्-मैत्री येन तथाभूतम, तत एव पक्षच्छिदि पर्वताना पक्षच्छेदनकर्तरि, वृत्रस्य-वृत्रासुरस्य, शत्रौ विनाशके, सुरेन्द्रे, क्रुद्धेऽपि कोपयुक्तेऽपि, कुलिशक्षतानाम्-वज्राघातव्रणानाम्, अवेदनाज्ञम् वेदनाया पीडाया , अनभिज्ञम्, मैनाकम्-मैनाकनामान सुतम्, असूत उत्पादितवती

भा०—हिमालयस्य मेनाया प्रथम पुत्रो मैनाको नाम पर्वत (तत्पर्वताभिमानी देव) जज्ञे । तस्य चाग्रे यत्प्रथित महत्त्वम्, तद्धाविष्कृत्यास्मिन् पद्ये निदिष्टम्, यद्-यदा पर्वताना पक्षच्छेदनायेन्द्रः क्रोधेन प्रवृत्त , तदाय मैनाको मित्रत्वात्समुद्रेण सपक्ष एव गोपायितः । नास्य वज्रजनितवेदनाया कदाप्यनुभवोऽभूत् । समुद्रे निमग्नश्चाय पातालस्था नागकन्या रमयामासेति । यद्यपि काव्येऽस्मिन् मैनाकवर्णनस्य न कोऽप्युपयोग , तथापि भ्रातृमत्या कन्याया विवाहे प्राशस्त्याद् वर्ण्यमानाया गौर्या भ्रातृमतीत्व स्फुटीकर्तुं मैनाकजन्मोपन्यास इति व्याख्यातार । उक्त हि मनुना 'यस्यास्तु न भवेद् भ्राता न विज्ञायेत वा

पिता । नोपयच्छेत ता प्राज्ञ. पुत्रिकाधर्मशङ्कया' इति ।

अल०—सत्यपि क्रुद्धे शत्रौ वेदनाभाववर्णनाद् विशेषोक्ति । अम्भोनिधि-बद्धसख्यमिति विशेषणस्य वेदनाननुभवे साभिप्रायत्वात् परिकर । अत्र सूते कर्मभूते मैनाके विशेषणत्रयमवन्धो न समञ्जम, उत्पत्तिकाले समुद्रमित्रत्वादे-रभावेन तस्यानुवाद्यत्वानुपपत्तेरिति 'अनुवादायुक्तत्वम्' दोष । 'उपभोग्यम्' इति योग्यतार्थे कृत्यप्रत्ययस्य भाविन्यर्थे सम्भवेपि 'बद्धसख्यम्' इति भूतार्थक. क्त-प्रत्ययो ऽनुवादे ऽनुपपन्न एवेति पर्यालोच्यम् ।

**अथावमानेन पितु प्रयुक्ता दक्षस्य कन्या भवपूर्वपत्नी ।**
**सती सती योगविसृष्टदेहा ता जन्मने शैलवधू प्रपेदे ॥ २१ ॥**

अ०—अथ दक्षस्य कन्या भवपूर्वपत्नी सती पितु अवमानेन प्रयुक्ता योग-विसृष्टदेहा सती जन्मने ताम् शैलवधूम् प्रपेदे ।

व्याक०-भवस्य पूर्वा पत्नी, भवपूर्वपत्नी, "सर्वनाम्नो वृत्तिमात्रे पुंवद्भाव" इति पूर्वशब्दस्य पुंवद्भाव. । योगेन विसृष्टो देहो यया सा योगविसृष्टदेहा । योग इति युज्यतेर्घञ्, विसृष्टेति सृजते क्तः, देह इति देग्धेर्घञ् । सती-अस्ते शतृप्रत्यय., उगित्वाद् ङीप् । पितु -"कर्तृकर्मणो कृति" इति अवमानकर्तरि-षष्ठी । अवमानेनेति प्रयोजनकर्तरि तृतीया । जन्मने इति तादर्थ्ये चतुर्थी ।

व्याख्या—अथ मैनाकजननानन्तरम्, दक्षस्य-दक्षप्रजापते, कन्या-पुत्री, भवस्य-महादेवस्य,पूर्वपत्नी-स्वपूर्वजन्मनि भार्या, सती-सतीनाम्ना प्रसिद्धा, पितु स्वजनकस्य-दक्षस्य, (दक्षकृतेन) अवमानेन-(स्वभर्तुर्हविर्भागाप्रदानादिरूपेण) तिरस्कारेण, प्रयुक्ता-(देहत्यागाय) प्रेरिता, योगेन-योगमार्गेण, विसृष्ट त्यक्त. देहो यया तथाभूता सती, जन्मने-पुनर्जन्मग्रहणाय, ताम्-पूर्ववर्णिताम्, शैलस्य पर्वतराजहिमालयस्य, वधूम् मेनाम्, प्रपेदे-प्राप, जन्मग्रहणाय मेनामुपयुक्ता मन्यते स्मेत्यर्थ ।

भा०—कुमारमातु पार्वत्या प्रसङ्ग इत उपस्थापनीय इति तज्जन्मोपन्या-साय तत्पूर्वजन्मकथा स्मार्यते-पूर्वं हि दक्षस्य प्रजापते पुत्री सती भगवत शङ्करस्य भार्याभूत् । दक्षेण च केनचिद्धेतुना शिवं प्रति कुपितेन स्वीये यज्ञे भगवान् शिवो न निमन्त्रित - इति तेन पत्युरवमानेन कुपिता देवी सती पितरि

प्रतीकारमनुचित मत्वा योगेन स्वशरीर तत्याज । सैव शङ्करेण नित्यसम्बद्धा वियोगमसहमाना तादृशातिप्रकृष्टतपस्विन्या मेनाया पुनर्जन्मग्रहणायेच्छामकरोत्, वस्तुत परा शक्ति सा नित्यैव, देवाना कार्यद्धियर्थं समये समये स्वातन्त्र्येण तस्या आविर्भाव इति । एतच्च 'प्रपेदे' इति जन्मग्रहणे स्वातन्त्र्यमभिदधता सूचित द्रष्टव्यम् ।

अल०—सती सतीति भिन्नार्थत्वेन यमकम् । भवपूर्वपत्नीति जन्मग्रहणे साभिप्रायत्वात्परिकर ।

**सा भूधराणामधिपेन तस्या समाधिमत्यामुदपादि भव्या ।**
**सम्यक्प्रयोगादपरिक्षताया नीताविवोत्साहगुणेन सपत् ॥२२॥**

अ०—भूधराणाम् अधिपेन समाधिमत्याम् तस्याम् भव्या सा उत्साहगुणेन सम्यक्प्रयोगाद् अपरिक्षतायाम् नीतौ सम्पदिव उदपादि ।

व्याक०-भुवो धराणा भूधराणाम्, धरशब्द पचाद्यजन्त । समाधिरस्त्यस्या इति समाधिमती, तस्याम्, समाधिशब्दान् मतुप्, समाधिशब्दे च दधाते "उपसर्गे घो कि"। भवतीति भव्या, "भव्यगेय " इत्यादिना कर्तरि यत् । सपत् सपूर्वकात्पद्यते "सपदादिभ्य क्विप्" इति भावे क्विप् । उदपादि-उत्पादयते कर्मणि लुङ् चिण् । "चिणो लुक्" इति तप्रत्ययस्य लुक् । सेति कर्मणि प्रथमा, कर्मणोभिहितत्वात् अधिपेनेति अनुक्तकर्तरि तृतीया । प्रयोगाद्-इति हेतौ पञ्चमी ।

व्याख्या०-भूधराणाम् अधिपेन गिरिराजेन हिमालयेन, समाधिमत्याम्-समाधिरत्र तप , तद्वत्याम्, तपस्विन्याम्, तस्याम् मेनायाम्, भव्या-कल्याणी सा-सती, उत्साहगुणेन उत्साह अध्यवसाय , तद्रूपेण गुणेन यद् वा-उत्साहस्य गुणेन उत्साहजनितेन असमोहसावधानत्वादिना, सम्यक् प्रयोगाद्-यथोचितमुपयोगात्, अपरिक्षतायाम्-अपरिहीणायाम्, नीतौ-सन्धिविग्रहादिषाड्गुण्यरूपाया राजनीतौ, भव्या सम्पदिव समृद्धिरिव, उदपादि-उत्पादिता ।

भा०—सा पूर्वोक्ता शिवपूर्वपत्नी सती हिमालयेन मेनाया जनिता । जननमत्र प्रादुर्भाव एव, नित्यशक्तेस्तस्या मुख्यजन्मनोऽसम्भवात् । तत्रोपमा यथा उत्साहगुणेन नीतौ सपदुत्पाद्यते तथैवेति । सपत्सिद्धौ यथा नीतेरुत्साहस्य च

कृतार्थता जायते, तथैवास्या भगवत्या प्रादुर्भावेन मेनाहिमालयौ कृतार्थता गताविति व्यज्यते।

अल०—पूर्णोपमा। संपत्पार्वत्योरुपमानोपमेयभाव,। तथैवोत्साहहिमालययोरपि। भव्यत्वम्, उत्पत्तिश्च साधारणो धर्मः। नीतेर्मेनायाश्चापरिचितत्व ममाविमत्त्वं चेति विशेषणे अपि विम्बप्रतिविम्बभूते। व्यङ्ग्योऽर्थो भावे उक्त।

**प्रसन्नदिक् पांसुविविक्तवात शङ्खस्वनानन्तरपुष्पवृष्टि।**
**शरीरिणा स्थावरजङ्गमाना सुखाय तज्जन्मदिन बभूव॥ २३॥**

अ०—प्रसन्नदिक् पांसुविविक्तवातम् शङ्खस्वनानन्तरपुष्पवृष्टि तज्जन्मदिनम् स्थावरजङ्गमानाम् शरीरिणाम् सुखाय बभूव।

व्याक०—प्रसन्ना दिशो यस्मिन्, तत् प्रसन्नदिक्। प्रसन्नेति 'पद् पद्यर्थे' इति चौरादिकान्निष्ठा। पांसुभि विविक्ता वाता यस्मिन्, तत् पांसुविविक्तवातम्। विविक्तशब्दे 'विचिर् पृथग्भावे' धातो क्त। शङ्खस्य स्वनस्य (ष० त०) अनन्तरम् (ष० त०) पुष्पाणा वृष्टि (ष० त०) यस्मिन् (बहु०) तत् शङ्खस्वनानन्तरपुष्पवृष्टि। तस्या जन्मनो दिन तज्जन्मदिनम्। स्थावरशब्दे तिष्ठते "स्थेशभासपिसकसो वरच्"। जङ्गमशब्दे यङ्लुगन्ताद् गच्छते पचाद्यच्। सुखायतादर्थ्ये चतुर्थी। यद् वा "क्रियार्थोपपदस्य च कर्मणि स्थानिन" इत्यनेनाप्रयुज्यमानतुमुन्नन्तकर्मणि चतुर्थी, सुखमुत्पादयितुमिति।

व्याख्या—प्रसन्ना -क्रूरातपमेघावरणाद्युपद्रवरहिता मनोहरा, दिश, यस्मिन् तथाभूतम्, पांसुभि.-धूलिभि, विविक्त -रहित, वात -पवन -यस्मिन तथाभूतम्, शङ्खस्वनस्य-शङ्खनादस्य, अनन्तरम्, पुष्पाणा वृष्टि यस्मिन् तथाभूतम्, तस्याः सत्या, जन्मन -उत्पत्तेः, दिनम्, स्थावराणाम्-एकत्र स्थितिशीलाना शैलवृक्षादीनाम्, जङ्गमानाम्-गमनशीलाना सुरनरतिर्यगादीनाम्, सर्वेषा शरीरिणाम्-शरीरधारिणाम्, सुखाय-आनन्दाय, बभूव-जातम्।

भा०—पार्वत्या प्रादुर्भावदिवसे दिश प्रसन्ना बभूवु, (तेन शरीरिणा नेत्रसुखम्) पांसुरहितो मन्दशीतल पवनो ववौ, (तेन त्वक्सुखम्), जन्मन शङ्खध्वनि हिमालयगृहे श्रुत्वा दिवि देवै पुष्पवृष्टि. कृता, यद्वा देवैरेव शङ्

विनाय पुष्पवृष्टि कृता, ( तेन श्रोत्रघ्राणयो सुखम् ) सर्वे च स्थावरजङ्गमा प्राणधारिण सर्वेन्द्रियैर्निर्वृता सुखमापुः । सर्वेश्वर्या. प्रादुर्भावे सर्वमिदमुपपन्नमेवेति ।

अल०—प्रसन्नदिगादिपदार्थाना जन्मदिनस्य सुखकरत्वे हेतुत्वात् काव्यलिङ्गन् । देव्या निरतिशय महत्त्वम्, तेन च तद्विषयको भावो व्यङ्ग्य ।

तया दुहित्रा सुतरां सवित्री स्फुरत्प्रभामण्डलया चकासे ।
विदूरभूमिर्नवमेघशब्दादुद्भिन्नया रत्नशलाकयेव ॥ २४ ॥

अ०—सवित्री स्फुरत्प्रभामण्डलया तया दुहित्रा नवमेघशब्दाद् उद्भिन्नया रत्नशलाकया विदूरभूमिरिव सुतराम् चकासे ।

व्याक०—स्फुरत् प्रभाया मण्डलं यस्या., तया स्फुरतप्रभामण्डलया । प्रभा इति भावे " आतश्चोपसर्गे " इति स्त्रियामङ् । नवाद् मेघाना शब्दाद् नवमेघशब्दाद् । सावित्री-सूते सूयतेर्वा तृच्, " स्वरतिसूति—" इति वेट्, स्त्रीत्वाद् ङीप् । चकासे-कास्धातोर्लिट्, क्वचित्तु चकाशे इति पाठ• । तत्र काश् धातुर्बोध्य• । दुहित्रा इति कासते करणे तृतीया ।

व्याख्या—सवित्री-जननी मेना, स्फुरत्-प्रकाशमानम्, प्रभामण्डलम्-मण्डलाकारा प्रभा-कान्तिर्यस्या , तथाभूतया, तया, उत्पन्नया, दुहित्रा-कन्यया नवाद् वर्षादावुद्भूताद्, मेघशब्दाद् घनगर्जिताद्, उद्भिन्नया-स्थलीं भित्त्वा वहिरुद्भूतया, रत्नशलाकया रत्नाङ्कुरेण, *विदूरस्य-विदूराख्यगिरे•, भूमिरिव, सुतराम्-अत्यन्तम्, चकासे-शुशुभे ।

भा०—प्रादुर्भूतायास्तस्या भगवत्या स्फुरन्ती प्रभा विलक्षणैवासीत्, तेन प्रभाजालेन जनन्या अपि शोभाऽभवत् । तत्रोपमा विदूराख्य एक• पर्वत , यत्र वैदूर्याख्या मणयो जायन्ते, वर्षारम्भे प्रथमेन मेघध्वनिना तत्र रत्नाङ्कुरा शलाकाकारा प्रादुर्भवन्ति । ताभी रत्नशलाकाभिर्यथा गिरिप्रान्तभूमे शोभा

---

*अस्ति शैलो विदूराख्यः पर्यन्ते तत्र काचन
मही रत्नाकरीभूता वैदूर्यं तत्र जायते ।
मेघशब्देन जायन्ते तत्र रत्ननवाङ्कुरा
क्रमात् परिणतास्ते स्युर्मणयो राजपूजिताः ॥ इति भोज ।

भवति, तथैव कन्ययानया मातुः शोभाभूदिति।

अलं०—उपमा। विदूरभूमिरुपमानम्, मेना चोपमेया, चकासे इति सामान्यधर्म। रत्नशलाकाया दुहितुश्च विम्वप्रतिविम्वभाव।

**दिने दिने सा परिवर्धमाना लब्धोदया चान्द्रमसीव लेखा।**
**पुपोष लावण्यमयान् विशेषाञ्ज्योत्स्नान्तराणीव कलान्तराणि॥२५॥**

अ०—लब्धोदया दिने दिने परिवर्धमाना (अत एव) चान्द्रमसी लेखेव (स्थिता) सा ज्योत्स्नान्तराणि कलान्तराणीव लावण्यमान् विशेषान् पुपोष।

व्याक०—लब्ध उदयो यया सा लब्धोदया। लब्ध इति लभते क्त। उदय इति उत्पूर्वाद् एते "एरच्"। ज्योत्स्नायाम् अन्तर येषा तानि ज्योत्स्नान्तराणि। व्यधिकरणपदो वहुव्रीहि। अन्या कला कलान्तराणि, अथवा अन्तराणि-अवयवा, कला एव अन्तराणि कलान्तराणि, द्वितीयावहुवचनम्, 'विशेषान्' इत्यस्योपमानम्। दिने दिने-"नित्यवीप्सयो" इति वीप्साया द्विरुक्ति। परिवर्धमाना हेतौ लक्षणे वा शानच्। चान्द्रमसी-चन्द्रमस इयमिति शैषिकोऽण्, ततो ङीप् लवणस्य भावो लावण्यम्, ष्यञ्, तत्प्रचुरान् लावण्यमयान्, प्राचुर्ये मयट्। अत्र लावण्यशब्दो रूढिलक्षणया कान्तिविशेषवाची †।

व्याख्या—लब्ध-प्राप्त, उदय जन्म, चन्द्रलेखापक्षे उदयगिरिसम्बन्ध-यया तथाभूता, दिने दिने-प्रत्यहम्, परिवर्धमाना वृद्धि प्राप्नुवती, अत एव चान्द्रमसी-चन्द्रसम्बन्धिनी लेखेव कलेव, स्थिता, सा मेनकात्मजा, ज्योत्स्नायाम्-चन्द्रिकायाम्, अन्तरम् अन्तर्धान येषा तथाभूतानि-ज्योत्स्नावाहुल्येन ज्योत्स्नायामन्तर्निलीनानीव, यद्वा ज्योत्स्ना अन्तरे अन्तरात्मनि (यद्वा मध्ये वहिश्च) येषा तथाभूतानि ज्योत्स्नामयानि, कलान्तराणीव अन्या कला इव,

---

* मध्ये वस्त्रे तथा छिद्रे व्यवधानेऽन्तरात्मनि।
अवकाशे वहिर्योगे विशेषेवयवेऽन्तर—इति हलायुध॥

† अवयवसस्थानविशेषाभिव्यङ्ग्ये निखिलावयवेभ्यो व्यतिरिक्त यत् किञ्चित् तत्त्वान्तर लावण्यम्—इति ध्वनिकार.।

कलारूपान् अवयवानिव इति वा, लावण्यमयान्-कान्तिविशेषप्रचुरान्, विशेषान्-* अवयवान्, पुपोष-उपचितवती, प्रापेत्यर्थः ।

भा०—प्रादुर्भूता भगवती प्रत्यह ववृधे । यथा चन्द्रकला प्रत्यह वर्धमाना ज्योत्स्नामयी कला प्रादुर्भावयति, तथैयमपि प्रत्यह लावण्यमयान्यङ्गानि प्रादुश्चकार ।

अल०—उपमाद्वयम् । चन्द्रलेखापार्वत्योरुपमानोपमेयभाव एकः, कलावयवयोरपर इति ।

**ता पार्वतीत्याभिजनेन नाम्ना बन्धुप्रिया बन्धुजनो जुहाव ।**
**उ मेति मात्रा तपसो निषिद्धा पश्चादुमाख्या सुमुखी जगाम ॥२६॥**

अ०—बन्धुजन बन्धुप्रियाम् ताम् पार्वती इति आभिजनेन नाम्ना जुहाव । (किंच) सुमुखी सा उ मा इति मात्रा तपस. निषिद्धा ( सती ) पश्चाद् उमाख्याम् जगाम ।

व्याक०—शोभन मुख यस्या सा सुमुखी, " स्वाङ्गाच्चोपसर्जनादसयोगोपधात् " इति ङीप् । पार्वती पर्वतशब्दादपत्यार्थे भवार्थे वा अण्, ततो ङीप् । अभिजनादागतमाभिजनम्, तेन, अभिजनशब्दाद् "तत आगत " इत्यण् आख्याम् आङ् पूर्वात् ' चक्षिङ् ' धातो " गुरोश्च हल " इत्यप्रत्यय , " चक्षिङ ख्याञ् " इति ख्याञा देशः " शस्य यो वा " इति यकार । जुहाव ह्वेञ् धातोर्लिटि रूपम् । आह्वानार्थे केवलस्य प्रयोगः । नाम्नेति ह्वानकरणे तृतीया । तपस -" वारणार्थानामीप्सित. " इत्यपादानत्वात् पञ्चमी ।

व्याख्या—बन्धुजन कुटुम्बलोक., बन्धूनाम् पित्रादीनाम्, प्रियाम्-इष्टाम्, ताम् नवजाता सुताम्, 'पार्वती' इति, आभिजनेन-†अभिजन.-कुल जन्मभूमिर्वा, तत आगतेन तन्निमित्तेन कुलसम्बन्धिना, जन्मभूमिसम्बन्धिना वा, 'पार्वती' इति नाम्ना अभिधानेन, जुहाव-आकारयामास, व्यवजहारेत्यर्थ. । किं च सुमुखी शोभनवदना सा पार्वती, ‡उ-हे वत्से, मा मा

* विशेषोऽवयवे व्यक्तौ—इत्युत्पलमाला ।

† कुलेऽप्यभिजनो जन्मभूम्यामपि ।

‡ "उ इति वितर्कसम्बोधनपादपूरणेषु"—इति गणव्याख्याने ।

कृथा, इत्येवं रूपेण, मात्रा जनन्या-मेनया, तपस तपश्चर्याया, निषिद्धा वारिता, सती, पश्चाद्, उमाख्याम्-उमेति नाम, जगाम-प्राप। अरुणगिरिनाथस्तु उ-शब्द तपोऽर्थक मत्वा '*उ-तप, मा कृथा'', इति व्याचख्यौ।

भा०—सा पर्वताज्जाता, पर्वते जाता, इति वा हेतोर्वान्वयवास्तस्या देव्याः पार्वतीत्यन्वर्थं नाम चक्रुः। अग्रे च यदा सा तप कर्तुं प्रवृत्ता, जनन्या च तप क्लेशमनुमाय खिन्नया 'उ मा' इत्येव निषिद्धा, तत प्रभृति 'उमा' इत्यपि तस्या नाम जातम्। इदमाख्यानमग्रे स्फुट स्यात्।

**महीभृत पुत्रवतोऽपि दृष्टिस्तस्मिन्नपत्ये न जगाम तृप्तिम्।**
**अनन्तपुष्पस्य मधोर्हि चूते द्विरेफमाला सविशेषसङ्गा॥ २७॥**

अ०—पुत्रवत: अपि महीभृत दृष्टि तस्मिन् अपत्ये तृप्तिम् न जगाम। हि अनन्तपुष्पस्य मधो द्विरेफमाला चूते सविशेषसङ्गा (भवति)।

व्याक०—अनन्तानि पुष्पाणि यस्य (यज्जन्यानि) तस्य अनन्तपुष्पस्य। विशेषेण सह वर्तत इति सविशेष, तादृशः सङ्गो यस्या. सा सविशेषसङ्गा। पुत्रवत.-पुत्रशब्दाद् भूम्नि मतुप्, पुत्रशब्दो ऽत्रापत्यशब्दवत्कन्यापुत्रयो सामान्येन वाचक। महीं बिभर्तीति महीभृत्, तस्य। बिभर्तेः कर्तरि क्विप्। दृष्टि-दृशे क्तिन्।

व्याख्या—पुत्रवत -†मैनाकादिसततियुतस्य अपि, महीभृत -हिमालयस्य, दृष्टि, तस्मिन्-उमारूपे, अपत्ये सततौ, तृप्तिम् संतोषम्, न जगाम, स तस्या निरतिशय स्नेहमकरोदित्यर्थः। हि-यथा अनन्तपुष्पस्य-कमलाद्यनेकमनोहारिकुसुमसम्पदमुत्पादयतोपि मधो -वसन्तस्य, (सम्बन्धिनी) द्विरेफाणाम् भ्रमराणाम्, माला, चूते-रसालपादप एव सविशेष. सातिशय, सङ्ग-आसक्ति, यस्यास्तथाभूता भवति।

भा०—यद्यपि पूर्वं पुत्रादिसन्ततौ सत्या पुनरुत्पन्नाया कन्याया न विशेषेण लोकानामनुरागो दृश्यते, तथापि हिमालयस्य पार्वत्यामधिको ऽनुराग आसीत्, स ता पश्यन्न तृप्तिमलभत। तत्र च तस्या एव भगवत्या अनन्य

---

* उ तापेऽव्ययमीशे ना—इति यादव।

† गङ्गाख्यस्यैव सन्ततिरिति रामायणादौ स्पष्टम्।

दुर्लभा गुणा कारणम्, यथा गुणातिशयादेव सत्स्वपि वसन्तजन्येषु वहुषु पुष्पेषु सहकारमञ्जरीष्वेव भ्रमरा नितान्तमुत्कण्ठिता भवन्तीति ।

अल०—वाक्यद्वय एकस्यैव सामान्यस्य 'तृप्ति न जगाम' 'सविशेषसङ्गा' इति विभिन्नाभ्यां शब्दाभ्यां प्रतिपादनात् प्रतिवस्तूपमा । हिमालयस्य मधुना, तद्दृष्टेर्भ्रमरमालया, अपत्यान्तरस्य पुष्पान्तरै पार्वत्याश्च चूतमञ्जर्या विम्बप्रतिविम्बभाव. । अत्र 'पुत्रवत' इत्युपक्रम्य 'तस्मिन्नपत्ये' इत्यभिधानात्प्रक्रमभङ्गो दोष काव्यप्रकाश उक्त । 'महीभृतो ऽपत्यवतो ऽपि' इति पाठश्च युक्त इत्युक्तम् । अत्र वादप्रतिवादौ काव्यप्रदीपे प्रकाशिकाख्यायामस्य व्याख्यायां च विस्तृताविति नेह तन्येते ।

**प्रभामहत्या शिखयेव दीपस्त्रिमार्गयेव त्रिदिवस्य मार्ग ।**
**सस्कारवत्येव गिरा मनीषी तया स पूतश्च विभूषितश्च ॥ २८ ॥**

अ०—स तया दीपइव प्रभामहत्या शिखया, त्रिदिवस्य मार्गइव त्रिमार्गया, मनीषीव सस्कारवत्या गिरा पूतश्च विभूषितश्च ( वभूव )।

व्याक०—प्रभया महत्या प्रभामहत्या । त्रयो मार्गा यस्या तया त्रिमार्गया । मनस ईषा मनीषा, शकन्ध्वादित्वात् पररूपम्, सा अस्यास्तीति मनीषी । "व्रीह्यादिभ्यश्च" इतीनिस्तद्धित । सर्वाणि तृतीयान्तानि पवनविभूषणयोः कर्तृणि, तयेत्यस्योपमानानि । पूतविभूषितशब्दौ क्तान्तौ ।

व्याख्या – स -हिमवान्, तया-कन्यया, दीप इव-दीपो यथा, प्रभया-आलोकेन, महत्या अधिकया, शिखया प्रतिक्षण निर्गच्छन्त्या ज्वालया त्रिदिवस्य स्वर्गस्य, मार्ग इव मार्गो यथा, त्रिमार्गया-त्रिपथगया गङ्गया मनीषीव-विद्वान् यथा, सस्कारवत्या-व्याकरणलक्षणानुसारिण्या, गिरा-वाचा, तथा पूत -पवित्रश्च, विभूषित अलकृतश्च, वभूव ।

भा०—उत्पन्नया भगवत्या पार्वत्या हिमालय पूतश्चालकृतश्च वभूव । तत्रोपमानानि त्रीणि स्पष्टानि । सर्वत्र विभूषितत्व शोभाधिक्यप्राप्तिरेव । पूतत्व तु दीपे तम ससर्गरहितता, स्वर्गमार्गे पुण्याधिक्यसम्वन्ध., मनीषिणि शुद्धशब्दप्रयोगात्पुण्यप्राप्ति, हिमालये च भगवत्या प्रसादाद्विशुद्धान्त -करणतया मुक्तियोग्यता इति ।

अल०—मालोपमालङ्कार । उत्पादकस्य पावकत्वमलकर्तृत्व च साधारणो धर्मः । हिमवत समीपवर्तिनामपि शुद्धिर्व्यञ्जितेति विवरणकार ।

**मन्दाकिनीसैकतवेदिकाभि सा कन्दुकै कृत्रिमपुत्रकैश्च ।**
**रेमे मुहुर्मध्यगता सखीनां *क्रीडारसान्निर्विशतीव बाल्यम् ॥२६॥**

अ०—सा क्रीडारसाद् बाल्य निर्विशती सखीनाम् मध्यगता ( सती ) मन्दाकिनीसैकतवेदिकाभिः कन्दुकैः च कृत्रिमपुत्रकै मुहु रेमे ।

व्याक०—क्रीडासु रस क्रीडारस , तस्मात् । क्रीडते "गुरोश्च हल." इत्यप्रत्यय· । मन्दाकिन्या सैकते वेदिकाभि , मन्दाकिनीसैकतवेदिकाभि· । सैकतशब्दे "सिकताशर्कराभ्या च" इति मत्वर्थीयोऽण् । कृत्रिमशब्दे करोते "ड्वित क्त्रि " "क्त्रेर्मम नित्यम्" । पुत्रकैरित्यत्र ह्रस्वार्थे क । बाल्यम्-बालशब्दाद् भावे ष्यञ् । निर्विशती-विशतेर्हेतौ शतृप्रत्यय । "आच्छीनद्योर्नुम्" इति विकल्पान्नुमभाव । सखीनाम्-सखिशब्दात् "सख्यशिश्वीति भाषायाम्" इत्यनेन ङीप् । तृतीयान्तानि रमणक्रियाकरणानि ।

व्याख्या—सा पार्वती, क्रीडासु, $ रसाद्-अनुरागाद्, बाल्यम्-बाल्यावस्थाम्, †निर्विशतीव-भुञ्जानेव, अनुभवन्तीवेति यावत्, सखीनाम् सहचरीणाम्, मध्ये गता-विद्यमाना, मन्दाकिन्या -गङ्गाया , सैकते-सिकतामये पुलिने, वेदिकाभिः वेदिकानिर्माणै , कन्दुकै , च ‡कृत्रिमपुत्रकै -वस्त्रादिनिर्मिताभि· पाञ्चालिकाभि·, मुहु -भूयोभूय , रेमे-चिक्रीड

भा०—सर्वलोकप्रकृतिभूताया भगवत्या यद्यपि न बाल्य वास्तवम्, केवल देवकार्यार्थं शरीरग्रहणात्, तथापि सा साधारणबालवत्तथा चिक्रीड, यथा क्रीडार्थमेव तद्बाल्य सभाव्यते स्म ।

अल०—अत्र सुरकार्यार्थमेव देव्या गृह्यमाणस्य बाल्यस्य क्रीडारसानुभवहेतुकत्वमुत्प्रेक्षितम् । मल्लिनाथस्तु 'क्रीडारस निर्विशतीव बाल्ये' इत्येव

---

* क्रीडारस निर्विशतीव बाल्ये—इति मल्लिनाथसमत. पाठ ।

$ शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रस —इत्यमर ।

† निर्वेशो भृतिभोगयो —इति विश्व· ।

‡ पाञ्चालिका पुत्रिका स्याद् वस्त्रदन्तादिनिर्मिता—इत्यमरः ।

पाठमभ्युपगम्य व्याख्यातवान्, परमत्र पाठे उत्प्रेक्षावोधकेवपदस्वारस्यं सम्यङ् न व्यवतिष्ठते। वाल्यस्य वास्तवत्वाभावात्तत्र हेतुताया अप्यवास्तवत्वात्तस्मिन् पुत्रिकादिक्रीडाहेतुत्वमप्युत्प्रेक्षितमेवेत्यरुणाचलनाथ प्राह।

ता हंसमालाः शरदीव गङ्गा महौषधि नक्तमिवात्मभास ।
स्थिरोपदेशामुपदेशकाले प्रपेदिरे प्राक्तनजन्मविद्या ॥ ३० ॥

अ०—प्राक्तनजन्मविद्या उपदेशकाले स्थिरोपदेशाम् ताम् हंसमाला. शरदि गङ्गामिव आत्मभास नक्तम् महौषधिमिव प्रपेदिरे।

व्याक०—प्राक्तने जन्मनि विद्या प्राक्तनजन्मविद्याः। प्राक्तनशब्दे प्राच्शब्दात् त्यप्रत्यय', तुडागमश्च। प्राच्शब्दस्तु प्रपूर्वादञ्चतेः "ऋत्विग्-दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च" इत्यनेन क्विनि सिध्यति। विद्या-विदन्त्यनया इति वेत्ते "सञ्ज्ञाया समजनिषद " इति क्यप्। स्थिर उपदेशो यस्या ता स्थिरोपदेशाम्। प्रपेदिरे-पद्यतेर्लिटि वहुवचनम्।

व्याख्या—प्राक्तने-प्राचीने, जन्मनि, दत्तसुतावस्थायाम्, ( अभ्यस्ता ) विद्या, उपदेशकाले अध्यापनसमये, स्थिरोपदेशाम्-स्थिरः-दृढानुभवजन्यसंस्काररूपेण स्थित., (प्रागभवीय ) उपदेश., यस्या तथाभूताम्, ताम्-पार्वतीम्, हंसानाम्,माला शरदि-शरदृतौ, गङ्गाम् यथा, आत्मभासः-स्वदीप्तय , नक्तम्-रात्रौ, महौषधिम्-सञ्जीवन्याद्योपाधिविशेषम्, यथा, तथा, प्रपेदिरे-प्राप्ता.।

भा०—यथावसरमध्ययनाय नियुक्ता पार्वती आचार्य्येण प्रयासेन विनैव सर्वा अपि विद्या गृहीतवती। तत्र हेतुः-पूर्वजन्मदृढाभ्याससिद्धा सर्वा विद्या. स्वत एवास्या वुद्धौ प्रकाशमापु, उपदेशस्तु निमित्तमात्रमिति। तत्रोपमाद्वयम्-यथा शरदृतु निमित्तीकृत्य गङ्गाया हंसमाला स्वत एवायान्ति, यथा वा रात्रि निमित्तीकृत्य ओषधीना स्वत एव भास. प्रस्फुरन्ति इति सर्वविद्यास्वरूपाया भगवत्या विद्याग्रहणे कः प्रयास इति हृदयम्। अध्यापनन्तु लोकमयार्दामात्रम।

अल०—मालोपमा। अनया च पार्वत्या वैनयिको नैसर्गिकश्चोभयविधोऽपि वुद्ध्यतिशयो व्यञ्जित, आगन्तुकहंसमालोपमया वैनयिक., आत्मभासा प्रादुर्भावोपमया तु नैसर्गिक इति प्रकाशिकाकार।

**असम्भृतं मण्डनमङ्गयष्टेरनासवाख्यं करणं मदस्य।**

**कामस्य पुष्पव्यतिरिक्तमस्त्रं बाल्यात् परं साथ वयः प्रपेदे॥ ३१॥**

अ०—अथ सा असम्भृतम् अङ्गयष्टेः मण्डनम् अनासवाख्यम् मदस्य करणम् पुष्पव्यतिरिक्तम् कामस्य अस्त्रम् बाल्यात् परम् वयः प्रपेदे।

व्याक०—अङ्गं यष्टिरिवाङ्गयष्टिः, तस्याः। न आसव इत्याख्या यस्य तद् अनासवाख्यम्। आसवशब्दे सुनोतेः "ऋदोरप्"। पुष्पेभ्यो व्यतिरिक्तं पुष्पव्यतिरिक्तम्। व्यतिरिक्तम्-'वि' 'अति' एतदुपसर्गद्वयपूर्वाद् 'रिचिर्' धातोः क्तः। मण्डनम् इति मण्डयतेर्ल्युट्। मदस्य-'मदी' धातोः "मदोऽनुपसर्गे" इत्यप्। बाल्यादिति परशब्दयोगे पञ्चमी। वय इति प्रपत्तौ कर्म। मण्डन-करणास्त्राणि तत्रारोप्यविशेषणानि।

व्याख्या—अथ-क्रमेण, सा-पार्वती, असम्भृतम्-(अन्यतः) असगृहीतम्-नैसर्गिकम्, अङ्गयष्टेः-*प्रशस्तस्य शरीरस्य, मण्डनम् अलङ्कारम्, अनासवाख्यम्-आसव इति पदेनाव्यवहार्यम्, मदस्य-मत्ततायाः, करणम् साधनम्, पुष्पव्यतिरिक्तम्-कुसुमभिन्नम्, कामस्य-मदनस्य, अस्त्रम् आयुधम्, बाल्यात् शैशवात्, परम्-अनन्तरभावि, वयः अवस्थाम्, तारुण्यम्, प्रपेदे-प्राप।

भा०—क्रमेण तया पार्वत्या यौवनं प्राप्तम्। तच्च यौवनं त्रिधा विशेषितं कविना-एतद्धि यौवनं शरीरस्यालङ्काररूपम् (तेन शरीरे शोभाविशेषः, द्रष्टॄणामानन्दश्च व्यज्यते) परमलङ्कारान्तराणि यथा बाह्यैः सुवर्णरत्नादिभिः सपाद्यन्ते, तथा नेदम्, अपि तु स्वाभाविकम्। किं चेदं यौवनं नेत्रविलासाद्यभिव्यङ्ग्यस्य मदस्य जननम् (द्रष्टॄणां वा समोहहेतुभूतमदजननम्) परं मदजनकद्रव्यं यथासवशब्देन व्यवह्रियते, तथा नेदम्। किं चेदं कामस्यास्त्रम्, परं न पुष्परूपम् इति (अनेनैव साधनेन कामो लोकान् जयति, यस्य यौवनं प्रादुर्भूतम्, तमेव वा जयति इति)।

अल०—प्रथमतृतीयपादयोरधिकताद्रूप्यरूपकम्, श्रीमल्लिनाथस्तु परिणामालङ्कारमाह। द्वितीयपादे वयस आसवत्वाभावेऽपि मदजननकार्यकरणाद्

* 'हस्तयष्टिलतादयः प्रशंसावचनाः' इत्युक्तत्वात् प्रशंसार्थको यष्टिशब्द इति विवरणकारः।

विभावना । सर्वत्रापि विभावना भोजेनोक्ता । व्यङ्ग्यानि भावार्थे दर्शितानि ।

**उन्मीलित तूलिकयेव चित्र सूर्यांशुभिर्भिन्नमिवारविन्दम् ।**
**बभूव तस्याश्चतुरस्रशोभि* वपुर्विभक्त नवयौवनेन ॥ ३२ ॥**

अ०—नवयौवनेन विभक्तम् तस्या वपुः तूलिकया उन्मीलितम् चित्रमिव सूर्यांशुभि भिन्नम् अरविन्दमिव चतुरस्रशोभि बभूव ।

व्याक०—चत्वार अस्रा† यस्य तच्चतुरस्रम्, तद् यथा स्यात्, तथा शोभते इति चतुरस्रशोभि। चतुरस्रशब्दोऽत्र लक्षणया समग्रार्थबोधक । शोभते ताच्छील्ये णिनि । उन्मीलितम्-मीलधातो. क्त । तूलिकया, सूर्यांशुभि , नवयौवनेन इति त्रीणि क्तान्तेषु कर्तृपदानि ।

व्याख्या०—नवेन-अचिरोदितेन, यौवनेन तारुण्येन, विभक्तम्-कृतविभागम् व्यक्तीकृतस्तनजघनाद्यवयवसंस्थानविशेषम्, तस्या पार्वत्याः, वपु -शरीरम्, तूलिकया‡-आलेख्यकूर्चिकया, उन्मीलितम्-रञ्जनद्रव्येणोद्भासितम्, चित्रमिव, सूर्यस्य, अंशुभि -किरणै., भिन्नम्-विकासितम्, अरविन्दमिव-कमलमिव, चतुरस्रशोभि-साकल्येन शोभमानम्, बभूव-जातम् ।

भा०—यौवनेन शरीरावयवेषु समुचितसंनिवेश-लावण्यादिजननात्तस्या शरीर सर्वत शोभमानमासीत् । यथा तूलिकया कृतरञ्जनं चित्र शोभते, यथा वा सूर्यांशुविकासित पद्म शोभते, तथैवेति।

अल०—मालोपमा, चतुरस्रशोभित्व समानो धर्म , उन्मीलनभेदनविभजनाना बिम्बप्रतिबिम्बभाव , बभूवेति क्रिया तु वपुषैवान्वेति, नतूपमानाभ्याम् । तेन कालभेददोषो न शङ्कनीय ।

इत प्रभृति पार्वत्या प्रत्यवयव वर्णयन् कविः 'मानवा मौलितो वर्ण्या देवाश्चरणत पुन.' इति कविसंप्रदायमाश्रित्य पादादि भगवत्या वर्णनमुपक्रमते ।

---

*'चतुरस्रशोभनम्, इति पाठान्तरम् ।

†'अस्र कोणे शिरसिजे' इति विश्व ।

‡ 'तूलिका कथितालेख्यकूर्चिकातूलशय्ययो '-इति विश्वः ।

**अभ्युन्नताङ्गुष्ठनखप्रभाभिर्निक्षेपणाद् रागमिवोद्गिरन्तौ।**
**आजह्रतुस्तच्चरणौ पृथिव्यां स्थलारविन्दश्रियमव्यवस्थाम्॥ ३३॥**

अ०—निक्षेपणाद् अभ्युन्नताङ्गुष्ठनखप्रभाभि रागम् उद्गिरन्ताविव (स्थितौ) तच्चरणौ पृथिव्याम् अव्यवस्थाम स्थलारविन्दश्रियम् आजह्रतु।

व्याक०—अभ्युन्नता अङ्गुष्ठयो. (ष० त०) नखयो (ष० त०) प्रभाभि, अभ्युन्नताङ्गुष्ठनखप्रभाभिः, करणे तृतीया। न व्यवस्था यस्या तामव्यवस्थाम्, व्यवस्थाशब्दे तिष्ठते "व्यवस्थायामसञ्ज्ञायाम्" इति ज्ञापकादङ्। निक्षेपणाद्-क्षिपतेर्ल्युट्। अङ्गुष्ठाभ्युन्नतौ हेतुत्वात्, पञ्चमी। रागम्-रञ्जेर्घञ्, "घञि च भावकरणयो" इति नलोप। उद्गिरन्तौ-उत्पूर्वाद् गिरतेः शतृप्रत्यय। आजह्रतु.-हरतेर्लिटि प्रथमपुरुषद्विवचनम।

व्याख्या०—निक्षेपणाद्-(पाद) विन्यासाद्, अभ्युन्नतयो·- भूतलस्पर्शनसमयेऽधिकमुन्नताग्रयो, अङ्गुष्ठयो, यौ नखौ, तयो प्रभाभि, रागम्-अन्तर्गतलौहित्यम्, उद्गिरन्तौ-बहिर्निस्सारयन्ताविव, स्थितौ, तस्या -पार्वत्या, चरणौ, पृथिव्याम्, अव्यवस्थाम्-गत्यभावोऽत्र व्यवस्था, तया रहितान्-सञ्चारिणीमिति यावत्, स्थलारविन्दयोः-स्थलकमलयो, श्रियम् शोभाम्, आजह्रतु·सम्पादितवन्तौ। पृथिव्या निक्षेपणात्, स्थलकमलशोभाम् आजह्रतु गृहीतवन्तौ इति वा।

भा०—भूम्या चरणनिक्षेपकाले समुन्नतस्याङ्गुष्ठस्यारुणनखप्रभयैव सभाव्यते स्म यद्भगवत्याश्चरणौ परिश्रमादन्त स्थ रागमुद्वमत.। तेन च रागेण स्थलकमलशोभा तत्र प्रतीयते स्म।

अल०—रागप्रसरणे रागोद्गिरणोत्प्रेक्षाऽनुक्तास्पदा वस्तूत्प्रेक्षा। अन्यस्य श्रियोऽन्येनाधारणात् सादृश्ये पर्यवसानमिति निदर्शना, सा च 'अव्यवस्थाम्' इत्युक्त्या सविशेषरूपकवत् सविशेषा-इति प्रकाशिका। उन्नताङ्गुष्ठत्वायुक्त्या सामुद्रिकोक्तलक्षणवत्त्व व्यङ्ग्यम्।

**सा राजहंसैरिव सनताङ्गी* गतेषु लीलाञ्चितविक्रमेषु।**
**व्यनीयत प्रत्युपदेशलुब्धैरादित्सुभिर्नूपुरशिञ्जितानि॥ ३४॥**

* क्वचित् 'सनतास्त्रा' इति पाठ।

अ०—सनताङ्गी सा प्रत्युपदेशलुब्धैः नूपुरशिञ्जितानि आदित्सुभिः राजहंसैः लीलाञ्चितविक्रमेषु गतेषु व्यनीयत इव ।

व्याक०—सनतान्यङ्गानि यस्याः सा सनताङ्गी "अङ्गगात्रकण्ठेभ्यो वक्तव्यम्" इति वृत्तिकृन्मते ङीष् । हंसानां राजानः राजहंसाः, तैः, राजदन्तादित्वाद् हंसशब्दस्य परनिपातः । अनुक्ते विनयनकर्तरि तृतीया । लीलया अञ्चिता विक्रमा येषु तेषु लीलाञ्चितविक्रमेषु । अञ्चिता -अञ्चतेर्निष्ठा, "अञ्चेः पूजायाम्" इतीडागमः "नाञ्चेः पूजायाम्" इति नलोपाभावः । विक्रमशब्दे क्राम्यतेर्घञ् । शिञ्जितशब्दे-शिजिधातोर्भावे क्तः । शिञ्जितानि-इति आदानकर्मणि द्वितीया । षष्ठी तु न, "न लोकेति" निषेधात् । गतेषु-इत्यत्रापि भावे क्त., वैषयिकाधारे सप्तमी । आदित्सुभिः -आङ्पूर्वाद् ददातेः सन्, तदन्ताच्च उः । "सनि मीमाघुरभलभशकपतपदामच इस्" "अत्र लोपोऽभ्यासस्य" । व्यनीयत-नयतेः कर्मणि लङ्, सेति विनयनक्रियाया अभिहिते कर्मणि प्रथमा ।

व्याख्या—संनतानि-सम्यङ् नम्राणि, अङ्गानि-असादयोऽवयवाः, यस्यास्तथाभूता, सा-पार्वती, प्रत्युपदेशलुब्धैः-विद्यां दत्त्वा विद्यामादातुकामैः, नूपुराणाम् मञ्जीराणाम्, शिञ्जितानि-रणितानि, आदित्सुभिः -आदातुमिच्छुभिः, शिक्षितुकामैः, राजहंसैः*, लीलया-विलासेन, अञ्चिताः-पूजिताः -शोभिताः, विक्रमाः-पादविन्यासाः, येषु तथाभूतेषु, गतेषु गमनेषु, (तद्विषये) व्यनीयत-अशिक्ष्यत इव ।

भा०—पार्वत्या गतिर्हंससदृशी दृष्टा, मञ्जीरशिञ्जितानि च हंसरुतेभ्योऽप्युत्कृष्टानि समनुभूयन्ते । तत्रेदं कविरुत्प्रेक्षते-हंसैः पार्वत्यै गतिशिक्षा दत्ता, विद्यादानं च शुश्रूषाहेतुकम्, धनहेतुकम्, किंचिच्छिक्षित्वा किंचिच्छिक्षणरूपं वा भवतीति प्रत्युपकाररूपेण रुतेन मञ्जीरशिञ्जितानुकरणं तैः शिक्षितमिति ।

अल०—हंससदृशगत्या हंसशिक्षणहेतुकत्वमुत्प्रेक्ष्यते, शिक्षणे च प्रत्युपदेशलोभो हेतुत्वेनोत्प्रेक्ष्यत इति हेतूत्प्रेक्षाद्वयम् ।

वृत्तानुपूर्वे च नचातिदीर्घे जङ्घे शुभे सृष्टवतस्तदीये ।

---

* हंसास्तु श्वेतगरुतश्चक्राङ्गा मानसौकसः,
राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः ।

**शेषाङ्गनिर्माणविधौ विधातुर्लावण्य†उत्पाद्य इवास यत्नः ॥ ३९ ॥**

अ०—वृत्तानुपूर्वे च न अतिदीर्घे च तदीये शुभे जङ्घे सृष्टवत. विधातु शेषाङ्गनिर्माणविधौ उत्पाद्ये लावण्ये यत्नः आस इव ।

व्याक०—पूर्वमनुगते अनुपूर्वे, "अत्यादय क्रान्ताद्यर्थे द्वितीयया" इत्यनेन समास । वृत्ते च ते अनुपूर्वे वृत्तानुपूर्वे, कर्मधारय । शेषाणाम् अङ्गाना निर्माणस्य विधौ शेषाङ्गनिर्माणविधौ । निर्माण एव विधौ इति श्रीमन्नारायण । अत्र चर्मणि द्वीपिन हन्तीत्यादिवत् निमित्तार्थे सप्तमी प्रकाशिकाविवरणयोरुक्ता । "निमित्तात् कर्मयोगे" इत्यत्र योगशब्द संयोगसमवाययोरेव बोधक इति सिद्धान्ते 'निर्माणविधौ प्रस्तुते सति' इति भावलक्षणा सप्तमी व्याख्येया । परम्परया वैषयिकाधिकरणता वा विवक्षणीना कल्पनीया । तदीये-त्यदादीना वृद्धत्वात् तच्छब्दाच्छ । शुभे शोभेते इति विग्रहे शोभते इगुपधत्वात् क । जङ्घे जङ्घन्यते आभ्यामिति विग्रहे यङ्लुगन्ताद् हन्ते "अन्येभ्योऽपि दृश्यते" इति ड । सर्जनकर्मणि द्वितीया । विधातु. इति यत्नसम्बन्धे षष्ठी । उत्पाद्ये-णिजन्ताद पद्यते "अचो यत्" । लावण्ये इति यत्नस्य वैषयिकाधारे सप्तमी । आस इति तिङन्तप्रतिरूपकमव्यय केचिदाहु । 'अस गतिदीप्त्यादानेषु' इति धातोर्लिटि रूपमिति वामन । तत्रापि गतिरर्थ., उत्पत्तुमिति तत्कर्मेति प्रकाशिका, दीप्तिरर्थ, अकर्मकोऽयमिति मल्लिनाथः ।

व्याख्या—वृत्ते-वर्तुले, अनुपूर्वे-क्रमेण सकुचितस्थौल्ये, गोपुच्छाकारे, नातिदीर्घे, ( अर्थान्नातिह्रस्वे ) तदीये-पार्वत्या, शुभे मनोहारिण्यौ, जङ्घे-जान्वधोभागौ, सृष्टवत.-निर्मितवत, विधातु ब्रह्मण, शेषाणाम् जङ्घाव्यतिरिक्तानाम्, अङ्गानाम्-अवयवानाम्, निर्माणविधौ-विरचनार्थम्, उत्पाद्ये-उत्पादयितुमावश्यके, लावण्ये कान्तिविशेषे ( तद्विषये ) यत्न, आस इव दिदीपे इव, अतिशयेन प्रावर्तत इत्यर्थ । लावण्यम्, उत्पत्तुम्-उत्पादयितुम्, यत्न आसेति अन्तर्भावितण्यर्थं पदधातुमाश्रित्य पाठान्तर प्रकाशिकाया व्याख्यातम् ।

---

† लावण्यमुत्पत्तुमिवास यत्न -इति प्रकाशिकासम्मत पाठ ।

भा०—लावण्येनैवोपादानेन भगवत्या अङ्गानि निर्मातु विधाता प्रवृत्त, तच्च सर्वमपि लावण्य ( यावत्तत्सविधे आसीत् ) जङ्घानिर्माण एव तेन व्ययीकृतम् । ततश्च शेषाणामुपरितनानामङ्गाना निर्माणाय लावण्यमपि विधात्रा पुनरत्पाद्यमासीदिति तदर्थमपि तस्य प्रकृष्टो यतो जात एव भवेदिति सम्भाव्यते ।

अल०—इवशब्दश्रवणाद्विधातुर्यत्न उत्प्रेक्ष्यते इत्युत्प्रेक्षालङ्कार श्रीमन्नारायणो मल्लिनाथश्चाहतु वस्तुतस्त्वापातप्रतीतैवात्रोत्प्रेक्षा, वस्तुहेतुफलात्मिकाया आलङ्कारिकसमतायास्तस्या इहाप्रतीते । जङ्घासौन्दर्य्यं हि प्रकृतम्, न हि विधातुर्यत्नस्तत्र सादृश्यात्सभावयितु कथमपि शक्य, नापि स जङ्घासौन्दर्य्यहेतु, न च यत्नस्य तत्फलत्वेन सभावन चमत्कारि, तस्मात्सम्भावनामात्रेऽयमिवशब्द । विधातुर्लावण्यान्तरोत्पादनप्रयत्नस्य कार्यरूपस्य सभावनया सर्वस्य पूर्वसचितलावण्यस्य व्ययो निमित्तरूप प्रत्याय्यते, तेन च जङ्घयो सर्वलावण्यनिधानता फलरूपा प्रत्याय्यते इत्यप्रस्तुतप्रशसात्र मुख्यो ऽलङ्कार । जङ्घयोरलौकिक सौन्दर्य्यं व्यङ्ग्यम् ।

**नागेन्द्रहस्तास्त्वचि कर्कशत्वादेकान्तशैत्यात् कदलीविशेषा ।**
**लब्ध्वाऽपि लोके परिणाहि रूप जातास्तदूर्वोरुपमानबाह्या ॥३६॥**

अ०—नागेन्द्रहस्ता त्वचि कर्कशत्वात्, कदलीविशेषा, एकान्तशैत्याद् लोके परिणाहि रूपम् लब्ध्वा अपि तदूर्वो, उपमानबाह्या जाता ।

व्याक०—कदलीषु कदलीना वा विशेषाः कदलीविशेषा । एकान्तात् शैत्याद् एकान्तशैत्याद् । शैत्यशब्दे शीतशब्दाद् भावे ष्यञ् । उपमाने उपमानाद्वा बाह्या उपमानबाह्या, उपमानशब्दे माङ्धातोर्भावे करणे वा ल्युट्, बाह्या -बहिष् शब्दाद् ' बहिषष्टिलोपो यञ् च " । कर्कशत्वात्-कर्कशशब्दाद् भावे त्व अरुणाचलनाथस्तु त्वचिकर्कशत्वादित्येक पद मत्वा " अमूर्धमस्तकात् स्वाङ्गादकामे " इति सप्तम्या अलुकमाह । परिणाहि-परिणाहोऽस्यास्तीति परिणाहि, परिपूर्वाद् णहधातोर्घञ, तदन्ताद् "अत इनिठनौ" । लब्ध्वा लभते क्त्वा । रूपमिति तत्कर्म ।

व्याख्या—नागेन्द्राणाम् ऐरावतादीनाम्, हस्ता शुण्डादण्डा, त्वचि-

चर्माणि, कर्कशत्वात्-कठोरत्वात्, कदलीविशेषाः-विशिष्टाः कदल्यः, एकान्तम्-नियतम्, शैत्यम्-जाड्यम्, तस्मात्, लोके-जगति, * परिणाहि-विशालम्, रूपम्-आकारम्, लब्ध्वा-प्राप्याऽपि, तस्याः-पार्वत्याः, ऊर्वोः-जघनयोः, उपमाने-उपमितौ, बाह्याः-बहिर्भूताः, अयोग्या इति यावत्, जाताः। उपमानात्-सम्भावितोपमानभावाद् गणाद् बाह्या जाता इति वा। लोके-लोकदृष्टौ, उपमानबाह्या जाता इति विवरणम्।

भा०—स्त्रीणामूरू हस्तिशुण्डादण्डैः कदलीभिर्वा कविभिरुपमीयेते, पार्वत्या ऊर्वोस्तु सादृश्यं सामान्येन तेषु नास्ति। नागेन्द्राणां शुण्डादण्डाः, नन्दनादिस्थिताः काश्चित्कदल्यश्च यद्यपि विशालेनाकारेण समा उपलभ्येरन्, परं शुण्डादण्डानां कर्कशत्वाद्, ऊर्वोस्तु कोमलत्वात्, कदलीनां सदा शैत्येन शीतकाले उद्वेजकत्वात्, ऊर्वोस्तु ग्रीष्मे शैत्येन शीतकाले चोष्णत्वेन सर्वर्तुसुखाकरत्वादुपमानता न युज्यत एवेति।

अल०—ऊर्वोरुपमानापेक्षयाधिक्यप्रतिपादनाद् व्यतिरेकोऽलङ्कारः, अपिशब्दादुपस्थितो विरोधश्च तदङ्गमिति प्रकाशिका। उपमानयोरप्रकृतयोर्बाह्यत्वरूपैकधर्मप्रतिपादनात्तुल्ययोगिताया पद्यमिदं कुवलयानन्दे उदाहृतम्।

**एतावता ‡ नन्वनुमेयशोभं काञ्चीगुणस्थानमनिन्दितायाः।**
**आरोपितं यद् गिरिशेन पश्चादनन्यनारीकमनीयमङ्कम्॥ ३७॥**

अ०—अनिन्दितायाः काञ्चीगुणस्थानम् एतावता ननु अनुमेयशोभम् (अस्ति) यत् (तत्) पश्चाद् गिरिशेन अनन्यनारीकमनीयम् अङ्कम् आरोपितम्।

व्याक०—काञ्च्या गुणस्य स्थानं काञ्चीगुणस्थानम्। अनुमेया शोभा यस्य तद् अनुमेयशोभम्, अनुमेया-मातेर्मिमीतेर्वा शक्यार्थे "अचो यत्"। 'अनुमेयशोभि' इति पाठे तु शोभते इति शोभि, आवश्यकार्थे णिनिः, भावप्रधानो निर्देशः, शोभित्वमर्थः। अनुमेयं शोभि (शोभित्वम्) यस्येति विग्रहो मल्लिनाथेन दर्शितः। न अन्यासां नारीणां कमनीयम् अनन्यनारीकमनीयम्।

* परिणाहो विशालता।

‡ 'अनुमेयशोभि' इति मल्लिनाथसम्मतः पाठः।

कमनीयम्-कामयतेर्णिङभावपक्षे शक्यार्थे अनीयर् । एतावता एतच्छब्दाद् वतुप्रत्यय, आत्वम्, हेतावेषा तृतीया। उत्तरवाक्यार्थश्चैतच्छब्देन परामृश्यते। तस्यैव च तृतीयया हेतुत्व प्रतिपाद्यते । आरोपितमिति णिजन्ताद्रोहते कर्मणि क्त, "रुह पोऽन्यतरस्याम" । अङ्कमिति द्वितीयान्तमारोपणक्रियायाम् 'अकथित' कर्म, नयतिना समानार्थकत्वाद् द्विकर्मकत्वम् । काञ्चीगुणस्थानमिति च प्रधानकर्म, कर्मण उक्तत्वात् प्रथमा ।

व्याख्या—अनिन्दिताया -अनवद्याया पार्वत्या, काञ्चीगुणस्य रशनासूत्रस्य, स्थानम्, नितम्ब इति यावत्, एतावता * ननु-एतावन्मात्रेणैव (उत्तरवाक्यप्रतिपादितेन) हेतुना, अनुमेया-अनुमातु शक्या शोभा-सौन्दर्य्यम्, यस्य तथाभूनम् अस्ति, यत्, तत्, पश्चाद विवाहानन्तरम्, गिरिशेन-महादेवेन, अन्यासाम्, नारीणाम्, अकमनीयम्-कामयितुमप्यशक्यम्, अत्यन्तदुरवापम्, अङ्कम्-(स्वस्य) उत्सङ्गम्, आरोपितम् नीतम् स्थापितमिति यावत् ।

भा०—यो भगवत शिवस्योत्सङ्गोऽन्याभि स्त्रीभिर्मनसापि कामयितुमशक्य, अत्यन्तदुरवापतया तत्रेच्छाया अप्यनुदयात्, तत्रैव पार्वत्या नितम्ब. स्वय भगवता शिवेनैवारोपित -इत्यतोऽधिक नितम्बस्य सौन्दर्य्यं गुणाकरत्व गौरव वा किमु वर्णनीयम् । अत्यन्त जगतो विलक्षणमिति सर्वथा तेनैवानुमिति सिद्ध्यतीति ।

अल०—अनुमानमेवात्रालङ्कार । गुणस्थानशब्दन नितम्बस्य प्रतिपादनं विच्छित्ति पुष्णाति ।

**तस्या प्रविष्टा नतनाभिरन्ध्र रराज तन्वी नवरोमराजिः ।**
**नीवीमतिक्रम्य सितेतरस्य तन्मेखलामध्यमणेरिवार्चिः ॥ ३८ ॥**

अ०—नतनाभिरन्ध्रम् प्रविष्टा तन्वी तस्या नवरोमराजि नीवीम् अतिक्रम्य (स्थितम्) सितेतरस्य तन्मेखलामध्यमण अर्चिरिव रराज ।

व्याक०—नत नाभिरेव रन्ध्र नतनाभिरन्ध्रम, कर्मधारयद्वयम् । नवा रोम्णा राजि, नवरोमराजि । सितादितरस्य सितेतरस्य । तस्या मेखलाया

---

* प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु ।

मध्ये मणि तन्मेखलामध्यमणिः, तस्य । अतिक्रम्य-अतिपूर्वात् क्रामतेर्ल्यप् ।

व्याख्या—नतम्-निम्नम्, नाभिरेव, रन्ध्रम्-विवरम्, नाभिप्रदेशम्, प्रविष्टा प्राप्ता, तन्वी-सूक्ष्मा, तस्या पार्वत्या, नवा (यौवनप्रारम्भेण सह) अचिरोदिता, रोमराजि -रोमावलिः, * नीवीम्-कटिवसनग्रन्थिम्, अतिक्रम्य-अतीत्य, स्थितम्, सितेतरस्य नीलस्य, तस्याः-पार्वत्याः, मेखलायाः रशनायाः, (यद्वा तस्याः-नीव्याः या मेखला, तत्रैव स्थितत्वात्, तस्याः) मध्यमणेः-मध्य-स्थितरत्नस्य, अर्चिरिव-प्रभेव, रराज-शुशुभे। मल्लिनाथस्तु 'नीवीमतिक्रम्य नाभि-रन्ध्रं प्रविशन्ती रोमराजि' इति व्याचष्टे।

भा०—यौवनारम्भे नाभिरन्ध्रपर्यन्तं प्रसृता पार्वत्याः रोमराजि श्लक्ष्ण-कृष्णवर्णा तथा शोभते स्म, यथा मेखलामध्यगतस्य नीलमणेः प्रभा नीवीम-तिक्रम्य प्रसृता भवेदिति संभाव्यते स्म । उभयोर्वर्णसाम्यमुत्प्रेक्षाहेतुः ।

अलं०—उत्प्रेक्षा । यद्यपि मेखलामणेरर्चिः स्वरूपसदेवेति तेनोपमापि संभवति, परं नवीमतिक्रम्य तस्यावस्थितिर्न सतीति विशिष्टस्योत्प्रेक्षैव प्रकाशि-काविवरणयोः समर्थिता। नचात्र सादृश्ये तात्पर्यम्, अपि तु संभावनायामेवेति । भास्वरश्लक्ष्णकृष्णत्वं रोमराजेर्व्यङ्ग्यम् ।

**मध्येन सा वेदिविलग्नमध्या वलित्रयं चारु बभार बाला ।**
**आरोहणार्थं नवयौवनेन† कामस्य सोपानमिव प्रयुक्तम् ॥ ३९ ॥**

अ०—वेदिविलग्नमध्या सा बाला मध्येन चारु वलित्रयम् कामस्य आरोह-णार्थम् नवयौवनेन प्रयुक्तम् सोपानमिव बभार ।

व्याक०—विलग्नं मध्यं यस्याः सा विलग्नमध्या, वेदिरिव विलग्नमध्येति "उपमानानि सामान्यवचनैः" इति समासः । विलग्नम् विपूर्वकात् ह्रासार्थका लगते क्तः । वलीनां त्रयं वलित्रयम्, त्रयमिति त्रिशब्दात् "संख्याया अवयवे तयप्" तस्य च "द्वित्रिभ्यां तयस्यायज् वा" इत्ययजादेशः । आरोह-णायेत्यारोहणार्थम् । मध्येनेति भरणकरणे तृतीया। नवयौवनेनेति प्रयोगे कर्तृ, कामस्येति आरोहणे कर्तृ ।

---

* स्त्रीकटीवस्त्रबन्धेऽपि नीवी परिपणेऽपि च—इत्यमरः ।

† 'नवयौवनस्य कामेन' इति प्रकाशिका ।

व्याख्या—वेदि -यज्ञार्थनिर्मितभूमिरिव, विलग्नम् कृशम्, मध्य, यस्यास्तथाभूता, सा प्रकृता, वाला पार्वती, मध्येन स्वतनुमध्यभागेन, चारु-मनोहरम्, वलित्रयम् त्रिवलीम, कामस्य-मदनस्य, आरोहणार्थम् (हृदयप्रदेशप्राप्त्यर्थम) उपरिगमनाय, नवेन-अचिरप्रारब्धेन, यौवनेन तारुण्येन, प्रयुक्तम्-रचितम, सोपानमिव नि श्रेणिकामिव, वभार दधार । प्रकाशिकाविवरणयोस्तु 'कामेन यौवनस्यारोहणाय-स्तनवदनादिप्रदेशव्याप्तये रचित सोपानमिवेति, व्याख्यातम् ।

भा०—पार्वत्या मध्ये वलित्रयं दृष्ट्वा तथा सभाव्यते, यथा पार्वतीतनौ प्राप्त यौवन स्वप्रभो कामस्यागमनाय सर्वं सज्जीकुर्वत् तस्य हृदयपर्यन्तमारोहणाय सोपानपरम्परा न्यस्तवदिति । पाठान्तरे तु पूर्वमेव तनौ प्रविष्टः कामः स्वसुहृदो यौवनस्यागमनं प्रतीक्षमाण , तस्य नवत्वाद् ( बालत्वाद् ) आरुह्य स्तनप्रदेशादावागमने क्लेशं विचार्य सोपानपरम्परा न्यस्तवानित्यनुसन्धेयम् । अत्र च कामनिमितत्वेन वलित्रयस्य सौन्दर्यातिशयो व्यज्यते-इति प्रकाशिका।

अल०—वलित्रये सोपानपरम्परातादात्म्यसभावनं स्वरूपोत्प्रेक्षा । तस्य चारोहणफलकत्वसभावन फलोत्प्रेक्षा । *विलग्नमध्येति पुनरुक्तवदाभास शब्दालङ्कार ।

**अन्योऽन्यमुत्पीडयदुत्पलाक्ष्या. स्तनद्वय पाण्डु तथा प्रवृद्धम् ।**
**मध्ये यथा श्याममुखस्य तस्य मृणालसूत्रान्तरमप्यलभ्यम् ॥४०॥**

अ०—अन्योऽन्यम् उत्पीडयत् पाण्डु उत्पलाक्ष्या स्तनद्वयम् तथा प्रवृद्धम् यथा श्याममुखस्य तस्य मध्ये मृणालसूत्रान्तरम् अपि अलभ्यम् ।

व्याक०—उत्पले इव अक्षिणी यस्या , तस्या उत्पलाक्ष्या., "वहुव्रीहौ सक्थ्यक्ष्णो स्वाङ्गात् पच्" षित्त्वान्ङीप् । स्तनयोर्द्वयं स्तनद्वयम् , द्विशब्दाद् अवयवे तयप्, तस्यायजादेश । श्यामं मुखं यस्य तस्य श्याममुखस्य । मृणालसूत्रस्य अन्तर मृणालसूत्रान्तरम्, न लभ्यमलभ्यम्, लभते "पोरदुपधात्" इति यत् । अन्योन्यशब्दो व्याख्यात । उत्पीडयत् पीडयते शतृप्रत्यय । तथा यथा शब्दयो "प्रकारवचने थाल्" । प्रवृद्धमित्यकर्मकत्वा-

* अवलग्न विलग्न मध्य मध्यम इत्यपि ।

त्कर्तरि क्त । अलभ्यमिति क्रियाया कर्तृपदम् 'परीक्षकजनेन' इत्यध्याहारलभ्यम् ।

व्याख्या—अन्योऽन्यम् परस्परम्, उत्पीडयत्-बाधमानम्, पाण्डु गौरम्, उत्पलाक्ष्या -कमलनयनाया, स्तनयो.-कुचयो, द्वयम्, तथा तेन प्रकारेण, प्रवृद्धम्-वृद्धि गतम्, यथा, श्यामम् नीलवर्णम्, मुखम् अग्रभाग., यस्य तथा भूतस्य, तस्य-स्तनद्वयस्य, मध्ये-अन्तराले, मृणालसूत्रस्य-बिसतन्तो, अन्तरम् अवकाशोऽपि, अलभ्यम्-लब्धुमशक्यम् । परीक्षकजनेनेति शेष. । 'अलब्धम' इति वा पाठ इति विवरणम् ।

भा०—स्तनद्वय परस्परमप्यवकाशमददद्बाधमान तथा वृद्धि गतम्-यथा तदन्तरे मृणालसूत्रमपि नावकाशमासादयेत्, 'पाण्डु' 'श्याममुखम' इति विशेषणद्वय यौवनावस्थाव्यञ्जकमिति व्याख्यातार । श्याममुखेति विशेषणेनावकाशदानाभावोऽपि समर्थ्यते, न हि कृष्णमुख (कुटिल.) कस्याप्यवकाश कथमपि ददातीति ।

अलं०—अवकाशसबन्धेऽपि तदभावकथनादसबन्धातिशयोक्तिरिति मल्लिनाथ. । भावार्थोक्तरीत्या परिकरोऽपि ।

**शिरीषपुष्पा*धिकसौकुमार्यौ बाहू तदीयाविति मे †वितर्क. ।**
**पराजितेनाऽपि कृतौ हरस्य यौ कण्ठपाशौ मकरध्वजेन ॥ ४१ ॥**

अ०—तदीयौ बाहू शिरीषपुष्पाधिकसौकुमार्यौ (स्त) इति मे वितर्क, (अस्ति), यौ पराजितेन अपि मकरध्वजेन हरस्य कण्ठपाशौ कृतौ ।

व्याक०—शिरीषस्य पुष्पाद् (तत्पु०) अधिक (तत्पु०) सौकुमार्यं ययोस्तौ शिरीषपुष्पाधिकसौकुमार्यौ । सौकुमार्यशब्दे सुकुमारशब्दाद् भावे ष्यञ् । मकरो ध्वजे यस्य तेन मकरध्वजेन । तदीयौ-तस्या इमौ इति तच्छब्दात् छस्तद्धित । अत्र वाक्यत्रयमन्वये प्रदर्शितम्, तत्र तत्र कर्तृकर्मणी चान्वय एव स्फुटे ।

---

* शिरीषमालाधिकसौकुमार्यौ'—इति पाठान्तरम् ।

† प्रतर्क —इति पाठान्तरम् ।

व्याख्या—तदीयौ गिरिजाया, वाहू-भुजौ, शिरीषपुष्पात्- कपीतनकुसुमादपि, अधिकम्, सौकुमार्यम् मार्दवम्, ययोस्तथाभूतौ, स्त, इति, मे मम, वितर्क ऊह, अस्ति । यौ वाहू, पराजितेन-पूर्वं पराभूतेनापि, मकरध्वजेन-कामेन, हरस्य-महादेवस्य, कण्ठपाशौ-कण्ठवन्धनरज्जू, कृतौ-विहितौ ।

भा०—पुष्पाणि कामदेवस्यास्त्राणि, तानि च प्रयुञ्जानोऽपि काम· शिवेन पराजित, उमायास्तु वाहू अस्त्रत्वेन प्रयुज्य कामेन सफलता लब्धा, यत्तौ वाहू तेन पाशरूपेण शिवकण्ठे समर्प्य शिवस्य वन्धन कृतम् । तेन पुष्पेभ्यः प्रशस्तता वाह्वो सिध्यति, प्रशस्तता च कामास्त्राणा सौकुमार्यादेवेति सर्वपुष्पसुकुमारात् शिरीषपुष्पादप्यधिक सौकुमार्यं वाह्वो सिद्धमिति व्याख्यातार । कामस्यास्त्रभूतानि सुकुमाराणि पुष्पाणि शिवेन न सोढानि, (पराजितत्वात्कामस्य सिद्धमेतत्) उमाया वाहू तु पाशभूतावपि तेन कण्ठे सोढौ, तदेतत् सौकुमार्याधिक्ये लिङ्गमित्यपि युक्त भाति ।

अल०—वाह्वोरुपमानात्पुष्पादाधिक्यवर्णनाद् व्यतिरेक इति विवरणकारः । वाह्वो पाशत्वारोपाद्, वाहुरूपतयैव पाशस्य कण्ठवन्धनोपयोगित्वाच्च परिणाम इति मल्लिनाथ । अनुमान तु स्फुटमेवेति ।

**कण्ठस्य तस्यास्तनुवन्धुरस्य मुक्ताकलापस्य च निस्तलस्य ।**
**अन्योन्यशोभाजननाद् वभूव साधारणो भूषणभूष्यभाव ॥४२॥**

अ०—तनुवन्धुरस्य तस्या कण्ठस्य निस्तलस्य मुक्ताकलापस्य च अन्योऽन्यशोभाजननाद् भूषणभूष्यभावः साधारण. वभूव ।

व्याक०—तनुश्चासौ वन्धुरस्तनुवन्धुरः, तस्य । मल्लिनाथस्तु स्तनवन्धुरस्येति पाठ मत्वा स्तनाभ्या वन्धुरस्येति विजग्राह । निर्गतं तल यस्मात्तस्य निस्तलस्य । मुक्ताना कलापस्य मुक्ताकलापस्य । अन्योन्येन, अन्योन्यस्मिन् वा शोभाया जननाद् अन्योन्यशोभाजननाद् । भूषण च भूष्य च भूषणभूष्ये, तयोर्भावो भूषणभूष्यभाव, भूषणभूष्यशब्दयो भूषयतेर्ल्युट् यच्च ।

---

· शिरीषस्तुकपीतन—इत्यमर । सिरस—इति भाषाया प्रसिद्धम् ।

व्याख्या—तनोः कृशस्य, * वन्धुरस्य सुन्दरस्य च, ( मल्लिनाथमते- स्तनाभ्या पीवराभ्याम † वन्धुरस्य उन्नतस्य ) तस्या पार्वत्याः, कण्ठस्य- गलस्य, ‡निस्तलस्य वर्तुलस्य (गोलस्य) §मुक्ताकलापस्य-मौक्तिकभूषणस्य च, अन्योन्येन-परस्परेण ( एकेनापरस्मिन् ) जननात् करणाद्, भूषणभूष्यभाव - अलङ्कारालङ्कार्यभाव., साधारण समान , वभूव ।

भा०—अन्यत्र मुक्ताभूषण कण्ठालङ्करण भवति, कण्ठशोभाजनकत्वाद् इति सुप्रसिद्धम । पार्वत्या कण्ठस्य तु शोभा मुक्ताकलापेन जनितेत्येव न, अपि तु कण्ठेनापि मुक्ताकलापस्य शोभा जनिता । मुक्ताकलापोऽपि तत्र कण्ठे नितरा शुशुभे, तस्मादिहोभावप्यलङ्कार्यौ, उभावपि चालङ्कारौ। उभयो शोभाजनकत्वे हेतू तनुवन्धुरत्व निस्तलत्व चेति ।

अल०—परस्परोपकारादन्योन्यालङ्कार इति मल्लिनाथ । उभयत्र प्रयुक्तयोर्विशेषणयोर्बिम्बप्रतिविम्बभावात्सादृश्ये पर्यवसानमिति व्यङ्ग्योपमा प्रकाशिकाकारो ध्वनयति । कण्ठसौन्दर्यातिशयो व्यङ्ग्य ।

**चन्द्र गता पद्मगुणान् न भुङ्क्ते पद्माश्रिता चान्द्रमसीमभिख्याम् ।**
**उमामुख तु प्रतिपद्य लोला द्विसश्रया प्रीतिमवाप लक्ष्मी ॥४३॥**

अ०—लोला लक्ष्मी चन्द्रम् गता ( सती ) पद्मगुणान् न भुङ्क्ते, पद्माश्रिता ( सती ) चान्द्रमसीम् अभिख्याम् ( न भुङ्क्ते ), उमामुखम् प्रतिपद्य तु ( सा ) द्विसश्रयाम् प्रीतिम् अवाप ।

व्याक०—द्वे सश्रयौ यस्या ता द्विसश्रयाम्, सश्रयशब्दे श्रयते "एरच्" । भुङ्क्ते- 'भुजोऽनवने" इत्यनेनात्मनेपदम्, चान्द्रमसीम् चन्द्रम स्शब्दात् शैषिकोऽण्। अभिख्याम्-अभिपूर्वात् चक्षिङ्धातो " गुरोश्च हल " इत्यप्रत्यय , चक्षिङ ख्याञादेश । प्रतिपद्य पद्यते ल्यप्। अवाप-आप्नोतेलिट्।

* वन्धुरौ नम्रसुन्दरौ—इति वैजयन्ती ।

† वन्धुर तून्नतानतम्—इत्यमरः ।

‡ वर्तुल निस्तल वृत्तम्—इत्यमर ।

§ कलापो भूषणे वर्हे—इत्यमर ।

प्रीतिम्-प्रीणाते क्तिन्। चन्द्रमिति गमनकर्मणि द्वितीया । तथैव वाक्यान्तर-कर्मसूह्या ।

व्याख्या — लोला-चञ्चला, एकत्रानवस्थायिनी लक्ष्मीः-शोभाभिमानिनी श्रीदेवता, चन्द्रम्, गता-प्राप्ता, सती, पद्मस्य-कमलस्य, गुणान् सौरभसौकुमार्यादीन्, न भुङ्क्ते-नानुभवति, चन्द्रोदये कमलाना मुद्रितत्वात् । पद्मम्, आश्रिता प्राप्ता, सती, चान्द्रमसीम्-चन्द्रस्य, *अभिख्याम्-कान्तिम्, न भुङ्क्ते, पद्मविकाससमये चन्द्रमसोऽदर्शनात् । उमाया -पार्वत्या , मुखम्-आननम्, प्रतिपद्य-प्राप्य तु सा-श्री , द्वे-चन्द्रपद्मे, सश्रय -आश्रयो यस्या तथाभूताम्, चन्द्रपद्मोभयप्राप्तिजन्यामिति यावत्, प्रीतिम-आनन्दम्, अवाप-लेभे, अत्रोभयोर्गुणाना सद्भावादिति ।

भा०—रात्रौ विकसितस्य कमलस्य, दिवा कान्तिमतश्चन्द्रस्य चाभावो भवति, तेन सौन्दर्य्याभिमानिनी श्रीदेवता यदा चन्द्रमाश्रयते, तदा कमलगुणा सौरभसौकुमार्य्यादयस्तया नानुभूयन्ते-इति न्यूनतैव, यदा च पद्ममाश्रयते तदामृतनिस्यन्दिनी चन्द्रकान्तिस्तया नानुभूयते । तत एवोभयत्रापि पूर्णप्रीतेरभावाल्लक्ष्म्या लोलत्व जातम् । कदाचित्तत्र गच्छति, कदाचित्तत्र गच्छतीति । यदा तु देव्याः पार्वत्या यौवन प्रादुर्भूतम्, तदा तन्मुखे चन्द्रकान्ते पद्मसौरभसौकुमार्यादीना चैकत्रैव सद्भावात्तन्मुखाश्रिता लक्ष्मी पूर्णा प्रीतिमवाप । तेन च लोलता परित्यज्य तत्रैव सुस्थिरतराभवदिति व्यङ्ग्यम् ।

अल०—उपमानापेक्षया मुखस्याधिक्योक्तेर्व्यतिरेक इति मल्लिनाथ । अन्यप्रीतेरन्यत्रासभवादुभयसादृश्ये पर्यवसानामिति निदर्शना । लोलेति साभिप्रायविशेषणोपन्यासात्परिकरोऽपि ।

पुष्प प्रवालोपहित यदि स्यान्मुक्ताफल वा स्फुटविद्रुमस्थम् ।
ततोऽनुकुर्याद् विशदस्य तस्यास्ताम्रौष्ठ†पर्यस्तरुच स्मितस्य ॥ ४४ ॥

अ०—यदि पुष्पम्, प्रवालोपहित स्यात् (यदि) वा मुक्ताफलम् स्फुटविद्रुम-

---

* अभिख्या नामशोभयो -इत्यमर ।

† 'ताम्रोष्ठ'-इति पुस्तकान्तरे ।

स्यम् (स्यात्) ततः विशदस्य ताम्रौष्ठपर्यस्तरुचः तस्याः स्मितस्य अनुकुर्यात् ।

व्याकृ०—प्रवाले उपहितम् प्रवालोपहितम्, उपहितमिति दधातेः क्तः । स्फुटे विद्रुमे तिष्ठतीति स्फुटविद्रुमस्थम्, "सुपिस्थः" इति तिष्ठतेः कः । ताम्रे ओष्ठे पर्यस्ता रुचो यस्य तस्य ताम्रोष्ठपर्यस्तरुचः । ताम्रोष्ठ इत्यत्र "ओत्वोष्ठयोः समासे वा" इति विकल्पित पररूपम् । तेन 'ताम्रोष्ठ' 'ताम्रौष्ठ' इति पाठद्वयमपि सगच्छते । पर्यन्ता-अस्यतेः क्तः । स्यात् सम्भावनायां लिङ् । ततः-तच्छब्दात् तसिल् । अनुकुर्यात्-करोतेर्लिङ् । पुष्पं मुक्ताफलं च तत्र पृथक् पृथक् कर्तृभूते । स्मितस्येति कर्मणि सम्बन्धसामान्यविवक्षया षष्ठी । श्रीमन्नारायणस्तु अनुकरणस्य तुल्यार्थकत्वात् "तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम्" इति षष्ठीमाह, परमुपपदविभक्तेः तस्याः क्रियायोगे कारकविभक्तिबाधितायाः कथं प्रवृत्तिरिति स एव जानातु ।

व्याख्या—यदि, पुष्पम्-धवलकुसुमम्, †प्रवाले-बालपल्लवे, उपहितम्-न्यस्तम्, स्यात्, (प्रकृत्या विरच्येत) यदि वा, मुक्ताफलम्-मौक्तिकम्, स्फुटे-स्वच्छे, विद्रुमे-रक्तरत्नविशेषे, तिष्ठतीति तथाभूतम्, स्यात्, (प्राकृतं प्राप्येत) ततः-तर्हि, विशदस्य-शुभ्रस्य, ताम्रौष्ठे-रक्तवर्णेऽधरोष्ठे, पर्यस्ताः परितः क्षिप्ताः, रुचः-कान्तयो यस्य तथाभूतस्य, तस्याः पार्वत्याः, स्मितस्य-मन्दहासस्य, अनुकुर्यात्-तुल्यं भवेदित्यर्थः । न तु तथा प्राप्यते, तस्मान्नास्त्येतत्तुल्यमिति ।

भा०—कवय ओष्ठं रक्तपल्लवेन विद्रुमेण वा, स्मितं च कुसुमेन मौक्तिकेन वोपमिमते । परं यथोपमेययोरोष्ठस्मितयोः परस्परसम्बन्धात्सुषमा, न तथोपमानयोरुपलभ्यते । न हि प्रकृत्या कुसुमरक्तपल्लवयोराधाराधेयभावः क्लृप्तः, नापि मौक्तिकविद्रुमयोः । ( कृत्रिमस्तु सम्बन्धो न स्वाभाविकीं सुषमां लब्धुं प्रभवति ) यदि प्रकृतिस्तथा विरचयेत्, तदास्य सादृश्यं स्यात्, इदानीन्तु दुर्लभं जगति पार्वत्या ओष्ठे लक्ष्यमाणस्य स्मितस्य सादृश्यमिति ।

अल०—'स्मितस्य पुष्पं मुक्ताफलं वा अनुकुर्यात्, इति उपमानयोः पुष्पमुक्ताफलयोरुपमेयत्वकल्पनात्प्रतीपं मुख्यमिति मल्लिनाथः । परं निशिष्टस्य पुष्पस्य मुक्ताफलस्य चाप्रसिद्ध्या तत्र सादृश्यापर्यवसानान्न तदुक्त

† प्रवालो वल्लकीदण्डे विद्रुमे बालपल्लवे—इति ।विश्व ।

भाति। उपमा यथा प्रसिद्धेनैव वस्तुना, तथा तद्विपर्ययभूत प्रतीपमर्पांति युक्तम्। तस्माद् "यद्यर्थोक्तौ च कल्पनम्" इति लक्षिताऽतिशयोक्ति काव्यप्रकाशादिमते, सभावना च कुवलयानन्दादिमते ऽत्र द्रष्टव्या।

**स्वरेण तस्याममृतस्रुतेव प्रजल्पितायामभिजातवाचि।**
**अप्यन्यपुष्टा प्रतिकूलशब्दा श्रोतुर्वितन्त्रीरिव ताड्यमाना ॥ ४५ ॥**

अ०—अभिजातवाचि तस्याम् अमृतस्रुतेव स्वरेण प्रजल्पितायाम् (सत्याम्) अन्यपुष्टा अपि ताड्यमाना वितन्त्रीरिव श्रोतु प्रतिकूलशब्दा ( भवति )।

व्याक०—अभिजाता वाग् यस्या तस्याम् अभिजातवाचि, अभिजाता- अभिपूर्वाज्जने क्तः। अमृत स्रवतीत्यमृतस्रुत्, तेन अमृतस्रुता। स्रवते क्विप्। अन्यै पुष्टा अन्यपुष्टा। विषमा तन्त्री, वितन्त्रीः "कुगतिप्रादय" इत्यनेन समास.। प्रतिकूल शब्दो यस्या सा प्रतिकूलशब्दा। प्रजल्पितायाम् जल्पते "आदिकर्मणि क्तः कर्तरि च"। सति सप्तमी। ताड्यमाना-ताडयते कर्मणि लट्। श्रोतु -शृणोतेस्तृच्।

व्याख्या—*अभिजाता-सम्यगुत्पन्ना, सुकुमारा, मधुरा, वा वाग् वाणी, यस्यास्तथाभूतायाम्, तस्याम्-पार्वत्याम्, अमृतस्रुतेव पीयूषवर्षिणेव, स्वरेण-नादेन, प्रजल्पितायाम्-वक्तुमुपक्रान्तवत्याम्, सत्याम्, अन्यपुष्टा-कोकिलापि, ताड्यमाना-( सङ्गीतशास्त्रानभिज्ञैः ) वाद्यमाना, †वितन्त्रीरिव-विषमा वीणेव, श्रोतु -श्रोतृजनस्य, प्रतिकूल -कर्णकटु, शब्द नादो यस्यास्तथाभूता भवतीति शेष ।

भा०—यदा पार्वती वक्तुमुपक्रमते, तदा श्रोतॄणा कर्णयोरमृतमिव निषिच्यते, सुप्रसिद्धमधुरशब्दा कोकिलापि च तदा सर्वै श्रोतृभि कर्णकठोर-शब्दा प्रतीयते, यथा विस्वर वाद्यमाना वीणा कर्णकटु प्रतीयेत, तथेति। वक्तुमुपक्रान्तायामेव यदेय दशा भवति, तदा निष्पन्नाया वाचि तु किं भवेदिति

---

* अभिजातशब्दो लक्षणया सौकुमार्यबोधक—इति प्रकाशिका।

† उत्पादाना स्वरादीना विहित वादनक्रमम्, विना या ताड्यते मन्दैः सा वितन्त्रीरिहोच्यते।

'प्रजल्पिता' घटकः प्रशब्दो व्यञ्जने चमत्कारी । श्रोतृमात्रमपि कोकिला विरसा तदग्रे मन्यते-कि पुनर्विशेषज्ञा श्रोतार इति श्रोतृपद व्यनक्ति ।

अल०—कोकिलातो व्यतिरेको व्यङ्ग्य । अमृतस्रुतेवेत्युत्प्रेक्षा, वितन्त्रीरिवेति कोकिलाया उपमा च तदङ्गम् । अभिजातवाचीति साभिप्राय विशेषणम्, 'यतोऽस्या वागभिजाता, सम्यक् स्थानप्रयत्नाभ्या निष्पन्ना, कोकिलायास्तु न तथेति' तेन परिकरोऽप्यङ्गम् ।

**प्रवातनीलोत्पलनिर्विशेषमधीरविप्रेक्षितमायताक्ष्या ।**

**तया गृहीत नु मृगाङ्गनाभ्यस्ततो गृहीत नु मृगाङ्गनाभि. ॥ ४६ ॥**

अ०—प्रवातनीलोत्पलनिर्विशेषम् अधीरविप्रेक्षितम् नु आयताक्ष्या तया मृगाङ्गनाभ्यः गृहीतम्, नु मृगाङ्गनाभि तत गृहीतम् ।

व्याक०—प्रकृष्टः वात यस्मिन् (बहु०) स प्रवात' । तत्र (स्थितेन) नीलेन उत्पलेन (कर्म०, तत्पु०) निर्विशेषम् (तत्पु०) प्रवातनीलोत्पलनिर्विशेषम् । अधीर विप्रेक्षितम् अधीरविप्रेक्षितम्, विप्रेक्षितशब्दे ईक्षतेः भावे क्त । उक्ते (गृह्णाते.) कर्मणि प्रथमा । आयते अक्षिणी यस्यास्तया, षच् समासान्तः । षित्वाद् ङीप्, कर्तरि तृतीया । आयतशब्दे आङ्पूर्वाद् यम् धातो क्त । मृगाङ्गनाभ्य -"आख्यातोपयोगे" इत्यपादाने पञ्चमी । तत इत्यपि तथैव । गृहीतम्-गृह्णाते क्तः, ग्रहिज्येति सम्प्रसारणम् । मृगाङ्गनाभि , तया इति च कर्तरि तृतीया ।

व्याख्या—प्रवाते-प्रभूतवातप्रदेशे, स्थितेन, (अतिचञ्चलेन) नीलोत्पलेननीलकमलेन, (तादृशोत्पलावस्थयेति लाक्षणिकोऽर्थ ) निर्विशेषम्-विशेषरहितम्-तुल्यम्, अधीरम्-चपलम्,विप्रेक्षितम्-अवलोकनम्, नु सदिह्यत एतद्, यद् आयते-विशाले, अक्षिणी नेत्रे यस्यास्तथाभूतया, तया पार्वत्या, मृगाङ्गनाभ्य -मृगीभ्य , गृहीतम् शिक्षितम्, नु-अथवा मृगाङ्गनाभि मृगीभि , तत. पार्वतीसकाशाद्, गृहीतम् ।

ना०—मृगीणा प्रेक्षणे पार्वत्या प्रेक्षणे च चलन्नीलोत्पलावस्थासदृशे चञ्चले तथा सादृश्य प्रतीयते, यथैतदेकत्रान्यत आगतमिति स्फुटो निश्चय , पर कया कस्या गृहीतमिति न निश्चेतु शक्यते । अधिकज्ञो हि शिक्षक , अल्प-

ञ्श्च शिक्षितो मन्यते, इह तूभयत्रापि निर्विशेष सादृश्यमिति शिक्षक शिक्षितो वा न निश्चेतु शक्य । मृगाङ्गनाभिरिति मृगाङ्गनाभ्य इति च बहुवचननिर्देशेन मृगाङ्गनाना सर्वासा सभूय पार्वतीशिक्षकत्व सभाव्यते, पार्वत्यास्त्वेकस्या एव सकलमृगाङ्गनाशिक्षकत्व सभाव्यते इति कोऽप्यतिशय पार्वतीप्रेक्षणस्य व्यञ्जित ।

अल०—सन्देहालङ्कारो मुख्य । परस्परग्रहणात्परस्परसादृश्यमिति कल्पनाद् हेतूत्प्रेक्षा तदङ्गम् । 'नीलोत्पलनिर्विशेषम्' इत्युपमा । तत्र च विप्रेक्षितस्य क्रिया रूपस्योपमानता नीलोत्पले न सभवतीति लक्षणया नीलोत्पलेन तच्चलनाक्रियोपमानभूता लक्ष्यते, इत्युपमानलुप्तोपमा । उपमासंदेहयो संसृष्टि ।

तस्या शलाकाञ्जननिर्मितेव कान्तिर्भ्रुवोरानतरेखयो । र्या†।
ता‡ वीक्ष्य लीलाचतुरामनङ्ग स्वचापसौन्दर्यमदं मुमोच ॥ ४७ ॥

अ०—आनतरेखयोः तस्या. भ्रुवो शलाकाञ्जननिर्मितेव या कान्ति. (आसीत्) लीलाचतुराम् ताम् वीक्ष्य अनङ्ग. स्वचापसौन्दर्यमदम् मुमोच ।

व्याक०—आनता रेखा ययोस्तयोरानतरेखयोः । शलाकाया अञ्जनेन निर्मिता शलाकाञ्जननिर्मिता । निर्मिता-मिमीते , माते , मिनोतेर्वा क्तः, पूर्वयो "द्यतिस्यतिमास्थामित्ति किति" इति इत्वम् । लीलया चतुरा लीलाचतुराम् । स्वस्य-चापस्य सौन्दर्यस्य मद स्वचापसौन्दर्यमदम् । षष्ठीसमासत्रयम् । सौन्दर्यशब्दे सुन्दरशब्दात् ष्यञ् । कान्ति·-कमुधातो क्तिन् । वीक्ष्य-विपूर्वादीक्षतेर्ल्यप् । तस्या इति भ्रूसम्बन्धे षष्ठी, भ्रुवो इति च कान्तिसम्बन्धे । तामिति वीक्षणे कर्म, मदमिति मोचने ।

व्याख्या—आनता-कुटिला, रेखा-संनिवेशो, ययोस्तथाभूतयोः, (पाठान्तरे आयतलेखयो दीर्घरेखयो.) तस्या गिरिजायाः, भ्रवो , शलाकाया -शलाकाप्रवर्तिना, अञ्जनेन-कज्जलेन, निर्मितेव-उत्पादितेव, या, कान्ति.-शोभा, आसीत्, लीलया-विलासेन, चतुराम्§ सुन्दरीम्, ताम्-कान्तिम्, वीक्ष्य-विलोक्य,

* आयतलेखयो '-इति मल्लिनाथसमतः पाठ ।
† 'सा'-इति क्वचित् ।　　　　‡ 'याम्'-इति क्वचित् ।
§ चतुरां दक्षसुन्दरी-इति वैजयन्ती ।

अनङ्ग -काम , स्वचापस्य-स्वधनुष , सौन्दर्यस्य-मनोहारितायाः (तज्जनितम्) मदम्-गर्वम्, मुमोच तत्याज।

भा०—पार्वत्या भ्रुवोस्तथा सनिवेश , यथा तयोरञ्जनशलाकया निर्माण सभाव्यते। ( शलाकानिर्मिते हि यथेच्छमनिवेशकरणादधिक सौन्दर्यं भवतीति तथोत्प्रेक्ष्यते ) । एतयोर्भ्रुवोश्चाग्रे कामधनुरपि तुच्छम् । कामधनुषि हि परप्रेरणाया व्यापारः, भ्रूस्तु स्वय लीलाचतुरेति महदेतयोरन्तरम्।

अल०—उपमाननिरादरात्प्रतीपम्। उपमेयाधिक्यपर्यवसायितया व्यतिरेक इति तु प्रकाशिकाविवरणयोरुक्तम्। शलाकाञ्जननिर्मितत्वोत्प्रेक्षया तत्ससृष्टि ।

**लज्जा तिरश्चा यदि चेतसि स्यादसशय पर्वतराजपुत्र्या ।**

***त केशपाश प्रसमीक्ष्य कुर्युर्बालप्रियत्व शिथिल चमर्य ॥४८॥**

अ०—यदि तिरश्चाम् चेतसि लज्जा स्यात् ( तर्हि ) असशयम् चमर्य पर्वतराजपुत्र्याः त केशपाशम् प्रसमीक्ष्य बालप्रियत्वम् शिथिलम् कुर्यु ।

व्याक०—न सशयो यस्मिन् कर्मणि यथा भवति तथेत्यसशयम्, क्रियाविशेषणम्, अथवा सशयस्याभावो ऽसशयम्, अर्थाभावेऽव्ययीभाव । पर्वताना राज पुत्र्या पर्वतराजपुत्र्या । पुत्र्या -पुत्रशब्दात् शार्ङ्गरवादित्वान् ङीन्। केशाना †पाश केशपाशम् । बाला॰ प्रिया यासा ता बालप्रिया , तासा भावो बालप्रियत्वम्, "त्वतलोर्गुणवचनस्य" इति प्रियाशब्दस्य पुवद्भाव । तिरश्चाम्-तिरस्पूर्वकादञ्चते क्विन्, "अच" इत्यलोप । बालप्रियत्वमिति करणे कर्म, शिथिलमिति तत्र विधेय विशेषणम्।

व्याख्या—यदि, तिरश्चाम्-तिर्यग्योनिजातानाम्-पश्वादीनाम्, चेतसि-मनसि, लज्जा-व्रीडा, स्याद्-भवेत्, तर्हि, असशयम् नि सदेहम् , चमर्य -चमरीत्याख्या मृगीविशेषा , पर्वतराजस्य हिमालयस्य, पुत्र्या -सुतायाः पार्वत्या , तम्-विलक्षणम्, केशपाशम्-केशकलापम्, प्रसमीक्ष्य सम्यग् दृष्ट्वा, बाला -स्वलाङ्गूलकेशा , प्रिया -अभिलषणीया यासा तथाभूतत्वम्,

---

* 'तत्केशपाशम्' इति पाठान्तरम्। 'यदि लज्जा स्यात्, तत्-तर्हि'-इति व्याख्यान च विनश्येत्।

† पाश पक्षश्च हस्तश्च कलापार्था कचात् परे-इत्यमर ।

स्वलाङ्गूलप्रेमाणम्, शिथिलम्-अल्पम्, कुर्यु.। नास्ति लज्जा, तत एवाद्यापि लाङ्गूले प्रेम कुर्वन्ति ता ।

भा०—चमरीवालेभ्योऽधिकं पार्वतीकेशपाशस्य सौन्दर्यमित्ययमर्थः प्रकारान्तरेण कार्यसम्भावनामुखेनोपन्यस्त. । चमर्यो हि वालेष्वत्यन्त स्निह्यन्तीति प्रसिद्धि, तत्र कविराह स्नेहोऽयं सर्वाधिकगुणे वस्तुनि विशेषतयोदेति, ततोऽप्यधिकगुण च वस्तु यदि लभ्येत, तदा स्नेहे शैथिल्यं जायते, तथा स्नेहकर्तुर्मनसि लज्जा च जायते । चमरीणा चायमेवाभिमानो यदस्माक वाला सर्वाधिकसौन्दर्यशालिन, तत एव तासा तत्र विशेषेण स्नेह । पर पार्वतीकेशपाश ततोऽप्यधिकसुन्दर दृष्ट्वा चमरीभि. स स्नेह कुतो न शिथिलीकृत इति प्रश्ने इदमेव प्रतिभाति, यत् तिर्यक्त्वात् तासा मनसि लज्जा नास्ति, यदि लज्जा स्यात्, तर्हि केशपाशविजितसौन्दर्येषु वालेषु न स्नेहो यथापूर्वं तिष्ठेदिति ।

अल०—सौन्दर्ये प्रकृते तत्कार्यसम्भावनाभिधानादप्रस्तुतप्रशंसामप्पय्य-दीक्षित.* आह, सैव मुख्या। निर्लज्जत्वहेतूपन्यासात्काव्यलिङ्गमिति मल्लिनाथ । यथर्थोक्त्या 'पुष्प प्रवालोपहितम्' इति पद्यवदतिशयोक्ति, व्यङ्ग्यो व्यतिरेकश्चेत्यरुणाचलनाथ ।

**सर्वोपमाद्रव्यसमुच्चयेन यथाप्रदेश विनिवेशितेन ।**
**सा निर्मिता विश्वसृजा प्रयत्नादेकस्थसौन्दर्यदिदृक्षयेव ॥ ४९ ॥**

अ०—विश्वसृजा एकस्थसौन्दर्यदिदृक्षयेव सा यथाप्रदेशम् विनिवेशितेन सर्वोपमाद्रव्यसमुच्चयेन प्रयत्नाद् निर्मिता ।

व्याक०—विश्व सृजतीति विश्वसृट्, सृजते कर्तरि क्विप्, तेन विश्व-सृजा । एकस्थस्य सौन्दर्यस्य दिदृक्षया एकस्थसौन्दर्यदिदृक्षया, एकस्मिन् तिष्ठतीत्येकस्थम्, सुपीति योगविभागात् क । सौन्दर्यशब्दे भावे ष्यञ् । दिदृक्षया-पश्यते -सन्, तदन्ताद् "अ प्रत्ययात्" इत्यकार प्रत्यय । हेतावेषा तृतीया । प्रदेशमनतिक्रम्य यथाप्रदेशम्, यथार्थेऽव्ययीभाव । उप-मार्थानि द्रव्याणि उपमाद्रव्याणि, शाकपार्थिवादित्वान्मध्यमपदलोप । षष्ठी-

* कुवलयानन्देऽस्योदाहरणात् ।

स्वलाङ्गूलप्रेमाणम्, शिथिलम्-अल्पम्, कुर्युः । नास्ति लज्जा, तत एवाद्यापि लाङ्गूले प्रेम कुर्वन्ति ताः ।

भा०—चमरीवालेभ्योऽधिकं पार्वतीकेशपाशस्य सौन्दर्यमित्ययमर्थः प्रकारान्तरेण कार्यसम्भावनामुखेनोपन्यस्तः । चमर्यो हि वालेष्वत्यन्त स्निह्यन्तीति प्रसिद्धिः, तत्र कविराह स्नेहोऽयं सर्वाधिकगुणे वस्तुनि विशेषतयोदेति, ततोऽप्यधिकगुणं च वस्तु यदि लभ्येत, तदा स्नेहे शैथिल्यं जायते, तथा स्नेहकर्तुर्मनसि लज्जा च जायते । चमरीणां चायमेवाभिमानो यदस्माकं वालाः सर्वाधिकसौन्दर्यशालिनः, तत एव तासां तत्र विशेषेण स्नेहः । परं पार्वतीकेशपाशं ततोऽप्यधिकसुन्दरं दृष्ट्वा चमरीभिः स स्नेहः कुतो न शिथिलीकृत इति प्रश्ने इदमेव प्रतिभाति, यत् तिर्यक्त्वात् तासां मनसि लज्जा नास्ति, यदि लज्जा स्यात्, तर्हि केशपाशविजितसौन्दर्येषु वालेषु न स्नेहो यथापूर्वं तिष्ठेदिति ।

अल०—सौन्दर्ये प्रकृते तत्कार्यसम्भावनाभिधानादप्रस्तुतप्रशंसामप्पय्य-दीक्षितः* आह, सैव मुख्या । निर्लज्जत्वहेतूपन्यासात्काव्यलिङ्गमिति मल्लिनाथः । यद्यर्थोक्त्या 'पुष्पं प्रवालोपहितम्' इति पद्यवदतिशयोक्तिः, व्यङ्ग्यो व्यतिरेकश्चेत्यरुणाचलनाथः ।

**सर्वोपमाद्रव्यसमुच्चयेन यथाप्रदेशं विनिवेशितेन ।**
**सा निर्मिता विश्वसृजा प्रयत्नादेकस्थसौन्दर्यदिदृक्षयेव ॥ ४९ ॥**

अ०—विश्वसृजा एकस्थसौन्दर्यदिदृक्षयेव सा यथाप्रदेशम् विनिवेशितेन सर्वोपमाद्रव्यसमुच्चयेन प्रयत्नाद् निर्मिता ।

व्या०—विश्वं सृजतीति विश्वसृड्, सृजतेः कर्तरि क्विप्, तेन विश्व-सृजा । एकस्थस्य सौन्दर्यस्य दिदृक्षया एकस्थसौन्दर्यदिदृक्षया, एकस्मिन् तिष्ठतीत्येकस्थम्, सुपीति योगविभागात् कः । सौन्दर्यशब्दे भावे ष्यञ् । दिदृक्षया-पश्यतेः सन्, तदन्ताद् "अ प्रत्ययात्" इत्यकारः प्रत्ययः । हेतावेषा तृतीया । प्रदेशमनतिक्रम्य यथाप्रदेशम्, यथार्थेऽव्ययीभावः । उप-मानानि द्रव्याणि उपमाद्रव्याणि, शाकपार्थिवादित्वान्मध्यमपदलोपः । षष्ठी-

* कुवलयानन्देऽस्योदाहरणात् ।

अनङ्ग -काम , स्वचापस्य स्वधनुष , सौन्दर्यस्य-मनोहारिताया (तज्जनितम्) मदम्-गर्वम्, मुमोच तत्याज।

भा०—पार्वत्या भ्रुवोस्तथा सन्निवेश , यथा तयोरञ्जनशलाकया निर्माण संभाव्यते। ( शलाकानिर्मिते हि यथेच्छसन्निवेशकरणादधिक सौन्दर्यं भवतीति तयोत्प्रेक्ष्यते ) । एतयोर्भ्रुवोश्चाग्रे कामधनुरपि तुच्छम् । कामधनुषि हि परप्रेरणया व्यापारः, भ्रूस्तु स्वयं लीलाचतुरेति महदेनयोरन्तरम्।

अल०—उपमाननिरादरात्प्रतीपम्। उपमेयाधिक्यपर्यवसायितया व्यतिरेक इति तु प्रकाशिकाविवरणयोरुक्तम्। शलाकाञ्जननिर्मितत्वोत्प्रेक्षया तत्संसृष्टि ।

लज्जा तिरश्चां यदि चेतसि स्यादसंशयं पर्वतराजपुत्र्या ।
*तं केशपाशं प्रसमीक्ष्य कुर्युर्वालप्रियत्वं शिथिलं चमर्यः ॥४८॥

अ०—यदि तिरश्चाम् चेतसि लज्जा स्यात् ( तर्हि ) असंशयम् चमर्य पर्वतराजपुत्र्या त केशपाशम् प्रसमीक्ष्य वालप्रियत्वम् शिथिलम् कुर्यु ।

व्याक०—न संशयो यस्मिन् कर्मणि यथा भवति तथेत्यसंशयम्, क्रियाविशेषणम्, अथवा संशयस्याभावो ऽसंशयम्, अर्थाभावेऽव्ययीभाव । पर्वतानां राज पुत्र्या पर्वतराजपुत्र्या । पुत्र्या -पुत्रशब्दात् शार्ङ्गरवादित्वात् ङीन । केशानां †पाश केशपाशम् । वालाः प्रिया यासां ता वालप्रिया , तासां भावो वालप्रियत्वम् , "त्वतलोर्गुणवचनस्य" इति प्रियाशब्दस्य पुंवद्भाव । तिरश्चाम्-तिरस्पूर्वकादञ्चते क्विन्, "अच" इत्यलोप । वालप्रियत्वमिति करणे कर्म, शिथिलमिति तत्र विधेय विशेषणम्।

व्याख्या—यदि, तिरश्चाम्-तिर्यग्योनिजातानाम्-पश्वादीनाम्, चेतसि-मनसि, लज्जा-व्रीडा, स्याद्-भवेत्, तर्हि, असंशयम् नि सन्देहम् , चमर्य -चमरीत्याख्या मृगीविशेषा , पर्वतराजस्य-हिमालयस्य, पुत्र्याः-सुतायाः पार्वत्या , तम्-विलक्षणम्, केशपाशम्-केशकलापम् , प्रसमीक्ष्य सम्यग् दृष्ट्वा, वाला -स्वलाङ्गूलकेशा , प्रियाः-अभिलषणीया यासां तथाभूतत्वम्,

---

* 'तत्केशपाशम्' इति पाठान्तरम्। 'यदि लज्जा स्यात्, तत्-तर्हि'-इति व्याख्यान च विवरणे।

† पाश पक्षश्च हस्तश्च कलापार्था कचात् परे-इत्यमर ।

अनङ्ग -काम , स्वचापस्य स्वधनुष , सौन्दर्यस्य मनोहारिताया (तज्जनितम्) मदम्-गर्वम्, मुमोच तत्याज ।

भा०—पार्वत्या भ्रुवोस्तथा सन्निवेश , यथा तयोरञ्जनशलाकया निर्माण संभाव्यते । ( शलाकानिर्मिते हि यथेच्छसन्निवेशकरणादधिक सौन्दर्य भवतीति तथोत्प्रेक्ष्यते ) । एतयोर्भ्रुवोश्चाग्रे कामधनुरपि तुच्छम् । कामधनुषि हि परप्रेरणया व्यापारः, भ्रूस्तु स्वय लीलाचतुरेति महदेनयोरन्तरम् ।

अल०—उपमाननिरादरात्प्रतीपम् । उपमेयाधिक्यपर्यवसायितया व्यतिरेक इति तु प्रकाशिकाविवरणयोरुक्तम् । शलाकाञ्जननिर्मितत्वोत्प्रेक्षया तत्ससृष्टि ।

**लज्जा तिरश्चा यदि चेतसि स्यादसशय पर्वतराजपुत्र्या ।**

***त केशपाश प्रसमीक्ष्य कुर्युर्वालप्रियत्व शिथिल चमर्यः ॥४८॥**

अ०—यदि तिरश्चाम् चेतसि लज्जा स्यात् ( तर्हि ) असशयम् चमर्य पर्वतराजपुत्र्या. त केशपाशम् प्रसमीक्ष्य वालप्रियत्वम् शिथिलम् कुर्यु. ।

व्याक०—न संशयो यस्मिन् कर्मणि यथा भवति तथेत्यसशयम्, क्रियाविशेषणम्, अथवा सशयस्याभावो ऽसशयम्, अर्थाभावेऽव्ययीभाव । पर्वताना राज्ञ पुत्र्या पर्वतराजपुत्र्या । पुत्र्या -पुत्रशब्दात् शार्ङ्गरवादित्वान् ङीन् । केशाना †पाश केशपाशम् । वाला. प्रिया यासा ता वालप्रिया , तासा भावो वालप्रियत्वम् , " त्वतलोर्गुणवचनस्य " इति प्रियाशब्दस्य पुवद्भाव । तिरश्चाम्-तिरस्पूर्वकादश्चते क्विन्, " अच " इत्यलोप । वालप्रियत्वमिति करणे कर्म, शिथिलमिति तत्र विधेय विशेषणम् ।

व्याख्या—यदि, तिरश्चाम्-तिर्यग्योनिजातानाम्-पश्वादीनाम्, चेतसि-मनसि, लज्जा-व्रीडा, स्याद्-भवेत्, तर्हि, असशयम् नि सदेहम् , चमर्य - चमरीत्याख्या मृगीविशेषा , पर्वतराजस्य-हिमालयस्य, पुत्र्या.-सुताया. पार्वत्या , तम्-विलक्षणम् , केशपाशम्-केशकलापम् , प्रसमीक्ष्य सम्यग् दृष्ट्वा, वाला -स्वलाङ्गूलकेशा , प्रियाः-अभिलषणीया यासा तथाभूतत्वम्,

---

* 'तवकेशपाशम्' इति पाठान्तरम् । 'यदि लज्जा स्यात्, तत्-तर्हि'-इति तद्व्याख्यान च विवरणे ।

† पाश पक्षश्च हस्तश्च कलापार्था कचात् परे–इत्यमर ।

स्वलाङ्गूलप्रेमाणम्, शिथिलम्-अल्पम्, कुर्यु.। नास्ति लज्जा, तत एवाद्यापि लाङ्गूले प्रेम कुर्वन्ति ता ।

भा०—चमरीवालेभ्योऽधिक पार्वतीकेशपाशस्य सौन्दर्यमित्ययमर्थः प्रकारान्तरेण कार्यसम्भावनामुखेनोपन्यस्त.। चमर्यो हि वालेष्वत्यन्त स्निह्यन्तीति प्रसिद्धि, तत्र कविराह स्नेहोऽय सर्वाधिकगुणे वस्तुनि विशेषतयोदेति, ततोऽप्यधिकगुण च वस्तु यदि लभ्येत, तदा स्नेहे शैथिल्य जायते, तथा स्नेहकर्तुर्मनसि लज्जा च जायते । चमरीणा चायमेवाभिमानो यदस्माक वाला सर्वाधिकसौन्दर्यशालिन, तत एव तासा तत्र विशेषेण स्नेह ।पर पार्वतीकेशपाश ततोऽप्यधिकसुन्दर दृष्ट्वा चमरीभि स स्नेह कुतो न शिथिलीकृत इति प्रश्ने इदमेव प्रतिभाति, यत् तिर्यक्त्वात् तासा मनसि लज्जा नास्ति, यदि लज्जा स्यात्, तर्हि केशपाशविजितसौन्दर्येषु वालेषु न स्नेहो यथापूर्व तिष्ठेदिति ।

अल०—सौन्दर्ये प्रकृते तत्कार्यसम्भावनाभिधानादप्रस्तुतप्रशंसामप्पय्य-दीक्षित* आह, सैव मुख्या। निर्लज्जत्वहेतूपन्यासात्काव्यलिङ्गमिति मल्लिनाथ । यद्यथोक्त्या ' पुष्प प्रवालोपहितम् ' इति पद्यवदतिशयोक्ति, व्यङ्ग्यो व्यतिरेकश्चेत्यरुणाचलनाथ ।

**सर्वोपमाद्रव्यसमुच्चयेन यथाप्रदेश विनिवेशितेन ।**
**सा निर्मिता विश्वसृजा प्रयत्नादेकस्थसौन्दर्यदिदृक्षयेव ॥ ४९ ॥**

अ०—विश्वसृजा एकस्थसौन्दर्यदिदृक्षयेव सा यथाप्रदेशम् विनिवेशितेन सर्वोपमाद्रव्यसमुच्चयेन प्रयत्नाद् निर्मिता ।

व्याक०—विश्व सृजतीति विश्वसृट्, सृजते कर्तरि क्विप्, तेन विश्वसृजा । एकस्थस्य सौन्दर्यस्य दिदृक्षया एकस्थसौन्दर्यदिदृक्षया, एकस्मिन् तिष्ठतीत्येकस्थम्, सुपीति योगविभागात् क । सौन्दर्यशब्दे भावे ष्यञ् । दिदृक्षया-पश्यते -सन्, तदन्ताद् "अ प्रत्ययात्" इत्यकार प्रत्यय । हेतावेषा तृतीया। प्रदेशमनतिक्रम्य यथाप्रदेशम्, यथार्थेऽव्ययीभाव । उपमार्थानि द्रव्याणि उपमाद्रव्याणि, शाकपार्थिवादित्वान्मध्यमपदलोप । षष्ठी-

* कुवलयानन्देऽस्योदाहरणात् ।

तत्पुरुषो वा, उपमा-"आतश्चोपसर्गे" इति माधातोरङ् । सर्वेषाम् उपमाद्रव्याणाम् समुच्चयेन सर्वोपमाद्रव्यसमुच्चयेन । हेतौ करणे वा तृतीया । प्रयत्नादिति हेतौ पञ्चमी, प्रयत्नमवलम्ब्येति विवक्षायां ल्यब्लोपे वा । विनिवेशितेन विशतेर्णिजन्तात् क्त । निर्मिता-मिमीतेः, मातेर्वा क्त ।

व्याख्या—विश्वसृजा-विश्वस्य निर्मात्रा, ब्रह्मणा, एकस्थस्य-एकस्मिन्नधिकरणे स्थितस्य, ( नानावस्तुगतस्य ) सौन्दर्यस्य, दिदृक्षयेव द्रष्टुमिच्छयेव, सा-पार्वती, यथाप्रदेशम्-प्रदेशा मुखाद्यवयवा, तदनतिक्रमणेन-तत्र तत्रौचित्यानुरोधेन, विनिवेशितेन-स्थापितेन, सर्वेषाम्, उपमाद्रव्याणाम् चन्द्रारविन्दादीनामुपमानवस्तूनाम्, समुच्चयेन-समाहारेण, प्रयत्नात्-प्रयासात्, निर्मिता-उत्पादिता । श्रीमन्नारायणस्तु 'निर्मितेव' इत्येवमिवशब्दं भिन्नक्रमेण संयोज्य 'निर्मितेव प्रतीयते, न तु वस्तुतो निर्मितेति' व्याचख्यौ ।

भा०—मुखग्रीवाकुचपादादीनां चन्द्रकम्बुचक्रवाकपद्मादीन्युपमानानि कविसम्प्रदाये प्रसिद्धानि, अस्ति तेषूपमानवस्तुषु सौन्दर्यम्, किन्तु भिन्न भिन्नमशमात्रं तत्र तत्र स्थितं तन्न द्रष्टुः पूर्णमानन्दमुत्पादयितुमलम् । तदस्य सर्वस्य सौन्दर्यस्यैकस्मिन्नवयविनि स्थितस्य दर्शनेच्छा विधातुरदभूत्, तत एव यथास्थानं तान्युपमानवस्तून्येवावधानेनौचित्येन संनिवेश्य पार्वतीशरीरं तेनोत्पादितमिति संभाव्यते ।

अल०—उपमानवस्तुभिरवयवानां निर्माणासम्बन्धेऽपि तथाप्रतिपादनात्सम्बन्धातिशयोक्तिः, सा च दिदृक्षयेवेति हेतूत्प्रेक्षायामङ्गम् । सर्वेषां प्रसिद्धानां सुन्दरपदार्थानामेकत्र योगेन सर्वलोकातिशायि भगवत्या वपुरिति व्यज्यते । तेनोत्प्रेक्षालङ्कारेण वस्तुध्वनिः ।

**तां नारदः कामचरः कदाचित् कन्यां किल प्रेक्ष्य पितुः समीपे ।**
**समादिदेशैकवधूं भवित्रीं प्रेम्णा शरीरार्धहरां हरस्य ॥ ५० ॥**

अ०—कामचरः नारदः कदाचित् पितुः समीपे ताम् कन्याम् वीक्ष्य प्रेम्णा हरस्य शरीरार्धहराम् भवित्रीम् एकवधूम् समादिदेश ।

व्याक०—कामेन चरतीति कामचरः, पचाद्यजन्तस्य चरशब्दस्य कामशब्देन तृतीयातत्पुरुषः, कामशब्दे कामयतेर्घञ् । अर्धं हरतीति अर्धहरा,

हरतेनुरुद्यमनेऽच्" शरीरस्यार्धहरा शरीरार्धहरा, ताम् ।शरीरस्यार्धं हरतीति विग्रहे तु 'अर्धं नपुसकम्" इति समासे 'अर्द्धशरीरहराम्' इति प्रसज्येत । एका वधूर् एकवधूर् । "पूर्वकालैक　　" इत्यादिना कर्मधारय । भवित्रीम् भवते. "अर्हे कृत्यतृचश्च" इत्यर्हार्थे तृच् । "ऋन्नेभ्यो ङीप्" । समादिदेश दिशतेर्लिट् । वधूमिति विधेयविशेषणम् । तद्विशिष्टा कन्या दिशतौ कर्मभूता, प्रेक्षणे तु केवला कन्यैव ।

व्याख्या—कामचर यथेच्छ दिग्विदिक्षु भ्रमन्, नारद, कदाचित्-कस्मिँश्चित् समये, पितु जनकस्य, हिमालयस्य समीपे अन्तिके, (वर्तमानाम्) ताम्-पूर्ववर्णिताम्, कन्याम्-गिरिजाम्, वीक्ष्य-विलोक्य, प्रेम्णा-अनुरागेण, हरस्य-महादेवस्य, शरीरस्य, अर्धम्-वामार्धं हरतीति तथाभूताम्, भवित्रीम्-भवितुमर्हाम् भाविनीम्, एकवधून् सपत्नीरहिता भार्याम्, समादिदेश-आख्यातवान् ।

भा०—यथेच्छ विचरता हिमालयगृह आगतेन नारदेन कदाचित्पितुः समीपस्था पार्वती दृष्ट्वा, तल्लक्षणान्यालोक्य स 'महादेवस्येयमनन्या भार्या भविष्यति, प्रेम्णा तच्छरीरार्धे चास्या स्थितिर्भविष्यति' इति भावि वृत्त न्यरूपयत् ।

अल०—कामचर इति नारदविशेषण यदृच्छयागमनस्याकस्मिकदर्शनस्य च योग्यता व्यनक्तीति परिकर । सर्वजगतो हरस्यापीय शरीरार्धहरेत्यहो अस्या माहात्म्यमिति हरपदव्यङ्ग्यम् ।

गुरु प्रगल्भेऽपि वयस्यतोऽस्यास्तस्थौ निवृत्तान्यवराभिलाषः ।
ऋते कृशानोर्न हि मन्त्रपूतमर्हन्ति तेजास्यपराणि हव्यम् ॥२१॥

अ०—अत (एव) अस्या गुरु, (अस्या) प्रगल्भे वयसि अपि निवृत्तान्यवराभिलाष तस्थौ, हि कृशानो ऋते अपराणि तेजासि मन्त्रपूतम् हव्यम् न अर्हन्ति ।

व्याक०—निवृत्त. अन्यस्मिन् वरे अभिलाषो यस्य स निवृत्तान्यवराभिलाप । व्रियते इति वर. । "ग्रहवृदृनिश्चिगमश्च" इत्यप्, अत इद शब्दात् 'पञ्चम्यास्तसिल्" । हव्यम्-जुहोते कर्मणि "अचो यत्" । "धातोस्तन्नि-

मित्तस्यैव" इत्यवादेश । कृशानो. ऋतेशब्दयोगे 'अन्याराद्तिरर्ते " इत्यनेन पञ्चमी । तेजासि-इति प्रथमाबहुवचनम्, अर्हणक्रियाया कर्तृपदम् । हव्यमिति कर्म ।

व्याख्या—अत -अस्मादेव कारणाद्, नारदोक्तविश्वासाद्, अस्या - पार्वत्या, *गुरु पिता हिमालय, ( अस्या -पार्वत्या ) प्रगल्भे वयस्यपि यौवनावस्थायामपि, निवृत्त. दूरीभूत, अन्यास्मिन-हरातिरिक्ते वरे-जामातरि, अभिलाप -इच्छा यस्य तथाभूत, तस्थौ-स्थितवान् । वरान्तर नान्विष्टवानित्यर्थ । हि-यत कृशानो ऋते-अग्नि विहाय, अपराणि-अग्न्यतिरिक्तानि तेजासि, मन्त्रै, पूतम्-पवित्रम्, हव्यम्-आज्यादिकम्, न अर्हन्ति-तत् प्राप्तु योग्यानि न सन्तीत्यर्थ ।

भा०—पूर्वं पार्वत्या विवाहानुरूप वयो दृष्ट्वा हिमालयस्य वरान्वेषणे प्रवृत्तिरभूत्, पर नारदोक्तौ विश्वस्य तेन वरान्तरान्वेषणाभिलापस्त्यक्त । युक्तश्चैवविधाया. कन्याया एवविधेनैव वरेण सम्बन्ध । यद्यपि सन्त्यन्येऽपि देवा., पर न ते एतामुद्वोढु योग्या । यथा तेजासि लोके बहूनि, किन्तु हविर्ग्रहणयोग्यताग्नेरेव केवलमिति ।

अल०—शिव एव पार्वतीमर्हतीति तुल्ये प्रस्तुते कृशानुरेव हव्यमर्हतीत्यप्रस्तुतस्य वर्णनादप्रस्तुतप्रशसा । कुवलयानन्दोक्त वर्ण्यवृत्तान्तप्रतिबिम्बवर्णनरूप ललित वा ।

अयाचितार न हि देवदेवमद्रि सुता ग्राहयितु शशाक ।
अभ्यर्थनाभङ्गभयेन साधुर्माध्यस्थ्यमिष्टेप्यवलम्बतेऽर्थे ॥५२॥

अ०—अद्रि. अयाचितारम् देवदेवम् सुताम् ग्राहयितुम् न शशाक, हि साधु अभ्यर्थनाभङ्गभयेन इष्टे अपि अर्थे माध्यस्थ्यम् अवलम्बते ।

व्याक०—अभ्यर्थनाया भङ्गाद् भयेन अभ्यर्थनाभङ्गभयेन । हेतौ तृतीया । अभ्यर्थना-अर्थयतेर्युच् । न याचितारम् अयाचितारम्, याचतेस्तृच् । ग्राहयितुम्-गृह्णातेर्णिजन्तात् "शकधृष् " इत्यादिना शक्नोतावुपपदे तुमुन्, देवदेवम् इति तुमुन्नन्तक्रियाया प्रयोज्यकर्म । सुतामिति च मुख्य कर्म ।

* गुरुर्गीष्पतिपित्राद्यो –इत्यमर ।

यद्यपि गतिबुद्ध्यादिषु ग्रहेरुपादानं नास्ति-इति द्विकर्मकत्वं न घटते । तथापि प्रतिपूर्वको गृह्णाति प्राप्तिबोधक इति केवलस्याप्यत्र तथात्वस्वीकाराद्गत्यर्थतयैव तन्निर्वाह्यम् । इष्टे-इच्छते क्तः । मध्ये तिष्ठति मध्यस्थः, तस्य भावो माध्यस्थ्यम्, भावे-ष्यञ् । अर्थे इति वैषयिकेऽधिकरणे सप्तमी ।

व्याख्या—अद्रि -पर्वत -हिमालय , अयाचितारम्-'मह्यं पार्वतीं देहि' इत्येवं प्रेरणे विमुखम्, देवानामपि देवम्-महादेवम्, सुताम्-पुत्रीम्, पार्वतीम् ग्राहयितुम्-पत्नीत्वेन स्वीकरणाय प्रेरयितुम्, न शशाक-नोत्सेहे, हि निश्चयेन, साधु-मानी, अभ्यर्थनाया -याच्ञाया , भङ्गाद्-अस्वीकारलक्षणात् तिरस्काराद् भयेन, इष्टे-अभिलषितेऽपि, अर्थे-वस्तुनि, माध्यस्थ्यम्-औदासीन्यम्, अवलम्बते आश्रयति ।

भा०—यद्यपि भगवते शिवाय कन्याप्रदानं हिमालयस्यात्यन्तमिष्टम्, तथापि न हि शिवः स्वयं याचते, न चायाचिता कन्या देयेति शिष्टसंप्रदायः । स्वयं च समर्प्यमाणां शिवः स्वीकुर्य्यान्नवेति महती प्रार्थनाभङ्गशङ्का, तेन स उदासीन एव तस्थौ । एवमेव प्रार्थनाभङ्गभीताः शिष्टाः कुर्वन्तीति ।

अल०—सामान्येन विशेषस्य समर्थनादर्थान्तरन्यासः ।

**यदैव पूर्वे जनने शरीरं सा दक्षरोषात्* सुदती ससर्ज ।**
**तदा प्रभृत्येव विमुक्तसङ्गः पतिः पशूनामपरिग्रहोऽभूत् ॥ ५३ ॥**

अ०—सा सुदती पूर्वे जनने यदा एव दक्षरोषात् शरीरम् ससर्ज, तदा प्रभृति एव पशूनाम् पतिः विमुक्तसङ्गः अपरिग्रहः अभूत् ।

व्याक०—शोभना दन्ता यस्याः सा सुदती, "वयसि दन्तस्य दतृ" ततो ङीप् । विमुक्तः सङ्गो येन स विमुक्तसङ्गः । न परिग्रहो यस्य सोऽपरिग्रहः । पूर्वे "पूर्वादिभ्यो नवभ्यो वा" इति विकल्पेन स्मिनोऽभावः । यदा, तदा उभयत्र यत्तच्छब्दाभ्याम् "सर्वैकान्यकिंयत्तदः काले दा" कालस्याधिकरणत्वविवक्षा । ससर्ज केवलं सृजधातुर्विसर्गार्थे व्यवहृतः ।

---

* सा दक्षरोषात्तु सती ससर्ज-इति दक्षिणावर्तसंमतं पाठान्तरम् । तु शब्दः प्रकरणभेदबोधकः, पार्वतीमुपवर्ण्य शिववर्णनमितः प्रारभ्यते । सती इति तु शिवस्य पत्न्या नाम ।

व्याख्या—सा, सुदती शोभनदन्तविशिष्टा, यौवने एव वर्तमानेति यावत्, पूर्वे, जनने जन्मनि, दक्षसुतावस्थायाम्, यदैव यस्मिन्नेव समये, दक्षरोपात्-दक्षे स्वपितरि, क्रोधात्, शरीरम्, ससर्ज-तत्याज, तदा प्रभृत्येव तमेव काल मारभ्य, पशूनाम्-जीवानाम्† प्रमथानां‡ वा, पति -स्वामी, महादेव इति यावत्, विमुक्तः-त्यक्त., सङ्ग.-विषयासङ्ग , येन तथाभूत , निर्विण्ण , अपरिग्रह -परिग्रह -पत्नी§, तद्रहितः, ममत्वरहितो वा, अभूत् ।

भा०—ननु शिव एव स्वपरायणां पार्वतीं कुतो न याचितवान्, तत्र हेतुरुच्यते, दक्षसुतया सत्या यदा देहस्त्यक्त , तदा प्रभृत्येव शिवस्य निर्वेद उदभूत्, तेन विवाहकथा दूरापास्ता । सुदतीति विशेषणं यौवनावस्थाबोधकं भोगेष्वतृप्ततामावेदयन्निर्वेदयोग्यता व्यनक्ति, अतृप्तस्य प्रियवस्तुनाशो निर्वेदाय भवतीति । पशूनां पतिरित्यनेन सर्वजीवबन्धविमोक्षकारणस्य भगवत सङ्गो सङ्गत्यागश्च केवलं लीलामात्रमिति बोधनाय । स हि स्वकार्येण-'सति शोकहेतौ न महात्मभि खिन्नैर्भाव्यम्, अपि तु वैराग्य सेव्यम्' इत्युपदिदेश इत्यादि प्रकाशिकाविवरणयोः ।

अल०—निर्वेदे हेतूपन्यासात्काव्यलिङ्गम् । निर्वेदो व्यज्यते, स च प्रकृत-कथाङ्गम् ।

**स कृत्तिवासास्तपसे यतात्मा ¶गङ्गाप्रवाहोक्षितदेवदारु ।**
**प्रस्थं हिमाद्रेर्मृगनाभिगन्धि किंचित् क्वणत्किन्नरमध्युवास ॥ ५४॥**

अ०—कृत्तिवासाः यतात्मा स. तपसे गङ्गाप्रवाहोक्षितदेवदारु मृगनाभिगन्धि क्वणत्किन्नरम् किंचित् हिमाद्रे. प्रस्थम् अध्युवास ।

व्याक०—कृत्ति वासो यस्य स कृत्तिवासा. " अत्वसन्तस्य चाधातो " इति दीर्घ. । कृत्तिरिति ' कृती छेदने ' धातो कर्मणि क्तिन् । यत आत्मा यस्य स यतात्मा । यत इति यच्छतेः कर्तरि क्त । गङ्गाया प्रवाहेण उक्षिता

---

† तिर्यग्जातौ पशु॰ प्रोक्त , सर्वप्राणिषु पुस्ययम् ।

‡ पशुर्मृगादौ छगले प्रमथे च पुमानयम्—इत्युभयत्र रामाश्रमी ।

§ पत्नीपरिजनादानमूलशापाः परिग्रहा —इत्यमरः ।

¶ गङ्गाप्रपातोक्षितदेवदारु—इति पाठान्तरम् ।

देवदारवो यत्र तद् गङ्गाप्रवाहोक्षितदेवदारु । प्रवाह इति घञन्तम्, उक्षित इति क्तान्तम् । मृगनाभे गन्धो यस्मिन्नस्ति तन्मृगनाभिगन्धि, षष्ठीतत्पुरुषाद् " अत इनिठनौ "। क्वणन्त. किन्नरा यत्र तत् क्वणत्किन्नरम् । तपसे "क्रियार्थोपपदस्य च कर्मणि स्थानिन " इत्यनेन चतुर्थी, तपश्चरितुमित्यर्थ । प्रस्थमिति अधिवसनाधारस्य " उपान्वध्याङ्वस " इत्यनेन कर्मत्वे द्वितीया ।

व्याख्या—* कृत्ति -चर्म ( गजचर्म ), वासः-वस्त्र यस्य तथाभूत , यत - स्ववशीकृत , आत्मा-अन्त करण येन तथाभूत , स -शिव , गङ्गाया , प्रवाहेण, उक्षिता -सिक्ता , देवदारव -देवदारुवृक्षा , यत्र तथाभूतम्, † मृगनाभे. कस्तूर्या , गन्ध -सौरभम्, यत्र वर्तते, तथोक्तम्, क्वणन्त -गायन्तः, किन्नराः-देवयोनिविशेषा यत्र तादृशम्, किञ्चिद्-अन्यतमम्, हिमाद्रे -हिमालयस्य, ‡ प्रस्थम्-सानुम्-समभूप्रदेशम्, अध्युवास-अध्यासितवान् । तत्र निवासमकरोदिति ।

भा०—तेन खलु त्यक्तपरिग्रहेण वशिना भगवता शङ्करेण गजचर्म परिदधता हिमालयस्यैकतमशिखर एव तपश्चर्यार्थं निवास क्लृप्त । ( विशेषणद्वयेन तपोयोग्यता बाह्याभ्यन्तरयो सूचिता ) यस्य शिखरस्य गङ्गाया -प्रपात , देवदारुवृक्षबाहुल्यम् ( एतेन प्रदेशस्य पवित्रजलच्छायादिसपत्त्या तपोयोग्यता सूचिता ) कस्तूरीमृगसञ्चारेण सौरभप्राचुर्यम्, ( एतेन पूतिगन्धराहित्य द्योतितम् ) किन्नरगानध्वनिश्चेति ( एतेन खरशब्दराहित्यम्, देवयोनिनिवासेन पवित्रता च द्योतिता ) महत्त्व प्रकटयन्ति स्म । कस्तूरीसौरभेन, किन्नरगानेन चेन्द्रियविषयसपदुक्ता, तया चोक्तया वशिनो विषयसम्पदो न बिभ्यतीति सूचितमित्यरुणाचलनाथ ।

अल—भावार्थोक्तरीत्या विशेषणाना साभिप्रायत्वात्परिकर ।

**गणा नमेरुप्रसवावतसा भूर्जत्वच स्पर्शवतीर्दधाना §।**

---

* अजिन चर्म कृत्तिः स्त्री-इत्यमर ।

† मृगनाभिर्मृगमदः कस्तूरी चाथ कोलकम्-इत्यमर ।

‡ प्रस्थोऽस्त्री सानुमानयो —इत्यमर ।

§ ' वसाना.—इति पाठान्तरम् ।

**मन.शिलाविच्छुरिता निषेदु * शैलेयनद्धेषु शिलातलेषु ॥ ५५ ॥**

अ०—नमेरुप्रसवावतसा स्पर्शवती: भूर्जत्वच. दधानाः मन शिलाविच्छुरिता. गणा. शैलेयनद्धेषु शिलातलेषु निषेदु ।

व्याक०—नमेरूणाम् प्रसवा एव अवतसा येषा ते नमेरुप्रसवावतसा, मन शिलाभि विच्छुरिता मन शिलाविच्छुरिता, विच्छुरिता छुर्धातो क्त । शिलाया भव शैलेयम्, शिलाशब्दात् "स्त्रीभ्यो ढक्", तेन नद्धेषु शैलेयनद्धेषु, नद्धशब्दे 'णह बन्धने' धातो क्त, "नहो धः" । प्रशस्त स्पर्शो विद्यते यासु ता स्पर्शवती, प्राशस्त्ये मतुप् । निषेदु.-सीदतेर्लिटि प्रथमपुरुषबहुवचनम्, "सदिरप्रते." इति षत्वम् ।

व्याख्या—नमेरूणाम्-सुरपुन्नागवृक्षाणाम्, प्रसवा -पुष्पाण्येव, अवतसा -शेखरा.-शिरोभूषणानि, येषा तथाभूता, स्पर्शवती. मृदुस्पर्शयुक्ताः, भूर्जत्वच -भूर्जवल्कलानि, दधानाः धारयन्त, वस्त्रत्वेन परिदधत, मन शिलाभि धातुविशेषै, विच्छुरिताः-अनुलिप्ता, गणा ( शिवसेवका ) प्रमथगणा, शैलेयेन- शिलाजतुना, नद्धेषु व्याप्तेषु, शिलानाम्, तलेषु, निषेदु -उपविविशु ।

भा०—भगवति शिवे तत्र स्थिते तद्गणा. प्रमथा अपि तत्रैव स्थिता । तेषा च तत्र सुरपुन्नागपुष्पैरलङ्कारसौख्यम्, कोमलैर्भूर्जवल्कलैर्वसनसौख्यम्, मन शिलाधातुना चाङ्गरागसौख्य संपद्यते स्म ।

अल०--विशेषणैर्निवासयोग्यताव्यञ्जनात्परिकर ।

**तुषारसघातशिला खुराग्रै समुल्लिखन् दर्पकल. ककुद्मान् ।**
**दृष्ट. कथचिद् गवयैर्विविग्नैरसोढसिंहध्वनिरुन्ननाद ॥ ५६ ॥**

अ०—खुराग्रै तुषारसघातशिलाः समुल्लिखन् दर्पकल विविग्नै. गवयै कथचिद् दृष्ट ककुद्मान् असोढसिंहध्वनि ( सन् ) उन्ननाद ।

व्याक०—तुषारसघाता एव शिला तुषारसघाताशिला । सघातशब्दे हन्ते घञ् । कलते शब्दायत इति कल, 'कल शब्द-सख्यानयो' धातो पचाद्यच्, दर्पेण कलो दर्पकल । अथवा दर्पे ( सति )

---

* 'शैलेयगन्धेषु' इति प्रकाशिकाविवरणयो पाठ । गन्धौषधिविशेष शिलाजतु वा शैलेयम्, तद्गन्धविशिष्टेषु इति तद्व्याख्यान च ।

कलो मधुरध्वनिर्यस्य स इति व्यधिकरणबहुव्रीहि । श्रीमल्लिनाथस्तु मदेन कलो ( मधुरध्वनि ) यस्येति व्याचख्यौ, कथमीदृशो व्यधिकरणबहुव्रीहि साधुरिति स एव जानातु । न सोढ सिंहस्य ध्वनिर्येन स -असोढसिंहध्वनि । सोढशब्दे सहते क्त । विविग्ने 'ओविजी भयचलनयो' धातोः क्त, "ओदितश्च" इति नत्वम् । ककुद्मान्-ककुद्शब्दात् प्राशस्त्ये मतुप्, यवादित्वान्न वत्वम्, तत्रैव दकारनिपातनाच्च अनुनासिकाभावः ।

व्याख्या —खुराणाम् शफानाम्, अग्रै -अग्रभागैः, तुपारसंघाताः-सहतानि घनीभूतानि हिमानि, तान्येव महत्त्वात् समतलत्वाच्च शिला, ता, समुल्लिखन् विदारयन्, दर्पकल मदोत्कट, विविग्नै विशेषेण भीतै, गवयै -गोसदृशैर्मृगविशेषै, कथचित्-कृच्छ्रेण, दृष्ट -विलोकितः, ककुद्मान्-हरवृषभ, न सोढ -मर्षित., सिंहस्य, ध्वनि -गर्जन येन तथाभूतः सन्, ( गर्वेण सिंहस्य ध्वनिमसहमान. ) उन्ननाद-उच्चैर्जगर्ज ।

भा०—भगवति शिवे तत्र कृतनिवासे तद्वाहनो वृषभोऽपि तत्रैव तस्थौ । स च शैले सिंहध्वनिं श्रुत्वा 'कोऽय मदग्रे गर्जति' इति अमर्षमापन्न क्रोधाद्धिमशिला खुराग्रैर्विदारयन् स्वयमपि गर्जति स्म । त च तथाविध विशालाकृतिं गर्जन्त दृष्ट्वा भीता, स्वसदृशाकारेण स्वयूथ्य मत्वा कथचिद्विश्वस्ताश्च गवया· कथचिद्ददृशुरिति ।

अल०—वृषभस्वभाववर्णनात्स्वभावोक्तिरलङ्कार ।

**तत्राग्निमाधाय समित्समिद्ध स्वमेव मूर्त्यन्तरमष्टमूर्त्ति. ।**
**स्वय विधाता तपस फलाना केनापि कामेन तपश्चचार ॥ २७ ॥**

अ०—तपस फलानाम् स्वयम् विधाता अष्टमूर्ति तत्र स्वम् एव मूर्त्यन्तरम् समित्समिद्धम् अग्निम् समाधाय केन अपि कामेन तप. चचार ।

व्याक०—*अष्टौ मूर्तयो यस्य स अष्टमूर्ति -मूर्ति -मूर्च्छते क्तिन्, "राल्लोप" इति च्छलोप । अन्या मूर्ति मूर्त्यन्तरम् । मयूरव्यंसकादित्वात् समास । समिद्भि समिद्ध समित् समिद्धम्, "कर्तृकरणे कृता बहुलम्", समिद्धमिति 'ञिइन्धी दीप्तौ' धातो क्त । समाधाय दधातेर्ल्यप् । कामेनेति

---

* सूर्यानलेन्द्वात्मधरानिलाम्बुव्योमाह्वया यस्य हि मूर्तयोऽष्टौ ।

हेतौ तृतीया ।

व्याख्या—तपस -तपस्यायाः, फलानाम्-इन्द्रादिपदलाभानाम्, स्वयम्-अपरतन्त्रः सन्, विधाता-सपादयिता दाता, सर्वेश्वर इति यावत्, अष्टमतिः-महादेव, तत्र-हिमालयसानौ, स्वम्-स्वकीयमेव, मूर्त्यन्तरम् तप कर्तृमूर्त्यपेक्षया भिन्नाम्, अन्यतमा मूर्तिम्, समिद्भि -यज्ञियकाष्ठै, समिद्धम् प्रदीप्तम्, ( तपश्चर्याङ्गम् ) अग्निम्, समाधाय-प्रतिष्ठाप्य, केनापि कामेन कस्यापि अचिन्तनीयस्य फलस्येच्छया, तप तपस्याम, चचार-चकार ।

भा०—तत्र पूर्वोक्ते हिमवच्छिखरे भगवता शिवेन तपश्चरणमारब्धम्, सर्वेषु वैदिकेषु कर्मसु अग्नेरपेक्षितत्वात्तपश्चर्यार्थोऽग्निश्च प्रतिष्ठापित, समिदादिभिस्तत्परिचर्याऽपि समारब्धा । यद्यपि लोकाना फलार्था प्रवृत्ति कर्मसु दृश्यते, भगवाश्चाय सर्वेश्वर सर्वेषा स्वय फलदाता पूर्णकाम इति नास्य फल सभाव्यते, नाप्यस्याराधनीयो देव, अग्न्यादीनामप्येतन्मूर्तित्वात्, नाप्यन्तःकरणशुद्धि फलम्, ईश्वरत्वेन नित्यमुक्तत्वात्, तथापि तपश्चरणमित्यलौकिको मार्ग सर्वलोकहितायैव । अन्येपि मा दृष्ट्वा तपसि प्रवृत्ता भवन्त्विति । इममेव स्वार्थफलाभाव ध्वनयितु 'केनापि कामेन' इति कविनोक्तम् । 'क कामोऽस्य स्याद्' इति न चिन्तयितु शक्यत इति ।

अल०—अखिलफलप्रदातुरकामस्य तपश्चर्येति विरोधालङ्कार. । 'केनापि' इति पद सर्वकामनाभाव ध्वनयतीति पदप्रतिपाद्यो वस्तुध्वनि ।

***अनर्घ्यमर्घ्येण तमद्रिनाथ स्वर्गौकसामर्चितमर्चयित्वा ।**
**आराधनायास्य †सखीसमेता समादिदेश प्रयता तनूजाम् ॥२८॥**

अ०—अद्रिनाथ अनर्घ्यम् स्वर्गौकसाम् अर्चितम् तम् अर्घ्येण अर्चयित्वा अस्य आराधनाय सखीसमेताम् प्रयताम् तनूजाम् आदिदेश ।

व्याक०—‡अर्घम् ( पूजाम् ) अर्हतीत्यर्घ्य, अर्घशब्दादर्हार्थे "दण्डा-

---

* 'अनर्घमर्घ्येण'–इति प्रकाशिकासमत पाठः ।

† 'सखीसमग्राम्' इति पाठान्तरम् ।

‡ 'मूल्ये पूजाविधावर्घ '–इत्यमरः ।

दिभ्यो य" न अर्घ्य अनर्घ्य., तम् । स्वर्गः §ओक ( स्थानम् ) येषा तेषा स्वर्गौकसाम्, "क्तस्य च वर्तमाने" इति कर्तरि षष्ठी। अर्चितम्-अर्च्यते "मतिबुद्धिपूजार्थेभ्यश्च" इति वर्तमाने क्त । अर्घ्येण अर्घार्थ वारि अर्घ्यम्, तेन, "पादार्घाभ्या च" इति यत् । आराधनाय-राध् धातोर्ल्युट्, "क्रियार्थोपपदस्य " इत्यनेन चतुर्थी, आराधनं कर्तुमित्यर्थ. । अस्येति तत्कर्मणि षष्ठी ।

व्याख्या—अद्रीणाम् पर्वतानाम्, नाथ-स्वामी, हिमालय, अनर्घ्यम्-पूजयितुमनर्हम्, सर्वोत्तमत्वेन वाङ्मनसयोरगोचरत्वेन च पूजाविषयतामप्यतिक्रान्तम्, स्वर्गौकसाम्-देवानाम्, अर्चितम् पूजितम्, देवै कथञ्चित्प्रतिमादिषु पूज्यमानम्, तम्-महादेवम्, अर्घ्येण पूजार्थेनोदकेन, ( उदकस्योपलक्षणतया चन्दनपुष्पादिभिरपि ) अर्चयित्वा-पूजयित्वा, अस्य महादेवस्य आराधनाय-शुश्रूषणाय, सखीभ्याम-जयाविजयाभ्याम्, समेताम-सहिताम्, प्रयताम्-नियमवतीम्, *पवित्रा वा, तनूजाम-पुत्रीम्-पार्वतीम्, समादिदेश-आज्ञापयामास।

भा०—सर्वलोकोत्पादनसमर्थैर्ब्रह्मादिभिरप्यचर्च्यमान, वस्तुतस्तु स्वस्वरूपेणावाङ्मनसगोचरतया केनापि पूजयितुमशक्यो भगवान् यदा स्वगृह एव प्राप्त, तदा पर भाग्य मत्वा हिमालयेन सोऽर्चितः, नित्य तदर्चनाय च स्वपुत्री पार्वती सखीसहिता तेन समादिष्टा, यतः सा प्रयतेत्येवविधाना पूजने समुचिता ।

अल०—अनर्घ्यस्याप्यर्घ्येणार्चनमिति विरोधाभासः, परिहारस्तु व्याख्यायामुक्त एव, वृत्त्यनुप्रास पूर्वार्द्धे चमत्कारी। 'स्वर्गौकसामर्चितम्' 'प्रयताम्' इति साभिप्रायविशेषणाभ्या परिकरौ ।

प्रत्यर्थिभूतामपि ता समाधे शुश्रूषमाणा गिरिशोऽनुमेने ।
विकारहेतौ सति विक्रियन्ते येषा न चेतांसि त एव धीराः ॥५९॥

अ०—गिरिश समाधे प्रत्यर्थिभूताम् अपि ताम् शुश्रूषमाणाम् अनुमेने, विकारहेतौ सति ( अपि ) येषाम् चेतांसि न विक्रियन्ते ते एव धीरा ( ज्ञायन्ते ) ।

§ 'ओक सद्माश्रयश्चौका –इत्यमर. ।

* 'पवित्र प्रयत पूत '–इत्यमर. ।

व्या०—प्रत्यर्थिनीमिव भूताम्-प्रत्यर्थिभूताम्। गिरिश -गिरिशब्दाद् लोमादित्वान्मत्वर्थीय श । समाधे -'सम्' 'आङ्' एतत्पूर्वाद् दधाते कि । शुश्रूषमाणाम्-श्रोतुमिच्छन्तीमिव विग्रहे, इच्छार्थे सन्, तत "ज्ञाश्रुस्मृदृशा सन" इत्यात्मनेपदे शानच् । अनुमेने-मन्यतेर्लिट् , एत्वाभ्यासलोपौ । विक्रियन्ते-करोते कर्मकर्तरि लट्, "कर्मवत् कर्मणा तुल्यक्रिय" इति यक् । विकृतानि भवन्तीत्यर्थः । चेतासीति तत्कर्तृपदम् । श्रीमल्लिनाथस्तु कर्मणि लटमाह, तन्मते चेतासीति कर्मणोऽभिहितत्वात् प्रथमा । कर्ता चाध्याहार्य । पर विकारहेतोरेवात्र कर्तृताया योग्यत्वात्, तस्य च सप्तम्या निर्दिष्टत्वेन कर्तृत्वायोग्यत्वकरणात्कर्मकर्तृतैव युक्ता भाति ।

व्याख्या—गिरिश -महादेव , समाधे -चित्तवृत्तिनिरोधस्य, प्रत्यर्थिभूताम्-प्रतिपक्षरूपामपि, ताम्-पार्वतीम्, शुश्रूषमाणाम्-सेवमानाम्, अनुमेने-अङ्गीचकार सेवार्थमनुजानाति स्म । न चैतावता धीरस्य शिवस्य कश्चिद् विकार समजनि, यत , विकारस्य-प्रकृतिपरिवृत्ते , हेतौ-कारणे, सत्यपि-विद्यमानेऽपि, येषाम्-प्राणिनाम्, चेतासि, न विक्रियन्ते-न विकृतानि भवन्ति, त एव, धीरा -याथार्थ्येन धैर्यवन्तो महद्भिर्लोकैर्ज्ञायन्ते ।

भा०—यद्यपि विशिष्टसुन्दरी पार्वती चेतोविकारहेतुत्वात्समाधे परिपन्थिभूता, तथापि सेवमाना सा शिवेन न निषिद्धा । यतस्तस्य चेतोविकारभय नास्त्येवेति ।

अल०—'महादेवमन पार्वतीसन्निधानेऽपि धैर्यं न तत्याज' इति विशेषे प्रस्तुते सामान्यस्याभिधानादप्रस्तुतप्रशसेति विवरणकार श्रीमन्नारायण । श्रीमन्मल्लिनाथस्त्वर्थान्तरन्यासमाह । महादेवस्य वशित्व व्यङ्ग्यम् ।

अवचितबलिपुष्पा वेदिसमार्गदक्षा
नियमविधिजलाना बर्हिषा चोपनेत्री ।
गिरिशमुपचचार प्रत्यह सा सुकेशी
नियमितपरिखेदा तच्छिरश्चन्द्रपादै ॥ ६० ॥

इति महाकविश्रीकालिदासविरचिते कुमारसम्भवे
महाकाव्ये 'उमोत्पत्तिर्नाम' प्रथम सर्ग ॥

अ०—अवचितवलिपुष्पा वेदिसमार्गदक्षा नियमविधिजलानाम् बर्हिषाम् च उपनेत्री तच्छिरश्चन्द्रपादै नियमितपरिखेदा (सती) सुकेशी सा प्रत्यहम् गिरिशम् उपचचार ।

व्याक०—अवचितानि वले पुष्पाणि (ष० तत्पु०) यया सा-अवचित-वलिपुष्पा, अवचितानि-चिनोते क्त । वेदे समार्गे दक्षा वेदिसमार्गदक्षा, समार्गशब्दे 'मृजू शुद्धौ' धातोर्घञ् । नियमस्य विधे. जलाना नियमविधिजला-नाम्, (षष्ठीसमासद्वयम्) नियमशब्दे निपूर्वाद् यम्धातोः "यम.समुपनिविषु च" इत्यप्प्रत्यय । तस्य शिरस चन्द्रस्य पादैः, तच्छिरश्चन्द्रपादै. । नियमित परिखेदो यस्याः सा नियमितपरिखेदा। नियमितशब्दे णिजन्तयम्धातो क्त', "मिता ह्रस्व." । परिखेद -खिद्यतेर्घञ् । अहरह प्रत्यहम्, साकल्ये अव्ययीभाव' "नपुसकादन्यतरस्याम्" इति टच्, टिलोप. । शोभना केशा यस्या सा सुकेशी "स्वाङ्गाच्चोपसर्जनादसयोगोपधात्" इति ङीप् । उपनेत्री-नयतेस्तृच्, ङीप् ।

व्याख्या—अवचितानि-विलूनानि, वले -पूजोपहारस्य, पुष्पाणि कुसु-मानि, यया तथाभूता, वेदे'-तपोनुष्ठानार्थमुपवेशनभूमे', समार्गे-समार्जने-मार्ज-न्यादिना स्वच्छीकरणे, दक्षा-चतुरा, नियमानाम्-आचमनादीनाम्, विधे -अनु-ष्ठानस्य (उपयुक्तानाम्) जलानाम्, बर्हिषाम्-कुशाना च, उपनेत्री-आनेत्री, तस्य-शङ्करस्य, शिरस -शिर स्थितस्य, चन्द्रस्य-इन्दो , पादै.-किरणैः, नियमितः-निवर्तित , खेद -शुश्रूषाजनित श्रम', यस्या तथाभूता सती, सुकेशी-शोभन-मूर्धजा, सा-पार्वती, प्रत्यहम्-अहन्यहनि, गिरिशम्-महादेवम्, उपचचार-सिषेवे।

भा०—सेवाया प्रवृत्ता पार्वती प्रतिदिनम् पूर्वं पूजायै पुष्पाण्यवचिनोति स्म, तदनु तपश्चर्य्यास्थान परिष्करोति स्म, अथ जलानि बर्हींषि चानयति स्म, इत्यादिना प्रकारेण सेवानिरताभूत् । न च सुकुमार्या अपि तस्या सेवया ग्लानिरुदभूत्, यतः शङ्करस्य मस्तके स्थितस्य चन्द्रस्याह्लादकरै किरणैस्त-स्याः खेदोऽपनीयते स्म इति ।

अल०—परिचर्याकर्मणा क्रमेण न्यासाद्रत्नावली कुवलयानन्दमते । 'क्रमिक प्रकृतार्थाना न्यास रत्नावली विदु' ' इति तल्लक्षणात् । विशेषणाना-

मुपचरणप्रवणत्वात्परिकरः । खेदनियमने हेत्वभिधानात्काव्यलिङ्ग च । इह कामतन्त्रोक्तं कन्यासंप्रयुक्तकाधिकरण कविना प्रतिपादितमिति प्रकाशिकाविवरणयोर्विस्तर. ।

इति च्छात्रोपकारिण्या महाकाव्यसग्रहव्याख्याया तृतीय सर्ग. ।



श्रीः

# महा-काव्यसंग्रहः ।

## ( संग्रहे चतुर्थः-कुमारसम्भवे पञ्चमः सर्गः )

कथासम्बन्ध —तारकाख्येनासुरेणाभिभूता इन्द्राद्या देवास्तद्विनाशाय विज्ञापयितु ब्रह्मण समीपे गता, ब्रह्मणा च ' शङ्करस्य वीर्येण जातो युष्माक सेनापतिर्भूत्वा तारक शमयिष्यति, तच्छङ्करस्य विवाहोपायश्चिन्त्यताम् ' इत्याज्ञप्ता । तत इन्द्रेण सबहुमानमाहूय काम शिवस्य चेत पार्वत्यामनुरञ्जयितुमादिष्ट, स च वसन्तसहाय कैलासं गत्वा सेवार्थमुपस्थिता पार्वतीमालम्बनीकृत्य भगवति शिवे समोहनास्त्र प्रायुङ्क्त । किञ्चित्परिवृत्तधैर्योऽपि शिव• सयमितया द्रुत चेतोविक्रिया नियम्य तृतीयनेत्रानलेन कामं भस्मसादकरोत् । अथ वहु विलपन्ती मरणे कृतनिश्चया कामपत्नी रति 'भूयोऽपि शिवस्य कृपया कामस्य जीवनलाभो भविष्यति, इत्याकाशवाचा समाश्वासिता, तेन च वद्धाशा सा जीवन दधारेति चतुर्थे गतम् । अथ पार्वतीवृत्तमारभ्यते ।

**तथा समक्ष दहता मनोभव पिनाकिना भग्नमनोरथा सती ।**
**निनिन्द रूप हृदयेन पार्वती प्रियेषु सौभाग्यफला हि चारुता ॥१॥**

अ०—पार्वती तथा समक्षम् मनोभवम् दहता पिनाकिना भग्नमनोरथा सती रूपम् हृदयेन निनिन्द, (तथा) हि चारुता प्रियेषु सौभाग्यफला (भवति)

व्याक०—अक्ष्णो समीपे समक्षम्, सामीप्येऽव्ययीभाव., "अव्ययीभावे शरत्प्रभृतिभ्य " इति टच् क्रियाविशेषणे द्वितीया। मनसि भवम्, मनसि भवः (उत्पत्ति ) यस्य तम् इति वा मनोभवम् । भग्न मनोरथो यस्या. सा भग्नमनोरथा, भग्नशब्दे भनक्तेः क्त , निष्ठानत्वम् । सौभाग्यमेव फल यस्या सा सौभानौभाग्यफला । सुभगाया भाव• सौभाग्यम्, ष्यञ्, "हृद्भगसिन्ध्वन्ते पूर्वपदस्य च" इत्युभयपदवृद्धि. । पार्वती-पर्वतस्यापत्य स्त्री पार्वती,

अपत्यार्थेऽण्। तथा-तेन प्रकारेण इति विग्रहे तच्छब्दात् "प्रकारवचने थाल्"। पिनाकिना-*पिनाकशब्दाद् "अत इनिठनौ"। सती-अस्तेः शतृप्रत्ययः, ङीप्। चारुता-चारुशब्दाद् भावे तल्। निनिन्द-निन्दतेर्लिट्। हृदयेनेति निन्दनकरणे तृतीया, मनोभवमिति दहनकर्मणि द्वितीया। पिनाकिनेति भञ्जने कर्तृपदम्। प्रियेषु-वैषयिकाधारे सप्तमी।

व्याख्या—पार्वती-पर्वतसुता-उमा, तथा-पूर्वोक्तेन प्रकारेण, समक्षम्-प्रत्यक्षम्, मनोभवम्-कामम्, दहता भस्मसात् कुर्वता, पिनाकिना-महादेवेन, भग्नः-खण्डितः, मनोरथः-अभिलाषः, यस्याः, तथाभूता, सती, रूपम्-(स्वकीयम्) सौन्दर्यम्, हृदयेन निनिन्द-'धिङ् मे रूपं यद् महादेवमनोहरणाय नालमभूद्' इत्येवं मनसा गर्हते स्म। तथा हि-चारुता-सौन्दर्यम्, प्रियेषु वल्लभ-विषये, सौभाग्यम्-प्रियत्वम्, पतिप्रेमेति यावत्, तदेव फलम्-प्रयोजनम्, यस्याः, तथाभूता, भवति-इति शेषः।

भा०—इत्थं महादेवेन कामदेवे भस्मसात् कृते पार्वती निराशा समजनि। नारदोक्त्या यो मनोरथाङ्कुर उदभूत्, सेवानुमोदनेन यः पल्लवितः, समोहनास्त्रप्रयोगकाले सानुरागवीक्षणेन च यः फलितः, स कामं दहता महादेवेन समूलमुत्पाटितः। महादेवमन आक्रष्टुमसमर्थमात्मनो रूपं तदा पार्वती गर्हते स्म। यतः भर्तुः प्रेमैव रूपस्य फलम्, यस्मिन् रूपे भर्ता नानुरज्यति, तद् रूपं निष्फलमेवेति। धीरया पार्वत्या यद्यपि कस्यचित्पुरः पुरापि रूपविकत्थना न कृता, तथापि चेतसि तस्या रूपगर्व आसीदिति चेतसैव निन्दापि कृता।

अलं०—मनोभवदाहस्य मनोरथभङ्गे हेतुत्वात् काव्यलिङ्गम्, निन्दागम्यस्य रूपवैफल्यस्य वैधर्म्येण समर्थनादर्थान्तरन्यासः। प्रथमसर्गान्ते प्रस्तुतस्य प्रयोज्योपावर्तनविधेर्वैफल्येनोपसंहारोऽत्र वर्णितः। तेन च भगवतः शिवस्यारूपहार्यत्वम्, केवलं भक्तिवश्यता ध्वनिता। अस्मिन् सर्गे वंशस्थं वृत्तम्, 'जतौ तु वंशस्थमुदीरितं जरौ' इति तल्लक्षणम्।

---

* 'पिनाकोऽजगवं धनुः'-इत्यमरः।

**इयेष सा कर्तुमवन्ध्य *रूपता समाधिमास्थाय तपोभिरात्मन ।**
**अवाप्यते †वा कथमन्यथा द्वय तथाविध प्रेम पतिश्च तादृशः ॥२॥**

अ०—सा समाधिम् आस्थाय तपोभिः आत्मन. अवन्ध्यरूपताम् कर्तुम् इयेष, वा अन्यथा तथाविधम् प्रेम तादृश पतिश्च ( इति ) द्वयम् कथम् अवाप्यते ?

व्याक०—न वन्ध्य रूप यस्या सा अवन्ध्यरूपा, तस्या भाव , तत्ता, ताम्, अवन्ध्यरूपताम् । "त्वतलोर्गुणवचनस्य" इति पुवद्भाव । तथा विधा यस्य तत् तथाविधम् । विधाशब्दे दधाते "आतश्चोपसर्गे" इत्यङ् । समाधिम्-दधाते कि । आस्थाय-तिष्ठते क्त्वा, ल्यप्, "न ल्यपि" इतीत्वाभाव । कर्तुम् करोते "समानकर्तृकेषु तुमुन्" । इयेष-इच्छतेर्लिट् । अन्यथा-अन्य-शब्दाद् "प्रकारवचने थाल्" । प्रेम-प्रियस्य भाव इति प्रियशब्दाद् 'इमनिच्' । तादृशः-तच्छब्दाद् "त्यदादिषु दृशोऽनालोचने कञ् च्" इति कञ् । द्वयम्-द्विशब्दाद् अवयवार्थे 'अयच्' । कथम्-"किमश्च" इति किंशब्दात् थमुः । अवाप्यते-आप्नोते कर्मणि लट् । द्वयमिति कर्म, तपोभिरिति कृधातो करणे तृतीया । अवन्ध्यरूपतामिति करणे कर्म, कर्तुमितीच्छाया कर्म ।

व्याख्या—सा-पार्वती, समाधिम् चित्तैकाग्रताम्, आस्थाय-अवलम्ब्य, ( एकाग्रेण मनसा विचार्य । समाधि -भग्नस्य मनोरथस्य पुन समाधानम्, तदास्थायेत्यदणाचलनाथ ) तपोभि -वक्ष्यमाणैर्नियमै', आत्मन -स्वस्य, अवन्ध्यम्-सफलम्, रूपम्-सौन्दर्यम् यस्या , तथाभूतताम्, सौन्दर्यसफल-ताम्, पाठान्तरे-मनोरथसफलताम्, कर्तुम् इयेष-कामयते स्म । युक्त चैतत्-वा निश्चयेन, अन्यथा-प्रकारान्तरेण, तथाविधम्-तादृशम्, येन पत्युर्भवस्य अर्धशरीरहरा भवेत् तथा, प्रेम-अनुराग , तादृशः-अलौकिक., मृत्युञ्जय , पतिश्च, कथम्, अवाप्यते-लभ्यते ।

भा०—इत्थमुपायान्तरमपश्यन्ती पार्वती तपस्यया महादेव वशीकृत्य

---

* 'अवन्ध्यकामताम्' इति विवरणम् ।

† 'तत् कथमन्यथा द्वयम्' इति विवरणम् ।

स्वसौन्दर्यं चरितार्थयितु निश्चिकाय। महादेवसदृशः पतिर्यो मृत्युञ्जय इत्युच्यते, तादृशोनुरागश्च-यद्वशीभूतः स मृत्युञ्जयस्तस्यै स्वशरीरार्धमपि समर्पयेत्, एते तपस्यामन्तरेण कथ भवितुमर्हत । सर्वं दुर्लभ वस्तु तपसैव साध्य भवति इति ।

अल०—तपश्चर्येच्छाया समर्थनादर्थान्तरन्यास । पूर्वपद्येन लौकिकस्य प्रयोज्योपावर्तनविधेर्वैफल्यमभिधाय पद्येनानेनालौकिकयोर्नायकयोरलौकिक एव प्रयोज्योपावर्तनविधिरुपक्रम्यते इति प्रकाशिकाविवरणे । उत्साहात्मकस्य तपोवीरस्य चात्रोपक्षेप इति ।

**निशम्य चैना तपसे कृतोद्यमा सुता गिरीशप्रतिसक्तमानसाम् ।**
**उवाच मेना परिरभ्य वक्षसा निवारयन्ती महतो मुनिव्रतात् ॥३॥**

अ०—च मेना गिरीशप्रतिमक्तमानमाम् एनाम् सुताम् तपसे कृतोद्यमाम् निशम्य वक्षसा परिरभ्य महत मुनिव्रताद् निवारयन्ती उवाच ।

व्याक०—गिरीशे प्रतिसक्त मानस यस्या , ता गिरीशप्रतिसक्तमानसाम् । कृत उद्यमो यया ता कृतोद्यमाम्, उद्यमशब्दे यच्छतेर्घञ् सज्ञापूर्वकविधेरनित्यत्वाद् वृद्ध्यभावः । मुने व्रताद् मुनिव्रताद् । "वारणार्थानामीप्सित " इत्यनेन अपादानत्वात् पञ्चमी । अथवा भाष्यकृता बौद्धविभागावधेरपि अपादानत्वाभ्युपगमाद्-"ध्रुवमपायेऽपादानम्" इत्यनेनैवापादानत्वम् । निशम्य शाम्यते क्त्वा, ल्यप् । एनाम्-"द्वितीया टौस्स्वेन " इतीदशब्दस्य अन्वादेशे एनादेशः, परिरभ्य-रभतेर्ल्यप् । निवारयन्ती-वारयते हेतौ शतृप्रत्यय , फलस्यापि हेतुत्वाभ्युपगमात् । तपसे 'क्रियार्थोपपद ' इत्यनेन चतुर्थी, तप कर्तुमित्यर्थ ।

व्याख्या—च-अनन्तरम् , मेना-हिमालयस्य पत्नी, †गिरीशे-कैलासनाथे महादेवे, प्रतिसक्तम् अनुरक्तम्, मानसम्-चित्त यस्या , तथाभूताम्, एनाम्-पूर्ववर्णिताम्, सुताम् पुत्रीम्, पार्वतीम्, तपसे-तप कर्तुम्, कृतः, उद्यम - उद्योगो यया, तथाभूताम्, निशम्य-श्रुत्वा, विज्ञाय, वक्षसा-हृदयेन, परिरभ्य-

* 'गिरीश प्रतिसक्तमानमाम्' इति प्रकाशिका ।

† गिरीशो गिरिशो मृड इति महादेवनामसु अमर ।

आश्लिष्य, महत , मुनिव्रताद्-मुनिभिरेवाचरणीयात् तपस , निवारयन्ती निवर्तयन्ती, उवाच जगाद, उपदिदेशेत्यर्थ. ।

भा०—भगवति मृत्युञ्जये निरतिशयमनुरक्ताया पार्वत्या अतिकठिनतपश्चर्याव्रतोद्योग श्रुत्वा तस्या जननी मेनका ता ( पार्वतीम ) वक्षसालिङ्गय तपश्चर्याध्यवसाय त्यक्तुमुपदिदेश । गिरीशेऽनुरक्तया तस्या हर्ष , तप कष्टमनुमाय तु विषाद इति ।

अल०—गिरीशेत्यादिविशेषणस्य तपश्चर्योद्यमे, व्रतविशेषणयोर्महन्मुनि पदयोश्च निवारणे साभिप्रायत्वात् परिकरः । मेनागत वात्सल्य व्यङ्गयम् ।

***मनीषिता सन्ति गृहेषु देवतास्तपः क्व वत्से क्व च तावकं वपु ।**
**पदं सहेत भ्रमरस्य पेलव शिरीषपुष्प न पुन. पतत्रिण ॥ ४ ॥**

अ०—(हे) वत्से ! मनीषिता देवता गृहेषु सन्ति, तपः क्व, तावकम् वपुश्च क्व (अस्ति), पेलवम् शिरीषपुष्पम् भ्रमरस्य पदम् सहेत, पतत्रिण (पदम्) पुन न (सहेत) ।

व्याक०—मनस ईषिता. मनीषिता , ईषिता:-'ईष गतिहिंसादर्शनेषु' धातोः क्त ।शकन्ध्वादित्वात् टे पररूपम्। यद्वा मनीषा संजाता येषु इति तारकादित्वादितच् । क्व-किंशब्दात्, "किमोऽत्" इत्यत्प्रत्यय.। "क्वाति" इति क्वादेशश्च । तावकम् युष्मच्छब्दाद् ' युष्मदस्मदोरन्यतरस्या खञ् च" इत्यण्, "तवकममकावेकवचने" इति तवकादेश । सहेत-सहतेः "शकि लिङ् च" इति शक्यार्थे लिङ्। पतत्रिण. पतन्त त्रायन्ते पतत्त्राणि, त्रायते क , तदन्ताद् "अत इनिठनौ" । पुन शब्दस्त्वर्थे तप इति वपुरिति च गम्यमानायामस्तिक्रियाया कर्तृ ।

व्याख्या—हे वत्से ! बाले ! मनीषिता.-इष्टा , देवता शच्यादयः, गृहेषु, सन्ति। त्व मनोरथसिद्धये ता आराधय इति शेष ।तप. अतिकठिन मुनिव्रतम्, क्व, तावकम्-त्वदीयम्, अतिकोमल वपु -शरीर च, क्व, उभे इमे परस्परानानुरूपे त्व इत्यर्थ. । तथाहि-पेलवम्-कोमलम्, शिरीषपुष्पम्-शिरीषस्य कुसुमम्, भ्रम-

---

* 'मनीषितायार्च गृहेषु देवता.' इति प्रकाशिकासमत पाठ । मनीषिताय इष्टलाभाय, गृहेषु देवता -इन्द्राण्यादा., अर्च पूजयेति तद्व्याख्यान च ।

रस्य भ्रमरस्य, पदम् पदन्यासम्, सहेत-सोढुं शक्नुयात्, पतत्रिणः-पक्षिणः, पद पुन पदन्यासम् तु न सहेत।

भा०—मेना वक्ति 'वत्से! पार्वति! तव पितु प्रदेशा देवभूमय सन्ति, अत्र विद्यमाना इष्टाः शच्यादिसौभाग्यदेवत आराधय। त्वदीय कोमल शरीर कठिनतपोनुष्ठानक्षम नास्ति।' मृदुल शिरीषस्य कुसुम लघीयसो भ्रमणशीलस्य भ्रमरस्य भार सोढुं शक्नोति, न पुनर्महीयस पक्षिणोऽपि। भ्रमरो हि परिमाणे लघु, भ्रमणशीलत्वाच्चैकत्र न चिरमवतिष्ठते इति तत्पद कोमलेनापि पुष्पेण सोढुं शक्यते, पतत्री तु गुरुत्वात्पक्षाघातकरत्वाच्च न सोढुं शक्य इति। गृह-स्थितदेवताराधनभ्रमरयो, शिरीषपुष्पवपुषो., पतत्रितपसोश्च मिथो बिम्ब-प्रतिबिम्बभावो बोध्य।

अल०—पूर्वार्धे विरूपयोर्घटनाया वर्णनाद् विषमालङ्कार। उत्तरार्धे दृष्टान्तालङ्कार। श्रीमन्नारायणस्त्वर्थान्तरन्यासमाह, तद् भ्रान्त्यैव। सामान्य-विशेषयोरिहाभावात्। उभयोरपि विशेषरूपत्वात्।

**इति *ध्रुवेच्छामनुशासती सुता शशाक मेना न नियन्तुमुद्यमात्।**

**क ईप्सितार्थस्थिरनिश्चय मन पयश्च निम्नाभिमुख प्रतीपयेत्॥ ५॥**

अ०—इति अनुशासती मेना ध्रुवेच्छाम् सुताम् उद्यमाद् नियन्तुम् न शशाक ईप्सितार्थस्थिरनिश्चयम् मनः निम्नाभिमुखम् पयश्च क प्रतीपयेत्।

व्याक०—ध्रुवा इच्छा यस्या. ताम् ध्रुवेच्छाम्, ध्रुवाशब्दे 'ध्रु स्थैर्ये' धातो. पचाद्यच्, उवङ्, कुटादित्वाद् गुणो न। ईप्सिते अर्थे स्थिर निश्चय यस्य तद् ईप्सितार्थस्थिरनिश्चयम्। ईप्सितशब्दे आप्नोते सन्, तदन्तात् क्त., "आप्ज्ञप्यृ-धामीत्" "अत्रलोपोऽभ्यासस्य"। निम्ने अभिमुखम् निम्नाभिमुखम्। अनुशासती-शास्ते' शतृप्रत्ययो हेतौ। नियन्तुम् यम् धातोस्तुमुन्, प्रतीप कुर्यात् प्रतीपयेत्, प्रतीपशब्दात् "तत्करोति तदाचष्ट" इति णिच्।

व्याख्या—इति-पूर्वोक्तेन प्रकारेण, अनुशासती-उपदिशन्ती, मेना, ध्रुवा-दृढा, इच्छा अभिलाष., यस्याः, तथाभूताम्, सुताम्-पुत्रीम्-पार्वतीम्, उद्यमात्-

---

* 'स्थिरेच्छाम्' इति प्रकाशिकासमत पाठ।

तपश्चर्यायोगाद्, नियन्तुम् निवारयितुम्, न शशाक-न प्रबभूव। तथाहि, ईप्सिते-प्राप्तुमभिलषिते अर्थे वस्तुनि, स्थिर-दृढः, निश्चय, यस्य तथाभूत मन, निम्नाभिमुखम्, पय-जल च, क पुरुष, प्रतीपयेत्-विपरीत कर्तुं शक्नुयात्, न कोऽपीति काकूक्ति ।

भा०—मेनया पूर्वोक्तेन प्रकारेण बहुधा पार्वती समुपदिष्टा, परं न सा तपसो निश्चयाद्विरताभूत्। यत सा फलसिद्धौ दृढनिश्चया आसीत्, यथा निम्नाभिमुख जल न केनापि विरुद्धं प्रवाहयितु शक्यते, तथा प्राप्तव्येऽर्थे दृढमभिनिविष्ट चित्त कश्चिदपि विपरीत कर्तुं न शक्नोति ।

अल०—भ्रुवेच्छाया वारणाशक्तौ हेतुत्वात् काव्यलिङ्गम्। सामान्येन विशेषस्य समर्थनादर्थान्तरन्यास., प्रस्तुताप्रस्तुतयोर्मन पयसोस्तुल्यधर्मप्रतिपादनात् दीपकालङ्कारश्च। पार्वतीगता धृतिर्व्यङ्ग्या ।

**कदाचिदासन्नसखीमुखेन सा मनोरथज्ञ पितर मनस्विनी ।**
**अयाचतारण्यनिवासमात्मन फलोदयान्ताय तपःसमाधये ॥६॥**

अ०—कदाचिद् मनस्विनी सा मनोरथज्ञम् पितरम् आसन्नसखीमुखेन फलोदयान्ताय तप समाधये आत्मनः अरण्यनिवासम् अयाचत ।

व्याक०—आसन्नाया सख्या ( कर्म० ) मुखेन ( ष०तत्पु० ) आसन्नसखीमुखेन, यद्वा-आसन्ना सख्येव मुखमिति कर्मधारयद्वयम्, करणे तृतीया । आसन्नशब्दे सीदते क्त । फलस्य उदय ( ष० तत्पु० ) अन्त यस्य तस्मै, फलोदयान्ताय । तपस. तपसि वा समाधि, तप समाधि, तस्मै । पूर्वत्र समाधिशब्दो नियमार्थः, उत्तरत्र तु *ध्यानार्थ । तादर्थ्ये, अप्रयुज्यमानतुमुन्नन्तकर्मणि वा चतुर्थी, तप समाधिमनुष्ठातुमिति । कदाशब्दो व्याख्यात. । मनस्विनी असन्तत्वाद् विनि, नान्तत्वाद् ङीप् । मनोरथ जानातीति मनोरथज्ञ, तम्, "आतोऽनुपसर्गे क." । पितरम् "अकथित च" इत्यनेन कर्मत्वाद् द्वितीया । अरण्यनिवासमिति प्रधानकर्मणि द्वितीया । अयाचत याच तेर्लङ् ।

व्याख्या—कदाचित्-कस्मिंश्चित् समये मनस्विनी-स्थिरचित्ता, सा-पार्वती,

* समाधिर्ध्याननीवाकनियमेषु समर्थने । इति विश्व ।

मनोरथज्ञम्-स्वाभिलाषाभिज्ञम्, पितरम्-जनकम्-हिमालयम्, आसन्नाया-निरन्तर समीपवर्तिन्या, सख्या सहचर्या, *मुखेन-वक्त्रेण, तद्वाचा, यद्वा सा सखी एव मुखम्-उपाय, तेन, आप्तसखीद्वारेण, फलोदय-महादेवस्य, वररूपेण प्राप्तिरेव, अन्त-अवधि, यस्य तथाभूताय, तप समावये-तपोनियमार्थम्, अथवा तपसि चित्तैकतानतारूपाय ध्यानाय, आत्मन-स्वस्य, अरण्ये वने, निवासम-अवस्थानम्, अयाचत-प्रार्थयत ।

भा०—हिमालयोऽपि स्वसुताया मनोरथ विवेद । अथ एकस्मिन् दिने स्ववसरे तपसि कृतनिश्चया गौरी फलसिद्धिपर्यन्त तपश्चरितुं स्वसखीमुखेन पितु सकाशाद् वनवासानुज्ञा प्रार्थयते स्म। न ह्येतादृशानि तपासि गृहे सभवन्तीति ।

अल०—मनोरथज्ञम्, मनस्विनी, फलोदयान्तायेति विशेषणाना साभिप्रायत्वात् परिकर. । पार्वतीगता धृतिर्व्यज्यते ।

**अथानुरूपाभिनिवेशतोषिणा कृताभ्यनुज्ञा गुरुणा गरीयसा ।**
**प्रजासु पश्चात् प्रथित तदाख्यया जगाम गौरी शिखर शिखण्डिमत् ॥७॥**

अ०—अथ गौरी अनुरूपाभिनिवेशतोषिणा गरीयसा गुरुणा कृताभ्यनुज्ञा ( सती ) पश्चात् प्रजासु तदाख्यया प्रथितम् शिखण्डिमत् शिखरम् जगाम ।

व्याक०—अनुरूपेण अभिनिवेशेन तुष्यतीत्यनुरूपाभिनिवेशतोषी, तेन, तुष्यतेर्णिनिः, अभिनिवेशशब्दे विशतेर्घञ् । कृता अभ्यनुज्ञा यस्यै यस्या वा सा कृताभ्यनुज्ञा । अभ्यनुज्ञा शब्दे जानाते. "आतश्चोपसर्गे" इत्यङ् । तस्या आख्यया तदाख्यया । आख्याशब्दे चक्षिङ्धातोरकारप्रत्यय, "चक्षिङ ख्याञ्" । गरीयसा अतिशयेन गुरुर्गरीयान्, तेन, गुरुशब्दाद् ईयसुन्, गुरुशब्दस्य "प्रियस्थिर " इत्यादिना गरादेश । प्रथितम्-प्रथयते क्त । शिखण्डिमत् पूर्वं शिखण्डशब्दादिनि, ततो भूम्नि मतुप् । †मत्वर्थीयान्मत्वर्थीयस्य निषेधस्तु न शङ्कय., सरूपस्यैव तस्य तेन निषेधात् । गुरुणेति करोते कर्तरि तृतीया । तदाख्ययेति करणे तृतीया ।

* मुख निस्सरणे वक्त्रे प्रारम्भोपाययोरपि-इति विश्व. ।

† शैषिकान्मतुबर्थीयाच्छैषिको मतुबर्थिकः सरूपः प्रत्ययो नेष्ट. सन्नन्तान्न सनिष्यते । इति भट्टोजिदीक्षित. ।

व्याख्या—अथ-पितुः प्रार्थनानन्तरम्, गौरी पार्वती, अनुरूपेण-योग्येन, अभिनिवेशेन-आग्रहेण, तुष्यति-प्रीतो भवति, इति तथोक्तेन, गरीयसा पूज्यतमेन, गुरुणा-पित्रा, कृता विहिता, अभ्यनुज्ञा 'तप कुरु' इत्यनुमति, यस्यै तथाभूता सती, पश्चात् तप सिद्ध्यनन्तरम्, तदाख्यया तस्या -गौर्या, आख्यया नाम्ना, प्रथितम्-प्रसिद्धम्, गौरीशिखरमिति प्रसिद्धमिति यावत्, शिखण्डिमत्-मयूरप्रचुरम्, शिखरम्-शृङ्गम्, जगाम-ययौ। विवरणकारस्तु 'गौरी-शिखरम्' इत्येकमेव पद मत्वा पश्चात् तदाख्यया तेन नाम्ना प्रथितम् इति व्याचख्यौ। सा इति कर्तृपदमध्याजहार।

भा०—हिमालय स्वसुताया योग्ये वस्तुनि अभिनिवेश विज्ञाय संतुतोष। तपस्या कर्तुं च तामनुजानाति स्म। गौर्यपि पितुरनुज्ञामधिगम्य हिंस्रप्राणिविरहिते शान्ते पर्वतशिखरे तपः कर्तुं प्रतस्थे, यच्च शिखर पश्चात्तन्नाम्नैव गौरी-शिखरमिति प्रसिद्ध जातम्। 'शिखण्डिमत्' इत्युक्त्या शान्तत्व समर्थितम्।

**विमुच्य सा हारमहार्यनिश्चया विलोलयष्टिप्रविलुप्तचन्दनम्।**
**बबन्ध बालारुणबभ्रु वल्कलं पयोधरोत्सेधविशीर्णसंहति ॥ ८ ॥**

अ०—अहार्यनिश्चया सा विलोलयष्टिप्रविलुप्तचन्दनम् हारम् विमुच्य बालारुणबभ्रु पयोधरोत्सेधविशीर्णसहति वल्कलम् बबन्ध।

व्याक०—न हार्यः निश्चयो यस्या. सा अहार्यनिश्चया। हार्यशब्दे हरते "ऋहलोर्ण्यत्" निश्चय -चिनोते "ग्रहवृदृनिश्चिगमश्च" इत्यप्प्रत्यय। विलोलया यष्ट्या। ( विलोलाभि यष्टिभिरिति वा ) प्रविलुप्तम् ( तत्पु० ) चन्दनम् येन ( बहु० ) तम् विलोलयष्टिप्रविलुप्तचन्दनम्। बालः अरुण इव बभ्रु, तद् बालारुणबभ्रु। "उपमानानि सामान्यवचनैः" इत्यनेन समास। वल्कलविशेषण नपुसक द्वितीयैकवचनान्तमिदम्। पयोधरयो उत्सेधेन ( ष०तत्पु० ) विशीर्णा ( तत्पु० ) सहति यस्य ( बहु० ) तत् पयोधरोत्सेधविशीर्णसहति, इदमपि पूर्ववत्। उत्सेधशब्दे उत्पूर्वात् सिध धातोर्घञ्। विशीर्णा-'शॄ विशरणे' धातो क्त। सहति -हन्ते· क्तिन्।

व्याख्या—न, हार्य -निवार्य, निश्चय -अध्यवसाय, यस्या -तथाभूता,

सा-पार्वती, विलोलाभि -चञ्चलाभि , यष्टिभिः -प्रतिसरै , ( यष्ट्याकारेण हारप्रदेशेन-इति प्रकाशिकाविवरणयोर्व्याख्यातम् ) ( मघर्षेण ) प्रविलुप्तम्-प्रोञ्छितम्, स्तनान्तरगत चन्दनम्-मलयज येन तथाभूतम्, हारम्-मौक्तिक स्रजम्, विमुच्य-विहाय-कण्ठादवतार्य, वालारुणमिव-वालार्कमिव, वभ्रु पिङ्ग-लम्, पयोधरयो -स्तनयो , उत्सेधेन-उच्छ्रायेण, विशीर्णा-विघटिता, संहति - अवयवसंश्लेषो यस्य तथाभूतम्, वल्कलम्-वृक्षत्वचम्, ववन्ध-धारयामासेत्यर्थ ।

भा०—दृढप्रतिज्ञा गौरी तपश्चर्यानुरूप वेष परिधातुकामा स्तनान्तरे लम्वमान वहुमूल्य मौक्तिकहार परितत्याज । शरीराच्छादनाय च वालातपपिङ्गल वल्कल धारयति स्म । तदपि च नवम् अप्रशान्तकषायम् अत्यन्त दु स्पर्शम् । ( एतद् वालारुणवभ्रुविशेषणेन वोधितम् ) यच्च स्तनयोर्दु सेन धृतमभूत् ।

अल०—हारेण वल्कलस्य विनिमयोक्त्या ( हार परित्यज्य वल्कलग्रहणात् ) परिवृत्तिरलङ्कार । तपस्युत्साहस्यानुभावा इत प्रदर्श्यन्ते, तैर्व्यक्तस्तपोवीरो रसोऽङ्गी ।

**यथा प्रसिद्धैर्मधुरं शिरोरुहैर्जटाभिरप्येवमभूत्तदाननम् ।**

**न षट्पदश्रेणिभिरेव पङ्कजं सशैवलासङ्गमपि प्रकाशते ॥ ९ ॥**

अ०—तदाननम् प्रसिद्धै शिरोरुहै यथा मधुरम् अभूत्, जटाभि अपि एवम् (अभूत्) पङ्कजम् षट्पदश्रेणिभि एव न प्रकाशते (किन्तु) सशैवलासङ्गम् अपि (सत्) प्रकाशते ।

व्याक०—रोहन्तीति रुहा , इगुपधत्वात् क , शिरसि रुहा॰, शिरोरुहा , तै । षट् पदानि येषा तेषा श्रेणिभि षट्पदश्रेणिभि , शैवलानामासङ्ग शैवलासङ्ग , तेन सह वर्तमान सशैवलासङ्गम्, तुल्ययोगे वहुव्रीहि. । सहस्य सादेश । सर्वास्तृतीया करणे ।

व्याख्या—तस्याः-पार्वत्या , आननम्-मुखम्†, प्रसिद्धै.-भूषितै ‡, शिरो-

---

* 'हारकी लड़िया' इति भाषाया प्रसिद्धम् ।

† आनन लपन मुखम् इत्यमर । ‡ प्रसिद्धौ ख्यातभूषितौ—इत्यमर ।

दहै-केशै, यथा-येन प्रकारेण, मधुर-प्रियम् . अभूत्-(अनुभूयते स्म) जटाभि-रपि-प्रसाधनाभावेन परस्परं संश्लिष्टै केशैरपि, एवम्-मधुरम्, अभूत्। पङ्कजम्-कमलम्, षट्पदानाम् भ्रमराणाम् †, श्रेणिभिरेव-पङ्क्तिभिरेव, न प्रकाशते-न शोभते, किन्तु सशैवलासङ्गमपि-शैवलानाम्-जलनीलिकानाम् ‡, आसङ्गेन योगेन सह वर्तमानमपि प्रकाशते-शोभते।

भा०—गौरी शिरसि जटा बभार। ताभिस्तदाननस्य शोभा न मनागपि पर्यहीयत, किन्तु यथा पूर्वम् अलङ्कृतैः केशैस्तन्मुखमशोभत, तथैव जटिलैरपि। मधुरा ह्याकृतय सर्वथापि शोभन्त एव, यथा कमल केवल भ्रमरराजिभिरेव राजत इति न, अपितु शैवलैरपि तच्छोभत एव।

अल०—अत्रैकस्यैव शोभारूपस्य समानधर्मस्योपमानोपमेयवाक्ययो पृथक्पदैरभिधानात् प्रतिवस्तूपमा। पूर्वार्धे अलङ्काराभावेऽपि शोभाया अभि-धानाद् अस्फुटा विभावना, तया च पार्वत्या स्वाभाविक सुषमातिशयो व्यज्यते। प्रकाशिकाविवरणकारौ परिवृत्तिमप्याहतुः, साप्यस्फुटैव।

**प्रतिक्षण सा कृतरोमविक्रिया व्रताय मौञ्जीं त्रिगुणा बभार याम्।**
**अकारि तत्पूर्वनिबद्धया तया सरागमस्या रशनागुणास्पदम् ॥ १० ॥**

अ०—सा व्रताय प्रतिक्षणम् कृतरोमविक्रियाम् त्रिगुणाम् याम् मौञ्जीम् बभार, तत्पूर्वनिबद्धया तया अस्या रशनागुणास्पदम् सरागम् अकारि।

व्याक—क्षणे क्षणे प्रतिक्षणम्, वीप्सायामव्ययीभावः। कृता रोम्णा विक्रिया यया ताम् कृतरोमविक्रियाम्, विक्रियाशब्दे करोते "कृञ श च" इति शप्रत्यय। भावे "सार्वधातुके यक्" "रिङ् शयग्लिङ्क्षु" इति ऋतो रिङादेश। त्रयो गुणा यस्यास्ताम् त्रिगुणाम्, गुणशब्दोऽत्र आवृत्तिपर। तदेव पूर्वं यस्य तत् तत्पूर्वम्, तत्पूर्वं यथा तथा निबद्धया तत्पूर्वनिबद्धया, केवलसमास। निबद्ध-शब्दे कर्मणि क्त.। अथवा निबद्धशब्द भावक्तान्त प्रकल्प्य तदेव पूर्वं निबद्ध (निबन्धनम्-धारणम्) यस्या तयेति बहुव्रीहि। रशनायाः गुणस्य आस्पद रशनागुणास्पदम्, 'आस्पद प्रतिष्ठायाम्' इति सुट्। मौञ्जीम्-मुञ्जशब्दाद् वि-

* स्वादुप्रियौ तु मधुरौ—इत्यमर। † द्विरेफपुष्पलिड्भृङ्गषट्पदभ्रमरालय इत्यमर। ‡ शैवलश्चैव शैवाल शैवलो जलनीलिका—इति वाचस्पति।

कारार्थेऽण्, ततो ङीप् । बभार-भरतेर्बिभर्तेर्वा लिट् । अकारि-कर्मणि लुङ् 'चिण् भावकर्मणो ' ।

व्याख्या—सा-पार्वती, व्रताय-तपसे, प्रतिक्षणम्-क्षणे क्षणे कृता-(कर्कशत्वाद्) विहिता, रोमविक्रिया-रोमाञ्च यया तथाभूताम्, त्रिगुणाम्-त्रिरावृत्ताम्, याम्, मौञ्जीम्-मुञ्जतृणनिर्मिता मेखलाम्, बभार-धारितवती, तदेव पूर्वम्-प्रथमम् यस्य तद् यथा तथा निबद्धया धारितया, अथवा तदेव, पूर्वम्-प्रथमम् निबद्धम् धारणं यस्या तथाभूतया, पूर्वं कदाप्यधृतया, तया-मौञ्ज्या, अस्या -पार्वत्या , रशनाया*-कटिभूषणस्य, गुण -सूत्रम्, तस्य, आस्पदम्-स्थानम्, जघनमितियावत्, सरागम-लोहितम्, अकारि-कृतम् ।

भा०—यत्र कटिप्रदेशे पार्वती क्षौमादिनिर्मिता काञ्चा धारयति स्म, तपःपरायणा तत्र मुञ्जतृणनिर्मिता त्रिरावृत्ता प्रखरा मेखला दधार, यया अस्या प्रतिक्षणं रोमाञ्चो जायते स्म । किञ्चेत पूर्वमधृतया अनया मौञ्ज्या अस्या कटिप्रदेश सघर्षणेन रक्त. कृत ।

अल०— तत्पूर्वनिबद्धयेति, त्रिगुणामिति च रागकरणे रोमविकारकरणे च हेतुतया साभिप्रायमिति परिकर । रशनागुणस्थानमित्युक्त्या रशनास्थाने सा धृतेति परिवृत्तिर्व्यज्यत इति प्रकाशिका । अत्र विवरणकारो नायकवृत्तान्तप्रतीत्या समासोक्तिमपि दर्शयति, 'यथा कश्चित्कामी कयाचिन्नायिकया पूर्वं चिरसगत. सन्, अपूर्वया अधिकगुणयान्यया सगत सुतरा रक्तो भवति, तत्सयोगे प्रतिक्षणमुद्भूतरोमाञ्चोऽपि भवति, तथास्या कटिप्रदेशो रशनया चिरसगत सन् त्रिगुणया तत्पूर्वनिबद्धया विहितरोमाञ्चया मौञ्ज्या नितरा सरागो विहित ' इति । वस्तुतस्तु नात्र समासोक्ते स्वारस्यम्, तप प्रसङ्गे तथाविधशृङ्गारस्मृतेरप्यननुगुणत्वात् । यदि चैव बोधने महाकवेरभिप्रायोऽभविष्यत्, तर्हि न स मौञ्जीधारणे पार्वत्या कर्तृत्वमकल्पयिष्यत् । नापि कटिप्रदेश 'रशनागुणास्पदम्' इति नपुसकत्वेन निरदेक्ष्यत् । तस्मात्कल्पनामात्रमेवेद विवरणकृत प्रतिभाति ।

---

* स्त्री कट्या मेखला काञ्ची सप्तकी रशना तथा—इत्यमर । रशनाशब्दोऽय दन्त्यमध्योऽपि, तेन क्वचित् 'रसनागुणास्पदम्' इति पाठोऽपि व्याख्यात. ।

विसृष्टरागादधरान्निवर्तित. स्तनाङ्गरागारुणिताच्च कन्दुकात् ।
कुशाङ्कुरादानपरिक्षताङ्गुलिः कृतोऽक्षसूत्रप्रणयी तया करः ॥११॥

अ०—तया विसृष्टरागाद् अधराद् स्तनाङ्गरागारुणिताद् कन्दुकाद् च निवर्तित. करः कुशाङ्कुरादानपरिक्षताङ्गुलि अक्षसूत्रप्रणयी (च) कृतः ।

व्याक०—विसृष्ट रागो यस्य तस्माद् विसृष्टरागाद्, रागशब्दे रञ्जेर्घञ् । स्तनयो अङ्गरागेण अरुणिताद् स्तनाङ्गरागारुणिताद्, अरुणितशब्दे गुणवाचकाद् अरुणशब्दात् तरकादित्वादितच् । अथवा गुणिवाचकाद् अरुणशब्दात् तत्करोतीति णिच्, तदन्तात् क्त । कुशस्य अङ्कुराणाम् आदानेन परिक्षता अङ्गुलयो यस्य स कुशाङ्कुरादानपरिक्षताङ्गुलि । अक्षाणा सूत्रस्य प्रणयी अक्षसूत्रप्रणयी । प्रणयिशब्दे नयते "एरच्" तत "अत इनिठनौ"। निवर्तित -वर्ततेर्णिजन्तात्-कर्मणि क्त· । तयेति करोतेः कर्तरि तृतीया । अधरात्, कन्दुकाद् इति पञ्चम्यौ अपादाने ।

व्याख्या—तया गौर्या, विसृष्ट त्यक्त·, राग लाक्षारसेन रञ्जनं यस्य, तस्माद्, अधराद् अधरोष्ठात्, स्तनयो -कुचयो , ( लग्नेन ) अङ्गरागेण विलेपनेन, अरुणिताद्-रक्तीकृतात्, ( उत्पत्य पतन कन्दुकस्य यदा भवति, तदा उच्छ्रितयो कुचयो सक्त तत्तदङ्गरागारुणं जायते ) कन्दुकाच्च, निवर्तितः-वारित , कर हस्त , कुशस्य दर्भस्य, अङ्कुराणाम् ( कण्टकितानाम् ) प्ररोहाणाम्, आदानेन ग्रहणेन, परिक्षता.-सञ्जातव्रणा , अङ्गुलयो यस्य तथाभूत , अक्षसूत्रस्य रुद्राक्षमालाया·, प्रणयी प्रेमवान्, सहचरश्च, कृत - विहित ।

भा०—पार्वत्या. कर. पूर्वं सुकोमलेऽधरे लाक्षारसादिरञ्जनम्, कन्दुकक्रीडा चेति सुकुमारतरान् व्यापारानन्वतिष्ठत् । तप.काले तु स कर्कशतर कुशोत्पाटने अक्षमालाया. सतत चालने च विनियुक्त. । अय सार.-यत् तप -परायणा पार्वती सर्वविध शरीरालङ्करण मुमोच, अधरोष्ठस्य लाक्षारसेन रञ्जनं तत्याज,चन्दनाद्यङ्गविलेपनाद् विरराम, मनोविनोदाय कन्दुकक्रीडा च परिजहार, किं च मुनिव्रताचरणाय कण्टकिनः कुशान् लुलाव, येषा कण्टकै तस्या

• निसृष्टरागाद् इति प्रकाशिकादौ । अर्थस्तु स एव ।

कराङ्गुलयः परिचिता अभवन्, आनिश रुद्राक्षमालया जजाप चेति ।

अल०—एकस्यैव करस्य पर्यायेण (क्रमशः)अधराद्यनेकाधारसम्बन्धवो-र्ण-नात् पर्यायालङ्कार । परिवृत्तिर्व्यङ्ग्येति प्रकाशिकाविवरणयोः । तपोवीर. प्रधा-नम् ।

**महार्हशय्यापरिवर्तनच्युतैः स्वकेशपुष्पैरपि या स्म दूयते ।**
**अशेत सा बाहुलतोपधायिनी निषेदुषी स्थण्डिल एव केवले ॥१२॥**

अ०—या महार्हशय्यापरिवर्तनच्युतैः स्वकेशपुष्पैः अपि दूयते स्म सा बाहुल-तोपधायिनी (सती) केवले स्थण्डिले एव अशेत (तत्रैव च) निषेदुषी ।

व्याक०—महान् अर्हो यस्याः (बहु०) तस्याः शय्यायाः (कर्म) परिवर्तनैः (तत्पु०) च्युतानि (तत्पु०) महार्हशय्यापरिवर्तनच्युतानि, तैः । शय्याशब्दे शय्यतेऽत्रेति विग्रहे शीङ्धातोः "सञ्ज्ञायां समज" इत्यादिना क्यप्, "अयङ् यि क्ङिति" इत्यनेनायङ् । च्युतैः च्यवते क्तः । स्वस्याः केशानां पुष्पैः, स्वकेश-पुष्पैः, दूयते करणे तृतीया । बाहुलताम् उपधत्ते इति बाहुलतोपधायिनी, उपपदसमासः, दधातेर्णिनि, युगागम । दूयते स्म 'लट् स्मे' इति स्मयोगे लट् । अशेत शीङ्धातोः 'लङ्' । निषेदुषी-निषसादेति सीदतेः-"भाषायां सद-वसश्रुव" इति लिट. क्वसुरादेश । उगित्त्वात् ङीप् ।

व्याख्या—या-गिरिजा, महान्, अर्हो मूल्यं यस्याः तथाभूतायां श्रेष्ठायाम्, हंसतूलिकायास्तृतायाम्, शय्यायाम्-तल्पे, परिवर्तनैः-पार्श्वविवर्तनैः, च्युतानि पतितानि, तथाविधैः, स्वकेशानाम् स्वशिरोरुहाणाम्, पुष्पैरपि कुसुमैरपि, दूयते स्म-क्लेशं प्राप, सा, (तपश्चरणसमये) बाहुलताम्-भुजवल्लीम्-उपधत्ते-उपधानीं करोति-उपबर्हत्वेन उपयुङ्क्ते, इति तथाभूता सती, केवले-सस्तरणशून्ये, स्थ-ण्डिले भूमौ एव, अशेत शयनमकरोत्, तत्रैव निषेदुषी निषसाद-उपविवेश च ।

भा०—या पर्वतराजपुत्री पूर्वं मृदुतरतूलिकादिविराजिते कोमलोपबर्हसना-थिते बहुमूल्ये शयने निद्रासुखमन्वभूत्, तत्रापि च पुष्पस्पर्शेनापि यदङ्गेषु आघात इवाभूत्, पुष्पेभ्योऽपि कोमलतरत्वादङ्गानाम्, ईदृशी सुकुमारी सा इदानीं तपःप्रसङ्गेन अनास्तृतभूमौ स्वबाहुमेवोपधानीकृत्य स्वपिति, तत्रैवोपविश-ति च । भूमिशयनस्य तपोऽङ्गस्यानुष्ठानमनेनोक्तं भवति ।

अल०—अननुरूपयोर्घटनावर्णनाद्विषम । कष्टसहिष्णुतया तपस्युत्साहातिशयो व्यज्यते ।

**पुनर्ग्रहीतुं नियमस्थया तया द्वयेऽपि* निक्षेप इवार्पितं द्वयम् ।**
**लतासु तन्वीषु विलासचेष्टितं विलोल† दृष्टं हरिणाङ्गनासु च ॥१३॥**

अ०—नियमस्थया तया विलासचेष्टितं तन्वीषु लतासु च विलोलदृष्टम् हरिणाङ्गनासु इति द्वयं द्वये अपि पुन ग्रहीतु निक्षेप अर्पितमिव ।

व्याक०—नियमे तिष्ठतीति नियमस्था तया, "सुपि स्थ" इति कः । विलासेन चेष्टितं विलासरूप वा चेष्टितम्, विलासचेष्टितम्, चेष्टितमिति चेष्टतेः भावे क्त । विलोल दृष्टं विलोलदृष्टम्, दृष्टमिति पश्यते भावे क्त । हरिणानाम् अङ्गनासु हरिणाङ्गनासु । द्वये, द्वयम्-उभयत्र द्विशब्दात् तयप्, तस्य अयजादेश, पूर्वं सप्तम्यन्तम्, अपर प्रथमान्तम, । ग्रहीतुम-गृह्णाते "तुमुन्ण्वुलौ क्रियाया क्रियार्थायाम्" इति तुमुन्, निक्षेप क्षिपतेर्घञ् । तयेति कर्तरि तृतीया ।

व्याख्या—नियमस्थया-व्रतवत्या, तया गिरिजया, विलासेन‡ स्त्रीणा स्वाभाविकेन (हावभेदेन) यच्चेष्टितम् अङ्गाना मनोहरो व्यापार, (स एव विलास इति विलासरूप चेष्टितमिति वा व्याख्येयम्) तत्, तन्वीषु-कृशासु, लतासु-मालत्यादिवल्लीषु, च कि च, विलोलदृष्टम्-चञ्चला दृष्टिः, हरिणाङ्गनासु-मृगीषु, इति (उक्तम्) द्वयम्, द्वयेऽपि उक्तद्वये (युगपत्) पुन प्रियसमागमकाले, ग्रहीतुम्-प्रत्यादातुम्, निक्षेप अर्पितमिव-न्यासरूपेण दत्त किमु ।

भा०—पर्वतशिखरे तपश्चरन्त्या पार्वत्या स्त्रीस्वभावसुलभो विलास, चञ्चला दृष्टिश्च नावलोक्यते स्म किन्तु तादृग् विलासादिक लतासु हरिणीषु च दृश्यते स्म, तत्र कविरुत्प्रेक्षते-यथा लोके कश्चित् कार्यान्तरप्रसङ्गेन स्वकीय वस्तु कञ्चित् कालम् अवधि कृत्वा अन्यस्य पार्श्वे न्यासरूपेण रक्षति, अवधिसमाप्तौ च तद् वस्तु ततो गृह्णाति, तथैव पार्वत्यापि तप प्रतिबन्धकीभूत विलासादिक तप समाप्तिपर्यन्त स्वप्रतिवेशिनीभ्यः लताभ्यो हरिणीभ्यश्च

---

* द्वयोषु-इति प्रकाशिका । † विलोलदृष्टि -इति विवरणम् ।

‡ यानस्थानासनादीना मुखनेत्रादिकर्मणाम् । विशेषस्तु विलास स्यादिष्टदर्शनादिना—इति दर्पणे ।

निक्षेपरूपेण अर्पितम्, तपःसमाप्तौ मा निक्षिप्त स्वकीय वस्तु ताभ्यो ग्रहीष्यति इति ।

अल०—व्रतस्थाया पार्वत्यामदृष्टयोर्लतादिस्थितयो विलासविलोलदृष्ट्यो पार्वत्यर्पितनिक्षेपत्वेन सम्भावनाद् उत्प्रेक्षा । पार्वत्या विलासादिकस्य लतादीना विलासादिकस्य च मिथ सादृश्य व्यङ्ग्यम् । नियमस्थयेत्यर्पणे साभिप्रायमिति परिकर । तपःसमाप्तौ यदा पार्वती स्वीय विलासादिक स्वीकरिष्यति, तदा लताद्या विलासरहिताः प्रत्येष्यन्ते, तदग्रे तद्विलासानमतिक्षुद्रमूल्यत्वादिति च व्यज्यते । द्वयोरेकधर्मोक्त्या तुल्ययोगितालङ्कार इति प्रकाशिका ।

**अतन्द्रिता सा स्वयमेव वृक्षकान् घटस्तनप्रस्र*वणैर्व्यवर्धयत् ।**

**गुहोऽपि येषा प्रथमाप्तजन्मना न पुत्रवात्सल्यमपाकरिष्यति ॥१४॥**

अ०—अतन्द्रिता सा स्वयम् एव वृक्षकान् घटस्तनप्रस्रवणै व्यवर्धयत्, गुहः अपि प्रथमाप्तजन्मनाम् येषाम् पुत्रवात्सल्यम् न अपाकरिष्यति ।

व्याक०—न तन्द्रिता-अतन्द्रिता । तन्द्रिता 'तन्द्रा सजाता अस्या , इति तन्द्राशब्दात् "तदस्य सजातमिति तारकादिभ्य इतच्" । घटौ एव स्तनौ, तयो प्रस्रवणै घटस्तनप्रस्रवणै । प्रस्रवणशब्दे प्रस्रवन्तीति स्रवते कर्तरि ल्यु.। अथवा घटस्तनाविव प्रस्रवणानि घटस्तनप्रस्रवणानि, अत्र पक्षे प्रस्रवणशब्दे प्रस्रवन्त्यस्मात् पयासि, इत्यपादाने ल्युट् । प्रथमम् आप्त जन्म यैस्तेषा प्रथमाप्तजन्मनाम् । पुत्रस्य वात्सल्य पुत्रवात्सल्यम्, पूरणगुणेत्यादिनिषेधस्तु न शङ्क्य , तस्यानित्यत्वात् । पुत्रोचित वात्सल्यमिति मध्यमपदलोपी तत्पुरुषो वास्तु । वृक्षकान्-वृक्षशब्दादल्पार्थे कन् । व्यवर्धयत्-णिजन्ताद् वर्धयतेर्लङ् । येषामिति पुत्रवात्सल्यस्य सम्बन्धसामान्ये षष्ठी । यद्विषयक वात्सल्यमित्यर्थ ।

व्याख्या—अतन्द्रिता अनलसा, सा पार्वती, स्वयमेव-आत्मनैव, (न तु परिजनद्वारेण) वृक्षकान-स्वल्पस्वल्पान् पादपान्, घटस्तनयो -स्तनरूपयो घटयो , प्रस्रवणै -प्रसृतै पयोभि , अथवा घटस्तनाविव प्रस्रवणानि-निर्झरा , तै , व्यवर्धयत् अपोषयत्-असिचत् । गुह.-(पश्चाज्जनिष्यमाण ) कुमारोऽपि, प्रथमम्-

* घटस्तनप्रस्रविनी, घटस्तनप्रस्रविणी इति वा विवरणे । प्रस्रविनी सती पार्वती व्यवर्धयत् इति पार्वतीविशेषणम् ।

पूर्वम्, आसम्-प्राप्तम्, जन्म-उत्पत्तिर्यैस्तेषाम्-अग्रजानाम्, येषाम् वृक्षाणाम्, (वृक्षविषयकम्) पुत्रवात्सल्यम्-पुत्रप्रेम, न अपाकरिष्यति-न निवर्तयिष्यति ।

भा०—अतस्था पार्वती आलस्यं दूरतस्तत्याज, तत्रत्यान् स्वल्पस्वल्पान् पादपान् स्वयमानीतै कलशजलै सिषेच, 'स्वयदासास्तपस्विन' इति न्यायात्। स्वसवर्धितेषु तेषु पादपेषु पार्वत्यास्तथाविध दृढ पुत्रवात्सल्य सञ्जातम्, यदनुभूय कविस्तर्कयति-यद् यदा पार्वत्या कार्तिकेयो नाम औरस पुत्र सञ्जनिष्यते, त दृष्ट्वापि तस्या एतेषु पादपेषु तत् पुत्रवात्सल्यं न निवर्तिष्यते । यत सा तान् स्वज्येष्ठपुत्रत्वेन निरीक्षते ।

अल०—घटे स्तनत्वारोपाद्रूपकम्, न तु लुप्तोपमा । 'पुत्रवात्सल्यम्' इत्युक्ते रूपकानुगुणत्वात् । गुहस्यातिविशिष्टस्यैषु पुत्रस्नेहापाकरणयोग्यतायामपि तन्निषेधाद्विरोध इति प्रकाशिका ।

*अरण्यबीजाञ्जलिदानलालितास्तथा च तस्या हरिणा विशश्वसु ।
यथा तदीयैर्नयनै कुतूहलात् पुर सखीनाममिमीत लोचने ॥ १५ ॥

अ०—(किं) च अरण्यबीजाञ्जलिदानलालिता हरिणा तस्याम् तथा विशश्वसुः यथा (सा) कुतूहलात् तदीयै नयनै. पुर. सखीनाम् लोचने अमिमीत ।

व्याक०—अरण्यस्य बीजानाम् अञ्जले दानेन लालिता. अरण्यबीजाञ्जलिदानलालिता । लालिता इति णिजन्ताल्ललधातोः क्त । विशश्वसु'-श्वसितेर्लिट् । अमिमीत 'माङ् माने शब्दे च' धातोर्लङ्, शप. श्लु, "श्लौ" इति द्वित्वम् । लोचने इति । मानक्रियाकर्मणि द्वितीया । नयनै -मानक्रियाकरणे सहयोगे वा तृतीया । कुतूहलादिति हेतौ पञ्चमी ।

व्याख्या—किं च, अरण्यबीजानाम्-कर्षणादिना विनैवारण्ये प्ररोहणशीलाना नीवारादीनाम्, † अञ्जले -पाणिद्वयपरिमितस्य भागस्य, दानेन वितरणेन, लालिता -पालिता', हरिणा -मृगा, तस्याम्-पार्वत्याम्, तथा-तेन

---

* 'आरण्यबीजे' ति तु काचित्कोऽपपाठ । वृत्तभङ्गापत्ते ।

† 'पाणिर्निकुब्जः प्रसृतिस्तौ युतावञ्जलि. पुमान्—इत्यमरः ।

प्रकारेण, विशश्वसु विश्वास प्रापु, यथा, सा पार्वती, कुतूहलात् कौतुकात्, तदीयैः मृगाणाम्, नयनैः-नेत्रै, पुर -अग्रे ( वर्तमानानाम् ) सखीनाम्-सहचरीणाम्, लोचने नेत्रे, अमिमीत द्वयोस्तुलनामकरोत् । केचित्तु सखीना पुर-अग्रे ( स्वकीये एव ) लोचने अमिमीतेत्येव व्याचक्षते । पर पार्वत्या स्वनेत्र सौन्दर्यगर्वस्तेन व्यञ्जित. स्यात्, स च व्रतस्थाया अनुचित इति पूर्वव व्याख्या युक्ता भाति ।

भा०—पार्वती नीवारश्यामाकादिभिर्मुनिधान्यैर्हरिणान् पुपोष । नीवारा णामञ्जलिं तेभ्योऽदात्, न तु कणमात्रम् । ते हरिणास्तस्या तथा विश्वास प्रापु, यथा ते निर्भय तस्या समीपमाजग्मुः, सा च 'मम सहचरीणा नेत्रे विशाले, उतैतेषा हरिणानाम' इति जिज्ञासमाना कौतुकात् तेषा नेत्रे स्वाङ्गुल्यादिना परिममे, परन्तु परिमाणकरणसमये जायमानेष्यक्षिनिपीडने हरिणा न मनागपि क्षोभ प्रापु । अत्रैव तिरश्चा विश्वासस्य परा काष्ठा प्रतिपादयता कविकुलगुरुणा पार्वत्या महती अहिंसाप्रतिष्ठा व्यञ्जिता ।

अल०—अत्राप्रस्तुतेन कार्येण प्रस्तुतस्य कारणस्य विश्वासातिशयेन समीपस्थिते प्रतिपादनादप्रस्तुतप्रशसा । व्यङ्ग्यार्थो भावे दर्शित ।

**कृताभिषेका हुतजातवेदस त्वगुत्तरासङ्गवतीमधीतिनीम् ।**
**दिदृक्षवस्तामृषयोऽभ्युपागमन्न धर्मवृद्धेषु वय समीक्ष्यते ॥ १६ ॥**

अ०—कृताभिषेकाम् हुतजातवेदसम् त्वगुत्तरासङ्गवतीम् अधीतिनीम् ताम् दिदृक्षव ऋषयः अभ्युपागमन्, धर्मवृद्धेषु वय न समीक्ष्यते ।

व्याक०—कृत. अभिषेको यया ता कृताभिषेकाम् । हुतः जातवेदा यया ता हुतजातवेदसम् । त्वचा उत्तरासङ्गवतीम् त्वगुत्तरासङ्गवतीम्, त्वचेति प्रकृत्यादित्वात्तृतीया, अथवा त्वगेवोत्तरासङ्गोऽस्या अस्तीति तत्पुरुषान्मतुप् । धर्मेण वृद्धेषु धर्मवृद्धेषु । अधीतिनीम्-अधीतमस्या अस्तीति विग्रह' । इङ् धातोः क्त, तत "इष्टादिभ्यश्च" इति 'इनि' । दिदृक्षव पश्यते सन्नन्तादु । तामिति दर्शनकर्मणि द्वितीया, 'न लोकेति' षष्ठया निषेधात् । सर्वाणि द्वितीयान्तानि तामित्यस्य विशेषणानि । अभ्युपागमन्-गच्छतेर्लुङि प्रथमपुरुषबहुवचनम् । 'अभि' 'उप' 'आ' इत्युपसर्गत्रयम् । समीक्ष्यते-

ईक्षते कर्मणि लट् । वय इति ईक्षणस्य उक्ते कर्मणि प्रथमा । विद्वद्भिरिति कर्तृपदमध्याहार्यम् ।

व्याख्या—कृत विहित , अभिषेक -स्नान ( अर्थात् प्रत्यह त्रिवारम् ) यया तथाभूताम्, हुत -तर्पित , जातवेदा -अग्निर्यया तथाभूताम्, कृतहोमाम्, त्वचा वल्कलेन, उत्तरासङ्गवतीम् उत्तरीयवतीम्, अथवा त्वगेव उत्तरासङ्गः- उत्तरीयवस्त्रम्, तद्वतीम्, वृक्षत्वच परिदधतीम्, उपरि दधतीं च, अधीतिनीम्-स्वाध्याय कुर्वतीम्, ताम्-पार्वतीम्, दिदृक्षव द्रष्टुमिच्छव , ऋषय.- अरण्यस्था दीर्घतपसोऽपि, अभ्युपागमन् तस्या समीपमागतवन्त । ज्येष्ठेन कनिष्ठस्योपसत्तिरनुचितेति शङ्का निवर्तयितुमाह-धर्मेण-साधुकर्मणा, वृद्धेषु- ज्येष्ठेषु, वय.-अवस्था, न समीक्ष्यते-न विचार्यते न प्रमाणीक्रियते इति यावत् ।

भा०—पार्वत्या प्रत्यह त्रिषवणेन ( वारत्रय स्नानेन ) शरीरशुद्धिः सपादिता, तपोऽङ्गेन हवनेन उत्तरीयस्याप्यनुरागत्यागेनान्त करणशुद्धि , प्रत्यहमध्ययनेन चात्मशुद्धि । तेन च वैराग्यवृद्धत्वम् ( त्वगुत्तरासङ्गवतीमिति विशेषणसूचितम् ) ज्ञानवृद्धत्वम् ( अधीतिनीम ) शीलवृद्धत्व चास्या प्रतिष्ठितमित्यस्या दर्शनार्थमुपदेशश्रवणार्थं च ऋषयोऽप्यस्या आश्रममागच्छन् । ननु वयसा कनिष्ठाया पार्वत्या समीपे वयोवृद्धानामृषीणाम् ( सेवार्थम् ) आगमनमनुचितमिव भाति, नैतत्, सेव्यसेवकभावविचारे धर्मवृद्धस्यैव सेव्यतास्वीकारात्, अल्पवयस्काया अपि धर्मेण वृद्धाया पार्वत्या समीपे ऋषीणामागमनं नानुचितमिति ।

अल०—सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः । सर्वाणि विशेषणानि दिदृक्षयागमने प्रयोजकानि साभिप्रायाणीति परिकरश्च ।

**विरोधिसत्त्वोज्झितपूर्वमत्सर द्रुमैरभीष्टप्रसवार्चितातिथि ।**
**नवोटजाभ्यन्तरसभृतानल तपोवन *तच्च बभूव पावनम् ॥१७॥**

अ०—(किं) च विरोधिसत्त्वोज्झितपूर्वमत्सरम् द्रुमै अभीष्टप्रसवार्चितातिथि नवोटजाभ्यन्तरसभृतानलम् तत् तपोवनम् पावनम् बभूव ।

व्याक०—विरोधिभि. सत्त्वै. ( कर्म० ) उज्झित. ( तत्पु० ) पूर्व.

* 'तत्र' इति पाठान्तरम् ।

मत्सर यस्मिन् ( वहु० ) तद् विरोधिसत्त्वोज्झितपूर्वमत्सरम् । विरोधिशब्दे- रुन्धेस्ताच्छील्ये णिनि , अथवा घञन्ताद् विरोधशब्दाद् मत्वर्थीय इनि । उज्झित इति उज्झतेः क्त । अभीष्टै प्रसवै ( कर्म० ) अर्चिता (तत्पु०) अतिथयो यस्मिन् ( वहु० ) तद् अभीष्टप्रसवार्चितातिथि । अभीष्टशब्दे- अभिपूर्वाद् इच्छते क्त । प्रसवशब्दे षूङ् धातो "ऋदोरप्" । नवानाम् उटजानाम् अभ्यन्तरे सभृता अनला यत्र तद् नवोटजाभ्यन्तरसमृतानलम् । द्रुमै -अर्चनक्रियाया करणे कर्तृत्वेन विवक्षिते तृतीया ।

व्याख्या—किं च, विरोधिभि -अन्योन्य प्रति स्वाभाविक शत्रुभाव दधद्भि , सत्त्वैः-जीवैः-गोव्याघ्रादिभि॰, उज्झित॰—त्यक्त॰, पूर्व -अनादि- सिद्धः, मत्सर -द्वेषो यस्मिन् तथाभूतम्-हिंसारहितम्, द्रुमै -वृक्षै , (कर्तृभि ) अभीष्टैः-प्रियै मनोहरै॰, †प्रसवै -फलैः पुष्पैश्च, अर्चिता -सत्कृता -अतिथय - अभ्यागताः, यस्मिन् तथाभूतम्, नवानाम्-नूतननिर्मितानाम्, उटजानाम्- पर्णशालानाम्, अभ्यन्तरे, सभृताः-आहिता , अनला -अग्नय , यत्र तथाभूतम्, तद्-गौरीशिखरस्थ-तपोवनम्, पावनम् पवित्रम्, वभूव-जातम् ।

भा०—तत्र गौरीशिखरे पार्वत्यास्तप प्रभावेन न केवल तदाश्रमस्य, अपि तु सर्वस्यापि तपोवनस्य परा पवित्रतासीत्, यद्दर्शनादप्यन्येषा पवित्रता सम्भवति स्म । अस्यास्तप प्रभावेनैव विरोधिभिजावै -गोव्याघ्रेण, सिंहहरिणेन, सर्पमयूरेण चेत्यादिभि स्वाभाविको विरोधस्त्यक्त॰, वृक्षा यथेष्ट फलानि पुष्पाणि चोत्पाद्यातिथीन् परिचेरु , अभिनवाश्च वहवस्तपस्विनो जाता , येन नवेषूटजेषु अग्नय आधीयन्ते स्म ।

अल०—पावनत्वप्रयोजकानि साभिप्रायाणि विशेषणानीति पूर्ववत्परिकर । तप प्रभावातिशयो व्यङ्ग्य ।

यदा फल पूर्वतप. समाधिना न तावता लभ्यममस्त काङ्‍†क्षितम् ।

† स्यादुत्पादे फले पुष्पे प्रसवो गर्भमोचने-इत्यमर ।

* 'सर्वसमा समाधिना' इति प्रकाशिकाविवरणयोः । सर्वत्र-शीतोष्णप्रिया प्रियादिषु समा तुल्यवृत्ति पार्वतीति तद्व्याख्यानम् ।

† 'वाञ्छितम्' इति पाठान्तरम् ।

**तदानपेक्ष्य स्वशरीरमार्दव तपो महत् सा चरितु प्रचक्रमे ॥१८॥**

प्र०—सा यदा तावता पूर्वतप समाधिना काङ्क्षितम् फलम् लभ्यम् न अमस्त, तदा स्वशरीरमार्दवम् अनपेक्ष्य महत् तप॰ चरितुम् प्रचक्रमे।

व्याक०—पूर्वेण तपस समाधिना पूर्वतपःसमाधिना। स्वस्या शरीरस्य मार्दव स्वशरीरमार्दवम। मार्दवशब्दे मृदुशब्दाद् "इगन्ताच्च लघुपूर्वात्" इति भावेऽण्। अनपेक्ष्य-अपपूर्वाद् ईक्षतेर्ल्यप, ल्यबन्तस्य नञा समास। यदा तदा यत्तच्छब्दाभ्या कालार्थे दा। तावता-तच्छब्दात् परिमाणे वतु। "आ सर्वनाम्न"। काङ्क्षितम-काङ्क्षते क्त। लभ्यम-"पोरदुपधात्" इति लभे शक्यार्थे यत्। अमस्त-मन्यतेर्लुङि रूपम्। प्रचक्रमे क्राम्यतेर्लिट् "प्रोपाभ्या समर्थाभ्याम्" इत्यात्मनेपदम्। समाधिनेति लभते करणे तृतीया।

व्याख्या—सा-पार्वती, यदा यस्मिन् काले, तावता तावत्परिमाणेन, पूर्वेण-पूर्ववर्णितप्रकारेण, तप समाधिना तपोनियमेन, काङ्क्षितम्-अभिलषितम्, फलम-शिवप्रसादरूपम्, लभ्यम् प्राप्तु शक्यम्, न अमस्त न विचारयति स्म। तदा-तस्मिन्नेव काले, स्वशरीरस्य-स्ववपुष, मार्दवम्-कोमलत्वम, अनपेक्ष्य-अविगणय्य, महद्-अधिकम, तप-तपश्चर्याम्, चरितुम् कर्तुम, प्रचक्रमे-प्रारेभे।

भा०—यदा चिर तप्त्वा पार्वत्या चिन्तितम-यदीदृशेन लघुना तपसा ममेष्टसिद्धिर्न भविष्यति इति, तदा सा शरीरस्थितिमनपेक्ष्य घोरे तपसि प्रवृत्ताभूत्।

अल—महत्तपश्चरणे कारणोपन्यासात्काव्यलिङ्गम्।

**क्लम ययौ कन्दुकलीलयाऽपि* या तया मुनीना चरित व्यगाह्यत।**
**ध्रुव वपु. †काञ्चनपद्मनिर्मित मृदु प्रकृत्या च ससारमेव च ॥१९॥**

---

* 'कन्दुकसेवया' इति पाठान्तरम्। पर सेवायाः क्लमजनकत्वस्याभाव्याद-पिशब्दघटिते विरोधाभिप्रायकेऽत्र वाक्ये नास्य पाठस्य स्वारस्यम्, लीलाशब्द एवात्र समुचिततर।

† 'काञ्चनपद्मधर्मि' इति प्रकाशिकाविवरणयो.। वपुर्विशेषणमेव। काञ्चन-पद्मसमानमित्यर्थं।

अ०—या कन्दुकलीलया अपि क्लमं ययौ, तया मुनीनाम् चरितम् व्यगाह्यत। ध्रुवम् (अस्याः) वपुः काञ्चनपद्मनिर्मितम् (अस्ति) (यदिदम्) प्रकृत्या मृदु च ससारम् एव च (अस्ति)

व्याक०—कन्दुकेन कन्दुकस्य वा लीलया कन्दुकलीलया । क्लमसाधने तृतीया । काञ्चनस्य पद्मेन निर्मितं काञ्चनपद्मनिर्मितम् । निर्मितम्-निर्पूर्वात् माते क्तः, "द्यतिस्यतिमास्थामित्ति किति" इतीत्वम् । सारेण सह वर्तते इति ससारम् । यद्वा-सह विद्यते सारो यस्मिंस्तत् ससारमिति अन्यपदार्थे बहुव्रीहिः । व्यगाह्यत गाहते. कर्मणि लङ् । तयेति गाहते. अनुक्ते कर्तरि तृतीया । प्रकृत्या-प्रकृत्यादित्वात् तृतीया । एवकारोऽप्यर्थे, अयोगव्यवच्छेदार्थो वा ।

व्याख्या—या-पार्वती, कन्दुकलीलया-कन्दुकक्रीडयापि, क्लमम्-श्रमम्-ग्लानिम्, ययौ-प्राप, तया, मुनीना चरितम्-अतिकठिन तप, व्यगाह्यत-अक्रियतेत्यर्थः । ध्रुवम्-निश्चितम्, अस्या.-देव्या., वपु.-शरीरम्, काञ्चनपद्मेन-स्वर्णकमलेन, निर्मितम्-रचितम्, अस्ति, यदिदम्, प्रकृत्या-स्वभावेन पद्मस्वभावेन सुवर्णस्वभावेन च, मृदु च-कोमल च, ससारमेव च-कठिनमपि च, अस्तीति शेष । अरुणाचलनाथस्तु 'काञ्चनपद्मधर्मि' इति पाठ मत्वा 'यद्वपुः काञ्चनपद्मधर्मि भवति, तत्प्रकृत्या मृदु च ससार च भवतीति' सामान्यपरतया व्याचख्यौ ।

भा०—पार्वत्या कठिनतप.प्रवृत्तिं साश्चर्यमाह कवि -यत् कन्दुकक्रीडामात्रेणापि यस्या. शरीरे श्रान्तिरुदभूत्, तया विशिष्टमुनिसपाद्य परम तप कर्तुमारब्धम् । तत्रैवोत्प्रेक्षते-यन्नून तस्या शरीर काञ्चनपद्मेन निर्मितमस्ति-यत्पद्मधर्मेण सुकुमारम्, सुवर्णधर्मेण कठोरमपि च वर्तते ।

अल०—पार्वत्या शरीरे कठिनतप प्रवृत्तिं हेतूकृत्य काञ्चनपद्मनिर्मितत्वमुत्प्रेक्षितमित्युत्प्रेक्षा मल्लिनाथ आह । अरुणाचलनाथस्तु पाठान्तरानुसारेण काञ्चनपद्मधर्मित्वस्य ससारत्वेन व्याप्ति प्रदर्शितेत्यर्थान्तरन्यासप्रकारोऽयमित्याह । तपोवीरे मुख्ये विस्मयोऽत्र सञ्चारी ।

**शुचौ चतुर्णां ज्वलता *हविर्भुजा शुचिस्मिता मध्यगता सुमध्यमा ।**
**विजित्य नेत्रप्रतिघातिनीं प्रभामनन्यदृष्टिः सवितारमैक्षत ॥ २० ॥**

अ०—शुचौ ज्वलताम् चतुर्णाम् हविर्भुजाम् मध्यगता शुचिस्मिता सुमध्यमा ( पार्वती ) नेत्रप्रतिघातिनीम् प्रभाम् विजित्य अनन्यदृष्टि ( सती ) सवितारम् ऐक्षत ।

व्याक—हविर्भुञ्जते इति हविर्भुजः, तेषाम् । शुचि स्मितम् यस्याः सा शुचिस्मिता । शोभन. मध्यमो यस्याः सा सुमध्यमा, मध्यमशब्दे "मध्यान्म" । नेत्रे प्रतिहन्तीति नेत्रप्रतिघातिनी, ताम्, हन्तेर्णिनि, हस्य घ., "हनस्तोऽचिण्णलो" इति नस्य त । न अन्यस्मिन् दृष्टिः यस्याः सा अनन्यदृष्टि ।

व्याख्या—†शुचौ-ग्रीष्मे, ज्वलताम्-दीप्तिमताम्, चतुर्णाम्-चतुर्दिगवस्थिताना चतु.सख्याकानाम्, हविर्भुजाम् अग्नीनाम, मध्यगता-मध्ये स्थिता, शुचि-स्वच्छम्, स्मितम-मन्दहासो यस्यास्तथाभूता, सुमध्यमा-शोभनमध्यदेशा, पार्वती, नेत्रे नयने, प्रतिहन्ति-( प्रखरतया ) प्रतिबध्नाति, इति तथाभूताम्-( सवितुः ) प्रभाम्-तेज, विजित्य सहनेन परिभाव्य, अनन्यदृष्टि -सूर्यादितरन्न पश्यन्ती सती, सवितारम-सूर्यम्, ऐक्षत-अवालोकत ।

भा०—'ग्रीष्मे पञ्चाग्निमध्यस्थ' इति शास्त्रमनुसृत्य पञ्चाग्नितपस्तया प्रारब्धम् । चतुर्ष्वपु दिक्षु चत्वारोऽग्नय, पञ्चमस्तु सवितेति पञ्चाग्नयस्तत्र प्रसिद्धा । तेनैव क्रमेणाग्निचतुष्टयमध्यगतयानया सवितरि निश्चला दृष्टि स्थापिता । यद्यपि 'सुमध्यमा' ( कृशमध्यदेशा ) इयमिति ईदृशेन तपसा परा ग्लानिरस्या सम्भाविता, तथापि सा तथाविधेऽपि तपसि वर्तमाना 'शुचिस्मिता', तेन खेदाभावो ध्वनितः । न च नेत्रे अप्यस्या सूर्यं पश्यन्त्या प्रतिहते इत्यहो ।

---

* ज्वलता शुचिस्मिता, हविर्भुजा मध्यगता इति पाठान्तरम् ।

† शुचिर्ग्रीष्माग्निशृङ्गारेष्वाषाढे शुद्धमन्त्रिणि, ज्येष्ठे च पुंसि धवले शुद्धेऽनुपहते त्रिषु । इति मेदिनी ।

अल०—विशेषणयो साभिप्रायत्वात्परिकर । सत्यपि क्रमहेतौ क्लमाभावो व्यञ्जित इति व्यङ्ग्या विशेषोक्ति श्रीमन्नारायण सूचयति।

**तथाभितप्तं सवितुर्गभस्तिभिर्मुखं तदीयं कमलश्रियं दधौ।**
**अपाङ्गयो. केवलमस्य दीर्घयो शनै शनै श्यामिकया कृतं पदम् ॥२१॥**

अ०—सवितु गभस्तिभि: तथा अभितप्तम् तदीयम् मुखम् कमलश्रियम् दधौ, श्यामिकया केवलम् अस्य दीर्घयो अपाङ्गयो शनै शनै, पदम् कृतम्।

व्याक०—सवितु -सूधातोस्तृच्, गभस्तिसम्बन्धे षष्ठी । अभितप्तम्-अभिपूर्वात् तपे क्त । दधौ-दधातेर्लिट्। श्यामिकया-करोते कर्तरि तृतीया। केवलशब्दोऽन्ययोगव्यवच्छेदार्थे ।

व्याख्या—सवितु -सूर्यस्य, गभस्तिभि -किरणै., तथा-पूर्वोक्तप्रकारेण, अभितप्तम्-आभिमुख्येन तप्तम्, तदीयम्-तस्या पार्वत्या., मुखम्-आननम्, कमलश्रियम्-कमलशोभाम्, दधौ-धारयामास, श्यामिकया-रवितापजन्यकालिम्ना, केवलम्, अस्य-पार्वत्या मुखस्य, दीर्घयो विस्तीर्णयो, अपाङ्गयो -नेत्रप्रान्तयोरेव, शनै. शनै -मन्द मन्दम्, पदम्-स्थानम्, कृतम्।

भा०—सूर्याभिमुख सतत निरीक्षणेऽपि मुखे कापि विकृतिस्तस्या नाभूत्, प्रत्युत यथा सूर्यांशुभि स्पृष्ट कमल नितरा शोभते, तथा तन्मुखमप्यशोभत । कालिमा तु तत्रावकाशमलभमान. सुकुमारतरयोर्नेत्रप्रान्तयो शनै प्रावर्तत । तेन च नेत्रप्रान्तयो शोभैव, न तु म्लानत्वमिति द्योतित भवति। तापकृता विषादकृता वा श्यामिका मुखे नास्तीत्याकूतम्।

अल०—श्यामिका नेत्रप्रान्तयो.प्रवृत्ता, न मुखे-इति केवलशब्देन बोधनात्परिसङ्ख्यालङ्कार. । मुखेऽवकाशमलभमाना श्यामिका मुखसम्बन्धिनोर्नेत्रप्रान्तयो स्व बलं प्राकट्यादिति व्यङ्ग्यं प्रत्यनीक विवरणकार आह । 'अस्य' इति नेत्रप्रान्तयोर्मुखसम्बन्धितावोधन तत्र परमनुकूलम् । अभितप्तमपि मुख न म्लानमिति विरोधोऽपि व्यङ्ग्य.। 'कमलश्रियं दधौ' इति निदर्शनापि। कठिनेऽपि तपसि पार्वत्या हर्षो व्यज्यते ।

---

*—अतिनप्तम् इति मल्लिनाथव्याख्यायाम् ।

**अयाचितोपस्थितमम्बु केवल रसात्मकस्योडुपतेश्च रश्मय ।**
**बभूव तस्या किल पारणाविधिर्न वृक्षवृत्तिव्यतिरिक्त†साधन ॥२२**

अ०—अयाचितोपस्थितम् केवलम् अम्बु रसात्मकस्य उडुपते. रश्मयः च तस्या पारणाविधि बभूव किल, वृक्षवृत्तिव्यतिरिक्तसाधन (पारणाविधि ) न ( बभूव ) ।

व्याक०—न याचितमयाचितम्, तच्च तदुपस्थित च अयाचितोपस्थितम् । उपास्थितमिति तिष्ठते क्त , इत्वम् । रस आत्मा यस्य तस्य रसात्मकस्य "शेपाद् विभाषा ' इति कप् । उडूना पत्यु उडुपते । "पति. समास एव" इति घिसज्ञा । पारणाया विधि पारणाविधि , पारणाशब्दे पारयतेर्युच् । पारणैव वा विधि पारणाविधि । विधिरिति भावे कि । वृक्षाणा वृत्ते व्यतिरिक्त साधन यस्य स वृक्षवृत्तिव्यतिरिक्तसाधन· । वृत्तिशब्दे वर्तते करणे क्तिन् । व्यतिरिक्तशब्दे-' वि ' 'अति' एतत्पूर्वाद् रिचिर् धातोः क्त । विधेयस्य पारणाविधे प्राधान्याद् बभूवेत्येकवचनान्त क्रियापदम् ।

व्याख्या—अयाचितम्-अप्रार्थितमेव, उपस्थितम्-उपनतम्, केवलम्, वस्त्वन्तररहितम् अम्बु-( मेघ ) जलम्, रसात्मकस्य-जलमयस्य, उडुपते - चन्द्रमस , रश्मय. किरणाश्च, तस्या -पार्वत्या , पारणाविधि -भोजनकर्मसाधन बभूव, किल-एतत् पुराणादिषु प्रसिद्धम् । वृक्षाणाम् पादपानाम्, वृत्ते -जीवनोपायाद् ( अप्रार्थितोपनताद् मेघोदकाद् इन्दुकिरणेभ्यश्च ) व्यतिरिक्तम्-भिन्नम्, साधनम्-उपायो यस्य तथाभूत., पारणाविधि , न बभूव । पूर्वोक्तद्वयातिरिक्त तया न किमप्युपयुक्तमिति ।

भा०—पार्वत्या वृक्षवृत्तितप प्रारब्धम् । यथा वृक्षा केवलं मेघजल चन्द्ररश्मींश्चोपयुज्य जीवन्ति, न तु किमप्याहारान्तरम्, तथैव पार्वत्यपि पूर्वोक्त द्वयमेवोपजीवति स्म । न तु फलपुष्पादिक किमपि ।

---

* खलु इति पाठान्तरम् ।

† 'साधनम्' इति विवरणम् । वृक्षवृत्तिव्यतिरिक्त साधनमिति कर्मधारयलन्मते । तत्पारणाविधिर्न बभूवेत्यन्वय ।

अल०—आहारान्तरव्यावर्तनात्परिसंख्या। इह जलस्येन्दुरश्मीनां च पारणाक्रियासाधनत्वात्साध्यमावनयोरभेदेन निर्देशः, अम्बुरश्मिशब्दयोस्तत्साध्ये सारोपा शुद्धा लक्षणा, अम्बुरश्मिसाध्यः पारणाविधिरित्यर्थ। साधनान्तरस्यात्यन्तिकी निवृत्तिर्लक्षणाफलमिति मल्लिनाथ। पारणाविधिशब्देन व्रतान्तभोजनं लक्ष्यते, इति तु प्रकाशिकाविवरणयो।

**निकामतप्ता *द्विविधेन वह्निना नभश्चरेणेन्धनसम्भृतेन सा।**
**तपात्यये वारिभिरुक्षिता नवैर्भुवा सहोष्माणममुञ्चदूर्ध्वगम् ॥२३॥**

अ०—नभश्चरेण इन्धनसम्भृतेन इति द्विविधेन वह्निना निकामतप्ता सा तपात्यये नवै. वारिभि उक्षिता (सती) भुवा सह ऊर्ध्वगम् ऊष्माणम् अमुञ्चत्।

व्याक०—द्वे †विधे यस्य तेन द्विविधेन। विधाशब्दे विपूर्वाद् दधाते. "आतश्चोपसर्गे" इत्यङ्। नभसि चरतीति नभश्चर, तेन, "चरेष्ट", उपपदसमास। इन्धनै संभृतेन इन्धनसम्भृतेन, इन्धनशब्दे इन्धे करणे ल्युट्। निकाम तप्ता निकामतप्ता, केवलसमास। तपस्य अत्यये तपात्यये, अत्ययशब्दे अतिपूर्वाद् एते "एरच्"। ऊर्ध्वं गच्छतीत्यूर्ध्वगम्-गच्छतेर्ड। उक्षिता-उक्षते क्त। वह्निनेति तपते कर्तरि तृतीया, वारिभिरित्युक्षते कर्तरि। भुवा-"सहयुक्तेऽप्रधाने" इत्यनेन तृतीया।

व्याख्या—नभश्चरेण-दिव्येन, आदित्यरूपेण, किं च, इन्धनै-काष्ठै., सम्भृतेन-प्रदीप्तेन-भौमेन, इति-एवम्, द्विविधेन-वह्निना-अग्निना, निकामम्-निरतिशयम्, तप्ता, सा-पार्वती, तपात्यये तपस्य-ग्रीष्मर्तो, अत्यये अवसाने, वर्षर्तो· प्रारम्भे इति यावद्, नवैः-प्रथमवृष्टै, वारिभि जलै, उक्षिता सिक्ता, सती, भुवा-पृथिव्या सह, ऊर्ध्वम् ऊर्ध्वगामिनम् ऊर्ध्वं लक्ष्यमाणम्, ऊष्माणम्-बाष्पम्, अमुञ्चत्-तत्याज।

---

* 'विविधेन' इति मल्लिनाथ.। 'पञ्चविधेन' इति तद्व्याख्यानम्। पर तन्मते 'नभश्चरेण' 'इन्धनसम्भृतेन' इत्यनयो समुच्चायकस्य चकारस्याभावान्न्यूनपदत्व दोषोऽत्र प्रसज्येत। 'द्विविधेन' इति पाठे त्वनेनैव पदेन बोधित· समुच्चय इति स एवादृत.।

† विधा विधौ प्रकारे च—इत्यमर।

भा०—यथा पृथिवी ग्रीष्मे तप्ता वर्षाप्रारम्भे जलसिक्ता धूमाकार वाष्पम् 'भाप' इति भाषाया प्रसिद्ध मुञ्चति, तच्च पृथिव्या ऊर्ध्व गच्छति, तथैव पार्वत्यपि सूर्यातपेन चतुर्भिर्वह्निभिश्च ग्रीष्मे तप्ता वर्षाप्रारम्भे वाष्पममुञ्चत् । तदुपरिभागेपि धूमाकार वाष्प प्रतीयते स्म । अनेन पृथिवीसादृश्यात्सर्वथा शरीरे निरपेक्षता व्यज्यते ।

अल०—भुवा सहेति सहोक्ति । वाष्पमुक्तौ कारणोपन्यासात्काव्य-लिङ्ग च ।

**स्थिता क्षण पक्ष्मसु ताडिताधराः *पयोधरोत्सेधनिपातचूर्णिता ।**
**वलीषु तस्या. स्खलिताः प्रपेदिरे चिरेण नाभिं प्रथमोदबिन्दव ॥२४॥**

अ०—प्रथमोदबिन्दव क्षण तस्याः पक्ष्मसु स्थिता: ( तदनु ) ताडिताधरा ( अथ ) पयोधरोत्सेधनिपातचूर्णिता , ( तदनन्तरम् ) वलीषु स्खलिता: (सन्त ) नाभिन् चिरेण प्रपेदिरे ।

व्याक०—प्रथमे उदकस्य बिन्दव प्रथमोदबिन्दव । (ष० तत्पु०-कर्म०) "मन्थौदनसक्तुबिन्दु " इत्यादिना उदकस्योदादेश । ताडितः अधरो यैस्ते ताडिताधरा । पयोधरयो उत्सेधे निपातेन चूर्णिता पयोधरोत्सेधनिपात-चूर्णिता । उत्सेधनिपातशब्दयो क्रमश सेधते पततेश्च घञ । चूर्णिता.-चूर्णयते क्त । स्थिता तिष्ठते. क्त । "द्यतिस्यति " इतीत्वम् । स्खलिताः-स्खलते क्त । प्रपेदिरे पद्यतेर्लिट्, प्रथमपुरुषबहुवचनम् । एत्वाभ्यासलोपौ ।

व्याख्या—प्रथमे-नवा., उदबिन्दव -जलकणा , क्षणम् क्षणमात्रम् , तस्या.-पार्वत्या , पक्ष्मसु-नेत्रलोमसु, स्थिताः, तदनु, ताडित -आहत., अधर - अधरोष्ठो यैस्तथाभूता , अधरोष्ठे निपातिता , अथ, पयोधरयो. स्तनयोः, †उत्सेधे-उन्नतप्रदेशे, निपातेन-निपतनेन, चूर्णिता -जर्जरिताः, तदनन्तरम्, वलीषु-उदरस्थितासु रेखासु, स्खलिता.-निरुध्य निरुध्य निपतिता , सन्त , नाभिम्-नाभिरन्ध्रम्, चिरेण-विलम्बेन, प्रपेदिरे-प्राप्ताः । तत्रैव च सघीभूता इत्यर्थोल्लभ्यम् ।

---

* 'पयोधरोत्सङ्गनिपात' इति प्रकाशिकाविवरणयो ।

† उत्सेध. काय उन्नति —इत्यमर ।

भा०— वर्षारम्भे अनावृते तिष्ठन्त्या पार्वत्या उपरि ये वृष्टिजलबिन्दव प्रथम निपतिता, ते प्रथम तन्नेत्रलोमसु विश्रम्य, अधरे प्रपत्य, कुचयोर्निपातेन खण्डता गता, पुन सर्घाभूय निम्नोन्नतप्रदेशेष्विव वलीषु स्खलन्तो नाभिं प्राप्य स्थिता ।

अल०— पद्यमिद ध्वनेरुदाहरणतया चित्रमीमांसायामप्पय्यदीक्षितैर्द्विधा व्याख्यातम् । तत्राय *सार बिन्दूना निपतनक्रमकथनेन समाधेरुपयुक्ता "नासाग्रन्यस्तनयन सवृतास्य. सुनिश्चल । ध्यायीत मनसा देवसुरो विष्टभ्य चाग्रत" इत्यागमानुसारिणी शरीरस्थितिर्व्यज्यते इत्येका व्याख्या । पक्ष्मसु जलबिन्दुस्थितिकथनेन नेत्रयोर्नासाग्रस्थितिरूपार्धनिमीलनावस्था, ओष्ठे निपतिताना बिन्दूनामास्याप्रवेशकथनेन सवृतास्यत्वम्, स्तनोत्सेधपातेन वलीषु स्खलनेन च उरोविष्टम्भ, क्रमनिपातेन च शरीरस्य निश्चलता व्यज्यते । तेन च पूर्वोक्ते तादृशे तापेऽपि प्रथमनिपतितेष्वपि जलबिन्दुषु समाधेरस्खलनेन सुनिश्चलैकाग्रता ध्वन्यत इति । जलबिन्दूना क्रमेण निपतितत्वोक्त्या तेषा करादिभिरप्रोञ्छनं बोधितम् । तेन च चित्तैकाग्रता व्यज्यते इति विवरणकार । अथैभिरेव विशेषणै पार्वत्या सौन्दर्यं व्यज्यते इति द्वितीया व्याख्या । पक्ष्मसु जलबिन्दुस्थित्या तेषा घनत्वम्, क्षण स्थित्या च मसृणत्वम्, जलबिन्दुभिस्ताडनोक्त्याऽधरस्य सौकुमार्यम्, स्तनोत्सेधे चूर्णितत्वोक्त्या स्तनयो काठिन्यम्, वलीषु स्खलनोक्त्या तासा विस्पष्टता, नाभिं प्राप्य तत क्वचिदगमनेन तत्रैव स्थितिबोधनान्नाभेर्गाम्भीर्यं व्यज्यते इति । द्वितीया व्याख्या व्याख्याकृद्भिरपि दर्शिता । प्रतिपदमर्थवत्वात्परिकरालङ्कार इति च मल्लिनाथ । एकस्य बिन्दुपदार्थस्य क्रमशोनेकाधारेषु वर्णनात् पर्य्यायोऽपि ।

शिलाशया तामनिकेतवासिनीं निरन्तरास्वन्तरवातवृष्टिषु ।
व्यलोकयन्नुन्मिषितैस्तडिन्मयैर्महातप साक्ष्य इव स्थिताः क्षपा ॥२५॥

अ०—निरन्तरासु अन्तरवातवृष्टिषु अनिकेतवासिनीम् शिलाशयाम् ताम् महातप.साक्ष्ये स्थिता. क्षपा. तडिन्मयै उन्मिषितै व्यलोकयन् इव ।

व्याक०—निर्गतम् अन्तर याभ्य तासु निरन्तरासु, बहुव्रीहिः ।

--- 

* विस्तरस्तु चित्रमीमांसायामालोच्यः ।

अन्तरे वातो यासा ता अन्तरवाता., ताश्च ता वृष्टय , अन्तरवातवृष्टय , तासु। न निकेते वसतीत्यनिकेतवासिनी, ताम्। वसतेर्णिनि , तदन्तस्य नञा समास । शिलाया शेत इति शिलाशया, ताम् । "अधिकरणे शेते." इत्यच् । महत. तपस साक्ष्ये महातप साक्ष्ये । 'आन्महत समानाधिकरणजातीययो " इति कर्मधारये महत आत्वम् । साक्ष्यशब्दे साक्षिण कर्मेति विग्रहे साक्षिशब्दात् ष्यञ् । साक्षाद द्रष्टा साक्षी "साक्षाद् द्रष्टरि संज्ञायाम्" इति निपातित । तडिन्मये -तडिच्छब्दात् "तत्प्रकृतवचने मयट्" । उन्मिषितै - निपते भावे क्त ।

व्याख्या — निरन्तरासु सातत्येन जायमानासु, अन्तरे-मध्ये, वात -वायु , यासा तथाभूतासु वायुसहितासु, वृष्टिषु-मेघवर्षणेषु, अनिकेते-अनावृतप्रदेशे, वसति-तिष्ठति, इति तादृशीम , शिलाशयाम्-शिलातलशायिनीम्, ताम्-पार्वतीम्, महातपस.-महतो मुनिव्रतस्य, साक्ष्ये-साक्षित्वे, स्थिता , क्षपा - रात्रय , तडिन्मयै.-विद्युद्रूपै , उन्मिषितै -अवलोकनै , (अक्षिपक्ष्मोद्घाटनैरिति प्रकाशिका) व्यलोक्यन्निव अपश्यन्निव ।

भा०—वर्षतो यदा निरन्तरा धारासपाता अभूवन, तडितो विद्योतन्ते स्म, मध्ये वायुश्च वाति स्म, तदापि पार्वती अनावृते प्रदेशे तपोऽर्थं स्थिता बभूव । काले च तत्रैव शिलातले शेते स्म । न कोऽप्यन्यस्तथाविधे काले तस्यास्तथा-विधस्य महातपस. साक्षी, तादृशेऽवसरे बहिः स्थातुमशक्यत्वात्, केवलं सकल-साक्षित्वे नियुक्ता रात्रिरेव तडिद्रूपैर्बहुभिर्नेत्रैस्ता ददर्शेति सभाव्यते ।

अल०—उत्प्रेक्षालङ्कार । यद्यपीवशब्द साक्ष्यपदादनन्तर श्रूयते, तथापि न साक्ष्यमुत्प्रेक्ष्यम, तस्य स्वत सिद्धत्वात् ।

' आदित्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदय यमश्च ।
अहश्च रात्रिश्च उभे च सन्ध्ये धर्मश्च जानाति नरस्य वृत्तम ॥"

(महाभारते)

इत्याद्यागमा हि रात्रे साक्षित्वं ख्यापयन्तीति व्याख्याकृत । तस्माच्चक्षुषा विलोकनमुत्प्रेक्ष्यमिति मल्लिनाथ.। आगमप्रसिद्ध साक्ष्य तडिदुन्मेषै स्फुटतामिवागमदिति साक्ष्यस्य स्फुटत्वमुत्प्रेक्ष्यमिति प्रकाशिकाविवरणयो । इह क्षपाणा

साद्यकथनेन साद्यन्तराभावो व्यज्यते, तेन च न तथाविधे कालेऽन्येन स्थातु शक्यमिति पार्वत्यास्तपसोऽसाधारणत्वं ध्वनितम् ।

**निनाय *सात्यन्तहिमोत्किरानिलाः सहस्यरात्रीरुदवासतत्परा ।**

**परस्पराक्रन्दिनि चक्रवाकयोः पुरो वियुक्ते मिथुने कृपावती ॥२६॥**

अ०—सा अत्यन्तहिमोत्किरानिलाः सहस्यरात्रीः उदवासतत्परा पुरः (वर्तमाने) वियुक्ते परस्पराक्रन्दिनि चक्रवाकयोः मिथुने कृपावती (सती) निनाय ।

व्याक०—उदके वासः-उदवासः, तत्र तत्परा । "पेषवासवाहनधिषु च" इत्यनेनोदकशब्दस्योदादेशः । स परो यस्याः सा तत्परा । उत्किरन्तीत्युत्किराः, किरतेः "इगुपधज्ञाप्रीकिरः कः", अत्यन्तं हिमानाम् उत्किराः (षष्ठी० केवल०) अनिलाः यासु (बहु०) ताः अत्यन्तहिमोत्किरानिलाः । द्वितीयाबहुवचनमिदं रात्रीरित्यस्य विशेषणम् । परस्परमाक्रन्दतीति परस्पराक्रन्दि तस्मिन् । चक्रवाकी च चक्रवाकश्च चक्रवाकौ तयोः, "पुमान् स्त्रिया" इति पुंस एकशेषः । कृपावती-कृपाशब्दाद् मतुप् । निनाय नयतेर्लिट् । रात्रिरिति नयतेः कर्मणि द्वितीया ।

व्याख्या—सा पार्वती, अत्यन्तम् निरतिशयम्, हिमानाम्-तुषाराणाम्, उत्किराः-वर्षकाः, अनिलाः-वायवः, यासु तथाभूताः, †सहस्यस्य पौषमासस्य, रात्रीः निशाः, उदवासे जलमध्यस्थितौ, तत्परा-निरता सती, पुरः-अग्रे, वर्तमाने, वियुक्ते-विरहिणि, अत एव, परस्पराक्रन्दिनि-अन्योन्यमाक्रोशति, चक्रवाकयोः चक्रवाक्याः चक्रवाकस्य च, मिथुने द्वन्द्वे, कृपावती-दयावती सती, निनाय यापयामास व्यत्यगमयत् ।

भा०—ग्रीष्मे वर्षासु च तथा तप्त्वा हिमगर्भितवाते हिमतौ रात्रौ जलनिवासतत्परा पार्वती तपस्यति स्म । तत्रापि नान्यः कोऽपि तस्या दृष्टिविषयोऽभूत्, केवलं वियोगाग्निना दह्यमानं चक्रवाकयुगलं तथाविधे शीते जलेऽवलोक्यते स्म । तस्य च तादृशशीतसहने वियोगाग्निरेव हेतुः । चक्रवाकयुगलस्य रात्रौ परस्परावलोकनाभावादन्योन्यमाक्रन्दः, तत्र च पार्वत्याः कृपैवाभूत्, न तु तस्य दर्शनेन विरहोद्दीपनम् । तेन तपसि वर्तमानायास्तस्याः ब्रह्मचर्यनिष्ठापि

* 'चात्यन्तहिम' इति पाठान्तरम् । † पौषे तिष्यसहस्यौ द्वौ इत्यमरः ।

व्यज्यते । चक्रवाकयुगले कृपा, न तु स्वतपसः क्वापि गणनेति व्यङ्ग्यमरुणाच-
लनाथ आह ।

अल०—अत्यन्तहिमोत्किरानिला इति रात्रीणामुदवासेऽत्यन्तासह्यत्व-
प्रतिपादने साभिप्रायम्, तेन परिकरः । व्यङ्ग्यत्रय भावार्थे उक्तम् ।

**मुखेन सा पद्मसुगन्धिना निशि प्रवेपमानाधरपत्रशोभिना ।**
**तुषारवृष्टिक्षतपद्मसंपदां *सरोजसंधानमिवाकरोदपाम् ॥ २७ ॥**

अ०—सा निशि पद्मसुगन्धिना प्रवेपमानाधरपत्रशोभिना मुखेन तुषारवृष्टि-
क्षतपद्मसम्पदाम् अपाम् सरोजसंधानम् अकरोद् इव ।

व्याक०—शोभनो गन्धो यस्मिंस्तत् सुगन्धि, "गन्धस्येदुत्पूतिसुसुर-
भिभ्यः" इत्यनेन इकारः समासान्तः । पद्मेनेव सुगन्धिना पद्मसुगन्धिना,
"उपमानानि सामान्यवचनैः" । प्रवेपमानेन अधरेण पत्रेण ( कर्म० )
शोभते इति प्रवेपमानाधरपत्रशोभि, तेन । शोभतेर्णिनि । प्रवेपमानाधरपत्र-
शोभि, तेन । शोभतेर्णिनि । प्रवेपमानशब्दे टुवेपृधातोः शानच् । तुषारस्य
वृष्ट्या क्षताः पद्मान्येव सम्पदो यासां तासां तुषारवृष्टिक्षतपद्मसम्पदाम् ।
सरोजानां संधानं सरोजसंधानम्, सरोजम् सरसि जातमिति "सप्तम्यां जनेर्डः"
मुखेनेति करणे तृतीया । निशि-निशाशब्दस्य ङौ विभक्तौ 'निश्' इत्यादेशः ।

व्याख्या—सा पार्वती, निशि रात्रौ, पद्मेनेव कमलेनेव, सुगन्धिना-सुर-
भिणा, प्रवेपमानेन-प्रकम्पमानेन, अधरेण-अधरोष्ठेन, तद्रूपेण पत्रेण दलेन,
शोभते राजते इति तथाभूतेन, मुखेन-आननेन, तुषारस्य हिमस्य, वृष्ट्या-
वर्षेण, क्षताः-नाशिताः, पद्मान्येव, संपदः-संपत्तयः, यासां तथाभूतानाम्,
अपाम्-जलानाम्, सरोजसंधानम्-सरोजानाम् कमलानाम्, संधानम्-संघट्टनम्-
अविच्छेदम्, अकरोदिव ।

भा०—जलनिमग्नाया पार्वत्याः शिशिरनिशासु मुखमात्रं लक्ष्यते स्म,
तच्च कमलसमं सुरभि, शीतेन वेपमानोऽधरश्च तत्र किसलयसदृशः प्रतीयते,
तादृशे तपस्यपि च न म्लानं तत् । तस्मादिदं सम्भाव्यते शिशिरर्तौ हिमेन
नष्टेष्वन्येषु कमलेषु 'जलानि कमलशून्यानि मा भूवन्' इति विचार्यैव

* 'सरोजसंधानमिवा' इति पाठान्तरम् ।

पार्वती स्वमुखकमल तत्र निवेशितवती। तेन वसन्तपर्यन्त कमलपरम्पराया अविच्छेदो जात, वसन्ते तु पुन कमलानि प्रादुर्भविष्यन्त्येवेति।

अल०—'जले मुखस्थापन कमलपरम्पराया अविच्छेदायेव' इति फलोत्प्रेक्षा। अन्यानि कमलानि शिशिरे म्लायन्ति, इदन्तु शिशिरेपि तथैव शोभत इति व्यतिरेको व्यङ्ग्य।

**स्वयविशीर्णद्रुमपर्णवृत्तिता परा हि काष्ठा तपसस्तया पुन।**
**तदप्यपाकीर्णमत *प्रियवदा वदन्त्यपर्णेति च ता पुराविदः॥२८॥**

अ०—हि स्वयविशीर्णद्रुमपर्णवृत्तिता तपस परा काष्ठा (कथ्यते) तया पुनः तद् अपि अपाकीर्णम्, अत पुराविद प्रियवदाम् ताम् अपर्णा इति च वदन्ति।

व्याक०—स्वय विशीर्णानि द्रुमाणा पर्णान्येव वृत्ति यस्मिन्, तस्य भाव स्वयविशीर्णद्रुमपर्णवृत्तिता। विशीर्णशब्दे शृणातेः क्त, 'ॠत इद् धातो'"। पुरा (वृत्तम्) विदन्तीति पुराविद, वेत्ते क्विप्। प्रियवदाम् प्रियवदतीति प्रियोपपदाद् वदते "प्रियवशे वद खच्", "अरुर्द्विषदजन्तस्य मुम्"। न पर्णानि यस्या सा अपर्णा। इति शब्देन कर्मण उक्तत्वात् प्रथमा। अपाकीर्णम्-'अप' 'आ' एतदुपसर्गद्वयपूर्वात् किरते क्त। अत इदशब्दात् "पञ्चम्यास्तसिल्"। तयेति अपाकिरणकर्तरि तृतीया। पुन शब्दस्त्वर्थे।

व्याख्या—हि निश्चयेन, स्वयम्-परिपक्वतया वाय्वादिना वा, विशीर्णानि-निपतितानि, द्रुमाणाम्-वृक्षाणाम्,पर्णान्येव-दलान्येव, वृत्ति-जीवनोपायो यस्मिन् तपसि, तस्य भावस्तत्ता, सा पर्णमात्रभक्षणरूपा, तपस-तपस्याया, परा काष्ठा† चरम उत्कर्ष, कथ्यते। तया पुन पार्वत्या तु, तदपि-विशीर्णपर्णभोजनमपि, अपाकीर्णम् त्यक्तम्, अत-अस्मादेव पर्णत्यागरूपात् कारणात्, पुराविद ऐतिहासिका, प्रियवदाम् प्रियभाषिणीम्, ताम्-पार्वतीम्, न पर्णं यस्या इति व्युत्पत्त्या, अपर्णा इति नाम्ना च, वदन्ति व्यपदिशन्ति। चकारेण पूर्वोक्तस्य 'उमा' इति नाम्न समुच्चय। पार्वती स्वय प्रिय वदति, तस्मादन्येऽपि तस्यै

* 'प्रियवदा' इति प्रकाशिकासमत. पाठ.।

† काष्ठोत्कर्षे स्थितौ दिशि—इत्यमरः।

प्रिय वदन्तस्तन्नामानि बहुधा ब्रुवते इति मल्लिनाथ । प्रियवदा इति पाठे तु प्रियवदा पुराविद एव वदन्तीति योज्यम् । तप स्तुत्या तेषा प्रियवदत्वम् ।

भा०—तपस उपवासोऽयङ्गम् । तत्र फलदुग्धाद्यभ्यवहरणरूपा नाना भेदा, स्वयनिपतितवृक्षपत्रमात्रभक्षण तत्र सर्वश्रेष्ठ तप उच्यते । पर पार्वती क्रमेण पर्णभक्षणमपि त्यक्त्वा सर्वथा निराधाराऽभूत् । तेन भीपणेन पर्णत्याग-रूपेण कर्मणा तस्या नाम 'अपर्णा' इति ख्याति गतम् ।

अल०—अपर्णेति नाम्न समर्थनात् काव्यलिङ्गम् ।

**मृणालिकापेलवमेवमादिभिर्व्रतै स्वमङ्ग ग्लपयन्त्यहर्निशम् ।**
**तप शरीरै कठिनैरुपार्जित तपस्विना दूरमधश्चकार सा ॥ २९॥**

अ०—एवमादिभि व्रतै मृणालिकापेलवम् स्वम् अङ्गम् अहर्निशम् ग्लपयन्ती सा तपस्विनाम् कठिनै शरीरै उपार्जितम् तपः दूरम् अध चकार ।

व्याकृ०—एवम् आदि येषा तै एवमादिभिः । मृणालिकामिव पेलवम् मृणालिकापेलवम् । अहश्च निशा च अहर्निशम्, समाहारे द्वन्द्वः, अत एव नपुसकैकवद्भावौ । "ह्रस्वो नपुसके प्रातिपदिकस्य" इत्यनेन ह्रस्व । द्वितीयान्त-मिदम्, द्वितीया च "कालाध्वनोरत्यन्तसयोगे" इत्यनेन, क्रियाविशेषणाना कर्मत्वाद् वा । ग्लपयन्ती-ग्लायतेर्णिजन्ताद् हेतौ लक्षणे वा शतृप्रत्यय । "ग्लास्नावनुवमा च" इत्यनेन मित्त्वम्, तेन ह्रस्वः । उपार्जितम्-अर्जधते क्त । तपस्विनाम्-तपश्शब्दाद् असन्तत्वाद् मत्वर्थीयो विनि । व्रतै, शरीरै, उभयत्र क्रमश ग्लपनक्रियाया उपार्जनक्रियायाश्च करणे तृतीया । दूरम् क्रियाविशेष-णत्वाद् वा "दूरान्तिकार्थेभ्यो द्वितीया च" इत्यनेन वा द्वितीया । अध इति तपसो विधेयविशेषणमव्ययम् ।

व्याख्या—एवमादिभि -पञ्चाग्न्युदवासादिभि, व्रतै -नियमै, मृणालिका-मिव-बिसतन्तुमिव, पेलवम् कोमलम्, स्वम्-स्वकीयम् अङ्गम् शरीरम्, अहर्निशम्-रात्रिंदिवम्, ग्लपयन्ती-कृशता नयन्ती, सा-पार्वती, तपस्विनाम् अन्येषा तप -शीलानाम्, कठिनै कठोरै -क्लेशसाहिष्णुभि., शरीरै, उपार्जितम्-सपादितम्, तप तपस्याम्, दूरम्-अत्यर्थम्, अधश्चकार तिरश्चकार, अतिशेते स्मेत्यर्थ ।

* 'मतैस्तदङ्ग' इति पाठान्तरम् ।

भा०—कोमलेन शरीरेण पार्वती तथा तपोऽकरोत्, यथा अतिकठिनशरीराणामपि तपस्विना तपस्तदपेक्षयाऽत्यन्तमधोभूतम ।

अल०—व्यङ्ग्यो विरोध, तेन च विस्मयो ध्वनित ।

**अथाजिनाषाढधर प्रगल्भवाग् ज्वलन्निव ब्रह्ममयेन तेजसा* ।**
**विवेश कश्चिज्जटिलस्तपोवन शरीरबद्धः† प्रथमाश्रमो यथा ॥३०॥**

अ०—अथ अजिनाषाढधरः प्रगल्भवाग् ब्रह्ममयेन तेजसा ज्वलन्निव (स्थित) कश्चिद् जटिल. शरीरबद्ध प्रथमाश्रम• यथा तपोवनम् विवेश ।

व्याक०—अजिन च आषाढश्च अजिनाषाढौ, तयोर्धर अजिनाषाढधर, धरशब्दे धरते पचाद्यच् । आषाढ -"विशाखाषाढादण् मन्थदण्डयो" इत्यण् प्रत्यय । प्रगल्भा वाग् यस्य स प्रगल्भवाक् । प्रगल्भा-गल्भते. पचाद्यच् । शरीरेण बद्ध शरीरबद्ध, अथवा शरीर बद्ध यस्य स शरीरबद्ध, आहिताग्न्यादित्वाद् बद्धशब्दस्य परनिपात । प्रथमश्चासावाश्रम• प्रथमाश्रमः । ब्रह्ममयेन ब्रह्मशब्दाद् ब्रह्मण आगतम् इति "तत आगत" इत्यधिकारे 'मयट् च" इत्यनेन मयट् । जटिल -जटाशब्दात् पिच्छादित्वान्मत्वर्थीय इलच् ।

व्याख्या—अथ-तप प्रकर्षाद् अनन्तरम, अजिनस्य कृष्णमृगचर्मण, आषाढस्य‡-पलाशदण्डस्य, च धर -धारक, प्रगल्भवाग् वाग्मी प्रौढवचन, ब्रह्ममयेन-वेदाध्ययनजनितेन, तेजसा ब्रह्मवर्चसेन, ज्वलन्निव§ दीप्यमान इति लक्ष्यमाण, कश्चिद् अज्ञातकुलशीलादि•, जटिल -जटावान्-ब्रह्मचारी, शरीरबद्ध -भौतिकशरीरधारी, प्रथमाश्रमो यथा-ब्रह्मचर्याश्रम इव, तपोवनम् गौर्या• तपश्चर्यारण्यम, विवेश-प्रविष्टवान् ।

भा०—पार्वत्या तथा प्रौढे तपसि निविष्टायामेकस्मिन् दिने कश्चिदविज्ञात. पुरुषस्तस्मिंस्तपोवन आगत, स चाजिनाषाढादिभिश्चिह्नैर्ब्राह्मणो ब्रह्मचारीति

---

* 'वर्चसा' इति पाठान्तरम् । † 'शरीरबन्ध' इति प्रकाशिका विवरणयो । शरीर बध्नातीति व्युत्पत्ति. । 'मूर्तिमानिव लक्ष्यमाण.' इति तद्व्याख्यान च ।

‡ 'पालाशो दण्ड आषाढ' इत्यमर ।

§ इव शब्दोऽय निर्णयार्थक इति मल्लिनाथ ।

लक्षित । तस्य तेजो लक्षणानि च तथाविधान्यासन्, यथा स साक्षाद् ब्रह्मचर्याश्रम एव शरीर धृत्वा आगत इति सभाव्यते स्म । साक्षाद्भगवान् शङ्कर एव दयाजनितेनानुरागेण प्रेर्यमाणो गौर्या. प्रेमदार्ढ्यपरीक्षार्थं तया विस्रम्भगोष्ठीसुखार्थं च च्छद्मवेशेनागत इत्यन्ते स्फुटीभविष्यति ।

अल०—शरीरधारिप्रथमाश्रमसम्भावनादुत्प्रेक्षा । न तूपमा, शरीरवद्धस्य प्रथमाश्रमस्य वस्तुसत्त्वाभावात् । यथा शब्दो यद्यपि नोत्प्रेक्षाव्यञ्जकेषु परिगणित', तथापि कविकुलगुरुप्रयोगादूह्य एव ।

**तमातिथेयी बहुमानपूर्वया सपर्यया प्रत्युदियाय पार्वती ।**
**भवन्ति साम्येऽपि* निविष्टचेतसा वपुर्विशेषेष्वतिगौरवा क्रिया ॥३१॥**

अ०—आतिथेयी पार्वती तम् बहुमानपूर्वया सपर्यया प्रत्युदियाय, साम्ये निविष्टचेतसाम् अपि वपुर्विशेषेषु अतिगौरवा क्रिया भवन्ति ।

व्याकृ०—बहु मान पूर्वो यस्या, तया बहुमानपूर्वया । निविष्ट चेतो येषा तेषा निविष्टचेतसाम् । निविष्ट इति विशते॰ क्त, "व्रश्चभ्रस्ज " इति षत्वम् । वपुष्षु विशेषा वपुर्विशेषा , तेषु । वपुःशब्दो लक्षणया† वपुष्मद्वाची । अति गौरव यासु ता अतिगौरवा , गौरवशब्दे गुरुशब्दाद् भावेऽण् । अरुणाचलनाथस्तु "स्वती पूजायाम्" इति गतित्वात् ' कुगतिप्रादय " इति तत्पुरुषमाह । तन्मते गौरवशब्दोऽर्शआद्यजन्ततया गौरववद्बोधको व्याख्येय । आतिथेयी अतिथिषु साध्वी इति अतिथिशब्दात्, "पथ्यतिथिवसतिस्वपतेर्ढञ्" "टिड्ढाणञ् " इति ङीप् । सपर्यया 'सपर् पूजायाम' धातो॰ कण्ड्वादित्वाद् यकि "अ प्रत्ययात्" इत्यनेन अप्रत्यय , सपर्यार्थं प्रत्युद्गमनमिति फलस्य हेतुत्वविवक्षया हेतौ तृतीया । सपर्यारूपमेव प्रत्युद्गमनमिति प्रकृत्यादित्वाद्वा तृतीया । सपर्याशब्दस्य करणार्थकप्रत्ययान्तत्वमुपगम्य पूजाद्रव्यवाचकत्वे तु सहार्थे तृतीया व्याख्येया । प्रत्युदियाय-'प्रति' ' उत् ' एतत्पूर्वाद् इण्धातोर्लिट् । साम्ये समशब्दाद् भावे ष्यञ् । क्रियाशब्दो व्याख्यातः ।

---

* 'साम्येऽभिनिविष्ट' इति विवरणसमत पाठः ।

† लक्षणाप्रयोजन तु वपुष एव पूजायामसाधारण्येन हेतुत्वख्यापनम् ।

व्याख्या —आतिथेयी अतिथिसत्कारनिपुणा, पार्वती, तम्-जटिलब्रह्मचारिणम्, बहुमानपूर्वया-अतिथिसत्कारपुरःसरम्, ( बहुमान -श्रद्धा, तत्पूर्वयेति प्रकाशिका ) सपर्यया-पूजया, प्रत्युदियाय प्रत्युज्जगाम तस्यागच्छतोऽभिमुख गत्वा पूजामकरोदित्यर्थ । साम्ये-समतायाम् सर्वत्र समदृष्ट्या निरीक्षणे, निविष्टम्-तत्परम्, चेत चित्त येषा तथाभूताना जनानामपि, वपुर्विशेषेषु शरीरेण महत्त्वशालिषु प्रतीतेषु, अति अतिशयितम्, गौरवम्-आदर, यासु तथाभूताः, क्रियाः सत्कारव्यापारा, भवन्ति-जायन्ते, प्रवर्तन्ते इति यावत्।

भा०—अतिथिसत्कारचतुरा पार्वती त ब्रह्मचारिण सबहुमान प्रत्युज्जगाम, आनर्च च । एतदेव कविनोत्तरार्धेन समर्थितम्, यत् सर्वत्र समदर्शिना रागद्वेषशून्यानामपि शरीरेण विज्ञाततेजसि क्वचिद् भव्ये व्यक्तिविशेषे आदरो जायत एवेति । नायमादरो लिप्सया, अपि तु कर्तव्यबुद्ध्यैवेति । तपसा महान्त सत्कार्या एवेति । श्रीमन्मल्लिनाथस्तु कथ समानेऽपि ( ब्रह्मचर्यादिना स्वतुल्येऽपि ) तस्मिन् तस्यास्तादृशी प्रतिपत्तिरित्यवतार्य साम्ये सत्यपि निविष्टचेतसाम् स्थिरचित्ताना वपुर्विशेषेषु अतिगौरवा क्रिया भवन्तीति व्याचक्षाणो 'न पार्वत्या स्वतपोभिमान, अपि तु अन्येषु तपस्विषु पूज्यत्वबुद्धिरेवेत्यभिप्राय विशदयति । ये रागद्वेषाभ्यामदूषिता, तेषामेव वस्तुतो महत्त्वशालिषु महत्त्वोचितो व्यवहारो जायते, रागादिमन्तस्तु परिचितेष्वेव स्निह्यन्तीति प्रकाशिकाविवरणकारावप्ययं विनैव पाठान्तरं व्याचक्षाते ।

अल०—सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यास ।

**विधिप्रयुक्तां परिगृह्य सत्क्रियां परिश्रमं नाम विनीय च क्षणम् ।**
**उमां स पश्यन्नृजुनैव चक्षुषा प्रचक्रमे वक्तुमनुज्झितक्रमः ॥ ३२ ॥**

अ०—स विधिप्रयुक्ताम् सत्क्रियाम् परिगृह्य क्षणम् परिश्रमम् विनीय च नाम उमाम् ऋजुना एव चक्षुषा पश्यन् अनुज्झितक्रम ( सन् ) वक्तुम् प्रचक्रमे ।

व्याक०—विधिना प्रयुक्ता विधिप्रयुक्ताम् । सत् क्रिया सत्-क्रिया, "आदरानादरयो सदसती" इत्यनेनाव्ययस्य सच्छब्दस्य गतिसंज्ञा, "कुगतिप्रादय" इत्यनेन समास । सती क्रिया सत्क्रियेति वा, पूर्वपदस्य पुंव-

द्भाव । न उज्झित क्रमो येन स अनुज्झितक्रम । परिगृह्य गृह्णातेर्ल्यप् । परिश्रमम्-श्राम्यतेर्घञ् । विनीय नयतेर्ल्यप् । पश्यन्-दृशधातोर्लक्षणे शतृप्रत्यय । क्रम.-क्राम्यतेर्घञ् । वक्तुम्-ब्रवीते, वक्तेर्वा तुमुन् । प्रचक्रमे क्राम्यतेलिट्, "प्रोपाभ्या समर्थाभ्याम्" इत्यनेन आत्मनेपदम् ।

व्याख्या—सः-ब्रह्मचारी, विधिना-शास्त्रोदितेन नियमेन, प्रयुक्ताम्-कृताम्, सत्क्रियाम्-पूजान्, परिगृह्य-स्वीकृत्य, क्षणम् स्वल्पकाल यावत्, परिश्रमम्-गमनश्रान्तिम्, विनीय-दूरीकृत्य च, नामेत्यपरमार्थे, असतोऽपि परिश्रमस्यापनय नाटयित्वा, उमाम्-पार्वतीम्, ऋजुनैव सरलेन-विलासादिरहितेनैव, चक्षुषा-नेत्रेण, पश्यन्-अवलोकमान, न, उज्झित-त्यक्त, क्रम-पूर्वापरसम्बन्ध-उचिता वाक्परिपाटी, येन तथाभूत. सन्, वक्तुम्-कथयितुम्, प्रचक्रमे प्रारेभे ।

भा०—उमया सत्कृतो ब्रह्मचारी क्षणमध्वपरिश्रमापनयं नाटयति स्म, तदनन्तर च ब्रह्मचर्य्योचितया शैल्या सरलेन चक्षुषा पार्वतीं विलोकमान कथन प्रारभते स्म ।

अल०—ऋजुनैवेति वक्रविलोकनव्यावर्तनात्परिसख्या । अनेन शिवस्यानुरागगोपनरूपोऽवहित्थाख्यो भावो व्यज्यते इति प्रकाशिकाविवरणयोरुक्तम् ।

**अपि क्रियार्थं सुलभ समित्कुश जलान्यपि स्नानविधिक्षमाणि ते ।**
**अपि स्वशक्त्या तपसि प्रवर्तसे शरीरमाद्य खलु धर्मसाधनम् ॥३३॥**

अ०—अपि क्रियार्थम् समित्कुशम् सुलभम् ( अस्ति ) ? अपि जलानि ते स्नानविधिक्षमाणि ( सन्ति ) अपि स्वशक्त्या तपसि प्रवर्तसे ? खलु शरीरम् आद्यम् धर्मसाधनम् ( अस्ति ) ।

व्याक०—क्रियायै इति क्रियार्थम् । समिधश्च कुशाश्च समित्कुशम्, "जातिरप्राणिनाम्" इति द्वन्द्वैकवद्भावः । स्नानस्य विधये क्षमाणि स्नानविधिक्षमाणि । सुलभम्-लभते खल् । "न सुदुर्भ्यां केवलाभ्याम्" इति नुम्निषेध । सर्वत्र अपिशब्द. प्रश्नार्थे ।

---

* 'गर्हासमुच्चयप्रश्नशङ्कासम्भावनास्वपि.' इत्यमर ।

व्याख्या—अपि-कच्चित्, क्रियार्थम्-होमादिकर्मानुष्ठानाय, समिध -काष्ठानि, कुशा.-दर्भा , एतत्सर्वम्, सुलभम्-सुखेन लब्धु शक्यम् ? कच्चिदेतदनायासेन प्राप्नोषि ? अपि कच्चित्, जलानि आप , ते तव, स्नानविषये स्नानसपादनाय, क्षमाणि-योग्यानि ? अपि कच्चित्, स्वशक्त्या-स्वसामर्थ्यानुसारेण, स्वदेहमपीडयित्वा, तपसि प्रवर्तसे तपस्यामाचरसि ? यत , खलु-निश्चयेन, शरीरम्-देह., आद्यम्-प्रथमम्-प्रधानम्, धर्मस्य, साधनम्-कारणम्, अस्तीति शेष ।

भा०—ब्रह्मचारी शिष्टाचारानुकूल्येन प्रथम पार्वतीं तपस्विजनोचितपदार्थसंपत्तिरूपं कुशल पृच्छति । भाव स्पष्ट ।

अलं०—शक्त्यैव तपश्चरणीयमित्यस्य समर्थनादर्थान्तरन्यास. । 'शरीर न पीडनीयम्' इत्यर्थस्य कारणमुखेनाभिधानादप्रस्तुतप्रशसा वा ।

**अपि त्वदावर्जितवारिसम्भृत प्रवालमासामनुबन्धि वीरुधाम् ।**
**चिरोज्झितालक्तकपाटलेन ते तुला यदारोहति दन्तवाससा ॥३४॥**

अ०—अपि त्वदावर्जितवारिसम्भृतम् आसाम् वीरुधाम् प्रवालम् अनुबन्धि ( अस्ति ) यत् चिरोज्झितालक्तकपाटलेन ते दन्तवाससा तुलाम् आरोहति ।

व्याक०—त्वया आवर्जितेन ( तत्पु० ) वारिणा ( कर्म० ) संभृतम् ( तत्पु० ) त्वदावर्जितवारिसम्भृतम्, "प्रत्ययोत्तरपदयोश्च" इति युष्मच्छब्दस्य मपर्यन्तस्य त्वादेश । चिराद् उज्झित अलक्तको येन ( बहु० ) तथाभूतमपि पाटल ( कर्म० ) चिरोज्झितालक्तकपाटलम्, तेन । दन्ताना वाससा दन्तवाससा । "तुल्यार्थैरतुलोपमाभ्याम्" *इति अध्याहृतसहयोगे वा तृतीया । अनुबन्धि-अनुबन्धशब्दाद् "अत इनिठनौ" इतीनि । प्रवालमिति जातावेकत्वनिर्देश ।

व्याख्या—अपि कच्चित्, त्वया-भवत्या, आवर्जितेन आहृतेन, सिक्तेन वा, वारिणा-जलेन, सम्भृतम्-जनितम्, आसाम्-पुरोवर्तिनीनाम्, †वीरुधाम्-लता-

---

* 'अतुलोपमाभ्याम्' इति तुलाशब्दयोगे तृतीयानिषेधस्तु सदृशार्थकतुलाशब्दयोगे एव, इह तुलाशब्द. सादृश्यवाचीति न प्रवर्तत इति व्याख्याकृत. ।

† 'लता प्रतानिनी वीरुद्' इत्यमर ।

नाम्, †प्रवालम् अभिनवपल्लवसव , ‡अनुबन्धि नैरन्तर्येण प्रवृत्तम अविच्छिन्नम्, अस्ति ? यत् प्रवालम् चिराद्-बहो कालाद, उज्झित -त्यक्त , अलक्तक लाक्षारस , येन तथाभूतेनापि पाटलेन रक्तेन, ते तव, दन्त§वाससा-अधरोष्ठेन, तुलाम्-साम्यम , आरोहति-प्राप्नोति ।

भा०—त्वया सतत वारिणा सिच्यमाना एता लता कच्चिन्निरन्तर पल्लवान्युत्पादयन्ति ? एतेषु पल्लवेषु हि रक्ततया त्वदधरसादृश्यमालोक्यते । यद्यपि त्वयाधरेऽलक्तकन्यासश्चिरात्त्यक्त , तथापि स्वभावरक्त तदिति पल्लवसादृश्य बिभर्त्येव । चाटूक्तिरिय पार्वत्याश्चेतोविनोदनार्था । सौन्दर्ये हि स्तूयमाने स्वभावेन स्त्रीणा प्रसादो जायत इति ।

अल०—ओष्ठेन पल्लवाना सादृश्योक्ते. प्रतीपम् ।

**अपि प्रसन्न हरिणेषु ते मन. करस्थदर्भप्रणयाप§हारिषु ।**
**य ¶उत्पलाक्षि प्रचलैर्विलोचनैस्तवाक्षिसादृश्यमिव प्रयुञ्जते ॥३५॥**

अ०—करस्थदर्भप्रणयापहारिषु हरिणेषु ते मन अपि प्रसन्नम् ! ( हे ) उत्पलाक्षि ! ये प्रचलै विलोचनै तव अक्षिसादृश्यम् प्रयुञ्जते इव ।

व्याक०—करस्थाना दर्भाणा प्रणयेन अपहारिषु-करस्थदर्भप्रणयापहारिषु, तृतीयाषष्ठीतत्पुरुषौ । करस्थशब्दे करोपपदात् तिष्ठते क । प्रणयशब्दे नयते “ एरच् ”, अपहारिषु-हरतेर्णिनि । उत्पले इव अक्षिणी यस्या सा उत्पलाक्षी, तत्सम्बुद्धौ उत्पलाक्षि, “ बहुव्रीहौ सक्थ्यक्ष्णो स्वाङ्गात् षच् ” इति षच्, षित्वान्ङीष् , नदीत्वाद् ह्रस्व । प्रकर्षेण चलै. प्रचलै , “ कुगतिप्रादय ” इत्यनेन समास । सादृश्यशब्दे सदृशशब्दाद् भावे ष्यञ् । प्रसन्नम्-

---

† प्रवाला विद्रुमे वीणादण्डेऽभिनवपल्लवे—इति हैम ।

‡ सम्बन्धे सततासक्तावनुबन्ध प्रकीर्तित इति भोज ।

§ ओष्ठाधरौ तु रदनच्छदौ दशनवाससी—इत्यमर ।

§ 'पराधिषु' इति प्रकाशिकादिषु पाठ । दर्भाणा प्रणयात्-प्रार्थनाद् अपराधिषु—इति तद्व्याख्यानम् ।

¶ 'उत्पलाक्षिप्रचलै.' इति प्रकाशिकाविवरणयो । उत्पलानामाक्षेपः-वातचलनम्' तद्वच्चलैरिति व्याख्या ।

सीदते क्त । प्रयुञ्जते प्रपूर्वाद् युनक्तेर्लट् । "प्रोपाभ्या युजेरयज्ञपात्रेषु" इत्यनेनात्मनेपदम् । हरिणेषु-इति विषयसप्तमी ।

व्याख्या—करस्थानाम्-हस्तस्थितानाम्, दर्भाणाम्-कुशानाम्, प्रणयेन-स्नेहेन, अपहारिषु-ग्रहीतृषु, हरिणेषु-मृगेषु, ते तव, मन -चित्तम्, अपि प्रसन्नम् प्रसन्नं कच्चिदिति पूर्ववत्प्रश्न । हे उत्पलाक्षि-हे कमलनयने, ये-हरिणा, प्रचलै -चञ्चलै:, विलोचनै -नेत्रै, तव भवत्याः, अक्ष्णो -नेत्रयो, सादृश्यम्-साम्यम्, प्रयुञ्जत इव-अभिनयन्तीव ।

भा०—कच्चित्त्व हरिणेषु प्रसन्ना तिष्ठसि ? यद्यपि हरिणा परिचयजनितेन प्रेम्णा तव करस्थान् कर्मोपयुक्तानपि दर्भानपहरन्तस्तुभ्यमपराध्यन्ति, तथापि तपस्विना न कोप इति तव प्रसाद एव तत्र युक्त । एते च हरिणास्तव विलोचनयो सादृश्यं स्वनेत्रयोरलभमाना स्वनेत्रे चालयन्त सादृश्यमभिनयन्तीव, यथा हीनगुणा महाजनै सादृश्य लब्धु व्यापारवेषादिभिस्ताननुकुर्वन्ति, तद्वत् । तेन तव नेत्रयोश्चाञ्चल्य स्वाभाविकम्, हरिणास्तु स्वव्यापारेण चाञ्चल्यमाधातुं यतन्त इति सौन्दर्यस्तुतिरूपा चाटूक्तिरेव ।

अल०—पूर्ववत्प्रतीपम् । अपराधिष्वपि प्रसाद इति विरोधोऽपि ।

**यदुच्यते पार्वति पापवृत्तये न रूपमित्यव्यभिचारि तद् वच. ।**
**तथा हि ते शीलमुदारदर्शने तपस्विनामप्युपदेशतां गतम् ॥ ३६ ॥**

अ०—( हे ) पार्वति रूपम् पापवृत्तये न ( भवति इति ) यद् ( जनै ) उच्यते. तद् वच. अव्यभिचारि ( अस्ति ), तथा हि-हे उदारदर्शने ! ते शीलम् तपस्विनाम् अपि उपदेशताम् गतम् ( अस्ति ) ।

व्याक०—पापस्य वृत्तये पापवृत्तये । न व्यभिचरतीति अव्यभिचारि । णिन्यन्तस्य चरतेर्नञ्समास । उदार दर्शन यस्या इति तस्या सम्बुद्धौ उदारदर्शने । उच्यते-ब्रूधातो कर्मणि लट् । तपस्विनाम्-तप.शब्दाद् विनि । उपदेशताम्-घञन्तादुपदेशशब्दाद् भावे तल् । अत्र पद्ये त्रिभिन्नानि वाक्यानि, तत्कर्त्रादयश्चान्वयेनैव सुबोधानि ।

---

४ ' प्रणय प्रश्रये प्रेम्णि याञ्चाविश्रम्भयोरपि इति मेदिनी ।

व्याख्या—हे पार्वति ! रूपम् सौन्दर्यम्-सुन्दराकृतिः, पापवृत्तये पापाचरणाय, न भवति, इति यद्, जनैः, उच्यते कथ्यते, तद् वचः-तद् वाक्यम्, अव्यभिचारि-अबाधितम्-सत्यम् अस्ति । तथा हि-तत्र प्रमाणमिदमेव, यद् उदारम्-उत्कृष्टम्, दर्शनम्-आलोकनं यस्यास्तथाभूते अतिसुन्दरि, यद्वा, उदारम् उन्नतम्, दर्शनम्-ज्ञानं यस्यास्तथाभूते विवेकशालिनि ! ते-तव, शीलम् सद्वृत्तम्, तपस्विनामपि-तपः कुर्वतामृषीणामपि, उपदेशताम्-उपदिश्यतेऽनेनेति उपदेशः-शास्त्रम्-प्रमाणमिति यावत्, तत्ताम्, उपदेशे प्रमाणरूपताम्, गतम्-प्राप्तम् । मुनयोऽपि त्वां वीक्ष्य सद्वृत्ते प्रवर्तन्ते इत्यर्थः ।

भा०—'यत्राकृतिस्तत्र गुणा वसन्ति' 'न सुरूपाः पापाचाराः' इत्यादि लोकैरुच्यते, सामुद्रिकशास्त्रज्ञाश्चापि 'रूपं शीलानुसारि' इति ब्रुवते, तदेतत् त्वां दृष्ट्वा स्पष्टं सत्यं प्रतीयते । यत एव विशिष्टरूपवत्यास्तवेदृशं शीलम्, यद् दृष्ट्वा उपदेशं गृह्णन्त इवान्ये तपस्विनः स्वीयानाचारानपि परिष्कुर्वते । इयं पार्वतीस्तुतिस्तां विनीय तस्या हृदयं प्रविश्य तदान्तरभावप्रकटनाय प्रयुज्यते ।

अल०—अर्थान्तरन्यासः । यद्यपि प्रकृतमप्रकृतेन समर्थ्यत इति तत्र नियमः, इह तु अप्रकृता लोकोक्तिः प्रकृतेन समर्थिता, तथापि पर्यवसाने लोकोक्तिरेव पार्वतीशीलदर्शनस्य प्रकृतस्य समर्थकतां नीयते-इत्ययमप्यर्थान्तरन्यासस्य प्रकारभेद इति प्रकाशिकाविवरणयोः ।

विकीर्णसप्तर्षिबलिप्रहासिभिस्तथा* न गाङ्गैः सलिलैर्दिवश्च्युतैः ।
यथा त्वदीयैश्चरितैरनाविलैर्महीधरः पावित एष सान्वयः ॥ ३७ ॥

अ०—एष महीधरः विकीर्णसप्तर्षिबलिप्रहासिभिः दिवः च्युतैः गाङ्गैः सलिलैः तथा न पावितः, यथा अनाविलैः त्वदीयैः चरितैः सान्वयः पावितः ।

व्याक०—मह्या धरो महीधरः । पावनक्रियाया उक्ते कर्मणि प्रथमा । विकीर्णाः सप्तर्षीणां बलिभिः (तत्पु० कर्म०) प्रहसन्तीति विकीर्णसप्तर्षिबलिप्रहासीनि, तैः । विकीर्णशब्दे किरतेः क्तः । सप्तर्षिशब्दे "दिक्संख्ये संज्ञायाम्" इत्यनेन द्विगुः । प्रहासिशब्दे हसतेर्णिनिः । न आविलैः अनाविलैः । अन्वयेन

* 'प्रवाहिभिः' इति विवरणे, 'प्रवाहिभिः' इत्यपि क्वचित् ।

सह वर्तत इति सान्वय, तुल्ययोगे वहुव्रीहि.। च्युतै -च्युट् वातो क्त। गाङ्गै -गङ्गाया इमानि इति गङ्गाशब्दाद् शेपिकोऽण्। पावित पावयते कर्मणि क्त। त्वदीयै -युष्मच्छब्दाद् "वृद्धाच्छ", त्वदेशश्च। दिव अपादाने पञ्चमी। सलिलै, चरितैरिति च, कर्तरि तृतीया।

व्याख्या—एप, महीधर -पर्वत, हिमवान्, विकीर्ण पर्यस्तै, सप्तर्षीणाम् मरीच्यादीना सप्ताना ब्रह्मर्षीणाम्, बलिभि -पुष्पोपहारै, हसन्ति हसन्तीव प्रतीयन्ते,तथाभूतैः, दिव स्वर्गात्, च्युतै -पतितै., गाङ्गै.-गङ्गाया, सलिलै -जलै, तथा-तन प्रकारेण, न पावित -न पवित्रीकृत, यथा, अनाविलै -अकलुषै, त्वदीयै -तव, चरितै -वृत्तै, सान्वय सकुटुम्ब, पुत्रकलत्रादिसहित, पावित -पवित्रीकृत।

भा॰—अस्य हिमालयस्य पृष्ठे द्युलोकाद् गङ्गाप्रवाह पतति, गङ्गा च निसर्गेणैवातिपवित्रतमा, सप्तर्षिदत्तबलीना पुष्पादीनि च तत्र प्रवहन्तीति विशेषेण पवित्रता, तथापि सा गङ्गा तथाविधा पवित्रता हिमालये नार्पितवती, यथा त्वदीयानि चरितानि सपुत्रपौत्र हिमालय (स्वपितृत्वात्, तच्छिखरे तपश्चरणाद्वा) पवित्रीकृतवन्ति। गङ्गाजलाद् अपि उत्कृष्टानि तव चरितानीति सार। तत्र हेतुगर्भ विशेषणम्-'अनाविलै' इति। गङ्गाजल वर्षासु रोध पतनकाले वा आविलम् (अस्वच्छम्) अपि भवति, त्वच्चरितानि तु न कदाप्याविलानि (पापगन्धीनि) इति।

अल॰—गङ्गासलिलापेक्षया पार्वतीचरितस्य महत्त्वव्यञ्जनाद् व्यतिरेकालङ्कार.। भावार्थोक्तरीत्या 'विकीर्णसप्तर्षि' इत्यादे 'अनाविलै' इति विशेषणस्य च साभिप्रायत्वात् परिकर। सप्तर्षिबलि' इति बलिशब्दो लक्षणया बलिद्रव्यपुष्पादिबोधक, बलिक्रियाया प्रहासासभवात्। साध्यसाधनभाव सम्बन्ध, बलिरूपतया पुष्पेषु पावनत्वातिशयप्रतीति फलम्। प्रहासिभिरित्यपि मितवर्णलक्षकम्।

अनेन धर्म सविशेपमद्य मे त्रिवर्गसार प्रतिभाति *भाविनि!।
त्वया मनोनिर्विपयार्थकामया यदेक एव प्रतिगृह्य सेव्यते ॥ ३७॥

* भामिनि' इति प्रकाशिकाविवरणयो, 'भाम देवानुकूल्य च सौभाग्य

अ०—(हे) भाविनि अनेन अद्य मे धर्मः सविशेषम् त्रिवर्गसार प्रतिभाति, यद् मनोनिर्विषयार्थकामया त्वया एक एव प्रतिगृह्य सेव्यते ।

व्याक०—विशेषेण सह सविशेषम्, क्रियाविशेषणमिदम् । त्रयाणा वर्गे सार त्रिवर्गसार. । मनसो निर्विषयौ (तत्पु०) अर्थः कामश्च (द्वन्द्व) यस्या तया (बहु०) मनोनिर्विषयार्थकामया । भाविनि-भाव अस्या अस्तीति भाविना, सम्बुद्धौ भाविनि, भावशब्दात् प्राशस्त्ये मत्वर्थीय इनि । प्रतिगृह्य गृह्णातेर्ल्यप् । सेव्यते-सेवते कर्मणि लट् । मे-सम्बन्धसामान्ये षष्ठी । एक इति सेवनक्रियायाः उक्ते कर्मणि प्रथमा ।

व्याख्या—हे भाविनि प्रशस्ताभिप्राये, अनेन तव तपोदर्शनरूपेण हेतुना, अद्य, मे-मम (दृष्टौ) धर्म, सविशेषम्-सातिशयम्, त्रिवर्गे: धर्मार्थकामेषु, सार-श्रेष्ठ, प्रतिभाति-प्रतीयते । यद्-यस्मात् कारणात्, मनस अन्त करणस्य, निर्विषयौ-अविषयौ अनभिलषणीयौ, अर्थ धनादि, कामः-शब्दादिविषयोपभोगश्च यस्या तथाभूतया त्वया भवत्या, एक एव स धर्म, प्रतिगृह्य आदृत्य, सेव्यते-आश्रीयते ।

भा०—धर्मार्थकामेषु लोका प्रायेणार्थकामयोरेव विशेषेण सक्ता दृश्यन्ते, धर्ममपि तदर्थमेवाश्रयन्ति, तेनार्थकामयोरेव प्राधान्यं मनस्यायाति । परमद्य मया प्रतीतम्, यद् धर्म एव मुख्यः पुरुषार्थ । यत त्वादृशी बुद्धिमती अर्थकामौ सर्वथा उपेक्ष्य केवल धर्म भजत इति।

अल०—पार्वत्या धर्मसेवया धर्मस्य प्राधान्योन्नयनादनुमानमलङ्कार । 'मनोनिर्विषयार्थकामया' इति अर्थकामलाभाय त्वत्तपो न सभवतीति ध्वनितम्, तच्चाग्रे प्रपञ्चयिष्यते ।

प्रयुक्तसत्कारविशेषमात्मना न मा पर †सम्प्रतिपत्तुमर्हसि ।

---

चापि कथ्यते, इति पुराणकविवचनाद्, 'देवसपत्ने' इति तद्व्याख्या च। 'क्रोधवति' इति केषाञ्चित् तद्व्याख्यान 'कामिनी' इति पाठश्च न प्रकृतानुगणता भजेते ।

* त्रिवर्गो धर्मकामार्थैश्चतुर्वर्गः समोक्षकैः—इत्यमर ।

† 'सा प्रतिपत्तुमर्हसि' इति प्रका० विव० । 'मा त्व न अर्हसि' इत्यन्वयः ।

*यतः सतां सनतगात्रि संगतं मनीषिभि साप्तपदीनमुच्यते ॥ ३९ ॥

अ०—आत्मना प्रयुक्तसत्कारविशेषम् माम् परम् सम्प्रतिपत्तुम् न अर्हसि, (हे) सनतगात्रि ! यतः मनीषिभि. सताम् सङ्गतम् साप्तपदीनम् उच्यते ।

व्याक०—प्रयुक्त सत्कारस्य विशेषो यस्मै त प्रयुक्तसत्कारविशेषम्। सम्यङ् नतानि गात्राणि यस्या· सा सनतगात्री, सम्बुद्धौ संनतगात्रि । "अङ्गगात्रकण्ठेभ्यो वक्तव्यम्" इति ङीप् प्रत्यय । साप्तपदीनम्-सप्तभि पदैरवाप्यत इति "साप्तपदीन सख्यम्" इति निपातनात् सिद्धम्। सप्तपदशब्दयोर्द्विगु । सम्प्रतिपत्तुम्-अर्हतावुपपदे "शकधृष " इत्यादिना पद्यते तुमुन्। मनीषा (बुद्धि) एषामस्तीति मनीषिणः, तै , मनीषाशब्दाद् "व्रीह्यादिभ्यश्च" इतीनिः। सङ्गतम्-गच्छतेर्भावे क्त । उच्यते-ब्रवीते कर्मणि लट् । आत्मनेति प्रयोजनक्रियाया कर्तरि तृतीया ।

व्याख्या—आत्मना-स्वयम्, परिचरजनानपेक्षया, प्रयुक्त -विहित , सत्कारविशेष -विशिष्टसत्कारो यस्मै तथाभूतम्, माम्, परम्-आत्मीयादन्यम्, (इदानीं त्वम्) सम्प्रतिपत्तुम् बोद्धुम्, न अर्हसि-न योग्यासि। अपि तु अह त्वत्परिजनान्तर्गत एव जातोऽस्मि इति । हे सनतगात्रि† ! हे सुन्दराङ्गि ! यत.-यस्मात् कारणात्, मनीषिभि -विद्वद्भि , सताम् सज्जनानाम्, सङ्गतम् सख्यम्, साप्तपदीनम्-सप्तपदोच्चारणसाध्यम्, उच्यते कथ्यते, तादृश सख्यमावयोस्त्वत्सत्कारप्रयोगादेव सिद्धमित्यर्थ ।

भा०—अहमत्रागत , त्वया विशेषेण सत्कृत इत्येतावतैवाह त्वदीयो जात· । नेदानीं पर इति मन्तव्योऽस्मि । यतो हि सज्जनाना मैत्रीरूप सम्बन्धो न कष्टसाध्य , स हि केवल परस्परालापे सप्तपदोच्चारणमात्रेण सप्तपदपरिमितेऽध्वनि सहचरणमात्रेण वा समुत्पद्यते । तस्मात्त्वदीयत्वात् त्वन्मनोऽभिलाषं प्रष्टु ममाधिकारोऽस्तीति ।

अल०—परत्वाप्रतिपत्ते· सामान्येन समर्थनादर्थान्तरन्यास । प्रश्नाधिकारो व्यङ्ग्य ।

---

* 'यदा' इति प्रका० विव० ।

† 'नत चारु मङ्गनम्' इति भोज ।

**अतोऽत्र किंचिद् भवतीं बहुक्षमां द्विजातिभावादुपपन्नचापल. ।**
**अय जन प्रष्टुमनास्तपोधने ! न चेद् रहस्य *प्रतिवक्तुमर्हसि ॥ ४० ॥**

अ०—( हे ) तपोधने ! अतः अत्र द्विजातिभावाद् उपपन्नचापल अयम् जनः बहुक्षमाम् भवतीम् किञ्चित् प्रष्टुमनाः ( अस्ति ), चेद् रहस्यम् न, तर्हि प्रतिवक्तुम् अर्हसि ।

व्याक०—तप एव धन यस्याः सा तपोधना, सम्बुद्धौ तपोधने । द्वे जाती ( जन्मनी-मातु सकाशाद् उपनयनाच्च ) यस्य स द्विजाति , तस्य भावाद् द्विजातिभावाद् । जातिशब्दे जायते क्तिन्, "जनसनखना सञ्झलोः" इत्यात्वम् । उपपन्न चापल यस्य स उपपन्नचापल , चापलम्-चपलस्य भाव कर्म वेति चपलशब्दाद् युवादित्वादण् । बहु क्षमा यस्या ता बहुक्षमाम् । यद्वा बहु क्षाम्यतीति बहुक्षमा, पचाद्यच् ताम् । प्रष्टु मनो यस्य स प्रष्टुमनाः, "तु काममनसोरपि" इति तुमुनो मलोपः । रहसि भवम् रहस्यम्-"दिगादिभ्यो यत्" इति रहश्शब्दाद् यत् । प्रतिवक्तुम्-पूर्वपदयत्तुमुन् । किञ्चिदिति पृच्छते प्रधाने कर्मणि द्वितीया, भवतीमिति तस्यैव अकथित कर्म ।

व्याख्या—तप -तपस्यैव, धन यस्याः तथाभूते हे पार्वति ! अत.-पूर्वोक्तात् सख्याद् हेतो., अत्र-तप सम्बन्धे, द्विजातिभावाद्-ब्राह्मणत्वाद्, उपपन्नम्-सभाव्यम्, चापलम्-धाष्टर्यम्, यस्य तथाभूत , अय जन -ब्रह्मचारिरूपोऽहम्, बहुक्षमाम्-अतिसहिष्णुम्-क्षमाशीलाम् भवतीम्, किञ्चिद्-अल्पमेव, प्रष्टुमना.-जिज्ञासितुकाम , अस्तीति शेष. । चेद्-यदि, रहस्यम्-गोप्यम्, नास्ति, तर्हि, प्रतिवक्तुम्-कथयितुम्, अर्हसि-योग्याऽसि ।

भा०—अत्र तपःसंबन्धे अस्ति मे जिज्ञासा, त्वत्सम्बन्धी चाह जात इति प्रश्नेऽधिकार मन्ये । न च प्रश्नेन ते कोपसभावना, यतस्त्वं तपोधना बहुक्षमा । स्वाभाविकं च प्रश्नकुतूहलरूप चापल ब्राह्मणेषु इति प्रथम एव दर्शने प्रश्न एवविधे मे उपपन्ना प्रवृत्तिः । न च मे निर्बन्ध , यदि गोप्यं न स्यात् तर्हि कथय इति । विनयप्रदर्शनमिदम् ।

अल०—भावार्थोक्तरीत्या विशेषणाना साभिप्रायत्वात्परिकर ।

---

* 'प्रतिबोधयिष्यसि' इति प्रका० विव० ।

**कुले प्रसूति प्रथमस्य वेधसस्त्रिलोकसौन्दर्यमिवोदितं* वपु· ।**
**अमृग्यमैश्वर्यसुख नव वयस्तप.फल स्यात् किमत पर वद ॥ ४१ ॥**

अ०—प्रथमस्य वेधस. कुले प्रसूति , वपु त्रिलोकसौन्दर्यमिव उदितम्, ऐश्वर्यसुखम् अमृग्यम् , वय नवम् , अत परम् किम् तप फलम् स्यात् इति वद ।

व्याक०—त्रयाणा लोकाना सौन्दर्यमिव त्रिलोकसौन्दर्यमिव, उत्तरपदे द्विगु । सौन्दर्यम्-सुन्दरशब्दात् ष्यञ् । ऐश्वर्यस्य सुखम् ऐश्वर्यसुखम् । ऐश्वर्यशब्दे ईश्वरशब्दात् ष्यञ् । न मृग्यम् अमृग्यम् , मृग्यशब्दे मृगयते "अचो यत्" । उदितम्-एते· क्त । स्यात्-अस्ते सभावनाया लिङ् । वद-वदते अधीष्टे लोट् ।

व्याख्या—प्रथमस्य-सर्वाद्यस्य, वेधस -हिरण्यगर्भस्य, कुले-वंशे, प्रसूति †-उत्पत्ति , तव अस्तीति पदद्वय सर्वत्र योज्यम् । वपु -शरीरम् , त्रयाणा लोकानाम्-पृथिव्यादिलोकत्रयस्य, सौन्दर्यमिव ( एकत्र समाहृतम् ) लावण्यमिव, उदितम्-उत्पन्नम् , ऐश्वर्यसुखम्-सपत्तिसुखम् , अमृग्यम्-( स्वत· सिद्धत्वाद् ) न अन्वेषणीयम् , वय -अवस्था, नवम्-नूतनम् , यौवनं तवास्ती त्यर्थः, अत -अस्माद् उत्तमकुलोत्पत्त्यादित·, परम्-अतिरिक्तम् , किम् , तपस·, फलम्-परिणामः, स्यात्-संभवेत् । आक्षेपे किंशब्द इति प्रकाशिका । नास्ति पर तप· फलम् , यद्यस्ति, तर्हि वद-ब्रूहि ।

भा०—तपसो लौकिकानि फलानि यानि सभाव्यन्ते, तानि ( उत्तमकुलजन्म, सौन्दर्यम् , सपत्ति , यौवनम् इति ) सर्वाणि ते सन्ति । तथाविधानि च सन्ति, यत उत्कृष्टानि न सभवन्ति । नव च ते वय , तेन ( ऋणत्रयमनपाकृत्य ) मोक्षाभिलाषोऽपि न सभवति, तन्न सभाव्यते तवास्य तपस. किमपि फलम् । न चाफला बुद्धिमता प्रवृत्ति , तत एव फलप्रश्ने कौतुकमुत्पन्नमिति ।

---

* 'मिवार्जित वपु.' इति प्रका० विव० । अर्जितम्—एकत्र सञ्चित सौन्दर्यमिव वपुरिति व्याख्या ।

† 'यशार्थे हि मया सृष्टो हिमवानचलेश्वर.' इति ब्रह्मपुराणम् । तेन ब्राह्मण पुत्रो हिमालय·, तत्पुत्री च पार्वतीति ब्रह्मकुल उत्पत्ति सिद्धा ।

अल०—तप फलाभावसमर्थनात्काव्यलिङ्गम्। वहूना तपस्यप्रवृत्तौ हेतुत्वेनोपपादनात्समुच्चयोऽपि सभवति। त्रिलोकसौन्दर्यमिवोदित वपुरित्युत्प्रेक्षा।

**भवत्यनिष्टादपि नाम दु सहान् मनस्विनीना प्रतिपत्तिरीदृशी।**
**विचारमार्गप्रहितेन चेतसा न दृश्यते तच्च *कृशोदरि! त्वयि ॥४२॥**

अ०—दु सहाद् अनिष्टाद् अपि मनस्विनीनाम् ईदृशी प्रतिपत्ति भवति नाम, (पर) (हे) कृशोदरि! विचारमार्गप्रहितेन चेतसा तत् च त्वयि न दृश्यते।

व्याक०—न इष्टाद् अनिष्टाद्। इष्टशब्दे-इच्छते क्त। कृशमुदरं यस्या सा कृशोदरी, सम्बुद्धौ कृशोदरि। "नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाच्च" इति वैकल्पिको ङीष्। विचारस्य मार्गे प्रहितेन विचारमार्गप्रहितेन, प्रहितशब्दे दधाते क्त। दु सहात् सहते खल्। मनस्विनीनाम्-विन्नन्ताद् मनस्विशब्दान् ङीप्। ईदृशी-इयमिव दृश्यत इति इदपूर्वात् पश्यते. "त्यदादिषु दृशोऽनालोचने कञ् च" इति कञ्, तत "टिड्ढाणञ्" इत्यनेन ङीप्। प्रतिपत्ति-प्रतिपूर्वात् पद्यते क्तिन्। नामशब्द सभावनार्थ। चेतसेति करणे तृतीया। चशब्दोऽप्यर्थे। दृश्यते-कर्मणि लट्, मयेति तत्कर्तृपदमध्याहार्यम्। दृशिरत्र ज्ञानसामान्यवाची।

व्याख्या—दु सहात्-सोढुमशक्याद्, अनिष्टादपि-अप्रियोपनिपातादपि, मनस्विनीनाम्-अभिमानवतीनाम्, स्त्रीणाम्, ईदृशी-तपश्चरणलक्षणा, †प्रतिपत्ति-प्रवृत्ति, भवति इति नाम-सभाव्यते, परन्तु हे कृशोदरि-हे सुमध्यमे! विचारमार्गे अनुसधानसरणौ, प्रहितेन-निवेशितेन विवेकप्रवणेन, चेतसा-चित्तेन, तच्च-तदनिष्टमपि, त्वयि, न दृश्यते-न ज्ञायते।

भा०—इष्टप्राप्तिस्तपसा न संभावितेति पूर्वस्मिन् पद्ये उक्तम्। ननु इष्टप्राप्तिवदनिष्टपरिहारोऽपि वाञ्छनीय, तदर्थमेव कदाचित्तप स्यादिति स्वय सभाव्य, अभ्युपगम्य च तस्याप्यभावं विवृणोति वर्णी, त्वयि अनिष्टसम्बन्धोऽपि न सभाव्यत इति।

---

* 'तलोदरि' इति प्रका० विव०। करतलवन्निम्नमुदर यस्या इति च तद्व्याख्या।

† 'प्रतिपत्तिस्तु गौरवे। प्राप्तौ प्रवृत्तौ प्रागल्भ्ये' इति केशव।

**अलभ्यशोकाभिभवेयमाकृतिर्विमानना सुभ्रु ! कुतः पितुर्गृहे ।**
**पराभिमर्शो न तवास्ति कः करं प्रसारयेत् *पन्नगरत्नसूचये ॥ ४३ ॥**

अ०—( हे ) सुभ्रु ! इयम् आकृतिः अलभ्यशोकाभिभवा, ( अस्ति ) (किंच) पितुः गृहे विमानना कुतः, तव पराभिमर्शः न अस्ति, कः पन्नगरत्नसूचये करम् प्रसारयेत ? ।

व्याक०—शोभने भ्रुवौ यस्याः सा सुभ्रूः, सम्बुद्धौ हे सुभ्रु, भ्रूशब्दस्योवङ्स्थानत्वाद् "नेयङुवङ्स्थानावस्त्री" इति नदीत्वनिषेधाद् ह्रस्वः प्रामादिक इति कौमुद्यां दीक्षितः । अन्ये तु "उकारादप्यूङ्प्रकृते" इति वामनोक्तदिशा "अप्राणिजातेश्चारज्ज्वादीनामुपसंख्यानम्" इति वार्तिकेन दीर्घोकारान्तेभ्योऽप्यूङ् विधीयते । अलाबूः, कर्कन्धूः इति भाष्योदाहरणं च तत्रानुकूलम् । ततश्च सुभ्रूशब्दादूङि भ्रूशब्दसम्बन्ध्युवर्णाभावात्तत्रोवङ्प्रवृत्त्यभावे उवङ्स्थानत्वाभावान्निषेधाप्रवृत्तौ नदीत्वे युक्तमेव ह्रस्वत्वमिति समादधति । न लभ्यौ शोकश्च अभिभवश्च यया सा अलभ्यशोकाभिभवा, यद्वा न लभ्यः शोकेन अभिभवो यया, लभ्यशब्दे लभतेः "पोरदुपधात्" इति यत् । परेणाभिमर्शः पराभिमर्शः । अभिमर्शः-मृश् धातोर्घञ् । रत्नस्य सूचिः, रत्नसूचिः, पन्नगस्य रत्नसूचिः पन्नगरत्नसूचिः, तस्यै । पन्नगशब्दे पन्नं गच्छतीति "सर्वत्रपन्नयोरुपसंख्यानम्" इत्यनेन गच्छतेर्डः । "क्रियार्थोपपदस्य च ..." इत्यनेन चतुर्थी, पन्नगरत्नसूचिमाहर्तुमित्यर्थः । विमानना-मानयतेः "ण्यासश्रन्थो युच्" । कुतः-किम्-शब्दात् तसिल्, "कु तिहोः" इति किमः 'कु' इत्यादेशः । प्रसारयेत्-ण्यन्तसृधातोः "शकि लिङ् च" इति शक्यार्थे लिङ् ।

व्याख्या—हे सुभ्रु ! इयम्-दृश्यमाना सौम्या, सामुद्रिकलक्षणोपेता, तव आकृतिः-मूर्तिः, न लभ्यः-लब्धुं योग्यः, शोकेन-अनिष्टप्राप्तीष्टपरिहारजन्येन दुःखेन, अभिभवः-तिरस्कारः, यया तथाभूता, अस्तीति शेषः । किं च, पितुः-जनकस्य-पर्वतराजस्य, गृहे, विमानना-अवज्ञा, कुतः (संभवेत्) पितुर्निरतिशयप्रियत्वान्न सम्भवतीत्यर्थः । तव-भवत्याः पर्वतराजपुत्र्याः, परेण-अन्येन जनेन, अभिमर्शः-

---

* 'रत्नसूतये' इति प्रका० विव० । षू प्रेरणे धातोः क्तिन् । सूतये-चालनाय-अपहरणाय इति तद्व्याख्या ।

धर्षण नास्ति, नैव सभवति, यतो हि क , पन्नगस्य-सर्पस्य, रत्नसूचये-शिरोमणिशलाकायै, तामादातुम्, करम्-हस्तम्, प्रसारयेत्-प्रसारयितुं शक्नुयात् न कोपीत्यर्थः ।

भा०—अनिष्टसभवाभाव उक्त , स एव प्रपञ्च्यते, तवाकृतिरेव अनिष्टप्राप्तियोग्या न प्रतीयते, न हि सौम्या , सर्वलक्षणोपेता वा आकृतयोऽनिष्टभाजो दृष्टा । यद्वा शोकचिह्न तवाकृतौ न दृश्यते इति भावो व्याख्येय.। किं च कस्मादनिष्ट सभवेत् ? भर्तृगृहे भर्तुरत्याचारात्सपत्नीकलहाद्वाऽनिष्ट स्यात्, त्वं तु पितुर्गृहे निवससि, पिता च त्वयि नितरा स्निग्ध इति कोऽनिष्ट कुर्यात् । अन्यस्तु कश्चन कामी पुरुष. पर्वतराजपुत्रीं त्वा मनसापि न धर्षितुमलम् , न हि सर्पमणेरपहरणाय कश्चिदुद्युङ्क्ते ।

अल०—अत्र पूर्वोत्तरवाक्यार्थयो सम्बन्धोऽसम्भवन् 'पन्नगरत्नसूचये करप्रसारणमिव त्वदभिमर्श ' इत्युपमा परिकल्पयतीति निदर्शनालङ्कार.। कुवलयानन्दमते तु ललितम् । विवरणकारस्तु प्रतिवस्तूपमामाह ।

**किमित्यपास्याभरणानि यौवने धृत त्वया वार्धकशोभि वल्कलम् ।**
**वद प्रदोषे स्फुटचन्द्रतारका *विभावरी यद्यरुणाय कल्पते ॥४४॥**

अ०—(हे गौरि !) त्वया यौवने आभरणानि अपास्य वार्धकशोभि वल्कलम् किम् इति धृतम् ? यदि स्फुटचन्द्रतारका विभावरी प्रदोषे (एव) अरुणाय कल्पते तर्हि वद ।

व्याक०—वृद्धस्य भावो वार्द्धकम्, "द्वन्द्वमनोज्ञादिभ्यश्च" इति वृद्धशब्दाद् वुञ्, तत्र शोभत इति वार्द्धकशोभि, णिनिः । स्फुटा चन्द्र तारकाश्च यस्या (द्वन्द्व० वहु०) सा स्फुटचन्द्रतारका, स्फुटशब्दे स्फुटधातो इगुपधत्वात् क । यौवने-युवादित्वाद् भावेऽण् । विभातीति विभावरी, विपूर्वाद् भाधातो वनिप्, ततो "वनो र च" इत्यनेन ङीप्, रादेशश्च । वद-वदतेः संप्रश्ने लोट् । अरुणाय-"क्रियार्थोपपदस्य " इत्यनेन चतुर्थी, अरुण गन्तुम्-अरुणोदयम् कर्तुमित्यर्थ । त्वयेति धरते कर्तृपदम् ।

---

* 'विनिकीर्णतारका' इति प्रका० विव० । 'विभावरी त्यक्ततारका मूल।' इत्यादि तद्व्याख्या ।

व्याख्या—हे गौरि ! त्वया-भवत्या, यौवने-युवावस्थायाम्, आभरणानि-भूषणानि, अपास्य-त्यक्त्वा, वार्धके-वृद्धावस्थायाम्, शोभते-इति तथाभूतम्, वल्कलम्-वृक्षत्वक्, किमिति-केन कारणेन, धृतम् परिहितम् ? यदि, स्फुटा -प्रकाशमानाः, चन्द्र -इन्दुः, तारका -नक्षत्राणि, च यस्या तथाभूता, विभावरी-रात्रि , प्रदोषे-रजनीमुखे एव, अरुणाय अरुण गन्तुम्-अरुणोदय कर्तुम् कल्पते प्रभवति, तर्हि, वद-ब्रूहि । न कल्पते, ततो न वदितु शक्नोषीति ।

भा०—तपःकारणानि परिहृतानि, निरभिसन्धि तप स्यादिति पक्षमाक्षिपति । तद्धि वृद्धाना शोभते, न तु यौवनप्रारम्भ एव । अधुना तव भूषणधारणकालोऽस्ति, न तु वल्कलधारणकाल । यथा रात्रेरारम्भ एव चन्द्रतारका अस्त गच्छेयु , अरुणश्चोदियाद् इत्यसगता घटना, तथाऽस्मिन्नेव वयसि भूषणत्यागो वल्कलधारण च तवासगतमिति । रात्रे भूषणस्थानीयाश्चन्द्रतारका , अरुणस्थानीयन्तु वल्कलम् ।

अल०—किंशब्दस्य केवल प्रश्नार्थकत्वे, उत्तरार्द्धे यदिशब्दस्यापि च पक्षान्तरबोधकस्य तत्सहकारित्वे विभावरीपार्वत्यो सादृश्यस्य कल्पनीयत्वान्निदर्शना । तस्य क्षेपार्थगर्भत्वे 'यदि कल्पते तदा वद' इत्युक्तेरपि च क्षेपपर्यवसायित्वे सदृशवाक्यार्थयोर्निबन्धनात्प्रतिवस्तूपमा । यदिशब्दस्य सभावनार्थत्वे तु 'यदि प्रदोषेऽरुणोदय. सभवेत्' तदा तवापि वल्कलधारण युक्त स्याद्' इत्यभिप्रायपरत्वे काव्यप्रकाशमतेऽतिशयोक्ति , कुवलानन्दमते तु सभावना। त्रयाणा संदेहसकर. ।

**दिवं यदि प्रार्थयसे वृथा श्रम पितु प्रदेशास्तव देवभूमय ।**
**अथोपयन्तारमलं समाधिना न रत्नमन्विष्यति मृग्यते हि तत् ॥४५॥**

अ०—यदि दिवम् प्रार्थयसे तर्हि श्रम वृथा, (यत ) देवभूमय तव पितु प्रदेशा (सन्ति) अथ उपयन्तारम् (प्रार्थयसे तर्हि) समाधिना अलम्, रत्नम् न अन्विष्यति*, हि तद् मृग्यते ।

व्याक०—श्रम श्राम्यतेर्घञ् । उपयन्तारम् यम् धातोस्तृच्, पितु प्रदेशा इति स्वस्वामिभावसम्बन्धे षष्ठी । समाधिना-गम्यमानाऽपि क्रिया कारकवि-

---

* 'मन्विच्छति' प्रका० विच० पाठः ।

भक्तीना निमित्तमिति गम्यमानसाधनक्रियाया प्रयोजनक्रियाया वा करणे तृतीया, समाधिना साध्य प्रयोज्य वा नास्तीति, रत्नमिति अन्वेषणक्रियायाः कर्तृपदम्, ग्रहीतारमिति तत्कर्म अध्याहर्तव्यम् । मृग्यत इति कर्मणि लट् । पूर्ववाक्यस्य कर्तृकर्मणो इह वैपरीत्येन योज्ये । अथशब्द पक्षान्तरे, प्रश्ने ।* इति प्रकाशिका ।

व्याख्या—हे गौरि ! यदि, त्वम्, दिवम्-देवनिवासस्थान स्वर्गम्, प्रार्थयसे-अभिलष्यासि, तर्हि ते श्रम -तपश्चर्याप्रयास , वृथा-निष्फल , अस्ति । यतः, देवानाम्-इन्द्रादीनाम्, भूमय -निवासस्थानानि, तव-भवत्या , पितु·-जनकस्य हिमालयस्य, प्रदेशा· स्थानानि, सन्तीति शेष । अथ-यदि, उपयन्तारम्-वरम्, प्रार्थयसे, तर्हि (वरप्राप्तये) समाधिना अलम्-तपो न कर्तव्यम, यतश्च, रत्नम्-श्रेष्ठवस्तु, (ग्रहीतारम्) न अन्विष्यति-न गवेषयते, हि-यत , तद्-रत्नम्, मृग्यते अन्विष्यत एव, ग्राहकैरितिशेष ।

भा०—सभावनान्तर निराक्रियते-यदि स्वर्गेच्छया तप , तर्हि व्यर्थम् । स्वर्गे तु त्व स्थितैव, हिमालयप्रदेशा एव देवाना निवासाः स्वर्गा इत्युच्यन्ते, एतदर्थमेव तपस्यन्ति भूमिष्ठा लोका , यदि तु विवाहार्थं वर प्रार्थयसे-तदप्यसभाव्यम् । ईदृश स्त्रीरत्न स्वय वरा अभिलष्यन्ति, न त्वभिलषितदुर्लभस्ते वर स्यात् । 'यस्त ईप्सितो वर , सोऽह स्वय त्वामन्विष्यन्नायात , अलमिदानीं तपसा' इति भगवत शिवस्य गूढोऽभिप्राय ।

अल०—रत्नशब्दस्य श्रेष्ठवाचित्वे सामान्येन विशेषस्य समर्थनादर्थान्तरन्यास , प्रस्तरविशेषवाचित्वे तु सदृशे प्रस्तुते सदृशोपन्यासादप्रस्तुतप्रशसेत्यरुणाचलनाथ. । पार्वत्या निखिलस्त्रीजातानुत्तमत्व व्यङ्ग्यम् ।

**निवेदित नि.श्वसितेन सोष्मणा मनस्तु मे सशयमेव गाहते ।**
**न दृश्यते प्रार्थयितव्य एव ते भविष्यति प्रार्थितदुर्लभ कथम् ॥४६॥**

अ०—( यद्यपि ) सोष्मणा ( तव ) नि श्वसितेन निवेदितम्, मे मनः तु सशयम् एव गाहते, ते प्रार्थयितव्य एव न दृश्यते, प्रार्थितदुर्लभ कथम् भविष्यति ?

व्याक०—ऊष्मणा सह वर्तत इति सोष्म तेन । प्रार्थितश्चासौ दुर्लभश्च

---

* 'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ' इत्यमरः ।

प्रार्थितदुर्लभ॰। दुर्लभ इति लभते खल्। "न सुदुर्भ्यां केवलाभ्याम्" इति नुम् न। निःश्वसितेन-श्वस् धातोर्भावे क्त, निवेदनक्रियाकर्तरि तृतीया, करणस्य कर्तृत्वेन विवक्षा। निवेदितम्-इति निवेद्यते कर्मणि क्त, वरार्थित्वमिति तत्कर्म अध्याहर्तव्यम्। प्रार्थयितव्य-प्रार्थयते॰ अर्हार्थे तव्यप्रत्यय। कथंशब्दो व्याख्यात॰। भविष्यति-"अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि" इति अनवक्लृप्तौ (असंभावनायाम्) लृट्। ते-मे-उभे अपि षष्ठ्यौ, पूर्वत्र "कृत्याना कर्तरि वा", उत्तरत्र "षष्ठीशेषे"। तवममयो स्थाने "तेमयावेकवचनस्य" इति ते मे इत्यादेशौ।

व्याख्या—यद्यपि, सोष्मणा-ऊष्मसहितेन-उष्णेन, तव, नि श्वसितेन-नि श्वासेन, निवेदितम्-तव वरार्थित्व सूचितम्, तथापि, मे-विवेचनशीलस्य मम, मन -चित्तम्, तु (तुशब्दोऽयमन्यचित्तवैलक्षण्य स्वचित्ते बोधयति) सशयम्-सदेहमेव, गाहते-प्राप्नोति, यत, ते-तव पार्वत्या., प्रार्थयितव्यः प्रार्थयितुमर्ह एव, न दृश्यते-न ज्ञायते, न विचारपथमारोहति, प्रार्थित अपि, दुर्लभ-दुष्प्राप, पुन. कथ भविष्यति? न सभवत्येवेत्यर्थ।

भा०—वर्णी वक्ति-यदा मया सभावितान् मनोरथान् निराकरणायोपक्षिपता वरप्रार्थना उपक्षिप्ता, तदा तवान्तस्तापबोधका उष्णानि श्वासा॰ प्रवृत्ता, तेन वरार्थित्व तवानुमीयते। तथाप्युपपत्तिमालोचयतो मम विचारशीले मनसि तत्रानुमाने विश्वासो न जायते। यतो हि उत्कृष्ट वस्तु सर्वै॰ प्रार्थ्यते, अत सर्वोत्कृष्टा त्वमेव सर्वै प्रार्थनीया, त्वदपेक्षया न दृश्यते कोऽप्युत्कृष्टो यस्त्वया प्रार्थ्येत। पुनश्च प्रार्थ्यमानोऽपि स न सुलभ इति तदर्थं तपश्चरणमिति तु सभावनाया अविषय एवेति।

अल०—'सोष्मणा नि श्वसितेन निवेदितम्' इत्यनुमानालङ्कार। सशयस्य हेतुना समर्थनाद् वाक्यार्थहेतुक काव्यलिङ्गम्। पार्वत्या सर्वोत्कर्षो व्यङ्ग्यः। मे शब्दो विवेचनशीलता लक्षयन्स्वस्य प्रागल्भ्यातिशय व्यनक्तीत्यर्थान्तरसंक्रमितवाच्य।

**अहो स्थिरः कोऽपि तवेप्सितो युवा चिराय कर्णोत्पलशून्यता गते।**
**उपेक्षते य *श्लथलम्बिनीर्जटा कपोलदेशे कलमाग्रपिङ्गलाः ॥४७॥**

* 'श्लथबन्धिनीः' इति प्रका० विव०। श्लथो बन्ध. आसामस्तीति तद्व्याख्या।

अ०—तव ईप्सित क. अपि, युवा स्थिर ( अस्ति ) ( इति ) अहो, य• चिराय कर्णोत्पलशून्यताम् गते ( तव ) कपोलदेशे श्लथलम्बिनी कलमाग्रपिङ्गला जटा. उपेक्षते ।

व्याक०—कर्णयोः उत्पलाभ्या शून्य• कर्णोत्पलशून्य , तस्य भावस्तत्ता, ताम् । कपोल एव देशे कपोलदेशे । औपश्लेषिकाधारे सप्तमी । श्लथाश्च ता लम्बिनोश्च श्लथलम्बिनी , लम्बिनीशब्दे लम्बतेर्ग्रह्यादित्वाद् णिनि । कलमानाम् अग्रवत् पिङ्गला कलमाग्रपिङ्गलाः, इमे द्वे अपि जटाना विशेषणे द्वितीयान्ते । ईप्सित.-आपधातो सन्नन्ताद्वर्तमाने क्त । तवेति "क्तस्य च वर्तमाने" इति षष्ठी । जटा इति द्वितीयाबहुवचनान्तम्, उपेक्षणक्रियाया. कर्म । अहो इति आश्चर्यद्योतको निपात ।

व्याख्या—हे गौरि, तव-भवत्या , ईप्सित -प्राप्तुमिष्यमाण , कोऽपि-अनिर्ज्ञातनामधेय , (य• कोप्यस्तु) युवा-यौवने वर्तमान पुरुष•, (आक्षेपगर्भमिदम्, वृथा युवत्वाभिमानीति यावत्) स्थिर -अतिकठिनहृदय , पाषाणवदेव-अस्ति, इत्यहो-आश्चर्यमिदम्, य -युवत्वाभिमानी, चिराय-बहो कालात्, कर्णयोः-श्रोत्रयो , उत्पलाभ्याम्-अलङ्कारभूताभ्या कमलाभ्या, शून्यताम् रहितताम्, गते-प्राप्ते, अनवलम्बितकमलपल्लवावतंसे, तव कपोलदेशे-गण्डस्थले, श्लथा•-शिथिलबन्धना , अत एव लम्बिनीः-अवस्रसमाना , कलमानाम्†-शालिविशेषाणाम्, अग्रवद्-अग्रभागवत्, पिङ्गला ईषद्रक्तवर्णा ,जटाः-अप्रसाधनादिना परस्परश्लिष्टान् केशकलापान्, उपेक्षते-अनादरेण सहते, न तु झटिति स्वयमागत्य स्वकराभ्यामेव सरभस बध्नातीति ।

भा०—यदि सत्य वरप्रार्थनयैव तव तप , तदेद वक्तव्यं स्याद्, यत्त्वयेप्यमाण कोऽपि वर पाषाणवदेव दृढ इति वृथा युवत्वाभिमानी । (स्थिरशब्दः स्थैर्यगुणबोधकोऽप्यत्र वाक्यार्थवैशिष्ट्याद् दुर्गुणपर्यवसायी) स हि साश्चर्यमुपालभ्यते मया) यतस्त्वं तद्विरहेणेदृशीं दशा गतासि, यद्बन्धनाभावात् श्लथास्तव जटा कपोले लम्बन्ते, न च योग्योऽपि कपोलदेश. कर्णोत्पलकान्त्या शोभते, तस्य तु मनसि नास्त्येतावतापि कोऽपि प्रभाव इति। कलमाग्रपिङ्गला इति श्लथा-

---

† 'शालय. कलमाद्याश्च षष्टिकाद्याश्च' इत्यमर. ।

नामपि जटाना कपोलशोभाहेतुत्वमुक्तम् 'किमिव हि मधुराणां मण्डनं नाकृतीनाम्, इति न्यायेन। 'तवेप्सितो यो वर स नित्य युवैव, न कदापि बालो वृद्धो वा, जन्ममृत्युसम्बन्धाभावात्। स्थिरः सर्वथा विकारशून्य कूटस्थ., अहो-इत्याश्चर्यरूपश्च' इति भगवत शिवस्य गूढोऽभिप्रायः।

अलं०—पार्वत्याः सौन्दर्यगुणेन यूनि दोपकल्पनादुल्लासोऽलङ्कार । पार्वतीगतो विप्रलम्भो वर्णिगतस्य वरविपयकस्यामर्पस्याङ्गमिति रसवदलङ्कारोऽपि।

**मुनिव्रतैस्त्वामतिमात्रकर्शितां दिवाकराप्लुष्टविभूषणास्पदाम्।**
**शशाङ्कलेखामिव पश्यतो दिवा सचेतस. कस्य मनो न दूयते* ॥४८॥**

अ०—मुनिव्रते अतिमात्रकार्शिताम् दिवाकराप्लुष्टविभूपणास्पदाम् (अत एव) दिवा शशाङ्कलेखामिव (स्थिताम्) त्वाम् पश्यत सचेतमः कस्य मन न दूयते ?।

व्याक०—अत्येव अतिमात्रम्, मयूरव्यंसकादित्वात् समास, अतिमात्र कर्शिताम् अतिमात्रकर्शिताम्, केवलसमास । दिवा करोति इति दिवाकर., "दिवाविभानिशा " इत्यनेन करोतेष्ट, तेन आप्लुष्टानि (तत्पु०) विभूषणानाम् आस्पदानि (षष्ठी०) यस्याः (बहु०)ता दिवाकराप्लुष्टविभूपणास्पदाम्। आप्लुष्टशब्दे प्लुषधातोः क्त । विभूपणशब्दे भूषयतेर्ल्युट्। आस्पदम्-"आस्पदं प्रतिष्ठायाम्" इत्यनेन सुड् निपात्यते। शशाङ्कस्य लेखामिव शशाङ्कलेखामिव। चेतसा सह वर्तमानस्य सचेतसः। दूयते-'दूङ् परितापे' धातोर्लट्। मन इति तत्कर्तृपदम्।

व्याख्या—मुनीनाम्, व्रतै -मुनिजनोचितै' चान्द्रायणादिभि, तपोऽभि', अतिमात्रम्-अत्यन्तम्, कर्शिताम्-कृशतां प्राप्ताम्, दिवाकरेण सूर्येण, आप्लुष्टानि-दग्धानि (आतपसंस्पर्शात्) श्यामीकृतानीति यावत्, विभूपणानाम् कटकाद्याभरणानाम्, आस्पदानि-स्थानानि-मणिबन्धाद्यवयवा., यस्यास्तथाभूताम्, अत एव दिवा-दिने (स्थिताम्) शशाङ्कस्य-चन्द्रमसः, लेखाम्-कलामिव, स्थिताम्, त्वाम्, पश्यत अवलोकयत, सचेतस -सहृदयस्य-भावुकस्य, कस्य-पुरुषस्य, मन -चित्तम्, न दूयते न परितप्यते ? सर्वस्यैव दूयत इति काकूक्तिः।

भा०—विभूपणधारणोचितानि तवाङ्गानि सूर्यकिरणैर्दह्यन्त इव। व्रतैश्च

---

* 'दृश्यते' इति प्रका० विव०।

त्वमातिमात्र कर्शितासि, दिवा क्लान्ता चन्द्रलेखेव दृश्यसे, त्वामेवमवस्था दृष्ट्वा क सहृदयश्चेतसि न खेदमनुभवति, तथापि त्वत्प्रार्थितो युवा न द्रवतीत्याश्चर्यमेव । 'सचेतसो मनो दूयेत, त्वत्प्रार्थितस्य तु मन सम्बन्ध एव नास्ति, निरिन्द्रियत्वात्' इति गूढोऽभिप्राय ।

अल०—उपमा । पार्वत्या दैन्य व्यङ्ग्यम्, तच्च तदुद्बोधितब्रह्मचारिगतदयाया अङ्गमिति प्रेयोऽलङ्कारोऽपि ।

**अवैमि सौभाग्यमदेन वञ्चित तव प्रय यश्चतुरावलोकिनः ।**
**करोति लक्ष्य चिरमस्य चक्षुषो न वक्त्रमात्मीयमरालपक्ष्मण ॥४६॥**

अ०—(अहम्) तव प्रियम् सौभाग्यमदेन वञ्चितम् अवैमि, य, आत्मीयम् वक्त्रम् चतुरावलोकिन अरालपक्ष्मणः अस्य चक्षुष चिर लक्ष्यम् न करोति ।

व्याक०—चतुरमवलोकत इति चतुरावलोकि, तस्य चतुरावलोकिन । लोकतेर्णिनिः । अरालानि पक्ष्माणि यस्य तस्य अरालपक्ष्मण । वञ्चितम् वञ्चयते क्त., सौभाग्यमदेनेति वञ्चनाया कर्तरि तृतीया, सौभाग्यशब्दो व्याख्यात । अवैमि अवपूर्वाद् एतेर्लट्, "एत्येधत्यूठसु" इति वृद्धिः । आत्मीयम्- आत्मन इदमिति आत्मशब्दाद् "वृद्धाच्छ" । लक्ष्यम्-लक्षयतेः "एरच्" । चक्षुष - "कृत्याना कर्तरि वा" इत्यनेन लक्षणक्रियायाः कर्तरि षष्ठी ।

व्याख्या—अहम्, तव-भवत्या, प्रियम्-वल्लभम् (त्वया प्रियत्वेन सङ्कल्पितम्, यदर्थं कठिन तपश्चरसि, तम्) सौभाग्यस्य-सौन्दर्यस्य, मदेन-गर्वेण, वञ्चितम्-प्रतारितम्, अवैमि-जानामि अनुमिनोमीति यावत् । य -प्रिय , आत्मीयम्-स्वकीयम्, वक्त्रम्-मुखम्, चतुरम् सुन्दरम्-मधुरम्, अवलोकते-प्रेक्षते, इति तथाभूतस्य, अस्य-पुर शोभमानस्य त्वदीयस्य, अरालानि-कुटिलानि, पक्ष्माणि-अक्षिलोमानि, यस्य तथाभूतस्य, चक्षुष -नेत्रस्य, चिरम्-बहुकालपर्यन्तम्, लक्ष्यम् प्राप्यभूमिम्-दर्शनविषयम्, न करोति ।

भा०–मयानुमीयते-त्वया प्रियत्वेन सङ्कल्पित कोऽपि पुरुष, सौभाग्येन

---

* लक्ष रविमस्य' इति विव० । 'अस्य चक्षुषो लक्षं रविं करोति, (तपसि त्वा प्रवर्तयति, तप परा त्व चक्षुषानवरत सूर्यं पश्यसि-इति रवेर्लक्ष्यत्वम्) आत्मीय वपत्र न' इति तद्व्याख्या ।

गर्वित., 'मामेवेय सर्वथानुयास्यति, कठिनामस्या परीक्षा करोमि' इत्याद्यभिमानस्तस्य । तेनैव गर्वेण वञ्चितः सोऽद्यावधि । ननु वञ्चित इति कथमुच्यते, तत्राह-यदि स त्वामन्वसरिष्यत्, त्वदीयमिद सौन्दर्यनिधान नेत्र तन्मुखासक्तम भविष्यत्, एतद्विषयतया स यथार्थसौभाग्यमाप्स्यत् । वृथा सौभाग्यमदेनैव तस्येद मुख्य सौभाग्यं प्रतिरुद्धमिति स वञ्चित एव मया मन्यते। 'यस्त्वेप्मित प्रियः, स वस्तुत सौभाग्यमदेन वञ्चित -रहित एव, न तस्य प्राप्तकामस्य सौभाग्येच्छा, न वा तज्जनितो मद अभिमानो हर्षो वास्ति । न च स नेत्रयोर्लक्ष्य भवति, इति भगवत शिवस्य गूढोऽभिप्रायः ।

अल०—हेतुना साध्यसाधनादनुमानालङ्कार । चक्षुष सौन्दर्येण गुणेन प्रियस्य दोषोक्त्या 'उल्लास ' । प्रियपुरुष विषयकोऽमर्षो व्यङ्ग्य ।

**कियच्चिर श्राम्यसि गौरि ! विद्यते ममापि पूर्वाश्रमसञ्चित तपः ।**
**तदर्धभागेन लभस्व काङ्क्षितम् वर तमिच्छामि च साधु वेदितुम् ॥५०॥**

अ०—गौरि ! कियत् चिरम् श्राम्यसि ? पूर्वाश्रमसञ्चितम् मम तप. अपि विद्यते, तदर्धभागेन काङ्क्षितम् वरम् लभस्व, तम् च साधु वेदितुम् इच्छामि ।

व्याक०—पूर्वस्मिन् आश्रमे सञ्चितम् पूर्वाश्रमसञ्चितम् । अर्द्ध भाग - अर्द्धभाग , तस्य अर्द्धभाग , तेन । चिरमिति क्रियाविशेषणत्वात्, "कालाध्वनोरत्यन्तसयोगे" इत्यनेन वा द्वितीयान्तम् । कियदिति तद्विशेषणम्, किंशब्दाद् वतुप्रत्ययः, "इदकिमोरीश्की" इति किरादेश । श्राम्यसि-'श्रमु तपसि खेदे च' धातोर्लट् । लभस्व-लभतेर्लोटि मध्यमपुरुषैकवचनम् । वेदितुम्-वेत्ते "समानकर्तृकेषु तुमुन्" । साधु इति वेदनक्रियाया विशेषण द्वितीयान्तम् ।

व्याख्या—हे गौरि ! हे पार्वति ! कियच्चिरम् कियत्कालपर्यन्तम्, श्राम्यसि-तपस्यसि ? बहु तप कृतम्, कियत्काल पुन करिष्यसि, नेदानीं कुरु । पूर्वाश्रमे-प्रथमाश्रमे ब्रह्मचर्यावस्थायाम्, सञ्चितम् सपादितम्, मम, तप , अपि, विद्यते, ( पार्वतीतप.समुच्चयार्थोऽपिशब्द , तव तपो वर्तत एव, ममापि वर्तते इति ) तस्य-मया पूर्वसञ्चितस्य तपस , अर्धेन भागेन-अर्धांशेन, काङ्क्षितम् स्वाभिलषितम्, वरम्-वोढारम्, लभस्व-प्राप्नुहि, तम्-वर च, साधु-

सम्यग्, वेदितुम्-ज्ञातुम्, इच्छामि-कामये । 'वरस्त्वदभिलषित' इति सामान्यतो ज्ञातम्, 'कस्तु स' इति विशेषतः सम्यग् ज्ञातुमिच्छामीति ।

भा०—पार्वति ! चिर तप कुर्वती त्व श्रान्तासि, दया मे त्वय्युत्पन्ना । अह स्वार्जितस्य तपसोऽर्द्धभाग ते दास्यामि, तेन तवाभिलाप पूरयिष्यते । पर त त्वदीप्सित वर पूर्व ज्ञातुमिच्छामि-योग्यः स न वेति । योग्यवरप्राप्त्यर्थमेव मया त्वदर्थं तपोव्यय क्रियेत इति । इय भगवतः शिवस्य वरप्रदानपरा गूढोक्तिरिति विवरणकारो व्याचष्टे-तथा हि-तपःशब्दो लक्षणया तप.साधनभूतस्य शरीरस्य बोधकः, 'शरीरमाद्यं खलु धर्मसाधनम्' *इत्युक्तत्वात् । शरीरस्य दिव्यत्वप्रतीतिर्लक्षणाप्रयोजनम् । तेन च †ममापि-निर्गुणत्वेन, निरीहत्वेन, निराकारत्वेन च प्रसिद्धस्यापि, पूर्वाश्रमसञ्चितम्-पूर्वम्-सर्गारम्भकाले, अश्रमेण-अनायासेन, मायामात्रेण सपादितम्, तप शरीरम्, अस्ति, तदर्द्धभागेन काङ्क्षितम् लभस्व-तस्य समाशमर्द्धं लब्ध्वा पूर्णमनोरथा भव, शरीरार्द्ध ते ददामि, पर वर त्वदीप्सितम्, साधु-मया करिष्यमाणस्य पूर्वपक्षस्य निराकरणपूर्वक वेदितुमिच्छामि, मयि त्वद्भावदार्ढ्यं जिज्ञासे इति ।

अल०—भावार्थोक्तरीत्या गूढोक्तिः । वर्णिगता पार्वती विषयिणी दया व्यज्यते ।

**इति प्रविश्याभिहिता द्विजन्मना मनोगत सा न शशाक शसितुम् ।**
**अथो वयस्या परिपार्श्ववर्तिनीं ‡विवर्तितानञ्जननेत्रमैक्षत ॥४१॥**

अ०—द्विजन्मना प्रविश्य इति अभिहिता सा मनोगतम् शसितुम् न शशाक, अथो परिपार्श्ववर्तिनीम् वयस्याम् विवर्तितानञ्जननेत्रम् ऐक्षत ।

---

* 'प्रजाकामो वै प्रजापति., स तपोऽतप्यत' (प्रश्नोपनिषत्), 'यत्-सप्तान्नानि मेधया तपसा जनयत्पिता' (बृहदारण्यकोपनिषत्) इत्याद्यासु श्रुतिषु 'ईश्वरशरीरस्य तप साधनत्व तप साध्यत्व च सुप्रसिद्धमिति तु वयम् ।

† गूढोक्तावस्याम् 'ममापि' शब्दव्याख्यैव चमत्कारसारभूता, सा तु विवरणकारेण न दर्शितेत्यहो ।

‡ 'निवर्तिता' इति प्रका० विव० । 'वर्णिमुखाद् निवर्तित नेत्रम् (तस्या अभिमुखीकृतम्) यस्या क्रियायाम्—इति तद्व्याख्या ।

व्याक०—द्वे जन्मनी यस्य तेन द्विजन्मना, अभिधानक्रियाकर्तृ तृतीया । मनसि गतं मनोगतम । परिपार्श्वे वर्तते इति परिपार्श्ववर्तिनी, ताम् वर्ततेर्णिनिस्ताच्छील्ये । न अञ्जनं ययो ते अनञ्जने, विवर्तिते अनञ्जने नेत्रे यस्मिन् कर्मणि यथा भवति तथा विवर्तितानञ्जननेत्रम्, ईक्षणक्रियाविशेषण द्वितीयान्तम् । विवर्तितशब्दे णिजन्ताद् वृते क्त । प्रविश्य-विशते. क्त्वा ल्यप् । अभिहिता-दधाते. क्त, "दधातेर्हि." । शासितुम-"शकधृष इत्यनेन शक्नोतावुपपदे तुमुन् । वयसा तुल्या वयस्याम्, "नौ वयोधर्म इत्यनेन यत् । ईक्षणे कर्मत्वाद् द्वितीया । अथो इत्योकारान्तो निपात ।

व्याख्या—द्विजन्मना-छद्मना-ब्रह्मचारिवेषधारिणा द्विजेन, प्रविश्य-पार्वत हृदयमनुप्रविश्य-वाचोयुक्त्या स्वविषये विश्रम्भमुत्पाद्य, इति-पूर्वोक्तम अभिहिता-कथिता, सा पार्वती, मनोगतम्-हृदिस्थम्-वरम्, शासितुम्-वक्तुं न शशाक-लज्जया न समर्था बभूव । अथो-कथनावश्यकत्वस्य अशक्ते निर्धारणस्य अनन्तरम्, परिपार्श्ववर्तिनीम्-सर्वदा स्वसहचारिणीम्, वयस्याम् सखीम्, विवर्तिते-तिर्यग् विवलिते, अनञ्जने-पूर्वं वियोगदुःखात् तदनु व्रतवशा कज्जलरहिते, नेत्रे-नयने यस्मिन् कर्मणि यथा भवति तथा, ऐक्षत-अवालोकत नेत्रसञ्ज्ञया सखीं वर्णिने प्रत्युत्तर दातुं प्रेरयामासेत्यर्थ ।

भा०—अयं पूर्वं द्विजन्मा ब्राह्मण, इति तदुत्तर दातव्यमेव, वाचोयुक्त्या च हृदयं तेन वशीकृतम्, तेनाप्युत्तरदानमावश्यकम् । पर तथापि लज्जया पार्वती स्वयं स्ववर कथयितुमशक्ताभूत् । वक्तव्यस्यावश्यकता तु विचा सखीमुख पश्यन्ती तामुत्तर दातु प्रेरयामासेव । नेत्रमभिमुखीकृत्य नेत्रस्यानञ्जनत्वं सखीं प्रति द्योतयन्ती 'अनञ्जनत्वकारणीभूता व्यथा त्वयावे यितव्या' इति व्यञ्जितवती । सखी नित्य पार्श्वस्थितिशीलेति तस्या हृद विजानाति, सा सर्वं वक्तु क्षमेति ताच्छील्यार्थेणिनिर्व्यनक्ति ।

अल०—हृद्गतशासनाशक्तया पार्वत्या लज्जाख्यो व्यभिचारिभावो व्यज्यते तस्यौत्सुक्येन सन्धि ।

**सखी तदीया तमुवाच वर्णिन निबोध साधो तव चेत् कुतूहलम्**

---

* 'वाञ्छितम्' इति प्रका० विव० । 'वाञ्छितम् निबोध' इत्यन्वय ।

**यदर्थमम्भोजमिवोष्णवारण कृत तपःसाधनमेतया वपु ॥५२॥**

अ०—तदीया सखी तम् वर्णिनम् उवाच, ( हे ) साधो ! चेत् तव कुतूहलम् ( अस्ति, तर्हि ) निबोध, एतया यदर्थम् अम्भोजम् उष्णवारणमिव वपु तप साधनम् कृतम् ।

व्याक०—तदीया-तस्या इयमिति तच्छब्दाच्छ. । वर्णिनम् *वर्ण ( स्तुति ) अस्यास्तीति वर्णी, तम् । "वर्णाद् ब्रह्मचारिणि" इतीनिः । यस्मा इति यदर्थम्-क्रियाविशेषण द्वितीयान्तम्, "अर्थेन नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्यम्" इत्यनेन समास । उष्णस्य वारणमुष्ण-वारणम् । अम्भोजस्य विधेयविशेषणम् । तपःसाधनमिति वपुषो विधेय-विशेषणम् । एतयेति कर्तरि तृतीया । निबोध-बोधतेर्लोटो मध्यमपुरुषैक-वचनम् । त्वमिति कर्ताध्याहर्तव्य । वाक्यार्थ कर्म ।

व्याख्या—तदीया तस्या पार्वत्या, सखी-वयस्या, तम्-पूर्वोक्तम्, वर्णिनम्-ब्रह्मचारिणम्, उवाच, हे साधो ! हे परोपकृतिपरायण ! चेद्-यदि, तव, कुतूहलम्-कौतुकम्-प्रबला श्रोतुमिच्छा अस्ति, तर्हि, निबोध-जानीहि-शृणु इति यावत् । एतया-पार्वत्या, यदर्थम् यस्मै प्रयोजनाय, अम्भोजम्-कमलम्, उष्णवारणमिव घर्मवारणार्थमातपत्रमिव, वपु -शरीरम्, तपसः-तपस्याया , साधनम्-उपकरणम्, कृतम् विहितम् ।

भा०—पार्वत्या दृष्टिपातेन प्रेरिता सखी ब्रह्मचारिण प्रत्युक्तवती । साधो ! स्वकीयार्धतप प्रदानोद्यमेन परोपकृतिपरायणता तव प्रकटीकृता, पर नैवमस्म-त्सख्या अभीप्सित साध्यमस्ति,अतिदुष्प्राप तत् । तथापि त्वादृशस्य कौतूहलनि-वृत्ति कर्तव्यैवेति कथयामि । यस्मै प्रयोजनाय तपस्यन्तीयमस्मत्सखी सुकुमार-तरमिद शरीरमतिकठिने शीतातपक्षुदादिसहनसाहसे तथा योजितवती, यथा कश्चित्कमलमातपनिवारणार्थे योजयेत्-तत्प्रयोजन ते वच्मि ।

अल—उपमा । प्रयोजनस्यातिदुष्प्रापता, परमा वाञ्छनीयता अप्राप्ताव-तिशयेन कष्टप्रदता च व्यञ्जिता । यथा आतपदु ख दु सहमिति तन्निवारणाय प्रियमतदर्हं चापि कमल विनियुज्यते, तथा इष्टानवाप्तिदु खस्यातिदु सहतया

* 'वर्णो द्विजादिशुक्लादियशे गुणकथासु च स्तुतौ ना' इति मेदिनी ।

तद्वारणायेदृशं शरीरमपि योजितमिति ।

**इय महेन्द्रप्रभृतीनधिश्रियश्चतुर्दिगीशानवमत्य *मानिनी ।**

**अरूपहार्यं मदनस्य निग्रहात् पिनाकपाणिं पतिमाप्तुमिच्छति ॥५३॥**

अ०—मानिनी इयम् अधिश्रिय महेन्द्रप्रभृतीन् चतुर्दिगीशान् अवमत्य मदनस्य निग्रहाद् अरूपहार्यम् ( प्रतीतम् ) पिनाकपाणिम् पतिम् आप्तुम् इच्छति ।

व्याक०—अधिका श्री येषा तान् अधिश्रिय, नद्यृतश्चेत्याभावात् कप् न । महेन्द्र. प्रभृति ( आदिः ) येपा तान् महेन्द्रप्रभृतीन् । चतसृणा दिशामीशान् चतुर्दिगीशान् "तद्धितार्थोत्तरपदसमाहारे च" इत्यनेन समास इति मल्लिनाथ । 'सप्तर्षि' वत् 'चतुर्दिक्' शब्दोऽपि सञ्ज्ञाशब्द इति "दिक्सङ्ख्ये सञ्ज्ञायाम्" इति पूर्वं कर्मधारय, तदनु षष्ठीतत्पुरुषो वा । अवमानकर्मणि द्वितीया । न रूपेण हार्यम् अरूपहार्यम्, हार्यशब्दे हरते शक्यार्थे ण्यत् । पिनाक पाणौ यस्य त पिनाकपाणिम् । "प्रहरणार्थेभ्य परे निष्ठासप्तम्यौ" इति सप्तम्यन्तपाणिशब्दस्य परनिपात. । मानिनी मानशब्दाद् "अत इनिठनौ" अवमत्य-अवपूर्वाद् मन्यते क्त्वा, ल्यप् । निग्रहाद्-गृह्णाते. 'अप्' ज्ञापके हेतौ पञ्चमी 'धूमादग्निमान्' इत्यादिवत् । आप्तुम्-आप्नोते "समानकर्तृकेषु तुमुन्" ।

व्याख्या—मानिनी-अभिमानवती, इयम्-पर्वतराजपुत्री, अधिश्रिय-अधिकैश्वर्यशालिन, महेन्द्रप्रभृतीन्-इन्द्रादीन्, चतसृणाम्, दिशाम्-पूर्वपश्चिमोत्तरदक्षिणानाम्, ईशान्-स्वामिन-इन्द्रवरुणकुबेरयमान्, अवमत्य-तिरस्कृत्य, मदनस्य-कामस्य, निग्रहाद्-दण्डनाद्, अरूपहार्यम्-रूपेण सौन्दर्येण, अहार्यम्-वशीकर्तुमशक्य इति स्पष्ट ज्ञातम्, पिनाकपाणिम्-अजगवाख्यधनुर्धारिणं महादेवम्, पतिम्-भर्तारम्, आप्तुम्-अधिगन्तुम्-वरीतुम्, इच्छति कामयते ।

भा०—प्रयोजनमाह सखी 'वरार्थमेवास्यास्तपश्चरणम् । वरास्तु इन्द्रादयो यद्यपि सुलभा, उत्कृष्टा च तेषा दिगीशत्वश्रीरिति अन्यासां प्रार्थनीया अपि ते, तथाप्यभिमानवतीयमिन्द्राणीप्रभृतिभ्य उत्कर्षमिच्छन्ती न तानाद्रि-

---

* 'भामिनी' प्रका० विव० । भामिनी-कोपना, इन्द्रादीना वरत्वप्रस्ताव-मात्रेणापि कुप्यति इति तद्व्याख्या ।

यते । य तु सर्वेभ्य उत्कृष्ट पिनाकधारिणमिय पतित्वेनाप्तुमिच्छति, स न सौन्दर्येण वशीकर्तुं शक्य यतस्तेनास्या समक्षमेव स्वय धनुर्धर' कामो निगृहीत । तस्मात्तपश्चरणमेव तत्प्राप्त्युपाय इति निश्चितम् । पिनाकपाणिमिति पद वीरतामावेदयदभिलापयोग्यता तत्र व्यनक्ति । मानिनीना वीरकामनाया. स्वभावसिद्धत्वात् ।

अल०—अरूपहार्यत्वस्यानुमानसिद्धत्वादनुमानालङ्कारः । मानिनीत्यादिविशेषणानामुत्कृष्टाभिप्रायगर्भत्वात्परिकरश्चमत्कारी । दशसु * अनङ्गदशासु सङ्कल्पदशानेन पद्येनोपन्यस्तेति मल्लिनाथसूरि ।

असह्यहुङ्कारनिवर्तित पुरा पुरारिमप्राप्तमुख शिलीमुख ।
इमा हृदि व्यायतपातमक्षिणोद् विशीर्णमूर्तेरपि पुष्पधन्वन ॥२४॥

अ०—पुरा विशीर्णमूर्तेः अपि पुष्पधन्वन शिलीमुख. असह्यहुङ्कारनिवर्तितः पुरारिन् अप्राप्तमुख ( सन् ) इमान् हृदि व्यायतपातम् ( यथास्यात्तथा ) अक्षिणोत ।

व्याक०—विशीर्णा मूर्ति यस्य तस्य विशीर्णमूर्ते । विशीर्णा-शृणातेः क्त । मूर्च्छते क्तिनि "राल्लोप" मूर्ति । पुष्पाण्येव धनुर्यस्य स पुष्पधन्वा, तस्य । "धनुपश्च" इत्यनङ् । न सह्येन ( नञ्तत्पु० ) हुङ्कारेण ( कर्म० ) निवर्तित ( तत्पु० ) असह्यहुङ्कारनिवर्तित । सह्यशब्दे सहतेः "शकिसहोश्च" इति यत् । पुराणाम् अरिम् पुरारिम् । न प्राप्तं मुख यस्य स अप्राप्तमुख । प्राप्तशब्दे कर्तरि क्त, पुरारिमिति प्रापणक्रियाया कर्म, मुख च कर्तृ । विशेपण आयत पातो यस्मिन् कर्मणि यथा भवति तथा व्यायतपातम्, क्षिणोतिक्रियाया विशेपण द्वितीयान्तम् । व्यायतशब्दे यमधातो क्त । पातशब्दे पततेर्घञ् । अक्षिणोत्-क्षिधातोर्लङ्, "स्वादिभ्य श्नु" ।

व्याख्या—पुरा-पूर्वम्, विशीर्णा नष्टा, मूर्ति -आकार. यस्य, तथाभूतस्यनष्टशरीरस्यापि, पुष्पाणि-कुसुमान्येव, धनु -कार्मुकम्, यस्य तथोक्तस्य कामस्य, शिलीमुख -बाण., असह्येन सोढुमशक्येन, हुङ्कारेण क्रोधोद्गीर्णेन शिवस्य

---

* दृङ्मन सङ्गसङ्कल्पो जागर कृशता रति । ह्रीत्यागोन्मादमूर्च्छान्ता इत्यनङ्गदशा दश ।

हुंशब्देन, निवर्तित परावर्तित, अत एव, पुरारिम्-त्रिपुरासुरद्विषम् महादेवम् प्रति, न प्राप्तम्, मुखम्-(बाणाग्रवर्ति) फलकम्, यस्य तथाभूत सन्, इमाम्-शिवानुगता पार्वतीम्, हृदि-हृदये, अस्या हृदयमिति यावत्, व्यायत दीर्घः-सुदूरमन्तः प्रविष्ट, अतितीव्रो वा, पात.-प्रहारो यस्मिन् कर्मणि यथा भवति तथा, अक्षिणोद्-विव्याध।

भा०—*कामेन यदा बाण. शिवं वशीकर्तुं विसृष्ट, तदा शिवेन कामो दग्धः, बाणश्च तस्य हुङ्कारेण निवर्तित। मृतस्यापि कामस्य स बाण. शिवानुगतहृदयामिमा पार्वतीमबला मत्वातितरा हृदये पीडयति स्म।

अल०—शिवं प्रतिकर्तुमशक्तो बाणस्तत्पदया पार्वती पीडयति स्मेति प्रत्यनीकमलङ्कार.। 'अन्यत्र करणीयस्य ततोऽन्यत्र कृतिश्च सा' इति कुवलयानन्दलक्षिता असगतिर्वा। 'विशीर्णमूर्तेरपि बाणः पीडयति' इति विरोध। अनेन पद्येन 'विवृण्वती शैलसुतापि भावम्' इत्यादिना तृतीयसर्गोक्ता दृङ्मन सङ्गरूपा अनङ्गावस्था, तदनु च कार्श्यरूपा सा समुपन्यस्तेति मल्लिनाथव्याख्यायाम्।

**तदा प्रभृत्युन्मदना पितुर्गृहे ललाटिकाचन्दनधूसरालका।**
**न जातु बाला लभते स्म निर्वृतिं तुषारसघातशिलातलेष्वपि॥५५॥**

अ०—तदा प्रभृति पितु. गृहे उन्मदना ललाटिकाचन्दनधूसरालका बाला तुषारसघातशिलातलेषु अपि जातु निर्वृतिम् न लभते स्म।

व्या०—उत्कट मदनो यस्या सा उन्मदना। ललाटस्य अलङ्कारो ललाटिका, ललाटशब्दात् "कर्णललाटात् कनलङ्कारे" इति कन्। तद्रूपेण चन्दनेन (कर्मधा०) धूसरा अलका यस्या सा ललाटिकाचन्दनधूसरालका। तुषाराणा सघाता एव शिला, तासा तलेषु तुषारसघातशिलातलेषु। तदा-तच्छब्दात् सप्तम्यन्ताद् दा प्रत्यय., "तद्धितश्चासर्वविभक्ति" इत्यनेनाव्ययत्वम्। यद्यपि प्रभृतियोगे पञ्चमीदर्शनात् 'तत' इति प्रयोक्तव्यम्, तथापि दाप्रत्ययस्य पञ्चम्यर्थे लक्षणेति मल्लिनाथ.। 'घटनाया' इत्यध्याहृत्य 'तदा तस्मिन् काले जाताया. घटनाया प्रभृति' इति वा व्याख्येयम्। निर्वृ-

---

* तृतीयसर्गकथेयमनूदिता सख्या।

तिम् वृधातो क्तिन्। लभते स्म " लट् स्मे " इत्यनुवर्तमाने " अपरोक्षे च " इत्यनेन लट्।

व्याख्या—तदा प्रभृति-तद्घटनादिनाद् आरभ्य, पितु -जनकस्य हिमालयस्य, गृहे, उन्मदना-प्रवृद्धकामज्वरा, ललाटिकाचन्दनेन सर्वललाटालङ्कारभूतेन ललाटव्यापिना, चन्दनेन, धूसराः-धूसरवर्णा, अलका -चूर्णकुन्तला, यस्यास्तथाभूता, वाला-अननुभूतपूर्वमदनज्वरेयं पार्वती, तुषारसघाता घनीभूतानि हिमान्येव शिला, तासा तलेष्वपि, जातु कदाचिद्, निर्वृतिम् सुखम्, न लभते स्म-न प्राप्नोत्।

भा०—कामबाणेन यदा हृदि विद्धा, तत एवारभ्य मदनकृतस्तापोऽस्याः परा वृद्धिं गत । येन हिमालयेपि हिमशिलास्वपि लुठन्त्या न तापशान्तिरभूत्। तापशान्तये च यच्चन्दनमियं सर्वस्मिन् ललाटे लिम्पति स्म, तत् क्षणादेव शुष्क ललाटाद्विश्लिष्य लुठन्त्या अस्या विकीर्णानलकान् धूसरयति स्म। 'पितुर्गृहे' इत्युक्त्या हिमालयेऽपि एवं ताप इति तापोत्कर्षो व्यञ्जित', इति विवरणकार । 'पितुर्गृहे' विरहतापस्यात्यन्तगोपनार्हत्वेपि ताप एव प्रकटोऽभूद्-इत्युत्कटता व्यज्यत इति तु वयम्।

अल०—तुषारसघातेऽपि तापनिवृत्त्यलाभोक्त्या विशेषोक्ति.। पार्वतीगत. पूर्वानुरागाख्यो विप्रलम्भ इत आरभ्य चतुर्षु पद्येषु स्फुट । 'अरति ' इति व्यपदिश्यमाना विषयविद्वेषरूपा अनङ्गावस्था अत्रोपन्यस्ता, द्वादशावस्थावादिना मते तु सज्वरावस्थापीति मल्लिनाथ ।

उपात्तवर्णे चरिते पिनाकिन सवाष्पकण्ठस्खलितै पदैरियम्।
अनेकश किन्नरराजकन्यका वनान्तसङ्गीतसखीररोदयत्॥ ८६॥

अ०—इयम् पिनाकिन चरिते उपात्तवर्णे ( सति ) सवाष्पकण्ठस्खलितै· पदै वनान्तसङ्गीतसखीः किंनरराजकन्यका. अनेकश अरोदयत्।

व्याक०—उपात्त *वर्णो यस्मिन् तस्मिन् उपात्तवर्णे। सति सप्तमी। उपात्तशब्दे दाधातो क्त, वर्णनं वर्ण, वर्णयतेर्भावे घञ्। वाष्पेण सह

* शुक्लादौ ब्राह्मणादौ च शोभायामक्षरे तथा। गीतिक्रमे स्तुतौ वेषे वर्णशब्द. प्रयुज्यते। इति हलायुध।

( वर्तमाने ) ( बहु० ) कण्ठे ( कर्म० ) स्खलितैः सबाष्पकण्ठस्खलितैः। स्खलितशब्दे स्खलते "गत्यर्थाकर्मक" इत्यादिना कर्तरि क्त। वनान्ते सङ्गीते ( तत्पु० ) सख्य वनान्तसङ्गीतसख्य, सङ्गीतेन सख्य इति मल्लिनाथ। गीतशब्दे गायते क्तः, "घुमास्थागापाजहातिसा हलि" इतीत्वम्। किन्नराणा राज्ञ कन्यका किन्नरराजकन्यका। अथवा प्रशसावाचिना राजशब्देन किन्नरशब्दस्य "प्रशसावचनैश्च" इत्यनेन कर्मधारय, तत षष्ठीतत्पुरुष, किन्नराणा राज्ञामिव कन्यका इति। एकमेकमिति एकश., "सख्यैकवचनाच्च वीप्सायाम्" इति एकशब्दाच्छस् प्रत्यय, न एकश अनेकश। पिनाकोऽस्य अस्तीति पिनाकी, तस्य। "अत इनिठनौ"। पदै.-रोदनाया करणे तृतीया।

व्याख्या—इयम्-पार्वती, पिनाकिन -महादेवस्य, चरिते-त्रिपुरासुरविजयादिरूपे, उपात्त गृहीत आरब्ध, वर्ण -गीतिक्रम, यस्मिन्, तथाभूते गातुमारब्धे सति, सबाष्पे-अश्रुसहिते-गद्गदे, कण्ठे-गले, स्खलितै -विशीर्णै -अस्पष्टोच्चरितै, पदै, वनान्ते अरण्यप्रदेशे, सङ्गीते- गानादौ, सखी -सहचारिणी, अथवा सङ्गीतेन-सहगानेन निमित्तेन, सखी -मित्रभूता, किन्नराणाम् देवयोनिविशेषाणाम्, राज्ञ अधिपते, अथवा किन्नराणा राज्ञामिव-श्रेष्ठकिन्नराणाम्, कन्यका.-अनूढा सुता, अनेकश -बहुश, अरोदयत् अश्रुमोचन कारितवती।

भा०—इय हि शिवेऽनुरक्ता शिवकीर्तनश्रवणव्यसनाद्वनान्ते गच्छति स्म। तत्र च यदा किन्नरकन्यका. शिवचरित गातुमारभन्ते स्म, तदा ताभि. सह गातुमुपक्रममाणापीय शिवस्मरणोद्बोधिताविरहजनितेन कण्ठगद्गदत्वेन स्पष्ट पदान्युच्चारयितुमशक्नुवती तथा वैकल्य प्राप्नोति स्म, यथास्या दशा दृष्ट्वा सखीभूतास्ता किन्नरराजकन्यका अपि रुदन्ति स्म।

अ०—विनोदार्थमुपक्रमे विषादाधिक्यप्राप्तिवर्णनाद्विषमालङ्कार। दशस्ववस्थासु मूर्च्छाख्याऽनङ्गावस्था व्यज्यते, द्वादशावस्थापक्षे तु प्रलापावस्था व्यज्यत इति मल्लिनाथ।

**त्रिभागशेषासु निशासु च क्षणं निमील्य नेत्रे सहसा व्यबुध्यत।**

क नीलकण्ठ ! व्रजसीत्यलक्ष्य वागसत्यकण्ठार्पितबाहुबन्धना ॥४७॥

अ०—( किं ) च, त्रिभागशेषासु निशासु क्षणम् नेत्रे निमील्य सहसा हे नीलकण्ठ ! क व्रजसि ? इति अलक्ष्यवाग् असत्यकण्ठार्पितबाहुबन्धना ( सती ) व्यबुध्यत ।

व्याक०—त्रिभ्यो भागेभ्यः शेषासु त्रिभागशेषासु । उत्तरपदे द्विगुः, यद्वा रात्रे त्रियामत्वस्वीकारेण तृतीयो भाग शेषो यासा तासु इति विग्रहीतव्यम्, अत्र पक्षे त्रिशब्दस्य पूरणार्थत्व बोध्यम्, 'शतांशः' 'सहस्रांशः' इत्यादौ शतादिशब्दवत् । अन्यथा तत्रापि शततमांश सहस्रतमांश इत्येव स्यात् । नील कण्ठो यस्य स नीलकण्ठ । न लक्ष्य यस्या सा: अलक्ष्या, तादृशी वाग् यस्या सा अलक्ष्यवाक् । न सत्ये ( नञ्समास ) कण्ठे ( कर्म० ) अर्पित ( तत्पु० ) बाह्वो ( बाहुभ्या वा ) बन्धन ( तत्पु० ) यया ( बहु० ) सा असत्यकण्ठार्पितबाहुबन्धना, अर्पितमिति अर्पयते, णिजन्ताद् ऋधातोर्वा क्त । णिचि पुगागम ।

व्याख्या—किं च, त्रिभ्यो भागेभ्य.-यामरूपेभ्योंऽशेभ्य, शेषासु अवशिष्टासु, निशासु-रात्रिषु रात्रीणा चतुर्थे यामे, अथवा त्रिभाग -तृतीययामरूपोंश, शेष यासा तथाभूतासु त्रियामासु रात्रिषु, रात्रीणा प्रथमद्वितीयभागयोर्गतयोरिति यावत्, क्षणम्-क्षणमात्रम्, नेत्रे-नयने, निमील्य-मीलयित्वा, सहसाऽकस्मात्, सद्य वा, हे नीलकण्ठ ! हे शिव ! क-कुत्र, व्रजसि गच्छसि ? इति-एवप्रकारेण, अलक्ष्या सबोध्यासनिधानाद्, निर्विषया, वाग्-वाणी, यस्यास्तथाभूता, असत्ये-मिथ्याभूते सङ्कल्पिते, कण्ठे-नीलकण्ठग्रीवायाम्, अर्पितम् बाह्वो, बाहुभ्या वा बन्धनम्-आश्लेष, यया तथाभूता सती, व्यबुध्यत अजाग ।

भा०—निशास्वनया निद्रा न लभ्यते स्म । रात्रेर्भागद्वय विनिद्रमेव गमयित्वा तृतीयभागे कथचिन्नेत्रनिमीलनमात्र निद्राभास प्राप्नोत् । तत्र चाल्पतननिद्राया कथचिज्जागरणम्, कथचिच्च स्वप्न इति स्वप्नजागरयो सङ्करदशाया स्वप्ने शिव दृष्ट्वा तमुपगूहमाना जागरप्रत्यक्षवद् बाहू प्रसारयन्ती

* 'अलक्ष्यवाग्' इति प्रका० विव० ।

तं च तत्रापि पलायमानं दृष्ट्वा "नीलकण्ठ ( विषभक्षणेनापि जगद्दुःखहरोऽसि, किमिति मां दुःखयसि ) क्व व्रजसि" इति ब्रुवती पलायनजनितात् त्रासाज्जागर्ति स्म । जागरिता चापश्यत्, यन्मम वागपि निर्विषया, संबोध्यस्य शिवस्यासन्निधानात् । बाहू चापि परिरम्भार्थमुत्क्षिप्तौ कल्पनामात्रनिर्मित एव कण्ठे सक्तौ, न तु वास्तव इति ।

अलं०—विप्रलम्भस्यात्र सम्यक् परिपोषः । शिव आलम्बनम्, स्वप्ने तद्दर्शनमुद्दीपनम् । बाहुप्रसारसलापादिकमनुभावः । तद्व्यञ्जितमौत्सुक्यं पलायनजनितत्रासश्च व्यभिचारिभावौ । जागरोन्मादाख्ये अनङ्गावस्थे अत्र सूचिते इति मल्लिनाथः ।

*यदा बुधैः सर्वगतस्त्वमुच्यसे न वेत्सि भावस्थमिमं कथं जनम्?
इति स्वहस्तोल्लिखितश्च मुग्धया रहस्युपालभ्यत चन्द्रशेखरः ॥२८॥

अ०—( किं ) च यदा त्वम् बुधैः सर्वगतः उच्यसे ( तत् ) भावस्थम् इमम् जनम् कथम् न वेत्सि? मुग्धया ( अनया ) स्वहस्तोल्लिखितः चन्द्रशेखरः रहसि उपालभ्यत ।

व्याक०—सर्वं गतः सर्वगतः, "द्वितीया श्रितातीत ..." इत्यनेन समासः । भावे तिष्ठतीति भावस्थः, तम्, "सुपि स्थः" इति कः, उपपदसमासः । स्वेन हस्तेन उल्लिखितः स्वहस्तोल्लिखितः । उल्लिखितशब्दे उत्पूर्वाल्लिखतेः क्तः, "तोर्लि" इति उपसर्गतकारस्य लत्वम् । चन्द्रः शेखरो यस्य स चन्द्रशेखरः । यदा-यच्छब्दात् हेत्वर्थे दा इति गणव्याख्यानम् । बुधैः-बुध्यतेः "इगुपधज्ञाप्रीकिरः कः", वचनक्रियाया अनुक्ते कर्तरि तृतीया । उच्यसे वक्तेः कर्मणि लट् । मुग्धया-मुह्यतेः क्तः, "वा द्रुहमुहष्णुहष्णिहाम्" इति हस्य घत्वम् । लेखनोपालम्भयोः कर्तृपदम् । उपालभ्यत-लभतेः कर्मणि लङ् ।

व्याख्या—किं च ( हे चन्द्रशेखर ! ) यदा-यतः, त्वम्, बुधैः-पण्डितैः, सर्वगतः-सर्वान्तर्यामी, उच्यसे-व्यपदिश्यसे, ततः, भावे त्वद्विषयिण्यनुरागे, तिष्ठति-वर्तते इति तथाभूतम्, त्वदनुरागिणम्, इमम्, जनम्-( माम् )

* 'सदा बुधैः' इति प्रका० विव० ।

कथम्-केन प्रकारेण, कुतो हेतो, न वेत्सि-न जानासि ? इति एवरूपेण, मुग्धया विरहवशाच्चेतनाचेतनज्ञानशून्यया पार्वत्या, स्वेन-स्वकीयेन, हस्तेन-करेण, उल्लिखित -चित्रित., चन्द्रशेखर -महादेव , रहसि-एकान्ते, उपालभ्यत-अधिक्षिप्यते स्म ।

भा०—स्वप्न-चित्र-सादृश्यदर्शनानि विरहिणा विनोदस्थानानि, तत्र स्वप्नदर्शनेनातृप्तिरुक्ता । चित्रदर्शनमप्युच्यते-'इय पार्वती कथचिच्छिवरूपं द्रष्टुमुत्कण्ठिता स्वहस्तेनैव शिव चित्रे लिखति स्म । तद्दर्शनोद्बुद्धविरहविमुग्धा च 'चित्रमिदम्' इति विस्मरन्ती प्रत्यक्षवत्तमुपालभते स्म-यत् 'पण्डितैः सर्वान्तर्यामितया उपदिश्यमानोऽपि कथ मदनुराग न वेत्सि । जानानोऽप्युपेक्षसे-इत्यहो ते निर्दयता !' इति । अय चास्या व्यापारो लज्जयैकान्ते प्रवृत्तोऽपि सखीभि कथचिद् दृष्ट इति ।

अल०— अत्रापि विप्रलम्भध्वनिरेव । लज्जा विजित्य स्वहस्तेन चित्रलेखन-प्रवृत्तेर्लज्जात्यागावस्थेयमिति मल्लिनाथ । उन्मादावस्था तु प्रकाशिकाविवरण-कारावाहतु ।

**यदा च तस्याधिगमे जगत्पतेरपश्यदन्यं न विधिं •विचिन्वती ।**
**तदा सहास्माभिरनुज्ञया गुरोरिय प्रपन्ना तपसे तपोवनम् ॥२६॥**

अ०—( अथ ) च, जगत्पते. तस्य अधिगमे विचिन्वती ( इयम् ) यदा अन्यन् विधिन् न अपश्यत्, तदा गुरो अनुज्ञया अस्माभिः सह तपसे तपोवनम् प्रपना ।

व्याक०—जगता पत्यु जगत्पते । अधिगमे गच्छते. "ग्रहवृदनिश्चि-गमश्च" इति अप्प्रत्यय । अधिगमे विचिन्वती-इति "निमित्तात् कर्मयोगे" इति सप्तमीति प्रकाशिकाविवरणयो । 'योग. सयोगसमवायात्मक एव' इति कौमुदीमते तु वैषयिकाधारे सप्तमी । विधिम् दधाते. कि । विचिन्वती-चिनोते लक्षणे शतृप्रत्ययः, ततो ङीप् । अनुज्ञया जानाते "आतश्चोपसर्गे" इत्यङ् । प्रपन्ना पद्धातो कर्तरि क्त । तपोवनमिति प्रपदनक्रियाकर्मणि द्वितीया । गुरोरिति अनुज्ञासम्बन्धे षष्ठी । अनुज्ञयेति करणे तृतीया, अस्माभिरिति सह-

• 'विनन्वती' इति क्वचित् ।

योगे तृतीया। तपसे-अप्रयुज्यमानतुमुन्नन्तकर्मणि चतुर्थी, तपः कर्तुमित्यर्थः।

व्याख्या—च-पुनः, ( तीव्रसंतापमनुभूय ) जगत्पतेः-त्रिभुवनस्वामिनः, तस्य-महादेवस्य, अधिगमे-प्राप्तौ, विचिन्वती बुद्ध्या मृगयमाणा, इयम्-पार्वती, यदा, अन्यम्-तपोनुष्ठानातिरिक्तम्, उपायम्-साधनम्, न अपश्यत्-नाजानात्, तदा गुरोः-स्वपितुः-हिमालयस्य, अनुज्ञया-अनुमत्या, अस्माभिः स्वसखीभिः, सह, तपसे-तपः कर्तुम्, तपोवनम्-इदं तपश्चर्यारण्यम्, प्रपन्ना प्राप्ता-आगतेत्यर्थः।

भा०—अतितीव्रविरहेण संतप्तया उपायं विवेचयन्त्याऽनया यदान्य उपायो न दृष्टस्तदा पितुराज्ञां गृहीत्वा तपः कर्तुमियमत्रागता। स्त्रिया एकाकिन्या निवासस्यानुचितत्वाद्वयमेतत्सख्य एतया सहैवात्रागताः। जगत्पतिर्हि भगवान् शङ्करो न तपोऽतिरिक्तोपायसाध्यः स्यात्।

अल०—जगत्पतेरिति विशेषणस्य साभिप्रायत्वात्परिकरः। तपश्चरण-समर्थनात् काव्यलिङ्गं च।

**द्रुमेषु सख्या कृतजन्मसु स्वयं फलं तपःसाक्षिषु दृष्टमेष्वपि* ।**
**न च प्ररोहाभिमुखोऽपि दृश्यते मनोरथोऽस्याः शशिमौलिसंश्रयः ॥६०॥**

अ०—सख्या स्वयम् कृतजन्मसु तपःसाक्षिषु एषु द्रुमेषु अपि फलम् दृष्टम्, शशिमौलिसंश्रयः अस्याः मनोरथः च प्ररोहाभिमुखः अपि न दृश्यते।

व्याक०—कृतं जन्म येषां तेषु कृतजन्मसु। तपसः साक्षिषु तपःसाक्षिषु, "साक्षाद् द्रष्टरि संज्ञायाम्" इत्यनेन साक्षिशब्दः साधुः। शशी मौलिः यस्य (मौलौ यस्येति वा) सः शशिमौलिः, स संश्रयो यस्य स शशिमौलिसंश्रयः। संश्रयः-श्रयते कर्मणि "एरच्"। सख्येति करोतेः कर्तरि तृतीया। द्रुमेषु औप-श्लेषिकाधारे सप्तमी। दृश्यते-पश्यतेः कर्मणि लट्। मनोरथ इति दर्शनक्रियाया उक्ते कर्मणि प्रथमा, अस्माभिरिति दर्शनक्रियायाः कर्ता अध्याहारलभ्यः। च शब्दस्त्वर्थे।

व्याख्या—(अस्माकम्) सख्या-पार्वत्या, स्वयम्-अन्यसाहाय्यमनपेक्ष्य, कृतजन्मसु-उत्पादितेषु-रोपितेषु, तपःसाक्षिषु-तपस्यायाः साक्षाद् द्रष्टृषु, एषु पुरो

* 'बद्धमेष्वपि' इति प्रका० विव० । 'बद्धम्-निष्पन्नम् उत्पन्नम्, इति तद् व्याख्या।

दृश्यमानेषु, द्रुमेष्वपि-वृक्षेष्वपि, फलम्, दृष्टम् । शशी चन्द्रः, मौलि -किरीट - यस्य (मौलौ मस्तके वा यस्य) तथाभूतो महादेव सश्रय.-अवलम्ब , यस्य तथोक्त , अस्या -पार्वत्या , मनोरथ· च अभिलापस्तु, प्ररोहस्य †-अङ्कुरस्य, अभिमुख सिद्धयुन्मुखोऽपि न दृश्यते-नावलोक्यते ।

भा०—तपस्यन्त्या अस्माक सख्याः पार्वत्या इयान् समयो व्यतीतः, यदनयाऽत्रागतया स्वहस्तेन उप्तबीजा सिक्ताश्च वृक्षा अपि फलवन्तो जाता , किन्तु अस्या मनोरथबीजमद्यापि बीजावस्थमेव, न त्वङ्कुरोत्पत्तिकालिकी उच्छू-नावस्थापि तत्र दृश्यते । सिद्धे किमपि लक्षणमद्यावधि न दृष्टमिति ।

अल०—'महान् कालस्तपस्यन्त्या व्यतीत ' इत्यस्य वृक्षफलोद्गमरूप कार्यमुखेन प्रतिपादनादप्रस्तुतप्रशसा । मनोरथानवाप्तिरूपया कुवलयानन्दमते विषमोऽपि । शशी खलु बीजान्यङ्कुरयति तूर्णम्, शशिमौलिसंश्रयोऽपि मनोरथो बीजरूपो न प्ररोहाभिमुख इति व्यङ्गयो विरोध । सखीगतो विषादो भावो व्यङ्ग्यः । मनोरथे प्ररोहपद सिद्धिप्रक्रमे लाक्षणिकम्, सादृश्य सम्बन्ध । वृक्षतुलनार्थे तथोपन्यास ।

**न वेद्मि स प्रार्थितदुर्लभ कदा सखीभिरस्रोत्त‡रमीक्षितामिमाम् ।**
**तप.कृशामभ्युप§पत्स्यते सखी वृषेव सीता तदवग्रहक्षताम् ॥ ६१ ॥**

अ—प्रार्थितदुर्लभ स तपःकृशाम् सखीभिः अस्रोत्तरम् ईक्षिताम् इमाम् सखीम् तदवग्रहक्षताम् सीता वृषा इव कदा अभ्युपपत्स्यते (इति) न वेद्मि ।

व्याक०—प्रार्थितश्चासौ दुर्लभश्च प्रार्थितदुर्लभ , दुर्लभ शब्दे लभते खलु तपसा कृशा तप कृशाम्, कृशशब्दे कृशधातो कर्मणि क्त , "अनुपसर्गात् फुल्लक्षीबकृशोल्लाघा " इत्यनेन निपातनात् तलोप । अस्रम् उत्तरम् (प्रधानम्) यस्मिन् कर्मणि तद् अस्रोत्तरम्, क्रियाविशेषणम्, अस्राकुलमिति क्वचित् पाठ , अस्रै , आकुलमस्राकुलमिति तद्विग्रह । तस्यावग्रहेण क्षताम् तदवग्रहक्षताम् ।

---

* चूडा किरीट केशाश्च मौलय मयताञ्जय—इत्यमर ।

† प्ररोहस्त्वङ्कुरोऽङ्कुर इति वैजयन्ती ।

‡ 'रस्रान्तरवीक्षिताम्' इति प्रका० विव० ।

§ मन्यवपत्स्यते' इति प्रका० विव० ।

अवग्रहशब्दे गृह्णातेरप्। अहमिति वेदनक्रियाकर्ता अध्याहर्तव्य, समस्तवाक्यार्थे कर्म। अवग्रहक्षतामित्यनेनैव गतार्थत्वे तत्पदस्य वैयर्थ्यापत्तेस्तदिति भिन्न पद वेद्मीत्यस्य कर्मेति श्रीमन्मास्लिनाथ, एव सति दूरान्वय कथं तेन परिहृत इति तु न विद्म।

व्याख्या।—प्रार्थित. अभिलषित, ( अपि ) दुर्लभः-दुष्प्राप., स -महादेव., तपसा, कृशाम्-तन्वीम्, अत एव सखीभिः-सहचरीभि, अस्रोत्तरम्-अश्रुप्रधानम्, साश्रु इति यावद्, ईक्षिताम् अवलोकिताम्, ( अस्रान्तरवीक्षिताम् इति पाठे अस्राणाम्-अश्रूणाम्, अन्तरे-पतनोद्गमयोरन्तराले, वीक्षिताम्-दृष्टाम् * ) इमाम्-पार्श्ववर्तिनीम्, ( त्वयापि दृश्यमानाम् ) सखीम्-वयस्या पार्वतीम्, तस्य-इन्द्रस्य-इन्द्रकर्तृकेन, † अवग्रहेण-वृष्टिप्रतिबन्धेन, क्षताम्-पीडिताम्, ‡ सीताम्-लाङ्गलरेखाम्, तद्युक्ता कृष्टा भुवम्, वृषेव-इन्द्रइव, कदा-कस्मिन् काले, अभ्युपपत्स्यते-अनुग्रहीष्यति, इति न वेद्मि-न जानामि।

भा०—सखी वक्ति वर्णिन्। यत्त्वयोक्तम् ' क. प्रार्थितदुर्लभो भविष्यति ' इति स एष प्रार्थितदुर्लभ शिवः, तदर्थमेव तपस्यन्तीयमीदृशीं दशा गता, यत्सख्यो वयमेतस्या दशा विचार्य निरन्तरमश्रूणि मुञ्चाम, अश्रूणामन्तराले च कथ चिदेतस्या दशा प्रेक्षामहे। वृष्टिप्रतिबन्धेन यथा लाङ्गलक्षता भूमि शोच्या भवेत्, तथेयमस्माकं शोच्या, ( स्वय त्वियं न शोचति, वयमेवैतदर्थं विषण्णा, कृषका भूम्यर्थमिव ) यथेन्द्रस्तस्या भुवि कृपा कृत्वा वर्षति, तथा कदा स देव कृपा करिष्यतीति न ज्ञायते।

अल०—पूर्णोपमा, इन्द्रशिवयोः सीतापार्वत्योश्चोपमानोपमेयभाव.। अवग्रहविरहयोर्बिम्बप्रतिबिम्बभाव। सखीगतयोर्विषादौत्सुक्ययोर्भावयोर्व्यङ्ग्यत्वम्

अगूढसद्भावमितीङ्गितज्ञया निवेदितो नैष्ठिकसुन्दरस्तया।
§ अयीदमेव परिहास इत्युमामपृच्छदव्यञ्जितहर्षलक्षण॥ ६२॥

---

* एतेन अश्रुपातस्य नैरन्तर्यं व्यज्यत इति चमत्कारोऽत्र पाठे।

† वृष्टिर्वर्षं तद्विघातेऽवग्राहावग्रहौ समौ—इत्यमर।

‡ सीता लाङ्गलरेखा स्याद् व्योमगङ्गा च जानकी—इति रभस।

§ 'अपीदमेव' इति प्रका० विव०। ' अपिः प्रश्ने ' इति तद्व्याख्या।

अ०—इङ्गितज्ञया तया इति अगूढसद्भावम् निवेदित नैष्ठिकसुन्दरः अव्यञ्जितहर्षलक्षणः (सन्) अयि इदम् एवम् (उत) परिहास (अयम्) ? इति उमाम् अपृच्छत् ।

व्याक०—इङ्गित जानातीति इङ्गितज्ञा, तया, जानातेः "आतोऽनुपसर्गे कः"। न गूढ सन् भाव यस्मिन् कर्मणि यथा भवति तथा अगूढसद्भावम्, क्रियाविशेषणम् । गूढशब्दे गूहते क्तः । नैष्ठिकश्चासौ सुन्दरश्च नैष्ठिकसुन्दर । निष्ठाशब्दो लक्षणया निष्ठाकालवाची, निष्ठाकालम् (* मरणकालम्) यावदस्य ब्रह्मचर्यमिति नैष्ठिक "तदस्य ब्रह्मचर्यम्" इति निष्ठाशब्दात् ठञ् । न व्यञ्जित हर्षस्य लक्षण येन स अव्यञ्जितहर्षलक्षणः । व्यञ्जितशब्दे णिजन्ताद् अञ्जधातोः क्तः । निवेदित -वेदयतेः क्त । परिहास हसतेर्घञ् । तयानिवेदनक्रियाकर्तरि तृतीया । पूर्वार्धे-इतिशब्दपरामृष्टोऽर्थो निवेदनक्रियाया प्रधानं कर्म, नैष्ठिकसुन्दरश्च गौण कर्म, 'गौणे कर्मणि दुह्यादेः····' इति वचनात् क्तप्रत्ययेन तस्यैवोक्तत्वात् तत्रैव प्रथमा । ब्रूसमानार्थत्वाद् निवेदयतेः दुह्यादित्व बोध्यम् । एवमुत्तरार्धेऽपि इतिशब्दपरामृष्टो वाक्यार्थ प्रश्नक्रियाया प्रधान कर्म, उमामिति च अकथित कर्म ।

व्याख्या—†इङ्गितम्-पार्वत्या हृद्गत भावम्, जानातीति तथाभूतया तया-सख्या, इति पूर्वोक्तम्, न गूढ -न गोपित, सद्भाव यथार्थाभिप्राय, यस्मिन् कर्मणि यथा भवति तथा, निवेदितः उक्त, नैष्ठिक -यावज्जीवब्रह्मचारी, सुन्दरश्च मनोहराकृति, स युवा न व्यञ्जितम् न प्रकटितम्, हर्षस्य-प्रसादस्य, लक्षणम्-मुखरागादि चिह्नम्, येन तथाभूत सन्, अयि-पार्वति ! इदम् त्वत्सखीकथितम्, एवम् सत्यम्, उत परिहास -केलि ? इति-एवम्, उमाम् पार्वतीम्, अपृच्छत्-पृष्टवान् ।

भा०—पार्वतीप्रेरितया हृद्गत भाव जानत्या सख्या सर्वं यथार्थमावेदितम् । तच्च श्रुत्वा भगवत शिवस्य हर्ष उत्पन्नः, पर स्वरूपं गोपायितु न हर्षचिह्नानि रोमोद्गमादीनि तेन प्रकटितानि । प्रत्युत विपरीत पार्वतीं प्रति एवं पृष्टम्

* निष्ठानिष्पत्तिनाशान्ताः-इत्यमरः ।

† इङ्गित हृद्गतो भाव इति सज्जनः ।

'अयि पार्वति ! त्वत्सखी सत्य ब्रवीति, उत सखीभावात्परिहास करोति ?' इति । स्वय पार्वतीमुखादाकर्णयितुमग्रे विपक्षीभय परीक्षितु चेय कपटरचना ।

अल०—'इङ्गितज्ञा' इति विशेषण यथार्थनिवेदने साभिप्रायमिति परिकर । नैष्ठिकशब्देन यावज्जीवन ब्रह्मचर्यम्, सुन्दरपदेन विलासित्व च व्यज्यत इति व्यङ्ग्यो विरोध । भगवति विरुद्धधर्मोपपत्ते परिहार । हर्षलक्षणाप्रकाशनेन महादेवस्यावहित्थाख्यो भावो व्यज्यते, 'अर्थादेमेव परिहास' इति पक्षद्वयोपन्यासेऽपि उताद्यव्ययानुपादानाद् न्यूनपदत्व दोष ।

**अथाग्रहस्ते मुकुलीकृताङ्गुलौ समर्पयन्ती स्फटिकाक्षमालिकाम् ।**
**कथचिदद्रेस्तनया मिताक्षर चिरव्यवस्थापितवागभाषत ॥ ६३ ॥**

अ०—अथ अद्रे तनया मुकुलीकृताङ्गुलौ अग्रहस्ते स्फटिकाक्षमालिकाम् समर्पयन्ती चिरव्यवस्थापितवाक् कथचिद् मिताक्षरम् अभाषत ।

व्याक०—अमुकुलानि मुकुलानि कृता अगुलयो यस्य, तस्मिन् मुकुलीकृताङ्गुलौ । मुकुलीकृता इत्यत्र मुकुलशब्दाद् अभूततद्भावे च्वि, "ऊर्यादिच्विडाचश्च" इति गतिसज्ञा, कुगतिप्रादय " इति समास । अग्रश्चासौ हस्तश्च अग्रहस्त, तस्मिन् । अग्रेऽपि हस्तशब्दप्रयोगसत्त्वात्सामानाधिकरण्यम् । यद्वा हस्तस्य अग्रे इति अग्रहस्ते, राजदन्तादेराकृतिगणत्वाद् हस्तशब्दस्य परनिपात । चिरेण व्यवस्थापिता वाग् यया सा चिरव्यवस्थापितवाक् । व्यवस्थापिता णिजन्तात् स्थाधातो क्त । समर्पयन्ती-अर्पयते लक्षणे शतृप्रत्यय, मितानि अक्षराणि यस्मिन् कर्मणि यथा स्यात् तथा मिताक्षरम् ।

व्याख्या—अथ वर्णिन प्रश्नादनन्तरम्, अद्रे पर्वतस्य, हिमालयस्य, तनया-सुता-पार्वती, मुकुलीकृता -मिथ सयोज्य कुड्मलाकार नीता, अङ्गुलयो यस्य तथाभूते, अग्रहस्ते-हस्तस्याग्रभागे, स्फटिकाक्षमलिकाम् स्फटिकनिर्मिता जपमालाम्, समर्पयन्ती-आमुञ्चती, चिरेण, व्यवस्थापिता स्वीकृता वाग् वाणी-भाषणम्, यया तथाभूता, लज्जावरुद्धा वाच चिरप्रयत्नेन प्रवर्तयन्ती सती, कथचित् केनापि प्रकारेण महता कष्टेन, मिताक्षरम् परिमितवर्णम्, यथा स्यात्तथा, अभाषत अब्रवीत् । 'प्रकाशिकाविवरणकारो तु चिरात् तप कालादारभ्य, व्यवस्थापिता-निवृत्ति नीता, वाग्-वाणी यया तथाभूता, चिरान्मौनव्रत दधत्यपि वर्णिगौरवात्कथचिदुवाचेति व्याचष्टे ।

भा०—आवश्यक वर्णिप्रश्नस्य तद्गौरवरक्षणायोत्तरणम्, लज्जा च निरुणद्धि इत्यसामञ्जस्ये चिर स्थित्वा पार्वती, अन्तत कथचिदतिसक्षेपेणोत्तरदाने प्रवृत्ता। सा जप कुर्वत्यासीत्, जपमध्ये चानुचितं भाषणमिति जपविरामाय स्फटिकनिर्मिता जपमाला तया हस्ताग्रभागे निश्चलीकृत्य स्थापिता। जपकाले च मध्यमामध्यभागे धृताया मालाया अङ्गुष्ठेन चालनम्, तर्जनी च पृथग् विवृता स्थाप्यत इति अङ्गुलयो विवृता भवन्ति, जपविरामे सकोच्य ता मुकुलीकृता ।

अल—मालाविन्यासादौ स्वभावोक्ति श्रीमन्नारायण आह। लज्जाख्यस्य भावस्य शान्तिर्वाच्यसिद्ध्यङ्गमिति 'समाहितम्' अप्यलङ्कार।

**यथा श्रुत वेदविदा वर त्वया जनोऽयमुच्चै पदलङ्घनोत्सुक.।**
**तप किलेद तदवाप्तिसाधन मनोरथानामगतिर्न विद्यते ॥ ६४ ॥**

अ०—(हे) वेदविदाम् वर! त्वया यथा श्रुतम्, अयम् जनः उच्चै-पदलङ्घनोत्सुक (अस्ति) इदम् तप तदवाप्तिसाधनम् (मतम्) किल, मनोरथानाम् अगतिर्न विद्यते।

व्याक०—वेद विदन्तीति वेदविद, तेषाम्, वेत्ते कर्तरि क्विप्। उच्चैः पदस्य (तत्पु०) लङ्घने (प० तत्पु०) उत्सुक-उच्चै.पदलङ्घनोत्सुक'। लङ्घनशब्दे लघिधातोर्ल्युट्। तस्य अवाप्ते साधन तदवाप्तिसाधनम्। न गति अगति, न गतिर्यस्मिन् सोऽगतिरिति वा।

व्याख्या—हे, वेदविदाम्-वैदिकानाम्, वर-श्रेष्ठ! त्वया-भवता, यथा श्रुतम् सम्यग् आकर्णितम्, (यथाशब्दः सम्यगर्थे इति मल्लिनाथ। विवरणकारस्तु-यथा येन प्रकारेण त्वया श्रुतम्, तथा अय जन-इत्येव व्याचख्यौ) कि तत्? तदाह अय जन-(अहम्) उच्चै पदस्य-शिववधूत्वप्राप्तिरूपस्योन्नतस्थानस्य, लङ्घने आक्रमणे-प्राप्तौ इति यावद्, उत्सुक-उत्कण्ठित, अस्तीति शेष। इदम्-मया क्रियमाणम्, (अतितुच्छम्) तप, तस्य-पदस्य, अवाप्ते प्राप्ते, साधनम्-उपाय, इति मतम्, किलेति साधनस्य अलीकत्व द्योतयति। तर्हि किमर्थ दुष्प्रापे प्रवृत्तासि, इत्यत आह मनोरथानाम्-अभिलाषाणाम्, अगति विश्रान्ति, अविषयो वा, न विद्यते नास्ति। न हि शक्तिमनुरुध्य

कामा प्रवर्तन्ते, शक्येऽशक्ये वा वस्तुनि सर्वत्रैव तेषाम् अवारितप्रवृत्तेः ।

भा०—वर्णिना यत् 'किं परिहासोयम्' इति पृष्टम् तत्र पार्वत्या एव बुद्धिरुदभूद् यच्छिवपत्नीत्वं दुष्प्राप मत्वायमेवमाहेति । तदनुसारेणैवोत्तरयति सा 'वेदविद्वर' त्वया सखीमुखाच्छ्रुत यथार्थमेव, तादृशदुष्प्रापोन्नतस्थान-प्राप्तौ मदभिलाषो वर्तत एव । इद चातितुच्छ तपोऽह तत्प्राप्तिसाधन वृथैव मन्ये इति बालिशता मे । तथापि किं करवाणि, मनोरथा समीक्ष्य न प्रव-र्तन्ते इति मनोरथस्यैवाय दोषो न ममेति ।

अलं०—मनोरथानामगतिर्न विद्यते इति सामान्येन स्वमनोरथसमर्थनादर्थान्तरन्यास । महत्यपि तपसि पार्वत्या गर्वास्पर्शो व्यज्यते । शिववधूत्वस्य अत्युन्नतस्थानत्वोक्त्या तत्राभिलाषातिशयश्च व्यज्यते ।

**अथाह वर्णी विदितो महेश्वरस्तदर्थिनी त्व पुनरेव* वर्तसे ।**
**अमङ्गलाभ्यासरतिं विचिन्त्य त तवानुवृत्तिं न च† कर्तुमुत्सहे ॥६५॥**

अ०—अथ वर्णी आह-महेश्वर विदित, त्वम् पुन एव तदर्थिनी वर्तसे, च तम् अमङ्गलाभ्यासरतिम् विचिन्त्य तव अनुवृत्तिम् कर्तुम् न उत्सहे ।

व्याक०—महाश्चासौ ईश्वरः महेश्वरः, "सन्महत्परमोत्तमोत्कृष्टा पूज्य-मानै." इत्यनेन समास । ईश्वर - ईष्टेर्वरच् । तस्य अर्थिनी तदर्थिनी, अर्थिनी-शब्दे "अर्थाच्चासान्निहिते" इति अर्थशब्दादिनि । न मङ्गलम् अमङ्गलम्, ( नञ् त० ) तस्य अभ्यासे ( ष० त० ) रति यस्य ( बहु० ) तम् अम-ङ्गलाभ्यासरतिम । आह-ब्रूधातोर्लट्, ब्रुवश्चाहादेश । भूतार्थेऽय लट्, स च भ्रान्तिमूल इति वामनसमत्या मल्लिनाथ । प्रकाशिकाविवरणकारौ तु "तदादौ च" इति भोजसूत्रानुसारेण अथशब्दयोगे लटमाहतु., अथशब्दस्य तदादि-त्वाभ्युपगमात् । विदित वेत्ति. "मतिबुद्धिपूजार्थेभ्यश्च" इति वर्तमाने क्त, ममेति वेदनक्रियाया कर्ता अध्याहर्तव्य. । महेश्वर इति तस्या. कर्म । एव-कार -अप्यर्थे, चशब्दस्त्वर्थे ।

---

* 'पुर एव' इति प्रका० विव० । 'मद्दर्शनात्पुर एव त्व शिवार्थिनी वर्तसे, यदि प्राङ् मद्दर्शनमभविष्यत्, नैतदभविष्यत्, इति तद्व्याख्या ।

† 'न तु' इति प्रका० विव० ।

व्याख्या—अथ-पार्वतीवचनानन्तरम्, वर्णी-ब्रह्मचारी, आह-कथयति स्म, यद् महेश्वर -महादेव , मम विदित -मया ज्ञायते, यस्त्वा प्राङ् मनोभव दग्ध्वा विफलमनोरथा कृतवान्, त्वम्-पार्वती, पुनरेव-भूयोऽपि, तदर्थिनी-तद-भिलाषिणी, वर्तसे, च-किंतु, तम्-महादेवम्, अमङ्गलस्य-अशुभस्य, चिता-भस्मकपालाशुचिवस्तुधारणरूपस्य, अभ्यासे-नैरन्तर्येण सेवने रति.-अनुरागो यस्य, तथाभूतम्, विचिन्त्य-विचार्य, तव-भवत्या , अनुवृत्तिम्-अनुमतिरूप-मनुसरणम् कर्तुम्, न उत्सहे-उत्साह न करोमि, त्वामेतद्विषयेऽनुमन्तुं न शक्नोमीत्यर्थ ।

भा०—पार्वतीमुखात्कपटवटुना शिवेन स्वानुरागो यद्यपि श्रुत., तथापि भूयोऽपि दार्ढ्यपरीक्षार्थम् 'क्रुद्धसुप्तमत्ताना भावज्ञानम्' इति नीतिवचनात् क्रोध-दशाया मुख्यभावपरीक्षाया सौलभ्य पश्यन् कोपदशाया चातिमधुरान् पार्वती। मुखविकारान् द्रष्टुकामस्ता कोपयितु स्व (शिव) निन्दितु प्रचक्रमे। 'यद्यपि मया पूर्वम् अर्द्धतप प्रदानं तुभ्य प्रतिश्रुतम्, परमिममयोग्याभिनिवेश ते विलोक्य वाङ्मात्रेणापि तवानुवर्तनमनुमतिरूप न कर्तुं शक्नोमि, दूरे तु तप. प्रदानम्। स्पष्टमन्यत् ।

अल०—अमङ्गलाभ्यासस्याननुवृत्तौ हेतुत्वात् काव्यलिङ्गम् ।

**अवस्तुनिर्बन्धपरे कथ नु ते करोऽयमामुक्तविवाहकौतुकः ।**
**करेण शम्भोर्वलयीकृताहिना सहिष्यते तत्प्रथमावलम्बनम् ॥६६॥**

अ०—(हे) अवस्तुनिर्बन्धपरे ! आमुक्तविवाहकौतुक अयम् ते कर. शम्भोः वलयीकृताहिना करेण तत्प्रथमावलम्बनम् कथम् नु सहिष्यते ।

व्याक०—न वस्तु अवस्तु, (नञर्थोऽल्पत्वम्) तस्मिन् निर्बन्धः (तत्पु०) परो यस्या (बहु०) तत्सम्बुद्धौ अवस्तुनिर्बन्धपरे, निर्बन्धशब्दे बध्नातेर्घञ् । आमुक्त विवाहस्य कौतुक यस्मिन् स आमुक्तविवाहकौतुक, आमुक्तम् मुञ्चते क्तः, विवाह -वहतेर्घञ् । अवलयो वलयो यथा सपद्यते, तथा कृत अहि यस्मिन् तेन वलयीकृताहिना । तदेव प्रथम तत्प्रथमम्, (बहुव्रीहिरिति विवरणे, अवलम्बनसमूहोऽन्यपदार्थ ) तच्च तदवलम्बन तत्प्रथमावलम्बनम् । सहिष्यते-सहतेर्लृट् । कर इति सहनस्य कर्ता । करेणेति अवलम्बनकरणम् । शम्भो.

इति अवलम्बनकर्तरि "कर्तृकर्मणो कृति" इति षष्ठी । शम्भुकर्तृक तत्करकरणकमवलम्बनमित्यर्थः ।

व्याख्या—अवस्तुनि-असारे तुच्छवस्तुनि, निर्बन्ध -आग्रह , पर प्रधान यस्याः तथाभूते ! हे पार्वति ! आमुक्तम्-धारितम्, विवाहस्य-विवाहसम्बन्धि, कौतुकम्* मङ्गलसूत्रम् यस्मिन्, तथाभूत , अयम्-अत्यन्तसुकुमार , ते तव, कर -हस्त', शम्भो महादेवस्य, (महादेवेन कृतम्) वलयीकृत -कटकरूपेण† धृत , अहि -सर्प , यस्मिन्, तथाभूतेन, करेण, तदेव, प्रथमम्-पूर्वमननुभूतम्, (तदेव प्रथमं यस्य तथाभूतमिति वा) अवलम्बनम्-ग्रहणम्, कथ नु-केन प्रकारेण, सहिष्यते-सोढु शक्ष्यति । न कथमपीत्यर्थः ।

भा०—पूर्वमुक्तममङ्गलाभ्यास प्रपञ्चयति-अग्रे निर्वाहस्तु दूरे आस्ताम्, विवाहकाल एव पाणिग्रहणसमये यदा शिवस्ते धृतमङ्गलसूत्र पाणि स्वकरेण ग्रहीष्यति, तदा तत्करे सर्प भूषणत्वेन स्थित दृष्ट्वा भीत्या तव करो निवर्तिष्यत इति पाणिग्रहणमेव न सपद्येत । क्व त्व कृतविवाहमङ्गलवेषा सुकुमारतरा बाला, क्व च सर्पभूषण शिव इति वैषम्यमत्र प्रकटितम् । तत्प्रथमावलम्बनपदेन च विशेषेणासहत्वमुक्तम् । अग्रे अभ्यासात्करस्तत्करस्पर्शं सहेतापि, प्रथम मेव तु कथ सहेत इति ।

अल०—उभयत्र विशेषणद्वयं वैषम्यबोधने साभिप्रायमिति परिकरोत्थापितो विषम । शिवस्याङ्गना कठोरता, अमङ्गलपदार्थसम्बन्धाभ्यासश्च व्यङ्ग्यः।

त्वमेव तावत् परिचिन्तय स्वय‡ कदाचिदेते यदि योगमर्हत ।
वधू§दुकूल कलहसलक्षणा गजाजिन शोणितबिन्दुवर्षि च ॥६७॥

अ०—( हे गौरि ? ) त्वम् एव स्वयम् तावत् परिचिन्तय ( यत् ) कलहसलक्षणम् वधूदुकूलम् शोणितबिन्दुवर्षि गजाजिनम् च एते कदाचित् योगम् अर्हतः यदि ।

---

* कौतुक मङ्गले हर्षे हस्तसूत्रे कुतूहले इति शाश्वत. ।

† आवापकः पारिहार्य. कटको वलयोऽस्त्रियाम् इत्यमर ।

‡ 'स्वत.' इति पाठान्तरम् ।

§ 'वधूदुकूल क्व च हमलक्षण क्व चाजिन शोणितबिन्दुवर्षि तत्' इति प्रका०विन० ।

व्याक०—कलहस लक्षण यस्य तत्, कलहसलक्षणम् । अथवा कलहसवल्लक्षणम् ( स्वरूपम् ) यस्य तत् । शोणितस्य विन्दून् वर्षतीति शोणितविन्दुवर्षि, वर्षतेर्णिनि., उभयत्राऽपि प्रातिपदिकार्थमात्रे प्रथमा । तावत्-तच्छब्दाद् " यत्तदेतेभ्य परिमाणे वतुप् ", " आ सर्वनाम्न " इत्यात्वम् । अव्ययमिद सभ्रमार्थकामिति प्रकाशिका, मानार्थमेवेति सजीवनी । परिचिन्तय-चिन्तयते -अधीष्टे, अर्हार्थे वा लोट् । वाक्यार्थः कर्म । एतच्छब्दो दुकूलाजिनपरामर्शक. । यदीत्यव्यय पक्षान्तरे-इति प्रकाशिका, सजीवन्यान्तु प्रश्नार्थतया व्याख्यातम् ।

व्याख्या—हे गौरि, त्वमेव, स्वयम्-आत्मना, तावद्-यावदावश्यक तावत्, परिचिन्तय-परितो विचारय, यत् कलहसलक्षणम्-प्रान्तभागे लिखितकलहसम्, अथवा कलहसवच्छ्वेतम्, वध्वा.-नवोढाया, दुकूलम्-पट्टवस्त्रम्, शोणितस्य-रुधिरस्य, विन्दून्, वर्षति-क्षरति इति तथाभूतम्, गजाजिनम्-हस्तिचर्म च, एते कदाचित्-कस्मिन्नपि काले, योगम्-सङ्गतिम्, अर्हतो यदि-अर्हतः किम् ? नैवार्हत इत्यर्थ ।

भा०—हे गौरि ! अन्यस्य कस्यचित्कथनमुपदेशो वा दूरे आस्ताम्, नास्ति तस्यावश्यक्ता, त्वमेव स्वय विचारय । विवाहकाले ग्रन्थिवन्धो यदा स्यात् तदा त्वया धृत तादृश महार्हं पट्टवस्त्रम् यत्र गोरोचनया प्रान्तभागे हंसद्वय लिखित स्यात्, महादेवेन च धृत नव गजाजिनम्, यस्मान्नवतया शोणितविन्दव क्षरन्त स्यु, तयो. परस्पर ग्रन्थि क्रियेत । किमियं घटना समुचिता स्यात् ? किं तयोर्योग शोभेत ? आस्ता तव शिवस्य च योगे औचित्यविचार', युवाभ्या परिहितयोर्वस्त्रयोरेव योगो न तावद् घटते इति ।

अल०—विषमालङ्कार ।

चतुष्कपुष्पप्रकरावकीर्णयो परोऽपि को नाम तवानुमन्यते ।
अलक्तकाङ्कानि पदानि पादयोर्विकीर्णकेशासु परेतभूमिषु ॥ ६८ ॥

अ०—पर अपि क नाम चतुष्कपुष्पप्रकरावकीर्णयो तव पादयो अलक्तकाङ्कानि पदानि विकीर्णकेशासु परेतभूमिषु अनुमन्यते ?

---

वधू स्नुषा नवोढा स्त्री-इति विश्व ।

व्याक०—चतुष्के पुष्पाणाम् प्रकरे ( प० सप्त० तत्पु० ) अवकीर्णयोः चतुष्कपुष्पप्रकरावकीर्णयो , प्रकरशब्दे किरते “ ऋदोरप् ” । अवकीर्णशब्दे किरते क्त । अलक्तक अङ्कः येषु तानि अलक्तकाङ्कानि विकीर्णा केशा यासु तासु विकीर्णकेशासु । ‘ अतत्स्थ तत्र दृष्ट च ’ इति लक्षणेनात्र केशाना स्वाङ्गत्वेऽपि विकल्पितत्वात्पक्षे न ङीप् । परेताना भूमिषु परेतभूमिषु । परेतशब्दे परापूर्वाद् इण्धातोः क्त । अनुमन्यते-मन्यतेर्वर्तमाने लट् । ‘ अनुमस्यते ’ इति पाठे तु “किंवृत्ते लिङ्लृटौ” इति गर्हाया लृट् । क इति अनुमन्यतेः कर्ता, पदानीति तत्कर्म । पादयोरिति तत्सम्बन्धे षष्ठी । नामेति कुत्सायाम् ।

व्याख्या—परोऽपि शत्रुरपि, को नाम-क पुरुषः, ( एव स्याद्, न कोऽपि, य ) चतुष्के-राजमहिष्याद्युचिते गृह-( मण्डप ) विशेषे, ( प्रकीर्ण ) पुष्पाणाम्-कुसुमानाम्, प्रकरः-समूह , तत्र अवकीर्णयो -न्यस्तयो , तत्र सञ्चारोचितयोः, तव-पर्वतराजसुताया , पादयो -चरणयो', अलक्तकाङ्कानि सकान्तलाक्षारसानि, ᐩ पदानि-पादन्यासचिह्नानि, ( अवस्थानानीति प्रकाशिकायाम् ) विकीर्णा -इतस्ततो विक्षिप्ता , केशा -मृतपुरुषाणा कचा , यासु तथाभूतासु, परेतभूमिषु-श्मशानस्थलेषु, अनुमन्यते-अनुजानाति । अनुज्ञास्यतीत्यर्थ ।

भा०—अनन्तर च यदा त्व भर्तृगृहे गमिष्यसि, तदा शिवस्य श्मशानवासित्वात्तवापि भर्त्रा सह श्मशान एव स्थितिर्भविष्यति । ततश्च ययोस्तव पादयो पितृगृहे मङ्गलमयेषु गृहेषु विकीर्णपुष्पेषु सञ्चरणम्, तस्यैव च तौ समुचितौ, तयोरितस्तत प्रक्षिप्तशवकेशासु श्मशानभूमिषु सञ्चारो भविष्यति । तत्रैव च पादन्यस्तालक्तकरसगर्भाणि पदचिह्नानि ते लक्ष्येरन् । तव शत्रुरपि ( यो निन्दितोऽपि स्यात्, सोऽपि ) घटनामिमा नानुज्ञातुमर्हति, कथन्तु मादृशो बन्धुरनुजानीयात् ।

अल०—‘ श्मशानवासस्ते नानुमन्तु शक्य ’ इत्यर्थस्य भङ्ग्यन्तरेणोक्तत्वात् पर्यायोक्तम् । अमङ्गलाभ्यासरतेरेव प्रपञ्च ।

---

ᐩ ‘ पद व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु ’ इत्यमर । ‘ पद शब्दे च वाक्ये च व्यवसायापदेशयो । पादतच्चिह्नयो. ’ इति विश्व ।

**अयुक्तरूपं किमतः परं वद त्रिनेत्रवक्षःसुलभं तवापि यत् ।**
**स्तनद्वयेऽस्मिन् हरिचन्दनास्पदे पदं चिताभस्मरजः करिष्यति ॥६९॥**

अ०—( त्वमेव ) वद, अतः परम् अयुक्तरूपम् किम् ( स्याद् ) यत् त्रिनेत्रवक्षः†सुलभं चिताभस्मरजः तव अपि हरिचन्दनास्पदे अस्मिन् स्तनद्वये पदं करिष्यति ।

व्याक०—त्रीणि नेत्राणि यस्य स त्रिनेत्रः, तस्य वक्षः, तत्र सुलभं त्रिनेत्रवक्षःसुलभम् । न युक्तम्-अयुक्तम्, प्रशस्तम् ( उत्कृष्टम् ) अयुक्तम्-अयुक्तरूपम्, अयुक्तशब्दात् प्रशंसायां रूपप् । हरिचन्दनस्य आस्पदे हरिचन्दनास्पदे । आस्पदशब्दे "आस्पदं प्रतिष्ठायाम्" इति सुडागमः । चितायाः भस्म एव रजः चिताभस्मरजः । सुलभम् लभते खलु । रजः इति करोतेः कर्तृ, पदमिति तत्कर्म ।

व्याख्या—पार्वति ! त्वमेव, वद-कथय, अतः-वक्ष्यमाणात्, परम्-आधिकम्, अयुक्तरूपम्-अत्यन्तमनुचितम्, किं स्याद्, यत्, त्रिनेत्रस्य-विरूपाक्षस्य, वक्षसि वक्षःस्थले, सुलभम्-सुप्रापम्, चिताभस्मैव-श्मशानभस्मैव, रजः-अनुलेपनचूर्णम्, तव-एव सौन्दर्यशालिन्या अपि, हरिचन्दनस्य-‡कुङ्कुमस्य ( रक्तचन्दनस्येति विवरणकारः ) आस्पदे स्थानभूते, अस्मिन्-अतिसुन्दरे, स्तनद्वये-द्वयोः स्तनयोः, पदम्-स्थानम्, करिष्यति ।

भा०—यदा समागमकाले महादेवस्त्वामालिङ्गिष्यति, तदा तद्वक्षसि स्थितम् ( तदेव तत्र सुलभम्, नान्यत्किमपि चन्दनादिकम् ) चिताभस्मरूपमनुलेपनं तत्राप्यस्मिंस्त्रिलोकीसौन्दर्यनिधाने कुचद्वन्द्वे लग्नं स्यात् । यस्मिन्

---

* 'ङ्कितं' इति प्रका० विव० ।

† इयमेव योजना प्रकाशिकाविवरणकृतोरभिमता । मल्लिनाथसूरिस्तु सम्यक् सम्पद्यमानायामप्येवमेकवाक्यतायाम्, 'त्रिनेत्रवक्षः तवापि सुलभम्, अतः परम् अयुक्तरूपं किं स्यात् । यद् हरिचन्दनास्पदे अस्मिन् स्तनद्वये चिताभस्मरजः पदं करिष्यति, इति क्लिष्टमसमञ्जसं च किमिति व्याख्यातवानिति न विद्मः ।

‡ हरिचन्दनमस्त्री स्यात् त्रिदशानां महीरुहे । नपुंसकं तु गोशीर्षे ज्योत्स्नाकुङ्कुमयोरपि इति मेदिनी ।

स्तनद्वन्द्वे चन्दनकुङ्कुमादीना विलेपनमुचितम्, तत्र तादृशस्यामङ्गलस्य पदार्थस्य सस्पर्श इति, इत पर किं जगत्यनुचित सभाव्यते ।

अल०—पूर्ववद्वियम एवालङ्कार ।

**इय च तेऽन्या पुरतो विडम्बना यदूढया वारणराज -हार्यया ।**
**विलोक्य वृद्धोक्षमधिष्ठितं त्वया महाजन स्मेरमुखो भविष्यति ॥७०॥**

अ०—( किं ) च पुरतः इयम् अन्या ते विडम्बना ( भवेत् ) यद् ऊढया वारणराजहार्यया त्वया अधिष्ठितम् वृद्धोक्षम् विलोक्य महाजन स्मेरमुख भविष्यति ।

व्याक०—वारणानाम् राजा वारणराजः, "राजाह.सखिभ्यष्टच्"। तेन हार्यया वारणराजहार्यया, कर्तृतृतीयान्तेन तत्पुरुष । हार्यशब्दे हरते अर्हार्थे "ऋहलोर्ण्यत्"। वृद्धश्च उक्षाणम्-वृद्धोक्षम्, कर्मधारयः "अचतुर " इत्यनेन अच् समासान्तो निपात्यते । महाश्चासौ जन. महाजन । महत आत्वम्। स्मेर मुख यस्य स स्मेरमुख । स्मेरशब्दे स्मयतेः "नमिकम्पिस्म्यजसकमहिंसदीपो रः"। पूर्ववाचकस्याजन्तस्य पुरशब्दस्य क्वाप्यनुपलम्भात्, नगरवाचिन' पुरशब्दात्तसि निष्पन्नेऽपि 'पुरत ' शब्देऽर्थसङ्गत्यभावात् 'पुरत ' पदमशुद्धमेव । पूर्वशब्दादस्प्रत्यये तस्य पुरादेशे च "पूर्वापरावराणामसि पुरधवश्चैषाम्" इति सूत्रेण कृते 'पुर ' इत्येव योग्यमिति पण्डितराजो जगन्नाथ आह । नागेशस्तु 'पुरत ' इति स्वतन्त्रमव्ययम्, 'पुर अग्रगमने' इति धातो कप्रत्यये पुरशब्दात्तसि वा तद्रूपम्, यद्वा ज्ञापकसिद्धेनातसुच्प्रत्ययेन पचाद्यजन्तात्पुरशब्दात्तत्सावनीयमिति त्रेधा रूपमिद समर्थितवान्† । विडम्बना-विडम्ब्यते

---

* 'भार्यया' प्रका० निव० । 'वारणराजभार्यया-श्रेष्ठया हस्तिन्या, ( कर्तृभूतया ) ऊढा-कृतवहना या त्वम्, तया अधिष्ठित वृद्धोक्ष विलोक्य' इत्यादि तद्व्याख्या । पितृगृहे विशिष्टया हस्तिन्या त्वमुह्यसे, एतादृश्यास्तव वृद्धोक्षारोहणमुपहासास्पदमिति तात्पर्यम् ।

† अत एव कविकुलगुरोरय प्रयोग , 'पश्यामि तामित स्त पुरतश्च पश्चात्' इति महाकवेर्भवभूते. प्रयोग', 'दृश्यसे पुरतो गतागतमेव मे विदधासि' इत्याद्या जयदेवादिप्रयोगाश्च सगच्छन्ते ।

"एयासश्रन्थो युच्" । अभ्याहृतक्रियाया कर्तृपदम् । ऊढया-वहेः कर्मणि क्त । अधिष्ठितम्-तिष्ठतेः क्त । "उपसर्गात् सुनोति " इति षत्वम् । त्वयेति अधिष्ठानक्रियाया कर्तरि तृतीया ।

व्याख्या—किं च, हे गौरि, पुरत.-उक्तात् शिवगृहगमन-तत्समागमादे. पूर्वमेव, इयम्-मद्विचारमारूढा, अन्या-पूर्वोक्तातिरिक्ता, ते-विडम्वना-हास्यकारण भवेद्, यद् ऊढया-कृतविवाहया, वारणराजेन-(कुथादिसमलङ्कृतेन) गजेन्द्रेण, हार्यया (श्वशुरालये) प्रापणीयया, त्वया-भवत्या, अधिष्ठितम्-कृताधिरोहणम्, वृद्धम्-जराक्रान्तम्, उक्षाणम्-वृषभम्, विलोक्य-दृष्ट्वा, महाजन.-सभ्यलोक, स्मेरम्-मन्दहासयुक्तम्, मुखम्-आनन यस्य तथाभूत, भविष्यति ।

भा०—आस्ता शिवगृहगमने सति पूर्वोक्तः श्मशानवास-भस्मसंसर्गयोः प्रसङ्ग, तत पूर्वमेवैक वक्तुं मया विस्मृतम्, यच्छिवस्य नान्यानि वाहनानि सन्ति, विवाहोत्तर स स्वीयं वृद्ध वृषभमारोप्य त्वा नेष्यति । या परमसुन्दरी राजकुमारी त्वमुत्कृष्टकरिणीमारोढु योग्या, सा वृषभमारूढेति व्यतिक्रमं दृष्ट्वा लोकानामाश्चर्यमवज्ञा च स्यात्, तेन ते हसिष्यन्ति, सेय तव विडम्वना प्रसज्येत। वारणराजेति राजपदम्, वृद्धेत्युक्षविशेषणं चात्यन्तवैलक्षण्यवोधनाय । 'वृद्धो वृषो द्वाभ्यामारूढो न जाने कदा प्राणान् जह्यात्, तदा पादचारस्यैव प्रसङ्ग. स्याद्' इति चाकूतम् ।

अल०—पूर्ववद् विषम' 'स्मेरमुखो भविष्यति' इत्यप्रस्तुतप्रशंसापि ।

**द्वय गत सम्प्रति शोचनीयता समागमप्रार्थनया कपालिनः ।**
**कला च सा कान्तिमती *कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी ॥७१॥**

अ०—कपालिनः समागमप्रार्थनया सम्प्रति कलावत. सा कान्तिमती कला च अस्य लोकस्य नेत्रकौमुदी त्वम् च (इति) द्वयम् शोचनीयताम् गतम् ।

व्याक०—समागमशब्दे उपसृष्टाद् गच्छते. अप् । प्रार्थना अर्थयते युच् । कलावतः कलाशब्दात् प्राचुर्ये प्राशस्त्ये वा मतुप् । कान्तिमती-अत्रापि कान्तिशब्दात् प्राशस्त्ये नित्ययोगे वा मतुप् । कपालिन. कपालशब्दाद् निन्दायाम् इनिर्मत्वर्थीय । गतम्-इति कर्तरि क्त । द्वयमिति तत् कर्तृ । चद्वय

* 'कलात्मन.' इति प्रका० विव० ।

समुच्चयार्थम् ।

व्याख्या०—कपालिन -मृतमुण्डधारिण रुद्रस्य, समागमस्य-सहवासस्य, प्रार्थनया-अभिलाषेण, सम्प्रति-इदानीम्, कलावत -चन्द्रमस , सा-प्रसिद्धा, कान्तिमती-प्रशस्तकान्तियुक्ता, कला च, अस्य लोकस्य-भूलोकस्य, नेत्रयो -नयनयोः, कौमुदी†-ज्योत्स्ना तद्वदानन्ददायिनीति यावत्, त्वम्-पार्वती च, इति द्वयम्, शोचनीयताम्-शोकविषयताम्, गतम् प्राप्तम् ।

भा०—अतिप्रशस्तकान्ति· सुकुमारतरा चन्द्रकलेव पूर्वं कपालधारिणो भूतेशस्य शिरोगतत्वेन शोचनीयाऽभूत् । इदानीन्तु त्वमपि तत्समागमार्थिनीति जगति द्वय शोचनीयता प्राप्तम् । अपकृष्टाश्रित ह्युत्तम वस्तु शोच्य भवतीति ।

अलं०—प्रस्तुताप्रस्तुतयो शोचनीयत्वरूपैकधर्मप्रतिपादनाद् दीपकम् । कपालिन इति विशेष्यममङ्गलाभ्यासपदता स्मारयच्छोचनीयत्वे साभिप्रायमिति परिकराङ्कुर । 'कपालिन·' इति पाठ आलङ्कारिकधुरन्धरेण मम्मटाचार्येण व्यञ्जनास्थापनप्रकरणे काव्यप्रकाश उपन्यस्तः, समर्थितश्च । व्याख्याकृतस्तु 'पिनाकिन ' इत्येव पाठ मत्वा व्याचक्षते। तत्र पिनाकिपद वीरत्वमुत्तमवस्तुस्वामित्व च बोधयद्वरणीयतायामनुकूलं स्यादिति तत्समागमेन शोचनीयता न सिद्ध्येत् । तस्मात्प्रकृतार्थविरोधि पदमिदमिति दूषयन्त्यालङ्कारिका· । श्रीमन्नारायणस्तु 'पिनाकी इति नाममात्रेण विडम्बिता त्व त प्रार्थयसे, न तु तस्य सार जानासि' इत्यभिप्रायेण पिनाकिपद समर्थितवान् । यद्वा केवल वीरता बोधयत्पिनाकिपद सुकुमारतरयो पार्वतीचन्द्रकलयोराश्रयणीयताया विपरीतमेवेति । कथचित्समाधेयम् । 'त्व च' इति त्वपदोत्तर न्यसनीयस्य चकारस्य लोकस्येति पदानन्तर न्यासाद् 'अक्रमत्वम्' वाक्यदोष काव्यप्रकाशकार आह, कला च सेति तच्छब्दस्य प्रसिद्धार्थत्वान्न यच्छब्दाकाङ्क्षत्वम् ।

**वपुर्विरूपाक्षमलक्ष्यजन्मता दिगम्बरत्वेन निवेदित वसु ।**
**वरेषु यद् बालमृगाक्षि मृग्यते तदस्ति किं व्यस्तमपि त्रिलोचने ॥७२॥**

अ०—हे बालमृगाक्षि ! यद् वरेषु मृग्यते, तत् त्रिलोचने व्यस्तम् अपि अस्ति

---

† 'चन्द्रिका कौमुदी ज्योत्स्ना' इत्यमर ।

किम् ? (यतश्च अस्य) वपु विरूपाक्षम् ( अस्ति ) अलक्ष्यजन्मता ( अस्ति ) वसु दिगम्बरत्वेन निवेदितम् ।

व्याक०—बाल मृग ( कर्म० ) इव अक्षिणी यस्याः सा बालमृगाक्षी, लाक्षणिकपूर्वपदो बहुव्रीहिः । " बहुव्रीहौ सक्थ्यक्ष्णो स्वाङ्गात् षच् " इति षच् समासान्तः, षित्वाद् ङीप्, सम्बुद्धौ ह्रस्व । त्रीणि लोचनानि यस्य, तस्मिन् त्रिलोचने । विरूपाणि अक्षीणि यस्मिन्, विरूपम् अक्षि यस्मिन्निति वा, विरूपाक्षम्, पूर्ववत् षच् । अलक्ष्य जन्म यस्य सः-अलक्ष्यजन्मा, तस्य भाव अलक्ष्यजन्मता, बहुव्रीह्यनन्तर भागे तल् । दिश एव अम्बराणि यस्य तस्य भाव दिगम्बरत्वम्, तेन । निवेदनक्रियायाः कर्तरि तृतीया । वरेषु-व्रियत इति वृणोते अप् । मृग्यते-मृगयतेः कर्मणि लट् । व्यस्तम्-' असु क्षेपणे ' धातो क्त ।

व्याख्या—हे बालमृगाक्षि-हे मृगशावकनयने ! यद्, वरेषु-विवाहकर्तृषु, मृग्यते-अन्विष्यते, तत्, त्रिलोचने-महादेवे, व्यस्तमपि-एकैकमपि, अस्ति-विद्यते, किम् ? काकूक्ति, न विद्यत इत्यर्थ । यतश्च, अस्य, वपु -शरीरम्, विरूपाणि-विकृतानि पिङ्गानि अक्षीणि नेत्राणि यस्मिन् तथाभूतम्, विरूपम्-ललाटस्थतया विकृतम्-असुन्दरम्, अक्षि-तृतीयनेत्र यस्मिन् तथाभूत वा, असुन्दरमिति यावद्, अस्तीति शेष, अलक्ष्यम् अज्ञातम्, देशकालजात्यादि-निर्णयविरहितम्, जन्म-उत्पत्ति -यस्य तथाभूतता च अस्ति, कुत्र कदा कस्मिन् कुले जात इति न ज्ञायत इत्यर्थ, अस्य, वसु-धनम्, दिश एव अम्बराणि-वस्त्राणि यस्य तथाभूतत्वेन-नग्नत्वेन, निवेदितम् बोधितम्, शरीराच्छादनार्थं वस्त्राणामप्यभावो निर्धनता स्पष्ट वक्तीत्यर्थ ।

भा०—' कन्या कामयते रूप माता वित्त पिता श्रुतम् । बान्धवा कुल-मिच्छन्ति मिष्टान्नमितरे जनाः ' इति नीत्युक्तदिशा रूपम्, धनम्, विद्या, कुल चेति चतुष्टय परीक्ष्य वरा विवाहार्थं व्रियन्ते । पार्वति ! त्वया वरीतुमिष्टे त्रिलोचने तु एषामेकमपि नास्ति, कुतश्चतुष्टय स्यात् । तस्य नामैव विरूपाक्ष, तेन सौन्दर्यं दूरे निरस्तम् । ( त्व तु बालमृगाक्षी, स च विरूपाक्षः इति कुत्र द्वयोरनुरूपता ) कुत्र कदा कस्माज्जातोऽयमिति न केनापि विज्ञायते । यस्य

पिताप्यविदितः, तस्य कुलसम्बन्धे किमु वक्तव्यम् । उत्पत्तिकालज्ञानाभावेनातिवृद्धत्वं सूचित भवति, तदपि वरविरुद्धम् । उत्पत्तिदेशकुलयोरज्ञाने च विद्यापि कथं सभवेत् । प्रशस्ताभिजना· प्रशस्तकुला एव च विद्वांसो दृश्यन्ते । धनस्य तु इयमवस्था, यदाच्छादनार्थं वस्त्रमपि नास्ति, अत एव दिगम्बर इत्युच्यते । 'त्रिलोचने' इत्युक्त्या च लक्षणहीनत्व सूचितम्, 'हानिवदाविक्यमप्यज्ञाना विकार' इति सामुद्रिकोक्ते । ततश्च कथमीदृशेन भवादृश्याः सम्बन्धो योग्य स्यात् ।

अल०—'एकमपि नास्ति, किमु सर्वम्' इत्यर्थाक्षेपात्काव्यार्थापत्तिर्व्यञ्जया । एकैकमपि हेयत्वमापादयति, तत्र तु सर्वमिति समुच्चयोऽपि । 'बालमृगाक्षि' 'त्रिलोचने' इत्युभयोर्विशेष्ययोः साभिप्रायत्वात्परिकराङ्कुर. । निवेदितमिति जडे वसुनि निवदेनकर्तृत्वानुपपत्त्या बोधने लाक्षणिकम् । स्पष्ट बोधनं व्यङ्ग्यम् । अत्र जन्मनि अलक्ष्यत्वस्य विधेयतया प्राधान्यमिष्टम्, पर तत् समासे गुणीभूतमिति विधेयाविमर्शो दोषः । 'अलक्षिता जनि' इति पाठे तु न स दोष -इति काव्यप्रकाशे । अस्मिन् पाठेऽपि लिङ्गक्रमस्य भङ्गाद 'अलक्षित जनु' इति पाठो ज्यायान् इत्याचार्या । विधेयस्य पूर्वमुपादानेन वाक्यगतो विधेयाविमर्शस्तु तथापि स्थित एवेति ।

**निवर्तयास्मादसदीप्सितान्मनः क्व तद्विधस्त्वं क्व च पुण्यलक्षणा ।**
**अपेक्ष्यते साधुजनेन वैदिकी श्मशानशूलस्य न यूपसत्क्रिया ॥७३॥**

अ०—( हे गौरि ! त्वम् ) अस्माद् असदीप्सिताद् मन. निवर्तय, तद्विध क्व ( अस्ति ), पुण्यलक्षणा त्वम् च क्व ( असि ), साधुजनेन श्मशानशूलस्य वैदिकी यूपसत्क्रिया न अपेक्ष्यते ।

व्याक०—असत ईप्सिताद् असदीप्सिताद्, ईप्सितशब्दो व्याख्यात । सा विधा यस्य स तद्विध । विधाशब्दे स्त्रियामङ् । पुण्यानि लक्षणानि यस्याः सा पुण्यलक्षणा । यूपोचिता सत्क्रिया यूपसत्क्रिया, मध्यमपदलोपी समास । षष्ठीतत्पुरुषो वा । निवर्तय निवर्तयते लोट्, मध्यमपुरुषैकवचनम्, मन इति निवर्तनक्रियाया कर्म । वैदिकी-वेदे भवा, ठञ् । अपेक्ष्यते ईक्षते कर्मणि लट्, साधुजनेनेति अपेक्षणस्य कर्तरि तृतीया, यूपसत्क्रियेति तत्कर्म । अस्माद्

इति अपादाने पञ्चमी, " वारणार्थानामीप्सित " इत्यपादानत्वम् ।

व्याख्या—हे गौरि ! त्वम्, अस्माद्-विरूपाद्वरणरूपाद्, असत्-अशु-भोदर्काद्, ईप्सिताद् मनोरथाद्, मनः, निवर्तय-दूरीकुरु, तद्विधः तादृश-अमङ्गलशील, क्व, पुण्यानि-शुभानि, लक्षणानि सौन्दर्यादीनि सौभाग्यचिह्नानि यस्याः तथाभूता, त्व च, क्व, युवयोर्महदन्तरमस्तीत्यर्थः । साधुजनेन-पण्डित-जनेन, श्मशाने परेतभूमौ, ( निखातस्य ) शूलस्य वध्यशङ्कोः, वैदिकी-वेदोक्ता, यूपसत्क्रिया यूपः यज्ञे पशुबन्धनसाधनभूत संस्कृतदारुविशेष, तदुचिता सत्क्रिया-प्रोक्षणाभ्युक्षणादिरूप संस्कार, न अपेक्ष्यते न इष्यते-न क्रियत इति यावत् ।

भा०—मम युक्तियुक्तानि वाक्यानि विचार्य, अज्ञानात्परिणाममज्ञात्वा योऽभिलाषस्त्वया कृतस्त परित्यज । दृष्टान्तेनानौचित्य प्रकाशयन्नाह-यथा श्मशाननिखाते वध्यशङ्कौ वैदिकसत्क्रियासम्बन्धो न घटते, तथा शिवेऽपि तव सम्बन्धो न घटत एव । वैदिकी सत्क्रिया यथा अलौकिकी, तथा त्वमप्यलौकि-कीति तत्प्रशसाया तात्पर्यम् ।

अल०—पूर्वार्धे विषमालङ्कार । 'विदुष्या त्वया शिवाय वरोचित आदरो न देय ' इति तुल्ये प्रस्तुते, तुल्यस्य अप्रस्तुतस्याभिधानादप्रस्तुत-प्रशसा विवरणकार आह । वयन्तु भावार्थोक्तरीत्या दृष्टान्त मन्यामहे । तद्विध इत्युक्त्या भूयो भूयोऽमङ्गलस्य नामकीर्तनमप्ययोग्य सूचयन्नत्यन्ता हेयता व्यनक्ति । चकारस्याक्रमत्व दोषोऽत्रापि ।

इति द्विजातौ प्रतिकूलवादिनि प्रवेपमानाधरलक्ष्यकोपया ।
*विकुञ्चितभ्रू†लतमाहिते तया विलोचने तिर्यगुपान्तलोहिते ॥७४॥

अ०—द्विजातौ इति प्रतिकूलवादिनि ( सति ) प्रवेपमानाधरलक्ष्यकोपया तया उपान्तलोहिते विलोचने विकुञ्चितभ्रूलतम् तिर्यग् आहिते ।

व्याक०—प्रतिकूल वदतीति प्रतिकूलवादी, तस्मिन्, वदतेस्ताच्छील्ये णिनि । द्वे जाती यस्य तस्मिन् द्विजातौ, जातिशब्दे जायते क्तिन्, तस्य

* 'निकुञ्चित' इति प्रका० विव० ।
† 'भ्रलतयाहिते' इति क्वचित् ।

आत्वम् । प्रवेपमानेन अधरेण ( कर्म० ) लक्ष्यः कोपो यस्याः तया प्रवेपमानाधरलक्ष्यकोपया । प्रवेपमानशब्दे वेपते शानच् । कोप कुप्यतेर्घञ् । उपान्ते लोहिते उपान्तलोहिते । विकुञ्चिता भ्रूरेव लता यस्मिन् कर्मणि तद् विकुञ्चितभ्रूलतम् , क्रियाविशेषणम । विकुञ्चितशब्दे कुञ्चते· क्त । तिर्यगित्यपि क्रियाविशेषणम् । तिर्यक्शब्दे तिरस्पूर्वादञ्चते क्विन्, "तिरसस्तिर्यलोपे" इति तिरिरादेशः । आहिते-आङ्पूर्वाद् दधाते कर्मणि क्त ।

व्याख्या—द्विजातौ-ब्राह्मणे, इति-पूर्वोक्तप्रकारेण, प्रतिकूलवादिनि विरुद्धभाषिणि सति, प्रवेपमानेन-कम्पमानेन, अधरेण-अधरोष्ठेन, लक्ष्यः-अनुमेय , कोप -क्रोध , यस्या तथाभूतया, तया-पार्वत्या, उपान्ते-प्रान्तभागे, लोहिते-रक्ते, विलोचने नेत्रे, विकुञ्चिता कुटिलता नीता, भ्रूलता यस्मिन् कर्मणि यथा भवति तथा, सभ्रूभङ्गम् , तिर्यक्-साचि, आहिते-स्थापिते, प्रेरिते इत्यर्थ. ।

भा०—ब्राह्मणमुखादेव शिवनिन्दा श्रुत्वा पार्वत्याः कोप उदभूत् । तेन तस्या अधरोष्ठः कम्पमान आसीत्, नेत्रे च प्रान्तभागे रक्तता गते । अथ सा तन्मुखाद् दृष्टिं परावर्त्य कुटिलां भ्रुवं कृत्वा पार्श्वभागे दृष्टिं चिक्षेप । कोपावज्ञयोर्लक्षणान्यत्राभिहितानि । 'द्विजातौ' पदेन तस्य शापाद्ययोग्यता प्रतिपादिता । यद्यन्योऽभविष्यत्, पार्वती तीव्रदृष्टिक्षेपेण तं भस्मसादकरिष्यत् । परं ब्राह्मणे न योग्यो निग्रह इति दृष्टिं तिर्यक् क्षिप्त्वावज्ञैव कृता ।

अल०—अमर्षभावस्योदयध्वननाद्भावोदयध्वनि । कोपमुलभचेष्टावर्णनात्स्वभावोक्तिः ।

**उवाच चैनं परमार्थतो हरं न वेत्सि नूनं यत एवमात्थ माम् ।**
**अलोकसामान्यमचिन्त्यहेतुकं द्विषन्ति मन्दाश्चरितं महात्मनाम् ॥७५॥**

अ०—( गौरी ) एनम् उवाच च, नूनम् ( त्वम् ) परमार्थत हरम् न वेत्सि, यत ( त्वम् ) माम् एवम् आत्थ, मन्दाः अलोकसामान्यम् अचिन्त्यहेतुकम् महात्मनाम् चरितम् द्विषन्ति ।

व्याक०—परमश्चासावर्थ , तस्मात्, परमार्थत , "पञ्चम्यास्तसिल्" । न लोकानाम् , लोकेषु वा सामान्यम् अलोकसामान्यम्, (ष०तत्पु०नञ्तत्पु०) न चिन्त्य हेतु यस्य तद् अचिन्त्यहेतुकम्, 'शेषाद् विभाषा' इति कप् ।

चिन्त्यशब्दे चिन्तयते शक्यार्थे "अचो यत्"। महान् आत्मा येषा तेषा महात्मनाम्। एनम् इदशब्दस्य अन्वादेशे एनादेश । उवाच-ब्रूधातोर्लिट्। वेत्सि-वेत्तेर्लटि मध्यमपुरुषैकवचनम्. आत्थ ब्रूधातोर्लटि सिपि रूपम्, ब्रुव-आहादेश, सिपश्च थलादेश । माम्-इति ब्रवीते अकथित कर्म। एवमिति प्रधानं कर्म। एवमेव 'उवाच' इत्यत्र वक्ष्यमाणमिति, एनमिति च प्रधान-गौणकर्मणी ।

व्याख्या—गौरी, एनम्-ब्रह्मचारिण प्रति, वक्ष्यमाणम्, उवाच-जगाद च, चकार पूर्वसमुच्चयार्थ, कोपचिह्न दर्शयामास, उवाच चेति। नूनम्-निश्चयेन, त्वम्, परमार्थत -याथार्थ्येन, हरम् सर्वपापहरणसमर्थं महादेवम्, न वेत्सि-न जानासि, यत -यस्मात् कारणाद्, माम्-तदेकप्राणा तदर्द्धभूतामपि प्रति, एवम्-पूर्वोक्तया निन्दनीयया रीत्या, तच्चरितम्, आत्थ-ब्रवीषि। (आत्थेत्यवज्ञागर्भं वच-नम्) मन्दा -मूढाः, अलोकसामान्यम् सर्वजनसाधारण न भवति, तथाविधम्, लोकापेक्षया विचित्रम्, अचिन्त्य विचारयितुमप्यशक्य, हेतु -कारण यस्य तथाभूतम्, महात्मनाम्-महापुरुषाणाम्, चरितम्, द्विषन्ति-द्वेषेण पश्यन्ति, दूष-यन्तीत्यर्थ ।

भा०—कोपचिह्नप्रकटनानन्तर पार्वती श्रुताया शिवनिन्दाया, पापपरि-हाराय परिहारोऽवश्यवक्तव्य इति विचिन्त्य ब्रह्मचारिण प्रत्युत्तर वक्तुमारभत। (तेन च कपटबटो रसिकशिरोमणे शिवस्य न केवल कोपाक्रान्ततन्मुखदर्श-नेन चक्षुषोरेव लाभ, अपि तु स्वानुरागवचनश्रवणेन श्रोत्राप्यायनमपीति समु-च्चयेन सूचितम्) तदुक्तस्य क्रमेण सङ्क्षेपेण परिहारः पार्वत्या वक्तव्य । तत्र 'विदितो महेश्वर' इति तदुक्तिरेव प्रथम निराक्रियते, यत् 'त्व महेश्वर न जाना-सि' इति तदुक्त्या निन्दयैवानुमीयते। अलौकिका हि महात्मानो न लोकसाधा-रणमाचरन्ति, तेषा च विलक्षणाचारे को हेतुरित्यपि सर्वैर्न ज्ञायते। तत एवाज्ञा-नामूढास्तच्चरितानि दूषयितु प्रवर्तन्ते। तन्माहात्म्यविज्ञास्तु भविष्यति कश्चिदत्र हेतुरिति सतुष्यन्ति। त्व निन्दाया प्रवृत्त, तस्मान्न जानासीत्येव स्पष्टमनुमीयत इति।

अल०—पूर्वार्द्धे अनुमानम्। उत्तरार्द्धे सामान्येन विशेषस्य समर्थनाद्

अर्थान्तरन्यास । शिवविषयिणी श्रद्धा व्यज्यते ।

**विपत्प्रतीकारपरेण मङ्गल निषेव्यते भूतिसमुत्सुकेन वा ।**
**जगच्छरण्यस्य निराशिष सत -किमेभिराशोपहतात्मवृत्तिभिः ॥७६॥**

अ०—विपत्प्रतीकारपरेण वा भूतिसमुत्सुकेन (जनेन) मङ्गलम् निषेव्यते; जगच्छरण्यस्य निराशिषः सत (शिवस्य) आशोपहतात्मवृत्तिभिः एभि किम् ?

व्याक०—विपदा प्रतीकार परो यस्य, तेन । यद्वा प्रतीकारे पर , तेन विपत्प्रतीकारपरेण । प्रतीकारः-प्रतिपूर्वात् करोतेर्घञ् , "उपसर्गस्य घञ्यमनुष्ये बहुलम्" इति दीर्घ । भूतौ समुत्सुकेन भूतिसमुत्सुकेन निर्गता आशी॰ यस्मात्, तस्य निराशिष । आशया उपहता आत्मन वृत्ति यै तानि आशो॰पहतात्मवृत्तीनि, तैः । विग्रहेऽस्मिन् यैरिति कर्तरि तृतीया, आशया इति करणे तृतीया । यद्वा-आशया उपहत आत्मा येषा ते आशोपहतात्मानः (जनाः) तेषा वृत्तिभिरिति । निषेव्यते-सेवतेः कर्मणि लट् । "परिनिविभ्य " इति षत्वम् । शरण्यशब्दे शरणे साधुरिति शरणशब्दात् "तत्र साधु " इति यत् । मङ्गल-मिति निषेवणस्योक्ते कर्मणि प्रथमा । जातावेकवचनम्, अत एव एभिरिति गम्यमानप्रयोजनक्रिया प्रति करणत्वेन तृतीया, एभि प्रयोज्य नास्तीत्यर्थः ।

व्याख्या—विपदाम्-आपत्तीनाम्, प्रतीकार -परिहार', पर इष्ट , यस्य तथाभूतेन, वा-अथवा, भूतिसमुत्सुकेन-ऐश्वर्याभिलाषिणा, पुरुषेण, मङ्गलम्-स्वर्णचन्दनादि शुभ वस्तु, निषेव्यते-धार्यते । जगताम लोकानाम्, शरण्यस्य शरणयोग्यस्य रक्षकस्य, †निराशिष -निरभिलाषस्य, सत -सन्मात्ररूपस्य, शङ्करस्य, आशया तृष्णया, उपहता दूषिता, आत्मन -अन्त.करणस्य, वृत्ति., यैः, तथाभूतैः, एभि. मङ्गलैः, किम्-कि प्रयोजनम्, न किमपीत्यर्थः । प्रकाशिकाविवरणयोस्तु 'आभिः' इति पाठ मत्वा 'आभि.-दृश्यमानाभि , आशोपहतात्मना जनाना वृत्तिभि -व्यवहारै., कि प्रयोजनम्' इति व्याख्यातम् ।

मा०—'अमङ्गलाभ्यासरतिम्' इति विप्रोक्त दूषण परिहरति यदापत्ति-

---

* 'किमाभि' इति प्रका० विव० । पाठेऽस्मिन् पूर्वमेकवचननिर्दिष्टस्य मङ्गलस्य बहुवचनेन परामर्शो नापद्यत इत्यनुकूलम् ।

† आशीरुरगदंष्ट्रायां हितवाक्याभिलाषयो इति शाश्वत. ।

वारणाय शुभप्राप्तये वा लोकाना मङ्गले प्रवृत्तिर्भवति। यस्य तु नापत्सम्भावना, न वा शुभप्राप्त्यभिलाष ( जगच्छरण्यस्येति आपत्सम्भवाभाव उक्तः, निराशिष इत्याप्तकामत्वादभिलाषाभाव ) तेन किमिति मङ्गल सेव्यम्, स मङ्गलमभ्यस्यतु, अमङ्गल वा, कस्तस्य विशेष इति । एतेन पूर्वोक्तो लोकसामान्याभावः समर्थित । तथा च तादृशो निरापत्प्राप्तसर्वकामश्च युक्तो ममाभिलषणीयो वर इत्युक्त भवति ।

अल०—मङ्गलाभ्यासस्यानावश्यकत्वसमर्थनान् काव्यलिङ्गम् । साभिप्राय-विशेषणद्वयोक्त्या परिकर । शिवे वरणीयता व्यङ्ग्या ।

**अकिञ्चन सन् प्रभव. स सम्पदा त्रिलोकनाथ पितृसद्मगोचर ।**
**स भीमरूप शिव इत्युदीर्यते न सन्ति याथार्थ्यविद पिनाकिन ॥७७॥**

अ०—स अकिञ्चन सन् सम्पदाम् प्रभव, पितृसद्मगोचरः ( सन् ) त्रिलोकनाथ ( अस्ति ), स भीमरूपः ( सन् ) ( लोकैः ) शिव इति उदीर्यते, पिनाकिनः याथार्थ्यविदः न सन्ति ।

व्याक०—न विद्यते किञ्चन यस्य सोऽकिञ्चनः । मयूरव्यंसकादिः । पितॄणा सद्म गोचर. यस्य स पितृसद्मगोचरः । त्रयाणा लोकाना नाथः त्रिलोकनाथ , "तद्धितार्थोत्तरपदसमाहारे च" इत्यनेन नाथशब्द उत्तरपदे समास इति मल्लिनाथः । यद्वा त्र्यवयवो लोक इति मध्यमपदलोपिसमासोत्तरं षष्ठीतत्पुरुष', समुदायापेक्षया प्रत्येकमवयवत्व बोध्यम् । भीम रूप यस्य स भीम-रूप. । भीमशब्दे बिभेत्यस्मादिति भीधातोः "भीमादयोपादाने" इति मप्रत्ययः। यथाभूतोऽर्थो यथार्थः, "कुगतिप्रादयः" इत्यनेन समासः । तस्य भावः, याथार्थ्यम्, भावे ष्यञ्, तद्विदन्तीति याथार्थ्यविदः, वेत्तेः कर्तरि क्विप् । प्रभव.-प्रभवन्त्यस्मादिति भवते "ऋदोरप्" । उदीर्यते-उत्पूर्वाद् ईर् धातो कर्मणि लट्, पिनाकिन इति षष्ठी याथार्थ्यसम्बन्धे ।

व्याख्या—स -हर , अकिञ्चन , सर्वथा निर्धन , सन्, सपदाम् इन्द्रादिषु दृश्यमानानाम्, सम्पत्तीनाम, प्रभव उत्पत्तिस्थानम्, अस्तीति शेष । पितॄणाम्-परेतानाम, सद्म-स्थानम् श्मशानम, गोचर -आश्रयो यस्य तथाभूत. श्मशानवासी सन्, त्रयाणाम्, लोकानाम, नाथ -ईश्वर , अस्ति । स , भीमम्-सर्प-

गरलादिधारणेन भयङ्करम्, रूपम् आकृतिः यस्य तथाभूतं मन्, अपि, लोके शिवं कल्याणरूपं, उदीर्यते कथ्यते । तथा च पिनाकिनं महादेवस्य, याथार्थ्यविदः तत्त्वविदः, याथार्थ्येन हरस्वरूपस्य ज्ञातारः न सन्ति लोके न विद्यन्ते ।

भा०—न केवलं त्वमेव शिवं न जानासि, अपि तु लोके केऽपि विद्वांस शिवस्य तत्त्वं ज्ञातुं न प्रभवन्ति । अज्ञेयं हि तत्स्वरूपम् 'विज्ञातारं वा अरे केन विजानीयात्' इत्याद्याभि श्रुतिभिर्निरूपितम् । सर्वे च परस्परविरुद्धा अपि धर्मा निर्धर्मके तस्मिन् मायया समारोपिता, तदुक्तं भगवता व्यासेन "सर्वधर्मोपपत्तेश्च" (वे० सू०) इति । ततश्च विरुद्धधर्माश्रयं कः कथं ज्ञातुं प्रभवेत् । तदेवात्र प्रपञ्चितम्-यत्त्वयं स भवतु नामाकिञ्चनो वस्त्रविभूषणोत्तम-वाहनादिरहितः, तथापि सर्वाः सम्पदस्तत एवेन्द्रादिभिः प्राप्यन्ते । 'सुरास्तां तामृद्धिं दधति तु भवद्भ्रूप्रणिहिताम्, न हि स्वात्मारामं विषयमृगतृष्णा भ्रमयति' इति भगवतः पुष्पदन्तस्योक्तिरनेनानुगता वेदितव्या । तथैव भवतु नाम श्मशानवासी, तथापि लोकत्रयस्य शास्ता, श्मशानस्थित्यापि न लोकशासने किमपि हीयते । अस्तु नाम स भुजगभूषणः इति भीमरूपः, तथापि लोकास्तं 'शिवं' इत्येव व्यवहरन्ति । न हि तदनुगता भुजगा अपि भीषणता भजन्त इति । एतेन 'अवस्तुनिर्बन्धपरे' 'दिगम्बरत्वेन निवेदितं वसु' इत्यादि परिहृतम् । यद्वा वस्तुतोऽकिञ्चनः सर्वधर्मरहितः, मायाविशिष्टस्तु सम्पदां सर्वरूपाणां प्रभवः, वस्तुतः पितृसद्मनि सर्वलोकान्तकरे श्मशाने, सर्वस्यापि दृश्यमानस्याभावे तुरीयावस्थायां विराजमानः, मायया तु लोकत्रयमुत्पाद्य तदीश्वरोऽपि, मायया सर्वं जगत्त्रासदः भयप्रद इति भीमः, वस्तुतस्तु शिवः एव, 'शिवमद्वैतं चतुर्थं मन्यन्ते' इति प्रतिपादितः । एवं मायाविरहितस्य माया-शबलस्य चेति रूपद्वयस्य कीर्तनेन सर्वमविरोधेनोपपादितम् । एवंविधः सर्वेश्वरो यो ज्ञातुमपि लोकैर्न शक्यते, स यदि पतिभावेन सेवितुं लभ्येत, तदा किमु

* श्रीमन्नारायणेन तु 'त्रिलोकनाथः सन्नपि पितृसद्मगोचरः' इति पाठानु-कूलमेव व्याख्यानम् । एवं विधेयाविमर्शपरिहारेऽपि पूर्वोत्तरक्रमभङ्गो दुष्परिहर इति सुधीभिर्विवेच्यम् ।

वक्तव्य मौनमाश्रयमिति । पिनाकिन इत्युक्त्या पिनाकधारितया सर्वेऽपि तस्माद्बिभ्यति, ततस्त पृष्ट्वापि तत्स्वरूप ज्ञातु न शक्यते इति व्यञ्जितम् ।

अल०—विरोधालङ्कार 'सन्' इति पदेन प्रकटित । शिवस्य लोकोत्तर-महिमत्व व्यङ्ग्यम्, तेन च तद्विषयो रतिभावो ध्वन्यते ।

**विभूषणोद्भासि पिनद्धभोगि वा गजाजिनालम्बि दुकूलधारि वा ।**
**कपालि वा स्यादथवेन्दुशेखर न विश्वमूर्तेरवधार्यते वपु ॥ ७८ ॥**

अ०—विश्वमूर्ते वपु न अवधार्यते, (तद्धि) विभूषणोद्भासि वा पिनद्धभोगि (स्यात्) गजाजिनालम्बि वा दुकूलधारि (स्यात्) कपालि वा अथवा इन्दुशेखरम् स्यात् ।

व्याक०—विश्व मूर्ति यस्य, तस्य विश्वमूर्ते, मूर्तिरिति मूर्च्छते क्तिन् । विभूषणै उद्भासत इति विभूषणोद्भासि, भासतेर्णिनिः, उपपदसमास । पिनद्धा भोगिन यस्मिन् तत् पिनद्धभोगि, पिनद्धशब्दे अपिपूर्वाद् णह् धातो. क्त । भागुरिमतेनापेरल्लोप. । भोगिन -भोगशब्दादिनि । गजस्य अजिनम् आलम्बत इति गजाजिनालम्बि, लम्बतेर्णिनि । दुकूल धारयतीति दुकूलधारि, धारयतेर्णिनि । इन्दु शेखरो यस्य तद् इन्दुशेखरम् । कपालमस्यास्तीति कपालि, कपालशब्दाद् "अत इनिठनौ" । वा इति अप्यर्थक समुच्चयवाची । स्यादिति अस्ते सम्भावनाया लिङ्, यद्वा विभक्तिप्रतिरूपको निपातोयमनेकान्तबोधक, अस्मिन् पक्षे अन्वये पूर्वमय प्रयोज्यः, 'स्याद् विभूषणोद्भासि, वा स्यात्पिनद्ध-भोगि' इत्यादि । अवधार्यते इति कर्मणि प्रत्यय, वपुरिति तत्कर्म । लोकैरिति केनापीति वा कर्ताध्याहारलभ्यः ।

व्याख्या—विश्वमूर्ते जगत्स्वरूपस्य शिवस्य, वपु शरीरम्, न अवधार्यते एकरूपेण न परिच्छिद्यते न निश्चीयते इति यावत् । तद्धि विभूषणै कटककुण्डलादिभिराभरणै, भासते-शोभत इति तथाभूतम्, वा पिनद्धाः-(शरीरे) बद्धा भोगिन सर्पा, यस्मिन् तथाभूत स्याद्-भवेत् । गजस्य-हस्तिन, अजिनम्-चर्म, आलम्बते-धारयति, इति तथाभूतम्, वा दुकूलम् क्षौमम्, धारयति-धत्ते, इति तथाभूतम्, स्यात् । कपालि-जटासु ब्रह्मकपालधारि वा, अथवा, इन्दु-

१ 'जगन्निवासस्मयेषु वेधसा प्रणामलोलानि शिरासि पादयोः । नगाद्रिरा-

चन्द्र , शेखरः-शिरोभूषणम, यस्य तथाभूत स्यात् । विश्वमूर्तो सर्वं सम्भव तीत्यर्थ ।

भा०—वर्णिन् ! ये त्वया सर्पगजाजिनादिधारणाङ्गवैरूप्यादयो दोषा भगवति शिवे प्रतिपादिता , ते अज्ञान हेतुका एव। निर्गुणस्य निराकारस्य भगवतो वास्तव आकार एव न भवतीति कथ कश्चित्तस्य मूर्तिमवधारयेत् । मायया तु स भगवान् विश्वमूर्ति , सर्वं जगत्तस्यैव रूपम् । ततश्च जगद्रूपेण स्थितस्य कथमेकरूपेण परिच्छेद संभवेत् । यानि रूपाणि, यानि वा भूषणादीनि जगत्युपलभ्यन्ते, सर्वाणि तानि तस्यैव । यदि अङ्गेषु सर्पबन्धनम्, गजाजिनपरिधानम, कपालधारण, वा तस्य लोकदृष्टया निन्द्यते, तर्हि विभूषणशोभिता, दुकूलपरिधानम्, चन्द्रशेखरता चेति प्रशस्यन्तामपि । यदि स पिनद्धभोगी, तर्हि विभूषणोद्भासी कोऽन्य , तदपि रूपं तस्यैवेति भाव. । यद्वा एकेनैव रूपेणैश्वर्यवशात्सर्वविधः स्वेच्छया स भवितुमर्हति, न हि तस्य क्वापि परतन्त्रता, यतो विश्वमूर्ति स एवेति । 'पिनद्धभोगि' इति पिनद्धपद जगत्युपद्रवकारिणा सर्पाणा स्वेऽङ्गे बन्धनं बोधयत्करुणापरता भगवतो व्यनक्ति । ततश्च यस्तत्तद्वस्तूना स्वीकारो दृश्यते, सोऽपि जगद्धितायैव, न त्वाप्तकामस्य तस्य पदार्थापेक्षेति निगूढ बोधितम् ।

अल०—सर्वसम्भवोपपादकस्य 'विश्वमूर्ते' इति विशेष्यस्योपादानात् परिकराङ्कुरः । वा शब्दस्याप्यर्थत्वेन विरोधालङ्कार । व्यङ्ग्य पूर्ववत् ।

**तदङ्गससर्गमवाप्य कल्पते ध्रुव चिताभस्मरजोऽपि* शुद्धये ।**
**तथा हि †नृत्याभिनयक्रियाच्युतं विलिप्यते‡ मौलिभिरम्बरौकसाम् ॥७६॥**

अ०—चिताभस्मरज. अपि तदङ्गससर्गम् अवाप्य ध्रुवम् शुद्धये कल्पते, तथा हि नृत्याभिनयक्रियाच्युतम् (तत्) अम्बरौकसाम् मौलिभि विलिप्यते ।

---

मेषु कपालशेषता गतानि तिष्ठन्ति जटासु धूर्जटे , इत्यागमे भगवतो जटासु ब्रह्मादीना कपालधारणमुक्तम् ।

* 'रजो विशुद्धये' इति मल्लिनाथसमत पाठ. । † 'नृत्ताभिनय' इति प्रका० विव० । ‡ 'विलुप्यते' इति प्रका० विव० ।

व्याक०—चिताया भस्मैव रज चिताभस्मरज यद्वा भस्मनो रज । तस्य अङ्गस्य (ष० त०) ससर्गम् (ष० त०) तदङ्गससर्गम्, ससर्गशब्दे सृज-धातोर्घञ् । नृत्ये अभिनय एव क्रिया, तया च्युतम् नृत्याभिनयक्रियाच्युतम् नृत्यशब्दे नृतीधातो "ऋदुपधाच्चाक्लृपिचृते" इति भावे क्यप् । अभिनय-शब्दे नयते "एरच्" । अम्बरम् ओक * येषा तेषाम् अम्बरौकसाम् । अवाप्य अवपूर्वात् आप्नोतेर्ल्यप् । शुद्धये-'शुध्' धातो क्तिन्, इद कल्पधातोरलमर्थत्वा-त् नम स्वस्ति ." इत्यादिना चतुर्थीति मल्लिनाथ । वस्तुतस्तु "क्लृपि स-पद्यमाने च" इति चतुर्थी । विलिप्यते-लिम्पते कर्मणि लट्, मौलिभि -इति कर्तरि तृतीया। रज इति कल्पते कर्तृपदम्, ध्रुवमिति क्रियाविशेषण द्वितीया-न्तम्।

व्याख्या—(श्मशाने) चिताया , भस्मैव, रज अनुलेपनचूर्णमपि, (भ-स्मनो रजो वा) तदङ्गस्य शिवशरीरस्य, ससर्गम् सपर्कम्, अवाप्य-लब्ध्वा, ध्रुवम् अवश्यम् शुद्धये-पवित्रतासपादनाय, कल्पते-प्रभवति, तथा हि तत एव, नृत्ये-ताण्डवे अभिनय.-तत्तदर्थव्यञ्जनाय हस्ताद्यङ्गचालनम्, सैव-क्रिया-चेष्टा, तया, (हेतुभूतया) च्युतम् शिवशरीराद् भूमौ पतितम्, तत् चिताभस्म, अम्बरम्-व्योम, ओक निवास , येषा तथोक्ताना देवानाम् मौलिभि शिरोभि , विलि-प्यते-धार्यते इत्यर्थ ।

भा०—यच्च अयुक्तरूप किमत परम्' इत्याद्युक्त तत्रोच्यते, अन्यत्र चिताभस्म अमङ्गलमपवित्र च भवतु, शिवशरीरे धृत तु तदन्यस्यापि पवित्रता-सपादक भवति । अत एव नृत्यकाले हस्ताद्यङ्गव्यापारेण ये तस्य कणा भूमौ पतन्ति, तान् देवास्तस्या भूमौ पतित्वा शिरोभिर्धारयन्ति । यदि तद्विशुद्धिकर न स्यात्, कुतो देवास्तद्धारणे प्रयतेरन् ।

अल०—शिवशरीरसम्पर्केण चिताभस्मनो विशुद्धिगुणप्राप्त्या उल्लासाल-ङ्कार । तथाहात्म्युपक्रान्तेन हेतुना साध्यस्य साधनादनुमानं च। शिवस्य महिमा-तिशयस्तेन च शिवविषयो रतिभावो व्यङ्ग्य. । शिरोभिरिति कर्तरि तृतीया महिमातिशयव्यञ्जने चमत्कृतिमादधाति, देवा. (गृहीत्वा) शिरस्सु धारयन्तीति

* ओक सद्म [illegible] ' इत्यमर ।

न, अपि तु तच्छिरास्येव स्वयं भस्म पतित्वा तद्भस्म धारयन्तीति । तेन पदैकदेशभूतविभक्तिप्रकाश्योऽत्र भावध्वनि । 'विलुप्यते' इति प्रकाशिकादिसमते पाठे 'शिरोभि विलुप्यते अपह्रियते' इत्यर्थलाभे अपहरणयोग्यत्वेन भस्मनो निधित्वव्यञ्जनादस्ति विशेषेण चमत्कृति, पर लेपनस्यैव शुद्धिसपादकता सामञ्जस्येनोपपद्यत इति 'लिप्यते' इत्येव पाठ आदृत ।

**असपदस्तस्य वृषेण गच्छत. प्रभिन्नदिग्वारणवाहनो वृषा ।**
**करोति *पादावुपगम्य मौलिना विनिद्रमन्दाररजोरुणाङ्गुली ॥८०॥**

अ०—प्रभिन्नदिग्वारणवाहन. वृषा उपगम्य असम्पद वृषेण गच्छतः तस्य पादौ मौलिना विनिद्रमन्दाररजोरुणाङ्गुली करोति ।

व्याक०—न विद्यते सपद् यस्य तस्य असम्पद । प्रभिन्न. दिग्वारण. वाहन यस्य स प्रभिन्नदिग्वारणवाहन । अथवा प्रभिन्ना ( स्वातिरिक्ताः ) दिशा वारणा येन, तादृश वाहन यस्येति वहुव्रीहिगर्भो वहुव्रीहिः । प्रभिन्नशब्दे भिद्धातोः क्त, वारणशब्दे वारयते कर्तरि ल्यु । वाहनम् वहे स्वार्थणिजन्ताद् वाहुलकात् कर्तरि ल्युट्, हेतुमण्णिजन्ताद्वा कर्मणि ल्युट् । अथवा केवलाद् वहेर्ल्युटि "वाहनमाहितात्" इति निपातनाद् दीर्घ । विगता निद्रा येषा ते विनिद्रा, तेषा मन्दाराणाम् ( कर्म० ) रजोभि ( ष० त० ) अरुणा. ( तत्पु० ) अङ्गुलय ययो तौ विनिद्रमन्दाररजोरुणाङ्गुली, पादावित्यस्य विधेयविशेषणमिदम् । मन्दारशब्दे वृक्षवाचकाद् मन्दारशब्दाद् वैकारिकोऽण्, तस्य च "पुष्पमूलेषु वहुलम्" इत्यनेन लुप् । पादाविति करोते कर्मणि द्वितीया ।

व्याख्या—†प्रभिन्नः-मदयुक्त, दिग्वारणः-दिग्गज, ( यद्वा प्रभिन्ना.-पराभूता अन्ये दिग्गजा येन तथाभूत ) ऐरावत इति यावत्, वाहनम्-यानम्, यस्य तथाभूत, ‡वृषा-इन्द्र, उपगम्य-समीपमागत्य, असम्पद -दरिद्रस्य, वृषेण-वृषभेण, ( वृषभमारुह्य ) गच्छत.-व्रजत, तस्य-शिवस्य, पादौ-चरणौ,

---

* 'उपनम्य' इति प्रका० ।

† प्रभिन्नो गर्जितो मत्तः इत्यमर ।

‡ वासवो वृत्रहा वृषा इतीन्द्रनामस्वमर ।

मौलिना-शिरसा, विनिद्राणाम्-विकसितानाम्, मन्दाराणाम्-मुकुटस्थितानां देववृक्षकुसुमानाम्, रजोभिः परागै, अरुणा रक्ताः, अङ्गुलय, ययोः तथाभूतौ, करोति। मल्लिनाथस्तु 'मौलिना-मुकुटेन, उपगम्य-प्राप्य प्रणम्येति' व्याचख्यौ।

भा०—वर्णिन्! शिवो वृषभमारुह्य गच्छतीति सत्यम्, किन्तु सर्वोत्तममैरावतमारुह्य गच्छन् ( तव दृष्ट्या परो महान् ) इन्द्र, यदैव वृषभारूढं पश्यति, तदैव ऐरावतादवरुह्य, समीपमागम्य तस्य पादयो प्रणमन्, स्वीयमुकुटस्थिताना मन्दारकुसुमाना रजोभिस्तस्य पादाङ्गुली रञ्जयति। तथा च न तस्य वृषभारोहण वाहनान्तराप्राप्त्या, अपि तु 'न हि स्वात्मारामं विषयमृगतृष्णा भ्रमयति' इति शिक्षयितुमेव, वृषभारोहणेन च का तस्य क्षति, स वृषभारूढोऽपि जगदीश्वर एव, इन्द्रादयश्च गजारूढा अपि तद्भृत्या एव। तेन सह वृषभारोहण मदीय पर सौभाग्यम्, न तु 'इयं च तेऽन्या पुरतो विडम्बना' इत्यादि त्वदुक्त युक्तमिति।

अल०—प्रणमतीत्यर्थस्य 'पादौ विनिद्रमन्दाररजोऽरुणाङ्गुली करोति' इति भङ्ग्यन्तरेणाभिधानात् *पर्यायोक्तम्। शिवस्य महिमातिशयस्तेन च तद्विषयको भावो ध्वन्यते।

**†विवक्षता दोषमपि च्युतात्मना त्वयैकमीशं प्रति साधु भाषितम्।**
**यमामनन्त्यात्मभुवोऽपि कारणं कथं स लक्ष्यप्रभवो भविष्यति ॥८१॥**

अ०—च्युतात्मना दोषम् विवक्षता अपि त्वया ईशम् प्रति एकम् साधु भाषितम्, यम् आत्मभुव अपि कारणम् आमनन्ति, स कथम् लक्ष्यप्रभव भविष्यति।

व्याक०—च्युत आत्मा यस्य, तेन च्युतात्मना। आत्मना ( स्वयमेव ) भवतीति आत्मभू, तस्य, "भुव सञ्ज्ञान्तरयो" इति भवते क्विप्। लक्ष्य प्रभव यस्य स लक्ष्यप्रभव.। विवक्षता सन्नन्ताद् वक्ते• शतृप्रत्यय। भाषितम्-भाषते कर्मणि क्त। आमनन्ति-'म्ना अभ्यासे' धातोर्लट्, "पाघ्राध्मा " इत्यनेन मनादेश। श्रुतय इति तत्कर्तृपदमध्याहर्तव्यम्। ईशम्-इति 'अभित

* मल्लिनाथव्याख्यायां तु पर्यायोक्तस्य चमत्कृतिर्विलीनेति विभाव्यता सुधीभि।
† 'पदनिरसुदाहरता कुवलयानन्दकृत 'विवृण्वता' इति पाठो धृत।

परित समयानिकषाहाप्रतियोगेऽपि" इत्यनेन प्रतियोगे द्वितीया । एकमिति सर्वनाम प्रथमान्तं भाषणस्य कर्म । वच इति तेन परामृश्यते । साधु-इति एकमित्यस्य विधेयविशेषण प्रथमान्तम्, भाषणक्रियाविशेषण द्वितीयान्त वा । भविष्यति इति अनवक्लृप्तौ लृट् ।

व्याख्या—च्युत -पतित , आत्मा-अन्त करण यस्य तथोक्तेन नष्टस्वभावेन, अत एव महादेवे दोषम् दूषणम्, विवक्षता-वक्तुमिच्छताऽपि त्वया ( विवरणकारस्तु दोष विवक्षता अपि त्वया च्युतात्मना-स्खलितबुद्धिना ( स्खलितबुद्धित्वादेव ) इति व्याचख्यौ ) ईश प्रति-महादेवविषये, एकम्-'अस्य कुल न ज्ञायते' इत्येवरूप वच , साधु-सम्यग्-यथार्थम्, भाषितम्-उक्तम् । यम्-महादेवम्, आत्मभुवोऽपि-आत्मयोनेर्ब्रह्मणोऽपि, कारणम्-हेतुम-उत्पादकम, आमनन्ति-प्रतिपादयन्ति वेदा , स - महादेव , कथम्-केन प्रकारेण, लक्ष्य -ज्ञेय , प्रभव -उत्पत्ति -कुलम्, यस्य तथाभूत , भविष्यति, न तस्योत्पत्तिज्ञान सभवतीत्यर्थ ।

भा०—वर्णिन् ' यद्यपि त्व नष्टबुद्धित्वाद्भगवत शिवस्य दोषानेव वक्तु प्रवृत्त , तथापि तव बुद्धेरस्थिरत्वादेक वाक्य भगवतो महत्त्वप्रतिपादक सम्यगेव त्वन्मुखान्नि सृतम्, यत्त्वयोक्तम् 'अलक्ष्यजन्मता' इति, तत्तथैव, 'यो वै ब्रह्माण विदधाति पूर्वम्' इत्यादीनि श्रुतिवाक्यानि जगत्स्रष्टारमात्मभुव ब्रह्माणमपीश्वर शङ्कर उत्पादयतीति निरूपयन्ति, तस्यैतस्य जगदीश्वरस्योत्पत्ति को वा लक्षयेत्। उत्पत्तिस्तस्य नित्यस्य नास्येव, लक्षिता कथ स्यादिति।

अल०—दोषविवक्षया प्रवृत्तेन साधुभाषणमित्यसङ्गतिभेद , ' अन्यत् कर्तुं प्रवृत्तस्य तद्विरुद्धकृतिस्तथा " इति तल्लक्षण कुवलयानन्दे । विप्रवचस साधुत्वे उत्तरवाक्यार्थस्य हेतुत्वात् काव्यलिङ्गम् । स्वाभिमते शब्दप्रमाणोपन्यासात्प्रमाणालङ्कारेषु शब्दप्रमाणरूपोऽलङ्कारोऽत्र इति कुवलयानन्दे ।

अल विवादेन यथा *श्रुतस्त्वया तथाविधस्तावदशेषमस्तु स ।

---

* 'यथा श्रुतम्' इति क्वचित्पाठ । 'त्वया यथा श्रुतम्, इति 'सामान्ये नपुसकम्' इति, 'वृत्तम्' इति विशेष्यमध्याहृत्य वा न व्याख्येय ।

**ममात्र भावैकरस मन *स्थित न कामवृत्तिर्वचनीयमीक्षते ॥ ८२ ॥**

अ०—( हे विप्र ) विवादेन अलम, त्वया स यथा श्रुत, तथाविध अशेषम् तावद् अस्तु, मम मन अत्र भावैकरसम् ( सत् ) स्थितम्, कामवृत्तिः वचनीयम् न ईक्षते।

व्याकृ०—तथा विधा यस्य स तथाविध । पदद्वयमप्येतत् पुरस्ताद् व्याकृतम् । न शेषः यस्मिन् कर्मणि तद् अशेषम्, अस्तिक्रियाविशेषणमेतत् । भाव एको रसो यस्य ( भावे एको रसो यस्य इति वा ) तद् भावैकरसम् । काम वृत्ति कामवृत्ति, कामो वृत्तिर्यस्येति वा, कामस्य वृत्तिरिति वा । विवादेन वदतेर्घञ्, गम्यमानसाधनक्रिया प्रति करणत्वेन तृतीया, श्रुतः-शृणोतेः कर्मणि क्त, स इति श्रवणस्य कर्मणि प्रथमा, त्वयेति तस्यैव कर्तरि तृतीया । स्थितम् तिष्ठते - 'गत्यर्थाकर्मक " इत्यनेन कर्तरि क्त, मन इति स्थिते उक्ते कर्तरि प्रथमा । वचनीयम्-वक्ते कर्मणि अनीयर् । †तावच्छब्दोऽवधारणे ।

व्याख्या—हे विप्र, विवादेन उक्तिप्रत्युक्तिरूपेण कलहेन, अलम्-साध्य नास्ति, निष्फलत्वाद् विवाद मा कार्षीरित्यर्थ । त्वया-भवता, स.-हरः, यथा श्रुत.-येन रूपेण कस्माच्चिच्छ्रुत्वा ज्ञात, तथाविध -तादृश', अशेषम् साकल्येन, तावद् निश्चयेन, अस्तु-भवतु । मम मन, अत्र-शिवे, भावे भक्तौ, एकः-अद्वितीय., रस -आनन्दो यस्य तथाभूतम्-भक्तिप्रवणम्, ( भावे-अभिलाषे, एकरसम्-पक्षपाति इति प्रकाशिकाविवरणयो, मल्लिनाथस्तु भाव -रतिप्रधान शृङ्गारो रस., एक -अद्वितीय, रस.-आस्वाद्यो यस्य तथाभूतमिति व्याचष्टे ) स्थितम् निश्चलमस्ति । ( नन्वेवमपथप्रवर्तिनीं त्वा लोका अपवदिष्यान्ति इत्यत आह ) कामवृत्ति कामम्-यथेच्छम्, वृत्ति -प्रवृत्ति -इच्छानुसारिणी कार्येषु प्रवृत्ति ( कत्रा ), यद्वा काम.-इच्छैव, वृत्ति प्रवृत्तिर्यस्य, यथेच्छाचारो जन, यद्वा कामस्य-अभिलाषस्य, वृत्ति -लब्धप्रसरता, लब्धप्रसरोऽभिलाष, वचनीयम दोषम् लोकापवादम्, न ईक्षते न विचारयति ।

---

* 'स्थिरम्' इति प्रका० विव० ।

† यावत् तावच्च साकल्येऽवधौ मानेऽवधारणे—इत्यमर ।

भा०—वर्णिन् ! नाहं त्वया विवादं कर्तुमिच्छामि, कण्ठशोषफले विवादे प्रेक्षावताम्, विशेषतस्तपस्विनामप्रवृत्ते । त्वं तावदाग्रहपरो दृश्यसे, अतो यथा तव शिवविषये ज्ञानम्, तत् त्वं सत्यमेव मत्वा धारय । न त्वहं त्वद्वचनाच्छिवे विरक्ता भविष्यामि, यतो मम मनो भगवति शिवे भक्त्या परमनुरक्तं सुस्थिरं वर्तते, दोषशतज्ञानेऽपि न तच्चालयितुं शक्यम् इति ।

अल०—'नाहं वचनीयाद्बिभेमि, वा 'मन्मनो न वचनीयाद्बिभेति' इत्यर्थस्य सामान्यमुखेनाभिधानादप्रस्तुतप्रशंसा । वर्णिविषयिण्युपेक्षा, तया चामर्षो व्यज्यते ।

अत्र प्रकरणे पार्वतीगता शिवविषयिणी रतिः प्राधान्येनाभिव्यक्ता, पार्वत्याश्च पतिबुद्ध्या शिवविषयेऽनुराग इति प्राधान्यं गताया रतेर्यद्यपि शृङ्गाररसत्वमुचितम्, तथापि व्यज्यमाना रतिरिह न नायकत्वेन भगवन्तं शिवं लक्ष्यीकरोति, अपि तु परमेश्वरत्वेनैव । तथैव कविना तस्या उपस्थापनात् । नायकत्वेन शिवं लक्ष्यीकृत्य मुग्धया पार्वत्या तस्य वर्णनेनानौचित्यापातप्रसङ्गाच्च । तस्मात्पत्नीभावमुपगम्यापि सेव्यत्वेनैव भगवान् शिव इह लक्ष्यीक्रियते, स्वस्या अनन्यसेवकत्वमभिसंधायैव च 'जनोऽयमुच्चैः पदलङ्घनोत्सुकः' 'ममात्र भावैकरसं मनः स्थिरम्' इत्यादिना स्वरतिराविष्क्रियते । तेन देवताविषयिण्या रतेः परिपोषाद्भावध्वनिरेवात्र पार्वतीवाक्येषु समुचितः प्रतिभाति । अनन्तरं तु रसरूपेण परिणतायां रतौ भावोऽयमङ्गतां गमिष्यति । पतिव्रताभिः पत्युर्देवबुद्ध्याराधनस्य शास्त्रविहितत्वान्नैवंविधेन भावेन शृङ्गारस्य विरोधः संभवतीति सहृदया यथोचितमाकलयन्तु । ततश्चात्र 'भावः शृङ्गार एकः रस आस्वाद्यो' यस्येत्यादिर्मल्लिनाथव्याख्या समुपेक्षणीयेव सुधीभिरित्यास्ताम् ।

**निवार्यतामालि किमप्ययं वटुः* पुनर्विवक्षुः स्फुरितोत्तराधरः ।**
**न केवलं यो महतो†ऽपभाषते शृणोति तस्मादपि यः स पापभाक् ॥८३॥**

अ०—(हे) आलि ! स्फुरितोत्तराधरः पुनः किम् अपि विवक्षुः अयम्

* 'किमप्यसौ वटुः' प्रका० विव० ।

† 'विभाषते' प्रका० विव० ।

वटु निवर्यताम्, य महतः अपभाषते, केवलम् स ( पापभाग् ) न ( भवति ) ( किन्तु ) य तस्मात् शृणोति स अपि पापभाग् ( भवति )।

व्याक०—उत्तरश्च ( उत्तरोष्ठश्च ) अधरश्च ( अधरोष्ठश्च ) उत्तराधरम्, स्फुरितम् उत्तराधर यस्य स स्फुरितोत्तराधरः, स्फुरितशब्दे कर्तरि क्त । व्याख्याकृतस्तु ' स्फुरितम् उत्तर यस्मिन्, तादृशोऽधरो यस्य स इति बहुव्रीहिगर्भो बहुव्रीहि, स्फुरितशब्दे भावे क्त ' इत्याहुः । पूर्वबहुव्रीहौ विशेषणस्याप्युत्तरशब्दस्य परनिपात आहिताग्न्यादित्वात् । पाप भजतीति पापभाग्, 'भजो ण्वि " । विवक्षु -वक्तेः सन्नन्ताद् उ । निवार्यताम्-वारय्ते विध्यर्थे कर्मणि लोट् । वटुरिति वारणस्य कर्मणि प्रथमा, त्वयेति कर्ता अध्याहर्तव्य । य इति भाषणस्य कर्तृपदम्, महत इति तस्यैव कर्म द्वितीयाबहुवचनान्तम् । तस्मादिति "आख्यातोपयोगे" इत्यपादानत्वात्पञ्चमी, त प्राप्य, तमुपस्थाय, इत्यर्थे ल्यब्लोपे वा पञ्चमी ।

व्याख्या—*हे-आलि ! हे सखि ! स्फुरितम्-( विवक्षया ) किञ्चिच्चलितम्, उत्तराधरम्-उत्तरोष्ठोऽधरोष्ठश्च यस्य तथाभूत, यद्वा स्फुरितम्-स्फुरणम्, उत्तरम् प्रधानम् यस्मिन् तथाभूत -स्फुरणप्रधान, अधरो यस्य स, अत एव, पुन -भूय, किमपि हरनिन्दापर वच, विवक्षु वक्तुमिच्छु, अयम्-पुरस्थितः, वटु -माणवकः, ( पट, वट ग्रथने-इति धातोर्वटुशब्द निष्पाद्य वाचाल इति प्रकाशिकाविवरणयोर्व्याख्यातम् ) निवार्यताम्-निषिध्यताम्, अथवा निवार्यताम् इत स्थानान्निस्सार्यताम् । यत, य -पुरुष, महत पूज्यान्, अपभाषते-अपवदति, केवलम् स -स एव, पापभाग् दुष्ट, न भवति, किन्तु, य, तस्मात्, ( पूज्याना निन्दाम् ) शृणोति, सः ( अपि ) ( यद्वा य शृणोति, स तस्मादपि-वक्तुरपेक्षयाप्याधिक. ) पापभाग् भवति इति ।

भा०—एव वर्णिन प्रत्युक्त्वा पुनरोष्ठस्फुरणेन तस्य किमपि वक्तुमिच्छामवधार्य वादप्रतिवादावनिच्छन्ती पार्वती सखीं प्रत्युवाच-सखि ! अय वटु पुनः किमपि वक्तुमिच्छतीत्यनुमीयते, सोऽय वार्यताम् । नाह भगवत· शिवस्य निन्दा श्रुत्वा पापपङ्कनिमग्ना भवितुमिच्छामि इति ।

* दीर्घान्तस्यालीशब्दस्य सम्बुद्धौ रूपम् ।

अल—ओष्ठस्फुरणेन विवक्षानुमानादनुमानालङ्कार । निवारणे हेतूपन्यासात् काव्यलिङ्गम् । 'मम निन्दाश्रवणात्पाप स्यात्' इति विशेषे वक्तव्ये सामान्योपन्यासादप्रस्तुतप्रशसा च । भावध्वनि पूर्ववत् ।

**इतो गमिष्याम्यथवेति वादिनी चचाल *बाला स्तनभिन्नवल्कला ।**
**स्वरूपमास्थाय च ता कृतस्मित समाललम्बे वृषराजकेतन ॥८४॥**

अ०—अथवा ( अहम् ) इत गमिष्यामि इति वादिनी बाला स्तनभिन्नवल्कला ( सती ) चचाल, वृषराजकेतन च स्वरूपम् आस्थाय कृतस्मित (सन्) ताम् समाललम्बे ।

व्याक०—स्तनाभ्या भिन्नम् ( तत्पु० ) वल्कल यस्या ( बहु० ) सा स्तनभिन्नवल्कला । विग्रहे स्तनाभ्यामिति कर्तरि करणे वा तृतीया, अपादाने पञ्चमी वा । वृषो राजा वृषराज, " प्रशसावचनैश्च " इत्यनेन समास, " राजाह सखिभ्यष्टच् " । वृषराज इव प्रतिकृति वृषराज, "इवे प्रतिकृतौ" इति कन्, तस्य, " † देवपथादिभ्यश्च " इत्यनेन लुप् । स ‡केतने यस्य स वृषराजकेतन । " गड्वादे परा सप्तमी " इति केतनशब्दस्य परनिपात । कृत स्मितं येन स कृतस्मित । इत -इदशब्दात् तसिल् । वादिनी " नन्दिग्रहिपचादिभ्यो ल्युणिन्यच " इति वदतेर्णिनि । आस्थाय-तिष्ठतेर्ल्यप् । अथवेति पक्षान्तरे ।

व्याख्या—अथवा (तिष्ठत्वय वटु.) (अहमेव) इत अस्मात् स्थानात् गमिष्यामि-इति वादिनी-वदन्ती, बाला-कुमारी पार्वती, स्तनाभ्याम्-कुचाभ्याम्, भिन्नम्-( वेगवशात्, स्तनयोरत्युन्नतत्वाच्च ) त्रुटितम्, अथवा स्तनाभ्याम्, भिन्नम्-त्रस्तम्-वेगवशात् पृथग्भूय च्युतम्, वल्कलम्-वृक्षत्वग्वस्त्रम् यस्या , तथाभूता सती, चचाल-वटुसमीपादुत्थाय गन्तुमारेभे । (तदैव च ) वृषराज ‡ केतने ध्वजे, यस्य तथाभूत , महादेव , स्वरूपम् निजाकृतिम्, आस्थाय-आश्रित्य, छद्मवेषपरिहारेणात्मान प्रकटीकृत्य, कृतम् , स्मितम् मन्दहासो येन

* 'सा च स्तनभिन्न' इति प्रका० विव० । बाला स्पभिन्न इति क्वचित् ।

† देवपथादिराकृतिगण ।

‡ केतन ध्वजमालियाम् इत्यमर ।

तथा सन्, ताम्-पार्वतीम्, समाललम्बे जग्राह ।

भा०—पार्वती पुनरुवाच 'चपलो वाचालश्चाय वटुर्न विरस्यति, न वा निर्गमिष्यति, तस्मादहमेव स्थानान्तर गमिष्यामि ।

' गुरोर्यत्र परीवादो निन्दा वापि प्रवर्तते ।
कर्णौ तत्र पिधातव्यौ गन्तव्य वा ततोऽन्यत ' ॥

इति स्मृत्या स्थानान्निर्गमस्य विहितत्वात् ।' इत्थ वदन्ती च सा उत्थाय गन्तुमारेभे । वेगेनोत्तिष्ठन्त्यास्तस्या वल्कलवस्त्र स्तनप्रदेशात्प्रच्युतमभूत् । (तेन शङ्करस्य स्तनदर्शनलालसापूर्तिरपि सूचिता ) तामेव कोपेन निर्गच्छन्तीं दृष्ट्वा शङ्करेण स्वीय रूप प्रकटितम्, ( वृषध्वजत्वोक्त्या परिजनपरिच्छदादि-सान्निध्यमपि सूचितमिति प्रकाशिकाकार आह ), स्मित च कृतम् (तेनोक्तस्य सर्वस्य परिहासरूपता सूचिता ) गच्छन्ती च पार्वती वसने धृत्वा निवारिता।

अल०—पार्वतीकर्तृकचलन-शिवकर्तृकालम्बनयोर्युगपदुक्तया समुच्चय इति प्रकाशिकाविवरणयो । शिवगत औत्सुक्यभावो व्यङ्ग्य ।' अहमेव गमिष्यामि ' इति वक्तुमावश्यकस्याहपदस्यानुपादानान्न्यूनपदत्व दोषोऽप्यत्र प्रतिभाति ।

**त वीक्ष्य वेपथुमती सरसाङ्गयष्टि-**
***निक्षेपणाय पदमुद्धृतमुद्वहन्ती ।**
**मार्गाचलव्यतिकराकुलितेव सिन्धु·**
**शैलाधिराजतनया न ययौ न तस्थौ ॥ ८५ ॥**

अ०—तम् वीक्ष्य वेपथुमती सरसाङ्गयष्टि निक्षेपणाय उद्धृतम् पदम् उद्वहन्ती शैलाधिराजतनया मार्गाचलव्यतिकराकुलिता सिन्धुरिव न ययौ, न तस्थौ ।

व्याक०—अङ्ग यष्टि, अङ्ग यष्टिरिव वा अङ्गयष्टि, पूर्वत्र यष्टिशब्दस्य प्रशसावचनत्वात् "प्रशसावचनैश्च" इत्यनेन समास, उत्तरत्र उपमितसमास·। रसेन सह वर्तमाना अङ्गयष्टि यस्या· सा सरसाङ्गयष्टि· । शैलानाम् अधि-राजस्य तनया शैलाधिराजतनया। अधिराजशब्दो व्याख्यात । मार्गे अचलस्य

* ' निक्षेप एव ' इति प्रका० विव० । निक्षेपे इति निमित्तसप्तमी । निक्षेपार्थमुद्धृत पद तथैवोद्वहन्तीति तद्व्याख्या ।

( तत्पु॰ ) व्यतिकरेण ( ष॰ तत्पु॰ ) आकुलिता मार्गाचलव्यतिकराकुलिता पचाद्यजन्तस्य चलशब्दस्य नञा समासे अचलशब्दसिद्धि॰, व्यतिकरशब्दे 'वि' ' अति ' एतत्पूर्वात् ' कृ विक्षेपे ' धातो ' ऋदोरप् '। आकुलितशब्दे कुलधातो क्त । वेपथु विद्यतेऽस्या इति वेपथुमती, अस्त्यर्थे मतुप्, उगित्त्वाद् ङीप्, वेपथुशब्दे 'टुवेपृ कम्पने ' धातो " ट्वितोऽथुच् "। निक्षेपणाय-क्षिप-तेर्ल्युट्, तादर्थ्ये चतुर्थी । उद्धृतम्-उत्पूर्वाद् हरते धरतेर्वा क्त । उद्वहन्ती-वहते " धातुसम्बन्धे प्रत्यया " इति लट्, तस्य स्थाने लक्षणे शत्रादेश । ' शप्श्यनोर्नित्यम् ' इति नुम् ।

व्याख्या—तम् स्वरूपावस्थित शङ्करम्, वीक्ष्य-विलोक्य, वेपथुमती-कम्पयुक्ता, सरसा-सस्वेदा, अङ्गयष्टि -सुन्दर शरीरम्, यस्या तथाभूता, निक्षेपणाय-भुवि विन्यासाय, उद्धृतम्-उत्थापितम्, पदम् चरणम्, उद्वहन्ती-तथैवोर्ध्वं धारयन्ती, शैलाधिराजस्य पर्वतराजस्य हिमालयस्य, तनया पुत्री पार्वती, मार्गे-पथि, अचलस्य-पर्वतस्य, व्यतिकरेण-सपर्केण-समाहत्या-अवरोधेनेति यावद्, आकुलिता-रुद्धमार्गत्वादेकत्रैव भ्राम्यन्ती, सिन्धुरिव नदीव, न ययौ-न तस्मात् स्थानान्निर्जगाम, न तस्थौ-न स्थितवती, गमनमवस्थान चोभयमपि कर्तुं नाशक्नोदित्यर्थ ।

भा॰—अकस्मात् प्रियतमस्य शिवस्य दर्शनेन लज्जाहर्षप्रेमजाड्यपरवशाया पार्वत्या शरीरे कम्प-स्वेद-स्तम्भाद्याः सात्त्विकभावा॰ प्रादुरभूवन्। स्तब्धा च सा दर्शनात् पूर्वं गमनाय यथोद्धृतपदा आसीत्, तथैवावस्थिता, न तत्पद तयाग्रे निहितम्, न च गमननिवृत्तिनिश्चयेन यथास्थान स्थापितम्। तत्रोपमाभिधीयते कविकुलगुरुणा-यथा प्रवहन्त्या नद्या मार्गे क्वचित्पर्वत आपतेत्, सा च नदी पर्वतेन निरुद्धाऽग्रे गन्तुमशक्ता स्यात्, प्रवाहवशाच्च स्थातुमप्यशक्तेति तत्रैव भ्राम्येत्, तथैव पार्वत्या स्थितिस्तदानीमभूदिति ।

अल॰—रसध्वनि॰, सभोग-शृङ्गारस्य सम्यगत्र परिपोष॰। परम प्रेयान् भगवान् शिव आलम्बनम्, अकस्मात्तद्दर्शनमुद्दीपनम्, स्तम्भस्वेदकम्पाद्या॰ सात्त्विकभावा अनुभावा । लज्जारूपो व्यभिचारी व्यज्यते-इति मल्लिनाथ । लज्जया न तस्थौ, हर्षोत्सुक्याभ्यान्तु न ययौ, तेन लज्जया हर्षौत्सुक्ययो

मन्धिर्व्यक्त शृङ्गाराङ्गमिति प्रकाशिकाविवरणयो. । यानस्थानयोरुभयोरभाव इति स्तम्भस्य सात्त्विकभावस्योक्त्या जडताख्यो व्यभिचारी व्यक्त शृङ्गाराङ्गमिति तु वयम्। तथा च तल्लक्षण रसगङ्गाधरे-' चिन्तोत्कण्ठाभयविरहेष्टानिष्टदर्शनश्रवणादिजन्यावश्यकर्तव्यार्थप्रतिसधानविकला चित्तवृत्तिर्जडता ' इति । इहाकस्मादिष्टदर्शन तद्विभाव', अवश्यकर्तव्यार्थप्रतिसधानवैकल्य च यानस्थानयोरभावेन स्फुटीकृतमेवेति । प्रथमसर्गे समुप्त तृतीयसर्गेऽङ्कुरित च रतिबीजमिह विस्तृतिं नीत कविना । मध्ये परिपोषितो भावोऽप्यत्र रसाङ्गता नीत । अत्युत्कृष्ट चित्रणयोग्य पद्यमिदम् । अत्रार्थालङ्कार उपमा । यानस्थानयोरभावो नदीपार्वत्यो. सादृश्यम् ।साधारणधर्मे निबद्ध भूतकालिकत्व नया न समन्वेतीति कालभेद उपमादोष कथचित् समाधेयः सहृदयै ।

अद्य *प्रभृत्यवनताङ्गि तवास्मि दास
क्रीतस्तपोभिरिति वादिनि चन्द्रमौलौ ।
अह्नाय सा नियमज क्लममुत्ससर्ज
क्लेश फलेन हि पुनर्नवता †विधत्ते ॥ ८६॥

इति महाकविश्रीकालिदासविरचिते कुमारसभवे महाकाव्ये
तप फलोदयो नाम पञ्चम सर्ग ॥

अ०--(हे) अवनताङ्गि अद्य प्रभृति त्वया तपोभि क्रीत (अहम्) तव दास. अस्मि, चन्द्रमौलौ इति वादिनि (सति) सा अह्नाय नियमजम् क्लमम्, उत्ससर्ज, हि क्लेश फलेन पुन नवताम् विधत्ते ।

व्याक०—चन्द्रमौलि-वादिशब्दौ व्याख्यातौ । अवनतम् अङ्गम् यस्या सा अवनताङ्गी । ' अङ्गगात्रकण्ठेभ्यो वक्तव्यम्" इति ङीप् । सम्बुद्धौ ह्रस्व. । नियमाज्जात नियमजम् । 'पञ्चम्यामजातौ" इति ड । क्रीत -क्रीणाते कर्मणि क्त, क्लमम् क्लाम्यतेर्घञ्, उदात्तोपदेशत्वाद् वृद्ध्यभाव । क्लेश -क्लिश धातोर्घञ् । विधत्ते-दधातेर्लट् । अद्येति सप्तम्यर्थप्रधानमव्ययमिह प्रभृतिशब्दयोगात् पञ्चम्यर्थपरम्-इति मल्लिनाथ । तपोभिरिति क्रयणकरणे तृतीया ।

* 'अनवमाङ्गि' प्रका० विव० । अनवमम् उत्कृष्टमङ्ग यस्या इति तद्व्याख्या।
† 'विधत्ते' प्रका० विव० ।

अह्नायेति विभक्तिप्रतिरूपकमव्ययम् । फलेन इति हेतौ तृतीया ।

व्याख्या—हे-अवनताङ्गि-अवनतम्, ( कुचभराद् ) नम्रम्, अङ्गम्, यस्यास्तथाभूते हे पार्वति ! अद्य प्रभृति-अस्माद्दिनादारभ्य, त्वया, तपोभि - नियमैः, क्रीत -आयत्तीकृत, अहम्, तव भवत्या, दास -सेवक, अस्मि, चन्द्रमौलौ-चन्द्रशेखरे शिवे, इति-एवम्, वादिनि-भाषमाणे सति, सा-पार्वती, *अह्नाय-झटिति, नियमजम्-तपोनुष्ठानजन्यम्, क्लमम्-क्लेशम्, उत्ससर्ज-तत्याज, क्लेश विसस्मारेत्यर्थ । हि-प्रसिद्धमिदम्, यत क्लेश, फलेन-फलप्राप्त्या, पुन -भूय', नवताम् नूतनत्वम्, क्लेशात् पूर्वावस्थाम्, विधत्ते करोतीत्यर्थ । प्रकाशिकाविवरणयोस्तु 'क्लेश फलेन नवताम्-स्वीय नूतनत्वम्, पिधत्ते छादयति-त्यजतीति यावत् । सफल· क्लेशो नूतन इव न दु खयतीत्यर्थ ' इति व्याख्यातम् ।

भा०—स्तब्धा पार्वतीं विलोक्य भगवता शङ्करेणोक्तम् 'सुन्दरि ! अद्यारभ्याह ते दास इव सवृत्तोऽस्मि । यथा दासो द्रव्येण क्रीयते, तथाह त्वया तपसा क्रीतोऽस्मि, इति । ( अद्य प्रभृति-इति आरम्भावधिरुक्त, अवसानावधिस्तु नोक्त इति निरवधि दासत्व व्यञ्जितम् ) एतदभीप्सित वचन श्रुत्वा पर हर्ष प्राप्ताया· पार्वत्याः सर्वोऽपि तप क्लेशस्तदैव दूरीबभूव । यतो हि प्राप्ते फले उपाये जात क्लेशो न दु खयति, प्रत्युत पूर्ववदेव नवीनताम् ( क्लेशप्राप्ते· पूर्वामवस्थाम् ) प्रापयतीति ।

अल०—सामान्येन क्लमोत्सर्गस्य समर्थनादर्थान्तरन्यास । पार्वत्या हर्षोदयो व्यज्यते । बाह्यक्लेशनिवृत्तिर्वाच्या, विषादस्यान्तरस्य भावस्य शान्तिर्व्यङ्ग्या-इति भावशान्तिरपि सभवत्येव । शिवगता पार्वतीविषयिणी रतिश्च व्यङ्ग्या । एषु गुणप्रधानभाव सहृदयैरूह्य इति । पद्ययोरनयोर्वसन्त-तिलकावृत्तम् ।

इति छात्रोपकारिण्या महाकाव्यसग्रहव्याख्याया

चतुर्थ सर्ग ।

समाप्त च सग्रहस्य प्रथम खण्डम् ॥

---

* द्राग्झटित्यञ्जसाह्नायेत्यमर ।

॥ श्री ॥

# महाकाव्यसंग्रहः ।

( संग्रहे पञ्चमः सर्गः )

## महाकविश्रीभारविकृतस्य

# किरातार्जुनीयस्य

## द्वितीयः सर्गः

भारवेर्वचसामर्थगौरवं लोकविश्रुतम् ।
कृपया वचसा देव्यास्तद्व्याख्याया प्रकाशताम् ॥

कथासम्बन्धः —

महाभारतकथास्य महाकाव्यस्याधारः ।

किरातरूपधारिणा शिवेन सहार्जुनस्य युद्धम्, तदनु ततोऽर्जुनस्य वरप्राप्तिश्चात्र मुख्यं वर्णनीयम् । किरातार्जुनावधिकृत्य कृतं काव्यं किरातार्जुनीयमिति काव्यनामव्युत्पत्तिः । द्यूतनिर्जितेन भ्रातृभिर्द्रौपद्या च समं वने निवसता ज्येष्ठपाण्डवेन युधिष्ठिरेण दुर्योधनस्य राज्यशासननीतिपरिज्ञानाय गुप्तचररूपेण कश्चिद्वनेचरो राजधानीं प्रति प्रेषितः । तेनागत्य दुर्योधनस्य शासननीतेरतिप्रशंसा कृता । अथ युधिष्ठिरेण तस्मिन् वृत्ते भ्रातॄणां द्रौपद्याश्च संविधे वर्णिते, द्रौपदी 'क्रमेण प्रबलीभवन्तः शत्रवः शीघ्रमेव जेतव्याः, न त्वेवमुपेक्ष्याः' इति युधिष्ठिरमुत्तेजितवती । तदिदं प्रथमसर्गे गतम् ।

अनन्तरं वृत्तमिदमुच्यते—

विहितां प्रियया मनःप्रियामथ निश्चित्य गिरं गरीयसीम् ।
उपपत्तिमदूर्जिताश्रयं नृपमूचे वचनं वृकोदरः ॥ १ ॥

अ०—अथ वृकोदरः प्रियया विहिताम् मनःप्रियाम् गिरम् गरीयसीम्

निश्चित्य नृपम् उपपत्तिमद् ऊर्जिताश्रयम् वचनम् ऊचे।

व्याक०—वृकवदुदरं यस्य स वृकोदर । मनस प्रियाम् मन प्रियाम्। ऊर्जित आश्रयो यस्य तदूर्जिताश्रयम्। ऊर्जित इत्यूर्जधातो क्त, आश्रीयते 'प्रतिपाद्यत्वेन' इत्याश्रय, श्रयतेरच्। विहिताम-विपूर्वाद्धाते क्त। क्रियासामान्यवाचकस्यास्य विशेषभूताभिधानक्रियावोधने पर्यवसानमिति मल्लिनाथ। विरयमभेरर्थे वा वोध्य। कृतामिति यथाश्रुत एवार्थ इति चित्रभानु। गिरम् गॄधातो सपदादित्वात् क्विप्, ईत्वम्। गरीयसी-गुरुशब्दाद् 'द्विवचनविभज्योपपदे' "-इत्यनेन ईयसन्, उगित्त्वान्ङीप्। निश्चित्य-निरुपसर्गात् चिन् चयने' धातोर्ल्यप। उपपत्तिमद् उपपपूर्वात् 'पद गतौ' धातो क्तिन्, ततो मतुप्। ऊचे-ब्रूधातोलिव्यात्मनेपदम, "ब्रुवो वचि" इति वचिरादेश। नृपम- 'अकथित च" इति कर्मत्वाद द्वितीया। वचनमिति प्रधान कर्म।

व्याख्या—अथ द्रौपदीवचनानन्तरम्, ( स्वमनसि विमर्शानन्तर वा ) वृकोदर-भीम, प्रियया-दयितया-द्रौपद्येति यावद्, विहिताम्-अभिहिताम् ( मन प्रिया विहिताम् कृताम्-अर्थोपपत्त्यादिभिर्योजयित्वा नूतनता मनोनुकूलता च नीतामिति चित्रभानु ) मनस चित्तस्य, प्रियाम्-अनुकूलाम्, गिरम्-वाचम्, गरीयसीम-अतिशयेन गुर्वीम्, युधिष्ठिरवाक्यापेक्षया-सारवत्तराम्, निश्चित्य-निर्णाय, नृपम्-राजानम् ( प्रति ) उपपत्तिमद्-युक्तियुक्तम्, ऊर्जित-उदर, आश्रयः-अर्थो यस्य, तथाभूतम्, यद्वा-ऊर्जितम्-बलम्, आश्रय-प्रतिपाद्यो यस्य, तथाभूतम्, बलप्रयोगसमर्थकम्, वचनम् वाक्यम्, ऊचे-जगाद।

भा०—भीमसेनो द्रौपद्या वचन स्वमनोऽनुकूल सारयुक्त च बुद्ध्वा राज्ञ प्रवृत्तये स्वयमपि तत्समर्थनाय प्रबला युक्तीरालम्ब्य वक्तुमारेभे। बलप्रयोग एव विधेय इत्येवास्यापि पक्ष.। नृपमित्यनेन युधिष्ठिरो न कश्चिद्वीतराग, अपि तु क्षत्रियवशज इति भवत्यस्य परामर्शस्य पात्रमिति द्योतितम्।

अल०— "प्रियया विहिताम्" "मन प्रियाम्" इति विशेषणद्वयमपि गिरो ग्राह्यत्वे साभिप्रायमिति परिकर। गरीयस्त्वनिश्चयस्तत्समर्थने हेतुरिति काव्यलिङ्गमपि। अस्मिन् सर्गे ( ५६ श्लोकपर्यन्तम् ) ललिता छन्द.।

**यदवोचत वीक्ष्य मानिनी परित स्नेहमयेन चक्षुषा ।**
**अपि वागधिपस्य दुर्वच वचन तद्विदधीत विस्मयम् ॥ २ ॥**

अ०—मानिनी स्नेहमयेन चक्षुषा परितः वीक्ष्य यद् अवोचत, (केनापि) दुर्वचम् तद् वचनम् वागधिपस्य अपि विस्मयम् विदधीत ।

व्याक०—अधिपातीत्यधिप , "आतश्चोपसर्गे" इति क. । वाचामधिपो वागधिप , तस्य वागधिपस्य, 'विस्मय' योगे 'दुर्वच' योगे वा शेषषष्ठी । 'दुर्वच' योगे कर्तरि षष्ठी तु न सभवति, "न लोकाव्ययनिष्ठाखलर्थतृनाम्" इति निषेधात् । मानिनी-मानोऽस्या अस्तीति मानशब्दाद् "अत इनिठनौ" इत्यनेन भूम्नि 'इनि' । स्नेहमयम्-स्नेहशब्दात् "तत्प्रकृतवचने मयट्" इति मयट् । परित -"पर्यभिभ्या च" इति सूत्रेण पर्युपसर्गात् 'तसिल्' । वीक्ष्य-विपूर्वाद् 'ईक्ष दर्शने' धातोर्ल्यप् । दुर्वचम् दुरुपपदाद् ब्रूञ्धातो "ईषद्दु सुषु" इत्यादिना खल् । विदधीत-विपूर्वकाद् 'धा' धातोर्जौहोत्यादिकात् सभावनाया लिङ् । चक्षुषेति वीक्षणकरणे तृतीया ।

व्याख्या—मानिनी-क्षत्रियकुलाभिमानवती द्रौपदी, स्नेहमयेन-प्रेमप्रचुरेण, चक्षुषा-ज्ञाननेत्रेण, परित -समन्तत , वीक्ष्य-आलोच्य, विविच्येति यावद्, यद् वचनम् अवोचत-उक्तवती, दुर्वचम् केनापि वक्तु दु शकम्, तद् वचनम्, वागधिपस्य बृहस्पतेरपि, विस्मयम्-आश्चर्यम् , विदधीत कुर्यात् , किमुतान्यस्य जनस्येति । "वागधिपस्यापि दुर्वच तद्वचन विस्मय विदधीत, सर्वस्यापीति शेषः" इति व्याख्यान्तरमपि मल्लिनाथ उक्तवान् । तन्त्रेणोभयमपि विवक्षितमिति चित्रभानु. ।

भा०—भीमो वक्ति-हे राजन् द्रौपद्या क्षत्रियकुलाभिमान. प्रोज्ज्वल जागर्ति, अस्मासु च महास्तस्या. स्नेह. । ततश्च स्नेहपूर्वक निपुण स्वपक्ष-परपक्षसम्बन्धि सर्व विविच्य यत्तयोपन्यस्तम्, एतादृश वचन बृहस्पतिरपि कदाचिदेव वक्तु शक्नुयात् । ततश्च स्त्रियोक्तमपि शास्त्रानुरोधि, तत्रापि च हितानुबन्धि इद वच. क जन न विस्मापयेत ? अत्याश्चर्यस्थानमिद वचनमिति वचनप्रशसाया तात्पर्यम् ।

अल०—विस्मापने दुर्वचत्वस्य हेतोरुपन्यासात् काव्यलिङ्गम् । वागधि-

पस्यापि विस्मय विदर्धातेति सम्बन्धातिशयोक्ति । 'किमन्यस्य' इति प्रतीत्या काव्यार्थापत्तिर्व्यङ्ग्या । वचस स्तुतौ प्रकृताया वागविषयविस्मयस्य कार्यस्य वचनादप्रस्तुतप्रशसा च । इह स्वपक्षपरपक्षबलाबलादे चक्षुषा दर्शनासम्भवात् चक्षु पद ज्ञानजनकत्वसामान्येन मनो लक्षयति, चाक्षुषज्ञानवत् स्फुटोस्य सर्वविषयावगम इति व्यङ्ग्य लक्षणाया प्रयोजनमिति चित्रभानु ।

**विषमोऽपि विगाह्यते नय कृततीर्थ पयसामिवाशय ।**
**स तु तत्र विशेषदुर्लभ सदुपन्यस्यति कृत्यवर्त्म य. ॥ ३ ॥**

अ०—विषम अपि नयः पयसाम् आशय इव कृततीर्थ ( सन् ) विगाह्यते तु तत्र स विशेषदुर्लभ य , सत् कृत्यवर्त्म उपन्यस्यति ।

व्याक०—कृत तीर्थ यस्य, यस्मिन् वा स कृततीर्थ. । विशेषेण दुर्लभो विशेषदुर्लभः, विशेषेणेति प्रकृत्यादित्वात् तृतीया, "तृतीया" इति योगविभागात्समासः । यद्वा विशेष दुर्लभ इति क्रियाविशेषणेन "सुप्सुपा" इति समास । चित्रभानुस्तु विशेषैर्दुर्लभ इति व्याख्यान्तरमप्याह । दुर्लभ.-दु खेन लभ्यते इति "ईषद्दु सुषु कृच्छ्राकृच्छ्रार्थेषु खल्"। कृत्यस्य वर्त्म कृत्यवर्त्म । कृधातो क्यपि कृत्यम् । विषम.-"सुविनिर्दुर्भ्यं " इत्यनेन सस्य षत्वम् । विगाह्यते-विपूर्वाद् 'गाहू विलोडने' धातो कर्मणि लट् । सर्वैरिति कर्तृपदमध्याहार्यम् । नय -नीधातोः "एरच्" । आशय -आङ्पूर्वात् 'शीङ् स्वप्ने' धातो. 'एरच्'। सत्-'अस्' धातो शतृप्रत्यय "श्नसोरल्लोपः" । उपन्यस्यति-'उप' 'नि' एतत्पूर्वाद् 'असु क्षेपणे' धातोर्लट्, श्यन् । तत्रेति निर्धारणे सप्तमी, 'यतश्च निर्धारणम्"। मल्लिनाथस्तु आधारसप्तमीमेव व्याख्यातवान् ।

व्याख्या—विषम =दुर्बोधोऽपि, एकस्मिन्नेव विपक्षादौ देशकालादिभेदेन सन्धिविग्रहादिविरुद्धार्थप्रतिपादनाद् एकरूपेण निश्चेतुमशक्योऽपि, ( जलाशयपक्षे दुष्प्रवेशोऽपि ) नय.-नीतिशास्त्रम्, पयसाम् जलानाम्, आशय आधार इव ह्रद इवेति यावत्, कृततीर्थ -कृतम्, विहितम् *तीर्थम्-अभ्यासाद्युपायो यत्र

* तीर्थं शास्त्राध्वरक्षेत्रोपायोपाध्यायमन्त्रिषु ।
अवतारर्षिजुष्टाम्भ. स्त्रीरज सु प्रकीर्तितम् ॥ इति विश्व ।

तथाभूत. ( कृतसप्रदाय इति चित्रभानु ) ( जलाशयपक्षे कृत *तीर्थ 'घाट' इति प्रसिद्धो जलावतारो यस्मिंस्तथाभूत ) सन्, सर्वैरपि विगाह्यते मनसा गृह्यते-ज्ञायते-उच्यते, बुध्यते च । (जलाशयपक्षे पद्भ्यामालोड्यते प्रविश्यते) तु-किन्तु, तत्र-नये जलाशये च ( यद्वा तत्र तादृशेषु विगाहमानेषु पुरुषेषु । चित्रभानुस्तु तत्र तादृशेषु नयेषु स नयो विशेषदुर्लभ इत्याह ) स तादृश पुरुष , विशेषदुर्लभ -अत्यन्त दुष्प्राप , ( विशेषैः-भेदकै स्वगुणैर्हेतुभूतैर्दुर्लभ - इति चित्रभानु- ) य सत् साधु-देशकालाद्यविरुद्धम् , ( जलाशयपक्षे च गर्त-पाषाणादिरहितम् ) कृत्यवर्त्म-कृत्यम्-सन्धिविग्रहादिकार्यम् , तस्य वर्त्म सरणिम्-उपायम् , ( जलाशयपक्षे कृत्यम् स्नानादिकम् , तस्य वर्त्म-मार्गम् ) उपन्य-स्यति-उदाहरति स्थापयति च । मल्लिनाथस्तु 'सद्-उपन्यस्यति' इति क्रिया-विशेषणत्वेन व्याचख्यौ ।

भा०—यथातिगभीरेऽपि नदीहृदादौ घट्टमाहात्म्येन सर्वेऽपि प्रवेष्टु शक्नु-वन्ति, पर तत्रानुकूलघट्टनिर्माण न सर्वं सुकरम् । तथैव नीतिशास्त्रमपि ग्रन्था-नधीत्य सामान्येन व्याख्यातु बोद्धु च बहव' शक्नुवन्ति, परन्तु प्राप्तेऽवसरे 'अत्रेदमित्थ कार्यम्' इति कार्यमार्गनिदर्शको नीतिरहस्यज्ञोऽनुकूल प्रवक्ता सुतरा दुर्लभ । इय तु द्रौपदी कार्यमार्गं निपुणमुपन्यस्यति स्मेति यत्सत्य-मस्ति विस्मयस्थानम् ।

अल०—विशेषे प्रस्तुते सामान्याभिधानादप्रस्तुतप्रशसा । श्लेषानुप्राणिता नयजलाशययोरुपमा च । 'विषमोऽपि विगाह्यते' इति विरोधाभासोऽपि । द्रौपदीवचसो महत्त्व व्यङ्ग्यम् ।

परिणामसुखे गरीयसि व्यथकेऽस्मिन् वचसि क्षतौजसाम् ।
अतिवीर्यवतीव भेषजे बहुरल्पीयसि दृश्यते गुण ॥ ४ ॥

अ०—परिण मसुखे गरीयसि क्षतौजसाम् व्यथके अल्पीयसि अस्मिन् वचसि अतिवीर्यवति भेषजे इव बहु गुण. दृश्यते ।

व्याक०—परिणामे सुखम् , तस्मिन् , परिणामसुखे । परिणाम इति भावघञन्तम् । क्षतमोजो येषा तेषा क्षतौजसाम् । क्षतमिति क्षणोते. क्त ।

* तीर्थं योनौ जलावतारे च—इति हलायुध ।

यस्यापि विस्मय निरभूदिति सम्बन्धातिशयोक्ति । 'किमन्यस्य' इति प्रतीत्या काव्यार्थापत्तिर्व्यङ्ग्या । ननस' स्तुतो प्रकृताया वागविषयविस्मयस्य कार्यस्य कथनादप्रस्तुतप्रशंसा च । उद्द स्वप्रचारप्रत्यक्षलाभलादे चक्षुषा दर्शनासम्भवात् चक्षुष इह ज्ञानजनकत्वसामान्येन मनो लक्षयति, चाक्षुषज्ञानवत् स्फुटोऽस्य निश्चयोऽभूदिति व्यङ्ग्य लक्षणाया प्रयोजनमिति चित्रभानु ।

विषमोऽपि विगाह्यते नयः कृततीर्थः पयसामिवाशयः ।
स तु तत्र विशेषदुर्लभः सदुपन्यस्यति कृत्यवर्त्म यः ॥ ३ ॥

अ०—विषमः अपि नयः, पयसाम् आशयः इव कृततीर्थः ( सन् ) विगाह्यते तु तत्र सः विशेषदुर्लभः यः, सत् कृत्यवर्त्म उपन्यस्यति ।

व्या०—कृतं तीर्थं यस्य, यस्मिन् वा स कृततीर्थः । विशेषेण दुर्लभो विशेषदुर्लभः, विशेषेणेति प्रकृत्यादित्वात् तृतीया, "तृतीया" इति योगविभागात्समासः । यद्वा विशेष दुर्लभ इति क्रियाविशेषणेन "सुप्सुपा" इति समास । चित्रभानुस्तु विशेषैर्दुर्लभ इति व्याख्यान्तरमप्याह । दुर्लभ -दु खेन लभ्यते इति "ईषद्दु सुषु कृच्छ्राकृच्छ्रार्थेषु खल्" । कृत्यस्य वर्त्म कृत्यवर्त्म । कृधातो क्यपि कृत्यम् । विषम.-"सुविनिर्दुर्भ्य." इत्यनेन सस्य षत्वम् । विगाह्यते-विपूर्वाद् 'गाहू विलोडने' धातो. कर्मणि लट् । सर्वैरिति कर्तृपदमभ्याहार्यम् । नय -नीधातोः "एरच्" । आशय आङ्पूर्वात् 'शीङ् स्वप्ने' धातो. 'एरच्' । सत्-'अस्' धातो. शतृप्रत्यय "असोरल्लोपः" । उपन्यस्यति-'उप' 'नि' एतत्पूर्वाद् 'असु क्षेपणे' धातोर्लट्, श्यन् । तत्रेति निर्धारणे सप्तमी, "यतश्च निर्धारणम्" । मल्लिनाथस्तु आधारसप्तमीमेव व्याख्यातवान् ।

व्याख्या—विषम.=दुर्बोधोऽपि, एकस्मिन्नेव विपक्षादौ देशकालादिभेदेन सन्धिविग्रहादिविरुद्धार्थप्रतिपादनाद् एकरूपेण निश्चेतुमशक्योऽपि, ( जलाशयपक्षे दुष्प्रवेशोऽपि ) नय.-नीतिशास्त्रम्, पयसाम् जलानाम्, आशय आधार इव ह्रद इवेति यावत्, कृततीर्थ -कृतम्, विहितम् *तीर्थम्-अभ्यासाद्युपायो यत्र

* तीर्थं शास्त्राध्वरक्षेत्रोपायोपाध्यायमन्त्रिषु ।
अवतारर्षिजुष्टाम्भः स्त्रीरज सु प्रकीर्तितम् ॥ इति विश्व ।

तथाभूत. ( कृतसप्रदाय इति चित्रभानु ) ( जलाशयपक्षे कृत *तीर्थं 'घाट' इति प्रसिद्धो जलावतारो यस्मिंस्तथाभूत ) सन्, सर्वैरपि विगाह्यते मनसा गृह्यते ज्ञायते-उच्यते, बुध्यते च। (जलाशयपक्षे पद्भ्यामालोड्यते प्रविश्यते) तु-किन्तु, तत्र-नये जलाशये च ( यद्वा तत्र तादृशेषु विगाहमानेषु पुरुषेषु। चित्रभानुस्तु तत्र तादृशेषु नयेषु स नयो विशेषदुर्लभ इत्याह ) स तादृश पुरुष, विशेषदुर्लभ -अत्यन्त दुष्प्राप, ( विशेषैः-भेदकै स्वगुणैर्हेतुभूतैर्दुर्लभ - इति चित्रभानु. ) य सत् साधु-देशकालाद्यविरुद्धम्, ( जलाशयपक्षे च गर्त-पाषाणादिरहितम् ) कृत्यवर्त्म-कृत्यम्-सन्धिविग्रहादिकार्यम्, तस्य वर्त्म सरणिम्-उपायम्, ( जलाशयपक्षे कृत्यम्-स्नानादिकम्, तस्य वर्त्म-मार्गम् ) उपन्य-स्यति-उदाहरति स्थापयति च। मल्लिनाथस्तु 'सद्-उपन्यस्यति' इति क्रिया-विशेषणत्वेन व्याचख्यौ।

भा०—यथातिगभीरेऽपि नदीह्रदादौ घट्टमाहात्म्येन सर्वेऽपि प्रवेष्टु शक्नु-वन्ति, पर तत्रानुकूलघट्टनिर्माण न सर्वै सुकरम्। तथैव नीतिशास्त्रमपि ग्रन्था-नधीत्य सामान्येन व्याख्यातु बोद्धु च वहव शक्नुवन्ति, परन्तु प्राप्तेऽवसरे 'अत्रेदमित्थ कार्यम्' इति कार्यमार्गनिदर्शको नीतिरहस्यज्ञोऽनुकूल प्रवक्ता सुतरा दुर्लभ। इय तु द्रौपदी कार्यमार्ग निपुणमुपन्यस्यति स्मेति यत्सत्य-मस्ति विस्मयस्थानम्।

अल०—विशेषे प्रस्तुते सामान्याभिधानादप्रस्तुतप्रशसा। श्लेषानुप्राणिता नयजलाशययोरुपमा च। 'विषमोऽपि विगाह्यते' इति विरोधाभासोऽपि। द्रौपदीवचसो महत्त्व व्यङ्ग्यम्।

**परिणामसुखे गरीयसि व्यथकेऽस्मिन् वचसि क्षतौजसाम्।**
**अतिवीर्यवतीव भेषजे बहुरल्पीयसि दृश्यते गुण ॥ ४ ॥**

अ०—परिणामसुखे गरीयसि क्षतौजसाम् व्यथके अल्पीयसि अस्मिन् वचसि अतिवीर्यवति भेषजे इव बहु गुणः दृश्यते।

व्याक०—परिणामे सुखम्, तस्मिन्, परिणामसुखे। परिणाम इति भावघञन्तम्। क्षतमोजो येषा तेषा क्षतौजसाम्। क्षतमिति क्षणोते. क्त।

* तीर्थं योनौ जलावतारे च—इति हलायुध।

अतिशयेन वीर्यम् अतिवीर्यम्, तद्विद्यते ऽस्मिन्निति अतिवीर्यवत्, तस्मिन्। कर्मधारयान्मतुप् 'न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकर' इति नु प्रायिकम्। व्यथकः णिजन्तात् 'व्यथ भयसञ्चलनयो' इति धातो ण्वुल्। मित्त्वाद् ह्रस्व। अल्पीयसि, अल्पशब्दात्, ईयसुन्। दृश्यते पश्यते कर्मणि लट्। गुण इति तत्कर्म। अस्मादृशा इति कर्ता याहारलभ्य।

व्याख्या—परिणामसुखे परिणामे-फलकाले, ( भेषजपक्षे-परिपाकावस्थायाम् ) सुखे सुखकरे, गरीयसि-गुर्वर्थे-बहुतरार्थद्योतनसमर्थे, ( पक्षे-श्रेष्ठे, मात्रानियम नियोगयोगे गति दुर्जरे इति वा ) क्षताजसाम-क्षतम्-नष्टम्, ओज उत्साह ( भेषजपक्षे-ओजश्चारस्य पष्ठो धातुः ) येषान्, तथाभूताना पुसाम्, व्यथके-युद्धोपस्थापकत्वाद्भयङ्करे, ( औषधपक्षे असह्यतया दु खजनके ) ( क्षतम-नाशितम्, ओज -अस्माक बल यै, तेषा क्षतौजसाम्-शत्रूणाम्, व्यथके इति चित्रभानु ) अल्पीयसि-अत्यल्पाक्षरे ( पक्षे स्वल्पपरिमाणे ) अस्मिन्-द्रौपदीयुक्ते वचसि-वाक्ये, अतिवीर्यवति अतिशयेन सामर्थ्यवति ( वचनपक्षे प्रभूतोत्साहप्रतिपादके। ~ भेषजे रसायनाद्यौषध इव, बहु -अनेको मानत्राणराज्यलाभादि., आरोग्यबलपोषादिश्च, गुणः, दृश्यते-अनुभूयते।

भा०—हे राजन ! इद द्रौपदीवाक्य यद्यप्यल्पम्, युद्धोपोद्बलकतया निरुत्साहस्य पुसो भयङ्कर च, तथापि परिणामोऽस्य हृद्य, सारवत्तरार्थं च वाक्यमिदम्। अत एव प्रारम्भे रोगिणो दु खदमपि उत्तरकाले नैरोग्यबलादिजनकम्, स्वल्पपरिमाणमपि महाप्रभावशालि रसायनाद्यौषध यथा सर्वैरादियते, तथा गुणशालि गरीयो द्रौपदीवाक्य ग्राह्यमेव।

अल०—पूर्णोपमा। विशेषणाना साभिप्रायत्वात्परिकर। अल्पीयसि बहुगुण इति विरोधाभासोऽपि व्यङ्ग्य। दृश्यते इत्यनुभवसामान्ये लाक्षणिकम्। स्फुटानुभवो व्यङ्ग्य। कविनात्र भङ्ग्या स्ववचोरूप काव्यमपि प्रशसितमिति चित्रभानुर्व्याख्यातवान्।

**इयमिष्टगुणाय रोचता रुचिरार्था भवतऽपि भारती।**
**ननु वक्तृविशेषनि स्पृहा गुणगृह्या वचने विपश्चित ॥ ५ ॥**

---

१ 'भेषजौषधभैषज्यम्' इत्यमर।

अ०—रुचिरार्था इयम् भारती इष्टगुणाय भवते अपि रोचताम्, ननु गुण-गृह्या विपश्चित. वचने वक्तृविशेषनि स्पृहाः ( भवन्ति )।

व्याक०—रुचिरोऽर्थो यस्या सा रुचिरार्था। इष्टा गुणा यस्य, तस्मै इष्टगुणाय-इष्टशब्दे इच्छतेः " मतिबुद्धिपूजार्थेभ्यश्च " इति वर्तमाने क्त । गुणैर्गृह्यन्ते इति गुणगृह्या, " पदास्वैरिबाह्यापक्ष्येषु च " इति गृह्णाते कर्माणि क्यप् । " कर्तृकरणे कृता बहुलम् " इति समास । वक्तृषु विशेषो वक्तृविशेष, तत्र नि स्पृहाः-वक्तृविशेषनि स्पृहा । भवते-" रुच्यर्थाना प्रीयमाण " इत्यनेन रुचधातोर्योगे चतुर्थी । वचने-विषयसप्तमी, चित्रभानुस्तु मति सप्तमीमपि व्याख्यातवान् । वचने सति नि.स्पृहा इत्यादि ।

व्याख्या—रुचिरार्था-रुचिरो मनोहरोऽर्थो यस्यास्तथाभूता, इयम् इदानीमेव श्रुता, द्रौपद्युक्ता, भारती शास्त्रसस्कृता वाणी, इष्टगुणाय-इष्टाः प्रिया, गुणा यस्य तथाभूताय-गुणग्राहिणे, भवते-तुभ्यमपि, रोचताम्-स्वदताम् । ननु-निश्चयेन, गुणगृह्या -गुणैकपक्षपातिन., विपश्चित.-विद्वास, वचने-वाक्यविषये, वक्तृविशेषनि स्पृहा. वक्तृविशेषे-स्त्रीपुसादिलक्षणे, नि स्पृहा -निरपेक्षा भवन्ति।

भा०—हे राजन् ! त्व गुणग्राही असि, अत एव हृद्यमर्थं प्रतिपादयद् द्रौपदीवचनमिद सर्वथा तवापि रुचिकर भवितु युक्तम्, समुच्चयार्थेनापिशब्देन ' अस्माकन्तु रुचिकरमस्त्येव, भवतोऽपि भवतु ' इति बोध्यते । भारतीपदेन भरतवशसम्बन्धोऽपि व्यञ्जित इति चित्रभानु । गुणवदपीद स्त्रियोक्तमिति नोपेक्षामर्हति। यतो गुणमात्रलोलुपा. पण्डिता ' इद केनोक्तमित्यादि ' वक्तृविशेषज्ञानाय न यतन्ते । गुणमात्र त्याददते-'बालादपि सुभाषितम्' इति न्यायात् ।

अल०—रुचिरार्थत्वस्य रुचौ गुणगृह्यत्वस्य वक्तृविशेषनि स्पृहत्वे हेतुगर्भत्वा परिकर । विशेषस्य सामान्येन समर्थनादर्थान्तरन्यासः । द्रौपदीवचनस्यास्वीकारे तव गुणगृह्यत्व भज्येतेति व्यङ्ग्यम् ।

चतसृष्वपि ते विवेकिनी नृप विद्यासु निरूढिमागता ।
कथमेत्य मतिर्विपर्यय करिणी पङ्कमिवावसीदति ॥ ६ ॥

अ०—(६) नृप ' चतसृषु अपि विद्यासु निरूढिम् आगता विवेकिनी ते

मति पङ्कम् ( एत्य ) करिणी। विपर्ययम् एत्य कथम् अवसीदति।

व्याक०—नृप नृन पातीति पाति: ' आतोऽनुपसर्गे कः " । विद्या-विद्यन्त्यनयेति ' विद् ज्ञाने ' धातो " संज्ञायां समज " इति सूत्रेण स्त्री-रो क्यप्। निरूढि-निपूर्वकात् ' रुह् ' धातो क्तिन । यद्वा निर् पूर्वकाद् वहेः क्तिन्। एत्य-आङ्पूर्वकादिण्धातोर्ल्यप्, " पत्वतुकोरसिद्ध " इत्येका-देशस्यासिद्धत्वात् " ह्रस्वस्य पिति कृति तुक् " । विवेकिना-विपूर्वाद् 'विचिर् पृथग्भावे' धातोर्भावे घञ्। ततो विवेकोऽस्या अस्तीति मत्वर्थाय इनि । मति-मन धातो क्तिन्। विपर्यय वि' परि' एतदुपसर्गद्वयपूर्वाद् ' इण् ' धातो " एरच् " । करिणी करशब्दादिनिर्मत्वर्थाय । अवसीदति-अवपूर्वात् सीदते-र्लट्।

व्याख्या—हे नृप ! राजन् ! युधिष्ठिर ! * चतसृषु अपि-चतु सङ्ख्या-कासु राजभिः शिक्षणीयासु सर्वासु आन्वीक्षिकी त्रयी-वार्ता-दण्डनीतिरिति ख्यातासु, सर्वास्वपि विद्यासु, ( समुच्चयार्थेन अपिपदेन ' अन्यास्वपि चतु-र्दशसु विद्यासु ' इति चित्रभानु ) निरूढिम् प्रसिद्धिम् ( निर्वहणम्, पर्याप्ति वा ) आगता-प्राप्ता, सर्वविद्याज्ञाने प्रसिद्धा, अत एव विवेकिनी-सदसतो. पार्थ-क्येन विज्ञान विवेक , तद्वती, ते-तव, मति -बुद्धि , पङ्कम्-कर्दमम्, एत्य-प्राप्य, स्थिता करिणी हस्तिनीव, कथम्-केन प्रकारेण, विपर्ययम्-वैपरीत्यम् , अवि-वेकम् , एत्य-प्राप्य, अवसीदति-नश्यति। क्षेपार्थकेन किंशब्देन नैतद्युक्तमिति बोध्यते।

भा०—इदानीं भीम स्वयमुपालभते-हे राजन् ! लोकसंस्थितिहेतूनामा-न्वीक्षिक्यादीनां चतसृणामपि विद्यानां निपुणमध्ययनेनाधिगता या ते बुद्धि

---

* चतस्रो विद्या यथा-'आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्च शाश्वती । विद्याश्चेताश्चतस्रस्तु लोकसंस्थितिहेतवः ' इति कामन्दक. ॥ ' आन्वीक्षिक्या तु विज्ञानं धर्माधर्मौ त्रयीस्थितौ । अर्थानर्थौ तु वार्ताया दण्डनीत्या नयानयौ ।' इति मनु ।

तर्कशास्त्रमान्वीक्षिकी । त्रयो वेदास्त्रयी । कृषिवाणिज्याद्यर्थार्जनोपायप्रदर्शनं वार्ता। शासनानियमशास्त्रं दण्डनीतिरिति।

सद्गतो सम्यग् विवेचनं कर्तुमशक्र्, अय सा कुतो वैपरीत्य प्राप्ता ? यथा पङ्के निमग्ना करिणी आत्मानमुद्धर्तुमप्रभवन्ती निश्चेष्टा किकर्तव्यविमूढा च सती स्रियते, तथैव तव बुद्धिरपि खिन्ना किकर्तव्यविमूढा तिष्ठति, कोऽत्र हेतु ? नैतत्कथमपि युक्तमिति । नृपेतिसम्बोधनेन मतिविपर्ययो बोधित., त्व नृपोऽसि प्रजापालन तव धर्म , न तु वने वासस्तपो वा, तद् विपर्ययेण त्व धर्मं पश्यसीति । ततश्च पङ्कपातिता करिणी यथा बलवत्तरेण करिणा शक्यत उद्धर्तुम् , तथा स्वमति स्वय बलमास्थाय समुद्धर, बलमाश्रयेति तात्पर्यम् ।

अल०—विवेकिन्या बुद्धेरवसादस्याननुरूपस्याभिधानाद्विषमो मुख्य । उपमा तत्पोषिका तदङ्गम् ।

**विधुर किमत पर परैरवगीता गमिते दशामिमाम् ।**
**अवसीदति यत्सुरैरपि त्वयि सभावितवृत्ति पौरुषम् ॥ ७ ॥**

अ०—त्वयि परै इमाम् अवगीताम् दशाम् गमिते ( सति ) सुरै• अपि सभावितवृत्ति पौरुषम् अवसीदति, यद् , अतः परम् किं विधुरम् ( अस्ति ) ।

व्याक०—सभाविता वृत्तिर्यस्य, तत् संभावितवृत्ति । सभावितेति णिजन्ताद्भवते कर्मणि क्त । तत्र वृत्ति प्रयोज्यकर्त्री कर्मता गता । सुरैरिति प्रयोजककर्तृवाचकम् । अवगीताम्-अवपूर्वाद् 'गैशब्दे' धातो क्त । "आदेच-" इत्यात्वम्, "घुमास्था ":इति ईत्व च । गमिते-'गम्' धातोर्णिजन्तात् कर्मणि क्त । अमन्तत्वान्मित्त्वम । त्वंपदवाच्यो युधिष्ठिरोऽत्र प्रयोज्यकर्ता कर्मता गत क्तप्रत्ययेनोक्त । दशामिति तु गमधातो कर्म । परैरिति प्रयोजककर्तृवाचकम् । पौरुषम्-पुरुषशब्दाद् "हायनान्तयुवादिभ्य —"इति भावेऽण् । अत -इदशब्दात् "पञ्चम्यास्तसिल्" इति तासिल् प्रत्यय । त्वयीति 'यस्य च भावेन भावलक्षणम्' इति सति सप्तमी, अधिकरणसप्तम्येव वा व्याख्यान्तरे ।

व्या•—त्वयि भवति, परै -शत्रुभि•, इमाम्-अनुभूयमानाम्, अवगीताम्-निन्दिताम, दशाम् अवस्थाम् , गमिते-प्रापिते सति, सुरै -देवैरपि, सभावितवृत्ति-सभाविता निश्चिता, बहुमानिता वा वृत्ति -वर्तमानता, सद्भाव. प्रसारो वा यस्य

* अवगीत तु निर्वादे मुहुर्दृष्टे च गर्हिते—इति विश्व ।

तथाभूतम्, पौरुषम्-पुरुषस्य कर्म पुरुषकार, अवसीदति-नश्यति, इति यद्, अत· परम्-अस्माद्धिकम्, किं विधुरम्-किं कष्टम्-व्यसनम्, अस्ति, न किमपीत्यर्थ ।

यद्वा—परै दशा गमिते त्वयि भवति, वर्तमानम्, सुरैरपि सम्भावितवृत्ति-मन्यमानमद्भावम्, पौरुषमवसीदतीत्यादि पूर्ववत् । यद्वा—देवैरपि सभाविता बहुमता, वृत्ति -सूक्ष्ममनोवामनारूपता ( तद्रूपेणावस्थानम् ) यस्य तत्पौरुष-मित्यादि पूर्ववत् ।

भावा०—हे राजन्! राज्यबहिष्कृतो निराश्रयस्त्व वनाद्वनमटसि । शत्रु-भिरापादितामिमा गर्हणीया दशामनुभवसि, पर नात्मोद्धाराय मनाक् पौरुष-मवलम्बसे । तेन च सुरा अपि यत् पौरुष बहुमन्यन्त, तदेव महापुरुषेण त्वयो-पेक्ष्यमाण लोके नष्टप्राय जातमित्यहो चरमः सीमा कष्टस्य ! ‘ यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जन ’ इति न्यायाद्भवद्दृष्टान्तेन सर्वेऽपि लोका पौरुषमुपेक्षि-ष्यन्ते। तेन पौरुषक्षयो लोके कष्टप्रवृत्तिश्च स्यादिति महाननर्थ. । यद्वा–शत्रुभि दुर्दशा गमितेऽपि त्वयि अद्यापि देवा अपि पौरुषम् ( उद्योगयोग्यताम् ) सम्भावयन्ति, ‘ अस्ति राज्ञि पौरुषम्, तत्तु काले प्रकाशिष्यते ’ इति, पर सर्वथोदासीने त्वयि सा सभावनापीदानी नश्यति । ततश्च ‘ सभावितस्य चाकी-र्तिर्मरणादतिरिच्यते ’ इति न्यायेन तव त्वदाश्रिताना चास्माक महत्कष्टस्थानम्, इति ।

अल०—सुरैरपि सभावितवृत्तीति सम्बन्धातिशयोक्ति । विषादो भावोऽत्र प्राधान्येन व्यङ्ग्य ।

**द्विषतामुदय सुमेधसा † गुरुरस्वन्ततर· सुमर्षण ।**
**न महानपि भूतिमिच्छता फलसपत्प्रवण. परिक्षयः ॥ ८ ॥**

अ०—भूतिम् इच्छता सुमेधसा गुरु ( अपि ) अस्वन्ततर., द्विषताम् उदय सुमर्षण, महान् अपि फलसपत्प्रवणः परिक्षय न (सुमर्षण) (भवति)।

व्याक०—शोभना मेधा यस्य, तेन सुमेधसा । बहुव्रीहि, “ नित्यमसिच्

---

* विधुर प्रत्यवाये स्यात् कष्टविश्लेषयोरपि–इति वैजयन्ती ।

† ‘ गुरुरस्वन्ततरस्तु मृष्यते ’ इति दाक्षिणात्यपाठ ।

प्रजामेधयो " इति समासान्तोऽसिच् । शोभनोऽन्तो यस्य स स्वन्त, अतिशयेन स्वन्त स्वन्ततर, न स्वन्ततरोऽस्वन्ततर । फलस्य सपत् फलसपत्, तत्र प्रवण. फलसपत्प्रवणः । भूति -भवते क्तिच् । द्विषताम्-" द्विषोऽमित्रे " इत्यनेन 'द्विष्' धातो. शतृप्रत्यय । उदय -उत्पूर्वाद् ' इण् ' धातो " एरच् " । सुमर्षण -सुपूर्वाद् मृष् धातो " भाषाया शासियुधिदृशिधृषिमृषिभ्यो युज् वाच्य " इत्यनेन खलर्थे युच् प्रत्यय । संपत्-" सपदादिभ्य क्विप् " । प्रवण.-' प्रनिरन्त शरेक्षुप्लक्ष ·" इत्यादिना णत्वम् । परिक्षयः-परिपूर्वात् ' क्षि ' धातोः " एरच् " ।

व्या०—भूतिम्-उदयम्, इच्छता-कामयमानेन, सुमेधसा-सुधिया, विवेचनकुशलबुद्धिना, गुरु -महानपि, अस्वन्ततर -अत्यन्तदुष्परिणामः, क्षयोन्मुख इति यावद्, द्विषताम्-शत्रूणाम्, उदय अभ्युन्नति, सुमर्षण -सुखेन मृष्यते-सह्यते समुपेक्ष्यत इति यावत्, किन्तु महान्-गुरुरपि, फलसपत्प्रवण -फलसपदि-सुफलप्राप्तौ, प्रवण -उन्मुख -अत्यन्तशुभोदर्क, परिक्षय -विनाश, न सुमर्षण.-नोपेक्ष्यत इत्यर्थ ।

भा०—दूरदर्शी नृपति शत्रोर्वृद्धिमात्र दृष्ट्वा न तत्प्रतीकाराय यतते, नापि क्षीयमाण इत्येतावतैव तमुपेक्षते । किन्तु शत्रोरभ्युदयो यद्यादौ महानपि दृष्ट, पर तदन्तो यदि न शुभस्तर्हि तमुपेक्षत एव, स्वयमेव सम्भाव्यमाने तद्विनाशे प्रयत्नस्य व्यर्थत्वात्, किं च क्षीयमाणोऽपि शत्रुर्यदि परिणामेऽभ्युदयोन्मुखस्तर्हि सम्भाव्यमाना तदुन्नतिं प्रतिकर्तु यतत एव, वृद्धि प्राप्तस्य तस्य दु सहत्वापत्तेरिति । तथा च दुर्योधनस्येदानीमुदय, स च न दुरन्त., अपि तु स्वन्त एवानुमीयते, चरोक्त्या तस्य नीतिप्रवणताज्ञानात् । ततश्च न स उपेक्षामर्हति, अपि तु प्रतीकारमेवेति यतितव्यमेवास्माभि प्रतीकाराय ।

अल०–विशेषे प्रस्तुते सामान्याभिधानादप्रस्तुतप्रशसा । उदय सुमर्षण, महानपि परिक्षयो न सुमर्षण इति विरोध ।

**अचिरेण परस्य भूयसीं विपरीता विगणय्य चात्मन ।**
**क्षययुक्तिमुपेक्षते कृती कुरुते तत्प्रतिकारमन्यथा ॥ ६ ॥**

अ०—कृती परस्य क्षययुक्तिम् अचिरेण भूयसीम् ( विगणय्य ) च आत्मन

( क्षययुक्तिम् ) विपरीता विगणय्य उपेक्षते, अन्यथा तत्प्रतिकार कुरुते ।

व्याक०—कृतमनेनेति कृती, " इष्टादिभ्यश्च " इतीनिप्रत्ययः । युक्ति-युनक्तेः क्तिन् । भूयसीम् बहुशब्दाद् ' ईयसुन ', भूरादेश , प्रत्ययस्यादिलोपश्च । विपरीताम्-विपरिभ्यामेते क्त । विगणय्य-गणयतेर्ल्यप्, ' ल्यपि लघुपूर्वात् " इत्ययादेश । अन्यथा अन्यशब्दात् " प्रकारवचने थाल् " । प्रतिकारः-करोतेर्घञ् ।

व्याख्या—कृती-कुशल , पुरुष , परस्य शत्रो , क्षयस्य-विनाशस्य, युक्तिम-योजनाम्, अचिरेण-शीघ्र भाविनीम्, भूयसीम्-बहुला च, विगणय्य-विचार्य, च-कि च, आत्मन स्वस्य, क्षययुक्तिम, विपरीताम्-पूर्वोक्तादन्यथाभूताम्, चिरभाविनीम्, अल्पीयसां च, विगणय्य-विचार्य, उपेक्षते-उदासीनो भवति । अन्यथा-पूर्वोक्तविपरीतत्वे तु तस्या क्षययुक्तेः, प्रतिकारम्-प्रतिविधानम्-उपायम्, कुरुते-विदधाति ।

भा०—नीतिकुशलो जनो यदा लक्षणंविचारयति-यच्छत्रोर्हानि शीघ्रभाविनी महती च, स्वस्य तु हानि काचिच्चिरेण सम्भाव्यते, साप्यल्पैव, तदा उदासीनो भवति, किमपि न, विचेष्टते । दैवेनैव शत्रुपराभवस्य सिद्धत्वात् । यदा तु विचारयति शत्रोर्हानिश्चिरेण कथचित्स्यात्, साप्यल्पैव, स्वस्य तु हानिः प्रत्युपस्थिता, प्रभूता च, तदा प्रतीकारे झटिति प्रवर्तते । अनया च नीत्या अस्माभिर्झटिति प्रतीकारे प्रवर्तितव्यमेव, यतोऽस्माक क्षय सुमहानुपस्थितो वर्तते, शत्रोस्तु नेदानी शीघ्र सम्भाव्यत इति ।

अल०—पूर्ववत्सामान्यस्य विशेषे प्रकृत उपसहारादप्रस्तुतप्रशसा ।

**अनुपालयतामुदेष्यतीं प्रभुशक्ति द्विषतामनीहया ।**
**अपयान्त्यचिरान्महीभुजा जननिर्वादभयादिव श्रिय ॥ १० ॥**

अ०—उदेष्यतीं द्विषता प्रभुशक्तिम् अनीहया अनुपालयताम् महीभुजा श्रिय जननिर्वादभयादिव अचिराद् अपयान्ति ।

व्याक०—प्रभो शक्तिम् प्रभुशक्तिम् । प्रभुरिति प्रपूर्वाद्भवते ' विप्रसम्भ्यो द्वसज्ञायाम् " इति डु , ऊकारलोपः । शक्तिम्-शक्नोतेर्भावे क्तिन् । उदेष्य-

तीम्-उत्पूर्वादेतेर्भविष्यदर्थे लृट शत्रादेशः, उगित्त्वात् ङीपि वैकल्पिको *नुम-भाव । ईहाशब्दे ईहते. "गुरोश्च हलः" इति स्त्रिया भावे अप्रत्ययः। महीभुजाम्-महीं भुञ्जत इति भुनक्तेः कर्तरि क्विप्। निर्वादभयादिति हेतौ पञ्चमी ।

व्याख्या—उदेष्यतीम्-वृद्धिं गमिष्यन्तीम्, द्विषताम्-शत्रूणाम्, †प्रभु-शक्तिम्-कोशदण्डादिसामर्थ्यम्, अनीहया-अप्रतीकारेण-अनुत्साहेन, अनुपाल-यताम्-उपेक्षमाणानाम्, महीभुजाम्-राज्ञाम्, श्रिय -सपद॰, जननिर्वादभया-दिव 'इय निकृष्टानुरागिणी' इति लोककृतनिन्दाभीतेरिव, अचिरात्-शीघ्रम्, अपयान्ति-निर्गच्छन्ति ।

भा०—ये हि राजानो वृद्धिं गच्छन्तीमपि शत्रूणा शक्तिमुपेक्षन्त एव, न तत्र कमपि प्रतीकारमाचरन्ति, तेषा सपदः शीघ्रमेव विनश्यन्ति । तत्र हेतुरुत्प्रेक्ष्यते, एवविधस्य पुरुषस्य समीपेऽवस्थित्या लोकाःस्त्रीणामिव सपदामपवाद करिष्यन्ति 'इमा. सपदोऽलसे निकृष्टे पुरुषेऽनुरज्यन्ते' इति । तदपवादभयादेव सपदोऽपवादप्रसरात्पूर्वमेवाशु ततोऽप‡सरन्ति इति ।

अल०—हेतूत्प्रेक्षा । पूर्ववत्सामान्यस्य विशेषे उपसहारादप्रस्तुतप्रशसा तु मुख्या । उदयो नामोर्ध्वगमनम्, तस्य मुख्यस्य प्रभुशक्तावसभवाद् वृद्धि-र्लक्ष्यत प्रसरविशेषज्ञापन लक्षणाप्रयोजनम् ।

**क्षययुक्तमपि स्वभावज दधत धाम शिव समृद्धये ।**
**प्रणमन्त्यनपायमुत्थित प्रतिपच्चन्द्रमिव प्रजा नृपम् ॥ ११ ॥**

अ०—क्षययुक्तम् अपि स्वभावज शिव धाम दधतम् समृद्धये उत्थितम् अनपाय प्रतिपच्चन्द्रमिव नृप प्रजा. प्रणमन्ति ।

व्याक०—क्षयेण युक्त क्षययुक्तम्। युक्तमिति क्रान्तम्। स्वभावाज्जातं स्वभावजम । 'पञ्चम्यामजातौ'' इति जनेर्ड, उपपदसमास. । न अपायो

---

* 'आच्छीनद्योर्नुम्'' ।

† 'स प्रभावः प्रतापश्च यत्तेज कोशदण्डजम्' इत्यमरः ।

‡ 'खोनि पएट इव श्रीनिरलम. परिभूयते'—इति कामन्दको नीतिशा-स्त्राचार्य आह ।

यस्य तमनपायम्, अपायशब्दः एतेरजन्तः । प्रतिपदः चन्द्रम् प्रतिपच्चन्द्रम् । दधानम्-धाधातोः शतृप्रत्ययः, अभ्यस्तत्वान्नुमोऽभावः । समृद्धिशब्दः ऋधेर्भावे क्तिन् । उत्थितप्रजाशब्दौ व्याख्यातौ ।

व्याख्या—क्षयेण ह्रासेन, युक्तम्, क्षीणमपि-सन्, स्वभावजम्-निसर्गसिद्धम्, शिवम्-लोकहितकरम् (चन्द्रपक्षे लोकाह्लादकरम्) धाम-क्षात्रं तेजः-प्रतापम्, (चन्द्रपक्षे-प्रकाशम्) दधानम्-धारयन्तम्, समृद्धये-वृद्धये-अभ्युदयाय (चन्द्रपक्षे कलानामुपचयाय) उत्थितम्-उद्योगयुक्तम्, वर्द्धिष्णुम्, अनपायम् अग्रे विनाशसम्भावनारहितम्, (यद्वा-अनपायम् न अपाया प्रतिबन्धका यस्मिन् कर्मणि, तथा उत्थितम्-आलस्यादिदोषान् प्रतिबन्धकान्निरस्य वृद्धये यतमानमिति क्रियाविशेषणतया व्याख्येयम्) प्रतिपच्चन्द्रमिव प्रतिपदि प्रादुर्भूतं *द्वितीयायां प्रतीच्यां दिशि दृश्यमानं चन्द्रं यथा, तथैव नृपम् राजानम्, प्रजाः-प्रकृतयः-जनाः, प्रणमन्ति-प्रह्वीभवन्ति-तदधीना भवन्ति, चन्द्रपक्षे तु प्रणामं कुर्वन्तीति ।

भा०—यो नृपः कोशदण्डादिभिः क्षीणोऽपि नैसर्गिकं क्षात्रं तेजो न जहाति, प्रतिबन्धकांश्च दूरीकृत्याभ्युदयाय सततं प्रयतते, तस्य लोका वशीभवन्ति । यथा शुक्लप्रतिपदि प्रादुर्भूतश्चन्द्रो यद्यपि क्षीणतमः, तथापि नैसर्गिकः प्रकाशस्तस्मिन् वर्तत एव, वर्द्धिष्णुश्च सः, न चेदानीं क्षयस्तस्य सम्भावितः, तस्मात्प्रजास्तं प्रणमन्त्येव, न तु क्षीणोऽयमिति तिरस्कुर्वन्ति । वयमपि यद्यपि क्षीणाः, तथापि यदि तेज आश्रित्य यत्नपराः स्याम, तर्हि अवश्यं जना अस्मद्वशे भविष्यन्तीति ।

अल०—श्लेषानुप्राणितोपमा । प्रयत्नस्य महत्त्वातिशयो व्यङ्ग्यः ।

**प्रभवः खलु कोशदण्डयोः कृतपञ्चाङ्गविनिर्णयो नयः ।**

**स विधेयपदेषु दक्षतां नियतिं लोक इवानुरुध्यते ॥ १२ ॥**

अ०—कृतपञ्चाङ्गविनिर्णयः नयः कोशदण्डयोः प्रभवः (अस्ति) खलु,

---

*मल्लिनाथस्तु प्रतिपत्पदेन द्वितीया लक्ष्यत इत्याह । प्रतिपत्पदेन शुक्लपक्षादिस्थितिर्लक्ष्यते—इति चित्रभानुः । शुक्लपक्षादिगतो हि चन्द्रो वृद्ध्यनुमान इति सर्वैः प्रणम्यते ।

न. विधेयपदेषु दक्षताम् लोक नियतिमिव अनुरुध्यते ।

व्याक०—पञ्चानाम् अङ्गाना विनिर्णय पञ्चाङ्गविनिर्णय । अङ्गविनिर्णयो षष्ठीसमास, तेन सहैव च पञ्चशब्दस्याङ्गशब्देन "तद्धितार्थोत्तरपदसमाहारे च" इति उत्तरपदे द्विगु । तत कृत पञ्चाङ्गविनिर्णयो येनेति बहुव्रीहि.। 'निष्ठा' इति कृतशब्दस्य पूर्वनिपात । विनिर्णय.-इति नयते. "एरच्"। विधेयाना पदेषु विधेयपदेषु । 'प्राप्तेषु सत्सु' इत्यध्याहृत्य 'यस्य च भावेन भावलक्षणम्" इति सप्तमीं चित्रभानुराह । वैषयिकेऽधिकरणे सप्तमी वा । विधेयशब्दे दधातेः 'अचो यत्" 'ईद्यति" इतीत्वम्, गुण । नय इति बाहुलकाद् घञोऽभावे 'एरच्' । प्रभव इति "ऋदोरप्" नियम्यते जगदनयेति करणे यच्छते क्तिनि नियति.। 'अनो रुध कामे' इति दैवादिकाद्रुधे कर्तरि लटि अनुरुध्यते ।

व्याख्या—कृत पञ्चानाम् अङ्गानाम्-कर्मणामारम्भोपाय, पुरुषद्रव्यसम्पद्, देशकालविभाग, विनिपातप्रतीकार, कार्यसिद्धिश्चेति नीतौ *ख्याताना, पराक्रमादिप्रवृत्तेर्मूलस्य मन्त्रस्यावयवानामिवाङ्गानाम्, विनिर्णय -इदमित्थमिति निश्चयो येन, तथाभूतो नय -नीतिशास्त्रम्, ( लक्षणाया तत्संस्कृतामतिर्वा ), †कोशदण्डयो -संपद सैन्यस्य च, प्रभवः-उत्पत्तिस्थानमस्ति-इति खलु-नीतिविदा प्रसिद्धि । परन्तु स -प्रसिद्धोऽपि नय., विधेयपदेषु-कार्यवस्तुषु-पराक्रमस्थानेषु ( उपस्थितेषु ) दक्षताम्-उत्साहम्, ( चित्रभानुस्तु विधेयस्य-पराक्रमस्य. पदानि-स्थानानि वीरपुरुषा, तेषु वर्तमाना तदाश्रिता दक्षतामिति व्याख्यान्तरमप्याह ) लोक -कृष्यादिकर्मप्रवृत्तो जन., §नियतिमिव-सर्वनियमनसमर्थं दैव यथा, तथा अनुरुध्यते-अनुवर्तते ।

---

* सहाया साधनोपाया विभागो देशकालयो । विनिपातप्रतीकार. सिद्धि पञ्चाङ्गमिष्यते' इति कामन्दक ।

† दण्डोऽस्त्री शासने राज्ञ हिंसाया लगुडे यमे । यात्राज्ञाया सैन्यभेदे, इति वैजयन्ती ।

‡ पद व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमर ।

§ नियतिर्नियमे दैवे-इति विश्व ।

यस्य तमनपायम्, अपायशब्द एतेरजन्त। प्रतिपदः चन्द्रम प्रतिपच्चन्द्रम। दधतम्-धाधातो शतृप्रत्यय, अभ्यस्तत्वान्नुमोऽभाव.। समृद्धिशब्दे ऋद्धेते क्तिन। उत्थितप्रजाशब्दौ व्याख्यातौ।

व्याख्या—क्षयेण-ह्रासेन, युक्तम्, क्षीणमपि-सन्, स्वभावजम-निसर्ग सिद्धम्, शिवम्-लोकहितकरम (चन्द्रपक्षे लोकाह्लादकरम) धाम-क्षात्र तेज.-प्रतापम्, (चन्द्रपक्षे-प्रकाशम्) दधतम्-धारयन्तम्, समृद्धये-वृद्धये-अभ्युदयाय (चन्द्रपक्षे कलानामुपचयाय) उत्थितम्-उद्योगयुक्तम, वर्द्धिष्णुम्, अनपायम्-अग्रे विनाशसम्भावनारहितम्, (यद्वा-अनपायम् न अपाया प्रतिबन्धका यस्मिन् कर्मणि, तथा उत्थितम्-आलस्यादिदोषान् प्रतिबन्धकान्निरस्य वृद्धये यतमानमिति क्रियाविशेषणतया व्याख्येयम) प्रतिपच्चन्द्रमिव प्रतिपदि प्रादुर्भूत *द्वितीयाया प्रतीच्या दिशि दृश्यमान चन्द्र यथा, तथैव नृपम् राजानम्, प्रजा -प्रकृतय -जना, प्रणमन्ति-प्रह्वीभवन्ति-तदधीना भवन्ति, चन्द्रपक्षे तु प्रणाम कुर्वन्तीति।

भा०—यो नृप कोशदण्डादिभि क्षीणोऽपि नैसर्गिक क्षात्र तेजो न जहाति, प्रतिबन्धकाश्च दूरीकृत्वाभ्युदयाय सतत प्रयतते, तस्य लोका वशाभवन्ति। यथा शुक्लप्रतिपदि प्रादुर्भूतश्चन्द्रो यद्यपि क्षीणतम, तथापि नैसर्गिक. प्रकाशस्तस्मिन् वर्तत एव, वर्द्धिष्णुश्च स, न हीदानी क्षयस्तस्य सभावित, तस्मात्प्रजास्त प्रणमन्त्येव, न तु क्षीणोऽयमिति तिरस्कुर्वन्ति। वयमपि यद्यपि क्षीणा, तथापि यदि तेज आश्रित्य यत्नपरा स्याम, तर्हि अवश्य जना अस्मद्वशे भविष्यन्तीति।

अल०—श्लेषानुप्राणितोपमा। प्रयत्नस्य महत्त्वातिशयो व्यङ्ग्य।

**प्रभव. खलु कोशदण्डयो. कृतपञ्चाङ्गविनिर्णयो नय.।**
**स विधेयपदेषु दक्षता नियति लोक इवानुरुध्यते॥ १२॥**

अ०—कृतपञ्चाङ्गविनिर्णय. नय कोशदण्डयो. प्रभव (अस्ति) खलु,

---

*मल्लिनाथस्तु प्रतिपत्पदेन द्वितीया लक्ष्यत इत्याह। प्रतिपत्पदेन शुक्लपक्षादिस्थितिर्लक्ष्यते—इति चित्रभानु। शुक्लपक्षादिगतो हि चन्द्रो वृद्धचन्नुख इति सर्व प्रणम्यते।

म. विधेयपदेषु दक्षताम् लोक. नियतिमिव अनुरुध्यते ।

व्याक०—पञ्चानाम् अङ्गाना विनिर्णय पञ्चाङ्गविनिर्णय । अङ्गविनिर्णयो षष्ठीसमास, तेन सहैव च पञ्चशब्दस्याङ्गशब्देन "तद्धितार्थोत्तरपदसमाहारे च" इति उत्तरपदे द्विगु । तत कृत पञ्चाङ्गविनिर्णयो येनेति बहुव्रीहिः। 'निष्ठा' इति कृतशब्दस्य पूर्वनिपात । विनिर्णयः-इति नयते. "एरच्"। विधेयाना पदेषु विधेयपदेषु। 'प्राप्तेषु सत्सु' इत्यध्याहृत्य 'यस्य च भावेन भावलक्षणम्" इति सप्तमी चित्रभानुराह। वैषयिकेऽधिकरणे सप्तमी वा। विधेयशब्दे दधातेः "अचो यत्" 'ईद्यति" इतीत्वम्, गुण । नय इति बाहुलकाद् घञोऽभावे "एरच्' । प्रभव इति "ऋदोरप्" नियम्यते जगदनयेति करणे यच्छते. क्तिनि नियति.। 'अनो रुध कामे' इति दैवादिकाद्रुधे कर्तरि लटि अनुरुध्यते ।

व्याख्या—कृत पञ्चानाम् अङ्गानाम्-कर्मणामारम्भोपाय, पुरुषद्रव्यसम्पद्, देशकालविभाग, विनिपातप्रतीकार, कार्यसिद्धिश्चेति नीतौ *ख्यातानाम्, पराक्रमादिप्रवृत्तेर्मूलस्य मन्त्रस्यावयवानामिवाङ्गानाम्, विनिर्णय -इदमित्थमिति निश्चयो येन, तथाभूतो नय -नीतिशास्त्रम्, ( लक्षणया तत्संस्कृतामतिर्वा ), †कोशदण्डयो -सम्पद सैन्यस्य च, प्रभवः-उत्पत्तिस्थानमस्ति-इति खलु-नीतिविदा प्रसिद्धि । परन्तु स -प्रसिद्धोऽपि नय., विधेयपदेषु-कार्यवस्तुषु‡-पराक्रमस्थानेषु ( उपस्थितेषु ) दक्षताम्-उत्साहम्, ( चित्रभानुस्तु विधेयस्य-पराक्रमस्य, पदानि-स्थानानि वीरपुरुषा, तेषु वर्तमाना तदाश्रिता दक्षतामिति व्याख्यान्तरमप्याह ) लोक -कृष्यादिकर्मप्रवृत्तो जनः, §नियतिमिव-सर्वनियमनसमर्थ दैव यथा, तथा अनुरुध्यते-अनुवर्तते ।

* 'सहाया साधनोपाया विभागो देशकालयो । विनिपातप्रतीकार सिद्धि पञ्चाङ्गमिष्यते' इति कामन्दक ।

† 'दण्डोऽस्त्री शासने राज्ञ हिंसाया लगुडे यमे । यात्राज्ञाया सैन्यभेदे, इति वैजयन्ती ।

‡ पद व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमर ।

§ नियतिर्नियमे दैवे—इति विश्व ।

भा०—राजन् ! 'प्रभुशक्तिहीना वयं किं करिष्याम' इति मा भैषी, यतो हि प्रभुत्वस्य-कोशदण्डयोर्मूलं नीति, साप्युत्साहमपेक्षत इत्युत्साहमूला। नीतिशास्त्रेण हि मन्त्रस्य पञ्चाङ्गानि विविच्यन्ते। कार्यावसरे तु प्राप्ते विनोत्साह निरर्थिका नीति। यथा हि दैवप्रातिकूल्ये व्यर्था लोकस्य कृष्यादिक्रियेति। यद्यपि भीमो न दैववादी, तथापि दैववादरतो युधिष्ठिरस्तदभिमतेन पर्थैव बोधनीय इति दैवं दृष्टान्ततया गृहीतम्। ततश्चोत्साहेन नयस्यापि मूलेन नयसाध्यौ कोशदण्डावुत्पादयिष्येते इति।

अल—नियति लोक इवेत्युपमा। उत्साहस्य सर्वप्राधान्यं व्यङ्ग्यम्।

**अभिमानवतो मनस्विन प्रियमुच्चै. पदमारुरुक्षत ।**
**विनिपातनिवर्तनक्षम मतमालम्बनमात्मपौरुषम् ॥ १३ ॥**

अ०—अभिमानवत. प्रियम् उच्चै पदम् आरुरुक्षतः मनस्विनः विनिपातनिवर्तनक्षमम् आलम्बनम् आत्मपौरुषम् मतम् ( नीतिविदाम् )।

व्याक०—विनिपातस्य निवर्तने क्षमम्-विनिपातनिवर्तनक्षमम्। विनिपात - पततेर्घञ्, निवर्तनम्-भावे ल्युट्, क्षमम्-क्षाम्यते पचाद्यच्। अभिमानवत.- मन्यतेर्घञन्तान्मतुपि ( अभिमानोऽस्यास्तीति ) षष्ठी। आरुरुक्षत.-आरोढुमिच्छति-इति रोहते सन्नन्तात् शतृप्रत्यय। पदमित्यारोहणे कर्म। मन शब्दात्प्रशंसार्थे विनि -मनस्विनः, आलम्बनकर्तरि षष्ठी। पुरुषस्य भाव कर्म वा पौरुषम्-युवादित्वादण्। आत्मना षष्ठीसमास। मतम्-मन्यते "मतिबुद्धिपूजार्थेभ्यश्च" इति वर्तमाने क्तः। 'नीतिविदाम्' इत्यस्य कर्तृपद षष्ठ्यन्तमध्याहार्यम्।

व्याख्या—'कस्याप्यपेक्षया मयि न नीचत्वम्' इति बुद्धे प्रयोजको गुणोऽभिमानः, तद्वतः-मानधनस्य, प्रियम्-स्वस्याभीष्टम्-स्पृहणीयम्, उच्चै.-उन्नतम्, पदम्-स्थानम्, आरुरुक्षत -आरोढुम्-प्राप्तुम्, इच्छत, मनस्विन - धीरस्य पुरुषस्य, विनिपातस्य-पतनस्य-अनर्थस्य, निवर्तने-दूरीकरणे, क्षमम्-समर्थम्, आलम्बनम्-साहाय्यप्रदम्-सहकारि, आत्मपौरुषम्-आत्मन स्वस्यैव ( न तु कस्यचिदन्यस्य सहायस्य ) पौरुषम्-पुरुषस्य कर्म पराक्रमादि, मतम्-नीतिविद्भि. स्वीकृतम्।

भा०—ननु उत्साहे समाश्रितेऽपि नीतिपालनमन्तरेण विनिपात सम्भाव्येत-इति युधिष्ठिरशङ्कायामाह भीमः। आत्माभिमानरक्षिणा धीराणा स्वपुरुषार्थ एव विनिपाताख्यमनर्थं निवर्तयति, न तु कस्यचिदन्यस्यापेक्षा। यथा कश्चिदुन्नत वृक्षपर्वताद्यारोहन्, पदस्खलनजनितपतनपरिहाराय किञ्चि-च्छाखादिकमालम्बते,तथोन्नत स्थानमधिकर्तुमिच्छन् मनस्वी पौरुषमेवावलम्बते-इति नीतिविदा सिद्धान्त ।

अल०—भावार्थोक्तरीत्या पर्वताद्यारुरुक्षता सादृश्यस्य व्यञ्जितत्वादुपमाध्वनि मल्लिनाथ आह। पदस्य विशेषणद्वयम्, मनस्विनश्च विशेषण साभिप्रायमिति परिकरोऽलङ्कार.।

**विपदोऽभिभवन्त्यविक्रम रहयत्यापदुपेतमायति ।**
**नियता लघुता निरायतेरगरीयान्न पद नृपश्रिय ॥१४॥**

अ०—अविक्रम विपद अभिभवन्ति, आपदुपेतम् आयति रहयति, निरायते (नृपस्य) लघुता नियता (अस्ति) अगरीयान् (नृपः) नृपश्रियः पद न (भवति)।

व्याक०—अविद्यमानो विक्रमो यस्य, तम् अविक्रमम्, "नञोऽस्त्यर्थाना वाच्यो वा चोत्तरपदलोप ।" विक्रमशब्दे क्राम्यतेर्घञ्, "नोदात्तोपदेशस्य मान्तस्यानाचमे" इति वृद्धिनिषेध । आपद्भि उपेतम् आपदुपेतम् "कर्तृकरणे कृता बहुलम्"। आपच्छब्दे "सपदादिभ्य क्विप्" भावे, उपपूर्वादिणो निष्ठायाम् उपेत । निर्गता आयतिर्यस्य, तस्य निरायतेः। आयति -यच्छते. क्तिन् । रहयति-चौरादिकाद् अजन्ताद् रहधातो. स्वार्थे णिच्। गुरुशब्दाद-तिशायनेऽर्थे ईयसुनि गरीयान्।

व्याख्या—अविक्रमम्-पुरुषार्थहीन नृपम्, विपद -कृच्छ्राणि, अभिभवन्ति-आक्रामन्ति। आपद्भि -कष्टै, उपेतम्-परिगतम्-आक्रान्त च तम्, *आयति -उत्तरकाल, लक्षणया उत्तरकालभवा कोशदण्डादिसमृद्धिः, रहयति-त्यजति। निरायते -दुष्परिणामस्य-आसन्नक्षयस्य, लघुता-गौरवाभाव निरादरः, नियता-निश्चयेन वर्तते । अगरीयान्-गौरवशून्यो राजा, नृपश्रियः-राजलक्ष्म्या,

* उत्तर काल आयति -इत्यमरः।

पदम्-स्थानम्, न भवति, राजलक्ष्म्या त्यज्यते । यद्वा-हे नृप-राजन्' अगरीयान् श्रिय पद न भवतीति व्याख्येयम् ।

भा॰—उत्साहपराक्रमवत प्रशसा कृता, इदानीं तद्विहीनो निन्द्यते। य पराक्रमवान् न भवति, त विविधानि व्यसनादिकृच्छ्राणि पराभवन्ति, शत्रवस्त पीडयन्ति, पाटच्चरास्तद्राष्ट्रकोशादि विलुण्ठन्ति, सचिवास्त वञ्चयन्तीत्यादि । विपद्भिराक्रान्त च राजान दृष्ट्वा प्रकृतयोऽपि तस्मै करादिक न प्रयच्छन्ति इति कोशहानि , तत एव च सैन्यहानिरपि । ततश्च न कोपि तमाद्रियते । सर्वैरनादृतश्च कथ राजलक्ष्म्या सेव्येत । तस्माद्राजलक्ष्मीमभिलष्यता समाश्रयणीय एव विक्रम ।

अल॰—पूर्वपूर्वस्योत्तरोत्तर प्रति हेतुत्वनिबन्धनात् कारणमाला । विक्रमस्य प्राधान्य व्यङ्ग्यम् । इह 'विपदोऽभिभवन्ति' इति विपच्छब्देन प्रक्रम्य, 'आपदुपेतम्' इति शब्दान्तर न्यस्तम्, तथा नियता लघुता इति 'लघुता' शब्देनोपक्रम , अग्रेतु 'अगरीयान्' इति, तेन प्रक्रमभङ्गो दोष । तत्र चित्रभानुना समाहितम्-अर्थभेदविवक्षणादेकार्थकत्वाभावान्न प्रक्रमभङ्ग इति । तथाहि-आपत्-स्वल्पव्यसनम्, विपत्तु अतिकृच्छ्रम्, आपदा-स्वल्पेनापि व्यसनेनोपेतमायतिस्त्यजति, विपदुपेतस्य किमु वक्तव्यम्-इति कैमुतिकन्यायो व्यञ्जित । तथैव अगरीयान् इत्यत्र प्रत्ययार्थेनातिशयेन नञ सम्बन्ध , तेन च यस्यातिशयित गौरवं न भवति, सोऽपि न राजलक्ष्म्या स्थानम्, लघुता प्राप्तस्तु सर्वथैव गौरवशून्य इति तस्य राजलक्ष्म्या॰ कथैव का-इति ।

**तदल प्रतिपक्षमुन्नतेरवलम्ब्य व्यवसायवन्ध्यताम् ।**
**निवसन्ति पराक्रमाश्रया न विषादेन सम समृद्धय ॥१५॥**

अ॰—तद् उन्नते प्रतिपक्षम व्यवसायवन्ध्यताम् अवलम्ब्य अलम्, पराक्रमाश्रयाः समृद्धय॰ विषादेन सम न निवसन्ति ।

व्याक॰—व्यवसायेन वन्ध्य व्यवसायवन्ध्य , तस्य भाव , ताम् । 'वि' 'अव' इत्येतद्द्वयपूर्वात्स्यतेर्घञ्, "आतो युक् चिण्कृतो "। पराक्रम आश्रयो यासा ताः पराक्रमाश्रया । आश्रय॰-श्रिधातो॰ "एरच्" । उन्नति -नमते क्तिन् । अवलम्ब्य अलम्-"अलखल्वो॰ प्रतिषेधयोः प्राचा क्त्वा" इति क्त्वा,

तत्स्थाने ल्यप् । विषादशब्द सीदतेर्घञन्त । समृद्धि -ऋध्नोते क्तिन् । प्रतिपक्षामिति वन्ध्यताया विशेषणमपि नित्यलिङ्गत्वात् पुसि वर्तते । विषादेन इति "सहयुक्तेऽप्रधाने" इति तृतीया ।

व्याख्या—तद्-यत पौरुषहीन सर्वथा पतति, तस्माद्धेतो , उन्नते - अभ्युदयस्य, प्रतिपक्षम्- *विरोधिनीम्, व्यवसायवन्ध्यताम्-उद्योगशून्यताम्-अनुत्साहम्, †क्षमामिति यावद्, अवलम्ब्य अलम्-नावलम्बनीया क्षमेत्यर्थ । पराक्रम आश्रय -अवलम्बो यासा तथाभूता समृद्धय -सपद , विषादेन समम्-क्षमापरपर्यायेण अनुत्साहेन सह, न निवसन्ति-न स्थितिं लभन्ते ।

भा०—क्षमा ह्याश्रीयमाणा उत्साह तत्साध्यमुद्योग च मूल एव निहन्ति, ततश्च तामाश्रितवतस्तमोरूपो विषाद एव वर्धते, स्वप्नेऽपि न तस्योन्नते सभावना, राजलक्ष्मीश्च नियत ततोऽपसरति । यथानुकूले नायकेऽनुरक्ता नायिका प्रतिकूलादुद्विजते, तथा सपद पराक्रम एवानुरक्ता विषादादुद्विजन्त इति पराक्रमविषादयो पुस्त्वेन समृद्धे स्त्रीत्वेन च व्यज्यत इति चित्रभानुराह ।

अल०—पूर्वार्धस्य वैधर्म्येण सामान्येनोत्तरार्द्धे समर्थनमित्यर्थान्तरन्यासो मल्लिनाथेनोक्त । उन्नते प्रतिपक्षामिति विशेषण परित्यागे साभिप्रायमिति परिकर । निवासशब्दश्चेतनस्य बुद्धिपूर्विका चिरकालव्यापिनीं स्थितिमभिधत्ते, इह तु अचेतनासु सपत्सु तत्प्रयोग इति स्थितिमात्रे तस्य लक्षणा, यथा चेतनो बुद्धिपूर्वक प्रतिकूलाधिष्ठित स्थान त्यजत्येव, तथा सपदो विषादाधिष्ठित त्यजन्त्येवेति व्यङ्ग्यम् । तेन तिरस्कृतवाच्यो ध्वनि ।

अथ चेदवधि प्रतीक्ष्यते कथमाविष्कृतजिह्मवृत्तिना ।
धृतराष्ट्रसुतेन सुत्यजाश्चिरमास्वाद्य नरेन्द्रसपदः ॥१६॥

अ०—अथ अवधि, प्रतीक्ष्यते चेद्, आविष्कृतजिह्मवृत्तिना धृतराष्ट्रसुतेन नरेन्द्रसपद चिरमास्वाद्य कथ सुत्यजा ।

---

* चित्रभानुस्तु विरोधिना शत्रूणा वर्ग प्रतिपक्षशब्देनोच्यते, तथा चैकैवेय क्षमा शत्रुसमूह इव राज्यविरोधिनीत्युक्त भवतीत्याह ।

† युधिष्ठिरेण गुण इत्यभिमतापि क्षमा भामेन व्यवसायवन्ध्यताविषाद-शब्दाभ्या निन्द्यते—इति चित्रभानुराह ।

व्याक०—आविष्कृता जिह्मा वृत्तिर्येन, तेन आविष्कृतजिह्मवृत्तिना । आविष्कृतेति "इदुदुपधस्य चाप्रत्ययस्य" इति षत्वम् । वर्तनं वृत्तिः "स्त्रियां क्तिन्" । (वि) अवधीयते अनेनेत्यवधिः, "उपसर्गे घोः किः" । प्रतीक्ष्यते —इति ईक्षतेः कर्मणि लट्, त्वयेति तत्कर्तृपदमध्याह्रियते, अवधिरित्युक्तं कर्म । आस्वाद्य-पूर्वकाले क्त्वा, तस्य ल्यप् । सुत्यजा इति त्यजतेः "ईषद्-दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्" । धृतराष्ट्रसुतेनेति तत्कर्तृपदम्, सम्पद इत्युक्तं कर्म । कथमिति व्याख्यातपूर्वम् ।

व्या०—अथ इति पक्षान्तरे, त्वया व्यवसायवन्ध्यता नालम्ब्यते, किन्तु अवधिः—द्यूते नियतीकृतं त्रयोदशवर्षात्मकः समयः, प्रतीक्ष्यते-प्रतिपाल्यते इति यदि, तदपि व्यर्थमितिशेषः । यतो हि आविष्कृता-प्रकटिता, जिह्मा-कुटिला, वृत्तिः-व्यवहारो येन, तथाभूतेन धृतराष्ट्रसुतेन-दुर्योधनेन, नरेन्द्र-सम्पदः-राजश्रियः, चिरम्-दीर्घकालम्, त्रयोदश वर्षाणि, आस्वाद्य-उपभुज्य, कथं-केन प्रकारेण, सुत्यजाः-सुखेन त्यक्ष्यन्ते, न त्यक्ष्यन्त एवेत्यर्थः ।

भा०—राजन् ! यदि तवायमभिप्रायो-यद् द्यूतनियतसमयादनन्तरं दुर्योधनो राज्यं दास्यत्येव, किं युद्धेन, तर्हि नैतत्सम्यक् पश्यसि । एतावतीं राज्य-श्रियं स्वायत्तां ज्ञातास्वादो दुर्योधनो न विना युद्धेन त्यक्ष्यति । तत्र हेतुचतुष्टयं विशेषणैर्ध्वनितम्, दुर्योधनो हि धृतराष्ट्रसुतः, धृतराष्ट्रो जन्मान्धोऽपि कथञ्चिद् भ्रातुराच्छिद्य राज्यश्रियं बुभुजे, न तत्याज, ततस्तत्सुतो दुर्योधनोऽविकलाङ्गः कथं त्यजेत् । किं च-दुर्योधनेनारम्भादेव लाक्षागृहदाह-विषान्नभोजन-द्यूताद्याः (जिह्मा) कुत्सिता व्यापाराः कृताः, तेऽपि तथा कृताः, यथा ते प्रकटी-भूताः सर्वैर्ज्ञाताः, (तदर्थमेवाविष्कृतपदोपादानम्) ततश्चैवंविधः कुत्सितः कथं राज्यं त्यजेत् । किं च तेनोपभुक्ता न सामान्याः सम्पदः, किन्तु नरेन्द्र-सम्पदः, ताश्च तेन चिरम् आस्वादिताः-सरसमुपभुक्ताः । ततश्च स त्यजेदित्य-सम्भाव्यमेव ।

अल०—न प्रतीक्ष्यतामवधिरित्यर्थस्य कारणमुखेनाभिधानादप्रस्तुतप्रशंसा । भावार्थोक्तरीत्या परिकरश्च ।

**द्विषतां विहितं त्वयाथवा यदि लब्धा पुनरात्मनः पदम् ।**

जननाथ ! तवानुजन्मना कृतमाविष्कृतपौरुषैर्भुजे ॥१७॥

अ०—अथवा यदि द्विषता विहितम् आत्मनः पदं त्वया पुनः लब्धा, (तर्हि) हे जननाथ ! तव अनुजन्मनाम् आविष्कृतपौरुषैः भुजैः कृतम् ।

व्याक०—अनु जन्म येषां तेषाम्-अनुजन्मनाम् । आविष्कृत पौरुष यैः, तैः आविष्कृतपौरुषैः । द्विषतेति विधानस्य कर्तृपदम्, त्वयेति लाभस्य । लब्धा-लभते कर्मणि लुट्, पदमित्युक्त कर्म प्रथमान्तम् । कृतमित्यलमर्थं, तद्योगे 'गम्यमानापि क्रिया कारकविभक्तेर्निमित्तम्' इति अध्याहृतसाधनक्रिया प्रयोजनक्रिया वा प्रति करणत्वात् तृतीया, भुजैः साध्यम् प्रयोज्यं वा नास्तीत्यर्थः । वस्तुतस्तु कृतम्-यत्सपादनीयम्, तत्सपादितम्, तेन निष्प्रयोजनत्वाद् व्यर्थमिदानीमिदमिति कृतशब्दार्थः । यद्वा-विपरीतलक्षणया कृतम्-न कृतम्, यत्सभावितम्-तन्न कृतम्-तेन व्यर्थमिदमित्यर्थः । तेनालमर्थं फलति, ततश्च तद्योग एव करणे तृतीया व्याख्येया भुजैरिति ।

व्याख्या—अथवा-( पक्षान्तरे ) भवतु नाम दुर्योधनस्य राज्यप्रत्यर्पणे प्रवृत्ति, अथापि यदि द्विषता शत्रुणा, विहितम् नियुक्तम्, अथवा समादितम्-दत्तम्, आत्मनः-स्वस्य ( न तु परकीयम् ) पदम्-स्थानम्-अधिकार, त्वया-भवता, पुनः-भूयोऽपि, लब्धा प्राप्स्यते, तर्हि हे जननाथ-नराधिप ! तव अनुजन्मनाम्-कनिष्ठभ्रातृणाम् अस्माकम्, आविष्कृतपौरुषैः-बहुत्र प्रकटितपराक्रमैः, भुजैः बाहुभिः, कृतम्, अस्माकं बाहूनां विफलतैव स्यादिति ।

भा०—अथ यदि मन्येत-जनापवादभयाद्वा भीष्मादीनामनुरोधाद्वा दुर्योधनो राज्यं प्रत्यर्पयिष्यत्येवेति, तथापि नैतद्युक्तं स्यात् । यतो राजन् ! त्वं नरनाथोऽसि, क्षत्रियत्वाद्विजित्यैव ग्रहणं तव शोभते, नरनाथत्वादन्येभ्यो ददतस्तव शोभा, यदि तु त्वादृशोऽपि परप्रसादेन स्वाधिकारं गृह्णीयात्-तर्हि जगत्प्रसिद्धविक्रमाणां तवानुजानामस्माकं बाहुबलस्य किं प्रयोजनं स्यात् । स्वस्याधिकारोऽपि परनियोगेन-न केवलं परनियोगेन, अपि तु शत्रुनियोगेन प्राप्यते सोऽपि त्वया-राजसूययज्वना, सोऽपि पुनः-अर्थात् पूर्वं लाक्षागृहात्कथंचित्पलाय्यापि धृतराष्ट्रादिप्रसादेनैव स्वाधिकारो लब्ध, तत एव अविभ्यद्भिस्तैश्छलेन स्वदत्तोऽधिकारोऽपहृत, पुनरपि तत एव वाञ्छ्यते, व्यर्थं तर्ह्यस्माकं पौरुषमित्यत्र

किमु वक्तव्यम् ।

अल०—जननार्थेति विशेष्यस्य साभिप्रागत्वात्परिकराङ्कुर । अस्माक पराक्रमो व्यर्थ ' इत्यर्थस्य भङ्ग्यन्तरेणोक्त्या पर्यायोक्तम् । पौरुषाविष्कार पूर्वसिद्ध एवानूद्यत इति न विधेयाविमर्ष । व्यङ्ग्यानि तु भावार्थ उक्तानि । भामगतस्य गर्वस्य प्राधान्येनाभिव्यञ्जनाद्भाव वनि ।

**मदसिक्तमुखैर्मृगाधिप करिभिर्वर्तयते* स्वय हतै ।**
**लघयन् खलु तेजसा जगन्न महानिच्छति भूतिमन्यत ॥ १८ ॥**

अ०—मृगाधिप, मदसिक्तमुखै स्वय हतै करिभि वर्तयते, तेजसा जगत् लघयन् महान् अन्यत भूतिम् न इच्छति खलु ।

व्याक०—मृगाणामधिपो मृगाधिप । अधिपाते ' आतश्चोपसर्गे ' इति कप्रत्यये अधिप । मदेन सिक्त मुख येषा तै. मदसिक्तमुखै । तृतीयातत्पुरुषगर्भितो बहुव्रीहि । सिक्तमिति सिच्यते क्त । करोऽस्यास्तीति करी ' अत इनिठनौ ' । वर्तयते-चौरादिकात्स्वार्थणिजन्ताद् वृतुधातोर्लट्, भावादिकाद्धेतुमण्णिचि तु " अणावकर्मकाच्चित्तवत्कर्तृकाद् " इति परस्मैपद दुर्वार स्यादिति मल्लिनाथ । पर चौरादिको वृति सकर्मकाधिकारे पठ्यते, न चात्र सकर्मकतया तेन व्याख्यातः । चित्रभानुस्तु ' वर्तयति ' इत्येव पाठमुररीकरोति। परस्मैपद च क्रियाफलस्य कर्त्रभिप्रायविषयत्वाभावात्साधयति, यतो हि सिहस्य मानरक्षणार्थमेव प्रवृत्ति, प्राणधारण तु आनुषङ्गिकमिति तत्र कर्त्रभिप्रायाभाव । " अणावकर्मकाद् " इति परस्मैपदे तु क्रियाफलस्य कर्त्रभिप्रायताभावसाधनप्रयासो विफल एव । कर्त्रभिप्रायेपि क्रियाफले तेन परस्मैपदविधानात् । वस्तुतस्तु हेतुमण्णौ ' प्राणा वर्तन्ते ' तान् मृगाधिपो वर्तयते इत्येव प्रेरणा युक्ता प्रतीयते । तथा च अणौ चित्तवत्कर्तृकत्वाभावान्नित्य परस्मैपद न प्राप्नोत्येवेति पाठद्वयमपि विवक्षाभेदाद्युक्त प्रतीम । लघु करोति लघयति, णिच्, इष्ठवद्भावाट्टिलोप । तत शता ।

व्याख्या—मृगाधिप -सिह , मदेन-दानवारिणा, सिक्तम्-आर्द्रम्, मुख येषा तथाभूतैः-मदवर्षिभि , स्वयम्-आत्मनैव, हतै -व्यापादितै , करिभि·-

* वर्तयति-इति चित्रभानुसमत पाठ. ।

गजे, वर्तयते-प्राणान् धारयेति । *तेजसा-प्रभावेण जगत्-सर्वं लोकम् लघयन्-स्वापेक्षया लघूकुर्वन्, महान्-तेजस्वी, अन्यत -स्वभिन्नात् पुरुषात् भूतिम्-समृद्धिम्, नेच्छति, खलु-एषा तेजस्विषु प्रसिद्धिरस्ति ।

भा०—राजन्! यो हि स्वप्रभावेण सर्वमपि जगदत्येतुमिच्छति स कदाचिदपि परैर्दत्ता समृद्धि न कामयते, स्वबलेनैवार्जित भोक्तुमिच्छति, इदमेव च महत्त्वलक्षणम्. परपिण्डोपजीविन कुतो महत्त्व स्यात् । यथा हि वनराज सिंह स्वमहत्त्व रक्षति, स कदापि †परालीढमामिष न भुङ्क्ते, स्वयमेव भोजनाय मासमुत्पादयति, तदपि न क्षुद्रान् पशून् अर्दयित्वा, अपि तु मदवर्षिणो गजेन्द्रान् स्वय हत्वा । तेनैव दृष्टान्तेन महद्भिर्वर्तितव्यम् ।

अल०—उत्तरार्द्धोक्त सामान्यमत्र प्रकृतम । तच्च पुरस्तादेव विशेषेण समर्थितमित्यर्थान्तरन्यास । महानिति विशेष्यस्य साभिप्रायत्वात्परिकराङ्कुर ।

**अभिमानधनस्य गत्वरैरसुभि स्थास्नु यशश्चिचीषत ।**
**अचिरांशुविलासचञ्चला ननु लक्ष्मी. फलमानुषङ्गिकम् ॥१९॥**

अ०—अभिमानधनस्य गत्वरै असुभि, स्थास्नु यश चिचीषत (महत ) अचिरांशुविलासचञ्चला लक्ष्मीः आनुषङ्गिक फलम् (अस्ति) ननु ।

व्याक०—अभिमान एव धन यस्य, तस्याभिमानधनस्य । अचिरमंशवो यस्याः सा अचिरांशु, तस्या विलास, स इव चञ्चला, अन्ते "उपमानानि सामान्यवचनै." इति समास । विलासशब्दो घञन्त । गत्वरै.-गमधातो-स्ताच्छील्ये क्वरप् प्रत्यय "गत्वरश्च" इति निपातित. । स्थास्नु-तिष्ठते "ग्लाजिस्थश्च ग्स्नु" इति गित् स्नुप्रत्यय । चिचीषतः-चिनोते सन्नन्ता-च्छतृप्रत्यय । अनुपूर्वकात्सञ्जधातोर्घञ्, तत अनुषङ्गेण निर्वृत्तम्-आनुषङ्गिकम्. शपिकठक् ।

व्याख्या—अभिमान -सत्त्वकृतो मनोविकास, स्वात्मगौरवबुद्धिः, स एव धनम्-सपत्ति, यस्य तथाभूतस्य क्षत्रियस्य, गत्वरै -गमनशीलै -अस्थिरै,

---

* तेजो बले प्रभावे च ज्योतिष्यार्चिषि रेतसि-इति वैजयन्ती ।

† न हि सिंहः परालीढमामिष भोक्तुमिच्छति—इति भगवत आदि-केवलज्ञाकिरुक्तिरत्रोपजीविता ।

असुभि -प्राणैः -( करणभूतैः ) प्राणान् व्ययीकृत्येति यावत्, स्थास्नु-स्थिरम्, यशः कीर्तिम्, चिचीषत -सग्रहीतुमिच्छत सत, अचिराशो -विद्युत, विलास स्फुरणम्, तद्वत् चञ्चला-अस्थिरतरा, लक्ष्मी -सपत्, आनुषङ्गिकम्-अनुषङ्ग-जातम्-अन्वाचयशिष्टम् (प्रधानप्रयोजनमुद्दिश्य प्रवर्तमानस्य कर्तुः, अवर्जनीय-फलान्तरजनकोऽवान्तरव्यापारोऽनुषङ्गः, तेन निर्वृत्तम्-इति चित्रभानु ) फलम्-प्रयोजनम्, अस्ति, ननु-निश्चयेन ।

भा०—राजन् ! न च दुर्योधनाल्लक्ष्मीमवाप्य कथमपि त्वया सतुष्टेन भवितव्यम्-यतो हि मनस्विना न लक्ष्मीप्राप्तिर्मुख्यमुद्देश्यम्, यश प्राप्तिरेव तेषा प्रवृत्तेरुद्देश्य भवति । स्थिरतरस्य यशसश्चयनाय ( सग्रहाय ) ते अस्थिरान् *प्राणानपि सुख त्यजन्ति, किं पुनर्विद्युद्विलासचपला राजलक्ष्मीम् । यश.सपादनाय तेषा या प्रवृत्ति, तयैव लक्ष्मीरपि विना यत्नान्तर प्राप्यते-इत्यन्यदेतत् । तच्च यशो दुर्योधनप्रसादेन राज्यमवाप्य न लभ्यते, प्रत्युत हीयेत । विजित्य राज्यप्राप्त्यैव क्षत्रियस्य यशो विद्योतत इति । ननु यशोऽस्माक जगति राजसूयादिभिर्विद्योतत एवेति चेत्तत्रोक्तम्-चिचीषत इति । महति प्रासादे यथा इष्टकोपरि इष्टका भूयो भूयश्चीयन्ते, तथा मनस्विनो यशस उपरि यशश्चेतुमिच्छन्ति, न तु यशसा परितुष्यन्तीति । द्विविधा लक्ष्मी -साम्राज्यलक्ष्मीनियतैका, तद्विकारभूता समये समये प्राप्यमाणा समृद्धिर्द्वितीया । तत्र द्वितीयाया विद्युद्विलाससाम्यमत्रोक्तम्, साम्राज्यलक्ष्म्यास्तु विद्युत्साम्य तेन गम्यमिति चित्रभानु ।

अल०—अस्थिरप्राणविनिमयेन स्थिरयश प्राप्तिरिति परिवृत्तिरलङ्कार. । अभिमानस्य धनत्वेन रूपणाद्रूपकम् । अचिराशुविलासचञ्चलेति वाचकलुप्तो-पमा । तस्य 'गत्वरै' †'स्थास्नु' इत्येतयोश्च साभिप्रायत्वात्परिकर ।

**ज्वलित न हिरण्यरेतस चयमास्कन्दति भस्मना जन ।**
**अभिभूतिभयादसूनत सुखमुज्झन्ति न धाम मानिन ॥२०॥**

---

* पुंसि भूम्न्यसव प्राणा -इत्यमर. ॥

† 'यश शरीरे भव मे दयालु', 'पिण्डेष्वनास्था खलु भौतिकेषु' इति कालिदासोक्तिच्छायात्र ।

अ०—जन. भस्मना चयम् आस्कन्दति, ज्वलित हिरण्यरेतसं न ( आस्कन्दति ) अतः मानिन अभिभूतिभयाद् असून् सुखम् उज्झन्ति, धाम न ( उज्झन्ति ) ।

व्याक०—हिरण्य रेतो यस्य, त हिरण्यरेतसम् । चीयतेऽस्मिन्, चयः, अधिकरणे "एरच्" । ज्वलितम्-इति वर्तमाने काले कर्तरि निष्ठा मल्लिनाथ आह, अकर्मकत्वात् । "गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च" इति कर्तरि निष्ठाविधायके सूत्रे चकाराद्वर्तमानेऽपि क्वचिदिति तेनैवोक्तम् । चित्रभानुस्तु भूत एव निष्ठामाह । ज्वलनपर्याप्तिबोधनार्थं भूतकालिकप्रत्ययोपादानमिति च समर्थयते । यदि तु वर्तमान एवार्थ इष्टः, तर्हि "आदिकर्मणि निष्ठा वक्तव्या" इति वार्तिकेनोपपाद्य, ज्वलितम्-प्रारब्धप्रज्वलनम्-इति तु वयम् । केचित्तु "मतिबुद्धिपूजार्थेभ्यश्च" इति सूत्रे चकारोऽनुक्तसमुच्चयार्थं, तेन क्वचिदन्यत्रापि वर्तमाने क्त इत्याहुः । पूजार्थ एव वात्र ज्वलितशब्द इत्यप्युक्तिसम्भव । भयम्-"भयादीनामुपसख्यानम्" इति नपुसके भावे अच्, भयादिति हेतौ पञ्चमी ।

व्याख्या—जन -प्राकृतोऽपि लोकः, भस्मनाम्, चयम्-राशिम्, आस्कन्दति-पादादिना आक्रामति, ज्वलितम्-दीप्तिमन्तम्, *हिरण्यरेतसम्-अग्निम् न आक्रामति । अत -निस्तेजसोऽभिभवदर्शनाद्धेतो, मानिनः-अभिमानवन्तो मनस्विन, अभिभूते -पराभवस्य, भयाद्, असून्-प्राणान्, सुखम्-विनैव खेदम्, उज्झन्ति-त्यजन्ति, धाम-तेज, न त्यजन्तीति । चित्रभानुस्तु अभिभूतिभयाद् हिरण्यरेतस लोको नास्कन्दति' इति व्याचख्यौ ।

भा०—लोके निस्तेजस परिभव. प्रत्यक्ष दृश्यते, यत्प्रज्वलन् पावको न केनापि स्पृश्यते, तस्यैव परिणतिभूत भस्म तु पादेनाप्याक्रम्यते । तत एव परिभव सोढुमशक्नुवन्तो मनस्विनस्तेजोरक्षाप्रसङ्गे प्राणानपि त्यजन्ति, न तु तेज कदापि त्यजन्ति । तस्मात्त्वयापि तेजोरक्षार्थमेव यतितव्यम्, सा च पराक्रमसाध्येति पराक्रम एव मतिर्विधेया । भस्मनामिति बहुवचनेन यथा नि सारकिंशुकादिभस्म, तथा गुरुतरखदिरादिभस्माप्याक्रम्यत एवेति

* हिरण्यरेता हुतभुग् दहनो हव्यवाहन —इत्यमर ।

ससारस्यापि निस्तेजस परिभवो द्योतित, हिरण्यरेतसमिति तेजस्विन आराध्यमानस्य हिरण्यादिसमृद्धिदातृत्वमपि द्योतितमित्यादि चित्रभानु ।

अल०—अत्रापि पूर्वश्लोक (१८) वदर्थान्तरन्यासो मल्लिनाथेनोक्त । वस्तुतस्तु नात्र सामान्येन समर्थन दृश्यते, अपि तु तेजसोऽपरित्यागस्य हेतुना समर्थन कृतमिति काव्यलिङ्गमुचितम् ।

**किमपेक्ष्य† फल पयोधरान् ध्वनत प्रार्थयते मृगाधिपः ।**
**प्रकृति खलु सा महीयस सहते नान्यसमुन्नति यया ॥२१॥**

अ०—मृगाधिप किं फलम् अपेक्ष्य ध्वनत. पयोधरान् प्रार्थयते । खलु सा महीयम: प्रकृति. अस्ति, यया अन्यसमुन्नतिं न सहते ।

व्याक०—ध्वनन्तीति तान् ध्वनत., शत्रन्तम् । धरन्तीति धरा., तान् पयोधरान् । पचाद्यच् । पयस उपपदत्वे तु कर्मण्यणि पयोधारानिति स्यात् । प्रार्थयते-प्रपूर्वकादर्थयतेर्लट्, यद्वा प्रा-इति तृतीयान्त पृथक् पदम्-विश्वपावत्, अर्थयते-इति च भिन्ना क्रियेति द्विविध मल्लिनाथेन व्याख्यातम् । महीयस.-महच्छब्दादतिशयार्थ ईयसुन् तद्धितः । मत्वाट्टिलोप । ययेति हेतौ तृतीया ।

व्याख्या—मृगाधिप -सिंहः, किम्, फलम्-प्रयोजनम्, अपेक्ष्य-अभिलष्य, ध्वनतः-गर्जत, पयोधरान्-मेघान्, प्रार्थयते-*अभियाति, स्पर्द्धया तान् प्रतिगच्छति । यद्वा-†प्रा-अवरोधेन, अर्थयते, अवरुणद्धीत्यर्थ । न किमपि फल तस्यापेक्षितम्, अपि तु खलु-निश्चयेन, सा-एवविधा, महीयस -अतिशयेन महतो जीवस्य, प्रकृतिः-स्वभाव, अस्ति, यया-प्रकृत्या हेतुभूतया, अन्यस्य-परस्य, उन्नतिम्-स्वापेक्षया वृद्धिम्, न सहते-न मृष्यति, अपि तु ततोऽप्यधिकामुन्नतिमभिवाञ्छति ।

भा०—किं च राजन्! आस्ता प्रयोजनविचार, महान्त. स्वभावेनैव

---

* इत आरभ्याष्टादशाना श्लोकाना व्याख्यान चित्रभानुकृतायां शब्दार्थ-दीपिकाया न दृश्यते ।

† 'किमवेक्ष्य इति पाठान्तरम् ।

* याच्ञायामभियाने च प्रार्थना कथ्यते बुधै ' इति केशव ।

† प्रा स्याद्याच्ञावरोधयोः—इत्यभिधानम् ।

परस्योन्नति दृष्ट्वा नोदासीना भवन्ति, अपि तु ततोऽप्याधिक्यमाप्तु प्रयतन्त एव । अन्यथा परस्याधिक्ये महीयस्त्व तेषा सुतरा विहन्येत । नेयमीर्ष्या, अपि तु स्पर्द्धा । परस्योन्नति दृष्ट्वा चेतस्यभिज्वलनं तस्य विनाशानुचिन्तन च ईर्ष्या, ततोऽप्याधिक्यमाप्तु प्रयतन तु स्पर्द्धा । ईर्ष्या नीतिविद्भिर्दोषपक्षे निक्षिप्यते, स्पर्द्धा तु गुणपक्षे । सोऽयमर्थो दृष्टान्तेन समर्थ्यते-घनगर्जन श्रुत्वा शार्दूल 'कोय मदग्रे गर्जति, अभिभूय वशीकुर्यामेनम्' इति गुहाया निष्क्रम्य साटोप गर्जत्युत्पतति चेति प्रसिद्धि । तस्य खलु किं प्रयोजनम्, कि तेन मेघादाच्छेद्यम्, न किमपि । प्रकृत्यैव स स्वस्य परापेक्षयावनति न सहते । सोऽयमेव मनस्विना स्वभाव ।

अल०—उत्तरार्द्धोक्तसामान्यस्य पूर्वार्धगतविशेषेण पुरस्तादेव समर्थनादर्थान्तरन्यास ।

**कुरु तन्मतिमेव विक्रमे नृप ! निर्धूय तम प्रमादजम् ।**
**ध्रुवमेतदवेहि विद्विषा त्वदनुत्साहहता विपत्तय ॥२२॥**

अ०—( हे राजन् ) तत् प्रमादज तम निर्धूय विक्रमे मतिम् एव कुरु, विद्विषा विपत्तय त्वदनुत्साहहता ( सन्ति ) एतद् *ध्रुवमवेहि ।

व्याक०—प्रमादाज्जातम् प्रमादजम्, "पञ्चम्यामजातौ" इति डप्रत्यय, टिलोप । प्रमादशब्दो घञन्त । तव अनुत्साहेन हता-त्वदनुत्साहहता, "प्रत्ययोत्तरपदयोश्च" इति युष्मदस्त्वदादेश । विद्विषाम्-द्वेष्टेः "सत्सूद्विष-" इत्यादिना क्विप् । विपत्तिरिति पद्यते क्तिन्नन्तम् । ध्रुवम्-'ध्रु गतिस्थैर्ययो' पचाद्यच्, कुटादित्वान्न गुण । अवेहीत्यादि व्याख्यातम् ।

व्याख्या—हे राजन्, *तत्-तस्मात्-पराक्रमप्राधान्याद्धेतो, प्रमादजम्-शास्त्रानुकूल-शिष्टजनोचितप्रवृत्तिप्रतिवन्धको मनोदोष प्रमाद-अनवधानता, ततो जातम्-उत्पन्नम्, तम-मोहम्, आलस्यप्रधानमनुत्साहम्, निर्धूय-दूरीकृत्य, विक्रमे-पौरुषे, पौरुषविषयिणीम्, मतिमेव-बुद्धिमात्र कुरु, बुद्धौ पौरुषाधानमेव तव पर्याप्तम्, शारीरचेष्टादिक तु तव नापेक्ष्यते, त्वदाज्ञया सर्वमस्माभि साधयिष्यत इति । (मल्लिनाथस्तु विक्रम एव मतिं कुरु शत्रुषु विक्रममेवाङ्गीकुरु,

*. 'यत्तद्यतस्ततो हेतौ'—इत्यमर ।

न तु सामदानाद्युपायान्तरमिति व्याचख्यौ, तद्वात्या एवकारस्य अन्यत्र स्थितत्वाद् 'अस्थानस्थपदता' दोषो दुर्निवार ।) विद्विषाम्-शत्रूणाम्, विपत्तय -आपद.-पतनानि, त्वदनुत्साहहता -तव अनुत्साहेनैव प्रतिवद्धा इति *ध्रुवम्-निश्चितम्, अवेहि-जानीहि ।

भा०—पौरुषालम्बने सत्यपि जय. 'स्याद्वा न वेति सशयस्तु त्वया न कार्यः, केवल त्वया 'पौरुष करणीयम्' इति बुद्धि कर्तव्या । तावन्मात्रेणैव शत्रवो हता इति निश्चितं ज्ञेयम् । तवानुत्साहेनैव वय प्रतिवद्धा. स्म , तत एव च शत्रवो जीवन्ति, सपद चानुभवन्तीति । त्वयावलम्बित उत्साहे अस्माभि. शत्रुक्षय कृत एवेति जानीहि ।

अलं०—तवोत्साहमात्रेण शत्रवो विपद्येरन्नित्यर्थस्य वैधर्म्येणोक्तत्वादस्फुटा 'अक्रमातिशयोक्ति' ।

**द्विरदानिव दिग्विभावितांश्चतुरस्तोयनिधीनिवायत ।**
**प्रसहेत रणे तवानुजान् द्विषता क. शतमन्युतेजस ॥२३॥**

अ०—दिग्विभावितान् आयत. चतुर द्विरदानिव, तोयनिधीनिव, शतमन्युतेजमः तव अनुजान् रणे द्विषताम् ( मध्ये ) कः प्रसहेत ।

व्याक०—दिक्षु विभावितान्-दिग्विभावितान्, विभावितानिति ण्यन्ताद्भवते क्त । द्वौ रदौ येषा तान् द्विरदान् । शतमन्युतेज इव तेजो येषा तान् शतमन्युतेजस., मध्यमपदलोप , लाक्षणिकपूर्वपदो वा बहुव्रीहि । आयत -आङ्पूर्वकादेते शतृप्रत्ययः, द्वितीयावहुवचनम् । तोयनिधीन्-निधीयतेऽस्मिन्निति निधि , "कर्मण्यधिकरणे च" इति किप्रत्यय । अनुजातानित्यनुजान् । "अन्येष्वपि दृश्यते" इति जनेर्ड । रणन्त्यस्मिन्निति रण , "घनर्थे कविधानम्" इति क । प्रसहेत-सहधातोः शक्यार्थे लिङ् "शकि लिङ् च" ।

व्याख्या—दिक्षु सर्वासु विभावितान्-समानितान्, स्थितान्, प्रसिद्धान् वा, आयत -अभिमुखम् आगच्छत , चतुर.-चतु सख्याकान् (विशेषणत्रयमिद गजेषु समुद्रेषु अनुजेषु च समानार्थमेव युज्यते ) द्विरदानिव-दिग्गजसदृशान्, तोयनिधीनिव-समुद्रसदृशान्, शतमन्युतेजस.-इन्द्रतुल्यविक्रमान्, तव अनुजान्-

* 'ध्रुव नित्ये च निश्चिते' इति शाश्वत ।

अस्माश्चतुरो भ्रातॄन्, रणे-सग्रामे, द्विषताम्-शत्रूणा मध्ये, क प्रसहेत-क सोढु शक्नोति । न कोऽपीत्यर्थ ।

भा०—राजन् ! यथा सक्रोधमभिमुखमागच्छन्तश्चत्वारो दिग्गजा न केनापि सोढु ( निवारयितुम् ) शक्या , यथा वा अभिमुखमाप्लावयन्तश्चत्वारः समुद्रा न केनापि सोढु शक्याः, तथा सग्रामे पराक्राम्यन्तस्तव चत्वारो लघुभ्रातर इन्द्रतुल्यविक्रमा वय शत्रुषु न केनापि सोढुं शक्या । अस्मासूद्यतेषु शत्रून् नष्टानेव विद्धि । यथा दिग्गजा समुद्राश्च चतसृषु दिक्षु विश्रुता तथा तवानुजा अपि । तवैवाय प्रभाव , यतस्तवानुजत्वादेव वय प्रसिद्धा इति-तवेति षष्ठ्या द्योत्यते ।

अल०—मालोपमा । भीमगतो वीररसोऽत्र पुष्टिं गतः, शत्रव आलम्यनम् , प्रौढोक्त्या व्यङ्ग्यो गर्व सञ्चारी । इयमेव प्रौढोक्ती रसस्याप्यनुभाव. ।

**ज्वलतस्तव जातवेदस. सतत वैरिकृतस्य चेतसि ।**
**विदधातु शम शिवेतरा रिपुनारीनयनाम्बुसन्तति ॥२४॥**

अ०—तव चेतसि सतत ज्वलतः वैरिकृतस्य जातवेदस शम शिवेतरा रिपुनारीनयनाम्बुसन्तति विदधातु ।

व्याक०—वैरिभि कृतस्य वैरिकृतस्य, "कर्तृकरणे कृता बहुलम्" । वैरशब्दादिनिप्रत्यये वैरी 'वैरमस्यास्तीति' । रिपूणा नार्य , तासा नयनानि, तेषामम्बूनि, तेषा सन्तति -रिपुनारीनयनाम्बुसन्तति । नरशब्दात् 'नृनरयोर्वृद्धिश्च" इति ङीनि वृद्धौ च नारी । नयनमिति नयतेः करणे ल्युडन्तम्, 'नीयते अनेनेति' । सपूर्वकात्तनोते स्त्रिया क्तिनि सन्ततिः । सपूर्वकात्तनोते क्तप्रत्यये सततम्, तत्रैव "समो वा हिततत्तयो " इति मकारलोपे सततम् । ज्वलतीति तस्य ज्वलत , शत्रन्तम् । शमम्-शाम्यतेर्घञ्, "नोदात्तोपदेशस्य मान्तस्यानाचमे " इति वृद्धिनिषेधः ।

व्याख्या—तव-भवत., चेतसि-मनसि, सततम्-निरन्तरम्, ज्वलत.-दीप्यमानस्य, वैरिभि -शत्रुभि., कृतस्य-उत्पादितस्य, जातवेदस -क्रोधाग्ने , शमम्-शान्तिम्, शिवाद्-मङ्गलाद्, इतरा-अन्या, अमङ्गला, रिपुनारीनयनाम्बुसन्तति -शत्रुस्त्रीणा नयनाश्रुधारा, विदधातु-करोतु ।

भा०—राजन् ! त्वं यद्यपि धीरतया न प्रकाशयसि तथापि तव मनस्वितया स्फुटमनुमीयते-यच्छत्रुभिरनयं कृत्वा समुत्पादितः क्रोधोऽग्निमदृशस्तव मनसि ज्वलत्येव । तस्य चास्याग्नेर्जलेनैव शान्तिर्भविष्यति, विलक्षणस्यास्याग्नेः निर्वापणाय जलमपि विलक्षणमेवापेक्षितम् त्वदाज्ञया हतानां शत्रूणां स्त्रियो वैधव्यमाप्य यदा रोदिष्यन्ति, तदा तेनामङ्गलेन जलेन अमङ्गलस्यास्याग्नेः शान्तिः स्यात् । तथा च स्वीयमनोऽग्निशान्तये शत्रुव्यापादनमावश्यकमेवेति ।

अल०—क्रोधस्य विषयस्य निगरणात्, जातवेदःपदेनैव तद्बोधनादतिशयोक्तिः । तत्र भेदे अभेदरूपामतिशयोक्तिं मल्लिनाथ आह । वयं तु कुवलयानन्दादिमतेन रूपकातिशयोक्तिमेव ब्रूमः । 'त्वया शत्रवो व्यापादनीयाः' इत्यर्थस्य भङ्गिवैचित्र्येणाभिधानात्पर्यायोक्तम् । क्रोधोऽत्र प्राधान्येन व्यक्तः ।

**इति दर्शितविक्रियं सुतं मरुतः कोपपरीतमानसम् ।**

**उपसान्त्वयितुं महीपतिर्द्विरदं दुष्टमिवोपचक्रमे ॥ २९ ॥**

अ०—इति दर्शितविक्रियम् कोपपरीतमानसम् मरुतः सुतम् दुष्टं द्विरदमिव उपसान्त्वयितुं महीपतिः उपचक्रमे ।

व्याक०—दर्शिता विक्रिया येन, तं दर्शितविक्रियम् । णिजन्तात्पश्यतेर्निष्ठायां स्त्रीत्वे दर्शिता, महीपतिरेव प्रयोज्यकर्ता । विक्रिया विपूर्वात्करोतेः "कृञः श च" इति शप्रत्ययः, रिङ्, इयङ् । कोपेन परीतं मानसं यस्य, तं कोपपरीतमानसम् । कुप्यतेर्घञि कोपः । परिपूर्वादेतेर्निष्ठायां परीतम् । सुतम्- 'षु प्रसवैश्वर्ययोः' इत्यादादिकान्निष्ठा । दुष्यतेः कर्तरि निष्ठायां दुष्टः । उपचक्रमे- "प्रोपाभ्यां समर्थाभ्याम्" इत्युपक्रमार्थे आत्मनेपदम् ।

व्याख्या—इति-पूर्वोक्तेन प्रकारेण-उद्धतशब्दप्रयोगेण, दर्शिता-प्रकटीकृता विक्रिया-मनोविकारः क्रोधरूपो येन तथाभूतम्, (द्विरदपक्षे तु विक्रिया-शुण्डाचालनचीत्कारादिलक्षणा येनेति योज्यम्) कोपेन-क्रोधेन, परीतम्-व्याप्तम्, मानसम्-मनो यस्य तथाभूतम्, मरुतः सुतम्-भीमसेनम्, दुष्टम्-दोषं प्राप्तम्, द्विरदम्-गजमिव, उपसान्त्वयितुम्-सामप्रयोगेण शान्तं कर्तुम्-दोषमपनेतुम्, महीपतिः-राजा युधिष्ठिरः, उपचक्रमे-प्रवृत्तः ।

भा०—राजा दृष्टम्-मत्तमतङ्गज इव भीमोऽयं क्रोधाख्यदोषेणाक्रान्तस्त-

जानितान् विकारान् प्रकटयति मरुतश्चाय सुत इति चापलमौद्धत्य च विशेषेणास्मिन् सभावितम्. नाय निर्भर्त्स्य शक्यो वशीकर्तुम्, न च त्याज्य , प्रियभ्रातृत्वाद्, वहुप्रयोजनसाधकत्वाच्च । तस्मात्साम्नानुनेतव्य -इति विचार्य सामप्रयोगेण भीममनुनेतु महाराज प्रवृत्त । दुष्टोऽपि गजो न त्यज्यते, अपि तु कथाचिद्विनीय वशे क्रियत एव ।

अल०—उपमा । भीमस्य शौर्यमेव न तु विचार इत्युपमया व्यज्यते । मरुत सुत इति भीमस्याभिधानमत्र मनश्चाञ्चल्यं समर्थयमान चमत्कारि ।

**अपवर्जितविप्लवे शुचौ हृदयग्राहिणि मङ्गलास्पदे ।**
**विमला तव विस्तरे गिरा मतिरादर्श इवाभिदृश्यते ॥ २६ ॥**

अ०—अपवर्जितविप्लवे शुचौ हृदयग्राहिणि मङ्गलास्पदे गिरा विस्तरे आदर्श इव विमला तव मति अभिदृश्यते ।

व्याक०—अपवर्जितो विप्लवो यस्मात्, तस्मिन् अपवर्जितविप्लवे । वर्जित इति णिजन्तान्निष्ठान्तम् । विप्लव -प्लवते ' ऋदोरप्", हृदयं गृह्णाति तच्छीलो हृदयग्राही, तस्मिन्, "सुप्यजातौ णिनिस्ताच्छील्ये" । आस्पदे-आङ्पूर्वकात् पद्यते घञर्थे कप्रत्यये "आस्पद प्रतिष्ठायाम्" इति सुट् । गिराम्-गिरते. क्विवन्तम् । विस्तरे-' प्रथने वावशब्दे" इति घञ 'अशब्दे' इति पर्युदासात् ऋदोरप्" । अभिदृश्यते-कर्मणि लट् । मति कर्म, मयेति कर्ताध्याहार्य ।

व्याख्या—अपवर्जित -दूरीकृत , विप्लवः-प्रमाणवाधः, यस्मात्तथाभूते, (दर्पणपक्षे विप्लव'-मलसक्रम , सोऽपवर्जितो यस्मात्तथाभूते) शुचौ-पवित्रे-विशुद्धसुन्दरशब्दविन्यासवति, (दर्पणपक्षे तु लोहशुद्धिविशिष्टे) हृदयग्राहिणि-मनोहरे ( उभयत्र समानम् ) मङ्गलास्पदे-हितार्थप्रतिपादकत्वाच्छुभदातरि (दर्पणपक्षे-*मङ्गलवस्तुत्वेन प्रसिद्धे) गिराम्-भवदुक्ताना वाचाम्, विस्तरे-प्रपञ्चे, आदर्श इव-दर्पणसदृशे, विमला-विशदा, तव, मति -बुद्धि , अभिदृश्यते-मया प्रत्यक्षमिव ज्ञायते, स्पष्ट प्रकाशत इति यावत् ।

भा०—युधिष्ठिरो वक्ति-भीम ! यस्त्वया वाक्प्रपञ्च उदाहृत -तस्मिन्न

* 'रोचन चन्दन हेम मृदङ्ग दर्पण मणिम् । गुरुमग्निं तथा सूर्य प्रात पश्येत् सदा बुध ' इति पुराणे ।

क्वापि प्रमाणानां त्याग , शब्दाश्च सुन्दरा , श्रुतमात्र एवायं मन आकर्षति, अनुष्ठीयमानश्चास्योपदेशो मङ्गलं सम्पादयिष्यति, एवंविधं वाग्विस्तरं श्रुत्वा तव बुद्धिमत्ता सुस्फुटं प्रकाशते । न हि बुद्धिहीन कश्चिदेवमभिदध्यादिति । यथा मलरहिते शुद्धे दर्पणे सर्वं वस्तु स्फुटं दृश्यते-तद्वत् तव बुद्धिरस्मिन वाक्प्रपञ्चे दृश्यत इति स्तुति ।

अल०-आदर्श इवेति श्लेषानुप्राणिता पूर्णोपमा । मतिप्रकाशने विशेषणानि साभिप्रायाणीति परिकर । मतेर्दर्शनममूर्तत्वाद्बाधितम्, ज्ञानसामान्यं लक्ष्यम्, स्फुटप्रकाशो व्यङ्ग्य ।

**स्फुटता न पदैरपाकृता न च न स्वीकृतमर्थगौरवम् ।**
**रचिता पृथगर्थता गिरा न च सामर्थ्यमपोहितं क्वचित् ॥ २७ ॥**

अ०—पदै. स्फुटता न अपाकृता, च अर्थगौरवं न स्वीकृतम् (इति) न, गिरा पृथगर्थता रचिता, च क्वचित् सामर्थ्यं न अपोहितम् ।

व्याक०—अर्थस्य गौरवम्-अर्थगौरवम् । षष्ठीसमास । गुरुशब्दाद्युवादित्वाद्भावेऽणि गौरवम् । ननु गौरवशब्दस्य गुणवाचकत्वात् "पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन" इति समासनिषेध प्राप्नोति, इति चेदत्र मल्लिनाथ । ये शुक्लादय शब्दा *गुणवाचका गुणिवाचकाश्च भवन्ति, 'पटस्य शुक्लम् रूपम्, शुक्ल पट ' इति, तद्योगे पूरणगुणेतिनिषेध , गौरवादि शब्दास्तु केवल गुणवाचका एवेति तद्योगे न निषेध., तदेतदुक्तमभियुक्तै.- 'तत्स्थैश्च गुणै षष्ठी समस्यते' इति । कौमुदीकारस्तु, 'अनित्योऽयं गुणेन निषेध , "तदशिष्यं सञ्ज्ञाप्रमाणत्वात्" इत्यादिनिर्देशात्, तेन अर्थगौरवम्' 'बुद्धिमान्द्यम्' इत्यादि सिद्धम्, इत्याह । पृथग् अर्थो यस्य तत् पृथगर्थम्, 'सामान्ये नपुंसकम्' तस्य भाव पृथगर्थता । स्फुटतीति स्फुट "इगुपधज्ञाप्रीकिर क" तस्माद्भावे तलि स्फुटता । अस्व स्व कृतमिति स्वीकृतम्, च्वि , अस्य ईत्वम । सामर्थ्यम्-समर्थशब्दाद्भावे ष्यञ् । अपोहितम्-अपपूर्वकादूहते कर्मणि क्त । पदैरिति कर्तरि तृतीया, स्वीकृतमित्यत्रापि तदेव कर्तृ । रचिता, अपोहितेत्यत्र त्वयेति कर्ताध्याहर्तव्य । यद्वा पदानामपि करणत्व विवक्षाधीन मत्वा

* 'गुणे शुक्लादय पुंसि गुणिलिङ्गास्तु तद्वति' इत्यमर ।

त्वयेत्येव कर्ता सर्वत्र योज्य ।

व्याख्या—पदैः-शब्दैः, स्फुटता-स्पष्टार्थता, न, अपाकृता-त्यक्ता, च-पर च अर्थगौरवम्-वाच्यार्थस्य भूयस्त्वम्-गाम्भीर्यम्, न स्वीकृतमिति न, स्वीकृतमेव, गिराम् वाचाम, पृथगर्थता-भिन्नार्थता-अपुनरुक्तार्थता, रचिता सपादिता, च-पर च-तथापि, क्वचिदपि, सामर्थ्यम्-परस्पराकाङ्क्षा†, न अपोहितम-न त्यक्ता ।

भा०—भीम ! तव वाचि पदानि न जटिलानि, अपि तु प्रसन्नानि स्फुटार्थानि, अय वाचो गुण, सति तु सरलत्वे प्रायेणार्थगौरव नश्यति, पर त्वद्वाचि सरलेष्वपि पदेषु गाम्भीर्यम्-अर्थवहुत्वम् अस्ति । आविष्टो वक्ता प्रायेण पुनरुक्तिं करोति, एकमेवार्थं भूयो भूयो वक्ति, पर तव वाचि भिन्नार्थता शब्दानाम्, न पुनरुक्ति, सत्यपि च भिन्नार्थत्वे परस्पराकाङ्क्षारूप· सम्वन्धो वाक्यानामस्त्येव, तेन न 'दश ‡ दाडिमानि, षडपूपा' इत्यादिवद् 'जरद्गव § कम्वलपादुकाभ्याम्' इत्यादिवद्वा उन्मत्तप्रलपितसादृश्यम् । तस्मात्तव वाक्य सर्वथैव वुद्धिमदुचितम् । अत्र भीमवाच प्रशसनव्याजेन कविना स्वकीय· प्रवन्धोऽप्याभिसहित, भारविवाच एवविधाया एव विद्वत्समाजे ख्यातत्वादिति सुधिय एवात्र प्रमाणम् ।

अल०—भावार्थोक्तरीत्या गम्यो विरोधाभास ।

**उपपत्तिरुदाहृता वलादनुमानेन न चागम चतः ।**
**इदमीदृगनीदृगाशय· प्रसभ वक्तुमुपक्रमेत क ॥ २८ ॥**

---

'सभाव्यनिषेधनिवर्तने द्वौ प्रतिषेधौ'—इति वामन ।

† 'अर्थैकत्वादेक वाक्यम्, साकाङ्क्षा चेद् विभागे स्यात्' इत्यभियुक्ता ।

‡ दश दाडिमानि, षटपूपा, कुण्डमजाजिनम्, पललपिण्ड, अधरोरुकमेतत्कुमार्या, स्फैय्यकृतस्य पिता प्रतिशीन' इत्यनर्थकपदसमुदायो व्याकरणमहाभाष्यकृतोदाहृत, पदाना परस्पराकाङ्क्षाविरहादानर्थक्यमत्र ।

§ जरद्गव कम्वलपादुकाभ्या द्वारि स्थितो गायति मद्रकाणि, त ब्राह्मणी पृच्छति पुत्रकामा, राजन् रुमाया लशुनस्य कोऽर्थ' इति वाक्याना परस्पराकाङ्क्षाविरहादानर्थक्ये उदाहरन्ति ।

अ०—उपपत्ति उदाहृता, च अनुमानेन बलाद् आगम न क्षत, अनीदृगाशय कः ईदृग् इट प्रसभ वक्तुम् उपक्रमेत ।

व्याक०—न ईदृग् आशयो यस्य स -अनीदृगाशय । ईदृगिति व्याख्यातम् ( प्रथमभाग ) आङ्पूर्वाच्छ्रेते ' एरच् " इत्यच् प्रत्यये आशय । उपपत्ति -पद्यते करणे क्तिन् ' उपपद्यते अनयेति ' । आगम.-" ग्रहवृदृनिश्चिगमश्च " इति गन्धातेरप् । उपक्रमेत-क्राम्यते शक्यार्थे लिङ्, " प्रोपाभ्याम्—" इत्यात्मनेपदम् । उदाहृता, क्षत -इत्युभयत्र त्वयेति कर्ता याहार्य । प्रसभमिति क्रियाविशेषण द्वितीयान्तम । बलाद्-इति ' बलमाश्रित्य ' इत्यर्थ " ल्यब्लोपे कर्मण्यधिकरणे च " इति पञ्चमी मल्लिनाथेनोक्ता । अस्मद्व्याख्याने तु हेतौ पञ्चम्यपि सभवति । उदाहृता, अनुमानेन, क्षत -इत्येषा नानानप्रकार उक्तरीत्या ऊह्य ।

व्याख्या—हे भीम ! त्वया, उपपत्ति -स्वपक्षसमर्थनाय युक्ति , उदाहृता-कथिता, च-पुन -तथापि, अनुमानेन-युक्त्या, बलात्-हठपूर्वकम, आगम -शास्त्रम्, न क्षत.-न हत , न खण्डित इति यावत् । न ईदृक्-वदाशयसदृश क्षात्रधर्मयुक्त , * आशय -अभिप्राय यस्य तथाभत , क पुरुष , ईदृग्-एवविधम्, क्षात्रधर्मसबद्धम् , प्रसभम-हठाद्-झटिति, वक्तुम-कथयितुम , उपक्रमेत-आरभेत । मल्लिनाथेन तु ' बलाद्-बलमाश्रित्य, पराक्रमपक्षमवलम्ब्य उपपत्ति -उदाहृता ' इत्यादि व्याख्यातम् ।

भा०—बहव खलु प्रमाणपारायणमात्र पटन्तो युक्ति सर्वथोपेक्षन्ते, सोऽयमपि दोष , युक्त्या विना प्रतिपाद्यार्थस्य मनस्युपारोहासभवात् । भीम ! त्वया तथा न कृतम् , युक्तिरपि त्वया स्वीये पराक्रमपक्षे सम्यगुक्ता । केचिच्च युक्तिमात्रगर्विता शास्त्र खण्डयन्ति, तदप्यत्यन्तमनुचितम् , त्वया तदपि न कृतम् । शास्त्रमाश्रित्य तत्समर्थनाय युक्तिरुक्ता । सर्वथा क्षात्रधर्मसम्बन्धि त्वद्वचनम् , त्वद्भिन्न एवविध वाक्य वक्तुमारभेतेत्यपि दुर्लभम् , दूरे तु पूर्णतया वचनम् । श्लोकत्रयमिद वचनप्रशसापरम् । केचिन्निन्दापरतयापि योजयन्ति, युधिष्ठिरे वक्तरि तत्सर्वथानुचितमेवेति मल्लिनाथ ।

---

* ' अभिप्रायश्छन्द आशय '–इत्यमर ।

अल०—पूर्वसम्बद्धमेव पद्यमिदम् । भीमवचनस्यैवाविश्रया प्रशंसया स्वस्य पूर्णमवधानं तत्र व्यञ्जितम् ।

**अवितृप्ततया तथापि मे हृदयं निर्णयमेव धावति ।**
**अवसाययितुं क्षमाः सुखं न विधेयेषु विशेषसम्पदः ॥ २६ ॥**

अ०—तथापि मे हृदयम् अवितृप्ततया निर्णयम् एव धावति, विधेयेषु विशेषसम्पदः सुखम् अवसाययितुम् न क्षमाः ( सन्ति ) ।

व्याक०—अवितृप्ततया क्तान्ताद्भावे तल्, नञ्समास, हेतौ तृतीया । निर्णय -नयते ' एरच् " । विधातु योग्यानि विधेयानि, दधाते " अचो यत् " ' ईद्यति " इनीत्वम्, गुण । विशिष्यन्त इति विशेषाः, " अकर्तरि च कारके सज्ञायाम् " इति कर्मणि घञ् । सपद इति क्विबन्त बहुवचनान्तम् । अवसाययितुम्-अवपूर्वकात् स्यते ( षोऽन्तकर्मणि ) णिचि "शाच्छासाह्वा " इति युगागमे-अवसायिधातोरर्हतिसमानार्थ-क्षमशब्दयोगे, अध्याहृतास्तिक्रिया-योगे वा तुमुन्, पुरुषा विशेषसपदः अवस्यन्ति, इति पूर्ववाक्यम्-तत्र कर्मण एव प्रयोजककर्तृत्वमारोप्य ' विशेषसपद पुरुषान् अवसाययन्ते ' इति णिजन्तम् । " णेरणौ " इति सूत्रस्याय विषय इति मल्लिनाथ. । कौमुदीकारस्य तु मतमन्यथेति आस्ता विस्तर । क्षमन्ते-इति क्षमा -पचाद्यच् ।

व्याख्या—तथापि-त्वया निर्णये कृतेऽपि, मे मम, हृदयम्-मन, अवितृप्ततया-असन्तुष्टतया, इदानीमपि सशयगतत्वेन, निर्णयम्-निश्चयम् एव, धावति अनुसरति, अपेक्षते इति यावत् । विधेयेषु-कर्तव्येषु सन्धिविग्रहादि-कार्येषु, विशेषसम्पद -अवान्तरभेदाना भूमान ( बहुत्वम् ) सुखम्-अनायासेन, अवसाययितुम्-पुरुषान् प्रति आनुकूल्येन स्व-स्वरूप प्रकाशयितुम्, न क्षमा -न समर्था सन्ति ।

भा०—ननु यदि सम्यङ् मदीय वचनम्, तर्हि तदनुसारेणैव प्रवर्तितव्य भवतेति भीमस्यानुयोगमनुमाय वदति युधिष्ठिर, भीम ! यद्यपि त्वया सम्यगेव परात्मपक्षो निर्णीत, अथाप्यहं पुनरपि विचार वाञ्छामि, न हि मे चेतस्यद्यापि निर्णयो जायते । यद्यपि नीतिशास्त्रेण सन्धिविग्रहाद्या विषया सामान्येन निर्णीयन्त एव, तथापि देशकालपात्राद्यविकारभेदाद्धे तत्र तत्रानन्ता

अवान्तरभेदा, न ते नीतिशास्त्रेण झटिति निर्णेतु शक्यन्ते। तत्र निर्णयार्थं बुद्धिरेवापेक्ष्यते। न च विशेषनिर्णयमन्तरेण कर्तव्ये प्रवृत्ति फलवती स्यात्। तस्माद्विशेषनिर्णयाय भूयो भूयो विचार कर्तव्य एवेति।

अल०—निर्णयवाचन प्रति उत्तरवाक्यार्थस्य हेतुत्वात्काव्यलिङ्गमलङ्कार इति मल्लिनाथ ।

**सहसा विदधीत न क्रियामविवेक परमापदा पदम्।**

**वृणते हि विमृष्यकारिणं गुणलुब्धा स्वयमेव सपद ॥ ३० ॥**

अ०—( जन. ) सहसा क्रिया न विदधीत, अविवेक परमापदा पदम् ( अस्ति ) हि सपद. गुणलुब्धा ( सत्य ) स्वयमेव विमृष्यकारिण वृणते।

व्याक०—गुणे लुब्धा -गुणलुब्धाः। लुब्धा.-लुभ्यते क्त, "तीषसहलुभ" इति विकल्पविधानाद् "यस्य विभाषा" इति निष्ठायामनिट्। "लुभोऽविमोहने" इतीट् तु नात्र, विमोहनार्थकत्वात्। विमृश्य करोतीति त विमृष्यकारिणम्, विमृष्येति ल्यबन्त उपपदे "सुप्यजातौ णिनिस्ताच्छील्ये" इति णिनि। विदधीत-विपूर्वाद्धधातोरर्हार्थे लिङ्। विविनक्तेर्घञि "चजो कु घिण्ण्यतो." इति कुत्वे विवेक। वृणते-वृधातोर्लटि बहुवचनम्, "क्र्यादिभ्य श्ना"।

व्याख्या—जन, सहसा-झटिति-विना विमर्षम्, क्रियाम्-कार्यम्, न विदधीत्-न कुर्यात्, सहसा करणमनुचितमित्यर्थ। अविवेकः-अविमर्ष -विचार विना कार्यकरणम्, परमापदाम्-प्रबलानामापत्तीनाम्, पदम्-स्थानम्, अस्ति। (यद्वा परमिति पृथक् पदम्-आपदा पर पदम्-मुख्य स्थानमस्तीति) संपद - सपत्तय, गुणे-विमृष्यकारितारूपे शुभे लक्षणे, लुब्धा.-लोभवत्य -आसक्ताः सत्य, स्वयमेव-विना प्रेरणयैव, विमृष्यकारिणम्-विविच्य कार्यकर्तारम्, पुरुषम्, वृणते-स्वीकुर्वन्ति।

भा०—जनेन पूर्णं विचार विना झटिति किमपि कार्यं न विधातुमुचितमिति मुख्या नीति। विना विचार कार्यकरणे महत्य आपत्तय आपतन्ति। एतद्विपरीत्येन यो विचार्य कार्यं करोति, तस्य सविधे विनैव यत्न सपद आगच्छन्ति। यथा काचित् पतिंवरा गुणलुब्धा गुणवन्त वर वृणुते, तथा गुण-

* विमृश्यकारिणम्—इति तालव्यशकारपाठोऽपि क्वचित्।

लुब्धा अनेका. नपदो युगपदेव विचार्य कार्यकर्तारं वृणत इति ।

अल०—पूर्वार्धे विमृष्यकारित्वरूपकारणस्य आपद्रूपव्यतिरेककार्येण समर्थनाद्वैधर्म्येणार्थान्तरन्यास , उत्तरार्द्धे तु साक्षात्कार्येण समर्थनात्साधर्म्येणार्थान्तरन्यास इति मल्लिनाथ । वस्तुतस्तु कार्यकारणरूपेण समर्थने नार्थान्तरन्यास , किन्तु सामान्यविशेषरूपेण समर्थन एव । तथा चात्र काव्यलिङ्गमेवोचितम् । नपदा प्राप्तिर्गुणलोभहेतुकवरणत्वेन सभावितेति गूढोत्प्रेक्षा । सपदा पतिवरात्व व्यङ्ग्यम् । अनुरागेण वर वृत्वा यथा कामिनी तत्र सुस्थिरा भवति, तथा सपदोऽपि सुस्थिरा भवन्तीति च व्यङ्ग्यम् । इदमेव पद्यमस्य महाकाव्यस्य निर्माणे हेतुता गतामित्यैतिह्यम् ।

अभिवर्षति योऽनुपालयन् विधिबीजानि विवेकवारिणा ।
स सदा फलशालिनीं क्रिया शरद लोक इवाधितिष्ठति ॥ ३१ ॥

अ०—य विधिबीजानि अनुपालयन् विवेकवारिणा अभिवर्षति, स , फलशालिनीं क्रियान् लोक इव शरदन्, सदा अधितिष्ठति ।

व्याक०—विधीयन्त इति विधय , कर्मणि "उपसर्गे घो कि" । विधयो बीजानीव विधिबीजानि, "उपमित व्याघ्रादिभि.-' इति समास मल्लिनाथ आह। यद्वा विधय एव बीजानीति मयूरव्यसकादित्वादुत्तरपदार्थप्रधानस्तत्पुरुष । विवेकवारिणा-इहापि विवेको वारीव, यद्वा विवेक एव वारीति द्वैविध्यं पूर्ववद् द्रष्टव्यम्। फलेन शलति, शाडते वा फलशालिनी । शलधातोः शाड्धातोर्वा णिनि , द्वितीये डलयोरभेदाल्लकारोच्चारणम् । अनुपालयन्-णिजन्तात्पालयतेर्लटः स्थाने "लक्षणहेत्वो क्रियाया." इति शतृप्रत्यय । क्रियाम्, शरदमित्यत्र च "अधिशीङ्स्थासा कर्म" इत्याधारस्य कर्मत्वम् ।

व्याख्या—य -पुरुष , विधिबीजानि-बीजसदृशानि विधेयानि कार्याणि, (यद्वा विधेयकार्यरूपाणि बीजानि) अनुपालयन्-प्रतीक्षमाण , (यद्वा प्रतिकूलतृणादिभ्य. खादकपश्वादिभ्यश्चाभिरक्षन् ) विवेकवारिणा-वारिसदृशेन विवेकेन, (यद्वा विवेकरूपेण जलेन) अभिवर्षति-सेचनेनाङ्कुरयति, वर्धयति (यद्वा सिञ्चतीत्येव),

स -पुम्य, फलशालिर्नाम-फलम्*-प्रयोजनम्, (शरत्पर्ते-फलम्-सस्यम्, तद्वतीम्) क्रियाम्-स्वव्यापारम्, लोक इव-कृषीवलो जनो यथा शरदम्-शरदृतुम् तथा, सदा-नियतम्, अभिवर्षति, तत्राविकरोतानि।

भा०—यथा कृषीवलो जन क्षेत्रे बीजवाप कृत्वा, तस्य प्रतिकूलप्रसङ्गाद्रक्षा कुर्वन्, फलोत्पत्ति प्रतीक्षमाण, जलेन बीज सिञ्चन शरदृतौ तत्फलन ना सस्यसमृद्धिमाप्नोति, सस्यसमृद्धिशालिन्या शरदि तस्य नियतोऽधिकार तथैव य कर्तव्य लक्ष्यरूपेण मनसि निधाय, प्रतिकूलप्रसङ्गाद्रक्षा कुर्वन्, फलप्राप्तेश्च समय प्रतीक्षमाणो विवेकेन कर्तव्य पोषयति, तस्य फलशालिन्या क्रियाया नियतोऽधिकार, स समये कर्म कृत्वा फल प्राप्नोत्येवेति। साहसिक कदाचित्फल प्राप्नोति, कदाचिन्न, विमृश्यकारी त्ववश्य फल प्राप्नोत्येव।

अल०—इह 'शरद लोक इव' इति स्फुटैवोपमा, तदनुरोधाच्च विधियोनाति 'विवेकवारिणा' इत्युभयत्र पूर्वपदार्थप्रधान उपमितसमास, तेन तत्राप्युपमैव, फलशब्देन च सस्यहेतुकृतयोरुभयोरर्थयोरभेदाध्यवसायादतिशयोक्ति श्लेषानुप्राणिता, तदनुगृहीता चोपमेति मल्लिनाथ। परम् 'अभिवर्षति' इति क्रियान्वयानुगुण्याद् 'विवेक एव वारि' इति उत्तरपदार्थप्रधान एव समास स्वरससिद्ध प्रतीयते। न हि विवेकस्याभिवर्षणे करणत्व स्वारसिकम्। तस्माद्रूपकगर्भैयमुपमेति युक्त †प्रतिभाति यद्वा 'अभिवर्षति' इति लाक्षणिक प्रयोग वर्धन तदर्थ, तेन मल्लिनाथोक्तिर्निर्वाह्या।

शुचि भूषयति श्रुत वपु प्रशमस्तस्य भवत्यलङ्क्रिया।
प्रशमाभरण पराक्रम स नयापादितसिद्धिभूषण ॥ ३२ ॥

अ०—शुचि श्रुत वपु भूषयति, प्रशम तस्य अलङ्क्रिया भवति, पराक्रम प्रशमाभरणम् (अस्ति), स नयापादितसिद्धिभूषण. (अस्ति)।

व्याक०—नयेन आपादिता (तत्पु०) सिद्धिः (कर्म०) भूषण यस्य स

* सस्ये हेतुकृते फलम्—इत्यमर।

† दृश्यते हि रूपकगर्भोपमा कविसम्प्रदाये, तथाहि रामायणे सुन्दरकाण्डे आदिकवि —'इमानि सुखपद्मानि नियत मत्तषट्पदाः।

अम्बुजानीव फुल्लानि प्रार्थयन्ति पुन पुन' ॥ इत्यादि

नयापादितसिद्धिभूपण , आपादिता-णिजन्तान् पद्यतेर्निष्ठा, सिद्धिरिति क्तिन्नन्तम्, भूषणमिति करणे ल्युट् । श्रुतम्-शृणोते "नपुसके भावे क्त" श्रवणार्थकस्य श्रवणविषये शास्त्रे लक्षणया प्रयोग । यद्वा 'अश्रावीति श्रुतम्' इति कर्मण्येव निष्ठा द्रष्टव्या । प्रशम इति घञन्तम्, उदात्तोपदेशत्वाद् वृद्धिनिषेध । अलंपूर्वपदात्करोते "कृञः श च" इति शप्रत्यये अलक्रिया । पराक्रम प्रशमवत् ।

व्याख्या—शुचि-पवित्रम्-सम्प्रदायशुद्धम्, श्रुतम्-शास्त्रम्, शास्त्रश्रवणम्, (कर्तृ) वपु -ज्ञातु शरीरम्, भूषयति-अलकरोति । प्रशम -शान्तिः-क्षमा, तस्य-शास्त्रज्ञानस्य, अलक्रिया-भूषणम्, भवति । पराक्रमः-सत्यवसरे शौर्यम्, प्रशमस्य आभरणम्-अलकरणम्, अस्ति । स -पराक्रमश्च, नयेन-नीतिव्यवहारेण, आपादिता-प्रापिता, या सिद्धि -प्रयोजननिष्पत्तिः, सैव भूषणम्-यस्य तथाविध , अस्ति ।

भा०—सप्रदायागतेन शास्त्रज्ञानेन मनुष्यस्य शोभा भवति, तच्च शास्त्रज्ञान क्षमया शोभते, शास्त्र ज्ञात्वापि यदि क्रोधवश. स्याद्, व्यर्थं तज्ज्ञान स्यादिति । क्षमापि च अवसरे दृष्टपराक्रमस्यैव शोभते, अन्यथा सा क्षमा अशक्ततेति गण्येत । य समये सामर्थ्य परिदर्श्यापि क्षान्त , स एव क्षान्त ।तेन पराक्रमः क्षमाया भूषणम् । (तेनेद सिद्धम्-क्षमा सतत धार्या, पराक्रमस्तु तद्भूपणत्वेन सत्यवसर एव) पराक्रमश्च सिद्धौ सत्यामेव शोभते, इति सिद्धि पराक्रमस्य भूषणम् । किन्तु सिद्धिरिय न केवलस्य पराक्रमस्यायत्ता, अपि तु नीतिसहकारेण कृतस्य पराक्रमस्य । नीतिसहकृतपराक्रमप्राप्तैव च सिद्धिर्भूपणरूपा, न तु साहसिकत्वेन विनैव नीति प्राप्ता, तस्या काकतालीयन्यायागततया भूपणत्वाभाव एव। सिद्धि सर्वस्यापि भूपणमेव, न तु तस्या भूपणान्तरमिति तस्याः स्तुतिर्गम्यते । क्षमामास्थाय शास्त्रानुसारेण प्रवर्तितव्यम् । न तु झटिति पराक्रम आलम्बनीय , साहसेन कदाचित्प्राप्तापि सिद्धिर्न शिष्टै समान्यत इति भाव ।

अल०—उत्तरोत्तरस्य पूर्वं पूर्वं प्रति विशेषणत्वादेकावली । व्याख्यायां भावार्थे दर्शितम् ।

मतिभेदतमस्तिरोहिते गहने कृत्यविधौ विवेकिनाम् ।
सुकृत परिशुद्ध आगम. कुरुते दीप इवार्थदर्शनम् ॥ २३ ॥

अ०—मतिभेदतमस्तिरोहिते गहने कृत्यविधौ सुकृत परिशुद्ध आगम दीप इव विवेकिनाम् अर्थदर्शन कुरुते ।

व्याक०—मतीना भेद (ष०तत्पु०) तम इव (उपमित०) तेन तिरोहिते-मतिभेद-तमस्तिरोहिते। (यद्वा मतिभेद एव तम इति पूर्ववद् द्रष्टव्यम्) मन्यतेऽनया मति., करणे क्तिन्, भेद इति घञन्तम्, तिरस्पूर्वकाद्दधातेर्निष्ठाया तिरोहित । कृधातो "विभाषा कृवृषो" इति क्यपि तुगागमे कृत्यम्। विवेकोऽस्ति येषा ते विवेकिन, घञन्ताद् इनिस्तद्धित । परिशुद्ध इति शुध्यते. कर्तरि क्त. । आङ्पूर्वकाद् गच्छते 'ग्रह वृदनिश्चिगमश्च'' इत्यप्प्रत्यये आगमः। अर्थदर्शनमिति णिजन्तात्पश्यतेर्ल्युट्, विवेकिनामिति प्रयोज्यकर्तृपदम्, "दृशेश्च" इति कर्मत्व प्राप्य "कर्तृकर्मणो कृति" इति षष्ठयन्तता गतम्। कृत्यविधौ, इति अधिकरणे सप्तमी, भावलक्षणसप्तमी वा ।

व्याख्या—मतीनाम्-विवेचकबुद्धीनाम्, भेद.-परस्पर विरोध एव, तम - अन्धकार (यद्वा स तम अन्धकार इव) तेन तिरोहिते-आच्छन्ने, अत एव गहने-निबिडे-अविज्ञेये, कृत्यविधौ कार्यानुष्ठाने, सुकृतः-सम्यगभ्यस्त , (दीपपक्षे सम्यक् प्रज्वालित ) परिशुद्ध निश्चितः-संशयरहितः, (दीप पक्षे प्रवातादिदोषरनाक्रान्त ) -आगम -शास्त्रम्, दीपइव-दीपसदृश , विवेकिनाम्-विचारशीलानाम्, (तान् प्रति) अर्थस्य-प्रयोजनवत इष्टस्य वस्तुन , दर्शन कुरुते-आलोकन कारयति, दर्शयतीति । यद्वा कृत्यविधौ तमस्तिरोहिते सति आगम· अर्थदर्शन कुरुते इति व्याख्येयम् ।

भा०—यथान्धकारेणाच्छन्ने गृहे सम्यक् प्रज्वलितेन दीपेन इष्ट वस्तु दर्श्यते, तथा 'इद कर्तव्यम् . न कर्तव्यम्' इत्यादिविप्रतिपत्त्या आच्छन्ने कर्तव्यतत्त्वे सुविचारित शास्त्रमेव मार्गनिर्णयं करोति। तेन शास्त्र सुविचार्य तदनुसारेण प्रवर्तितव्यम्, न तु कदापि सहसेति भाव ।

अल०—उपमा। इहापि पूर्व (३१) पद्यवद्रूपकगर्भोपमैवोचिता । मल्लिनाथरीत्या मतिभेदस्तम इवेति समासे तिरोधानकरणताया मतिभेदे प्रतीयमानाया अस्वारस्यादिति । कृत्यविधौ तिरोहितपदम् अज्ञातयाथार्थ्ये लाक्षणिकम् ।

---

. 'आगम शास्त्र आयाते' इति विश्व ।

दर्शनपद च प्रकाशाख्ये यथार्थज्ञाने ।

स्पृहणीयगुणैर्महात्मभिश्चरिते वर्त्मनि यच्छता मन ।
विधिहेतुरहेतुरागसां विनिपातोऽपि सम समुन्नते. ॥ २४ ॥

अ०—स्पृहणीयगुणै महात्मभि चरिते वर्त्मनि मन यच्छताम् (पुरुषाणाम्) विधिहेतु. आगसाम् अहेतु विनिपातः अपि समुन्नते: सम (भवति) ।

व्याक०—स्पृहणीया गुणा येषा तै स्पृहणीयगुणै । स्पृहयितु योग्या स्पृहणीया । अर्हार्थे अनीयर् । महान् आत्मा येषा तैः महात्माभि.। विधिः हेतुः यस्य स विधिहेतु । चरिते इति *कर्मणि क्त । वर्त्मेति तत्कर्म । यच्छताम्-यमधातो शतृप्रत्यय', "इषुगमियमा छ" । समुन्नते द्र्युपसर्गोन्नमते क्तिन्। तुल्यार्थैरतुलोपमाभ्याम्" इति विकल्पेन षष्ठी ।

व्याख्या–स्पृहणीया -अन्यैरनुकर्तुमेष्टव्या , श्लाघ्याः, गुणा येषा तथाभूतैः, महात्मभि -उदारै -सज्जनै , चरिते-प्रहृते-अनुसृते, वर्त्मनि-मार्गे सदाचाररूपे, मन -स्वीय चित्तम्, यच्छताम्-स्थापयताम्, पुरुषाणाम्, †विधिहेतुः-दैवाज्जातः, ‡आगसाम्-पापानाम् (अपराधाना वा) अहेतु -अकारणम्, §विनिपातः-पतनम्-अनर्थोऽपि, समुन्नते -अभ्युदयस्य, सम -तुल्यः, भवति ।

भावार्थः—ये हि पुरुषाः शिष्टाना मार्गमनुसरन्ति, शिष्टसंप्रदायेन व्यवहरन्ति, शास्त्रानुरोधेन प्रवर्त्तन्ते, तेषा यदि, दैवात्पतनमपि कदाचिद् भवेत्, तदपि पतनमिति न गणनीयम्, अपि तून्नतिसममेव तत् । यतो हि यथोन्नतः पुरुषो लोके श्लाघ्यते, तथैव ते जनैः सदाचारनिष्ठत्वाच्छ्लाघ्यन्त एव, न तु केनापि निन्द्यन्ते, पुरुषापराधाभावात् । तदुक्त नीतिशास्त्राचार्येण कामन्दकेन-- 'यत्तु सम्यगुपक्रान्तं कार्यमेति विपर्ययम् । पुरुषस्त्वनुपालभ्यो दैवान्तरितपौरुष.'

* यद्यपि 'चरन्त्यस्मिन्निति चरित वर्त्म' इति अधिकरणार्थक प्रत्ययोऽत्र युक्तः प्रतिभाति, पर तद्योगे "अधिकरणवाचिनश्च" इति षष्ठीनियमाद् 'महात्मभि ' इति तृतीया न स्यात् ।

† 'विधिर्विधाने दैवे च' इत्यमरः ।

‡ 'पापापराधयोरागः', इत्यमरः।

§ विनिपातोऽवपात स्याद्दैवादिव्यसनेऽपि च-इति विश्व ।

इति। किं च स्वापराधात्पतित पुरुषो मलिनमतितया उद्धाराय पुनरपि पापमेव करोति, तेन च भूयो भूय. पतति, दैवात्पतितस्तु सन्मार्गनिष्ठत्वात्पुनरपि पाप न करोति, इति तस्य तत्पतन मद्य एव निवर्तते, उन्नतिरेव चिराय लभ्यत इति विनिपातस्याप्युन्नतिहेतुतया उन्नतिसमत्व ज्ञेयम् । तेन दैवात्प्राप्तानर्था अपि वय न शोच्या एव, स्वापराधाभावादिति ।

अल०—विधिहेतु , अहेतु इति विशेषणद्वयस्योन्नतिसमत्वसाधकतया परिकर । ईदृशे विनिपातेऽपि गुणदर्शनात्तस्येष्टपक्षे गणनमित्यनुज्ञालङ्कार *। वर्त्मेत्यस्य आचारे लक्षणा। यथा महद्भि कृतो मार्ग सर्वैरनुस्रियते,तथा महता-माचारशैली अप्यनुस्रियत इति सादृश्य तन्मूलम् ।

**शिवमौपयिक गरीयसीं फलनिष्पत्तिमदूषितायतिम् ।**
**विगणय्य नयन्ति पौरुष विजितक्रोधरया जिगीषव ॥३५॥**

अ०—जिगीषव विजितक्रोधरया. (सन्त ) गरीयसीम् †अदूषितायतिम् फल-निष्पत्ति विगणय्य पौरुष शिवम् औपयिक नयन्ति ।

व्याक०—विजितः क्रोधरयो यैस्ते विजितक्रोधरया । न दूषिता आयति यस्याः ताम् अदूषितायतिम् । दूषित इति दुष्यतेर्णिजन्तान्निष्ठा,"दोषो णौ" इत्युपधाया ऊत्वम् । जयते. सन्नन्तादुप्रत्यये जिगीषु , "सन्लिटोर्जे" इति कुत्वम्। निष्पत्तिमिति पद्यतेर्भावे क्तिन्। विगणय्य-स्वार्थणिजन्ताद् गणधातोर्ल्यप्, "ल्यपि लघुपूर्वात्" इति णेरयादेश. । उपाय एव औपयिकम्, विनयादित्वा-त्स्वार्थे ठक्, आकारस्य ह्रस्वश्च । पौरुषम्, औपयिकम्, इति द्वयमपि नयते कर्म, द्विकर्मकत्वात्तस्य, औपयिकमिति गौण कर्म। नयन्तीत्यत्र फलस्य कर्तृगा-मित्वाविवक्षाया परस्मैपदमिति कौमुद्या दीक्षित । "कर्तृस्थे चाशरीरे कर्मणि" इति तु नियमार्थम्, न तु परगामिनि क्रियाफलेप्यात्मनेपदविधानार्थमिति ।

व्याख्या—जिगीषव -विजयमिच्छन्तो विवेकिन , विजित -निरुद्ध , क्रोधस्य रय वेगो यैस्तथाभूता सन्त , गरीयसीम्-गुरुतराम्-प्रभूताम्, अदूषितायतिम्-न दूषिता-विकृतिं प्रापिता, आयति -उत्तरकालो यस्यास्तथाभूताम्, फलनिष्प-

---

* दोषस्याभ्यर्थनानुज्ञा तत्रैव गुणदर्शनात्—इति कुवलयानन्दे ।

† अदूषितायतीम्- इति दीर्घपाठ क्वचित्। उत्तर: काल आयति –इत्यमर.।

त्तिम् इष्टसिद्धिम्, विगणय्य निश्चित्य, पौरुषम् स्वात्मनि स्थित पुरुषार्थम्-कार्योत्साहम्, शिवम्-अनुकूलम्, औपयिकम्-उपायम्, नयन्ति प्रापयन्ति-सदुपायेन योजयन्ति इति ।

भा०—येषा विजयप्राप्तेरस्ति कामना, ते विवेकिन क्रोधस्य वशीभूता कदापि न प्रवर्तन्ते, सति क्रोधे विवेकासभावात्, विवेकं विना च विजयकथाया अप्यभावात् । तस्मात् क्रोध विजित्य, यदा विवेकेन फलसिद्धिमवश्यभाविनीं मन्यन्ते, तदा स्वोत्साहानुरूप सम्यगुपायमारचयन्ति । न च क्षुद्रफलार्थे तेषा प्रवृत्ति , न वा परिणामेऽनर्थसभावनायाम् । तदाह कामन्दक -" निष्फल क्लेशबहुल सदिग्धफलमेव च । न कर्म कुर्यान्मतिमान्सदा वैरानुबन्धि च' इति ।

अल०—विजितक्रोधरया इति विशेषणस्य साभिप्रायत्वात्परिकर । चेतनस्यैव विजय इति क्रोधविषये विजितेति लाक्षणिकम् । विजितो यथा निरुध्यते, स्वाभीष्टेऽर्थे च प्रवर्त्यते, तथा क्रोधोऽपीति । अत्र ' शिवमौपयिकम् ' इत्यस्य दूरस्थक्रियया क्लेशेनान्वयात् ' क्लिष्टत्वम् ' वाक्यदोष ।

**अपनेयमुदेतुमिच्छता तिमिर रोषमय धिया पुर ।**
**अविभिद्य निशाकृत तम प्रभया नांशुमताप्युदीयते ॥ ३६ ॥**

अ०—उदेतुमिच्छता ( सर्वेणापि ) पुर धिया रोषमय तिमिरम् अपनेयम् । अशुमता अपि प्रभया निशाकृत तम अविभिद्य न उदीयते ।

व्याक०—उदेतुम्-उत्पूर्वकादिण्धातोस्तुमुन्, " समानकर्तृकेषु तुमुन् " इति । रोषादागत रोषमयम्-"तत आगत " इत्यधिकारे "मयट् च" इत्यनेन मयट् । अपनेयम्-नीधातोरर्हार्थे " अचो यत् " । प्रभा-भातेः " आतश्चोपसर्गे " इति भावे अङ् । *हलन्तान्निश्शब्दाद्भागुरीष्टया टापि निशा, तस्य कर्तरि तृतीयान्तस्य कृदन्तेन कृतशब्देन तत्पुरुष । अविभिद्य-ल्यबन्तेन नञः समास । उदीयते-एतेर्भावे लट् । पूर्ववाक्ये इच्छतेति कर्तरि धिया इति च करणे तृतीया, उत्तरवाक्ये तु अशुमतेति कर्तरि, प्रभयेति च करणे ।

व्याख्या—उदेतुम् इच्छता-उन्नतिं कामयमानेन, सर्वेणापि, पुरः-प्रथम-

* ' वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयो ।
आप चैव हलन्ताना यथा वाचा निशा दिशा ' ।

मेव, धिया-विवेकबुद्ध्या, रोषमयम्-क्रोधजन्यम्, तिमिरम्-अज्ञानम्-मोह, अपनेयम्-दूरीकरणीयम् । अंशुमता-सूर्येणापि, प्रभया-कान्त्या तेजसा, निशाकृतम्-रात्रिजनितम्, तम -अन्धकारम्, अविभिद्य-अविनाश्य, न उदीयते-नोदयः प्राप्यते, अपि तु विभिद्यैव प्राप्यते ।

भा०—सूर्यो हि यदा पूर्वं स्वकान्त्या रात्रिजनित तमो विनाशयति, तदैवोदयं ( उदयाचलम् ) याति, तथैव य उदयम् ( अभ्युदयम् ) इच्छति, तेन तमः पूर्वं विनाश्यमेव । अत्र तमो बुद्धिसमोहः क्रोधजनित. । तद्विनाशश्च विवेकबुद्ध्या । क्रोधजयमन्तरेण नैवाभ्युदयलाभ इत्याशय ।

अल०—पूर्वार्धोपात्तस्य सामान्यस्य विशेषेण सूर्यवृत्तेन वैधर्म्येण समर्थनादर्थान्तरन्यास. । यदि तु पूर्वार्धे मनुष्यवाचि विशेष्यपदमव्याह्रियते, तदा वैधर्म्येण दृष्टान्तालङ्कारः। सूर्यपुरुषयोः, अन्धकारमोहयो, प्रभाबुद्ध्यो, निशारोषयोश्च बिम्बप्रतिबिम्बभावः । निशारोषयोर्भिन्नलिङ्गत्व तु कथचिद्दोष एव । सूर्यस्याप्येव किमुतान्येषामिति अपिशब्दद्योत्य मल्लिनाथ आह । तद्रीत्या काव्यार्थापत्तिर्व्यङ्ग्या ।

**बलवानपि कोपजन्मनस्तमसो नाभिभव रुणद्धि य ।**
**क्षयपक्ष इवैन्दवी कलाः सकला हन्ति स शक्तिसपद. ॥ ३७ ॥**

अ०—बलवान् अपि य ( पुरुष ) कोपजन्मनः तमसः अभिभव न रुणद्धि, स सकला शक्तिसपद क्षयपक्ष इव ऐन्दवी कला हन्ति ।

व्याक०—कोपाजन्म यस्य, तस्य कोपजन्मन, " अवज्यो बहुव्रीहिर्व्यधिकरणो जन्माद्युत्तरपद " इति वामनोक्त्या व्यधिकरणपदो बहुव्रीहिरङ्गीकार्य । क्षयस्य पक्षः क्षयपक्ष, क्षयतेराचि क्षय । शक्तय एव सपद शक्तिसपदः । शक्तिरिति क्तिन्नन्तम्, सपद इति भावक्विबन्तम् । अभिभवम्-भवतेः " ऋदोरप् " । अस्य कृत्प्रत्ययान्तस्य योगे तमस इति कर्तरि षष्ठी, कर्मणोऽविवक्षणात् । इन्दोरिमा ऐन्दवी, शैषिकोऽण् ।

व्याख्या—बलवान्-शक्तिसपन्नः, अपि य -पुरुषः, कोपजन्मन -क्रोधादुत्पन्नस्य, तमस. मोहस्य, अभिभवम्-आक्रमणम्, ( मोहेन स्वस्योपरि कृतमाक्रमणम् ) न रुणद्धि-न निवारयति, स -पुरुष, सकला शक्तिसपद.-प्रभावो-

त्साहमन्त्रजा सर्वा अपि सपद्रूपा शक्ती, क्षयपक्ष इव-कृष्णपक्षो यथा, ऐन्दवी कला -*चन्द्रस्यावयवान्, तथा-हन्ति-नाशयति ।

भा०—सर्वशक्तिसपन्नेनापि येन क्रोधजनित तमो ( मोहो ) न निवार्यते, तस्य सर्वा अपि सपद्रूपा शक्तय विनश्यन्ति । यथा कृष्णपक्षरूपेण कालेन तमो ( अन्धकारः ) न निवार्यत इति तस्य सपद्रूपाश्चन्द्रकला विनश्यन्तीति स्पष्ट दृश्यते । अन्धस्य जङ्घाबलमिव क्रोधान्धस्य लोकोत्तरमपि सामर्थ्यं व्यर्थमेवेति । पुरुषकृतापराधादिह सपदा क्षय इति पुरुषस्यैव हन्तृत्वम् ( विनाशकर्तृत्वम् ) व्यवहृतम्, सपद स्वय न नश्यन्ति, अपि तु स एव सपदो विनाशयतीति । उपमाने ऽपि कालस्य सर्वकारणत्वादिन्दुकलाहन्तृत्व तत्रास्त्येव । चन्द्रकलाना शोभनवस्तुत्वात्तत्र सपद्रूपत्व व्यवहृतम्, शक्तीना तु सपद्रूपताभ्युदयहेतुत्वात्सुस्पष्टैव । आक्रमणेन सपद्विनश्यतीत्यपि लोकसिद्धमेव ।

अल०—उपमा । क्षयपक्ष उपमानम्, पुरुष उपमेय । शक्तिसपदा चन्द्रकलाना च बिम्बप्रतिबिम्बभाव, तमस आक्रमणानिरोधद्वारेण तद्विनाशकत्व सामान्यधर्म. । कला सकला इति छेकानुप्रास. ।

**समवृत्तिरुपैति मार्दव समये यश्च तनोति तिग्मताम् ।**
**अधितिष्ठति लोकमोजसा स विवस्वानिव मेदिनीपति. ॥ ३८ ॥**

अ०—य. समवृत्ति ( सन् ) समये मार्दवम् उपैति, च तिग्मताम् तनोति, स मेदिनीपति विवस्वानिव ओजसा लोकम् अधितिष्ठति ।

व्याक०—समा वृत्तिर्यस्य स समवृत्ति । वृत्तिरिति वर्ततेः क्तिन् । मृदोर्भावो मार्दवम्, अण् । उपैति-उपपूर्वकादेतेर्लट्, "एत्येधत्यूठ्सु" इति वृद्धि । तिग्मस्य भाव तिग्मता, तल् । लोकम्-अधितिष्ठति इति " अधिशीङ्स्थासा कर्म " ।

व्याख्या—य.-नृप, समा-साधारणरूपा, नातितीक्ष्णा नातिमृदुश्च, वृत्ति-व्यवहारो यस्य, तथाभूत सन्, समये-सत्यवसरे, मार्दवम्-मृदुताम्, सौम्यव्यवहारम्, उपैति-याति, च-सत्यवसरे, तिग्मताम्-तीक्ष्णताम्-क्रूरव्यवहारम्, तनोति-प्रकटयति, स मेदिनीपति -राजा, विवस्वानिव-सूर्य इव, ओजसा-तेजसा,

* कला तु षोडशो भाग.—इत्यमरः ।

लोकम् अधितिष्ठति-सर्वमपि भुवनमाक्रामति, सर्वस्मिन्नपि भुवनेऽधिकरोति ।

भा०—यो हि राजा न सर्वथा मृदुरेव स्यात्, नचैकान्ततस्तीक्ष्ण एव भवेत्, अपि तु काले मृदु काले च तीक्ष्ण स्यात् स सर्वमपि लोकं स्ववृत्त्या आक्रम्य वशीकरोति । यथा सूर्य समयभेदेन हेमन्तादिषु मृदु, ग्रीष्मादौ च तीक्ष्णो जायते अत एव सर्वोऽपि लोकस्तेनाक्रम्यते ।

अल०—उपमा ।

**क्व चिराय परिग्रह श्रिया क्व च दुष्टेन्द्रियवाजिवश्यता ।**
**शरदभ्रचलाश्चलेन्द्रियैरसुरक्षा हि बहुच्छला श्रिय ॥ ३९ ॥**

अ०—श्रियाम् चिराय परिग्रह क्व, च दुष्टेन्द्रियवाजिवश्यता क्व ( अस्ति ) हि शरदभ्रचला बहुच्छला श्रिय चलेन्द्रियै ( पुरुषै ) असुरक्षा ( भवन्ति ) ।

व्याक—इन्द्रियाणि वाजिन इव इन्द्रियवाजिन, इन्द्रियाण्येव वाजिन इति वा । दुष्टा इन्द्रियवाजिन ( कर्म० ), तेषा वश्य ( ष० तत्पु० ) तस्य भाव, दुष्टेन्द्रियवाजिवश्यता । वशशब्दाद् "वश गत" इति यत्प्रत्यय, तदन्ताद्भावे तल् । शरद अभ्राणि ( ष० तत्पु० ) इव चला शरदभ्रचला, "उपमानानि सामान्यवचनै." इति समास । चला इति पचाद्यजन्तम् । बहूनि च्छलानि यासु ता बहुच्छला । चलानि इन्द्रियाणि येषा तै चलेन्द्रियै. । श्री, परिग्रह, क्व इति व्याख्यातपूर्वाणि । चिराय-इति चतुर्थ्यन्तप्रतिरूपकमव्ययम् । सुरक्षा इति "ईषद्दु सुषु कृच्छ्राकृच्छ्रार्थेषु खल्" इति रक्षधातो खल्प्रत्ययान्तम् । ततो नञा समास. । चलेन्द्रियैरित्यरक्षणस्य कर्तृपदम्, खलर्थयोगे षष्ठीप्रतिषेध. ।

व्याख्या—श्रियाम्-सपदाम्, चिराय-दीर्घकालपर्यन्तम्, परिग्रह-स्वीकार-स्ववशे स्थापनम्, क्व, च-किं च, दुष्टेन्द्रियवाजिवश्यता-दुष्टानाम्-दोष प्राप्तानाम् कुमार्गगामिनाम्, तथाविधाश्वसदृशानामिन्द्रियाणाम् ( इन्द्रियरूपाणामुद्धतानामश्वानामिति वा ) वश्यता-अधीनता क्व, ( चकारेण प्राप्त उभयो समुच्चय क्वेति पदेन प्रतिक्षिप्यते ) नोभयमेकत्र सभवति, अतिदूरमेतयोरन्तरमिति । हि-यत, शरद-शरत्कालस्य, अभ्राणि-मेघाः, तद्वत् चला-चञ्चला, किं च

*बहुच्छला -बहूनि च्छलानि-रन्ध्राणि-स्खलितानि, यासु तथाभूता., श्रियः-सपद., चलेन्द्रियै -चलानि-विषयेषु धावमानानि, इन्द्रियाणि येषा तथाविधै पुरुषै', असुरक्षा -रक्षितुमशक्या भवन्ति ।

भा० —येनेन्द्रियाणि ( इन्द्रियप्रेरका क्रोधाद्या दोषा ) न जितानि, य इन्द्रियाणा वशे तिष्ठति, स चिर लक्ष्मीं भोक्तु न शक्नोति । करगतापि लक्ष्मीस्तस्य विनश्यत्येव । परिग्रहपद भार्यास्वीकार एव निरूढम्-तस्यात्र प्रयोगेण श्रीषु भार्यात्वारोपो द्योत्यत इति चित्रभानुः । श्रियामिति बहुवचनेन च नानाविधाना सपदा परस्परविरुद्धाना सपत्नीनामिव रक्षणे विविधोपायौचित्य व्यज्यते । तथा च य परवश तास्मिन्नेकापि स्त्री न रज्यते, किं पुनर्बह्व्य । परवशो हि कथ श्रियो वशीकुर्यात् । उत्तरार्द्धेनदमुक्तम्, श्रियोऽपि स्वाभावेन चला , पुरुषोऽपीन्द्रियपरतन्त्रश्चल इति उभयोश्चलयोर्योगे दुष्करमेव स्थैर्यम् । यथा शरदभ्राणा वायुपरतन्त्राणाम् । प्रावृडभ्राणा तु गुरुतया कथचिज्जायत एव स्थैर्यमिति तद्वद् जितेन्द्रियपुरुषाश्रिता श्रियः स्थिरा भवन्ति । बहुच्छला इति बहून् व्याजान् जानन्ति, कथचित्स्वामिन प्रतार्य गच्छन्त्येव, एतेन च चलेन्द्रिये पुरुषे सभाविताः सुहृद्विमाननाजनापराग-प्रकृतिकोपाद्या. सपदा निर्गमहेतवोऽत्र विवक्षिता ।विशेषणाभ्यामाभ्या श्रिया पुरुषवञ्चकवेश्यासादृश्यं च व्यञ्जितमित्यल विस्तरेण । तथा च दुर्योधनस्य चलेन्द्रियतया तत्र वर्तमानापि लक्ष्मीश्चिर न स्थास्यतीति प्रकृते सम्बन्ध । यद्वा स्थिरा लक्ष्मीमभिलष्यद्भिरस्माभिर्नेन्द्रियवश स्थेयम्, अपि तु तत्प्रेरका क्रोधाद्या दोषा विजतव्या एवेति ।

अल० —पूर्वार्धे विषमम् । उत्तरार्द्धेन हेतुरुपात्त इति वाक्यार्थहेतुकं काव्यलिङ्ग मल्लिनाथ आह । विशेषणयो साभिप्रायतया परिकरोऽपि तदङ्गम् । इन्द्रियवाजीत्युपमा, रूपक वा । शरदभ्रचला इत्युपमा । एषा ससृष्टि ।

**किमसामयिक वितन्वता मनस क्षोभमुपात्तरहस ।**
**क्रियते पतिरुच्चकैरपा भवता धीरतयाधरीकृतः ॥४०॥**

* 'छल तु स्खलिते व्याजे'–इति विश्व ।

अ०—भवता धीरतया अधरीकृतः अपां पतिः उपात्तरंहस मनसः असामयिकं क्षोभं वितन्वता ( सता ) किम् उच्चकैः क्रियते ।

व्याक०—उपात्तं रंहो येन तदुपात्तरंहः, तस्य । उपात्त इति 'उप' 'आङ्' पूर्वाद्ददातेः क्त "अच उपसर्गात्तः" । अनधरोऽधरः संपद्यते तथा कृत - अधरीकृतः, च्विः । असामयिकम्-समयोऽस्य प्राप्त इत्यर्थे "समयस्तदस्य प्राप्तम्" इति ठञ्, ततो नञ्समासः । समय एव सामयिकः, स्वार्थिको विनयादित्वात् ठगिति चित्रभानुः । क्षोभ इति घञन्तम् । उच्चैरित्यव्ययात् "अव्ययसर्वनाम्नामकच् प्राक् टेः" इत्यकचि उच्चकैः ।

व्याख्या—( हे भीम ! भवता-आदरास्पदेन त्वया, धीरतया-*धैर्यगुणेन ( करणभूतेन ) अधरीकृतः-पूर्वं स्वापेक्षया नीचैः कोटिं प्रापितः-तिरस्कृतः, अपां पतिः-जलस्वामी समुद्रः, इदानीम्, उपात्तम्-गृहीतम्, †रंहः-वेगः-त्वरा, येन-तथाभूतस्य मनसः-चेतसः, असामयिकम्-अप्राप्तकालम्-अनवसरदुःस्थम्, ( समयः सभायां कृता द्वादश वर्षाणि वनवासप्रतिज्ञा, स एव सामयिकः, तद्विरुद्धमिति-चित्रभानुः ) क्षोभम्-चाञ्चल्यम्, वितन्वता-विशेषेण विस्तारयता, चेष्टाभिः प्रकटयता इति वा, भवतैव, किम् उच्चकैः क्रियते-किमर्थमुत्कर्षं नीयते । किम्. क्षेपार्थकत्वान्नैतदुचितमित्यर्थः ।

भा०—भीम ! त्वयि पूर्वमेतादृशं धैर्यमासीद्, येन त्वयैव धीरतमोऽपि समुद्रो जितः, ( समुद्रे प्रकृतिस्थितिमात्रम्, न तु चलनविरहः, तरङ्गमालाकुलत्वात्, त्वयि तूभयम्, मर्यादास्थितिरपि, मनसश्चलनाभावोऽपि, तेन समुद्रो जित इति चित्रभानुः । समुद्रस्य काले ( प्रलये ) धैर्य ( स्थिति ) त्यागः, तव तु न कदापीति तस्य जय इति वयम् ) इदानीं तु त्वं मनस्यकाल एव त्वरया क्षोभमुद्भावयसि, तेन समुद्रस्त्वदपेक्षया उत्कृष्टः स्यात् । तस्य समये धैर्यत्यागः, तव त्वसमय एवेति तस्योत्कर्षः । पराजितस्य पुनरुच्चैः करणं सर्वथानुचितमेवेति धैर्यं त्वया रक्षणीयमेव । प्रशंसया समुत्साह्य भीमो राज्ञा नीतिविदा क्षोभान्निवर्त्यते ।

---

* 'मनसो निर्विकारत्वं धैर्यं सत्स्वपि हेतुषु'—इति रसिका ।

† 'रंहस्तरसी तु रयः स्यदः'—इत्यमरः ।

अल०—वितन्वतेति समुद्रस्योच्चै करणे हेतूपन्यासात्काव्यलिङ्गमिति मल्लिनाथ । चिराद् धृत धैर्य रक्षणीयमेवेति विवक्षितस्यार्थस्य वैचित्र्येण प्रतिपादनात् पर्यायोक्त मुख्यम् । धीरतयाधरीकृत इत्यनुप्रासश्चमत्कारी ।

**श्रुतमप्यधिगम्य ये रिपून् विनयन्ते न शरीरजन्मनः ।**

***जनयन्त्यचिराय सपदामयशस्ते खलु चापलाश्रयम् ॥४१॥**

अ०—ये श्रुतम् अधिगम्य अपि शरीरजन्मन रिपून् न विनयन्ते, खलु ते अचिराय सपदाम् चापलाश्रयम् अयश जनयन्ति ।

व्याक०—शरीरे जन्म येषा तान् शरीरजन्मन., सप्तम्यन्तस्य पूर्वनिपात-विधिना ज्ञापितो व्यधिकरणबहुव्रीहि । चापलम् आश्रयो यस्य, तत् चापलाश्रयम् । चपलस्य भावश्चापलम्, भावार्थकोऽण् तद्धित । श्रुत व्याख्यातम् । अधिगम्येति गच्छतेर्ल्यपि वैकल्पिकत्वान्मलोपाभावे रूपम् । विनयन्ते-"कर्तृस्थे चाशरीरे कर्मणि" इत्यात्मनेपदम् । जनयन्तीति जायतेर्णि-जन्तस्य, मित्त्वाद् ह्रस्व । अयश इति प्रयोज्यकर्तृ ।

व्याख्या—ये पुरुषा , श्रुतम्-शास्त्रम्, अधिगम्यापि-ज्ञात्वापि, ( यद्वा-श्रुतमपि, शास्त्रमपि, अधिगम्य, अपि. समुच्चयार्थ , तेन विवेकधैर्यादिकम-'यालम्ब्येति अनुक्तमप्यूह्यमिति चित्रभानुः ) शरीरजन्मन -सूक्ष्मशरीरजातान्, ( यद्वा सति शरीरे उत्पद्यमानान्, न त्वात्मन स्वाभाविकान् ) रिपून्-शत्रुसदृशान् विनाशकान्, कामक्रोधादीन् दोषान्, ( अजितानि चक्षुरादीन्द्रि-याण्यपि रिपुशब्देनेह ग्राह्याणीति चित्रभानु ) न विनयन्ते-न निरुन्धन्ति, खलु निश्चयेन, ते पुरुषाः, अचिराय-शीघ्रमेव, सपदाम्-श्रियाम्, चापलतानि-मित्तकम्, अयशः-दुष्कीर्तिम्-कलङ्कम्, जनयन्ति-उत्पादयन्ति । चिरायेति पाठे चिरकालस्थायि अयशो जनयन्तीति व्याख्येयम् ।

भा०—शास्त्राधिगमो हि क्रोधादिविकारविजयायैव भवति, ये शास्त्रमधीत्यापि विकारा न जिता , तेषा न केवल शास्त्राधिगमो व्यर्थ , अपि तु श्रियमपि रक्षितु ते न शक्नुवन्ति । तेभ्यः शीघ्र श्रीरपयात्येव । तच्चेदमपयान न श्रिया. स्वाभाविकम् , अपि तु तेषा पुरुषाणा दोषैरेव

* 'जनयन्ति चिराय'–इति दाक्षिणात्यपाठ. ।

जनितम् । तस्मात् श्रीश्चपलेति लोके योऽस्य श्रिया॰ शिरसि कलङ्क, सोऽयमजितेन्द्रियै॰ पुरुषैरेव दत्त॰ । शरीरजन्मन इत्युक्त्या यैरतिसन्निकृष्टा अपि रिपवो जेतुमशक्या , ते दूरस्थान् रिपून् कथ जेष्यन्तीत्यभिप्रेतम ।

अल॰—श्रुतमप्यधिगम्य रिपूणामविनय इत्यपिद्योत्यो विरोध । तेषा श्रीरपयातीति प्रकृतस्याप्रस्तुतलक्ष्मीकलङ्करूपकार्यमुखेनाभिधानादप्रस्तुतप्रशंसा। भीम ! शास्त्रज्ञोऽपि भवान् कोधवशश्चेन्न लक्ष्मीं स्थिरा प्राप्तु योग्य स्याद्, इति प्रस्तुतस्य सामान्यमुखेनाभिधानादप्यप्रस्तुतप्रशसा । पुरुषाणा दोषेण श्रिया कलङ्क इत्यसङ्गतिरपि ।

**अतिपातितकालसाधना स्वशरीरेन्द्रियवर्ग॰तापनी ।**
**जनवन्न भवन्तमक्षमा नयसिद्धेरपनेतुमर्हति ॥४२॥**

अ॰—अतिपातितकालसाधना स्वशरीरेन्द्रियवर्गतापनी अक्षमा जनवद् भवन्तम् नयसिद्धे अपनेतु न अर्हति ।

व्याक॰—अतिपातितानि कालश्च साधनानि च ( द्वन्द्व ) यया सा अतिपातितकालसाधना, द्वन्द्वगर्भो बहुव्रीहि । यद्वा काल एव साधनमिति कर्मधारयपूर्वको बहुव्रीहि । अतिपातितेति णिजन्तान्निष्ठा, कालसाधनानि प्रयोज्यकर्तृणि । साधनमिति भावल्युडन्तम् । स्वस्य-शरीरम्, इन्द्रियवर्गश्च, ( द्व॰ ष॰ तत्पु॰ ) तयोस्तापनी स्वशरीरेन्द्रियवर्गतापनी । तापनीति णिजन्तात्कर्तरि ल्युडिति मल्लिनाथ । बाहुलकात्तत्सम्भवेत् । टित्त्वान् ङीप् । चित्रभानुस्तु तापिनीति पाठ मत्वा ताच्छील्ये णिनिमाह । अक्षमा-क्षमूष् धातो "षिद्भिदादिभ्योऽङ्", ततो नञ्समास । जनवद्-जनैस्तुल्यमित्यर्थे "तेन तुल्य क्रिया चेद्वति ", "तद्धितश्चासर्वविभक्ति॰" इत्यव्ययत्वम् । अपनेतुम्-"शक-धृषज्ञाग्ला—" इत्यादिना अर्हतावुपपदे तुमुन् ।

व्याख्या—अतिपातितानि-अतिक्रमम् ( अनादरम् ) नीतानि, काल -अनुकूल समय , साधनानि-सहायादयश्च यया, ( यद्वा अतिपातित कालरूप मुख्य साधन यया ) तथाभूता, स्वस्य शरीरम्, इन्द्रियवर्गम्-मनश्चक्षुरादिक च तापयति-दुःखयति-इति तथाभूता, अक्षमा-असहिष्णुता-क्रोध , जनवद्-

॰ तापिनी—इति पाठान्तरम् ।

विवेकरहितान् अशिक्षितान् *पामरजनान् यथा, तथा, भवन्तम्-आदरास्पद त्वाम्, नयसिद्धेः-नीतिसाध्याया फलसिद्धे, अपनेतुम्-दूर गमयितुम्, न अर्हति-न योग्यास्ति ।

भा०—भीम ! यया सहनशक्तिर्नश्यति, सेयमक्षमा नाम मनोविकार क्रोधादिकमुत्पाद्य अनुकूलमवसर सहायादिसम्पत्तिं च प्रतीक्षितुं न ददाति, त्वरया अविवेकेन प्रवर्तयति । अनया च शत्रूणा कोऽप्यपकारो न क्रियते, अपि तु स्वस्यैव शरीरमिन्द्रियाणि च ताप्यन्ते ( शरीरेन्द्रियेत्युक्त्यापि स्वस्यैव शरीरादौ लब्धे स्वपदोपादान स्वस्यैव शरीरादिक तापयतीति द्योतयितुमुपात्तम्) तयानयाभिभूता प्राकृता पामरजना अविवेकेन प्रवर्तमाना नीतिभ्रष्टा सिद्धेरपि भ्रश्यन्ति । भवादृशास्तु विवेकी अस्या वशगा भवेदिति न सर्वथा योग्यम् । भीम प्रशस्य तत्सान्त्वनमेव राज्ञ उद्देश्यम् ।

अल०—जनवदिति वैधर्म्येण दृष्टान्त । भावार्थोक्तरीत्या स्वशब्देन गम्या परिसख्या । विशेषणे अक्षमायास्त्याज्यत्वे साभिप्राये इति परिकरः ।

**उपकारकमायतेर्भृश †प्रभव. कर्मफलस्य भूरिण ।**
**अनपायि निवर्हण द्विषा न तितिक्षासममस्ति साधनम् ॥४३॥**

अ०—आयतेः भृशम् उपकारकम्, भूरिण कर्मफलस्य प्रभव., अनपायि द्विषा निवर्हणम् साधनम् तितिक्षासमम् न अस्ति ।

व्याक०—उपकरोतीत्युपकारकम्, ण्वुल् । प्रभव इति प्रसव इति वा भवतेः सुवतेर्वा "ऋदोरप्" इति करणे अधिकरणे वा अप् । अनपायीत्यत्र अपायोऽस्त्यस्येत्यर्थे अपायशब्दादिनि, ततो नञ्समास । द्वेष्टे. "सत्सु द्विष्—" इत्यादिना क्विपि द्विट्, तस्य कर्मणि षष्ठीबहुवचने द्विषाम् । निवर्हणमिति ल्युडन्तम् । तितिक्षेति-'तिज् निशाने' धातोः स्वार्थे "गुप्तिज् किद्भ्य सन्" । सन्नन्तात् स्त्रियाम् "अ प्रत्ययात्" इति अकार प्रत्यय । आयते, कर्मफलस्य, द्विषाम्-इति कर्मार्थिका षष्ठ्य ।

व्याख्या—आयते -उत्तरकालस्य, दीर्घकालव्यापिन्या सपद, भृशम्-

---

* जनो लोके महर्लोकात्परलोके च पामरे—इति मेदिनी ।

† प्रभव कर्मफलस्य—इति मल्लिनाथसमत पाठः ।

अत्यन्तम, उपकारकम-अनुकूलम, स्थिरताहेतु , भूरिण -प्रभूतस्य, कर्मफलस्य कर्मजन्याया प्रयोजनसिद्धे , प्रभव -उत्पत्तिस्थानम्, मूलकारणम ( प्रभव उत्पादकमिति वा ) अनपायि-स्वयमविनश्यत्, ( अथवा अपायस्य-अनर्थस्य *अहेतु ) द्विषाम्-शत्रूणाम्, निबर्हणम-विनाशकम्, साधनम-सिद्धेरुपाय, तितिक्षासमम्-क्षमया तुल्यम्, अन्यद् न अस्ति । क्षमा त्वेवविध साधनमस्तीति अर्थाल्लभ्यते ।

भा०—क्षमा पुरुषस्योत्तरकाल रक्षति, वर्तमाना सपद पाति, सत्यामेव क्षमाया कर्माणि नून फलमुत्पादयन्तीति सैव फलप्राप्तेर्मूलकारणम् । इयमेव शत्रून् विनाशयन्त्यपि स्वस्य स्वाश्रयस्य वा नानर्थं जनयति । एवविध सिद्धे साधन नान्यज्जगति वर्तते । अस्ति पराक्रमेणापि आयतेरुपकार, पर नात्यन्तिकः, क्षमा तु भृशमुपकारिका । पराक्रमः फल ददाति, परमल्पमेव, क्षमा तु भूरि ददाति । पराक्रम -शत्रून्नाशयति, पर कदाचित्स्वस्याप्यपकरोति, क्षमा तु न तथेत्युत्कृष्टा सा । कालप्रतीक्षया सहिष्णुतेह क्षत्रियाणा क्षमा विवक्षिता, न तु मुमुक्षूणामिव सर्वथा प्रवृत्तिविघातिनीति चित्रभानु ।

अल०—तितिक्षासममिति सादृश्यमुपात्तम्, उपमेयस्य कस्यचिन्नाम तु न गृहीतमिति उपमेयलुप्ता समासगता आर्थी उपमेति मल्लिनाथ । काव्यप्रकाशरीत्या तूपमानलुप्तेय व्यवह्रियते, क्षमाया वर्णनीयत्वेनोपमेयत्वाद्, उपमानस्यानुपादानात् । रसगङ्गाधरकारस्तु उपमानसत्ताप्रतिषेधे नोपमामिच्छति, तद्रीत्या 'असमो' नामात्रालङ्कार । पराक्रमाद्यपेक्षया व्यतिरेको भृशादिशब्द-भावार्थोक्तिरीत्या व्यज्यते ।

**प्रणतिप्रवणान् विहाय न †सहजस्नेहनिबद्धचेतस ।**
**प्रणमन्ति सदा सुयोधन प्रथमे मानभृता न वृष्णय. ॥४४॥**

अ०—सहजस्नेहनिबद्धचेतस मानभृता प्रथमे वृष्णय. प्रणतिप्रवणान् न विहाय सुयोधन सदा न प्रणमन्ति ।

व्याक०—सहजेन स्नेहेन ( कर्म० ) निबद्ध ( तत्पु० ) चेतो येषा ते

---

* शनिप्रत्ययवाच्यः सम्बन्धो हेतुहेतुमद्भावो विवक्ष्यत इति चित्रभानु. ।

† 'सहजप्रेम' इति पाठान्तरम् ।

सहजस्नेहनिबद्धचेतस । सह जायत इति सहजम्, "अन्येष्वपि दृश्यते" इति जनेर्डप्रत्यय । स्निह्यतेर्घञि स्नेहः, बध्नातेर्निष्ठाया निबद्धम् । निबद्धचेतस इति प्रथमाबहुवचन वृष्णिविशेषणम्, द्वितीयाबहुवचन न पदबोध्याना विशेषण वा । आवृत्त्योभयमपीति चित्रभानु । प्रणत्या प्रवणान् प्रणति-प्रवणान् । प्रणतिरिति नमते क्तिन्, "उपसर्गादसमासेऽपि णोपदेशस्य" इति णत्वम् । प्रुधातोर्ल्युप्रत्यये प्रवण । मान बिभ्रतीति मानभृत, बिभर्ते क्विप्, उपपदसमास । ततो निर्धारणे षष्ठी । विहाय-जहातेर्ल्यप् । सुयोधनम्, युध्यतेः "भाषाया शासियुधि—" इत्यादिना युच् । सदा-सर्वशब्दात् "सर्वैकान्य—" इत्यादिना कालार्थे दाप्रत्ययः, सर्वशब्दस्य विकल्पेन सादेशश्च ।

व्याख्या—सहजेन-स्वाभाविकेन, स्नेहेन-प्रेम्णा, ( यद्वा-मातृष्वसृ, पितृष्वसृ-सुतादय सहजा इत्युच्यन्ते, तदुचितेन प्रेम्णा ) निबद्धम्-सक्तम्, चेत·-मनो येषा तथाभूता, मानभृताम्-आत्माभिमानरक्षिणाम्, प्रथमे-अग्रेसरा, वृष्णय -वृष्णिवश्या यादवा, *प्रणतिप्रवणान्-प्रणामपरान्, सहजस्नेहनिबद्धचेतसश्च, न·-अस्मान्, विहाय-परित्यज्य, सुयोधनम्-दुर्योधनम्, सदा-सर्वस्मिन् काले, न प्रणमन्ति-न समानयन्ति-नानुसरन्तीति ।

भा०—ननु क्षमावलम्बने क्रमेण दुर्योधनपक्षवृद्धि स्यात्, उदासीनेष्व-स्मासु सर्वे राजानो दुर्योधनेनैव मैत्री बध्नीयुरिति भीमस्याशङ्का मनसि विचार्य युधिष्ठिर उत्तरयति-नैव स्यात् । प्रथम बलशालिनो यादवानेव पश्य, तेषा प्रधानस्य कृष्णस्य वय पितृष्वसु.सुता., स्वाभाविक च तैरस्माक प्रेम, तेषा चास्माभि, मानयामश्च वय तान् । दुर्योधनोऽभिमानी न तान् मानयति, असमानिता अपि केचन लुब्धा मानमविगणय्य महान्तमनुवर्तेरन्, पर ते तु मानरक्षिण इति अस्मान् विहाय दुर्योधनेन तेषा प्रीतिर्न कदापि भवितुमर्हति । प्रयोजनापेक्षया कचित्काल भवेदपि, सदा तु नैव ते दुर्योधनमनुसरेयुरिति तेषा भेदशङ्का नास्त्येव । ते दुर्योधन त्यजन्त्येव, अस्मत्पक्ष एवागमिष्यन्तीति परमस्माक बलम् ।

अल०-प्रणामाभावे बहुहेतूपन्यासादनेकपदार्थहेतुक काव्यलिङ्गमिति मल्लिनाथ ।

---

* प्रवण क्रमनिम्नोर्व्यां प्रह्वे ना तु चतुष्पथे—इत्यमर ।

**सुहृदः सहजास्तथेतरे मतमेषां न विलङ्घयन्ति ये ।**
**विनयादिव यापयन्ति ते धृतराष्ट्रात्मजमात्मसिद्धये ॥४७॥**

अ०—ये एषां सहजाः तथा इतरे सुहृदः मतं न विलङ्घयन्ति, ते आत्मसिद्धये विनयादिव धृतराष्ट्रात्मजम् यापयन्ति ।

व्याक०—सुष्ठु हृदयं येषां ते सुहृदः, "सुहृद्दुर्हृदौ मित्रामित्रयोः" इति निपातितो हृदादेशः । आत्मनो जातः आत्मजः, "पञ्चम्यामजातौ" इति डः । यापयन्ति-यातेर्णिच्, "अर्तिह्री–" इत्यादिना पुगागमः । तथेत्यादिशब्दा व्याख्याताः । धृतराष्ट्रात्मजमिति यापनकर्मणि द्वितीया, प्रतात्यव्ययमध्याहृत्य तद्योगे वा द्वितीया । विनयादिति विनयं प्रदर्श्येत्यर्थे "ल्यब्लोपे कर्मण्यधिकरणे च" इति पञ्चमी ।

व्याख्या—ये अन्ये राजानः, एषाम्-वृष्णीनाम्, सहजाः-मातृकुले जाताः, पितृष्वस्रादिसुता वा, तथा किं च, इतरे-अन्यविधाः प्राकृताः (अनन्तरादनन्तरस्य राष्ट्रस्याधिपाः) कृत्रिमाश्च ( येषामुपकारः कृतः, यैर्वा स्वस्योपकारः कृतस्तथाविधाः ) सुहृदः-मित्राणि मतम्-वृष्णीनां विचारम्-पाण्डवपक्षम्, न विलङ्घयन्ति न अतिक्रामन्ति, ( चित्रभानुस्तु ये, इतरे-यादवेभ्योऽन्ये, अस्माकम्, सहजाः-स्वाभाविकाः, सुहृदः-मित्राणि, तेऽपि तथा-यादवा इव सदा सुयोधनपक्षे न स्थास्यन्ति, ये च एषाम्-अस्मत्सुहृदाम्, मतम्-अभिप्रायम्, न विलङ्घयन्ति, तत्पक्षपातिनः सन्ति सुहृदां सुहृद इत्यर्थः इति व्याख्यान्तरमप्याह, स्वारसिकं चैतत्प्रतीयते ) ते-एते सर्वे, आत्मसिद्धये-स्वस्य प्रयोजनं साधयितुम्, विनयादिव-( इव-शब्दो विनयसाम्यं वदन् विनयस्य कृत्रिमतां द्योतयति ) कृत्रिमं विनयं प्रकाश्य, धृतराष्ट्रात्मजम्-दुर्योधनम्, यापयन्ति-प्रतारयन्ति ( विकारेभ्यः क्रोधादिभ्यो निवर्तयन्ति-शमयन्ति-वशी-

---

* त्रिविधाः सुहृदो नीतिशास्त्रे प्रोक्ताः-सहजाः, प्राकृताः, कृत्रिमाश्च । मातुलमातृष्वसृसुताद्याः पितृष्वसृसुताद्याश्च सहजाः । स्वानन्तरराष्ट्राधिपाः स्वस्य प्राकृताः शत्रवः, तदनन्तरराष्ट्राधिपास्तु स्वस्य प्राकृताः सुहृदः, उपकारसंबद्धाश्च कृत्रिमा इति ।

कुर्वन्तीति चित्रभानु ) यद्वा-धृतराष्ट्रात्मज प्रति विनय प्रकाश्यैव शापयन्ति-काल गमयन्ति ।

भा०—( चित्रभानुरीत्या ) यथा यादवा , तथैव सन्त्यन्येऽप्यस्माक सहजा प्राकृता कृत्रिमाश्च सुहृद , ( मल्लिनाथरीत्या ) यादवानामपि च सन्ति सहजाद्या सुहृद , तेषामपि च सुहृदा सन्त्येव सुहृद. स्वमतानुकूला , त एते सर्वेऽपीदानीं यद्यपि दुर्योधनानुगता त प्रति विनीता दृश्यन्ते, तथापि स एष एषा विनय कृत्रिम , केवल प्रयोजनापेक्षी, सम्राड् दुर्योधन इति तेन सह वैरमनुचित मन्वाना विनय प्रदर्श्य त प्रतारयन्ति, स्वप्रयोजन साधयन्ति च, कार्यकाले तु तेऽस्मत्पक्षमेव यादवै सहाश्रयिष्यन्ति। धृतराष्ट्रात्मजमिति पदम अन्धपुत्रो दुर्योधन स्वयमप्यन्ध इव कृत्रिममपि विनयमकृत्रिम मन्यत इति सुशक प्रतारयितुम्' इति द्योतयति ।

अल०—धृतराष्ट्रात्मजपद भावार्थोक्तरीत्या साभिप्रायमिति परिकराङ्कुर । सर्वे युगपत्स्वपक्षमाश्रयिष्यन्तीति समुच्चयो व्यङ्ग्य ।

**अभियोग इमान् महीभुजो भवता तस्य कृतः कृतावधे ।**
**प्रविघाटयिता समुत्पतन् हरिदश्व कमलाकरानिव ॥४६॥**

अ०—भवता कृत कृतावधे तस्य अभियोग समुत्पतन् ( सन् ) इमान् महीभुज हरिदश्व कमलाकरान् इव प्रविघाटयिता ।

व्याक०—कृत. अवधिर्येन तस्य कृतावधे । अवधिरिति व्याख्यातम् । हरित अश्वा यस्य स हरिदश्व । कमलानामाकरान् कमलाकरान् । आक्रियते, आकीर्यते वा अस्मिन्नित्याकर -“पुसि सज्ञाया घ प्रायेण” । अभियोग इति युनक्तेर्घञ्, “चजो कु घिण्यतो” इति कुत्वम् । पतन्निति 'लक्षणहेत्वो क्रियाया” इति लट शत्रादेश. । महीभुज इति सोपपद क्विवन्तम् । प्रविघाटयिता-घट धातोर्णिजन्तादनद्यतनभविष्यदर्थे लुट् । द्विविधोऽय घटधातु , भ्वादौ पठितश्चुरादौ पठितश्च । तत्र भौवादिकस्य णिचि मित्त्वेन ह्रस्वे घटयिता, चौरादिकस्य तु 'नान्ये मितोऽहेतौ इति ज्ञपादिपञ्चव्यतिरिक्तस्य स्वार्थे णिचि मित्त्वनिषेधाद् 'घाटयिता' । तस्माच्चौरादिकोऽय स्वार्थणिजन्त , तत्प्रकृतिकहेतुमण्णिजन्तो वा । मल्लिनाथस्तु विपरीतमस्य

भावादिकत्वं वदन् भ्रान्त एव। तस्येत्यभियोगकर्मणि षष्ठी, भवतेत्यभियोग कर्तृत्वेनापि युज्यते, षष्ठी तु न 'उभयप्राप्तौ कर्मणि' इति नियमात्।

व्याख्या—भवता-लोके आदरास्पदेन त्वया भीमेन, कृत -विधातुमुपक्रान्तः, ( *प्रस्तुत इति चित्रभानु ) †कृतावधेः -नियमितकालस्य, तस्य-दुर्योधनस्य, ‡अभियोग -आर्द्राभिभव -त प्रति सेनया अभियानम-तद्दुर्ग आक्रमणम्, समुत्पतन्-प्रसरन्-सर्वत्र प्रकटीभवन् सन्, इमान्-पूर्वोक्तान्, महीभुज -राज्ञ, (समुत्पतन्-उद्यन्नेव) §हरिदश्वइव-सूर्यो यथा, कमलाकरान्-पद्मसमूहान, तथा, प्रविघाटयिता-विश्लेषं प्रापयिष्यति, भेदयिष्यति।

भा०—भीम! यद्यपि मयोक्ता राजानः सन्त्येवास्मत्पक्षपातिनः परं यदि द्यूतसभायां प्रतिश्रुतस्य त्रयोदशाब्दपरिमितस्यावधेर्मध्य एव त्वत्प्रस्तावमनुसृत्यास्माभिराक्रमणं क्रियेत, तर्हि दुर्योधनस्यादोषम्, अस्माकं सत्यप्रतिज्ञातिक्रमरूपं दोषं च विभाव्य सर्व एतेऽस्मत्पक्षात्पृथग् भविष्यन्ति। अस्मत्पक्षाश्रयणे काप्युपपत्तिर्न भविष्यतीति न्याय्ये पथि वर्तमानास्ते कथं दुर्योधनेन युध्येरन्। यथा सूर्य उदयन्नेव कमलदलानि भेदयति, तथा त्वत्प्रस्तुताभियोगवृत्तान्तः प्रसरन्नेव सर्वान् अस्मत्तो भेदयेदिति व्याख्यातारोऽभिप्रायमाहुः। वयन्तु पश्यामः-कृतावधेरिति विशेषणादवधिपरिसमाप्ताविति लभ्यते, ततश्चावधौ पूर्णे त्वया कृतस्याक्रमणस्य वृत्तं निशम्य य इदानीं पूर्वोक्तया कृत्रिमरत्या तत्पक्षावलम्बिनः, ते ततो विश्लेषमेष्यन्ति, अस्मत्पक्षं चाश्रयिष्यन्तीति। एतदेव चोत्तरश्लोकेन सहेतु विवियत इति प्रकरणानुकूलत्वम्। एतेन 'अथ चेदवधिः प्रतीक्ष्यते' इति भीमोक्तस्योत्तरं दत्तम्।

अलं०—उपमा। कृतावधेरिति विशेषणस्य साभिप्रायत्वात्परिकरः।

---

* भीम! त्वया प्रस्तुतोऽयमभियोगो न श्रुतिस्मृतिशिष्टानुमोदितः, अपि तु त्वयैवाभिनवं कर्तुमुपक्रान्त इति द्योतयितुं कृत इत्युक्तम्, न तु प्रस्तुत इतीत्यभिप्रायं स एवाह।

† 'अवधिस्त्ववधाने स्यात् सीम्नि काले बिलेपि च'—इति विश्वः।

‡ अभियोगस्तु शपथे स्यादार्द्रे च पराभवे—इति विश्वः।

§ हरिदश्वोऽब्जरस्मयः—इत्यमरः।

**उपजापसहान् विलङ्घयन् स विधाता नृपतीन् मदोद्धत. ।**

**सहते न जनोऽप्यध क्रिया किमु लोकाधिकधाम राजकम् ॥४७॥**

अ०—मदोद्धत. स, नृपतीन् विलङ्घयन् ( तान् ) उपजापसहान् विधाता, जन अपि अधःक्रिया न सहते, लोकाधिकधाम राजक किमु ( सहेत )।

व्याक०—मदेन उद्धत मदोद्धत, करणतृतीयान्तेन तत्पुरुष । माद्यते " मदोऽनुपसर्गे " इत्यप्प्रत्यये मद । उत्पूर्वकाद्धन्तेर्निष्ठायामुद्धतः । सहन्ते इति सहा, पचाद्यच्, उपजापस्य सहा, तान् उपजापसहान्। उपजाप इति घञन्तम्। * लोकाद् अधिकम् धाम यस्य, तद् लोकाधिकधाम । लोकते, लोक्यते वा स लोक पचाद्यच्, कर्मणि घञ् वा । विलङ्घयन्निति स्वार्थणिजन्ताद्धेतौ शतृप्रत्यय । विधाता-इति " अनद्यतने लुट् " । राज्ञा समूहो राजकम्, " गोत्रोक्षोष्ट्र—" इत्यादिना वुञ्प्रत्यय., वस्य अकादेश ।

व्याख्या—मदेन-कृतार्थताहेतुकहर्षविशेषजनितेन अभिमानेन, उद्धतः-उच्छृङ्खल, स-दुर्योधन., नृपतीन्-मनुष्येश्वरान् राज्ञ, विलङ्घयन्-अतिक्राम्यन्-तिरस्कुर्वन्, तान्, † उपजापस्य-भेदस्य, सहान्-योग्यान्, विधाता-करिष्यति । जनः अपि-साधारण पामरो लोकोऽपि, अध क्रियाम् नीचैःकरणम्-तिरस्कारम्, न सहते-न मृष्यति, लोकाद्-सर्वस्माद् भुवनाद् अधिकम्, ‡ धाम-प्रभावो यस्य तथाभूतम्, राजकम् राजसमूह, किमु सहेत, न सहेतैवेति । यद्वा-सहेतेति किमु वक्तव्यम्, तस्य सहनस्य कथैव नास्तीति ।

भा०—अस्माक साक्षात्परम्परया वा सुहृदः अस्मत्पक्ष आगमिष्यन्त्येव, परे य उदासीना, तेऽपि कालक्रमेण दुर्योधने विरक्ता भविष्यन्तीति अस्माभिर्भेदरूपमुपायमाश्रित्य स्वपक्ष आनेतु शक्यन्ते। दुर्योधनो हि स्वभावेनोद्धत. कृतार्थता च स्वीयामवगत्य हर्षेण तथा मत्तो भविष्यति, यथा सर्वानवमानयिष्यति। अवमाननान्तु साधारणोऽपि जनो न सहते, लोकातिशायिनस्ते राजान,

---

* " यस्मादधिकम् " इति पाणिनीयनिर्देशाद् अधिकशब्दयोग पञ्चमी । " पञ्चमी " इति योगविभागेन समास ।

† समौ भेदोपजापौ—इत्यमर. ।

‡ गृहदेहत्विट्प्रभावा धामानि—इत्यमरः ।

तेषामपि च समूह , कथमवमानं सहेत, तस्मात्तया विरागस्तत्र स्वाभाविक तेन चास्मत्प्रयोजनससिद्धिरिति। विधाता-इति अनद्यतनार्थेन लुट्प्रत्ययेन विरागोत्पत्तौ कश्चित्काल समपेक्ष्यत एवेति द्योतितम् ।

अलं०—विशेषस्य सामान्येन समर्थनमित्यर्थान्तरन्यास । किमु राजक-मिति कैमुत्येनार्थससिद्धिरिति काव्यार्थापत्तिरपि ।

**असमापितकृत्यसम्पदा हतवेग विनयेन तावता ।**

**प्रभवन्त्यभिमानशालिना मदमुत्तम्भयितु विभूतय ॥ ४८ ॥**

अ०—विभूतय अभिमानशालिनाम् ,असमापितकृत्यसम्पदाम् ( सताम् ) तावता विनयेन हतवेग मदम उत्तम्भयितु प्रभवन्ति ।

व्याक०—अभिमानेन शलन्ति, शाडन्ते वा ( डलयोरभेदात् ) ते अभि-मानशालिन , "सुप्यजातौ णिनिस्ताच्छील्ये" । न समापिता कृत्याना सपदो यै , तेषाम् असमापितकृत्यसपदाम् । समापितेति णिजन्तादाप्नोते क्त । कृत्यसम्पद. प्रयोज्यकर्त्र्य । " विभाषा कृवृषो " इति कृधातो क्यपि कृत्यम् । हतो वेगो यस्य त हतवेगम् । ' ओविजी भयचलनयो ' इति धातोर्घञि वेगः । विभूतिरिति भवते क्तिन् । तावता-तच्छब्दात्परिमाणे वतुप्, आत्वम् । स्तम्भधातोर्णिजन्तात् शकसमानार्थकेन प्रभवतिना योगे " शकधृष-ज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन् " इति तुमुन्प्रत्ययः । अर्थग्रहण-स्यास्तिनैव सम्बन्धो नेतरैरिति, मते तु अस्तिसमानार्थत्वेन, " पर्याप्तिवचने-ष्वलमर्थेषु " इति वोपपाद्य । स्तम्भयितुम्-इत्यस्योपसर्गेण 'उत्' शब्देन योगे " उद स्थास्तम्भो पूर्वस्य " इति पूर्वसवर्णे उत्तम्भयितुम् । अभिमानशालि-नामिति मदसम्बन्धे षष्ठी । असमापितकृत्यसम्पदामिति तु विनयसम्बन्धे, मदसम्बन्ध एव वा ।

व्याख्या—विभूतयः-समृद्धय , अभिमानशालिनाम्-गर्वशीलानाम् , असमापितकृत्यसम्पदाम्-न समापिता-पूर्णता नीता कृत्यानाम्-कर्तव्यानाम्-इष्टका-र्याणाम् , सम्पत्-परिकरो यैस्तथाभूताना सताम् , तावता-केवल कार्यसिद्ध्यर्थ-मपेक्षितेन अल्पपरिमाणेन, विनयेन-नम्रतागुणेन, हतवेगम्-निरुद्धप्रवाहम्-निरुद्धप्रसरम् , मदम्-गर्वम् , उत्तम्भयितुम्-उन्नतवेग कर्तुम्-वर्धयितुम् , प्रभव-

न्ति-समर्था सन्ति ।

भा०—ननु दुर्योधन सर्वत्रासाधारण विनय दर्शयतीति वनेचरेणावेदितम्, ततश्च तत्राभिमानसम्भव एव कुत इत्याशङ्क्य समाधत्ते युधिष्ठिर -दुर्योधनस्य विनयो न वास्तव , अपि तु कृत्रिम , स्वल्पकालस्थायी । येषा शील एवाभिमान , ये अभिमान गुण मन्यन्ते, तेषा मुख्यो विनयो नोत्पद्यत एव । केवल मण्डल वशीकर्तु कृत्रिम विनय ते दर्शयन्ति, स च विनयस्तावन्त कालमभिमानवेग तेषा रुणद्धि । न त्वभिमान नाशयति । यदा तु सपन्न कार्यम्, प्राप्ता समृद्धि , तदा सा समृद्धिरेवाभिमान पुनरुन्नत करोति, तेन च विनयो लीयते । वेगशब्दोऽत्र प्रसरे लाक्षणिकः, तेन यथा अदृढेनाल्पेन सेतुना निरुद्धवेगाऽपि नदी प्राप्तप्राबल्या सेतु विनाश्य सर्वत॰ प्रवहति, तथा विनयरूप सेतु विनाश्य मदस्तेषा प्रसरत्येवेति व्यञ्जितम् । चित्रभानुस्तु असमापितकृत्यसम्पदामेव मद विभूतय उत्तम्भयन्तीति योजयति, ते हि कार्यमपि पूर्णता नेतु न शक्नुवन्ति, किञ्चित्फलसिद्धौ-अल्पसमृद्धिलाभ एव विनयस्तेषा भ्रश्यतीति ।

अल०—विशेषप्रस्तावे सामान्याभिधानादप्रस्तुतप्रशसा । वेगशब्दोपन्यासाज्जलप्रवाहोपमा व्यङ्ग्या ।

**मदमानसमुद्धत नृप न वियुङ्क्ते नियमेन मूढता ।**
**अतिमूढ उदस्यते नयान्नयहीनादपरज्यते जन ॥ ४६ ॥**

अ०—मदमानसमुद्धत नृप मूढता नियमेन न वियुङ्क्ते, अतिमूढ नयाद् उदस्यते, नयहीनाद् जनः अपरज्यते ।

व्याक०—मदश्च मानश्च मदमानौ, द्वन्द्व , लघ्वक्षरत्वान्मदस्य पूर्वनिपात , ताभ्या समुद्धतम्-मदमानसमुद्धतम् । नयेन हीनाद् । नयहीनाद् नयोऽसकृद् व्याख्यात , हीनशब्दे 'ओहाक् त्यागे' धातो कर्मणि निष्ठा, "ओदितश्च" इति । नत्वम्, ' घुमास्था-" इतीत्वम् । मुहधातोर्निष्ठाया घत्वाभावपक्षे मूढ , ततो भावे तलि मूढता । निपूर्वाद्यच्छते ' यम समुपनिविषु च'' इत्यपि प्रत्यये नियमः । वियुङ्क्ते इति "स्वराद्यन्तोपसर्गादिति वक्तव्यम्" इत्यात्मनेपदम् । उदस्यते इति कर्मकर्तरि प्रयोग , नयस्तमुदस्यतीति वाच्ये नयस्य कर्तृत्वाविवक्षया कर्मण कर्तृत्वम, कर्मवद्भावाद्यगात्मनेपदे । अपरज्यते-इति रञ्जधातोर्दैवादिकात्स्वरितेत्त्व-

लक्षण पाक्षिकमात्मनेपदमिति मल्लिनाथ । चित्रभानुस्तु अत्रापि कर्मकर्तृतामेवाह। उदसनापरागयो पृथग्भावस्य विवक्षितत्वाद् 'नयात्' 'नयहीनात्' इति अपादाने पञ्चम्यौ।

व्याख्या—मदो नाम कृतार्थतासभूतहर्षजनितो विकार, स्वभावेन परापेक्षया स्वस्मिन्नुत्कर्षधीर्मान, ताभ्याम्-दर्पाहङ्काराभ्याम्, समुद्धतम्-उच्छृङ्खलम्-व्यवहारे व्यक्तविकारम्, नृपम्-राजानम्, मूढता-कार्याकार्ययोरज्ञानम्, अविवेक, नियमेन-अवश्यम्, न वियुङ्क्ते न त्यजति। अतिमूढ-अज्ञानाभिभूतो नृप, नयाद्-नीतिमार्गाद् (उचितापायज्ञानहेतो बुद्धिविशेषाद्-इति चित्रभानुः) उदस्यते-उत्क्षिप्यते पृथक् क्रियते। नयहीनाद्-नीतिमार्गपरिभ्रष्टात् (बुद्धिविशेषरहिताद्वा) नृपाद्, जन-लोकः, अपरज्यते-विरक्तो भवति, विरागेण त त्यजतीति।

भा०—'विभूतयो मदमुत्तम्भयन्ति'-इति उक्तम्, मदस्य परिणाममाह-यदा कश्चिद्राजा मदमानयोराधिक्याद् व्यवहारे विकृतिम् (परावज्ञाम्) दर्शयति, तदा क्रमेण कार्याकार्यपरिज्ञानाभावरूपा मूढता तमाक्रामति, तथा च त गृह्णाति, यथा कदापि न त्यजति। स मूढस्ता न त्यजतीति नोक्तम्, तस्य सर्वथा नियन्त्रितस्य स्वातन्त्र्याभावेन त्यागकर्तृत्वासभवात्, मूढतैव स्वय तमाक्रम्य स्थिता, सा च तादृशस्यान्यस्याश्रयस्यालाभेन त न त्यजतीति। मूढता न पृथग् भवतीति लक्ष्योऽर्थ, पुरुषस्यात्यन्त पारतन्त्र्य व्यङ्ग्यम्। मूढताक्रान्तश्च नीतिमार्गोचिता बुद्धि जहाति, तन्मार्गात्स्वय पृथक्क्रियते, (पृथग्भावे सौकर्यातिशयबोधनाय कर्मकर्तरि प्रयोगः)। यदा च बुद्धिविवेकहीन, तदा सर्वस्यापि प्रतिकूलमाचरतीति अनुरक्तोऽपि जनस्तस्मिन् द्वेष गच्छति। कोपने अत्याचारपरे च राजनि प्रजावर्ग अमात्यादिवर्गश्च सर्वोऽपि द्वेषं बध्नातीति ततोऽग्रिमश्लोकेन सम्बन्धः।

अल०—पूर्वपूर्वस्योत्तर प्रति हेतुत्वात् कारणमाला। लक्ष्यव्यङ्ग्यादिक सौकर्याय भावार्थ एवोक्तम्।

**अपरागसमीरणेरित क्रमशीर्णाकुलमूलसन्तति।**
**सुकरस्तरुवत् सहिष्णुना रिपुरुन्मूलयितु महानपि॥ ५०॥**

अ०—अपरागसमीरणेरित, क्रमशीर्णाकुलमूलसन्तति महानपि रिपु तरुवत्

नहिष्णुना उन्मूलयितु सुकर (भवति)

व्याकृ०—अपराग: समीरण इव (उपमित समास), अपराग एव समीरण इति वा अपरागसमीरण, तेनेरित । अपराग इति रञ्जेर्भावे घञ् । "घञि च भावकरणयो" इति न लोप । समीरयतीति समीरण, नन्द्यादेराकृतिगणत्वाद् ल्यु । ईरित इति क्तान्तम् । क्रमेण शीर्णा (तृ० तत्पुरु०) आकुला मूलसन्तति यस्य स क्रमशीर्णाकुलमूलसतति शीर्ण इति 'शॄ विशरणे' धातो क्त । सन्ततिरिति तनोते कर्मणि क्तिन् । तरुणा तुल्य तरुवत् "तेन तुल्य क्रिया चेद्वति" । सहतेस्ताच्छील्ये इष्णुच्प्रत्यये सहिष्णु । उन्मूल करोति उन्मूलयति, "तत्करोति तदाचष्टे" इति णिच्, ततः शकसमानार्थकसुकरयोगे अस्तियोगे वा तुमुन् । चित्रभानुस्तु क्रियार्थाया क्रियायामेव तुमुन् प्रत्ययमाह, सुकरशब्दे कृधातुना क्रियासामान्याभिधानाद् उन्मूलनक्रियार्थो अन्या क्रियेति प्रतीते । सुकर इति करोते "ईषद्दु सुषु—" इत्यादिना खल् । अस्यैव कर्मणि अनेनोक्ते रिपुरिति प्रथमा, सहिष्णुना-इति एतत्कर्तरि तृतीया, खलर्थयोगे षष्ठ्या निषेधात् ।

व्याख्या — अपराग-जनानामप्रीतिः-द्वेष, स समीरण इव-वायुसदृशः, (यद्वा स एव समीरण-तद्रूपो वायु) तेन ईरित-प्रेरित-चालित इति यावत्, ततश्च क्रमेण-कालप्रभावेण, शीर्णा-भिन्ना-पृथग्भूतावयवा, आकुला-चला-विपर्यस्तावयवा, मूलसन्तति-अमात्यादिस्वजनवर्गः-सर्वं प्रकृतिमण्डलम् 'यस्य तथाभूत. (तरुपक्षे वायुना चालितः, शीर्णा-चला च मूलसन्ततिः*-शिफासंघातो यस्य तथाभूत) महानपि-समृद्धो बलवानपि, तरुपक्षे विशालोऽपि) रिपुः-शत्रुः, राजा, तरुवद्-वृक्ष इव, सहिष्णुना-क्षमाशीलेन परेण राज्ञा, (वृक्षपक्षे-काल प्रतीक्षमाणेन, बलवता जनेन) उन्मूलयितुम्-समूल विनाशयितुम्, (तरुपक्षे-उत्पाटयितुम्) सुकरः-सुसाध्य-भवति, सुखेनोन्मूल्यत इति ।

भावा०—दण्डकार्कश्यादिभिर्हेतुभिर्यस्मिन् राज्ञि जनानामप्रीतिर्जाता, आज्ञालङ्घन-प्रतिकूलाचरणादिना च प्रजा यस्य प्रभाव विघ्नन्ति, तस्य आभ्यन्तर-प्रकृतिरमात्यादिवर्गोऽपि प्रतिकूलाचरणादिना विरक्तो भेदमापद्यते, परेण सन्धत्ते

* मूल वशीकृते स्वीये शिफातारान्तिकादिषु—इति वैजयन्ती ।

च, तस्मिन् काले शत्रवस्तस्यानायासेनैव समूल विनाश कर्तुं शक्नुवन्ति, स समृद्धोऽपि स्यात्, बलवानपि स्यात्, परमीदृशेऽन्तरे तद्विनाशे नैव कष्ट भवति। यथा विशालोऽपि तरु प्रबलेन वायुना यदा भूयो भूय प्रकम्पितो भवति तेन चान्तरपि यस्य शिफासघात शीर्यते, चाल्यते च, तस्योत्पाटन तस्मिन् काले बलवता सुकरमिति । समन्तात्प्रकम्पकत्वेन वायोर्बलवेगातिशय वो वयत्समारण-पदमिह चमत्कृतिं पुष्णाति । समीरणेनेरितस्य तरोरिव च प्रजानामप्रीतिभाग नस्य राज्ञ पारतन्त्र्यमीरितपदेन प्रतीयते । पूर्वं यो नृपादिशब्दैरुक्त, स एवेह जनानामप्रीतिभाजनमिति रिपुशब्देनाभिहितः । यथा च वायुना क्रियमाणमात्मविनाश पादपः पूर्वज्ञरोऽपि न जानाति, तथा मदजडभूतेन तेन राज्ञा उपस्थितोऽपि स्वविनाशो न ज्ञायते-इति च वस्तु उपमया व्यज्यते । तदेतदर्थ गौरवमस्य पद्यस्योत्कृष्ट चित्रभानुना प्रकटितम् । तथा च तादृशीमवस्था गतो दुर्योधनोऽस्माभि. सुजयो भविष्यतीति ।

अल०—पूर्वपद्यानुसृता कारणमाला युग्मकेऽपि । तरुवदित्युपमा, अप रागसमीरणेति रूपकेण सकीर्णा । व्यङ्ग्यार्था भावार्थ एव निरूपिता ।

**अणुरप्युपहन्ति विग्रह प्रभुमन्त प्रकृतिप्रकोपज ।**
**अखिल हि हिनस्ति भूधर तरुशाखान्तनिघर्षजोऽनल ॥ ३१ ॥**

अ०—अणु. अपि अन्त प्रकृतिप्रकोपज. विग्रह प्रभुम् उपहन्ति, हि तरुशाखान्तनिघर्षज अनल. अखिल भूधर हिनस्ति ।

व्याक०—अन्तः प्रकृतेः (कर्म०) प्रकोपाद् (प० तत्पु०) जात -अन्तः प्रकृतिप्रकोपज , पञ्चम्यन्त उपपदे जनेर्ड , उपपदसमास । प्रक्रियतेऽनया इति प्रकृति , करणे क्तिन्, कोप इति घञन्तम् । तरूणा शाखा , तासामन्ता , तेषा निघर्ष , तस्माज्जात -तरुशाखान्तनिघर्षज । षष्ठीतत्पुरुषत्रयम् , ततो डप्रत्यये उपपदसमास । निघर्ष इति घञन्तम् । विग्रह इति गृह्णातेरप् । प्रभुमिति भवते विप्रसम्भ्यो ड्वसज्ञायाम" इति डुप्रत्यय , टिलोप ।

व्याख्या—अणु -अत्यल्प , अपि, अन्त *प्रकृतिप्रकोपजः-अन्त प्रकृ-

---

* प्रकृति पञ्चभूतेषु स्वभावे मूलकारणे । छन्द कारणगुणेषु जन्त्वमात्यादिकेष्वपि-इति वैजयन्ती । स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च । राज्याङ्गानि

तानाम्-अमात्यादिस्वजनवर्गस्य स्वप्रजावर्गस्य च, प्रकोपात्-विरागात् जात विग्रह -क्रमोपजातो विरोध.-वैरम्, प्रभुम्-ईश्वरम्-राजानम्, उपहन्ति-नाशयति। हि-यथा प्रसिद्धमेतद्, यत् तरुशाखान्तनिघर्षज -तरूणाम्-पर्वतस्यान्तरङ्गभूताना वृक्षाणाम्, शाखान्ता॰-स्कन्धप्रान्तभागा , एकदेशा॰, तेषा निघर्षात्-परस्परोपमर्दाद्, जात॰, अनल -अग्नि., अखिलम्-सम्पूर्णम्, भूधरम-पर्वतम्, हिनस्ति-नाशयति ।

भा॰—बाह्यभूतस्य शत्रोराक्रमण राज्ञा तादृशभयप्रद न भवति, यथान्तभूतानाममात्यादीना प्रजावर्गस्य चाप्रीति । यथा हि पर्वतस्याङ्गभूताना वृक्षाणा शाखासघर्षणेन जातो वह्नि. स्वल्पोऽपि क्रमेण वायुनोपचित सर्वमपि पर्वत भस्मसात्करोति, तथा अन्तरङ्गाणा स्वल्पोऽपि सङ्घर्ष -( विद्वेष ) राज्ञ औद्धत्येनोपचितो राजान विनाशयत्येव । प्रकृतिशब्देन कारणवाचिना राज्ञ प्रभुत्वे एषा कारणत्व द्योतितम्, एभिरन्तरङ्गै प्रजामात्यादिभिरेव राजा राज क्रियत इति । ततश्च स्वस्मिन्राज्ञो राजत्वस्य कारणता मन्यमाना: प्रकृतयो राज्ञ प्रतिकूलगामित्वे न तद्वशगा भवन्ति, राजा च स्वस्मिन् प्रभुत्व मन्यमानो न प्रकृती प्रसादयतीति क्रमेण वर्द्धत एव वैरमिति प्रभुप्रकृतिशब्दाभ्या व्यञ्जितम् । पूर्व जानपदाना जनानामपराग , ततो बाह्यप्रकृतिप्रकोप , ततोऽन्तरङ्गप्रकृतिभेद इति क्रमो विग्रहशब्देन द्योत्यते । उपमाने प्रयुक्तै तरुशाखान्तशब्दैरुपमेयेऽपि प्रकृतिवर्ग-तद्वर्ग्याणा क्रमेण प्रकोपोभिसन्धीयत इत्यादि चित्रभानुना व्यञ्जीकृतम् ।

अल॰—दृष्टान्तालङ्कार: । अणुरप्युपहन्ति-इति विरोधाभासोऽपि ।

*मतिमान् विनयप्रमाथिन. समुपेक्षेत समुन्नति द्विष. ।
सुजय खलु तादृगन्तरे विपदन्ता ह्यविनीतसम्पद ॥ ४२ ॥

अ॰—मतिमान् विनयप्रमाथिन द्विष. समुन्नतिं समुपेक्षेत, खलु तादृग्

---

प्रकृतय पौराणा श्रेणयोऽपि च—इत्यमर । वह्नि प्रकृतयो मित्रजानपदाद्या इति चित्रभानु ।

* नयवान् ' इति दाक्षिणात्यपाठ: ।

अन्तरे सुजय ( भवति ), हि अविनीतसम्पद विपदन्ता ( भवन्ति ) ।

व्याक०—विनयं प्रमथ्नातीति तस्य विनयप्रमाथिन , "सुप्यजातौ णिनिस्ताच्छील्ये ". उपपदसमास । विनय इत्यच्प्रत्ययान्तम् । विपद् अन्ते यासा ता विपदन्ता " गड्वादेः परा सप्तमी "-अत्रादिशब्दस्य प्रकारवाचित्वाश्रयणात्सप्तम्यन्तस्य परनिपात । यद्वा-विपद् अन्तो यासामिति समानाधिकरणसमास एवास्तु । विपत्-सम्पदादयो व्याख्याता । मतिमानिति प्राशस्त्ये मतुप् । स' ( इव ) दृश्यते तादृग्, " त्यदादिषु दृशोऽनालोचने कञ्च " इति विकल्पेन क्विप् । सुजय -जयते खल् । शत्रुभिरिति कर्ता व्याहार्य । अविनीत इति क्तान्तम् ।

व्याख्या—मतिमान्-प्राज्ञ', विनयप्रमाथिनः-त्यक्तविनयस्य, द्विषः-शत्रो , समुन्नतिम्-अभ्युदयम् , समुपेक्षेत-नाद्रियेत, न प्रतिकुर्यादिति । खलु-निश्चयेन, तादृग्-दुर्विनीत , *अन्तरे-कस्मिंश्चित् छिद्रे प्राप्ते, (यद्वा-तादृगन्तरे-पूर्वप्रतिपादितेऽवसरे स सुजय इति व्याख्येयम् ) शत्रुभि , सुजय -सुखेनैव जेतु शक्य । हि-यत , अविनीतानाम्-विनयरहितानाम्, सम्पद -श्रिय., विपदन्ता -विपद्-अनर्थः, अन्ते-अवसाने यासाम् ( वा अन्तः परिणामो यासाम् ) तथाभूता भवन्ति ।

भा०—पूर्वोक्त कार्यकारणक्रममालोच्य तादृशस्य शत्रोर्विजये बुद्धिमता न श्रम कार्य , येन कार्यकाले स्वीकृतोऽपि विनयस्त्यक्त । यतो हि पूर्वोक्तावसरलाभे तस्य पराभव सुखेनैव स्यात् । न च तादृशोऽवसरो नायास्यतीति भ्रमितव्यम्, विनयमन्तरेण सम्पदो नैव तिष्ठन्ति, अनर्थमुत्पाद्य लीयन्त एवेति नियमात् । श्रूयते हि नहुषरावणादीना विपदेव परिणतिः, दृश्यते च स्फुट बहुत्र तथेति । ' असमापितकृत्यसपदाम् ' इत्यारभ्याविनयप्रपञ्च कृत , इहोपसहृत । ' अचिरेण परस्य भूयसीम् ' इत्यादिभीमोक्तस्य चेदमुत्तरम् ।

अल०—पूर्वार्धोक्ताया समुपेक्षायास्तृतीये पादे हेतुना समर्थनमिति काव्य-

---

* अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये । छिद्रात्मीयविनाबहिरवसरमध्येऽन्तरात्मनि च—इत्यमर ।

लिङ्गम्, चतुर्थे च पादे * सामान्येन तत्समर्थनमित्यर्थान्तरन्यास ।

† **लघुवृत्ततया भिदा गत बहिरन्तश्च नृपस्य मण्डलम् ।**
**अभिभूय हरत्यनन्तर शिथिल कूलमिवापगारय ॥ ४३ ॥**

अ०—लघुवृत्ततया बहि अन्तश्च भिदा गत शिथिल नृपस्य मण्डलम् अभिभूय अनन्तर कूलम् आपगारय इव हरति ।

व्याक०—लघु वृत्त यस्य स लघुवृत्त., तस्य भाव तत्ता, तया लघुवृत्ततया । वृत्तमिति वर्तते. "नपुसके भावे क्त", बहुव्रीहेर्भावे तल्, हेतौ तृतीया । भिदामिति भिनत्ते "पिद्भिदादिभ्योऽङ्" इति स्त्रियामङ्, टाप् । गतमित्यस्य कर्मणि द्वितीया, गतमिति गच्छते कर्तरि क्त । अभिभूयेति ल्यबन्तम् । अपा समूह आपम्, तद्धितोऽण्, तेन गच्छतीत्यापगा, 'अन्यत्रापि दृश्यत इति वक्तव्यम्" इति डप्रत्यय, मण्डलमित्यभिभवतेर्हरतेश्च कर्म ।

व्याख्या—लघु-क्षुद्रम्-प्रजारक्षणौदासीन्यादिव्यसनाक्रान्त वा, वृत्तम्-आचारो यस्य, तथाभूतत्वेन, राज्ञ क्षुद्रेण व्यवहारेण, बहि -मित्रादिजनपदेषु, अन्त -स्वप्रजासु, अमात्यादिषु च, भिदा गतम्-भेद प्राप्तम्-नृपात् पृथग्भूतम्-विद्विष्टम्, ( चित्रभानुस्तु बहि -वागादिव्यापारेषु, अन्तः-मनोव्यापारेषु च भेद प्राप्तमिति व्याख्यान्तरमप्याह ) ( कूलपक्षे लघु-अदृढम्, वृत्तम्-परिणाहो यस्य, तथाभूततया, विरलावयवसस्थानतया, बहि -दृश्ये बाह्यभागे,। अन्त.-अदृश्ये मध्यभागे च भिदाम्-अवयवविश्लेषम्, गतम्-प्राप्तम्) अत एव शिथिलम्-विश्लिष्टावयवम्-विश्लिष्टमनस्कम्-स्नेहविश्वासादिरहितम्, (कूलपक्षे स्थानात्प्रच्योतुमारब्धम् ) नृपस्य-प्रस्तुतस्य दुर्वृत्तस्य-राज्ञ, मण्डलम्-राष्ट्रम्, ( मण्डलवासिनः पौरजानपदान् जनानिति चित्रभानु ) आभिभूय-आक्रम्य,

---

*. यद्यपि पूर्वमपि सामान्येनैव प्रक्रान्तम्, न व्यक्तिविशेषसम्बन्धेन, तथापि शत्रुकर्मको जय प्रस्तुत, अविनीतसामान्यस्य विपत्सामान्योपन्यासेन समर्थ्यत इत्यस्त्येव सामान्यविशेषभाव ।

† लघुवृत्तितया—इति क्वाचित्क पाठः । लघ्वी-अनुदारा, वृत्ति -मानसव्यापारो यस्य स लघुवृत्ति, तस्य भावस्तत्ता, तया, क्षुद्रहृदयतया इति स व्याख्येय ।

( कूलपक्षे भङ्क्त्वा ) अनन्तर -न अन्तरम्-भेदो यस्य तथाभूत', अतिसन्निकृष्ट -स्ववशजोऽन्यः, सन्निहितराष्ट्राधिपो वा, कूलम्-तीरम्, *आपगारय इव-नदीवेगो यथा, तथा, हरति-स्ववश नयति-स्वायत्तीकरोति, ( कूलपक्षे-देशान्तर प्रापयति )।

भा०—यदा राज्ञो वृत्तं क्षुब्धमिव भवति, स प्रजारक्षणे मन्त्रिणा हितोपदेशादौ चौदासीन्यमालम्बते, अत्याचारैश्च प्रजा पीडयति, मान्यान-सत्करोति, तदा तस्य बाह्य मण्डलम् आभ्यन्तर मण्डल च सर्वमपि ततो भेदमाप्नोति-विद्वेष गच्छति । ( पूर्वं बाह्ये मण्डल एव भेदप्रसार, तदनु आभ्यन्तर इति बहिरन्तश्चेति शब्दविन्यासो युक्ततर, यद्वा व्याख्यान्तरे वागादिव्यापारे प्राप्तोऽपि भेदो यदा राज्ञा न शान्ति नीयते, तदा मानसो द्वेष सुस्थिरो भवतीति योजनीयम् । भिदा गतम् इति भिदोत्तर द्वितीयाश्रयणेन भेदस्येप्सिततमत्वम्-इच्छया स्वीकृतत्व गम्यते ), तस्मिश्च काले तस्य राज्ञो वश्यो यद्यपर. स्यात्, सोऽनायासेन विद्विष्ट मण्डल स्वायत्तीकर्तुं शक्नोति, यद्वा सन्निहितराष्ट्राधिपस्तदा तस्य राज्य स्वायत्तं करोति । तदित्थ दुर्वृत्तस्य राज्यमपह्रियते । यथा शिथिलावयव तट नदीवेगेनापह्रियते, तद्वदेव । तदित्थमेव दुर्वृत्तस्य दुर्योधनस्य राज्य प्राप्ते भेदावसरे सुखेनास्माभिरायत्तीकर्तुं शक्यते । कूलोपमाया व्यङ्ग्यानि चित्रभानुराह-यथा कूल द्विसम्बन्धि, नदीजलेन सन्निहितभूभागेन च तस्य सम्बन्धः, भूभागेन सम्बन्धशैथिल्ये जलेन तदपह्रियते, तथा कुरुराज्यमिद दुर्योधनेन चास्माभिश्च सबध्नाति, दुर्योधनेन सम्बन्धशैथिल्ये अस्माभिस्तद् ह्रियेत । यथा च वर्षास्वेव नदी कूलं हर्तुं शक्नोति, तथा प्राप्ते समय एवास्माभिस्तद्राज्य हरणीयमिति । यथा च कूलरूपापि नदी जलप्रदानेन लोकमुपकरोत्येव, उपकारकत्वमेव तस्या मुख्यम्, कूलहरण त्वौपाधिकम्, तथैव मम ( युधिष्ठिरस्य ) लोकोपकार एवोद्देश्यम्, दुर्योधनहानिस्तु विवशतयोपनता औपाधिक्येवेत्यपि ।

अल०—उपमा । अत्र उपमेये मण्डले यथा नृपसम्बन्ध उपात्त., तथा उपमाने कूले कस्यापि सम्बन्धो नोपात्त इत्युपमानोपमेयवैषम्य दोष प्रतिभाति

---

* स्रोतस्वती द्वीपवती स्रवन्ती निम्नगापगा—इत्यमर ।

तथापि कूलशब्द स्वभावेनैव नद्या, तद्व्यवहितस्य भूभागस्य च सम्बन्धिन भूभागमभिदधातीत्यर्थे नास्ति वैषम्यमिति चित्रभानु समादधे ।

**अनुशासतमित्यनाकुल नयवर्त्माकुलमर्जुनाग्रजम् ।**
**स्वयमर्थ इवाभिवाञ्छितस्तमभीयाय पराशरात्मज. ॥५४॥**

अ०—इति नयवर्त्म आकुलम् अर्जुनाग्रजम् अनाकुलम् अनुशासत तम् पराशरात्मज स्वयम् अभिवाञ्छित अर्थइव अभीयाय ।

व्याक०—न आकुलम् यस्या क्रियाया यथा भवति तथेत्यनाकुलम् । बहुव्रीहि, क्रियाविशेषणम्, 'क्रियाविशेषणाना कर्मत्वम्' इति द्वितीयान्तम् । अग्रे जातम्-अग्रजम्-"अन्येष्वपि दृश्यते" इति ड. । अनुशासतमिति शास्ते शत्रन्तस्य द्वितीयान्तम्, जक्षित्यादित्वेनाभ्यस्तत्वाद् "नाभ्यस्ताच्छतु" इति नुम् । अभिवाञ्छित इति "मतिबुद्धिपूजार्थेभ्यश्च" इति वर्तमाने क्त । अभीयायेति एतेर्लिट् । अनुशासतामिति द्विकर्मक शासि, नयवर्त्मेति प्रधान कर्म, अर्जुनाग्रजमिति गौणम् ( अकथितम् ) । चित्रभानुस्तु अर्जुनाग्रजस्यै-वेप्सिततमत्वात्प्रधानकर्मतामाह । तामिति प्रधानक्रियाया कर्म ।

व्याख्या—इति-निर्दिष्टम्-उक्तविधम्, नयवर्त्म-नीतेर्मार्गम्-कर्तव्यविषयमर्थम्, आकुलम्-क्षोभ प्राप्तम्, ( यद्वा विपर्ययज्ञानेन विचालितम् ) अर्जुनाग्रजम्-अर्जुनज्येष्ठ भीमम्-उद्दिश्य ( तस्मै ) अनाकुलम्-असङ्कीर्णम्-समीचीन यथा स्यात्तथा, अक्षुब्ध यथा स्यात्तथेति वा, अनुशासतम्-उपदिशन्तम्-विविच्य बोधयन्तम्, तम्-युधिष्ठिरम्, पराशरात्मज -भगवान् व्यास, स्वयम्-मूर्तिमान्, अभिवाञ्छित., अर्थ इव-मनोरथ इव, अभीयाय-प्राप्त । इह 'अनाकुलम्-अक्षुब्धम्-असम्भ्रान्तम्' अर्जुनाग्रज तमिति, युधिष्ठिरविशेषणतया पदद्वय योजयित्वा, नयवर्त्माकुलम्-नीतिमार्गे ससम्भ्रमम्-इत्येक समस्त पद भीमविशेषणतया योजयित्वा च व्याख्यानान्तराणि चित्रभानुना दर्शितानि, तान्यप्यूह्यानि ।

भा०—यदा प्रशान्तो युधिष्ठिर. पूर्वोक्तेन प्रकारेण विक्षुब्धचेतस भीममुद्दिश्य नीतिरहस्यमुपदिशन्नासीत्, तदैव भगवान् व्यासस्तत्सन्निधौ प्राप्त । यथा नीति विदुष' पुरुषस्य समीपे तदभिवाञ्छितोर्थ स्वयमागच्छति, तथैवेद भगवतो व्यासस्यागमनम्, भगवान् व्यासो मूर्तिमान् युधिष्ठिरस्य

मनोरथइवेत्युत्प्रेक्ष्यते कविना । तेन च मनोरथस्याव्यभिचरितप्रपूर्तं सा धनोपदेशाय व्यासस्यागमनमिति द्योतितम् । अनुशासतमिति वर्तमानकालार्थकप्रत्ययेन अनुशासनमध्य एवागमन चोदितम्, तेन चान्यानुपायान् सम्यग् व्याचक्षाणोऽपि युधिष्ठिरो भीष्मादिजयविषये किं वदेदिति तस्याशक्तिं समीक्ष्य तद्गौरवरक्षणाय तदुपाय स्वयमुपदेष्टुमागतो व्यास इति ध्वनितं भवति । इह अर्जुनाग्रज इति भीमविशेषणम्-परमनीतिज्ञस्यार्जुनस्य सबन्ध बोधयदुपदेश्यता पोषयति, अर्जुनादीनामयमग्रज इत्यस्मिन्नुपदिश्य सान्त्विते सर्वे ते सान्त्विता भविष्यन्तीति वा ।

अल०—उत्प्रेक्षा । व्यासस्य मूर्तिमन्मनोरथत्वोत्प्रेक्षणेन तदागमे युधिष्ठिरस्य हर्षविशेषोऽपि व्यञ्जित ।

**मधुरैरवशानि लम्भयन्नपि तिर्यञ्चि शम निरीक्षितै ।**
**परित पटु बिभ्रदेनसा दहन धाम विलोकनक्षमम् ॥२५॥**

अ०—मधुरैः निरीक्षितै अवशानि तिर्यञ्चि अपि शम लम्भयन्, पटु एनसा दहनं विलोकनक्षम धाम परितः बिभ्रद् ( मुनिः जगतीभुजा ददृशे ) ।

व्याक०—न विद्यते *वश येषा तानि अवशानि-इति बहुव्रीहि. । मधु विद्यते येषा तैर्मधुरै, "ऊषसुषिमुष्कमधो र." इति मत्वर्थीयो रप्रत्यय । निरीक्षितैरिति नपुसके भावे क्तप्रत्ययान्तम् । तिर्यञ्चि-तिरस् पूर्वकादञ्चते क्विन्, तिरसस्तिर्यादेश । शमशब्दो घजन्त । लम्भयन्निति लभतेर्णिजन्ताच्छतृप्रत्यय, "लभेश्च" इति नुम् । लभे. प्राप्त्यर्थकस्य गत्यर्थताङ्गीकारेण प्रयोज्यकर्तृणा तिरश्चाम् "गतिबुद्धि-" इति कर्मत्वम्, शमामिति तु लाभे कर्म,(प्रेरणा स्वयमूह्या) दहतीति दहनम्, नन्द्यादित्वाद् ल्यु । यद्वा दहत्यनेनेति करणे ल्युट् । परिशब्दात् "पर्यभिभ्या च" इति तसिलि परित । बिभ्रदिति भृ धातो शत्रन्तम्, अभ्यस्तत्वान्नुमभाव । निरीक्षितैरिति लम्भनकरणे तृतीया, एनसामिति दहनकर्मणि षष्ठी ।

व्याख्या—मधुरै -आह्लादजनकै -शान्तै , निरीक्षितै -अवलोकनै -दृष्टिपातै , अवशानि-न वशम्-अधीनत्वम्, येषा तथाभूतानि, प्रतिकूलानि-उद्धतानि, (पर-

* वशमायत्ततायां च -इति विश्व ।

तन्त्राणि, केवल क्षुत्पिपासादिपारतन्त्र्येण कर्मसु प्रवृत्तानि, न तु जितेन्द्रियाणि इति चित्रभानु) (यद्वा-दृष्टिपातैरेव अवशताम्-अस्वतन्त्रताम्, मुनेर्वश गतानि सन्तीति सदन्ताविशेषणतया व्याख्येयम्) तिर्यञ्चि अपि-तिर्यग्योनिगतानि भूतानि-सिंहव्याघ्रगृध्रादीन्यपि, शमम्-शान्तिम्-मनइन्द्रियादीना चाञ्चल्याभावम्-अनुचितप्रवृत्तिविरामम्, लम्भयन्-प्रापयन्, किं च-पटु-उज्ज्वलम् (विस्तीर्णम्-व्याप्तमिति चित्रभानु) एनसाम्-पापानाम्, दहनम्-दाहकम्, विलोकनक्षमम्-विलोकनस्य-विविच्य दर्शनस्य, क्षमम्-योग्यम्, धाम-तेज, परित -समन्तत, बिभ्रद्-दधानम्, (उत्तर श्लोकेन सम्बन्ध । युग्मकमिदमेकान्वयि । अस्यैव पद्यस्य पृथग्व्याख्याने तु-एवभूतो मुनि जगतीभुजा ददृशे-इत्युत्तरश्लोकादपकृष्य व्याख्येयम्) ।

भा०—भगवन्त व्यास वर्णयति कवि -स हि भगवान् व्यास सर्वानुग्रहाय सर्वत्र शान्तिमयीमाह्लादकरीं दृष्टिं प्रसारयति, तस्याश्च दृष्टे. स तादृशः कोऽपि प्रभाव, यत्तत्सम्बन्धेन अत्यन्त तामसानि, विवेकबुद्धिरहितानि च तिर्यग्योनिगतानि हिंस्राण्यपि सिंहादीनि भूतानि विवशीभूय मनसि शान्तिं लभन्ते, अनुचितेभ्यो हिंसादिव्यापारेभ्य उपरमन्ति । तिर्यञ्चि इति नपुंसकलिङ्गपदोपन्यासेन तिर्यञ्चि अपि यान्यत्यन्तं तामसानि नपुसकानि, तान्यपि शम प्राप्नुवन्ति, किमु वक्तव्यमन्येषामिति द्योत्यत इति चित्रभानु । किं च भगवन्त व्यास परितस्तेजोमण्डल विराजते, तच्च तेजोमण्डलम् अत्युज्ज्वलम्, व्याप्तम्, आलोकनेनैव दुरितदाहकम्, न च सूर्याग्न्यादितापवत्तीक्ष्णम्, किन्तु दर्शनयोग्यम् । तेजसो विशेषणत्रये एकैकेन क्रमेण सूर्याग्निचन्द्रतेज सादृश्य, व्यञ्जितम्, अपराभ्या चैकैकापेक्षया व्यतिरेको व्यञ्जित इति चित्रभानु । पटु -व्याप्तमिति सूर्यतेज.साम्यम्, दहनमिति अग्नितेज.साम्यम्, विलोकनक्षममिति चन्द्रतेज -साम्यम् । तथैव विलोकनक्षममिति सूर्याग्निव्यतिरेक, दहनमिति चन्द्रव्यतिरेकः, पटु इत्यग्निव्यतिरेक इति विवेच्यम् ।

अल०—तिर्यञ्चि अपि शममिति विरोधाभास । तथैव तेजोविशेषणेष्वपि दहनमपि विलोकनक्षममिति गम्यो विरोधाभास । भावार्थोक्तरीत्या उपमाव्यतिरेकौ व्यङ्ग्यौ । मुने प्रभावातिशय, तेन च तद्विषयको रतिभावो ध्वन्यते ।

**सहसोपगत सविस्मय तपसा सूतिरसूतिरापदाम्* ।**
**ददृशे जगतीभुजा मुनिः स वपुष्मानिव पुण्यसचय ॥ ५६ ॥**

अ०—तपसा सूति आपदाम् असूतिः वपुष्मान् पुण्यसचयइव स मुनि सहसा उपगत, जगतीभुजा सविस्मय ददृशे ।

व्याक०—विस्मयेन युगपद्-यथा स्यात्तथा-इति सविस्मयम् । विस्मय इति स्मयतेः "एरच्" । यौगपद्ये सहेत्यव्ययेन सह अव्ययीभाव, "अव्ययीभावे चाकाले" इति सहस्थाने सादेश । सूयतेऽस्मिन्निति सूति, अधिकरणे "स्त्रिया क्तिन्" । तथैव असूतिरपि । असूतिशब्दे नञ् विरोधार्थक, सूतिविरोधीति । वपुर्विद्यते यस्येति वपु शब्दान्मतुप्, "तसौ मत्वर्थे" इति भत्वाद्रुत्वाभाव, तेन वपुष्मान् । जगतीं भुनक्तीति क्विपि जगतीभुग् । सञ्चय इत्यादि व्याख्यातम् । ददृशे इति पश्यते कर्मणि लिट् । मुनिरित्युक्त कर्म । जगतीभुजेति कर्तृवाचकम् ।

व्याख्या—तपसाम्-शमप्रधानाना पुण्यानाम्, सूति -उत्पत्तिस्थानम्-आकर, आपदाम्-बन्धनरूपाणा दुःखाना दुरिताना च, असूति -लयस्थानम्-निवर्तक, वपुष्मान्-देहधारी, पुण्यसञ्चय इव-पुण्यानाम् सुकृतानाम्, सञ्चय -निविडः समूह इति संभावित, †स -पूर्वप्रस्तुत, महानुभावत्वेन प्रसिद्ध, युधिष्ठिरेणाभ्युदयप्रदतया पूर्वमनुभूतश्च, मुनिः-ज्ञानैश्वर्यसमग्रो व्यास, सहसा-अवितर्कित एव, उपगत -प्राप्त, जगतीभुजा-राज्ञा-युधिष्ठिरेण, सविस्मयम्-आश्चर्यसहितम्, ददृशे-दृष्ट. । (सहसा-इति दर्शनेप्यन्वेति, तेन सहसा ददृशे-इत्युक्त्या योगशक्त्या भगवान् व्यासोऽकस्मात्तेषा मध्य एव प्रादुर्बभूव-इति व्यज्यते इति चित्रभानु., अत एव युधिष्ठिरस्याश्चर्यमपीति) ।

भा०—पूर्वश्लोकेनैव सम्बन्ध, किं च-स भगवान् व्यास ईदृशस्तपस्वी धार्मिक, यत्तपासि-पुण्यानीत एवोत्पन्नानीति जनाना बुद्धिर्जायते । आपदा च दर्शनमात्रेण निवर्तक । राज्ञा तदागमनेनेत्थ सभावितम्-यन्मदीयः पुण्यराशि

---

* पनसाम्-इति दाक्षिणात्यपाठ ।

† प्रक्रान्त, प्रसिद्ध, अनुभूतो वा तच्छब्दार्थ । इह तु योग्यतया तन्त्रेण त्रयमपि गृह्यत इति चित्रभानु ।

रेवाय शरीर धृत्वा आगत इति । एतादृशो व्यासोऽकस्मादेव युधिष्ठिरेण दृष्टः, न हि तस्यागमन पूर्व सभावितमासीत् । तेन च दर्शनकाल एव युधिष्ठिरस्य विस्मय उदभूत् । अनेन श्लोकद्वयेन व्यासदर्शनात्पूर्व युधिष्ठिरादीना मनसि य आसीद् वितर्कः सोऽप्यभिव्यञ्जित इति चित्रभानु । तथा हि मधुरैरवशानीत्या-दिना पूर्वमकस्माद्वन शान्तमृगपक्षिगण विलोक्य तेषा मनसि किमेतदिति वितर्क उदभूद्-इति व्यञ्जितम् । तदनु 'परितः पटु' इत्यादिना सूर्यशशाङ्कवह्निविलक्षण परित प्रसर्पत् किमपि धाम पश्यता हरिहरादिभिर्देशोऽयमलक्रियते-इति स चमत्कारो हर्ष समभूद्-इति द्योतितम् । ततश्चाकस्मादेव प्रादुर्भूतस्तत्रभवान् भगवान् व्यासो दृष्ट , त दृष्ट्वा सविस्मयो हर्षातिरेक. समजनीति ।

अल०—वपुष्मान् पुण्यसञ्चय इवेत्युत्प्रेक्षा । चित्रभानुस्तु वपुष्मानिति पदेन पुण्यसञ्चयापेक्षया व्यतिरेकद्योतनाद् व्यतिरेकोपमा, व्यतिरेकोत्प्रेक्षा वेत्याह । उत्प्रेक्षायामेव तु स्वारस्य प्रतीयते ।

**अथोच्चकैरासनत पराध्यांदुद्यन्स धूतारुणवल्कलाग्र. ।**
**रराज *कीर्णाकपिशांशुजाल शृङ्गात्सुमेरोरिव †तिग्मरश्मि ॥५७॥**

अ०—अथ उच्चकैः पराध्यांद् आसनत उद्यन् धूतारुणवल्कलाग्रः स सुमेरो. शृङ्गाद् (उद्यन्) कीर्णाकपिशांशुजाल तिग्मरश्मिरिव रराज ।

व्याक०—धूतम् अरुण वल्कलाग्र यस्य स धूतारुणवल्कलाग्र. । धूतमिति धूनोते क्तान्तम् । कीर्णम् आकपिशम् अंशुजाल यस्य स कीर्णाकपिशांशुजाल । कीर्णमिति किरते ‡ क्त, निष्ठानत्वम् । तिग्मा रश्मयो यस्य स तिग्मरश्मि. । उच्चकैरिति व्याख्यातम् । परस्मिन् अर्धे भवं पराध्यम्, "परावराधमोत्तमपूर्वाच्च" (अर्धायत्) इति यत् तद्धित । आस्यते अस्मिन् इत्यासनम्, अधिकरणे ल्युट् । उद्यन्-इति "धातुसम्बन्धे प्रत्यया." इति लट्, तस्य हेतौ शत्रादेश ।

व्याख्या—अथ-व्यासदर्शनानन्तरम्, उच्चकै -उन्नतात्, ¶पराध्यात्-श्रेष्ठाद्,

* कीर्ये कपिलांशुजालै –इति दाक्षिणात्यपाठ ।

† शीतरश्मि –इति चित्रभानुधृतपाठः ।

‡ 'कॄ विक्षेपे'

¶ पराध्याग्रप्राग्रहर–इति श्रेष्ठनामसु अमरः ।

आसनत.-उपवेशनवेद्याम् आस्तृतात् कुशादिनिर्मितादास्तरणाद्, (सिंहासनादिति मल्लिनाथः) उद्यन्-उत्तिष्ठन्, धूतम्-कम्पितम, *अरुणम्-ईषद्रक्तवर्णम्, वल्कलस्य-वृक्षत्वङ्निर्मितस्य परिधानस्य, अग्रम-प्रान्तभागो यस्य †, तथाभूत , स-युधिष्ठिर , (चित्रभानुस्तु-उच्चकै -उन्नतमना युधिष्ठिर , यद्वा उच्चकै.-उन्नतोत्तमाङ्ग यथा स्यात्तथा उद्यन्, इत्युच्चकै. शब्दमन्यथापि व्याचष्टे), सुमेरो -सुरालयस्य पर्वतस्य, शृङ्गात्-शिखराद्, उद्यन्-उदय गच्छन्, कीर्णम्-व्याप्तम्, आकपिशम् किञ्चित्कृष्णमिश्रपीतवर्णम्, अंशुजालम्-किरणसमूहो यस्य तथाभूत , (कीर्ण कपिलांशुजालैः-इति पाठान्तरे कपिलै-पीतप्रायै., अंशुजालै , कीर्ण -क्षिप्तइत-इतस्ततो दृश्यमान इति व्याख्येयम्) तिग्मरश्मिरिव-सूर्यइव, रराज-शुशुभे ।

भा०—व्यास दृष्ट्वैव युधिष्ठिरः स्वस्थानादुत्थित , त्वरावशात्तेन परिहितस्य रक्तवर्णस्य वल्कलस्याग्र प्रकम्पमानम्-इतस्तत परिस्खलदद्दृश्यत । तेन च सुमेरुशृङ्गादुद्यत सूर्यस्येव तस्य शोभाऽभूत् । सूर्यकिरणजालेन वल्कलाग्रस्य, सुमेरुशृङ्गेण च युधिष्ठिरासनस्य विम्बप्रतिविम्बभाव । इह वने निवसत परिहितवल्कलस्य युधिष्ठिरस्य सौवर्ण सिंहासन न सभवतीति आस्तृत कुशाद्यासन मेवास्माभिर्व्याख्यातम्, उन्नतत्वं तु तस्य युधिष्ठिरादरार्थं भ्रातृभिर्विहिताया मृदादिवेद्या स्थितत्वात् । (यद्वोन्नत काष्ठमञ्चादीह विवक्षितमस्तु) परार्यत्व च महापुरुषस्य युधिष्ठिरस्य तत्रोपवेशनादेव कविना निरूपितम् । पावनत्व-सत्सेव्यत्वादिधर्मैरेव सुमेरुशृङ्गसादृश्यमपि तत्र निर्वाह्यम् । यद्वा व्यासदर्शनेन स्वस्याभ्युदय करतलामलकवद्विभाव्य हृष्टो युधिष्ठिरो वनवासादिक विस्मृत्य राजसिंहासनस्थमेवात्मानममन्यतेति तस्य ता बुद्धिमनुकुर्वता कविनापि तदासन सिंहासनत्वेनैव निरूपितमिति चित्रभानु । शीतरश्मिरिति पाठ मत्वा चन्द्रसादृश्य च तेन युधिष्ठिरस्योक्तम् । यथा च सुमेरुशृङ्गाच्चन्द्रसूर्यादेरुद्गमो लोके प्रकाशाय, जगतः शुभाय-तथा युधिष्ठिरस्यापि व्यासदर्शनसूचितोऽभ्युदयो जगत शुभायेवेत्युपमाव्यङ्ग्यमपि स एवाह ।

अल०—व्याख्यातैवोपमा भावार्थनिरूपणे । इह प्रथमतृतीयौ पादावुपेन्द्र-

---

* अव्यक्तरागस्त्वरुणः-इत्यमर ।

† यत्सम्बन्धिन , यत्परिहितस्य ।

वज्रायां, द्वितीयचतुर्थौ तु इन्द्रवज्रायां इत्युपजातिश्छन्दः ।

**अवहितहृदयो विधाय सोऽर्हामृषिवदृषिप्रवरे गुरूपदिष्टाम् ।**

**तदनुमतमलंचकार पश्चात् प्रशम इव श्रुतमासनं नरेन्द्रः ॥ ४८ ॥**

अ०—सः नरेन्द्रः अवहितहृदय (सन्) ऋषिप्रवरे ऋषिवद् गुरूपदिष्टाम् अर्हां विधाय पश्चात् तदनुमतम् आसनम् प्रशमइव श्रुतम् अलंचकार ।

व्याक०—अवहितं हृदयं यस्य सोऽवहितहृदयः । अवपूर्वकाद्धातेर्निष्ठायामवहितम् । ऋषिषु प्रवरे, ऋषिप्रवरे, निर्धारणे सप्तमी, सप्तमीति योगविभागात्समासः । षष्ठयान्तु "न निर्धारणे" इति निषेधात्समासो दुर्लभः स्यात् । प्रवर इति वृणोतेः "ग्रहवृदृनिश्चिगमश्च" इति कर्मण्यप् । समासाद्वैषयिके अधिकरणे सप्तमी । गुरुणा उपदिष्टाम्-गुरूपदिष्टाम् । कर्तृतृतीयान्तस्य क्तान्तेन तत्पुरुषः । उपदिष्टेति 'उपादेशि' इति विग्रहे दिशतेर्निष्ठा। तेन अनुमतम्-तदनुमतम् । अन्वमानि इत्यर्थे मन्यतेर्निष्ठाया मतम् । ऋषिवदित्यत्र "तदर्हम्" इति अर्हार्थे वतिरिति मल्लिनाथः । तदुक्त्या 'ऋषिमर्हति' ऋषिवद् अर्हां' इति विग्रहः । चित्रभानुस्तु "तेन तुल्यं क्रिया चेद्वतिः" इत्येव वतिप्रत्ययमाह, 'ऋषिणा तुल्यः' इति युधिष्ठिरविशेषणत्वेन व्याचष्टे च, सोऽयं तात्पर्यार्थः स्यात्, मुख्यान्वयस्तु 'ऋषिवद्विधाय' इति क्रियायामेव योग्यः । अर्हतेः "गुरोश्च हलः" इत्यकारप्रत्यये अर्हा ।

व्याख्या—सः-पूर्वप्रस्तुतः, नरेन्द्रः-राजा, युधिष्ठिरः, अवहितहृदयः-एकाग्रचित्तः सन्, *ऋषिषु-पूज्येषु मुनिषु, प्रवरे-श्रेष्ठे, भगवति व्यासे, ऋषिवद्-ऋषिसमुचिताम्, (ऋषिवद्-ऋषितुल्यो युधिष्ठिर इति चित्रभानुः) गुरूपदिष्टाम्-पूर्वं गुरुणा शिक्षिताम्-शास्त्रीयाम्, (इदानीमेव गुरुणा-धौम्येन पुरोहितेन, उपदिष्टाम्-बोधिताम्, पुरोहितसहकारेणेति तात्पर्यमिति चित्रभानुः) अर्हाम्-पूजाम्, विधाय-कृत्वा, पश्चाद्-व्यासस्योपवेशनानन्तरम्, तदनुमतम्-तेन व्यासेनानुज्ञातम्, आसनम्, प्रशमइव-शान्तिर्यथा, श्रुतम्-शास्त्रश्रवणम्, तथा अलंचकार-शोभयामास ।

---

* ऋषयो मन्त्रद्रष्टारः । व्यासस्य तु मन्त्रद्रष्टृत्वाभावेऽपि वेदविभागादिकर्तृत्वात् पूज्यतमत्वेन ऋषित्वं मुनित्वं चेत्युभयमपि व्यवह्रियते ।

भा०—व्यासागमनजन्येन हर्षेण यश्चेतस उल्लासोऽभूत्, त निगृह्य, चित्तमवहित कृत्वा, युधिष्ठिरो धौम्य पुरोहितमग्रत कृत्वा, तदुपदेशेन भगवतो व्यासस्य ऋषियोग्या सपर्या सम्यग् विदधौ । त ससमानमासने समुपवेश्य च तदाज्ञया पश्चात्स्वयमप्यासन उपविष्ट युधिष्ठिरेणाध्यासितस्यासनस्य तथा शोभा आसीद्, यथा प्रशमेन शास्त्रज्ञानस्य शोभा जायते । इह नरेन्द्रपद युधिष्ठिरस्य 'मुनिप्रसादेन शीघ्रमेव नरेन्द्रत्व प्राप्स्यामीति' सुदृढ विश्वास व्यनक्ति । उपमया च युधिष्ठिरस्य प्रशमस्तद्व्यवहारेण व्यासेन सुष्ठु लक्षित इति व्यज्यत इति चित्रभानुराह ।

अलं०—उपमा । प्रशमयुधिष्ठिरयोरुपमानोपमेयभाव, अलङ्कर्तृत्वमत्र साधर्म्यम् । श्रुतासनयोर्बिम्बप्रतिबिम्बभाव., अलङ्कार्यता तत्र बीजम् । पुष्पिताग्रा वृत्तम् ।

व्यक्तोदितस्मितमयूखविभासितोष्ठ-
स्तिष्ठन् मुनेरभिमुख स विकीर्णधाम्न ।
तन्वन्तमिद्धमभितो गुरुमशुजाल
लक्ष्मीमुवाह सकलस्य शशाङ्कमूर्ते † ॥ ५९ ॥

इति भारविकृतौ महाकाव्ये किरातार्जुनीये द्वितीय सर्ग. ॥

अ०—व्यक्तोदितस्मितमयूखविभासितोष्ठ, विकीर्णधाम्न मुने अभिमुख तिष्ठन् स इद्धम् अशुजाल तन्वत गुरुम् अभित सकलस्य शशाङ्कमूर्ते. लक्ष्मीम् उवाह ।

व्याक०—व्यक्तम् उदिते (सुप् सुपा) स्मितस्य मयूखै., (ष० तत्पु०) (कर्मधा०) विभासितौ (तृ० तत्पु०) ओष्ठौ यस्य स व्यक्तोदितस्मितमयूखविभासितोष्ठ । व्यक्तमित्यनक्ते. (अञ्ज्), उदित इत्येते, स्मितमिति स्मयते, विभासित इति च भासतेर्निष्ठा । विकीर्ण धाम यस्य स विकीर्णधामा, तस्य । कीर्णेति व्याख्यातम् । मुखमभि-इत्यभिमुखम्-"लक्षणेनाभिप्रती आभिमुख्ये" इत्यव्ययीभावः । शश अङ्के यस्या सा शशाङ्का, तथा मूर्तिर्यस्य, तस्य शशाङ्कमूर्ते । मूर्तिरिति मूर्च्छतेः क्तिन्नन्तम् । तिष्ठन्-"धातुसबन्धे प्रत्यया" इति स्थाधातोर्लट्, तस्य हेत्वर्थे शत्रादेश । इद्धम्-इन्धीधातो

† मृगाङ्कमूर्त.—इति पाठान्तरम् ।

क्तः । तन्वन्तम्-इति तनोतेः शत्रन्तम् । "पर्यभिभ्या च" इति, अभीत्यव्ययात्तसिलि अभितः, तद्योगे "अभित परित -"इत्यादिना गुरुमिति द्वितीया ।

व्याख्या — व्यक्तम्-स्फुटम्, यथा स्यात्तथा, उदितैः-उद्गतैः-प्रादुर्भूतै, स्मितस्य-मन्दहासस्य ( मन्दहासकाले दन्तानाम् इति चित्रभानु' ) मयूखैः-किरणैः, विभासितौ-*शुक्लरूपसक्रमणेन शोभितौ, ओष्ठौ यस्य तथाभूतः, विकीर्णधाम्नः-विस्तीर्णतेजस मुने -व्यासस्य, अभिमुखम्-समुखभागे, तिष्ठन्-उपविष्ट , स -युधिष्ठिर , इद्धम्-दीप्तम् अंशुजालम्-रश्मिसमूहम्, तन्वन्तम्-विस्तारयन्तम्, †गुरुम्-बृहस्पतिम्, अभित , बृहस्पते समुखे स्थितस्य, सकलस्य-सपूर्णमण्डलस्य, शशाङ्का शशेन लाञ्छिता मूर्ति -मण्डल यस्य, तस्य चन्द्रस्य लक्ष्मीम्-कान्तिम् उवाह वहति स्म दधारेति यावत् ।

भा०—हर्षजनितेन स्मितेन दन्तमयूखाना निर्गमाद् युधिष्ठिरस्योष्ठौ सुशोभितावास्ताम्, तेन तस्य मुख चन्द्रेण पूर्णं साम्यं गतम् । व्यासस्य तु मुख परितस्तेजोमण्डल विराजते एव, स एष बृहस्पतिग्रहसदृश. प्रतीयते । तेन पूर्णतेजसो बृहस्पतेः समुखभागे स्थितस्य चन्द्रस्य या कान्ति , सैव तदा व्याससमुखे स्थिते युधिष्ठिरे दृश्यते स्म । शशाङ्कमूर्तेरिति मूर्तिपदोपादानेनेद व्यज्यते-यथा चन्द्रस्य मूर्तिभूते दृश्ये मण्डले एव क्षयकलङ्कादिदोष प्रतीयते, न तु तदधिष्ठातरि देवे चन्द्रे, तथा उपमेयभूतस्य युधिष्ठिरस्यापि शरीर एव वनवासकृता कार्श्यादिदोषा , न तु शुद्धे तदात्मनीति । इद्धमंशुजाल तन्वन्तमिति गुरुविशेषण घनतुहिनाद्यावरणाभावं बोधयत् शरद्वसन्तर्तुकालिकता द्योतयति, स्वोच्चक्षेत्रस्थितत्व च । समुखे तिष्ठश्च चन्द्रो गुरुणा दृष्टो भवतीति ज्योतिर्विदा सम्प्रदाय , ततश्च स्वोच्चक्षेत्रगतेन गुरुणा दृष्टश्चन्द्रो यथा जगदभ्युदयहेतु., तथैवाय व्यासेनानुगृहीतो युधिष्ठिरोऽपीत्युपमया व्यज्यत इति चित्रभानु । व्यासस्य गुरुसादृश्यकथनेन तेन करिष्यमाणो हितोपदेशोऽपि सम्यग् द्योतितो भवति । युधिष्ठिरस्य सकलचन्द्रसादृश्यकथन च तस्यापि सकलताम्-प्राप्तराज्यताम्-द्योतयदभ्युदयस्यावश्यभाविता व्यनक्ति ।

---

* कविसम्प्रदाये हासस्यापि शुक्लो वर्ण स्वीक्रियते ।

† गुरुगीष्पतिपित्रादौ-इत्यमर ।

अलं०—अन्यलक्ष्म्या अन्यत्रासम्भवादुपमायां पर्यवसानमिति निदर्शनालङ्कार । व्यक्तेत्यादिविशेषणे च तादृशलक्ष्मीप्राप्तौ हेतुसमर्पके इति काव्यलिङ्गम् । वसन्ततिलका वृत्तम् । अस्मिन् काव्ये सर्वत्रैव सर्गसमाप्तिपद्ये लक्ष्मीपद विन्यस्यत इति लक्ष्म्यङ्कमिद काव्यमिति प्रसिद्धि ।

इति महाकाव्य-सग्रहस्य च्छात्रोपकारिण्या
व्याख्याया पञ्चम सर्गः ।



॥ श्री ॥

# महाकाव्य-संग्रहः।

## ( संग्रहे षष्ठः-किरातार्जुनीये तृतीयः सर्गः )

अथ चतु श्लोकात्मकेन *कलापकेन व्यास वर्णयति—

तत शरच्चन्द्रकराभिरामैरुत्सर्पिभि प्राशुमिवाशुजालै ।
†बिभ्राणमानीलरुच पिशङ्गीर्जटास्तडित्वन्तमिवाम्बुवाहम् ॥ १॥

अ०—तत शरच्चन्द्रकराभिरामै उत्सर्पिभि अशुजालै प्राशुमिव आनील-रुचम्, पिशङ्गी जटा बिभ्राणम्, ( अत एव ) तडित्वन्तम् अम्बुवाहमिव ( स्थितम् ) ( मुनि धर्मात्मज आवभाषे ) ।

व्याक०—शरदि शरदो वा चन्द्रस्य ( तत्पु० ) करैरिव ( ष० त० ) अभिरामै ( उपमानस० ) शरच्चन्द्रकराभिरामै । अभिरामै -अभिरमते मनोऽस्मिन्नित्यधिकरणे घञ् । अशूना जालै. अशुजालैः, "इत्थभूतलक्षणे" तृतीया, यद्वा-प्राशुताहेतौ तृतीया । आनीला रुग् यस्य तम् आनीलरुचम् । रुच्शब्दे रोचते क्विप् । उत्सर्पिभि.-सर्पतेर्णिनि । पिशङ्गी.-"पिशङ्गादुप-सख्यानम्" इति ङीप्, मल्लिनाथस्तु गौरादित्वान् ङीपमाह, तत्प्रमादात् । चित्रभानुरपि तथैव भ्रान्तः । द्वितीयान्त जटाविशेषणम् । बिभ्राणम्-बिभर्तेः शानच् । चित्रभानुस्तु ताच्छील्ये चानशमाह । तडित्वन्तम् तडिच्छब्दान् मतुप्, "तसौ मत्वर्थे" इति भत्वाज्जश्त्व न । अम्बुवाहम्-वहते. कर्मण्यण् । जटा इति बिभर्ते. कर्मणि द्वितीया ।

व्याख्या—तत -उपवेशनानन्तरम्, शरच्चन्द्रस्य-शरत्कालिकस्येन्दो., करै -किरणैरिव, अभिरामै -मनोहरै., उत्सर्पिभि -ऊर्ध्वप्रसरणशीलै , अशूनाम्-

---

* द्वाभ्या युग्ममिति प्रोक्त त्रिभि. श्लोकैर्विशेषकम् । कलापक चतुर्भि. स्याच्चदूर्ध्व कुलक स्मृतम् ।

† 'नीलरुचिम्' इति दाक्षिणात्यपाठ ।

किरणानाम्, जालैः-समूहैः, प्रांशुमिव-उन्नतमिव लक्ष्यमाणम्, किं च, आनीला-ईषत्कृष्णा, रुक्-कान्तिः, यस्य तथोक्तम्, पिशङ्गीः-पीतवर्णाः, जटाः-परस्परश्लिष्टान् केशान्, बिभ्राणम्-धारयन्तम्, अत एव, तडित्-विद्युत् विद्यते यत्र तादृशं विद्युत्सहितम्, अम्बुवाहम्-मेघमिव स्थितम्, ( चतुर्थश्लोकेनान्वयः, पृथग् योजने तु मुनिम् धर्मात्मजः आबभाषे, इति प्रश्लेषः योज्यम्। )

भा०—अतितेजस्वी व्यासस्तदानीमुपविष्टोऽप्यूर्ध्वगामिभिः शरच्चन्द्रकिरणावदातैः स्वतेजोभिर्विशालकाय प्रतीयते स्म। अपि च स ईषत्कृष्णवर्णः पीतजटाविशिष्टश्चासीदिति विद्युद्युक्तमेघसदृशो बभौ। विद्युज्जटयोः पीतवर्णत्वात् साम्यम्, मेघव्यासयोः कृष्णत्वात् साम्यम्। दिवापि व्यासस्य तेजोंशूनामुत्सर्पणोक्त्या सूर्यरश्मीनभिभूय तेषां व्याप्तिरित्युक्तं भवति। आनीलेत्यत्राङ् भृशार्थः, तेन भृशनील (स्निग्धकृष्ण) वर्णा व्यासस्य कान्तिरुक्तेति चित्रभानुः।

अल०—अप्रांशोरपि प्रांशुत्वसंभावनादुत्प्रेक्षा, उत्सर्पदंशुजालं च तत्र निमित्तम्। उत्तरार्धे पूर्णोपमा। मल्लिनाथस्तु अम्बुवाहमिव स्थितमित्युत्प्रेक्षामाह, परं प्रथमोपस्थित इवशब्दस्य सादृश्यार्थः केन हेतुना त्यज्यत इति न ज्ञायते। सद्योजलवर्षितडित्वदम्बुवाहोपमया भगवति व्यासे वक्ष्यमाणयोगोपदेष्टृत्वं व्यञ्जितं कविना। यथा मेघो जलवर्षणेन जगदाप्याययति, तथा व्यासोऽपि योगोपदेशेन पाण्डवानाप्याययितुमागत इति। किरणानां शरच्चन्द्रकिरणसाम्योक्त्या व्यासस्य चन्द्रसाम्यं द्योतितम्, तेनापि स्वाभाविकं जगदाह्लादकत्वमस्य व्यञ्जितमिति चित्रभानुः। ननु मेघे तडिदेका, व्यासस्य तु जटा बह्वय इत्युपमानोपमेययोः वैषम्यं प्राप्नोति, सत्यम्, एकग्रन्थिकृतं जटानां नियतमेकत्वम्-इति समाधिश्चित्रभानुनोक्तः।

**प्रसादलक्ष्मीं दधतं समग्रां वपुःप्रकर्षेण जनातिगेन।**
**प्रसह्य चेतस्सु समासजन्तमसंस्तुतानामपि भावमार्द्रम्॥२॥**

अ०—समग्राम् प्रसादलक्ष्मीम् दधतम्, जनातिगेन वपुःप्रकर्षेण असंस्तुतानाम् अपि चेतस्सु आर्द्रम् भावम् प्रसह्य समासजन्तम्।

व्याक०—जनान् अतिगच्छतीति जनातिगः, तेन। "अन्येष्वपि दृश्यते" इति गच्छतेर्डप्रत्ययः। वपुषः प्रकर्षेण वपुःप्रकर्षेण। करणे तृतीया, प्रकर्ष

कृपतेर्घन् । न सस्तुतानाम्-असस्तुतानाम् । ष्टुञ्धातोः कर्मणि क्तप्रत्यये नञ्समास । भावम्-"भवतेश्च" इति काशिकोक्तया भूधातोः कर्तर्यण्, वा णिजन्तात्पचाद्यच्, यद्वा "श्रिणीभुवोऽनुपसर्गे" इति भावे घञ् । तथा तथा भवन भाव -अभिप्रायो भक्तिर्वेति । प्रसह्य-सहते क्त्वा, तस्य ल्यप् । समासजन्तम्-सजते शतृप्रत्यय । "दशसञ्जस्वञ्जा शपि" इति नलोप ।

व्याख्या—समग्राम्-सम्पूर्णाम्, प्रसादस्य-प्रसन्नताया -सौम्यताया , लक्ष्मीम्-शोभाम्, ( कालुष्यापगमकृत स्वच्छत्वम्, द्रुतमनुग्रहेच्छा च प्रसादशब्दार्थ , द्वयमपीह विवक्षितम्, तद्धेतुका तद्व्यञ्जिका वा विग्रहशोभा प्रसादलक्ष्मी , तामिति चित्रभानुः ) दधतम्-धारयन्तम्, अत एव, जनातिगेन-लोकातिशायिना, दिव्यादिव्यशरीरविलक्षणेन, वपुष -शरीरस्य, प्रकर्षेण-उत्कर्षेण, विशिष्टतया, माधुर्यरामणीयकशालितया, *असस्तुतानाम् अपि-अपरिचितानामपि, चेतस्सु-मनस्सु, आर्द्रम् भावम्-स्निग्धा मानसीं वृत्तिम्, भक्तिमिति यावत्, प्रसह्य-बलात्, समासजन्तम्-लगयन्तम्-स्थिरत्वेन स्थापयन्तम्, मुनिमावभाषे इति पूर्ववच्छेष ।

भा०—भगवति व्यासे मूर्तिमतीव पूर्णा प्रसादलक्ष्मीर्विराजमानासीत्, तादृशी सौम्या मधुरा च भगवतस्तस्याकृतिरासीद्, या दृष्ट्वा य कश्चिद् 'व्यासोऽयम्' इति त भगवन्त न परिचिनोति, तस्यापि मनसि बलात्तद्विषये श्रद्धामय स्नेह प्रादुर्भवत्येव, व्यास एव स्वाकृत्या बलात्तेषा मनसि भक्तिमुत्पादयतीति प्रतीयते । अवश्य भक्त्युत्पत्तिमभिव्यञ्जयितु व्यासस्य समासञ्जनकर्तृत्वमारोपितम् । व्यासो भावमुत्पादयतीत्यपि नोक्तम्, उत्पत्तौ कालविलम्बप्रतीते , स तु स्वसविधे स्थित भाव तन्मनस्सु दर्शनमात्रेण समासञ्जयति-इति । बलादित्युक्त्या तादृशभावोत्पत्तिप्रतिबन्धकीभूता तेषा वृत्तिमभिभूयेति प्रतीयते, तेन येपि भक्ति नेच्छन्ति, तेषामपि जायत एव भक्तिरिति । अस्थायी सबन्धो युज्धात्वर्थ , स्थायी तु सञ्जधात्वर्थ इति चित्रभानु । तेन व्यासविषयकस्तेषा भाव समवायसम्बन्धेन स्थिर उत्पद्यते, य कदापि नापयातीति द्योतितम् । मन सु इति बहुवचनेन विलक्षणवृत्तिपु

* 'सस्तव. स्यात् परिचयः'-इत्यमर. ।

किरणानाम्, जालैः-समूहैः, प्रांशुमिव-उन्नतमिव लक्ष्यमाणम्, किं च आनीला-ईषत्कृष्णा, रुक्-कान्तिः, यस्य तथोक्तम्, पिशङ्गीः-पीतवर्णाः, जटाः-परस्परश्लिष्टान् केशान्, बिभ्राणम्-धारयन्तम, अत एव, तडित्-विद्युत् विद्यते यत्र तादृशं विद्युत्सहितम्, अम्बुवाहम-मेघमिव स्थितम्, ( चतुर्थश्लोकेनान्वयः, पृथग् योजने तु मुनिम् धर्मात्मज आबभाषे, इति श्लेषः योज्यम्। )

भा०—अतितेजस्वी व्यासस्तदानीमुपविष्टोऽप्यूर्ध्वगामिभिः शरच्चन्द्रकिरणावदातैः स्वतेजोभिर्विशालकाय प्रतीयते स्म। अपि च स ईषत्कृष्णवर्णः पीतजटाविशिष्टश्चासीदिति विद्युद्युक्तमेघसदृशो बभौ। विद्युज्जटयोः पीतवर्णत्वात् साम्यम्, मेघव्यासयोः कृष्णत्वात् साम्यम्। दिवापि व्यासस्य तेजोंशूनामुत्सर्पणोक्त्या सूर्यरश्मीनभिभूय तेषां व्याप्तिरित्युक्तं भवति। आनीलेत्यत्राङ् भृशार्थे, तेन भृशनील (स्निग्धकृष्ण) वर्णा व्यासस्य कान्तिरुक्तेति चित्रभानुः।

अल०—अप्रांशोरपि प्रांशुत्वसंभावनादुत्प्रेक्षा, उत्सर्पदंशुजालं च तत्र निमित्तम्। उत्तरार्धे पूर्णोपमा। मल्लिनाथस्तु अम्बुवाहमिव स्थितमित्युत्प्रेक्षामाह, परं प्रथमोपस्थितं इवशब्दस्य सादृश्यार्थं केन हेतुना त्यज्यत इति न ज्ञायते। सद्योजलवर्षितडित्वदम्बुवाहोपमया भगवति व्यासे वक्ष्यमाणयोगोपदेष्टृत्वं व्यञ्जितं कविना। यथा मेघो जलवर्षणेन जगदाप्याययति, तथा व्यासोऽपि योगोपदेशेन पाण्डवानाप्याययितुमागत इति। किरणानां शरच्चन्द्रकिरणसाम्योक्त्या व्यासस्य चन्द्रसाम्यं द्योतितम्, तेनापि स्वाभाविकं जगदाह्लादकत्वमस्य व्यञ्जितमिति चित्रभानुः। ननु मेघे तडिदेका, व्यासस्य तु जटा बह्व्य-इत्युपमानोपमेययोः वैषम्यं प्राप्नोति, सत्यम्, एकग्रन्थिकृतं जटानां नियतमेकत्वम्-इति समाधिश्चित्रभानुनोक्तः।

प्रसादलक्ष्मीं दधतं समग्रां वपुःप्रकर्षेण जनातिगेन।
प्रसह्य चेतस्सु समासजन्तमसंस्तुतानामपि भावमार्द्रम् ॥२॥

अ०—समग्राम् प्रसादलक्ष्मीम् दधतम्, जनातिगेन वपुःप्रकर्षेण असंस्तुतानाम् अपि चेतस्सु आर्द्रम् भावम् प्रसह्य समासजन्तम्।

व्याक०—जनान् अतिगच्छतीति जनातिगः, तेन। "अन्येष्वपि दृश्यते" इति गच्छतेर्डप्रत्ययः। वपुषः प्रकर्षेण वपुःप्रकर्षेण। करणे तृतीया, प्रकर्षे

कृषतेर्घञ् । न सस्तुतानाम्-असस्तुतानाम् । ष्टुञ्धातोः कर्मणि क्तप्रत्यये नञ्समास । भावम्-"भवतेश्च" इति काशिकोक्त्या भूधातोः कर्तर्यण्, वा णिजन्तात्पचाद्यच्, यद्वा "श्रिणीभुवोऽनुपसर्गे" इति भावे घञ् । तथा तथा भवन भाव -अभिप्रायो भक्तिर्वेति । प्रसह्य-सहते क्त्वा, तस्य ल्यप् । समासजन्तम्-सजते शतृप्रत्यय । "दशसञ्जस्वञ्जां शपि" इति नलोप ।

व्याख्या—समग्राम्-सम्पूर्णाम्, प्रसादस्य-प्रसन्नताया -सौम्यतायाः, लक्ष्मीम्-शोभाम्, ( कालुष्यापगमकृत स्वच्छत्वम्, इतमनुग्रहेच्छा च प्रसादशब्दार्थ , द्वयमपीह विवक्षितम्, तद्धेतुका तद्व्यञ्जिका वा विग्रहशोभा प्रसादलक्ष्मी , तामिति चित्रभानुः ) दधतम्-धारयन्तम्, अत एव, जनातिगेन-लोकातिशायिना, दिव्यादिव्यशरीरविलक्षणेन, वपुष -शरीरस्य, प्रकर्षेण-उत्कर्षेण, विशिष्टतया, माधुर्यरामणीयकशालितया, *असस्तुतानाम् अपि-अपरिचितानामपि, चेतस्सु-मनस्सु, आर्द्रम् भावम्-स्निग्धां मानसीं वृत्तिम्, भक्तिमिति यावत्, प्रसह्य-बलात्, समासजन्तम्-लगयन्तम्-स्थिरत्वेन स्थापयन्तम्, मुनिमावभाषे इति पूर्ववच्छेष ।

भा०—भगवति व्यासे मूर्तिमतीव पूर्णा प्रसादलक्ष्मीर्विराजमानासीत्, तादृशी सौम्या मधुरा च भगवतस्तस्याकृतिरासीद्, या दृष्ट्वा य कश्चिद् 'व्यासोऽयम्' इति त भगवन्त न परिचिनोति, तस्यापि मनसि बलात्तद्विषये श्रद्धामय स्नेह प्रादुर्भवत्येव, व्यास एव स्वाकृत्या बलात्तेषां मनसि भक्तिमुत्पादयतीति प्रतीयते । अवश्य भक्त्युत्पत्तिमभिव्यञ्जयितु व्यासस्य समासञ्जनकर्तृत्वमारोपितम् । व्यासो भावमुत्पादयतीत्यपि नोक्तम्, उत्पत्तौ कालविलम्बप्रतीते , स तु स्वसविधे स्थित भाव तन्मनस्सु दर्शनमात्रेण समासञ्जयति-इति । बलादित्युक्त्या तादृशभावोत्पत्तिप्रतिबन्धकीभूता तेषां वृत्तिमभिभूयेति प्रतीयते, तेन येपि भक्तिं नेच्छन्ति, तेषामपि जायत एव भक्तिरिति । अस्थायी सबन्धो युज्धात्वर्थ , स्थायी तु सञ्जधात्वर्थ इति चित्रभानु । तेन व्यासविषयकस्तेषां भाव समवायसम्बन्धेन स्थिर उत्पद्यते, य कदापि नापयातीति द्योतितम् । मनःसु इति बहुवचनेन विलक्षणवृत्तिषु

* 'सस्तव. स्यात् परिचयः'–इत्यमरः ।

सर्वेषां मनस्सु युगपदेव एकविधभावोत्पादनमित्यसम्भवकार्यकरणेन विलक्षणो महिमा व्यासस्याविष्कृत ।

अल०—भावोत्पत्तिहेतो परिचयस्याभावेपि भावोत्पत्तिरिति विभावना। अनेकेषु मन सु एकभावोत्पत्तिरिति विरोधोऽपि । ताभ्या सर्वातिशायी महिमा व्यासस्य व्यज्यत इत्यलङ्कारेण वस्तुध्वनि । ऋषिवर्णनविषये सर्वोत्कृष्ट पद्यमिदम् ।

**अनुद्धताकारतया विविक्तां तन्वन्तमन्त.करणस्य वृत्तिम् ।**
**माधुर्यविस्रम्भविशेषभाजा कृतोपसभाषमिवेक्षितेन ॥३॥**

अ०—अनुद्धताकारतया अन्त करणस्य वृत्तिम् विविक्ताम् तन्वन्तम्, माधुर्य-विस्रम्भविशेषभाजा ईक्षितेन कृतोपसभाषमिव ।

व्याक०—न उद्धत आकारो यस्य, स.-अनुद्धताकार , तस्य भावः अनुद्धताकारता, तया । बहुव्रीहेस्तल् । ज्ञापके कारके वा हेतौ तृतीया । उद्धते उत् पूर्वाद् हन्तेः क्त , " झयो होऽन्यतरस्याम् " इति हस्य घत्वम्, माधुर्यस्य विस्रम्भस्य च ( द्वन्द्व० ) विशेषम् ( तत्पु० ) भजति-( उपप० ) स माधुर्यविस्रम्भविशेषभाक्, तेन, " भजो ण्वि " । माधुर्यमिति मधुरशब्दात् ष्यञ्, विस्रम्भ -स्रम्भधातोर्घञ् । कृता उपसभाषा येन त कृतोपसभाषम् । उपसभषा-भाषते " गुरोश्च हल " इत्यप्रत्यय । वृत्तिमिति वर्तते क्तिन् । विविक्ताम्-विपूर्वाद् 'विचिर् पृथग्भावे' धातो क्त । वृत्ते विधेयविशेषणमिदम् । ईक्षितेन-ईक्षते "नपुसके भावे क्त" उपसभाषणकरणे तृतीया ।

व्याख्या—न उद्धत -उद्दण्डविरुद्ध -शान्त -*आकार -आकृति यस्य तथाभूततया-शान्तेनाकारेण, अन्त करणस्य-स्वकीयस्य मनस , वृत्तिम्-भावम्, †विविक्ताम्-पूताम् , अथवा विविक्ताम् रजस्तमोभ्या पृथग्भूता सत्त्वप्रधानाम्-शान्ताम्, एकाग्राञ्च, तन्वन्तम्-परान् प्रति प्रत्याययन्तम्, अथवा-अन्त करणस्य-आलोकयता प्राणिनाम् ( क्रूराणामपि ) मनस , वृत्तिम्, विविक्ताम्,

---

* वक्त्रनेत्राद्याश्रयसौम्यतोग्रताद्यनुविद्धप्रसादप्रकोपादिमनोवृत्त्यवगमहेतुरवस्था-विशेष आकार इति चित्रभानु ।

† 'विविक्तौ पूतविजनौ'-इत्यमर. ।

शान्ताम्, एकाग्रा च, तन्वन्तम्-कुर्वन्तम् । ( चित्रभानुस्तु स्व पश्यता स्वेन दृष्टाना च जनानामनुद्धताकारतया सह विविक्तामन्त करणवृत्ति कुर्वन्तम्, व्यास पश्यतामप्युद्धत आकारोऽपैति, शुद्धा वृत्तिश्च जायते-इति व्याचष्टे )। मा.ुर्यस्य-स्नेहविशिष्टाया सौम्यताया, *विस्रम्भस्य विश्वासस्य च, विशेषम्-अतिशयम्, भजति-आश्रयतीति तथाभूतेन ईक्षितेन-अवलोकनेन एव, कृता-विहिता, उपसभाषा-सलाप, (सन्निकृष्य अनुकूलहितभाषणमिति चित्रभानु ) उपसान्त्वन वा, येन तथाभूतमिव, मुनिमावभाषे ।

भा०—उद्दण्डताया यत्र लेशोऽपि नास्ति, तथाभूता भगवतो व्यासस्याकृतिरेव तस्य चेतस परा शान्तिमेकाग्रता च प्रकटयति स्म, अथवा शान्ता तदीयामाकृतिमालोकयतामपि मानसी वृत्ति पवित्रा-शान्तैकाग्रा च जायते स्म। तदानीं मधुरया विश्वासजुषा दृषा पश्यन् स तथा लक्ष्यते स्म, यथासौ आलापेन दर्शकान् सम्भावयति । आलापेन य आनन्द स तद्दृष्ट्यैव जायते स्म । अथवा एव प्रतीयते स्म । यथासौ विपद्ग्रस्तान् दृष्टिसज्ञयोपसान्त्वयति । व्यास दृष्ट्वा सर्वेषामन्तर्बहिश्च प्रशान्ता वृत्तिरुदेतीत्युक्त्या क्रोधेनाविष्टस्य भीमस्यापि वृत्ति शान्ता जातेति व्यञ्जितम् । दृष्ट्या कृतोपसम्भाषमिवेत्युक्त्या च तादृशस्य गम्भीरस्य मुनीन्द्रस्याशयमविज्ञाय वक्तुमनीशोऽपि युधिष्ठिरस्तद्दृष्टिपातेन तत्सम्भाषणमिवानुभूय वचने प्रगल्भोऽभूदिति व्यज्यत इति चित्रभानु. । इह व्यासवर्णनपरेषु श्लोकेषु तद्दर्शिना यथानुभवो जायते-तथा क्रमोऽपि निर्दिष्ट इति व्याख्यानस्यापरोऽध्वा चित्रभानुना दर्शित । तथाहि—दूराद्दर्शनार्थमागच्छन्त पूर्वं दर्शनीयस्य चान्द्रस्येव तेजसोंऽशुजाल पश्यन्ति, तदनु भृश स्निग्धकृष्णा तदीया रुचिम् । मूर्तेर्निर्गत्य बहि प्रसरन्तस्तेजोऽवयवा अंशुकरादिशब्दैरुच्यन्ते, मूर्त्यनुस्यूता प्रकाशसमष्टिश्च दीप्तिरुच्यादिशब्दैरिति । ततस्तस्य जटास्तेषा † दृग्गोचरीभवन्ति ।

---

* समौ विस्रम्भविश्वासौ—इत्यमर । सकल हृद्गत प्रतीताय प्रियाय नि शङ्क निवेदयितुमभिरुचि जनयन् भावविशेषो विस्रम्भ इति चित्रभानु ।

† प्रथमे पद्य एतावदेव चित्रभानुना व्याख्यातम्, अग्रे तु तदध्वनास्माभिरूहितमिति शेयम् ।

अथ सन्निहितास्ते भगवतः प्रसादलक्ष्मीमनुभवन्ति, तया तेषां मनसि कोऽपि भक्तिविशेषः प्रादुर्भवति । तदनु प्रशान्त आकारस्तैः सम्यगालोक्यते, तेन तेषामपि चेतसि शान्तिरेकाग्रता चोदेति । ततो माधुर्यं स्रवन्त्या दृष्ट्या हितमनुकूलं चालपन्निव सर्वविधां चार्तिंशमयन्निव भगवाँस्ते प्रतीयत इति । अग्रे श्रुतीनां प्रसूतिरित्युक्त्या ततस्तदुपदेशलाभस्तेषां जायत इत्यपि व्यञ्जितं द्रष्टव्यम्।

अल०—पूर्वार्धेऽनुमानं काव्यलिङ्गं वा । उत्तरार्धे उत्प्रेक्षा । चित्रभानूक्तरीत्या सहोक्तिरपि ।

**धर्मात्मजो धर्मनिबन्धिनीनां प्रसूतिमेनःप्रणुदां श्रुतीनाम् ।**
**हेतुं तदभ्यागमने परीप्सुः सुखोपविष्टं मुनिमाबभाषे ॥ ४ ॥**

अ०—धर्मनिबन्धिनीनाम् एनःप्रणुदाम् श्रुतीनाम् प्रसूतिम् सुखोपविष्टम् मुनिम् तदभ्यागमने हेतुम् परीप्सुः धर्मात्मजः आबभाषे ।

व्याक०—धर्मं निबध्नन्ति धर्मनिबन्धिन्यः, तासाम्, बध्नातेस्ताच्छील्ये णिनि । एनांसि प्रणुदन्ति-एनःप्रणुदः, तासाम्, नुदतेः कर्तरि क्विप्, "उपसर्गादसमासेऽपि " इति णत्वम् । उभयत्रोपपदसमासः । सुखम् उपविष्टम्-सुखोपविष्टम् । क्तान्तेन क्रियाविशेषणस्य 'सुपा" इति समासः । श्रुतीनाम्-श्रूयन्ते सम्प्रदायपारम्पर्येणेति श्रुतयः, तासाम्, कर्मणि क्तिन्, प्रसवक्रियाकर्मणि षष्ठी । प्रसूतिम्-प्रसूते करणे क्तिन् । परीप्सुः-परितः आप्तुमिच्छुरिति विग्रहः, आप्नोतेः सन्, तदन्तादुः, "आप्ज्ञप्यृधामीत्" इतीत्त्वम्, "अत्र लोपोऽभ्यासस्य" इत्यभ्यासलोपः । हेतुम्-परीप्साकर्मणि द्वितीया, "नलोका" इति उप्रत्ययान्तयोगे षष्ठीनिषेधात् । मुनिमित्याभाषणक्रियाया अकथितं कर्म, वक्ष्यमाणं वच इति मुख्यं कर्माध्याहार्यम् ।

व्याख्या—धर्मनिबन्धिनीनाम्-अग्निहोत्रादिधर्मप्रतिपादिकानाम्, (धर्मम्-स्वर्गादिजनकं पुण्यम्, नित्यं बध्नन्ति यज्ञादिकर्तृषु उत्पादयन्ति तथाभूतानामिति वा) एनांसि-पापानि, प्रणुदन्ति-निवारयन्ति-निषेधन्ति-इति तथोक्तानाम्, * श्रुतीनाम्-वेदानाम्, † प्रसूतिम्-प्रभवस्थानम्, सुखम्-कृच्छ्रव्यग्रतादि-

---

* श्रुतिः स्त्री वेद आम्नायः—इत्यमरः ।

† यद्यपि नित्यानां वेदानां प्रभवः-उत्पत्तिरेव न सम्भवतीति दूरे व्यासस्य

रहित यथा स्यात्तथा, उपविष्टम्-आसीनम्, मुनिम्-व्यासम्, तस्य-मुने, अभ्यागमने, हेतुम्-कारणम्, परीप्सु-जिज्ञासु, धर्मस्य आत्मज-पुत्रो युधिष्ठिर., आवभाषे वक्ष्यमाण वच उवाच ।

भा०—अभ्युदयनिःश्रेयसयो साधनभूतस्य धर्मस्य प्रतिपादिकाः, पतनहेतोरधर्मस्य च निषेधिका ऋग्यजुःसामाख्या श्रुतयो व्यासेन कलेरादौ पृथक् पृथग् विभज्य लोके परम्पराख्यसम्प्रदायप्रवर्तनेन प्रचार नीता, त सुखेनासने उपविष्ट भगवन्त व्यासम्प्रति तदानीं तदागमनकारणजिज्ञासया युधिष्ठिरो वक्तुमारभत ।

अल—धर्मनिबन्धिनीनामित्यादिश्रुतिस्तुतिस्तत्प्रचारकस्य व्यासस्य स्तुतेरङ्गमिति उदात्त नामालङ्कार । युधिष्ठिरस्य भाषणे हेतुरुपन्यस्त इति काव्यलिङ्गमपि । उक्तपद्यचतुष्टयेऽपि मुनिविषयो रतिभावो व्यङ्ग्य ।

**अनाप्तपुण्योपचयैर्दुरापा फलस्य निर्धूतरजाः सवित्री ।**
**तुल्या भवद्दर्शनसम्पदेषा वृष्टेर्दिवो वीतवलाहकायाः ॥ २ ॥**

अ०—अनाप्तपुण्योपचयै दुरापा निर्धूतरजाः फलस्य सवित्री एषा भवदर्शनसम्पद् वीतवलाहकाया दिव वृष्टे तुल्या (अस्ति) ।

व्या०—न आप्त पुण्यानाम् उपचय (तत्पु०) यै (बहु०) तै अनाप्तपुण्योपचयै. । आप्नोते. कर्तरि तृतीया । निर्धूत रजो यया सा निर्धूतरजाः, निर्धूतमिति धूनोते क्तः । समस्ते पदे "अत्वसन्तस्य" इति दीर्घः । भवतो दर्शनमेव, दर्शनस्य वा सम्पद् भवद्दर्शनसम्पद् । यद्वा भवद्दर्शन सम्पदिवेत्युपमितसमास । वीता वलाहका यस्या, तस्या वीतवलाहकाया । वलाहक-वारिवाहको वलाहक, पृषोदरादित्वात् साधु । वीता-विपूर्वादेते क्त । दुरापा-आप्नोते 'ईषद्दु.सुषु " इति खल् । सवित्री-षूङ्धातोस्तृच्,

---

तदुत्पादकत्वन्, तथापि यथा हिमवान् गङ्गाया प्रभवस्थानम्, तथा कलेरादौ श्रुतिसम्प्रदायप्रवर्तकत्वेन व्यासस्तत्प्रभवस्य-प्रचारस्य मुख्य स्थानम्-कारणभूत इति प्रसूतिशब्देन कविना उक्त । श्रुतीनाम्-इति बहुवचनोपन्यासेन बहुत्वविशिष्टाना श्रुतीनाम्—अर्थात् श्रुतिबहुत्वस्य कारणता व्यासे उक्ता, एक एव हि वेदो व्यस्यविभज्य व्यासेन चतुर्धा कृत, अत एव तस्य व्यासत्वमिति चित्रभानु ।

ततः "अन्नेभ्यो ङीप्" । फलस्य-सवनक्रियाकर्मणि षष्ठी । वृष्टे -"तुल्यार्थैरतुलोपमा" इति तुल्यशब्दयोगे षष्ठी ।

व्याख्या—न आप्त -प्राप्त , पुण्यानाम्, उपचय -समृद्धि , यैस्तथोक्तै, अकृतपुण्यै पुरुषै , दुरापा-दुर्लभा, निर्धूतम्-तत्क्षणादेव दूरीकृतम्, *रज - रजोगुण , तज्जन्य दुरितादिकम्, ( वृष्टिपक्षे धूलि ) यया तथाभूता, फलस्य मनोरथस्य, ( वृष्टिपक्षे-सस्यादे. ) सवित्री-सम्पादयित्री, कल्याणकरी, एषा-स्फुटमनुभूयमाना, भवत दर्शनरूपा सपद्, ( अथवा भवद्दर्शनस्य सपत्-सम्पत्तिः-लाभ ) वीता -गता , वलाहका -मेघाः, यस्या , तथोक्ताया , दिव - आकाशस्य, वृष्टे.-वर्षणस्य तुल्या-सदृशी, अस्तीति शेष ।

भा०—भगवन् व्यास ! ये पुरा पुष्कल पुण्यराशिरर्जितः, त एव श्रेयोनिदान रजसस्तज्जनितदुरितदु खादेश्च प्रसर निरुन्धानमनभ्रवृष्टिसदृशमिद भवद्दर्शन प्राप्तुं शक्नुवन्ति, नान्ये अकृतपुण्या । किञ्च भवद्दर्शन भविष्यति श्रेय· सम्पादकम् । तेन कालत्रयेऽपि दुरितक्षयपुण्यसम्पद्रूपा योग्यता भवद्दर्शनेन व्यज्यते । अनाप्तपुण्योपचयैरिति भूतकाले पुण्यसम्पद् व्यञ्जिता, निर्धूतरजा इति सम्प्रति । ( रजोनिर्धूननस्य वर्तमानत्वेऽपि सुकरत्वमविलम्बितत्व च व्यञ्जयितु भूतकालिक. प्रत्यय.-निर्धूत इति ) फलस्य सवित्रीमिति भविष्यत्काले पुण्यसम्पत्त्समृद्ध्यादि व्यञ्जितम् ( इत्थ निगूढमत्रोक्त एवार्थो माघेन 'हरत्यघ सप्रति' इत्यादिना कृष्णनारदसवादे व्यक्तीकृत ) । तेन वयमपि भवद्दर्शनभाज पूर्वं कृतपुण्या , इदानीं विनष्टपापा , भविष्यति श्रेयोभाजनानि चेति द्योतितम् । इह वीतवलाहकाया दिवो वृष्टि.-अनभ्रवृष्टि , सा यथा अतर्कितमुपनमति, तथा भवद्दर्शनमतर्कितोपनतमिति मल्लिनाथेन व्याख्यातम् । परमनाप्तपुण्योपचयैर्दुरापेत्यादिविशेषणानि तस्या वृष्टौ कथ सगच्छन्ते, इत्यत्र तस्य सूरेर्मौनमेव । केवल निर्धूतरजाः-इति विशेषणमुभयपरतया तेन योजितम् । विशेषणाना सर्वेषा तत्रानन्वये च कश्चमत्कार इति सहृदया एव साक्षिण । चित्रभानुस्तु दिवो वृष्टिरित्युक्त्या द्युसरित - आकाशगङ्गाया -तत्सलिलस्य वृष्टिरित्युक्तं भवतीत्याह । वीतवलाहकाया

---

* रजो रजोगुणे धूलौ परागार्तवयोरपि—इति शाश्वत ।

इत्युक्त्या च मलिनतादिदोपसम्बन्धस्तत्र वारित इति । वलाहकरहिता वृष्टिर्वसुधाविशुद्धिसमृद्धिहेतु, पुण्यतमनभोगङ्गाप्रवाहोद्भूतेति पुराणेषु श्रूयते, इति च तेन स्वपक्षः समर्थ्यते । तेन विशेपणत्रययोगस्तत्र साधु समर्थित एव । निर्धूतरजा -इत्यनेन ग्रीष्मकालिकरजोनिर्धूननमुक्तम्, तेन तापशान्तिश्च व्यञ्जितेत्यपरमनुकूलम् । परे तु वीतवलाहकाया दिवो वृष्टिः शारदी वृष्टिरिह विवक्षितेत्याहु । शरदृतौ वलाहका वर्षाया निरन्तर स्थिता अपयान्ति, द्यौर्विमला भवतीति प्रसिद्धमेव, तदेव वीतवलाहकपदेनाभिप्रेतम् । 'क्वचित्पुण्यतमे देशे वृष्टिर्भवति शारदी' इति प्रसिद्धे. प्रथमविशेपणयोगस्तत्र सिद्ध । निर्धूतरजा इति रज.-पदेन च वृष्ट्युदक-कर्दमादिजन्यकालुष्यम्, सरोजलादिषु मिश्रित रजो वा विवक्षितम्, तस्य निर्धूनन तस्या सुप्रसिद्धमेव । सस्यादिफलसमृद्धौ यथा तस्या उपयोग., स तु आवालहालिक ज्ञात इति । पक्षाणामेषा तारतम्य विवेचयन्तु सुधिय ।

अल०—वय भवद्दर्शनसपद्भाज कृतपुण्या इति वक्तव्ये सामान्योपन्यासादप्रस्तुतप्रशसा । उपमा तु स्फुटैव । दर्शनसपदित्यत्र सपत्पद सपज्जनके लाक्षणिकम् । सपद्धेतोर्दर्शनस्य सपद्रूपतया वर्णनाद्द हेत्वलङ्कार । निर्धूतरजा इति रज पद रजोजन्ये दुरितादौ लाक्षणिकमिति चित्रभानुः ।

**अद्य क्रिया कामदुघा. क्रतूना सत्याशिप सप्रति भूमिदेवा. ।**
**आसस्रुतेरस्मि जगत्सु जातस्त्वय्यागते यद् वहुमानपात्रम् ॥६॥**

अ०—अद्य क्रतूनाम् क्रियाः कामदुघा, ( जाता ) सप्रति भूमिदेवाः सत्याशिष., ( जाताः ) यत् त्वयि आगते अस्मि आ सस्रुते जगत्सु वहुमान-पात्रम् जात ।

व्याक०—कामान् दुहन्तीति कामदुघा, "दुह कब् घश्च" । इति कप्प्रत्ययो घादेशश्च । उपपदसमास । सत्या आशिषो येषा ते सत्याशिष । महो मानस्य ( कर्म० ) पात्र वहुमानपात्रम् । जातः-जायतेरकर्मकत्वात् कर्तरि क्त । त्वयि आगते-"यस्य च भावेन भावलक्षणम्" इति सप्तमी । सपूर्वकात्सरते क्तिनि सस्रुति., सस्रुते आ-इत्यत्र "आङ् मर्यादावचने" इति सूत्रे वचनग्रहणेनाभिविध्यर्थकस्याप्याङ सग्रहात् कर्मप्रवचनीयत्वम् ।

"पञ्चम्यपाङ्परिभिः" इति तद्योगे पञ्चमी। "आङ् मर्यादाभिविध्योः" इत्यनेनाव्ययीभावस्तु वैकल्पिकत्वान्न। जगत्सु-अधिकरणे सप्तमी। उत्तरार्धे *अस्मीत्यहमर्थकमव्ययमिति व्याख्याकृत, 'अस्मीत्यस्मदर्थानुवादेऽहमर्थेपि' इति गणरत्नव्याख्याने। तस्य क्रियापदत्वे तु अहमिति कर्ता ध्याहार्य.। क्रिया, आशीरित्यादि व्याख्यातम्।

व्याख्या—अद्य, अस्मिन् दिवसे, । क्रतूनाम्-यज्ञानाम्, क्रिया-अनुष्ठानानि, कामदुघा -अभिलाषपूरका -फलदा जाता । सम्प्रति-इदानीम्, †भूमिदेवा.-ब्राह्मणाः, सत्या -अविसंवादिन्यः, आशिषः-शुभाशंसा, येषां तथोक्ता जाताः, यद्-यत., त्वयि-भवति व्यासे, आगते-सान्निध्य प्राप्ते सति, अस्मि-अहम्, आ संसृतेः-यावत्संसारम्, संसारस्थितिपर्यन्तम्, जगत्सु-लोकेषु, वहो., मानस्य-सम्मानस्य, पात्रम्-भाजनम्, जात.-संवृत्त । यद्वा आसंसृते संसारादारभ्य-सृष्टेरारम्भाद्-अनादिकालाद्, जगत्सु-लोकेषु स्थितोऽपि अहम्, अद्य जात -याथार्थ्येन उत्पन्न, अद्य मे जन्म सफलम्, येन त्वय्यागते बहुमानपात्रमस्मीति व्याख्यान्तरमूह्यम्।

भा०—भगवन् व्यास! मयाद्य स्वानुष्ठितक्रतूना फलमुपलब्धम्, अद्यैव च विप्रैर्वितीर्णानामाशिषा फल प्राप्तम्, ( अद्य मे संसारे जन्म सफल जातम् ) यद् मदन्तिकमुपगतवता भवता जगत्यहं परम गौरव प्रापित.। लोके गौरवमेव जनानामभिलषणीय वस्तु, तदभीप्सित भवदागमनेन सम्पन्नम्, अत कृतार्थोऽस्मि। क्रतूनाम्, भूमिदेवा.-इति बहुवचनाभ्याम्-अनेकजन्मार्जितयावत्-क्रतूनाम् सर्वब्राह्मणाशिषा च फलभूतमतीव दुर्लभ त्वद्दर्शनमिति द्योत्यते। भूमिदेवा इति पद देववन्निग्रहानुग्रहसामर्थ्यं ब्राह्मणेषु व्यनक्ति, तेन तदाशिषा महत्त्व द्योत्यते।

अल०—उत्तरवाक्यार्थस्य पूर्ववाक्यार्थे हेतुत्वात् काव्यलिङ्गम्। व्यासागमनेन स्वस्यैतादृशोत्कर्षोक्त्या उल्लास । बहुमानप्राप्तेः सकलक्रत्वाशी फलरूपताध्यवसानादतिशयोक्तिर्व्यङ्ग्या।

---

* आ संहृते –इति पाठान्तरम्। संहारपर्यन्तम्-प्रलयपर्यन्तमिति तदर्थः।

† द्विजात्यग्रजन्मभूदेववाडवा । विप्रश्च ब्राह्मण –इत्यमर ।

**श्रिय विकर्षत्यपहन्त्यघानि श्रेय परिस्नौति तनोति कीर्तिम् ।**
**सदर्शन लोकगुरोरमोघ तवात्मयोनेरिव कि न धत्ते ॥७॥**

अ०—आत्मयोनेरिव लोकगुरोः तव अमोघम् सदर्शनम् श्रियम् विकर्षति, अघानि अपहन्ति, श्रेय परिस्नौति, कीर्तिम्, तनोति, किम् न धत्ते ।

व्याक०—आत्मा योनिर्यस्य तस्यैव आत्मयोनेरिव । न मोघम्-अमोघम्, श्रेय -प्रशस्यशब्दाद्-ईयसुन्प्रत्यय , प्रकृतेश्च श्र-इत्यादेश । परिस्नौति-ष्णु प्रस्रवणे धातोर्लट् कीर्तिम्-कृतधातो "ऊतियूतिजूतिसातिहेतिकीर्तयश्च" इति निपातित । धत्ते दधातेर्लट् ।

व्याख्या—आत्मयोनेरिव-ब्रह्मण इव, लोकस्य-जगत , गुरो -शिक्षकस्य, पूज्यस्य वा, तव-भवत , अमोघम्-अनिष्फलम्, दर्शनम्-साक्षात्कार , श्रियम्-लक्ष्मीम्, विकर्षति-प्रकर्षति, प्रकृष्टा करोतीत्यर्थ , ( आकर्षतीति मल्लिनाथ ) ( विरुपसर्गो दूरार्थे, तेन दूरात् प्रसह्यानयतीत्यर्थ इति चित्रभानु ) *अघानि-पापानि, दु खानि वा, अपहन्ति-विनाशयति, श्रेय -कल्याणम्, ( पुण्यमिति चित्रभानु ) परिस्नौति-स्रवति, प्रापयति, ( सूक्ष्मरूपेण स्थित स्थूलरूपेण समुन्मेपयतीत्यर्थः-इति चित्रभानु ) कीर्तिम्-यश , तनोति-विस्तारयति, किं बहुना, किं न धत्ते-किं किं शुभ न सम्पादयति, सर्वमेव सम्पादयतीत्यर्थ ।

भा०—भवतो दर्शन श्रीवृद्ध्यादिसर्वश्रेयोनिदान यथा ब्रह्मण । भवान् हि ब्रह्मणा सदृशः, सोऽपि लोकगुरु , भवानपि लोकगुरुरिति । न हि भवतो दर्शन कदापि निष्फल भवति । तेन ममापि श्रेयःप्राप्तिनिश्चितैवेति व्यङ्ग्यम् ।

अल०—आत्मयोनेरिव तवेत्युपमा । एकत्र श्रीविकर्पणाद्यनेकक्रियाकर्तृत्व-प्रतिपादनात्समुच्चयश्च । अत्र धत्ते इति करोत्यर्थेऽवाचकम् । सर्वमभिमत पोपयतीत्यर्थकरणे तु न कश्चिद्दोप स्यात् ।

**श्च्योतन्मयूखेऽपि हिमद्युतौ मे न निर्वृत निर्वृतिमेति चक्षु ।**
**समुज्झितज्ञातिवियोगखेद त्वत्सन्निधावुच्छ्वसितीव चेत ॥८॥**

अ०—श्च्योतन्मयूखे हिमद्युतौ अपि न निर्वृत मे चक्षुः त्वत्सन्निधौ निर्वृतिम् एति, ( किं च ) चेत समुज्झितज्ञातिवियोगखेदम् ( सत् ) उच्छ्वसिति इव ।

---

* अहोदु खव्यमनेष्वघम्—इत्यमर. ।

व्याक०—श्च्योतन्तो मयूखा यस्य तस्मिन् श्च्योतन्मयूखे । श्च्योतदिति श्च्युतिर्धातो शतरि साधु । हिमा द्युतिर्यस्य तस्मिन् हिमद्युतौ, विषयसप्तमीति मल्लिनाथः, निमित्तसप्तमीति चित्रभानु । न निर्वृतं ननिर्वृतम्, नैकधेत्यादिवत् नशब्देन सह सुप्सुपेति समास, अतो नलोपो न । न इति पृथक्पद वा निर्वृतिमिति-निरुपसर्गाद् वृणोतेः क्त । तव सन्निधौत्वत्सन्निधौ, "प्रत्ययोत्तर पदयोश्च" इति त्वादेश', सन्निधौ-दधाते "उपसर्गे घो किः" । समुज्झित ज्ञाते वियोगस्य ( प० तत्पु० ) खेद. ( प० तत्पु० ) येन ( बहु० ) तत् समुज्झितज्ञातिवियोगखेदम् । ज्ञातिशब्दे जानाते कर्मणि करणे वा क्तिन्, वियोगखेदशब्दयो -युनक्ते खिदेश्च घञ् । निर्वृतिम्-वृणोते क्तिन् । *उच्छ्वसिति उत्पूर्वात् श्वसितेर्लट् । "रुदादिभ्य सार्वधातुके" इतीडागम । "शश्छोऽटि" इति शस्य च्छ । चक्षुरिति जातावेकवचनम् ।

व्याख्या—श्च्योतन्त -सुधा स्रवन्त, मयूखा किरणा यस्य तथोक्ते, हिमा-शीता, द्युति -कान्ति यस्य तादृशे चन्द्रेऽपि, तमालोक्यापि, ननिर्वृतम्-शान्तिमप्राप्तम्, मे-मम, चक्षु -नेत्रम्, तव-भवत, सन्निधौ-सविधे, निर्वृतिम्-दु खशान्तिम्-दु खोपरमे जायमान सुखविशेषम्, ( तादृशसुखजनित विकासम् ) एति-प्राप्नोति । कि च, चेत मन , समुज्झित -त्यक्त', ज्ञातिवियोगस्य-बन्धुवि रहस्य, खेद -क्लेश येन तादृश सत्, उच्छ्वसितीव-उच्छ्वास करोतीव । अनुपरोध प्राणनमुच्छ्वासशब्दार्थ, प्रशान्ते मनसि तत्कर्तृत्वमुत्प्रेक्ष्यत इति मल्लिनाथ । चित्रभानुस्तु चिरस्थायिनी दु खस्यापगमेन सत्त्वसुखोन्मेषमया इच्छानुरूपा स्वच्छा वृत्तिरुच्छ्वासस्येह लाक्षणिकोऽर्थ, ता वृत्ति मन प्राप्नोतीति वाक्यार्थ । इव-शब्दस्तु उच्छ्वासे किञ्चिद् वैकल्य बोधयति । अद्यापि राज्याद्यप्राप्तेर्दु खस्य पूर्णतया न विराम, तथापि त्वद्दर्शनेन विरतप्राय दुःखमिति तात्पर्यमाह ।

भा०—भगवन् व्यासमुने ! बन्धुवियोगात् प्रभृति सुधास्राविण चन्द्रमस दृष्ट्वापि बन्धुदर्शनोत्क मे चक्षुर्न मनागपि तृप्ति लेभे, परमिदानीं त्वयि दृष्टे चक्षुरिद निरतिशया तृप्तिमधिगच्छति । कि च भवदागमनात् प्राग्

* 'च्छ्वसतीव' इति क्वाचित्कोऽपपाठ. ।

बन्धुविरहतप्त जीवनाशाशून्य मम मानस सम्प्रति त्वत्सन्निधानेन कथचित् ताप त्यजति, शान्तमिव च भवति ।

अल०—सत्यपि निर्वृतिकारणे चन्द्रमस्यनिर्वृतिकथनात् विशेषोक्ति, चन्द्राद् व्यासस्य व्यतिरेको व्यङ्ग्य । मल्लिनाथरीत्या उच्छ्वसितीवेति क्रियोत्प्रेक्षा, चित्रभानुरीत्या तु लाक्षणिक पदम् । तत्र 'त्वत्सन्निधौ' इति हेतूपन्यासात् काव्यलिङ्गम् । चक्षुषि निर्वृतिपदमपि लाक्षणिकम्, विकासस्तदर्थ । व्यासस्य सर्वहितकरत्वलक्षण माहात्म्य व्यङ्ग्यम् । युधिष्ठिरस्य विशिष्टज्ञातित्वमपि व्यासे व्यङ्ग्यमिति चित्रभानु ।

**निरास्पद प्रश्नकुतूहलित्वमस्मास्वधीन किमु नि स्पृहाणाम् ।**
**तथापि कल्याणकरीं गिर ते मा श्रोतुमिच्छा मुखरीकरोति ॥६॥**

अ०—प्रश्नकुतूहलित्वम् निरास्पदम् (अस्ति), नि स्पृहाणाम् अस्मासु किमु अधीनम् ? तथा अपि कल्याणकरीम् ते गिरम् श्रोतुम् इच्छा माम् मुखरीकरोति।

व्याक०—प्रश्ने कुतूहलित्व प्रश्नकुतूहलित्वम्, कुतूहलम् अस्य अस्तीति कुतूहलि, तस्य भाव कुतूहलित्वम्, कुतूहलशब्दाद् "अत इनि ठनौ", ततो भावे त्वप्रत्यय. । प्रश्नशब्दे-प्रच्छधातो 'यजयाचयतविच्छप्रच्छरक्षो नङ्" । निर्गतम् आस्पद यस्य तद् निरास्पदम्, 'आस्पद प्रतिष्ठायाम्" इति आस्पदशब्दे सुट् । निर्गता स्पृहा येषा तेषा नि स्पृहाणाम् । स्पृहाशब्दे स्पृहयते "षिद्भिदादिभ्योऽङ्" इत्यङ् भिदादेराकृतिगणत्वात्, णिलोप. । अधीनम्-इनमधिगतम्, इति विग्रहे "अत्यादय क्रान्ताद्यर्थे द्वितीयया" इत्यनेन तत्पुरुष., अधि ( उपरि ) इनोऽस्येति बहुव्रीहिर्वा । "अषडक्ष " इति खप्रत्ययस्तु न शङ्क्य, ईश्वराधीन इत्यादावध्युत्तरपदादेव तद्विधानात् । कल्याण करोति तच्छीला कल्याणकरीम्, करोतेस्ताच्छील्ये ट, टित्वात् ङीप्, उपपदसमास । श्रवणकर्मणि द्वितीया । श्रोतुम्-इच्छायोगे तुमुन्, इच्छा- 'इच्छा" इति इषे. शः । अमुखर मुखर करोति मुखरीकरोति, मुखरशब्दाद् अभूततद्भावे च्वि । मुखरशब्दे- 'रप्रकरणे खमुखकुञ्जेभ्य उपसख्यानम्" इति मुखशब्दाद् रप्रत्यय । अस्मासु-अधिकरणत्वविवक्षया सप्तमी । किमु-इत्यत्र उ' इति निपातो वितर्के ।

व्याख्या—प्रश्ने (त्वदागमनकारण) जिज्ञासायाम्, कुतूहलित्वम कौतुकम-औत्सुक्यम्, निरास्पदम्-अस्थाने-निर्हेतुकम्, व्यर्थमितियावत् । यत, निर्गता, स्पृहा-सर्वविषयेच्छा येषा तथाभूताना भवादृशाम, अस्मासु, अकिञ्चनेषु ( सर्वक्षत्रियेषु इति चित्रभानु ) किमु, अधीनम्-आयत्तम्, न किमपीत्यर्थ, तथापि-आगमनप्रयोजनप्रश्नस्य अनवसरदुस्थत्वेऽपि, कल्याणकरीम्-श्रेयोविधात्रीम्, ते-तव, गिरम्-वाचम्, श्रोतुम्-आकर्णयितुम्, इच्छा-अभिलाष, माम्, मुखरीकरोति-वाचालयति-प्रश्ने प्रवर्तयति ।

भा०—भगवन व्यास ! त्वा प्रत्येवमकस्मादागमनस्य प्रयोजन पृच्छामीति चेतासि कुतूहल जायते । पुनश्च विवेकबुद्धिरुदेति-अस्थाने कुतूहलमिदम्, अकिञ्चना वय किं साधयितु शक्नुम, यदुद्दिश्य भगवानत्रागतो भवेत् । आशापाशवद्धा केचन भावि फलमभिसन्धायाप्यस्मदनुगति कुर्यु., येस्तु सकलविषयवासनैव त्यक्ता, ते भवादृशा सर्वत्रापि प्रयोजनशून्या अस्मासु किमुद्दिशेयु. । सैषा बुद्धि. कुतूहल रुणद्धि । पर पुनस्त्वद्वाक्यश्रवणोत्कण्ठा बलात्प्रवर्तयति, जानामि-भवान् स्वार्थे नि स्पृह, किन्तु लोकहिते तु स्पृहा जागर्त्येव भवादृशाम् । तदस्मद्धितमेव आगमनप्रयोजन भवेत्, तदस्माभि श्रोतव्यमेव, अनेनैव च व्याजेन त्वद्वच कर्णे निपत्यास्मान् पावयिष्यतीति प्रश्ने प्रवृत्तिर्जायत एव ।

अल०—पूर्वार्धे वाक्यार्थहेतुक काव्यलिङ्गम् । कल्याणकरीमिति विशेषणस्य, श्रवणे साभिप्रायत्वात् परिकर । 'आगमनप्रयोजन श्रोतुमिच्छामि' इत्यर्थस्य भङ्ग्यन्तरेणोपन्यासात् पर्यायोक्त मुख्यम् ।

**इत्युक्तवानुक्तिविशेषरम्य मन समाधाय जयोपपत्तौ ।**
**उदारचेता गिरमित्युदारा द्वैपायनेनाभिदधे नरेन्द्र. ॥१०॥**

अ०—जयोपपत्तौ मन. समाधाय इति उक्तिविशेषरम्यम् उक्तवान् उदारचेताः नरेन्द्र द्वैपायनेन इति उदाराम् गिरम् अभिदधे ।

व्याक०—उक्ते. विशेषेण रम्यम् यथा स्यात् तथा उक्तिविशेषरम्यम् । क्रियाविशेषणत्वाद् द्वितीया । उक्तिरिति ब्रवीतेर्भावे क्तिन् । विशेष इति घञन्तम्, रम्यमिति रमते "पोरदुपधात्" इति यत् । उदार चेतो यस्य

स -उदारचेताः । " अल्पसन्तस्य—" इति दीर्घ । द्विर्गता आपो यस्मिन् तद् द्वीपम्　ऋक्पूरब्धूः—" इत्यप्, ' द्व्यन्तरुपसर्गेभ्योऽप ईत् " इति अपोऽन्तस्यैकारादेश । द्वीपम् अयनम् ( -उत्पत्तिस्थानम् ) यस्य स. द्वीपायन स एव द्वैपायन , स्वार्थिक प्रज्ञाद्यण् इति मल्लिनाथ । चित्रभानुस्तु ‡द्वीपशब्दादपत्येऽर्थे नडादित्वात् फक्प्रत्ययमाह । मल्लिनाथस्तत् खण्डयति । अभिधानक्रियाकर्तरि तृतीया-द्वैपायनेनेति । उपपत्तौ-पद्यते भावे करणे वा क्तिन् । समाधाय-दधाते क्त्वा, ल्यप् । अभिदधे-दधाते गौणे कर्मणि लिट्, अत एव नरेन्द्र इति अकथितकर्मणि प्रथमा. गिरन् इति च प्रधान कर्म । गृधातो क्विपि गी शब्द । मन -समाधिकर्मणि द्वितीया ।

व्याख्या—जयस्य-शत्रूनभिभूय स्वोत्कर्षस्य, उपपत्तौ-सिद्धौ, सिद्ध्युपायेषु वा, मनः-चित्तम् समाधाय-प्रणिधाय, जय लक्ष्यीकृत्य, इति-पूर्वोक्तम्, उक्ते -भाषणस्य, विशेषेण-वैचित्र्येण, अग्राम्यतया, रम्यम्-मनोहर यथा स्यात्तथा, उक्तवान्-कथितवान् उदारम्-महत्, चेत , यस्य तथोक्त -मनस्वी, नरेन्द्र -युधिष्ठिर , द्वैपायनेन-व्यासेन, इति-वक्ष्यमाणाम्, उदाराम्-फलवतीम्, गिरम-वाचम्, अभिदधे-उक्त । मल्लिनाथस्तु-' इति उक्तवान् नरेन्द्र व्यासेन जयोपपत्तौ मन समाधाय-युधिष्ठिरस्य जयसिद्धि लक्ष्यीकृत्य, इति अभिदधे, इत्येव भिन्नक्रमेण व्याचष्टे ।

भा०—( चित्रभानुरीत्या ) यद्यपि युधिष्ठिरस्य चेतसि 'विजयसिद्धेरुपायं भगवन्त व्यास प्रति पृच्छानि ' इत्यभिलाप आसीत्, तथाप्युदारप्रकृतितया तेन स्पष्ट ग्राम्यतया न स प्रकटित , अपि तु ' फलस्य सवित्री भवद्दर्शनसपत् ' ' त्वद्दर्शन श्रिय विकर्षति ' ' कल्याणकरी ते गिरम् ' इत्यादिना व्यङ्ग्येनैव प्रकटित । तमेवविध युधिष्ठिरस्य विनीत मनोहर भाषितमाकर्ण्य ( मल्लिनाथरीत्या ) ' केनोपायेनास्य जयसिद्धिर्भवेद् ' इति सुनिपुणमेकाग्रेण मनसा विचार्य तदनुरूपमेव व्यास तस्मै वक्ष्यमाणमुपदिदेश ।

* द्वीपे पराशरात्सत्यवत्या व्यासस्योत्पत्तिरिति पुराणम् ।

‡ व्यासो नारायणावतार., न तस्य कोऽपि मुख्य पितेति द्योतयितुमुत्पत्तिस्थान एव पितृत्वमारोप्यापत्यप्रत्यय इति तेनोक्तम् ।

अलं०—चित्रभानुरीत्या गूढस्य युधिष्ठिराभिप्रायस्य कविना विवृतीकरणाद् विवृतोक्तिरलङ्कार । उदार-उदारामिति लाटानुप्रास. ।

**क्षिचीपतां जन्मवतामलघ्वीं यशोवतंसामुभयत्र भूतिम् ।**
**अभ्यर्हिता बन्धुषु तुल्यरूपा वृत्तिर्विशेषेण तपोधनानाम् ॥ ११॥**

अ०—उभयत्र अलघ्वीम् यशोवतमाम् भूतिम् चिचीपताम् जन्मवताम् बन्धुषु तुल्यरूपा वृत्ति. अभ्यर्हिता, तपोधनाना विशेषेण (अभ्यर्हिता) (अस्ति)

व्याक०—न लघ्वीम्-अलघ्वीम्, लघुशब्दाद् "वोतोगुणवचनात्" इति ङीप् । यश अवतंसो यस्या ता यशोवतसाम । तुल्य रूप यस्या सा तुल्यरूपा । तप एव धन येषा तेषा तपोधनानाम् । उभयत्र-उभशब्दात् त्रलि "उभयोऽन्यत्र" इत्ययच् । चिचीषताम् चिनोते शतरि षष्ठ्यन्तमिद रूपम, जन्मवतामित्यस्य विशेषणम् । जन्मवतामिति जन्मशब्दान्नित्ययोगे मतुप्, वृत्तिरित्यनेन सम्बन्धे षष्ठी । अभ्यर्हिता-अर्हते. क्त । बन्धुषु-विषयसप्तमी । उत्तरपद्ये तथापीत्युक्तत्वात् तन्निराकाङ्क्षत्वसिद्धये इह अन्वयादौ 'यद्यपि' इति योज्यम् । भूतिमिति चयने कर्म ।

व्याख्या—उभयत्र इह परलोके च, (परस्परविरुद्धे द्वयेऽपि बन्धुवर्गे इति चित्रभानुः) अलघ्वीम्-महतीम्, यश -कीर्तिरेव, अवतस -भूषण यस्यास्तादृशीम्, भूतिम्-कल्याणम-श्रेय , ( चित्रभानुरीत्या समृद्धिम् ) चिचीषताम्-चेतुम् सग्रहीतुम्, इच्छताम्, जन्मवताम्-शरीरधारिणाम्, बन्धुषु-बान्धवेषु-कुटुम्बिषु, तुल्यरूपा-एकविधा, वृत्ति व्यवहार , अभ्यर्हिता-उचिता, अस्मादृशा तपोधनानाम्-तपस्विना तु सा वृत्ति , विशेषेण-आधिक्येन, अभ्यर्हिता ।

भा०—ये जना इह लोके परलोके च आत्मन श्रेयो यशश्च कामयन्ते, तैर्बन्धुष्वपक्षपातेन वर्तितव्यम्, एकत्र रागोऽपरत्र द्वेष इति न करणीयम्, सर्वस्तुल्यमेव व्यवहर्तव्यम् । मादृशैस्तप.परायणैस्त्वत्र विषये विशेषतोऽवधातव्यम्, नि स्पृहाणा तेषा विषमव्यवहारस्य सर्वथानुचितत्वात् । ( चित्रभानुस्तु-'बन्धुवर्गस्य परस्पर वैरे सति ये तटस्था उभयोरपि समृद्धि स्वयशसे कामयन्ते' न तु क्वचिद्रागो द्वेषो वा येषाम्, तेषा सम एव व्यवहार उचित , इत्यभिप्रायेण योजितवान् ) तथा च परस्पर विरुद्धा अपि दुर्योधनाद्या यूय च मम

दृष्टौ समाना एव यद्यपि, तथापीत्याद्युत्तरेण सम्बन्ध । जन्मवतामित्युक्त्या सकलजन्मधारिणामयं धर्म, अनेनैव जन्मसाफल्यमिति द्योतितम् । तपोधनानामित्युक्त्या तप एवैषा धनम्, न त्वन्यद्धन ते वाञ्छन्ति, ततश्च कस्येच्छया वैषम्य कुर्युरिति सूचितम् ।

अल०—विशेषणस्य, जन्मवताम्, तपोधनानाम् इति विशेष्ययोश्च साभिप्रायत्वात् परिकरपरिकराङ्कुरौ ।

**तथापि निघ्न नृप तावकीनै प्रह्वीकृत मे हृदय गुणौघैः ।**

**वीतस्पृहाणामपि मुक्तिभाजा भवन्ति भव्येषु हि पक्षपाता ॥१२॥**

अ०—तथा अपि ( हे ) नृप ! तावकीनै गुणौघै प्रह्वीकृतम् मे हृदयम् निघ्नम्, (अस्ति) हि वीतस्पृहाणाम् मुक्तिभाजाम् अपि भव्येषु पक्षपाता भवन्ति ।

व्याक०—गुणानाम् ओघै गुणौघै, प्रह्वीकरणकर्तरि तृतीया । अप्रह्व प्रह्व सम्पन्न कृतम्, प्रह्वीकृतम्, च्वि, गतिसमासः । वीता स्पृहा येषा तेषा वीतस्पृहाणाम् । वीतेति एतेः कर्तरि क्त. । मुक्तिं भजन्ते, तेषाम् मुक्तिभाजाम्, "भजो ण्वि" । तावकीनै -तव इमे तावकीना "युष्मदस्मदोरन्यतरस्या खञ् च" इति खञ् प्रत्यय । खस्येनादेश, "तवकममकावेकवचने" इति युष्मदस्तवकादेश । निघ्नम्-निपूर्वाद् हन्तेः "घनर्थे कविधानम्" । भव्येषु-भवन्तीति भव्या, भूधातो "भव्यगेय " इत्यादिना कर्तरि यत्प्रत्ययो निपातित । मुक्तिभाजामिति पक्षपातसम्बन्धे षष्ठी ।

व्याख्या—तथापि-बन्धुषु तुल्यवृत्तेरौचित्येऽपि, हे नृप-राजन् ! तावकीनै - त्वदीयै., गुणानाम्-सत्यार्जवविवेकतितिक्षादीनाम्, ओघैः-समूहै., प्रह्वीकृतम्-एकप्रवणता नीतम्-आवर्जितम्, मे-मम, हृदयम्-अन्त.करणम्, * निघ्नम्-त्वदायत्तम् अस्तीति शेष. । हि-यत, वीतस्पृहाणाम्-इच्छारहितानाम्-विरक्तानाम्, मुक्तिभाजाम्-मुमुक्षूणाम् अपि, भव्येषु साधुषु गुणवत्तरेषु, § पक्षपाता - स्नेहविशेषा, भवन्ति जायन्ते ।

---

* 'अधीना निघ्न आयत्त'—इत्यमर. ।

§ एकतरप्रवृत्तिप्रयोजक आन्तरो भाव पक्ष, तस्य पात —पतनम्—नियतमवस्थानम्—पक्षपात ।

भा०—युधिष्ठिर ! पूर्वोक्तप्रकारेण यद्यपि मम बन्धुषु तुल्यवृत्तिरेवोचिता, तथापि त्वद्‌गुणगणाकृष्ट मम मनस्त्वयि विशेषेणानुरक्तम् । न चात्र मम कोऽपि दोष , न वैतेन मम मुमुक्षुत्वहानि , न वा माध्यस्थ्यक्षति , यतो हि गुणवत्तरेषु मुमुक्षूणामपि पक्षपातो भवत्येवेति प्रकृत्या सिद्धमिदम् । अस्माद्‌दृशै पक्षपातो न क्रियते, अपि तु गुणहेतुक पक्षपात स्वयमेव जायते-इति 'भवन्ति' पदेन व्यञ्जितम् । गुणानामेष स्वभाव , यत्ते सर्वेषामेव चेत आकर्षन्ति – इति ।

अल०—सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यास । तथापि-पदेन सत्यपि प्रतिबन्धके कार्योत्पत्तिरूपा विभावना श्लोकद्वये स्फुटीकृता ।

**सुता न यूय किमु तस्य राज्ञ सुयोधन वा न गुणैरतीता ।**
**यस्त्यक्तवान् व स वृथा बलाद्वा मोह विधत्ते विषयाभिलाष ॥१३॥**

अ०—यूयम् तस्य राज्ञ सुता न किमु (स्थ) ? वा गुणै सुयोधनम् अतीता न (स्थ) ? यो व वृथा त्यक्तवान्, वा स विषयाभिलाष बलाद् मोहम् विधत्ते ।

व्याक०—विषयाणा विषयेषु वा अभिलाषो विषयाभिलाष । विषिण्वन्ति ( इन्द्रियाणि ) इति विषया , पचाद्यच् । अभिलाष इति अभिलष्यतेर्घञ् । त्व च ते ( भीमादय ) चेति यूयम्, "त्यदादिषु यत् पर तच्छिष्यते" इति युष्मच्छब्दैकशेष । 'किमु' इत्यत्र उ इति निपात क्षेपे । सुयोधनम्-युध्यते "भाषाया शासियुधि" इत्यादिना युच् । अतीता -अतिपूर्वाद् एते "गत्यर्थाकर्मक—" इति कर्तरि क्त । व:-शस्प्रत्ययान्तस्य युष्मद: स्थाने वसादेश । त्यक्तवान्-त्यजते क्तवतु । मोहम्-मुह्यतेर्घञ् । गुणैरिति अत्ययनक्रियाकरणे तृतीया । सुयोधनमित्यत्ययनकर्मणि द्वितीया ।

व्याख्या—यूयम्-युधिष्ठिरादय , तस्य राज्ञ -धृतराष्ट्रस्य, सुता -पुत्रा , न किमु स्थ, प्रश्नकाक्वा सुता एव स्थ इत्यर्थ , वा-किं च, गुणै - शान्तिदयादानदाक्षिण्यादिभि:, सुयोधनम्-धृतराष्ट्रस्य ज्येष्ठपुत्रम्, अतीता - अतिक्रान्ता -ततोऽप्यधिका:, किमु न स्थ, स्थ एवेति । य -धृतराष्ट्र , व - युष्मान्, वृथा-कारण विनैव, त्यक्तवान्, राज्यादपसारितवान् । स -प्रसिद्ध , विषयाभिलाष -भोगाभिरुचि , बलाद्वा-*बलादिव, मोहम्-अविवेकम्, विधत्ते-

---

* वा शब्द इवार्थे, 'वा स्याद्विकल्पोपमयोरेवार्थेऽपि समुच्चये' इति विश्व ।

करोति-जनयतीत्यर्थः । चित्रभानुस्तु 'यो व त्यक्तवान् स वृथा-विनवे हेतुम् त्यक्तवान्, यद्वा-स वृथा निष्फल.-व्यर्थजन्मा' इति व्याख्यातवान् । वाशब्दश्च पक्षान्तरे इत्युक्तवान् ।

भा०—राजन्! धृतराष्ट्रेण यद्यूय शत्रुपक्षे निक्षिप्ता, छलेन राज्याद-पसारिताश्च, तस्याह कारण न पश्यामि, परो हि दूरीक्रियते, यूय तु तस्य कनिष्ठभ्रातु पाण्डो पुत्रा -इति धृतराष्ट्रस्यापि पुत्रा एव, बाल्यात् प्रभृति पितृविरहिताना युष्माक पालनभारोऽपि धृतराष्ट्रशिरसीति ततोऽपि सिद्ध पुत्रत्वम् । पुत्रोपेक्षण च सर्वथानुचितम् । यूयमयोग्या स्थ-इत्यपि नोपेक्षा-कारण युज्यते वक्तुम्, दुर्योधनाद्यपेक्षया युष्माक गुणवत्त्वातिशयस्य सर्वलोकप्रसिद्धत्वात्, तथा च धृतराष्ट्रो वृथैव भवतस्त्यक्तवान्, अथवा किमत्र वक्तव्यम्, विषयलोलुपा सर्वथा विवेकशून्या एव भवन्ति । धृतराष्ट्रस्य विषयलोलुपत्वमेव भवता त्यागे हेतु, नान्य कोऽपीति । औरसा पुत्रा अपि स्वभावेनेन्द्रियप्रीतिहेतवो विषयपदेन विवक्षिता इति चित्रभानु । दुर्योधनपद तस्य युद्धादौ पाटव बोधयद् गुणहीनता व्यनक्ति । तस्य राज्ञ इत्युक्तिर्विषयलोलुप स नामग्रहणस्याप्ययोग्य इति व्यासस्य तद्विषये अनर्थ द्योतयति ।

अल०—पूर्वार्धे अत्यागहेत्वो समुच्चय इति समुच्चयालङ्कृति, उत्तरार्धे विषयाभिलाषजन्याविवेकरूपकारणेन सामान्येन त्यागरूप कार्यं विशेषभूत समर्थ्यत इति अर्थान्तरन्यास. ।

*जहातु नैन कथमर्थसिद्धि. सशय्य कर्णादिषु तिष्ठते य· ।
असाधुयोगा हि जयान्तराया प्रमाथिनीना विपदा पदानि ॥ १४॥

अ०—एनम् अर्थसिद्धिः कथम् न जहातु, य सशय्य कर्णादिषु तिष्ठते, हि असाधुयोगा जयान्तराया (च) प्रमाथिनीनाम् विपदाम् पदानि (भवन्ति) ।

---

यथा कश्चिच्चेतन प्रभुर्बलात्कञ्चिद् भृत्य प्रवर्तयति, तथा विषयाभिलाषोऽपि-इति सादृश्यमत्र विवक्षितम् ।

* 'जहाति नैन' इति चित्रभानुसमत पाठ । एवविधमप्येन कथ नाप्यर्थसिद्धिस्त्यजतीत्याश्चर्यम्-इत्यर्थकतया तेन व्याख्यातश्च ।

व्याक०—असाधुभिः असाधूना वा योगा. असाधुयोगा । कर्ण आदि-र्येषा तेषु कर्णादिषु । एनम्-अन्वादेशे इदशब्दस्यैनादेश । सिद्धि.-सि यते क्तिन् । जहातु-" प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च " इति जहाते. प्राप्तकाले लोट् । सशय्य-सपूर्वाच्छेतेः क्त्वा, ल्यप्, " अयङ् यि क्ङिति " इत्यनेन 'अयङ्' आदेशः । तिष्ठतेः-" प्रकाशनस्थेयाख्ययोश्च " इति * स्थेयाख्यायामात्मने-पदम् । प्रमाथिनीनाम्-प्रपूर्वान्मथ्धातोर्णिनिस्ताच्छील्ये । कर्णादिषु अधिकरण-त्वविवक्षया सप्तमी । जयान्तराया , विपदा पदानि, इत्युभे असाधुयोगा इत्यस्य विधेयविशेषणे ।

व्याख्या—एनम्-पूर्वप्रस्तुतम्-अनुचितकारिण धृतराष्ट्रम्, अर्थस्य-प्रयो-जनस्य, सम्पदा वा, सिद्धि , कथम्-केन प्रकारेण, न जहातु-न त्यजतु-त्यजत्येव, तस्य हानिकाल. प्राप्त इत्यर्थ । य -धृतराष्ट्र , सशय्य-विधेयेषु कार्येषु सदिग्ध-कर्तव्यार्थेषु सन्देहे जाते, कर्णादिषु तिष्ठते-आलम्बते, कर्णादीन् निर्णेतृत्वेन आश्रयति, हि-निश्चयेन (वा यत ) असाधुभिः-दुर्जनै , योगाः ससर्गा , ( चित्रभानुस्तु-असाधूना योगाः-उपाया , असत्पुरुषबोधिता उपाया इत्यपि व्याचष्टे ) जयस्य-उत्कर्षस्य, अन्तराया -विघातका , किं च, प्रमथ्नन्तीति प्रमाथिन्य , तासाम् प्रमाथिनीनाम्-विनाशिनीनाम्, विपदाम्-विपत्तीनाम्, † पदानि-स्थानानि, भवन्ति-इति शेष ।

भा०—राजन् युधिष्ठिर ! 'अन्धस्येवान्धलग्नस्य विनिपात पदे पदे' इत्यभियुक्तोक्त्या धृतराष्ट्रस्यार्थहानिसमय प्राप्त एव, यत स विवादास्पदविष-येषु कुटिलमतीना कर्णादीनामेव सम्मतिमाद्रियते। दुर्जनै सह सम्पर्कमात्रमेव जयविघातक विपत्कारण च भवति, तै सह घनिष्ठतामापद्य तदुपरि विश्वासे तु किमु वक्तव्यम् । तथा च कर्णशकुन्यादिपरामर्शस्यैव फल भवता त्याग., न तु साधुजनभीष्मविदुराद्यनुमतोऽय पन्था । आभ्या श्लोकाभ्या परपक्षस्य दुष्टत्वमुक्तम्, तत एव मम तेषु विरक्तिरिति व्यासाभिप्राय ।

---

* तिष्ठते अस्मिन्निति स्थेयो विवादनिर्णेता ।

† पद व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु-इत्यमरः ।

अल०—पूर्वार्धे काव्यलिङ्गम्, उत्तरार्धे सामान्येन विशेषस्य समर्थनादर्थान्तरन्यास ।

**पथश्च्युतायां समितौ रिपूणां धर्म्यां दधानेन धुरं चिराय ।**
**त्वया विपत्स्वप्यविपत्ति रम्यमाविष्कृतं प्रेम परं गुणेषु ॥ १५ ॥**

अ०—रिपूणाम् समितौ पथः च्युतायाम् ( सत्यामपि ) चिराय धर्म्याम् धुरम् दधानेन त्वया गुणेषु विपत्सु अपि अविपत्ति रम्यम् परम् प्रेम आविष्कृतम् ।

व्याक०—न विपत्ति यस्य तद् अविपत्ति । विपत्तिरिति पद्यते. क्तिन्नन्तम् । समयन्ति अस्यामिति समिति , एते. क्तिन् । च्युतायाम्-च्यवते क्त । धर्म्याम्-धर्मादनपेतामिति विग्रहे " धर्मपथ्यर्थन्यायादनपेते " इति धर्मशब्दाद् यत्प्रत्ययः । दधानेन-दधातेः शानच् , ताच्छील्ये चानश् वा । रम्यम्-रमते " पोरदुपधात् " इति यत्प्रत्यय । प्रेम-प्रियस्य भाव इति विग्रहे प्रियशब्दाद् इमनिच्, प्रियस्य प्रादेशः । आविष्कृतम्-" इदुदुपधस्य चाप्रत्ययस्य " इति विसर्गस्य षत्वम् । पथ.-अपादाने पञ्चमी । चिराय-विभक्त्यन्तप्रतिरूपकमव्ययम् । धुरम्-दधाते कर्मणि द्वितीया । गुणेषु-वैषयिकाधारे सप्तमी । समितौ इति, विपत्सु इति च "यस्य च भावेन भावलक्षणम्" इति सतिसप्तम्यौ ।

व्याख्या—रिपूणाम्-शत्रूणाम् , * समितौ-सभायाम्-समूहे, पथ -सन्मार्गात्, च्युतायाम्-भ्रष्टायाम्-पतितायामपि, चिराय-बहुकाल यावद्, धर्म्याम्-धर्मादनपेताम्-धर्मयुताम् , धुरम्-भारम्-दुर्वह व्यापारम् , दधानेन-धारयता, ( तथाशीलेन ) त्वया, गुणेषु-तितिक्षाशान्त्यादिषु-विषये, विपत्सु-आपत्तिषु सतीष्वपि, अविपत्ति-अविनाशि, अत एव रम्यम्-हृदयहारि, परम्-उत्कृष्टम्, प्रेम-स्नेह , आविष्कृतम्-प्रकटितम् । चित्रभानुस्तु ' अविपत्तिरम्यम् ' इत्येक पद मत्वा क्रियाविशेषणत्वेन प्रेमविशेषणत्वेन वा संयोज्य व्याख्यान्तरमप्युक्तवान्-' अविपत्तौ सपत्काल इव, रम्यम्-अदूषितम्-यथा स्यात्तथा-आविष्कृतम्, एव विध प्रेमाविष्कृतमिति वा ।

भा०—युधिष्ठिर ! यद्यपि तव शत्रवो मध्ये सभं स्त्रीग्रहणसाहसादीनि

---

* सभासमितिससद -इत्यमर । अभिन्नमनसाम्, अभिन्नदेशस्थाना च समूह एभिः शब्दैरुच्यते इति चित्रभानु ।

दुष्टकर्माणि कृत्वा धर्ममार्गाद् भ्रष्टा जाता, तथापि त्वं धर्मात् पदमपि नाचल, सर्वं तेषामत्याचारं सोढवान्। तेन त्वया स्पष्टं प्रकटितम्-गुणेष्वेवोत्कृष्टस्ते प्रेमा, न सम्पदादिष्विति। स चायं गुणस्नेह एतावांस्तव प्रबल, यत्तव विपत्तौ सत्यामपि तस्य विपत्तिर्न भवति। 'पथश्च्युतायाम्' इत्युक्त्या तव शत्रव सर्वेऽपि न केवलं सकृद् धर्मं त्यक्तवन्त, अपि तु धर्ममार्गादेव ते भ्रष्टा, तेषां पुनर्धर्मप्राप्तेराशापि नास्तीति द्योतितम्। तथा च 'शठं प्रति शठं कुर्याद्' इति नीतिमपि परित्यज्य धर्मपरेण त्वया गुणा गृहीता-इति मम पक्षपात-स्त्वयि योग्य एवेति। त्वयेत्येकवचनेन त्वद्भ्रातरो भीमाद्या अपि विचलिता, त्वमेक एवाविचलोऽसि इति सूचितमिति चित्रभानु।

अल०—अन्यदोषेणान्यगुणवर्णनादुल्लास, स च युधिष्ठिरमहत्त्वस्य शब्दै साक्षादकथनादस्फुट। विपत्स्वप्यविपत्तीति विरोध। अनुप्रासश्च।

**विधाय विध्वंसमनात्मनीनं शमैकवृत्तेर्भवतश्छलेन।**

**प्रकाशितत्वन्मतिशीलसाराः कृतोपकारा इव विद्विषस्ते ॥ १६ ॥**

अ०—छलेन शमैकवृत्ते भवत अनात्मनीनम् विध्वंसम् विधाय प्रकाशित-त्वन्मतिशीलसारा ते विद्विष कृतोपकारा इव ( सन्ति )।

व्याक०—शमे ( एव ) एका वृत्ति यस्य, तस्य शमैकवृत्ते। सप्तम्य-न्तपूर्वपदो बहुव्रीहि। प्रकाशितः-तव मते शीलस्य च ( द्वन्द्वोत्तर तत्पु० ) सार ( तत्पु० ) यै ( बहु० ) ते प्रकाशितत्वन्मतिशीलसारा। सारशब्दे सृधातो "सृ स्थिरे" इति घञ्। कृत उपकारो यै ते कृतोपकारा। उप-कारशब्दो घञन्तः। आत्मने हितम्-आत्मनीनम्, "आत्मन् विश्वजनभोगो-त्तरपदात् ख"। खस्येनादेशः। न आत्मनीनम्-अनात्मनीनम्। विध्वंसम्-ध्वंसतेर्घञ्। छलेन-करणे तृतीया।

व्याख्या—छलेन-कपटेन-द्यूतादिना, शमे-शान्तावेव, एका-मुख्या, वृत्ति-चित्तव्यापारः, यस्य तथाभूतस्य, कस्याप्यपकारमचिन्तयत, भवत-तव युधि-ष्ठिरस्य, अनात्मनीनम्-स्वस्यैव ( कर्तुरेव ) अहितकरम्, विध्वंसम्-अपकारम्, विधाय-कृत्वा, प्रकाशित प्रकटित, तव, मते-धिय, शीलस्य-सद्वृत्तस्य च सार-स्थिरांशः-प्रकर्ष, यैस्तथोक्ता, ( चित्रभानुस्तु प्रकाशितौ त्वन्मते शील-

सारो यैस्तथाभूता इति विगृह्य जनानामनुद्वेजको धर्माद्यनुगुणो वृत्तिविशेष-शीलम्, सार -स्थैर्यं बल च, तावेतौ तव बुद्धिधर्मौ नैसर्गिकौ, तौ शत्रुभि प्रकाश नीतौ इति व्याचष्टे ) ते तव, विद्विष -शत्रव , कृतः-विहित., उपकार , यैस्तथोक्ता इव सन्ति-तथा सम्भाव्यन्ते इति ।

भा०—तव वृत्ति सदैव शान्तिपरा, एवभूतस्यापि तव यदिद शत्रुभि-रछलमाश्रित्यापकृतन्, तदेतन् तेषा स्वयमेव स्वपादयो कुठाराघात इव विना-शाय सम्पन्नम् । तव तु तेन लाभ एव जात । यथा भूयो भूयो निघर्षण सुरभिचन्दनकाष्टस्य लोकोत्तर सौरभमेव प्रकाशयति, तथैव शत्रुभिर्भृश क्रिय-माणो ऽपकारस्तव बुद्धे सद्वृत्तस्य च प्रकर्षमेव प्रख्यापयति स्म, इति मन्ये शत्रुकृतोयमपकारोपि तवोपकारायैव सवृत्त । तैरपकारबुद्धयैव त्वय्यत्याचार कृत , पर त्वद्गुणास्तेन ख्यातिं गता इति उपकाररूपेण त्वयि परिणत । गुणख्यातिरेव जगति जनाना परमो लाभ इति । तेषा च दुरात्मता ख्याति गतेति तेषा विनाशोऽयमेव ।

अल०—अपकारस्य गुणख्यापकत्वेन हेतुना उपकारत्व सभावितमिति उत्प्रेक्षा । चित्रभानुस्तु इवशब्दोऽवास्तवत्वं वदन् न तेषामुपकारबुद्धया आच-रणमिति द्योतयतीत्याह । तद्रीत्या अपकार कुर्वद्भिरुपकार साधित इति असगतिरलङ्कार । ‘ अन्यत्कर्तुं प्रवृत्तस्य तद्विरुद्धकृतिस्तथा ’ इति कुवलया-नन्दे तल्लक्षणात् । गुणवत्सु परैः प्रयुक्तोऽपकारोप्युपकारतामेतीति अहो गुणाना माहात्म्यमिति प्राधान्येन व्यङ्ग्यम् ।

**लभ्या धरित्री तव विक्रमेण ज्यायाश्च वीर्यास्त्रबलैर्विपक्ष. ।**
**अत प्रकर्षाय विधिर्विधेय प्रकर्षतन्त्रा हि रणे जयश्री ॥ १७ ॥**

अ०—तव विक्रमेण धरित्री लभ्या, च विपक्ष वीर्यास्त्रबलै ज्यायान् (अस्ति ) अत प्रकर्षाय विधि विधेय , हि रणे जयश्री प्रकर्षतन्त्रा ( भवति )।

व्याक०—विरुद्ध पक्षो विपक्ष , प्रादिसमास । ( अभिप्राय , सहाया-दिसमूह , सिद्धान्तश्च पक्षशब्देनोच्यते, ते यत्र प्रतिकूला , ते विपक्षा शत्रव इति चित्रभानु ) वीर्यं च अस्त्राणि च बलानि च वीर्यास्त्रबलानि, तै , हेतौ तृतीया, वीर्यशब्दे वीरे साधु इति विग्रहे “ तत्र साधु ” इति यत्, वीर्यते

ऽनेनेति विग्रहे वीरयते " अचो यत् " इति वा । प्रकर्ष तन्त्र यस्मिन् सा प्रकर्षतन्त्रा । प्रकर्ष इति कृष्धातोर्घञ् । विक्रमेण-क्रामतेर्घञ्, "नोदात्तोपदेशस्य" इति वृद्धिनिषेधः। करणे तृतीया । लभ्या-लभते " पोरदुपधात् " इति शक्यार्थे यत् । ज्यायान्-अतिशयेन प्रशस्य इति विग्रहे प्रशस्यशब्दादीयसुन्, " ज्यश्च " इति प्रशस्यस्य ज्यादेशः । विधिः-दधातेः कि । विधेयः-दधाते - " अचो यत् " । रणे रणन्त्यस्मिन्निति रणते " वशिरण्योरुपसंख्यानम् " इत्यप् । तव-"कृत्याना कर्तरि वा" इति लभते. कर्तरि षष्ठी । प्रकर्षाय-तादर्थ्ये चतुर्थी ।

व्याख्या—तव-त्वया युधिष्ठिरेण, ( कर्त्रा ) * विक्रमेण-पराक्रमेण, धरित्री-पृथ्वी, लभ्या-लब्धु शक्या, च-किं च ( हेतुसमुच्चयाय चकारः ) विपक्ष.-शत्रुपक्षः, वीर्येण-† शौर्येण, ( विपुलतमेन ‡ व्यवसायेन इति चित्रभानु ) अस्त्रैः-मन्त्रप्रयोज्यै. आग्नेयादिभि बाणादिविशेषै, बलै. सैन्यैश्च, ज्यायान्-त्वदपेक्षयाधिकतरः, अस्तीति शेष । अतः-अस्मात् कारणद्वयाद्, धरित्र्या विक्रमैकलभ्यत्वात्, शत्रोश्च ज्यायस्त्वात्, प्रकर्षाय-अतिशयाय-शत्रुपक्षापेक्षया स्वपक्षस्य आधिक्याय, § विधिः-उपाय, विधेय -अनुष्ठेय. । हि यत , रणे-संग्रामे, जयश्री -जयलक्ष्मी , प्रकर्ष.-आधिक्यम्, ¶ तन्त्रम्-प्रधानम्-प्रयोजकम्, यस्या., तथोक्ता, भवति इति शेष. ।

भा०—व्यासो वक्ति-राजन् ! कीर्तिस्त्वया साधु लब्धा, किन्तु भूमिरपि ( राज्यमपि ) लब्धव्यैव, न च दुर्योधन कथमपि स्वय राज्य दास्यति, ततश्च त्वया पराक्रमेणैव राज्यमधिगन्तु शक्यम्, नेतरथा । किन्तु तव शत्रुपक्षे सन्ति बहवोऽतिवीरा , व्यवसायः अस्त्राणि सैन्यानि च तत्रातिप्रचुराणि, अतस्त्वया तथा यतनीयम्, यथा त्व शौर्यादिषु शत्रोरपेक्षयाधिक स्या., संग्रामे हि जयलक्ष्मी. प्रबलमेव वृणुते न दुर्बलम् । द्यूतच्छलादिभिर्दुर्बलोऽपि

---

* शस्त्रास्त्रप्रयोगप्रधान उत्साहविशेषो विक्रम-इति चित्रभानु ।

† वीर्य बले प्रभावे च—इत्यमरः । ‡—उत्साहोऽध्यवसाय स्याद् स वीर्यमतिशक्तिभाक्—इत्यमरः । §—सकरणेतिकर्तव्या विशिष्टफला क्रिया विधिरिति चित्रभानु । ¶—तन्त्र प्रधाने सिद्धान्ते—इत्यमरः ।

जय कदाचिल्लभेत, रणे तु वलप्रकर्षेणैव जय इति रणशब्दोपादानम् । तत्रापि कदाचिद्दैवेन दुर्बलाना जय स्यात्, पर जयश्रीः-प्रशस्यो जयस्तु उत्कर्षायत्त एवेति श्रीशब्दोपादानम् ।

अल०—प्रकर्षोपायानुष्ठानस्य हेतुभ्या पूर्वार्धे समर्थनात् काव्यलिङ्गम्, अन्ते च सामान्येन समर्थनादर्थान्तरन्यास । विक्रमेणैव लभ्या नेतरथेति व्यङ्ग्या परिसख्या चित्रभानुराह । जयश्रीरिति स्त्रीत्वेनोपादान पतिंवरात्वारोप व्यनक्ति, पतिंवरा यथा प्रकृष्टमेव वृणुते, तथा जयश्रीरपीति सादृश्यम् ।

**त्रिःसप्तकृत्वो जगतीपतीना हन्ता गुरुर्यस्य स जामदग्न्य ।**
**वीर्यावधूत स्म तदा विवेद प्रकर्षमाधारवशं गुणानाम् ॥ १८ ॥**

अ०—त्रि.सप्तकृत्व: जगतीपतीनाम् हन्ता गुरु स जामदग्न्यः यस्य वीर्यावधूत (सन्) तदा गुणानाम् प्रकर्षम् आधारवशम् विवेद स्म ।

व्याक०—त्रिवारामिति त्रि, क्रियाभ्यावृत्तिगणनाया त्रिशब्दाद् "द्वित्रिचतुर्भ्य सुच्" इति सुच्प्रत्यय । त्रि· (आवृत्ता) सप्त त्रि सप्त, सुप्सुपेति समास । त्रि सप्तवारम् इति त्रि सप्तकृत्व, "सख्याया क्रियाभ्यावृत्तिगणने कृत्वसुच्" इति कृत्वसुच्प्रत्यय । तद्धितान्तमव्ययमिदम् । वीर्येण अवधूत वीर्यावधूत । यद्यपि वीर्येत्यस्य यस्येत्यनेन सम्बन्ध इत्यसामर्थ्यात् समासो नोचित, तथापि देवदत्तस्य गुरुकुलमित्यादिवत् समासो वोध्य । अवधूतशब्दे धूनोते क्त । आधारस्य वशम्-आधारवशम् । जामदग्न्य -जमदग्नेर्गोत्रापत्यमिति जमदग्निशब्दाद् "गर्गादिभ्यो यञ्" । विवेद-वेत्तेर्लिट्, * स्मेति पादपूरणार्थम्, अथवा विपूर्वाद् वेत्ते स्मयोगे "लट् स्मे" इति भूते लट्, "विदो लटो वा" इति णलादेश । प्रकर्षमिति वेदनकर्मणि द्वितीया, आधारवशमिति प्रकर्षस्य विधेयविशेषणम् । स इति जामदग्न्यस्य विशेषण प्रसिद्धार्थकम्, तेन † यच्छब्दोपादान नापेक्ष्यते ।

व्याख्या—त्रि सप्तकृत्वः-त्रिगुणितान् सप्तवारान्-एकविंशतिं वारान् इति यावद्, जगत्या -पृथिव्या, पतीनाम्-स्वामिनाम्-राज्ञाम्, हन्ता-नाशक·, गुरुः-

* स्म पादपूरणे भूते च—इति विश्व । † 'प्रक्रान्तप्रसिद्धानुभूतार्थविषयस्तच्छब्दो यच्छब्दोपादान नापेक्षते'—इति काव्यप्रकाशे मम्मटभट्टाः ।

(भीष्मस्य) धनुर्वेदोपदेष्टा, सः-प्रसिद्ध , जामदग्न्य -परशुराम ,यस्य-स्वशिष्यस्य भीष्मस्य, वीर्येण-बलेन प्रभावेण वा, अवधूत.-पराजित ,' सन्, तदा-पराजय-प्राप्तिसमये, गुणानाम् विद्याशौर्यादीनाम् , प्रकर्षम्-उत्कर्षम्, आधारवशम्-आश्रयाधीनम्-विवेद स्म जानाति स्म । स कस्य मनो ·· न कुर्यादित्युत्तरेण सम्बन्ध । युग्मकमिदम् । चित्रभानुस्तु-यस्य जगतीपतीना हन्ता परशुरामो गुरुः, ( अयमेको भीष्मोत्कर्षे हेतु ) स च यस्य वीर्यावधूत इत्यादि भिन्न-वाक्यत्वेन व्याचष्टे ।

भा०—पूर्वस्मिन् पद्ये उक्त शत्रुपक्षस्याधिकत्वमेव वर्णयति व्यासः, तत्र युग्मकेन भीष्म तावत् प्रस्तौति-राजन् ! भीष्मस्यैव प्रभाव तावदालोचय-परशुराम खल्वेकविंशतिं वारान् भुव क्षत्रियशून्या विदधे, स एव भीष्म धनुर्वेद-मध्यापयामास । परमम्बिकानाम्न्या कन्याया विवाहप्रसङ्गे तत्पक्षमाश्रित्य युध्यमान स्वशिष्याद् भीष्मात् पराजय प्राप । एव स्वदत्ताया एवास्त्रविद्याया स्वशिष्ये भीष्मे स्वस्मादपि प्रकर्ष विज्ञाय अनुबभूव-यद् गुणाना प्रकर्ष पात्राधीन । विशिष्टे पात्रे न्यस्ता गुणा विशेष गच्छन्ति, यन्मद्विद्या, मच्छिक्षिता प्रयोगलाघवादयश्च भीष्मे मदपेक्षयापि प्रकर्ष गता इति । न केवल राज्ञाम्, अपि तु जगत्या -विस्तृतस्य भूमण्डलस्य पतीनाम् , न केवल जेता, किन्तु हन्ता, तदपि यदृच्छया नैकवारम-अपि तु त्रि सप्तकृत्व·-इति परशुरामस्य परमुत्कर्ष व्यक्तीकुर्वन्ति पदानीत्यादि चित्रभानु ।

अलं०—भीष्मशौर्यातिशये प्रस्तुते तत्कार्यस्य गुरुपराजयस्योपवर्णनाद प्रस्तुतप्रशसा । भीष्मोत्कर्षसिद्धये परशुरामोत्कर्षवर्णनम्-इत्युदात्तम् । वीर्यावधूतो विवेद स्मेत्यादिभङ्ग्यन्तरेण ' गुरोरपेक्षयाप्यधिको भीष्म ' इत्यर्थस्य निवेदनात् पर्यायोक्त च ।

**यस्मिन्ननैश्वर्यकृतव्यलीक पराभव प्राप्त इवान्तकोऽपि ।**
**धुन्वन् धनु कस्य रणे न कुर्यान् मनो भयैकप्रवण स भीष्म ॥१६॥**

अ०—यस्मिन् अनैश्वर्यकृतव्यलीक अन्तक अपि पराभवम् प्राप्तइव, स भीष्मः रणे धनु. धुन्वन् कस्य मन भयैकप्रवणम् न कुर्यात् ।

व्याक०—ईश्वरस्य भाव ऐश्वर्यम्, ईष्टे. " स्थेशभासपिसकसो वरच् "

इति वराचि ईश्वर, ततो भावे ष्यञ्, न ऐश्वर्यम् अनैश्वर्यम्, अथवा पूर्वं नञ्समास, तदनु अनीश्वरशब्दात् ष्यञ्, "नञ शुचीश्वरक्षेत्रकुशलनिपुणानाम्" इति पाक्षिक. पूर्वपदे वृद्धयभाव । तेन कृत व्यलीक यस्य स - अनैश्वर्यकृतव्यलीक । एकस्मिन् प्रवणम्-एक प्रवणम्, भये एकप्रवण भयेकप्रवणम् । यद्यपि एकमिति भयविशेषणम्, तथापि शिवभागवत इत्यादिवत् प्रवणशब्देन पूर्वं तस्य समास इति मल्लिनाथ । भयशब्देन तस्य समासे तु एकभयमिति स्यात्, "पूर्वकालैकसर्व-" इत्यादिना समासे एकशब्दस्य पूर्वनिपातप्रसङ्गात् । "विशेषण विशेष्येण" इति समासः, न तु "पूर्वकालैक-" इतीति चित्रभानु । पर पूर्वकालैकेत्यादे. पूर्वनिपातनियमार्थत्वे कथ तत्सम्भवेदिति स एव वेत्ति । मनसो विधेयविशेषणमिदम् । अन्त करोति-अन्तयति, अन्तयतीत्यन्तक, अन्तशब्दात् "तत् करोति तदाचष्टे" इति णिचि, तदन्ताद् ण्वुल् । पराभवम्-भवते "ऋदोरप्" । भीष्म -"भीमादयोऽपादाने" इति बिभेतेर्मन्, पुगागमश्च । धुन्वन्-धुनोतेर्लक्षणे शतृप्रत्यय । यस्मिन्-विषयसप्तमी, यस्मिन् सति कृतव्यलीक. अन्तक -इति सति सप्तमी वेति चित्रभानु ।

व्याख्या—यस्मिन्-भीष्मविषये, अनैश्वर्येण-असामर्थ्येन, कृतम्, *व्यलीकम्-वैलक्ष्यम् लज्जा, (अप्रियमिति चित्रभानु) यस्य तादृश, अन्तक - यमराजोऽपि, पराभवम्-तिरस्कारम्, प्राप्तश्च-प्राप्त सम्भाव्यते, स.-प्रक्रान्त, भीष्म, रणे-सग्रामे, धनु -कार्मुकम्, धुन्वन्-कम्पयन्-आरोपयन्-अधिज्यं कुर्वन्, कस्य, मन -चित्तम्, भये-भीतौ, एकप्रवणम्-अनन्यरूपेण सलग्नम्-भीतिग्रस्तम्, न कुर्याद्-न विदधीत, सर्वस्यापि मनासि भयव्यस्तानि कुर्यादित्यर्थः ।

भा०—अन्येषां मृत्युर्यमाधीन, पर †स्वच्छन्दमृत्युतया भीष्मस्य मृत्यु-

---

* दु खे वैलक्ष्ये व्यलीकम्-इति यादव । व्यलीकमप्रियाकार्यवैलक्ष्येष्वपि पीडने-इति विश्व ।

† पित्रा भीष्माय स्वच्छन्दमृत्युता वरो दत्तः, तत एव बाणशय्यामधिश-

स्तदधीनो नास्ति, अतस्तद्विषये यमोऽपि पराभूत इति तस्यापि लज्जा समाव्यते । तथा च यत्र यमपराक्रमोऽपि कुण्ठितो भवति, स भीष्मो रणभूमौ यदा धनुरास्फालयति, तदा कस्य चेतसि भय न जायेत, सर्वेऽपि भीष्मस्य शरासनारोपणमात्रेण भीता भवन्ति । ततश्च तेन सह युद्धे न कस्यापि सामर्थ्यम् । कथ स दुर्योधनपक्षपाती भवद्भिर्जीयेत ।

अल०—वरप्राप्तिजनितासामर्थ्ये पराभवोत्प्रेक्षणादुत्प्रेक्षा । इह ' अनैश्वर्यम् ' हेतु , व्यलीकम्, पराभवप्राप्तिश्चेत्युभय तु उत्प्रेक्ष्यम्, पर व्यलीकस्य अनैश्वर्येण समासं कृत्वा हेतुगर्भ एव तन्निक्षिप्त कविनेति विधेयाविमर्शो दोषः। अन्तकोऽपि पराभव प्राप्त., किमन्ये-इति काव्यार्थापत्ति । धनुर्धूननमात्रेण भयकथनादतिशयोक्ति । इह भीष्मस्यासाधारणोत्कर्ष एव व्यङ्ग्य , न तु भयानको रस , भयस्य स्थायिन स्वशब्देनोपादानाद्, अनुभावाद्यदर्शनाद्, उपायानुष्ठान एव व्यासतात्पर्यम्, न तु भयोत्पादन इति भयस्य गौणत्वाच्च । न च भीष्मनिष्ठो वीरो रौद्रो वा रसोऽत्र प्रधानम्, विवक्षितत्वाभावात्, तस्येह प्रतिभटत्वेनोपक्षेपात् । नापि वीरस्य विभावतया भीष्मस्योपस्थिति., इह तदतिशयप्रख्यापनस्यैवेष्टत्वाद्, वीरे प्रतिभटस्य स्वापेक्षया उत्कर्षाप्रतीते , वीरभयानकयोर्विरोधाच्च । नापि चिन्ताया भावा व्यङ्ग्या., व्यासे तेषामनौचित्यात्, युधिष्ठिरे तदुत्पादनस्य प्राधान्येनेष्टत्वाभावाच्चेति ।

सृजन्तमाजाविषुसहतीर्व सहेत कोपज्वलित गुरु क ।
परिस्फुरल्लोलशिखाग्रजिह्व जगज्जिघत्सन्तमिवान्तवन्हिम् ॥२०॥

अ०—आजौ इषुसहती सृजन्तम् कोपज्वलितम् परिस्फुरल्लोलशिखाग्रजिह्वम् जगद् जिघत्सन्तम् अन्तवन्हिमिव (स्थितम्) गुरुम् व (मध्ये) क सहेत ।

व्याक०—कोपेन ज्वलित कोपज्वलितम् । "कर्तृकरणे कृता बहुलम्" । परिस्फुरन्ति लोलानि शिखानाम् अग्राणि ( ष० तत्पु० ) एव जिह्वा यस्य

---

यितो भीष्मो यथेच्छमुदगयने प्राणास्तत्याजेति तस्य स्वेच्छाधीनमरणकथा महाभारतादनुसन्धेया ।

* ' सहतीर्वा ' इति चित्रभानुधृतः पाठः । वाशब्दः समुच्चये, तेन गुरुपुत्रोऽश्वत्थामापि बोध्यते—इति तद्व्याख्यानम् ।

त परिस्फुरल्लोलशिखाग्रजिह्वम् । तत्पुरुषगर्भो वहुव्रीहि । अन्त वह्निम् अन्तवह्निम् । अन्तशब्दे 'तत्करोति' णिजन्तात् पचाद्यच् । अथवा अन्तस्य-( प्रलयकालस्य ) वह्निम् अन्तवह्निम् । सहतिशब्दे हन्ते क्तिन् । जिघत्सन्तम्-अत्तेरिच्छार्थे सन्, "लुङ्सनोर्घस्लृ" इत्यदो घस्लादेश । सन्नन्ताच्छतृप्रत्यय । आजि -"इणजादिभ्य " इति अजेरिण् । वः-निर्धारणे षष्ठी, "वहुवचनस्य वस्नसौ" इति युष्माकमिति पदस्य वसादेश । सहेत-"शकि लिङ् च" इति शक्यार्थे लिङ् ।

व्याख्या—*आजौ-सग्रामे, †इषूणाम्-वाणानाम्, सहती -समूहान्, सृजन्तम्-वर्षन्तम्-मुञ्चन्तम्, ( निर्मिमाण वा-इति चित्रभानुः, तेनास्त्रप्रयोगो वोध्यते, अस्त्रै सहस्रशो वाणाना युगपदुत्पादनात् ) कोपेन-क्रोधेन, ज्वलितम्-प्रदीप्तम्-कोपाविष्टम्, परिस्फुरन्ति-परित प्रसारीणि, दीप्यमानानि वा, लोलानि-चञ्चलानि, ‡शिखानाम्-ज्वालानाम्, अग्राणि-अग्रभागा एव, जिह्वा - यस्य तथाभूतम्, जगत्-ससारम्, जिघत्सन्तम्-अत्तुमिच्छन्तम्-भस्मसात् कर्तुकामम्, अन्तवह्निमिव-प्रलयकालाग्निमिव, स्थितम्, गुरुम्-द्रोणाचार्यम्, व -युष्माक मध्ये, क -कतम , सहेत-सोढुम्-तत्पराक्रमकृती मर्षयितु निवारयितु वा शक्नुयात् । न कोपीत्यर्थ । गुरो पराक्रमकर्मणा सहनकर्मत्वाभावो गुरावारोपित इति चित्रभानुः ।

भा०—युधिष्ठिर ! युष्मासु क एतादृश· शूरो यो रणभूमिमवतीर्णस्य अस्त्रप्रयोगै शरवर्षैश्च शत्रूनाच्छादयतो निरतिशयक्रुद्धस्य द्रोणाचार्यस्य समुखीन स्यात्, स हि तदानीं त्रिभुवन भस्मसात्कर्तुमुद्यतो ज्वालारूपाः स्वजिह्वा प्रसारयन् कालानल इव सर्वथा दुरभिभवो युष्माकम् ।

अल०—उपमालङ्कार. । अन्तवह्नेर्द्रोणस्य चोपमानोपमेयभावः । तेज प्रकर्षहेतुकमसह्यत्व समानो धर्म । वह्निज्वालाना, मोचनकाले द्रोणसमीपे

---

* 'आजि स्त्री समभूमौ सग्रामे'—इति मेदिनी ।

† 'पत्री रोप इषुर्द्वयो.'—इति वाणनामस्वमर ।

‡ 'शिखा शाखावर्हिचूडालाङ्गलिक्याग्रमात्रके । चूडामात्रे शिफाया च ज्वालाया प्रपदेपि च'—इति मेदिनी ।

भासमानानां दीप्तिमतीनामस्त्रसहतीनां च बिम्बप्रतिबिम्बभावः, वह्नो जगज्जिघत्सायां, द्रोणे कोपस्य च वस्तुप्रतिवस्तुभाव इति । यद्वा-द्रोणस्तदा तादृशो वह्निरिव सभाव्यत इत्युत्प्रेक्षास्तु ।

**निरीक्ष्य सरम्भनिरस्तधैर्यं राधेयमाराधितजामदग्न्यम् ।**
**असस्तुतेषु प्रसभं भयेषु जायेत मृत्योरपि पक्षपातः ॥२१॥**

अ०—आराधितजामदग्न्यम् राधेयम् सरम्भनिरस्तधैर्यम् निरीक्ष्य मृत्योः अपि असस्तुतेषु भयेषु प्रसभम् पक्षपात जायेत ।

व्याक०—आराधितो जामदग्न्यो येन तम् आराधितजामदग्न्यम्, आराधितामिति णिजन्ताद् राधयते क्त । सरम्भेण निरस्तं धैर्यं येन यस्य वा, त संरम्भनिरस्तधैर्यम् । सरम्भेण-इति कर्तरि करणे वा तृतीया । सरम्भशब्दे-रभतेर्घञि "रभेरशब्लिटो" इति नुमागम । निरस्तमित्यस्यते-र्निष्ठा । धीरस्य भावो धैर्यम्-धीरशब्दाद् भावे ष्यञ् । न सस्तुतेषु असस्तुतेषु, स्तौते क्त । राधेयम्-राधाया अपत्यमिति राधाशब्दात् "स्त्रीभ्यो ढक्" । निरीक्ष्य-ईक्षते क्त्वा, ल्यप् । जायेत-जनेर्लिङ्, सभावनायाम् । निरीक्षणस्य जनिक्रियापेक्षया समानकर्तृकत्वाभावेऽपि पक्षपातक्रियया तत्सभवान्निरीक्ष्येति ल्यप् समर्थनीय इति व्यक्तिविवेककार । घञन्तस्य पातशब्दस्य द्रव्यवद्भाव-प्रतिपादकत्वेऽपि विशेषणत्वेन क्रियाप्रतीतेरनपायात् ।

व्याख्या—आराधित -धनुर्वेदप्राप्तये शुश्रूषित, जामदग्न्य -परशुरामः, येन तम्, राधेयम्-राधासुतम्-कर्णम्, सरम्भेण-आवेशेन-कोपेन, निरस्तम्-त्यक्तम् त्याजित वा धैर्यम्-निर्विकारचित्तत्व येन यस्य वा तादृशम्, ( सरम्भ कर्ता धैर्यं त्याजयति, वा सरम्भेण करणेन कर्ण स्वय धैर्यं त्यजति, वा सरम्भेण परेषा प्रतिभटाना धैर्यं स त्याजयति इति तथाभूतम् ) निरीक्ष्य-अवलोक्य, मृत्योः-यमस्यापि, असस्तुतेषु-कदाचिदप्यननुभूतेषु, भयेषु-भीतिषु, प्रसभम्-हठात्, पक्षपात -परिचयः-अनुभव, जायेत-भवेत्, किमुतान्येषाम् ।

भा०—य. खलु कोपाटोपमात्रेण महामहतो धीरानप्यधीरयति, ( यद्वा धीरोऽपि य कोपमाश्रित्य सग्रामे धैर्यं जहाति ) भार्गव परशुरामो य धनुर्वेदमध्यापयति स्म, त वीर कर्णं सग्रामे युध्यमानं दृष्ट्वा सर्वलोकभयङ्करस्य

मृत्योरपि हृदि नूनम् अननुभूतपूर्वं भयमुत्पतस्यत इति सभाव्यते । आराधितेत्युक्त्या देववदाराधनप्रसन्नेन परशुरामेण सर्वोऽप्यस्त्रग्रामस्तस्मै दत्त इति प्रतीयते-इत्यादि चित्रभानु । इह पूर्वं 'वीर्यास्त्रबलैर्विपत्तो ज्यायानित्यु-पन्यस्तम्, तदनुसारेणैव तद्विवरणे भीष्मे वीर्यस्य, द्रोणे अस्त्राणाम्, कर्णे च बलस्यातिशयो विवृत इत्यपि चित्रभानुराह ।

अल०—कैमुत्येनार्थप्रतिपादनात् काव्यार्थापत्तिरत्रालङ्कारो व्यङ्ग्य• । मृत्यौ भयस्यासम्बन्धेऽपि सम्बन्धप्रतिपादनात्सम्बन्धातिशयोक्तिः ।

**यया समासादितसाधनेन सुदुश्चरामाचरता तपस्याम् ।**
**एते दुराप समवाप्य वीर्यमुन्मूलितार• कपिकेतनेन ॥२२॥**

अ०—यया सुदुश्चराम् तपस्याम् आचरता समासादितसाधनेन कपिकेतनेन दुरापम् वीर्यम् समवाप्य एते उन्मूलितारः ।

व्याक०—समासादित साधन येन, तेन समासादितसाधनेन । समासादितमिति सादयतेश्चौरादिकात् क्तः । कपिरिवेति कपि, "इवे प्रतिकृतौ" इति कन्, तस्य *लोप• । कपि• केतने यस्य तेन कपिकेतनेन, कर्तरि तृतीया, केतनशब्दे केतयतेर्ल्युट् । सुदुश्चराम्-चरते खल् । तपस्याम्-तप•शब्दात् "कर्मणो रोमन्थतपोभ्या वर्तिचरो" इति क्यङ्, "अ प्रत्ययात्" इति स्त्रियामप्रत्यय, टाप् । दुरापम्-समवाप्य, उभयत्र क्रमश आप्नोते• खल्, क्त्वाल्यपौ च। उन्मूलितार-णिजन्ताद् उन्मूलयते• कर्मणि लुट्, चिण्वदिट्, तस्यासिद्धत्वाण्णिलोप । यया-करणे तृतीया, एते-उन्मूलनकर्मणि प्रथमा ।

व्याख्या—यया-विद्यया, (करणभूतया) या विद्यामालम्ब्य, सुदुश्चराम्-अतिकठिनाम्, तपस्याम्-तपश्चर्याम्, आचरता-अनुतिष्ठता, ( आदरेण निर्वर्तयता, नूतन भाव प्रापयतेति चित्रभानु ) समासादितम्-प्राप्तम्, साधनम्-पाशुपताद्यस्त्ररूपमुपकरणम्, येन तादृशेन, कपिः-हनुमान्, † केतने ध्वजे, यस्य तेन, अर्जुनेन, दुरापम्-अन्यैर्दुर्लभम्, वीर्यम्-प्रभावम्, समवाप्य-

* 'अर्चासु पूजनार्हासु चित्रकर्मध्वजेषु च, इवे प्रतिकृतौ लोप कनो देवपथादिषु'—इति तत्त्वबोधिनीकार• ।

† केतन ध्वजमस्त्रियाम्—इत्यमर ।

अधिगम्य, एते-पूर्वोक्ताः, भीष्मादयः, उन्मूलितारः-नाशयिष्यन्ते-ता विद्यामित्याद्युत्तरेणान्वयः । चित्रभानुस्तु यया-विद्यया, समासादितानि-प्राप्तानि, साधनानि-तपश्चर्योपकरणानि शमदमादीनि, तदुपयोगिशक्तिविशेषो वा येन, तथाभूतेन, तपस्यामाचरता दुराप वीर्यम्-पाशुपताद्यस्त्ररूपमवाप्येति व्याचष्टे । उत्तरश्लोकेनास्य सम्बन्ध इति द्वयोर्भाव एकत्रैव स्फुटीकरिष्यते ।

**महत्त्वयोगाय महामहिम्नामाराधनीं तां नृप देवतानाम् ।**
**दातुं प्रदानोचित भूरिधाम्नीमुपागतः सिद्धिमिवास्मि विद्याम् ॥२३॥**

अ०—(हे) प्रदानोचित ! नृप ! महामहिम्नाम् देवतानाम् आराधनीम् भूरिधाम्नीम् ताम् विद्याम् सिद्धिम् इव महत्त्वयोगाय दातुम् (अहम्) उपागतः अस्मि ।

व्याक०—प्रदानस्योचित प्रदानोचित, सम्बोधने सुलोपः । महान् महिमा येषां ता महामहिमानः, तासाम्, कर्मणि षष्ठी । "मनः" इति ङीब्निषेधः । महिमशब्दे-महच्छब्दाद् भावे इमनिच्प्रत्ययः । भूरि धाम यस्याः ता भूरिधाम्नीम्, "अन उपधालोपिनोऽन्यतरस्याम्" इति विकल्पेन ङीप् । आराधनीम्-आराध्यते अनयेति राध्नोतेः ल्युट्, टित्त्वात् ङीप् । विद्याम्-'विदन्त्यनया' इति विग्रहे "संज्ञायां समजनिषद॰ ॰ " इत्यादिना क्यप्, महत्त्वयोगायेति तादर्थ्ये चतुर्थी ।

व्याख्या—हे प्रदानोचित-दातुं योग्य ! विद्यादानपात्र ! नृप-राजन् ! युधिष्ठिर ! महान् महिमा-महत्त्वं यासां तथाभूतानाम्, महानुभावानाम्, देवतानाम्-इन्द्रादीनाम्, आराधनीम्-प्रसादनसाधनीभूताम्, भूरि-बहु, *धाम-प्रभावः, (दोषसंहारगुणाधानादिरूपः) यस्यास्तादृशीम्, ताम्-(यच्छब्देन) पूर्वोक्ताम्, † विद्याम्-जप्यमन्त्ररूपाम्, सिद्धिमिव-साक्षात् फलसिद्धिमिव सम्भावनीयाम्, महत्त्वयोगाय-प्रकर्षलाभाय, दातुम्-वितरीतुम्, अहम्, उपा-

---

* धाम देशे गृहे रश्मौ स्थाने जन्मप्रभावयोः—इति विश्वः ।

† चित्तवृत्तिप्रवाहरूपा उपासना उपनिषत्सु विद्यापदेन व्यवह्रियते । मन्त्रशास्त्रे तु तत्तद्देवतोपासनासाधनानि मन्त्रा एव विद्या इति कथ्यन्ते । मन्त्रशास्त्रानुसार्ययमत्र निर्देशः ।

गत प्राप्त, अस्ति । अत्र यद्यप्यर्जुनाय विद्या वितरिष्यत इति तत्कृते एव 'प्रदानोचित' इति कथन युज्यते, तथापि युधिष्ठिरस्य शत्रुपराजयराज्यप्राप्तिरूपफललाभाय तद्दानमिति तस्यैव प्रदानोचितत्व व्यवहृतम् ।

भा०—राजन् ! युधिष्ठिर ! नाह भीष्मादिवर्णनेन त्वा भीषयितुमिच्छामि, न वा तव युद्धसाहसमपनेतुमत्रागतोऽस्मि, अपि तु युद्धे य. प्रकर्षोऽपेक्ष्यते, तल्लाभार्थमह त्वद्भ्रात्रेऽर्जुनायोपासनापद्धतिसहित मन्त्र प्रदास्यामि, तेनास्य साधनशक्ति प्रादुर्भविष्यति, तयैव पद्धत्या तेनैव च मन्त्रेणाय महाप्रभावा इन्द्राद्या देवता आराधयिष्यति, तपश्चातिकठिनम् ( शीतोष्णवर्षक्षुत्पिपासादिसहनरूपम् ) करिष्यति । ततश्च देवताप्रसादेन मनुष्यदुर्लभत्वादृश प्रभाव, तादृशानामस्त्राणा लाभश्चास्य भविष्यति, येनाय भीष्मादीनपि निहत्य जय प्राप्स्यतीति मत्प्रत्ता विद्येय साक्षात् सिद्धिरेव त्वया सम्भावनीया । अस्या प्राप्ताया न सिद्धिर्विदूरे-इति ।

अल०—सिद्धिदाया विद्याया तज्जन्यसिद्धित्वसम्भावनादुत्प्रेक्षा । अनया च विद्यायाः सद्य. फलदातृत्वममोघत्व च व्यज्यते । बहूना वाक्यानामर्थोऽत्र सङ्क्षिप्याभिहित इति प्राचीनाभिमत ओजोगुणोऽत्र ।

**इत्युक्तवन्त व्रज साधयेति प्रमाणयन् वाक्यमजातशत्रो ।**
**प्रसेदिवास तमुपाससाद वसन्निवान्ते विनयेन जिष्णु. ॥२४॥**

अ०—इति उक्तवन्तम् प्रसेदिवासम् तम् जिष्णु 'व्रज' 'साधय' इति अजातशत्रो वाक्यम् प्रमाणयन् अन्ते वसन् इव विनयेन उपाससाद ।

व्या०—न जाता शत्रवो यस्य * तस्याजातशत्रो । उक्तवन्तम्-ब्रुवे क्तवतु । प्रससाद इति प्रसेदिवान्, तम् । सीदतेर्लिट्, तस्य "भाषाया सदवसश्रुव" इति क्वसुरादेश, एत्वाभ्यासलोपौ, क्रादिनियमादिट्, "सान्तमहत " इति दीर्घ । जिष्णु -जिधातो ताच्छील्ये "ग्लाजिस्थश्च ग्स्नु" । व्रज-व्रजतेर्लोट्, मध्यमपुरुषैकवचनम् । साधय-सिध्यतेर्णिच्, "सिध्यतेरपारलौकिके" इत्येकारस्यात्वम्, लकारपुरुषवचनानि पूर्ववत् । त्वमिति कर्ता

* स्वयमद्वेषणशीलत्वात् तच्छातयितुरभावाद्वा इय सज्ञा । आभ्यन्तरा रागाद्या, बाह्याश्च सहजाद्या यस्य शत्रवो न जाता इति चित्रभानु ।

उभयत्राध्याहार्य । वाक्यम्-वक्तु योग्यमिति वचेर्ण्यत्, 'वचोऽशब्द-सञ्ज्ञायाम्" इत्यत्र अशब्दसञ्ज्ञायामिति पर्युदासात् "चजो. " इति कुत्वम्। प्रमाणयन्-प्रमाणशब्दात् " तत्करोति " इति णिच्, तत शतृप्रत्यय । वसन्-वसते शतृप्रत्यय । उभयत्र "धातुसम्बन्धे प्रत्यया" इति भूते लट्। विनयेन-विपूर्वान्नयते.-"एरच्", गम्यमानसहार्थयोगे तृतीया । उपाससाद-सीदतेर्लिट् ।

व्याख्या—इति-पूर्वोक्तम्, उक्तवन्तम्-कथितवन्तम्, प्रसेदिवासम्-प्रसन्नम्, तम्-व्यासम्, जिष्णु.-जयशीलोऽर्जुन, व्रज-मुनिसमीप गच्छ, साधय-कार्यम् अनुतिष्ठ, इति एव रूपम्, अजातशत्रो -युधिष्ठिरस्य, वाक्यम्-वचनम्, प्रमाणयन्-श्रद्धया अङ्गीकुर्वन्, अन्ते-समीपे, वसन्निव-निवास कुर्वन्निव-* शिष्यवदिति यावद्, विनयेन-नम्रतया, उपाससाद-विद्याग्रहणार्थं समीप प्राप ।

भा०—पूर्वोक्तं विद्यादान प्रतिज्ञाय व्यासो विरराम, तदनन्तर युधिष्ठिरस्त प्रसन्न विज्ञाय 'वत्स ! विद्याग्रहणाय भगवत समीप व्रज, अभीप्सित साधय-इत्यर्जुनमादिशत् । युधिष्ठिराज्ञप्तोऽर्जुनो विद्याग्रहणार्थं शिष्यवद् विनयेन व्यासस्य समीप गतवान् । यद्यपि विद्याग्रहणे शिष्यत्वमेव मुख्य प्राप्नोतीति 'इव' शब्दोपादान व्यर्थमिव, तथापि चिरादन्ते वसन् प्राक्तनशिष्य इवेति विवक्षणाददोष ।

अल०—अन्ते वसन्निवेत्युपमा, उत्प्रेक्षा वा, चिरन्तन शिष्य उपमानम्, विनय साधारणधर्म । विनय हेतूकृत्य, चिरन्तनशिष्यत्वसम्भावना वा । प्रसेदिवासमिति विशेषण प्रसन्नगुरोरुपसर्पणमनायासेन विद्याप्राप्तिहेतु-इति सूचनाय, अत एव परिकरोऽपि ।

**निर्याय विद्याथ दिनादिरम्याद् बिम्बादिवार्कस्य मुखान् महर्षे ।**
**पार्थाननं वह्निकणावदाता दीप्ति स्फुरत्पद्ममिवाभिपेदे ॥२५॥**

अ०—अथ वह्निकणावदाता विद्या दिनादिरम्याद् अर्कस्य बिम्बात् इव महर्षे मुखाद् निर्याय दीप्ति स्फुरत्पद्मम् इव पार्थाननम् अभिपेदे ।

* 'छात्रान्तेवासिनौ शिष्ये'—इत्यमर ।

व्याकृ०—वह्नेः (प०त०) कणा इव अवदाता (उपमा०) वह्निकणावदाता। अवदातशब्दस्यावर्णवाचित्वाद् "वर्णादनुदात्ताद्" इति ङीप् न। दिनस्य आदौ रम्याद् दिनादिरम्यात्। रम्यशब्दो व्याख्यात। महत् ऋषिः महर्षि, 'सन्महत्…' इति कर्मधारयः। "ऋत्यक" इति प्रकृतिभावस्य पाक्षिकत्वाद् गुण। निर्याय-निर्पूर्वाद् याते क्त्वा, तस्य ल्यप्। दीप्तिरिति क्तिन्नन्तम्। अभिपेदे-अभिपूर्वान् पद्यते कर्तरि लिट्, एत्वाभ्यासलोपौ।

व्याख्या—अथ-अर्जुनस्य व्याससमीपगमनानन्तरम्, वह्नेः-अग्नेः,-कणवद्-विस्फुलिङ्गवद्, अवदाता-उज्ज्वला, विद्या-मन्त्ररूपा, दिनादौ-प्रभाते, रम्याद्-मनोहराद्, अर्कस्य-सूर्यस्य, विम्बादिव-मण्डलसदृशाद्, महर्षेः-व्यासस्य, मुखाद्, निर्याय निर्गत्य, दीप्ति-अर्करश्मि, स्फुरद्-विकसत् (पद्मे पार्थानने चोभयत्र विशेषणमिदम्। प्रभाते विकसत् पद्मम्, विद्याप्राप्तिहर्षेण च विकसत् पार्थाननम्) पद्ममिव-कमल यथा, तथा पार्थस्य-पृथाया अपत्यस्य-अर्जुनस्य, आननम्-मुखम्, अभिपेदे-प्राप्ता-प्रविष्टेत्यर्थ।

भा०—यथा प्रातरुद्यत सूर्यस्य विम्बान्नि सृत्य रश्मयो विकसत्सु कमलेषु प्रविशन्ति, तथैव सा विद्या व्यासस्य मुखान्नि सृत्यार्जुनमुखे प्रविवेश। देवता-सान्निध्येन मन्त्रस्य वह्निकणवद्भासुरत्वमुक्तम्।

अल०—पूर्णोपमा, दीप्तिरुपमानम्, विद्योपमेया, अर्कव्यासयो, विम्ब-मुखयो, पद्मार्जुनमुखयोश्च विम्बप्रतिविम्बभाव। विद्या स्वयमभिपेदे-इति वचनाद् विद्या स्वयमनुरागेणार्जुनमुपगतेति द्योतनद्वारेण अर्जुनस्य गुणातिशयो द्योत्यते। वह्निकणावदातेति अन्या उपमा, मुख्योपमाया अङ्गम्। विशेषणमिद दीप्तौ विद्याया चोभयत्र योज्यमिति चित्रभानु। यथा स्वल्पोऽपि वह्निकण-आश्रयानुरूप्येण वर्धमान क्रिया. साधयति, तथा स्वल्पापीय विद्या अर्जुन-माश्रित्य प्रवृद्धा कृत्स्नमभ्युदय साधयिष्यतीत्युपमाव्यङ्ग्य चित्रभानुराह।

**योग च त योग्यतमाय तस्मै तपःप्रभावाद् वितताार सद्य।**
**येनास्य तत्त्वेषु कृतेऽवभासे समुन्मिमीलेव चिराय चक्षु ॥२६॥**

अ०—च योग्यतमाय तस्मै तम् योगम् (व्यास) तपःप्रभावात् सद्यः वितनार, येन तत्त्वेषु अवभासे कृते अस्य चक्षुः चिराय समुन्मिमील इव।

व्याक०—अतिशयेन योग्यो योग्यतम , योग्यशब्दात् " अतिशायने तमबिष्ठनौ " । प्रभावशब्दे पूर्वं भवतेर्घञ्, तदनु प्रादिसमास । " श्रिणीभुवोऽनुपसर्गे " इत्यनुपसर्ग एव घञ्विधानात् । सद्य -" सद्य परुत्परार्यैषम् " इति सूत्रेण निपात्यते, अव्ययमिदम् । वितितार-तरतेर्लिट् । व्यास इति तत्कर्तृपदमध्याहर्तव्यम् । अवभासे-भासतेर्घञ्, सति सप्तमी । तस्मै " कर्मणा यमभिप्रैति स सम्प्रदानम् " इति सम्प्रदानत्वाच्चतुर्थी । तप.प्रभावाद्-हेतौ पञ्चमी । येन-अवभासकर्तरि तृतीया । तत्त्वेषु-विषयसप्तमी ।

व्याख्या—च-पुन , योग्यतमाय-अतिशयेन योग्याय, अर्हत्तमाय, तस्मै-अर्जुनाय, तम्-प्रसिद्धम्, वक्ष्यमाणमहिमानम्, *योगम्-ध्यानविधिम्, व्यास , तपस प्रभावाद्-तपस्याजनिताद् माहात्म्यात्, सद्य -झटिति, वितितार-ददौ उपदिदेश । येन-योगेन, तत्त्वेषु-‡प्रकृतिमहदादिषु विषये, अवभासे-अपरोक्षज्ञाने, कृते-उत्पादिते सति, अस्य-अर्जुनस्य, चक्षु -तृतीय ज्ञानरूपमक्षि, चिराय दीर्घकालपर्यन्तम्-निरन्तरम्, समुन्मिमीलेव-उन्मिषितमिवाभूत् । चक्षुरुन्मीलने यादृश वस्तुन. स्फुट ज्ञानम्, तथा तत्त्वज्ञान सद्य प्रादुरभूदिति ।

भा०—तत्त्वज्ञान विना न विशिष्टा मन्त्रसिद्धि , ' यदेव विद्यया करोति, तद्वीर्यवद् भवति ' इति श्रुत्यादिषु ज्ञानस्याङ्गतोपदेशात् । तत्त्वज्ञानन्तु योगेन ( समाधिना-चित्तैकाग्र्येण ) साध्यम् । योगो यद्यपि चिरकालाभ्याससाध्य , पर महर्षिर्व्यासोऽर्जुनायातिकठिन चिरकालग्राह्य योगमपि स्वतपोमहिम्ना सद्य एव ग्राहितवान् । ( वितितार-इत्युक्तम्, न शिशिक्ष-इति, तेन स्वात्मगतयोगातिशयांश एव सद्यो दत्त इति फलति ) तेन च योगेन सद्योऽर्जुनस्य तत्त्व साक्षात्कारोऽभूत् । चिरादन्धस्य दृष्टिलाभवदस्याप्यखिलाज्ञानभञ्जन प्रकृत्यादितत्त्वसाक्षात्कारकारक ज्ञानचक्षुरुन्मीलितम् । करतलगतामलकवत् सर्वाणि तत्त्वान्यनेन साक्षात्कृतानीति ।

---

* योग सनहनोपायध्यानसंगतियुक्तिषु—इत्यमर ।

‡ मूलप्रकृति., महान्, अहङ्कार , पञ्च तन्मात्रा , पञ्च ज्ञानेन्द्रियाणि, पञ्च कर्मेन्द्रियाणि, पञ्च महाभूतानि, मन , पुरुषश्चेति पञ्चविंशतिः तत्त्वानि, साङ्ख्योक्तानि । ईश्वरसहितानि षड्विंशतितत्त्वानि योगशास्त्रे ।

अल०—योगजन्ये तत्त्वानामपरोक्षज्ञाने चक्षुरुन्मीलनजन्यत्वोत्प्रेक्षा । स्फुटावभास उभयोः साम्यम् । योग्यतमायेति विशेषण योगदानयोग्यतापरमिति परिकर ।

**आकारमाशासितभूरिलाभ दधानमन्त करणानुरूपम् ।**
**नियोजयिष्यन् विजयोदये त तप समाधौ मुनिरित्युवाच ॥२७॥**

अ०—मुनि. आशासितभूरिलाभम् अन्त करणानुरूपम् आकारम् दधानम् तम् विजयोदये तप समाधौ नियोजयिष्यन् इति उवाच ।

व्याक०—आशासित भूरिलाभो येन तम् आशासितभूरिलाभम् , आशासितशब्दे शंसतेः क्त । लाभशब्दे लभतेर्घञ् । रूपस्य योग्यमनुरूपम् ( अव्ययीभाव ) अन्त करणस्य अनुरूपम्-अन्त करणानुरूपम । उदयत इति उदय., अयते पचाद्यच् । विजयः उदयो यस्य तस्मिन् विजयोदये । अथवा विशिष्ट जयोदयो यस्मादिति विग्रहीतव्यम् । यद्वा-उदेत्यस्मादित्युदयः, एते अपादाने " एरच् " । विजयस्योदये-विजयोदये इति । तपस समाधौ तप समाधौ । समाधिशब्दे दधाते कि । यद्वा-तपसि समाधाविति कर्मधारय । नियोजयिष्यन्-योजयते भविष्यति लृट्, तत्स्थाने " लृट. सद् वा " इति हेतौ शतृप्रत्यय , फलस्यापि हेतुत्वाद् नियोजनस्य हेतुत्वमक्षतम् । दधानम्-दधाते. शानच् । इतीति वचने कर्म । आकारमिति घञन्त धाने ( धारणे ) कर्म, तस्य आशासितेत्यादि अन्त करणेत्यादि च विशेषणद्वयम् ।

व्याख्या—मुनि -व्यास , आशासित -आख्यात -प्रकटित , * भूरि.-महान्, लाभ -श्रेय प्राप्ति , येन तथोक्तम्, महाभाग्यसूचकम्, अन्त करणस्य-मनस -मनोवृत्तेरुत्साहस्य, अनुरूपम्-अनुकूलम्, हृद्गतोत्साहप्रकाशकम्, (उत्साहानुकूलकार्यकरणे समर्थम्-इति मल्लिनाथ ) आकारम्-मूर्तिम्-मुखनेत्रादि रूपम् , दधानम्-धारयन्तम्, तम्-अर्जुनम्, ( चित्रभानुस्तु आशासितभूरिलाभम्-आशासित -इष्ट , भूरिलाभ -राज्यप्राप्तिर्यस्य तम्, अन्त करणानुरूपम्-तादृशेच्छाप्रकाशकमाकार दधानमित्युभयमप्यर्जुनविशेषणमाह ) विजयोदये-

* भूरिर्ना वासुदेवे च हरे च परमेष्ठिनि । नपुसक सुवर्णे च प्राज्ये स्याद्वाच्यलिङ्गक ।

विजयप्राप्तिफले, तपस , *समाधौ-नियमे, ( तपसि समाधि -एकाग्रता, तस्याम, यद्वा तपसि-तप प्रधाने, समाधौ, कायिक शीतोष्णादिसहन तप , मानसी ध्यानसन्ततिः समाधि , तत्रेति चित्रभानु ) नियोजयिष्यन्-नियोगेन-आज्ञया, प्रवर्तयिष्यन्, ( नियमयिष्यन्निति चित्रभानु ) नियुक्त करिष्यन्, इति-वक्ष्य माणम्, उवाच-जगाद ।

भा०—प्राप्ते विद्यायोगोपदेशे अर्जुनस्य मनसि महान् हर्ष उत्साहश्च प्रादुरभूत् । तदनुकूलैव तस्याकृतिस्तथा प्रतीयते स्म-यथानेन किमपि महदैश्वर्यं प्राप्त भवेत्, तथाविध त दृष्ट्वा व्यासेन निश्चितम्-ध्रुवमय तपःसिद्धिं प्राप्स्य· तीति । ततो व्यासस्तपसि प्रवृत्तये त वक्ष्यमाणमुपदिदेश । अत्र सन्निहितस्या· र्जुनस्य इदशब्देन परामर्शो योग्य., न तु परोक्षवाचकेन तच्छब्देन, ततश्च तच्छब्दोऽयं तपसि प्रवृत्तस्याप्यर्जुनस्य मुनेरपेक्षया वैलक्षण्यमाह ( अन्त करणेन नाय मुने सन्निहित , भिन्नधर्मत्वात् ) तच्चास्य विजयेच्छारूपमेव, तेनैकादशसर्गकथा (वक्ष्यमाणा) द्योतितेति चित्रभानु ।

अल०—दधानमिति विशेषणस्य साभिप्रायत्वात् परिकर ।

**अनेन योगेन †विवृद्धतेजा निजा परस्मै पदवीमयच्छन् ।**
**समाचराचारमुपात्तशस्त्रो जपोपवासाभिषवैर्मुनीनाम् ॥ २८ ॥**

अ०—( हे अर्जुन ! ) अनेन योगेन विवृद्धतेजा. निजाम् पदवीम् परस्मै अयच्छन् उपात्तशस्त्र. ( त्वम् ) जपोपवासाभिषवैः मुनीनाम् आचारम् समाचर ।

व्याक०—विशेषेण वृद्ध तेजो यस्य स विवृद्धतेजा , "अत्वसन्तस्य " इति दीर्घः । उपात्तानि शस्त्राणि येन स उपात्तशस्त्र । उपात्तशब्दे ददातेः क्त , " अच उपसर्गात्तः " इति तकारादेश । शस्त्रशब्दे शसुधातो· " दाम्नी-शसयुयुज " इति करणे ष्ट्रन्प्रत्यय । जपश्च उपवासश्च अभिषवश्च जपो-पवासाभिषवाः, तैः प्रकृत्यादित्वात् तृतीया, हेतौ तृतीयेति चित्रभानु । (जपा-दयः प्रकारविशेषा , आचारसमाचरणन्तु प्रकारवत्, ( यस्यैते प्रकारा , तत्सा-मान्यम् ) तत्प्रकाराणा सामान्ये हेतुत्व विवक्ष्यत इति ) जप.-" व्यधजपोर-

---

* समाधिर्नियमे ध्याने नीवाके च समर्थने—इति विश्व. ।

† समृद्धतेजा—इति पाठान्तरम् ।

नुपसर्गे " इति जपेरप् । उपवास -वसतेर्घञ्, अभिषव -सुनोते " ऋदोरप् ", " उपसर्गात् सुनोति " इति षत्वम् । अयच्छन्-दाण्धातो लक्षणे हेतौ वा शतृप्रत्यय, " पाघ्राध्मा " इति यच्छादेश । आचारम्-चरतेर्घञ् । योगेन-हेतौ तृतीया । परस्मै-"कर्मणा यमभिप्रैति ·" इति सम्प्रदानत्वाच्चतुर्थी ।

व्याख्या—हे अर्जुन ! अनेन-मदुपदिष्टेन, योगेन-ध्यानाविधिना, विवृद्धम्-विशेषेण वृद्धिं गतम्, तेजः-प्रभावः, यस्य स, निजाम्-स्वकीयाम्, पदवीम्-पद्धतिम्-स्थानम्, परस्मै-अन्यस्मै, अयच्छन्-अददत्-स्वस्थाने परप्रवेशमननु-मन्यमान·, ( स्थानात् कदाचिदप्यचलन्-इति चित्रभानुः ) ( यद्वा स्वविद्या परस्मै अददिति ) उपात्तम्-गृहीतम्, शस्त्रम्-आयुधम्, येन तथाभूतः सन्, त्वम्, जपेन-असकृन्मन्त्रोचारणवृत्त्या, उपवासेन-अनशनेन, अभिषवेण-त्रिस-न्ध्यस्नानेन च, मुनीनाम्-तप पराणाम्, आचरणीयम्, आचारम्-परम्पराप्राप्त पुण्यविधिम्-समाचर-अनुतिष्ठ, मुनिवज्जपादीन् विधेहीत्यर्थः ।

भा०—हे अर्जुन ! अनेन मदुपदिष्टयोगेन ते तेजो वर्धिष्यते, तेन तप - सामर्थ्यं त्वया प्राप्तम् । इदानीं तपस्त्वया कार्यम्, तत्र सामान्या मुनीनामाचा-रास्त्वया पालनीयाः, निरन्तर मन्त्रजप कुरु, उपवासं कुरु, त्रिसन्ध्ये स्नाहि, इत्यादि । विशेषेण च तवेद द्वय व्रतम्-यत्त्वया नियतात् स्थानान्न चलित-व्यम्,स्वस्थाने चान्यस्य प्रवेशो न देय, ( यद्वा-स्वविद्येयमन्यस्मै न शिक्ष-णीया ) किं च तपस्यतापि सतत शस्त्रं वार्यमिति ।

अल०—विवृद्धतेजा इति विशेषणस्य तपोयोग्यताभिप्रायगर्भत्वात् परिकरः ।

**करिष्यसे यत्र सुदुश्चराणि प्रसत्तये गोत्रभिदस्तपांसि ।**
**शिलोच्चय चारुशिलोच्चय तमेष क्षणान्नेष्यति गुह्यकस्त्वाम् ॥२६॥**

अ०—( हे अर्जुन ! ) त्वम् यत्र गोत्रभिद प्रसत्तये सुदुश्चराणि तपांसि करिष्यसे, तम् चारुशिलोच्चयम् एष गुह्यक त्वाम् क्षणाद् नेष्यति ।

व्याक०—गोत्रान् ( पर्वतान् ) भिनत्तीति गोत्रभित्, तस्य । कर्तरि क्विप्, उपपदसमास· । चारु शिलानाम् उच्चय ( ष० त० ) यत्र त चारुशिलोच्चयम् । प्रसत्तये-सीदतेः क्तिन्, तादर्थ्ये चतुर्थी । सुदुश्चराणि-चरतेः

सल्। शिलोच्चयम्-नयतेरकथित कर्म, त्वामिति च प्रधान कर्म । क्षणादिति हेतौ पञ्चमी, कालस्य सर्वत्र क्रियासु हेतुत्वात्।

व्याख्या—हे अर्जुन, त्वम्, यत्र, * गोत्रभिद -इन्द्रस्य, प्रसत्तये-प्रसाद-प्राप्तये, सुदुश्चराणि-अतिदुःखेन चरितु शक्यानि-महाकठिनानि, तपांसि-शीतोष्णादिसहनरूपाणि शारीराणि व्रतानि, करिष्यसे-अनुष्ठास्यसि, तम्, चारु-मनोहर, † शिलोच्चय - शिलासघात -शिखराणि, यत्र तादृशम्, शिलोच्चयम्-पर्वतम्, इन्द्रकीलसञ्ज्ञकम्, एष -अचिरात् प्रादुर्भविष्यन्, गुह्यक -यक्ष, त्वाम्, क्षणाद्-क्षणेनैव, नेष्यति-प्रापयिष्यति ।

भा०—हे अर्जुन ! त्वया पूर्वम् सकलदेवराज इन्द्रस्तपसा प्रसाद्यः, स हि कठिनैस्तपोभि• प्रसीदतीति दुश्चर तपस्ते कर्त्तव्यम् । योग्ये च स्थाने तप सिद्धिरिति तपोऽर्थं हिमालयस्य शिखरविशेषे इन्द्रकीलनाम्नि पर्वते त्वया गन्तव्यम्। तत्र मनोरमा शिलासघाता, मनस्ते तत्र रस्यते। दिव्यश्च स प्रदेश, न मानुषास्तत्रानायासेन गन्तु शक्नुवन्ति, तस्मात्त्वा तत्र नेतु गुह्यक एको मया नियुक्त, स चेदानीमागत एवेति जानीहि। ( आगमिष्यतोऽपि शीघ्रागमनबोधनाय एष इति निर्देश ) । सोऽय स्वसिद्धया क्षणेनैव त्वा त पर्वत प्रापयिष्यति । अत्र चित्रभानुर्व्याचष्टे-गोत्रभिद इतीन्द्राभिधान शत्रुविघाताय तस्य प्रसादनीयता व्यनक्ति, यथा गोत्रानसौ भिनत्ति, तथा शत्रूस्ते भेत्स्यतीति। तपांसीति बहुवचनेन बहुविधानि बहुकालव्याप्यानि च तपांसि त्वया कर्तव्यानीति द्योत्यते । करिष्यसे-इत्यात्मनेपद कर्त्रभिप्राये क्रियाफले, तेन स्वार्थं ते तप, फलसिद्धिपर्यन्त च कार्यमिति व्यञ्जितम्। नेष्यतीति परस्मैपदं तु परगामिनि क्रियाफले, तेन गुह्यकस्य तव प्रापणे कोऽपि स्वार्थो नास्तीति बोधितम् इति।

अल०—चारुशिलोच्चयमिति पद शिलोच्चयस्य तपोयोग्यता सूचयत् साभिप्रायमिति परिकर । गोत्रभिद इति विशेष्य च साभिप्रायमिति परिकराङ्कुरोपि। बहुवाक्यार्थस्यातिसङ्क्षिप्य कथनादोजोगुण ।

* सुत्रामा गोत्रभिद् वज्री-इतीन्द्रनामस्वमर ।

† अद्रिगोत्रगिरिग्रावाचलशैलशिलोच्चयाः-इत्यमर ।

इति ब्रुवाणेन महेन्द्रसूनु महर्षिणा तेन तिरोबभूवे ।
त राजराजानुचरोऽस्य †साक्षात् प्रदेशमादेशमिवाधितष्ठौ ॥३०॥

अ०—महेन्द्रसूनुम् इति ब्रुवाणेन तेन महर्षिणा तिरोबभूवे, राजराजानुचर साक्षाद् अस्य आदेशमिव तम् प्रदेशम् अधितष्ठौ ।

व्याकृ०—राज्ञा राज्ञो ऽनुचर राजराजानुचर । पूर्वस्य षष्ठीतत्पुरुषस्यान्ते "राजाह सखिभ्यष्टच्" । अनुचरशब्दे चरते पचाद्यच् । ब्रुवाणेन-ब्रूधातो, "वर्तमानसामीप्ये वर्तमानवद् वा" इति तिरोधानक्रियासामीप्ये भूते लट् । तस्य शानजादेश । तिरोबभूवे-भवतेर्भावे लिट्, महर्षिणेति तत्कर्तरि तृतीया । अधितष्ठौ-तिष्ठतेर्लिट्, "उपसर्गात् सुनोति •" इत्यनन्तरम् "स्थादिष्वभ्यासेन चाभ्यासस्य" इति षत्वम् । महेन्द्रसूनुम्-सम्प्रदानत्वाविवक्षायाम् "अकथित च" इति कर्मत्वम् । प्रदेशम्-"अधिशीङ्स्थासा कर्म" इति कर्मत्वाद् द्वितीया ।

व्याख्या—महेन्द्रस्य-इन्द्रस्य, सूनुम्-पुत्रम्-अर्जुनम्, प्रति, इति-पूर्वोक्तम्, ब्रुवाणेन-कथितवता, कथनानन्तरमेव, तेन-प्रक्रान्तेन, महर्षिणा-व्यासेन, तिरोबभूवे-अन्तर्दधे । ‡राज्ञाम्-यक्षाणाम्, राज्ञ प्रभो, कुबेरस्य, अनुचर-भृत्यः, व्यासेन सूचितागमनो यक्ष•, साक्षाद्-मूर्तिमन्तम्, अस्य-व्यासस्य, आदेशम्-आज्ञामिव, तम्, प्रदेशम्-अर्जुनाधिष्ठित स्थानम्, अधितष्ठौ-प्राप्त । चित्रभानुस्तु 'सद्य प्रदेशमादेश इवाधितष्ठौ' इति पाठ मत्वा, त व्यासेन त्यक्त प्रदेशम्, आदेश -व्याकरणे अस्त्यादे स्थानिन प्रदेशम् भ्वादिरादेश इव, अधितष्ठौ-प्राप्तवान्-इति व्याचख्यौ । व्यासो यथा पाण्डवाना हितायागतोऽभूत्, तथैवायमपि हितायेति तत्कार्यकारित्वेनास्य आदेशसमत्व समर्थितवाश्च ।

---

* नरेन्द्रसूनु—इति चित्रभानुसमत पाठ । महेन्द्रसूनुमिति पाठस्तेन खण्डित । नरेन्द्रसूनुत्वाद् अदिव्यत्वेन दिव्यदेशगमनायोग्यत्वात् तस्य उपक्षकापेक्षेति स्वपाठस्तेन समर्थित ।

† सद्य प्रदेशमादेश इवाधितष्ठौ—इति दाक्षिणात्यपाठ ।

‡ राजा प्रभौ नृपे चन्द्रे यक्षे क्षत्रियशक्रयो —इति विश्व ।

भा०—अर्जुनाय पूर्वोक्तमुपदिश्य व्यासस्तिरोदधे । तेन भगवता सूचितागमनश्च यक्षस्तत्क्षण एव तस्मिन् स्थाने प्राप्त । तद्धि स्थान भगवतो व्यासस्य मूर्तिमती आज्ञेव-इत्युत्प्रेक्षितम् । आज्ञाविषयत्वादाज्ञात्व तत्र संभावितम् । यथा व्यासस्याज्ञा यक्षेणावश्य पालनीया, तथा तत् स्थानमप्यवश्यमधिष्ठेयमिति तत्र सद्य एव तस्यागमनम् । सोयं मल्लिनाथानुसृतोऽर्थः ।

अल०—मल्लिनाथरीत्या उत्प्रेक्षा । चित्रभानुरीत्या तूपमा । समन्वय पूर्वमेव दर्शित ।

**कृतानतिर्व्याहृतसान्त्ववादे जातस्पृह पुण्यजन स जिष्णौ ।**
**इयाय सख्याविव सप्रसाद विश्वासयत्याशु सता हि योग ॥३१॥**

अ०—स पुण्यजनः कृतानतिः व्याहृतसान्त्ववादे जिष्णौ जातस्पृह (सन्) सख्याविव सप्रसादम् इयाय, हि सताम् योग आशु विश्वासयति ।

व्याक०—कृता आनतिः येन स कृतानति , आनतिरित्यत्र नमतेः क्तिन् । व्याहृत' सान्त्वस्य वादः ( तत्पु० ) ( सान्त्वरूपो वादो वा ) येन तस्मिन् व्याहृतसान्त्ववादे । व्याहृतशब्दे हरते क्त , सान्त्वशब्दे 'षान्त्व सामप्रयोगे' इति चौरादिकाद् घञ् । जाता स्पृहा यस्य स जातस्पृह । जिष्णौ-जयते "ग्लाजिस्थश्च ग्स्नु" । सप्रसादम्-सप्रपूर्वात् सीदतेर्घञ् । इयाय-एतेर्लिट् । विश्वासयति-णिजन्ताच्छ्वसितेर्लट् ।

व्याख्या—स -पूर्वोक्त , *पुण्यजन -यक्ष , कृता, आनति -प्रणामः, येन, तादृश सन्, व्याहृत -उक्त , सान्त्ववाद -प्रियवचन येन तथोक्ते, †जिष्णौ-अर्जुने, जाता-उत्पन्ना, स्पृहा-अनुरागो यस्य तथाभूत', ( सन् ) ‡सख्याविव-सुहृदीव, सप्रसादम्-मन प्रसन्नताजनक विस्रम्भम्, इयाय-प्राप । हि-यत., सताम्-साधूनाम्-प्रशस्तपुरुषाणाम्, योग -समागम', आशु-शीघ्रम्, विश्वासयति-विश्वासं जनयति ।

भा०—स यक्ष आगत्यार्जुन प्रणनाम । अर्जुनोऽपि मधुरै शुभैर्वचनैस्तेन सह सललाप । तेन यक्ष प्रियभाषिणि तस्मिन् निरतिशयमनुरज्यति स्म,

---

* पुण्येन जन -जन्म यस्येति पुण्यजनव्युत्पत्तिं चित्रभानुराह ।

† जिष्णुः शक्रे धनञ्जये—इत्यमर. । ‡ अथ मित्र सखा सुहृद्—इत्यमर ।

सुहृद्वच तत्क्षण एव महान्त विश्वासमकरोत् । नैतच्चित्रम्, यत सज्जनसमागम शीघ्रमेव विश्वासमुत्पादयति ।

अल०—सामान्येन विशेषस्य समर्थनादर्थान्तरन्यास । सख्याविवेत्युपमा सम्प्रसादविषयता साधर्म्यम् ।

**अथोष्णभासेव सुमेरुकुञ्जान् विहीयमानानुदयाय तेन ।**

**बृहद्द्युतीन् दुःखकृतात्मलाभ तम शनै पाण्डुसुतान् प्रपेदे ॥३२॥**

अ०—अथ तेन उदयाय विहीयमानान् बृहद्द्युतीन् पाण्डुसुतान् उष्णभासा (उदयाय विहीयमानान् बृहद्द्युतीन ) सुमेरुकुञ्जानिव दु खकृतात्मलाभम् तमः शनै प्रपेदे ।

व्याक०—बृहती द्युति' येषा तान् बृहद्द्युतीन्, बृहच्छब्दो " वर्तमाने पृषन्महद्बृहद ” इत्यादिना निपात्यते, ततो ङीप् । उष्णा भा यस्य तेन उष्णभासा, भाश्शब्दे भासते कर्तरि क्विप् । हानक्रियाकर्तरि तृतीया । दुःखेन कृत ( तत्पु० ) आत्मनो लाभ ( तत्पु० ) येन ( बहु० ) तद् दु ख-कृतात्मलाभम्, तमोविशेषणमिदम् । उदय -इधातो. " एरच् " । विहीय-मानान्-विपूर्वाज्जहाते कर्मणि शानच्, " घुमास्थागापा " इतीत्त्वम् । प्रपेदे-पद्यतेर्लिट् । तेन-हानक्रियाकर्तरि तृतीया । उदयाय-तादर्थ्ये चतुर्थी ।

व्याख्या—अथ-तेन-पूर्वप्रस्तुतेन अर्जुनेन, उदयाय-अभ्युदयप्राप्तये, विहीयमानान्-त्यज्यमानान्, बृहती-महती, द्युति -बुद्धिलक्षण प्रकाशः, येषा तादृशान्, पाण्डो सुतान्-युधिष्ठिरादीन् चतुरः पाण्डवान्, उष्णभासा-सूर्येण उदयाय-पुनरुद्गमाय, विहीयमानान्-त्यज्यमानान्, बृहद्द्युतीन् सुवर्णरत्न-प्रभाभि. देदीप्यमानान्, सुमेरोः-रत्नसानुपर्वतस्य, *कुञ्जानिव-लतादिपिहितो-दरान् प्रदेशानिव, दु.खेन-कष्टेन, कृत , आत्मलाभ -उत्पत्ति.-स्वावस्थितिर्येन तादृशम्, †तम.-शोक. ( शोकजन्यो मोह इति चित्रभानु ) ( सुमेरुकुञ्ज-पक्षे तम -अन्धकार ) शनै -मन्दम्, प्रपेदे-प्राप्तम् ।

---

* निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे–इत्यमरः ।

† तमोऽन्धकारे स्वर्भानौ तम शोके गुणान्तरे–इति विश्व ।

भा०—यदोद्यमान सूर्य सुमेरुपर्वतस्य परदिग्गतान् कुञ्जान् निजहाति, तदानीं सूर्याभावे सुवर्णरत्नमयत्वेन नैसर्गिकप्रकाशाविशिष्टेष्वपि तेषु कुञ्जेषु यथान्धकार. कथंचिदवस्थान लभते एव, तथैव यदार्जुन स्वाभ्युदयाय स्वभ्रातॄन् विहाय प्रस्थातुमुद्यत, तदानीं तद्विरहजन्य शोको विवेकवत्सु शत्रून् विजिगीषमाणेषु च तेषु युधिष्ठिरादिषु चतुर्षु भ्रातृषु कथंचित् पदमकरोत् । विवेकिनस्तेऽभ्युदयनिमित्त जायमान भ्रातृविरह यद्यपि नाजीगणन्, तथापि कथंचिन्मन्द शोक-मोह-प्रसरस्तेषु जात । अर्जुनप्रेमातिशयस्तत्र निमित्तम् । उपमानस्य सूर्यस्योष्णभा -शब्देनोक्तया उपमेयेऽर्जुनेपि तीव्रा परपरिभवशक्तिर्व्यज्यते—इति चित्रभानु ।

अलं०—तमःशब्दस्य श्लिष्टत्वाच्छ्लेषानुप्राणितेयमुपमा । तमस शनै प्रसेर हेतुगर्भं विशेषणद्वयमिति परिकर ।

**असंशयालोचितकार्यनुन्न. प्रेम्णा समानीय विभज्यमान. ।**
**तुल्याद् विभागादिव तन्मनोभिर्दु खातिभारोऽपि लघु. स मेने ॥२३॥**

अ०—असंशयालोचितकार्यनुन्न प्रेम्णा समानीय विभज्यमान स दु खातिभार. अपि तन्मनोभि तुल्याद् विभागादिव लघु मेने ।

व्याक०—अविद्यमान संशयो यस्या क्रियायाम्, ( बहु० ) तद् यथा स्यात्तथा आलोचितेन ( सुपा ) कार्येण ( कर्म० ) नुन्न. (तत्पु०) असंशयालोचितकार्यनुन्न । आलोचितशब्दे लोचृधातो क्त । नुन्नः-नुद धातो क्त, "नुदविदोन्दत्रा " इति विकल्पेन नत्वम् । दु.खम् अतिशयितो भार इवेति दुःखातिभारः । यद्वा-दु खमेव अतिभार । प्रेम्णा-प्रियशब्दाद् भावे इमनिच् । "प्रियस्थिर " इति प्रादेश । विभजनकर्तरि तृतीया । समानीय-आनयते क्त्वाल्यपौ । विभज्यमान -भजते कर्मणि शानच् । मेने-कर्मणि लिट्, तन्मनोभिरिति तत्कर्तरि तृतीया, स इत्युक्ते कर्मणि प्रथमा । विभागाद्-हेतौ पञ्चमी ।

व्याख्या—असंशयम्-संदेहरहित यथा स्यात्तथा, आलोचितम् विवेचितम्-कर्तव्यतया निश्चितम्, यत् कार्यम्-मुनिनिर्दिष्ट तपोऽनुष्ठानादि, तेन, नुन्न - दूरीकृतः, पुनश्च प्रेम्णा-भ्रातृवात्सल्येन, समानीय-पुनराकृष्य, विभज्यमान -

तुल्यभागेन दीयमान , स -पूर्वोक्त , दु खातिभारोऽपि-अतिभारसदृश दु खमपि, ( यद्वा-दु खरूप , अतिशयितो भारोऽपि ) तेषाम्-युधिष्ठिरादीनाम्, मनोभि., तुल्यात्-समाद्, विभागादिव, हेतो , लघु -अल्प , मेने-मत ।

भा०—कार्यगौरवमालोच्य युधिष्ठिरादिभिर्भ्रातृविरहजन्य खेदो दूरमपसार्यते स्म, प्रवल भ्रातृप्रेम तु त खेद पुनराकृष्य तेषु भ्रातृषु तुल्यभागेन विभजते स्म । समरूपेण सर्वेषु स्थापयति स्मेति। तेन दु खानुभवस्तेषा जात , परमल्प एवेति। तत्र हेतुरुत्प्रेक्ष्यते-यथा महानपि भारो यदि विभज्य बहुभिर्गृह्येत, तर्हि लघुरेव प्रतीयते, तथा वहूना ( चतुर्णां भ्रातृणाम् ) समान दु खमिति मन्ये विभागादिव तत्र लघुत्व जातमिति। मनस क्षणिकवृत्तितया तत्र प्रादुर्भूताया शोकवृत्तेर्भविष्यज्जयप्राप्त्युत्साहेनोपमर्दाल्लघुत्व सुकरम्, बुद्धेस्तु स्थिरतया तत्र लाघव दुष्करमिति मनस. कर्तृत्वौचित्य चित्रभानु समर्थयते। समानीय विभज्यमान -इति वर्तमानत्वोक्त्या भूयो भूय कार्योत्साह. शोकमपसारयति, भूयो भूयश्च भ्रातृप्रेम त समानयतीति द्योतितम् । कार्योत्साहेन दु खस्य लघुता प्रतीयते स्म, न तु वस्तुतो लघुता जातेति 'मेने' पदेन द्योतितमित्यादि चित्रभानुः। तुल्याद्विभागादिवेत्यस्य च समविभागेनोत्तोन्य स्कन्धे निवेशितो भारो यथा लघु प्रतीयते-इत्याद्याशयस्तेनोक्त ।

अल०—दु खलाघवे विभागहेतुकत्वमुत्प्रेक्षितमिति हेतूत्प्रेक्षा । अतिभारोऽपि लघुर्मेन इति विरोधाभास ।

**धैर्येण विश्वास्यतया महर्षेस्तीव्रादरातिप्रभवाच्च मन्यो,।**
**वीर्यं च विद्वत्सु सुते मघोन स तेषु न स्थानमवाप शोक ॥३४॥**

अ०—धैर्येण, महर्षे विश्वास्यतया अरातिप्रभवाद् तीव्राद् मन्यो , च मघोन सुते वीर्यम् च विद्वत्सु तेषु स शोक स्थानम् न अवाप ।

व्याकृ०-अरातय· प्रभवो यस्य, तस्माद् अरातिप्रभवाद्। विश्वास्यतया-विपूर्वाच्छ्वसिते " ऋहलोर्ण्यत् "। ततो भावे तल् । हेतौ तृतीया । विद्वत्सु-विदे शतृप्रत्यय , तस्य " विदे शतुर्वसु " इति वैकल्पिको वसुरादेश । वीर्यम्-इति शतुर्योगे " नलोकाव्यय " इति षष्ठीनिषेधात्, कर्मणि द्वितीया। धैर्येण-मन्यो -हेतौ तृतीया पञ्चम्यौ ।

व्याख्या—धैर्येण-वीरतया-स्वभावसिद्धया मनसो निर्विकारतया, महर्षेः-व्यासस्य, विश्वास्यतया-श्रद्धेयवचनत्वेन, * अरातयः-शत्रवः, प्रभवः-कारणम्, यस्य तादृशात्, तीव्राद्-दुःसहाद्, † मन्योः-क्रोधाच्च, ( खेदाद्वा-इति चित्रभानुः ) ‡ मघोनः-इन्द्रस्य, सुते-पुत्रे-अर्जुने, वीर्यम् पराक्रमं च, ( चकारात् तस्य स्थैर्यं विवेकादिकं च ) विद्वत्सु-जानत्सु, तेषु-युधिष्ठिरादिषु, सः-पूर्वोक्तः, शोकः-भ्रातृवियोगजन्मा खेदः, स्थानम्-स्थितिम्, न अवाप-न प्राप्तवान् ।

भा०—यद्यपि भ्रातृप्रेम्णा तद्वियोगशोक आविर्भावितः, तथापि तेषु स स्थितिं न लेभे । तत्र हेतवः-तेषां स्वाभाविकी वीरता, न हि वीराः शोकवशगा भवन्ति । किं च व्यासवचने तेषां विश्वासः, व्यासोक्तादिशार्जुनः सिद्धिमेव प्राप्स्यति, नास्य किमपि कष्टं भविष्यति-इत्यालोचनेन शोकापनोदः । किं च-शत्रुभिर्यानि दुःखानि दत्तानि, तान्यनुस्मृत्य प्रतीकारेच्छा तथा तेषां प्रबला, यथा तदग्रे न किमपि भावान्तरं तिष्ठति, तया शोकः प्रणुन्नः । किं च-अर्जुनस्य पराक्रमविवेकादिकं ते सम्यग् जानन्ति, तेन चार्जुनस्य काप्यापत्तन्मनःसु न सम्भाव्यते, ततोऽपि शोकाभावः । एभिर्हेतुभिस्ते शोकवशगा नाभूवन् । एकेन प्रेम्णा शोकः स्थाप्यते, अनेकैस्त्वपसार्यते, ततश्चानेकविरोधः एकस्याकिंचित्करत्वान्नास्ति शोकस्य स्थितिसम्भावनेत्याकूतम् । पूर्वेण हेतुना तेषां वीरोदात्तत्वम्, द्वितीयेन धार्मिकत्वम्, तृतीयेन च तेजस्विता व्यज्यते-इति चित्रभानुः ।

अल०—शोकापसारणे धैर्येण प्रधानेन सह बहूनां समुच्चयोपादानात्समुच्चयालङ्कारः इह हेतुद्वयं तृतीयया विभक्त्या, तृतीयो हेतुः पञ्चम्या, चतुर्थस्तु विशेषणमुखेनोपात्त इति प्रक्रमभङ्गो दोषः सम्भाव्यते, तत्र चित्रभानुः समाधिमाह-आद्यं हेतुद्वयं सात्त्विकम्, तृतीयस्तु राजसः-इति तयोर्वैजात्यं द्योतयितुं पृथग् § विभक्तिनिर्देशः । किं च-स्थूलधिया कृते हेतुत्रयं साक्षाद्धेतुत्वेनोपात्तम् । मध्यमधिया कृते अर्जुनवीर्यादिज्ञानं विशेषणमुखेन स्फुटव्यङ्ग्यो

* अभिघातिपरारातिप्रत्यर्थिपरिपन्थिनः—इति शत्रुनामस्वमरः ।

† मन्युर्दैन्ये क्रतौ क्रुधि—इत्यमरः ।

‡ इन्द्रो मरुत्वान् मघवा-इत्यमरः ।

§ इदं त्रयमप्यागन्तुकम्-शोकापनोदायैवोपस्थितमिति हेतुतयोपात्तम्,

हेतुरुक्त । ध्वनितत्त्वविदामुत्तमाना तु कृते ' मघोन सुते ' इति पदेन ' देवाना स्नेहपात्रेऽर्जुने का कष्टसम्भावना ' इति शोकविगमहेतुर्निगूढव्यङ्ग्य उपन्यस्त इति प्रतिपत्तृबुद्ध्यनुसारेण महाकवीनामुक्तिविशेषा समावेद्या इति ।

तान् भूरिधाम्नश्चतुरोऽपि दूर विहाय यामानिव वासरस्य ।
एकौघभूत तदशर्म कृष्णा विभावरी † ध्वान्तमिव प्रपेदे ॥ ३५ ॥

अ०—तद् अशर्म भूरिधाम्न चतुर अपि तान् वासरस्य यामानिव दूरम् विहाय एकौघभूतम् ( सत् ) कृष्णाम्, ध्वान्तमिव विभावरीम् प्रपेदे ।

व्याक०—न शर्म अशर्म, " नञ् " इति समास , नलोप । शर्म-शृणाते "अन्येभ्योऽपि दृश्यन्ते" इति मनिन् । भूरि धाम येषा तान् भूरिधाम्न· । एक ओघो यस्य, एकश्चासौ ओघ इति वा एकौघ न एकौघ एकौघो भूतम्, एकौघभूतम्, भूतशब्दस्य विशेष्यनिघ्नतया नपुसकत्वम् । "श्रेण्यादय कृतादिभिः" इत्यनेन समास , स च " श्रेण्यादिषु च्व्यर्थवचन कर्त्तव्यम्" इत्यभूततद्भावे, श्रेण्यादिराकृतिगण इति । यद्वा-अत्र भूतशब्दो निभादि-शब्दवदिवार्थे, तथा च एकौघ इव इत्येकौघभूतम्, इति विग्रह कर्तव्यः । विभावरीम्-विपूर्वाद् भातेर्वनिप्, "वनो र च" इति ङीप्, रादेशश्च । प्रपेदे-पद्यतेर्लिट् । दूरमिति विहायेतिक्रियाविशेषण द्वितीयान्तम् । अपीत्यव्ययं समुच्चये ।

व्याख्या—तद्-अर्जुनविरहजनितम्, अशर्म-‡शर्म-सुखम्, तद्विरुद्धम् अशर्म-दु खम्, भूरि-बहुलम्, §धाम-ज्ञानरूप तेज , यद्वा धाम-शक्ति -क्लेश-सहनसामर्थ्यम्, येषा तथाभूतान्, चतुर अपि-चतु सख्याकान्, सर्वान्, तान युधिष्ठिरादीन्, वासरस्य-दिनस्य, ( भूरिधाम्नः-बहुप्रकाशान्, चतुर )

अर्जुनवीर्यादिज्ञान तु तेषा पूर्वमिद्ध शोकस्य स्थितिमेव न ददातीति तद्विशेषणत्वे-नैवोपात्तमिति वैलक्षण्य चतुर्थे स्वयमूह्यम् ।

†—ध्वान्तमिवाततान-इति चित्रभानुधृतः पाठ । आच्छादयति स्म इति तदर्थस्तेन व्याख्यात ।

‡ शर्मशातसुखानि च—इत्यमर ।

§ धाम रश्मौ प्रभावे च तेजोमन्दिरजन्मसु-इति विश्व ।

*यामानिव-प्रहरानिव, दूरम्, विहाय-परित्यज्य, एकौघभूतम-मिलित्वा एकराशिभूत सन्, ( एकप्रवाहभूतम्-यथा वह्व प्रवाहा एकरूपतामापद्य घनी भवन्ति, तथा घनीभूतमिति चित्रभानु.) †कृष्णाम्-द्रौपदीम, ध्वान्तमिव-अन्धकारो यथा, ( कृष्णाम्-कृष्णवर्णाम् ) विभावरीम्-रात्रिम्, तथा प्रपेदे-प्राप ।

भा०—युधिष्ठिरादयश्चत्वारो भ्रातरः अर्जुनविरहजन्य खेद मात्रयापि नानुबभूवु, यतस्तेतिविवेकशीला सहनशक्तिमन्तश्चेति, किन्तु स खेद तान् सर्वान् परित्यज्य समूहभावमापन्न इव एकप्रवाहतामापद्येव च द्रौपदीमाचक्राम । यथा दिनस्य चतुर्ष्वपि प्रहरेषु प्रकाशबाहुल्यादवकाशमलभमानोऽन्धकार प्रकाशशून्या रात्रिमाकामति, तथैवेति । यथा रात्रिरन्धकारमयी भवति, तथा द्रौपदी शोकवशगाभूदिति तात्पर्यम् ।

अल०—दिवसयामाना पाण्डवै सादृश्यप्रतिपादक एक इवशब्द, ध्वान्ताशर्मणो, कृष्णाविभावर्योश्च, सादृश्यार्थो द्वितीय इति उपमालङ्कारः । तत्र भूरिधाम्न इति विशेषण याम-युधिष्ठिरादीना सादृश्य प्रतिपादयद् ध्वान्तशोकयोस्त्यागे साभिप्रायमिति परिकर । प्रकाशावरकत्व ध्वान्तशोकयो. सादृश्यम्, तत्प्राप्तियोग्यता तु कृष्णाविभावर्यो. । कृष्णेति विशेष्यमपि अप्रकाशार्थं विवेकमान्द्यं सूचयद् द्रौपद्या खेदप्राप्तौ साभिप्रायमिति परिकराङ्कुर । तच्च पद व्यञ्जनया कृष्णवर्णमर्थं समर्पयद् विभावर्यामप्यन्वेति । एकौघभूतमित्युपमार्थोऽपि भूतशब्द सामर्थ्यादिहोत्प्रेक्षाबोधक., एकौघरूपताप्राप्त्या द्रौपद्या प्रबल तदाक्रमणमिति हेतूत्प्रेक्षा । अर्जुनस्य सूर्यसादृश्य व्यङ्ग्यमिति चित्रभानु ।

‡तुषारलेखाकुलितोत्पलाभे पर्यश्रुणी मङ्गलभङ्गभीरुः ।
अगूढभावाऽपि विलोकने सा न लोचने मीलयितु विषेहे ॥३६॥

---

* द्वौ यामप्रहरौ समौ—इत्यमर ।

† कृष्णा स्याद् द्रौपदी-नीलीकणाद्राक्षासु योषिति—इति मेदिनी ।

‡ तुषारलेशाकुलित इति चित्रभानुमतः पाठ । तुषारलेशोक्त्या उपमेयानामश्रूणामप्यल्पत्व द्योत्यते, तच्च निरोधादिति ।

अ०—ना विलोकने अगूढभावा अपि मङ्गलभङ्गभीरु ( सती ) पर्यश्रुणी तुषारलेखाकुलितोत्पलाभे लोचने मीलयितुम् न विषेहे ।

व्याक०—न गूढः भावो यस्याः सा अगूढभावा । गूढशब्दे गूहते क्तः । भावो व्याख्यात । मङ्गलस्य भङ्गाद् भीरु मङ्गलभङ्गभीरुः । भङ्ग इति भनक्तेर्घञ् । भीरुशब्दे बिभेते "भिय क्रुक्लुकनौ" इति क्रुप्रत्यय । अश्रुभि परिगते पर्यश्रुणी, 'अवादय क्रुष्टाद्यर्थे तृतीयया" इत्यनेन समास, द्वितीयाद्विवचन विलोचनविशेषणम् । तुषारस्य लेखया ( ष० त० ) आकुलितयो ( तत्पु० ) उत्पलयो ( कर्मधा० ) आभा इव आभा ययोस्ते ( बहु० ) तुषारलेखाकुलितोत्पलाभे । विलोकने-लोकतेर्भावे ल्युट् । विलोचने-लोचृधातो करणे ल्युट्, "करणाधिकरणयोश्च" इति । मीलयितुम्-मीलयते "शकधृष ••" इत्यादिना तुमुन् । विषेहे-विपूर्वात् सहतेर्लिट्, "परिनिविभ्यः " इति षत्वम् । विलोकने-विषयसप्तमी। लोचने-मीलनकर्मणि द्वितीया ।

व्याख्या—सा-द्रौपदी, विलोकने-अर्जुनस्य विशिष्य दर्शने, न गूढ - गुप्त*, प्रस्फुट , भाव - हृद्गतोऽभिलाष , यस्यास्तथाभूतापि, मङ्गलस्य-अभीष्टस्य शुभस्य, भङ्गाद्-हानेः, भीरु -भीता सती, पर्यश्रुणी-अश्रुभि -बाष्पैः, परिगते-आवृते, अत एव, तुषारस्य-हिमस्य, लेखया-राज्या, आकुलिते-विवर्णता गते ये उत्पले-कमले, तदाभे-तत्सदृशे, लोचने-नेत्रे, मीलयितुम्-मुद्रयितुम्, न विषेहे-न शशाक ।

भा०—तपस्यार्थं पर्वतप्रदेशे गन्तुमुद्यतमर्जुन साभिलाष द्रष्टुमियेष द्रौपदी । सा तस्या इच्छा तच्चेष्टया स्फुट प्रतीयमानासीत् । पर तस्या नेत्रे प्रेमाश्रुपरिप्लुते अभवताम् । तैरश्रुभिस्तस्या नेत्रे तथावृते, यथा सा त स्पष्ट द्रष्टु न शशाक । यद्यपि नेत्रनिमीलनेनाश्रुविन्दूना बहिर्निपतनात् स्पष्टदर्शन सभावितमासीत्, तथापि सा तथा नाकरोत्, यतस्तया विचारितम्-यद् विजयोपायप्राप्तये प्रस्थितस्य पत्यु प्रस्थानसमयेऽमङ्गलसूचकमश्रुमोचनमनुचितमिति । तेन अश्रूणि नयनयोरेव कथचिद्रुरोध, नत्वश्रुपातमकरोत् । अश्रुभि-

* भावो लीलाक्रियाचेष्टाभूत्यभिप्रायजन्तुषु-इति वैजयन्ती ।

स्तस्या नेत्रे तथा अभासताम्, यथा हिमरेखाप्रपातेन तद्विशिष्टे कमले भासेते-इति ।

अल०—विप्रलम्भशृङ्गारोऽत्र प्राधान्येन ध्वन्यते । अर्जुन आलम्बनम् तत्प्रवास उद्दीपनम् । अश्रूण्यनुभाव । मत्यौत्सुक्यविषादा व्यभिचारिणः । अश्रुभिर्विषादो व्यञ्जित , विलोकने अगूढभावा, इत्यौत्सुक्यम्, मङ्गलभङ्गभीरुरिति मति । अलङ्कारास्तु-तुषारलेखाकुलितोत्पलाभे-इत्युपमा, मङ्गलभङ्गभीरुरिति काव्यलिङ्गम्, अगूढभावापि न विषेहे-इति विरोधश्चेति ।

**अकृत्रिमप्रेमरसाभिराम रामार्पित दृष्टिविलोभि दृष्टम् ।**

**मन प्रसादाञ्जलिना निकाम जग्राह पाथेयमिवेन्द्रसूनु ॥ ३७ ॥**

अ०—इन्द्रसूनु अकृत्रिमप्रेमरसाभिरामम् रामार्पितम् दृष्टिविलोभि दृष्टम् पाथेयमिव मन.प्रसादाञ्जलिना निकामम् जग्राह ।

व्याक०—क्रियया निर्वृत्तः कृत्रिम , करोते "ड्वित क्त्रि" कृत्प्रत्यय , "क्त्रेर्मम् नित्यम्" इति मप्, न कृत्रिम अकृत्रिम । प्रियस्य भाव प्रेमा, भावे इमनिच्, स एव, तस्य ( तज्जनक , तज्जन्यो वा ) वा रस प्रेमरस , अकृत्रिमेण प्रेमरसेन अभिरामम् अकृत्रिमप्रेमरसाभिरामम् । अभिरामशब्दे-अभिरमते मनोऽस्मिन्निति विग्रहे रमतेर्घञ् । रामया अर्पितम्-रामार्पितम् । अर्पितमिति-णिजन्ताद् ऋधातोः क्त , "अर्तिह्रीव्ली " इत्यनेन पुगागमः । दृष्टि विलोभयतीति दृष्टिविलोभि, लोभयतेर्णिनि , उपपदसमास । मनस प्रसाद ( तत्पु० ) अञ्जलिरिव ( उपमितसमासः ) मनःप्रसादाञ्जलि , तेन । ग्रहणक्रियाकरणे तृतीया । दृष्टम्-पश्यते "नपुसके भावे क्त " । पाथेयम्-पथि साधु इति विग्रहे पथिन्शब्दात् "पथ्यतिथिवसतिस्वपतेर्ढञ्" । निकाममिति क्रियाविशेषणम् ।

व्याख्या—इन्द्रस्य सूनु:-पुत्र -अर्जुन , अकृत्रिमेण-नैसर्गिकेण, प्रेमरसेन-अनुरागरूपेण रसेन, प्रकृष्टेन प्रेम्णा, ( यद्वाअनुरागजन्येन मनसो द्रवेण ) ( पाथेयपक्षे-प्रेमजनकेन रसेन स्वादेन मधुरादिना ) अभिरामम्-मनोहरम्, रामया-रमण्या, अर्पितम्-प्रेरितम्, ( पक्षे प्रीत्या दत्तम् ) दृष्टिविलोभि-स्वस्य दृष्टि विलोभयति-आकर्षतीति तथा-दृष्टिप्रियम्, दृष्टम्-दृक्पातम्, पाथेयमिव-

पथि भोजनार्थं मिष्टान्नादिकमिव, मनस प्रसादो-नैर्मल्यम्-प्रसन्न मन', तद् अञ्जलिरिव करसपुटकमिव, तेन, निकामम्-यथेच्छम्-अतिशयेन, जग्राह-स्वीचकार-स्पृहया पश्यन् स्वमनसि स्थापयमास-इति यावत् ।

भा०—तपस्यायै गन्तुमुद्यतेऽर्जुने द्रौपद्या सप्रेम दृष्टिपात' कृत, स हि दृष्टिपातस्तथा स्निग्धमधुरो बभूव, तथा च द्रौपद्या अकृत्रिम प्रेम तस्मिन् व्यज्यमानमासीद्, यथार्जुनस्य दृष्टिमेकान्ततस्तदाचकर्ष । स्वभार्ययाऽर्पित प्रिय त दृष्टिपातमर्जुन पाथेयवन् मन्यमान सहर्षं स्वीचकार । लोकेऽपि यात्रायै प्रतिष्ठमान पुरुषो मध्येमार्गं भोजनाय स्वभार्यया प्रेम्णा समर्पित मिष्टान्नादिक पाथेय सहर्षं गृह्णाति, स्त्रियार्पित पाथेय पथि क्षेमकर भवतीत्यागम । पाथेयमञ्जलिना गृह्यते, अस्य दृष्टिपातस्य ग्रहणार्थं त्वर्जुनेन प्रसन्न मन एवाञ्जलीकृतम् । मनसा दृष्टिपातस्य ग्रहण तु सस्पृह दृष्ट्वा मनसि तथा सस्काररूपेण निवेशनम्-यथा प्रवासे तत् सतत स्मर्येत । मनसि पूर्व तेन दृष्टिपातेन प्रसादोदय, तदनु सस्काररूपेण तस्य स्थापनमिति द्योतयितु मन प्रसादस्याञ्जलित्वमुक्तम्, न तु मनस इति चित्रभानु ।

अल०—पाथेयमिवेत्युपमा । यात्रानुकूलत्वमेव पाथेयविलोकनयो साम्यम्, तत्र पाथेयस्य यात्रानुकूलत्व प्रसिद्धमेव, वीरपत्न्या द्रौपद्या मङ्गलविरोधवाष्पनिरोधपूर्वक समर्पित विलोकनमपि अर्जुनस्य विजयोत्साहमनोवलोपवृहकतया पाथेयवद् यात्रानुकूलमेव । मन'प्रसादाञ्जलिनेत्यत्रापि समासगा लुप्तोपमा । अत्रापि पूर्वपद्यवद्विप्रलम्भ-शृङ्गारो मुख्य प्रवत्स्यत्पतिका च नायिका ।

धैर्यावसादेन हृतप्रसादा वन्यद्विपेनेव निदाघसिन्धुः ।
निरुद्धवाष्पोदयसन्नकण्ठमुवाच कृच्छ्रादिति राजपुत्री ॥३८॥

अ०—धैर्यावसादेन हृतप्रसादा राजपुत्री वन्यद्विपेन ( हृतप्रसादा ) निदाघसिन्धुरिव निरुद्धवाष्पोदयसन्नकण्ठम् ( यथा स्यात् तथा ) कृच्छ्राद् इति उवाच ।

व्याक०—धैर्यस्य अवसादेन धैर्यावसादेन, हरणकर्तरि तृतीया । अवसादशब्दे सीदतेर्घञ् । हृत प्रसादो यस्या सा हृतप्रसादा । हृत इति क्तान्तन्, प्रसाद इति घञन्तम् । राज्ञ पुत्री राजपुत्री, पुत्रीत्यत्र पुत्रशब्दात्

"शार्ङ्गरवाद्यञो ङीन्" । वन्येन द्विपेन वन्यद्विपेन, वन्यशब्दे वनशब्दाद् भवार्थे यत् । द्वाभ्यां पिबतीति द्विप पाते कप्रत्यय । निरुद्ध वाष्पाणाम् उदयो यस्मिन् कर्मणि यथा भवति तथा निरुद्धवाष्पोदयम्, सन्न कण्ठो यस्मिन कर्मणि यथा भवति तथा सन्नकण्ठम्, निरुद्धवाष्पोदय च तत् सन्नकण्ठ च निरुद्धवाष्पोदयसन्नकण्ठम्, क्रियाविशेषणयो कर्मधारय । यद्वा-निरुद्धेन वाष्पोदयेन ( कर्म० ) सन्नः ( तत्पु० ) कण्ठो यस्यां क्रियायामिति निरुद्धवाष्पोदयसन्नकण्ठम् । निरुद्धशब्दे रुधिर् वातो. क्त । सन्नशब्दे सीदते क्त, "रदाभ्याम् " इति दतयोर्नत्वम् । कृच्छ्रात्-कृच्छ्र प्राप्येति ल्यब्लोपे, हेतौ वा पञ्चमी ।

व्याख्या—धैर्यस्य धीरतायाः, अवसादेन-भ्रंशेन, हृत -दूरीकृत , प्रमाद -प्रसन्नता-चेतसो निर्विकारता, यस्यास्तथोक्ता, क्षोभं प्राप्ता, राजपुत्री-क्षत्रियसुता द्रौपदी, वन्येन-वने भवेन, द्विपेन-हस्तिना, हृत -दूरीकृत , प्रसाद -निर्मलता यस्यास्तादृशी, *निदाघस्य-ग्रीष्मर्तौ , †सिन्धुरिव-नदीव, निरुद्ध -प्रतिरुद्ध , वाष्पोदय -अश्रुनिर्गमो यस्मिम् कर्मणि यथा भवति तथा, किञ्च सन्न -हीन'-गद्गद., कण्ठ -कण्ठस्वरो यत्र यथा भवति तथा, गद्गदस्वरेण, कृच्छ्रात्-कथंचिद्-अतिकाठिन्येन, इति-वक्ष्यमाणम् , उवाच-जगाद ।

भा०—यथा ग्रीष्मर्तौ स्वल्पजलत्वादगभीरा नदी आरण्यकेन गजेन विलोड्यमाना निर्मलतां जहाति, तथैव शत्रुनिकारदु खिता द्रौपदी पत्युरर्जुनस्य वियोगमसहमाना धैर्यभ्रंशेन अतितरां क्षुब्धाभवत् । किं च पत्युर्गमनसमयेऽमङ्गलं माभूदिति तया अश्रुनिरोधः कृत -इति पूर्वमुक्तम्, अश्रु-निरोधः कृत इति पूर्वमुक्तम् , अश्रुनिरोधे च वाक् स्पष्ट न प्रवर्तते, कण्ठश्च स्खलतीति स्फुट लौकिकानाम् । अत सा कथंचिदतिकठिनतया गद्गदस्वरेण अर्जुन प्रति क्षत्रियसुतोचित वक्ष्यमाणमुवाच । यद्यपि पति प्रत्युपदेशदानं पतिव्रतानामत्यन्तमनुचितम् , तथापि कृच्छ्रप्राप्ततया तया तथा कृतम् , अतएव कृच्छ्रादिति हेतुपञ्चमीनिर्वाह इति चित्रभानु. ।

---

* निदाघो ग्रीष्मकाले स्यादुष्णस्वेदाम्बुनोरपि—इति रामाश्रमी ।

† सिन्धुर्ना सरिति स्त्रियाम्—इत्यमर ।

अल०—उपमालङ्कारः हृतप्रसादत्व सिन्धुद्रौपद्यो सादृश्यम्, वन्यद्विपधैर्यावसादयोर्विम्बप्रतिविम्वभाव ,प्रसादपदे श्लेप ।राजपुत्रीति विशेष्यं क्षत्रियोचितभापणे साभिप्रायमिति परिकराङ्कुर.। पूर्ववद् विप्रलम्भध्वनि.। विपादोऽत्र व्याभिचारी व्यक्तः ।

**मग्ना द्विषच्छद्मनि पङ्कभूते सम्भावना भूतिमिवोद्धरिष्यन् ।**
**आधिद्विषामा तपसा प्रसिद्धेरस्मद् विना मा भृशमुन्मनीभू ॥३६॥**

अ०—पङ्कभूते द्विपच्छद्मनि मग्नाम् सम्भावनाम् भूतिमिव उद्धरिष्यन् (त्वम्) आधिद्विषान् तपसाम् प्रसिद्धे आ अस्मद् विना भृशम् मा उन्मनीभू ।

व्याक०—पङ्के इव, पङ्कभूते, भूतशब्दो * निभादिशब्दवदुपमाबोधक' । अथवा अपङ्क पङ्क भूत पङ्कभूतम्, तस्मिन् । " श्रेण्यादयः कृतादिभिः " इत्यनेन समास. । द्विषता छद्म द्विषच्छद्म, तस्मिन् । द्विषच्छब्दे द्वेष्टेः शतृप्रत्यय । आधिं द्विषन्तीति आधिद्वीषि, तेषाम्, तपोविशेषणम् । द्वेष्टेः कर्तरि क्विप्, आधिशब्दे दधाते " उपसर्गे घो कि " । मग्नाम् मज्जतेः क्त', " ओदितश्च " इति निष्ठानत्वम् । सम्भावनाम्-भावयतेर्युच् । उद्धरणकर्मणि द्वितीया । भूतिम्-भवते.-' क्तिच् ' सञ्ज्ञायाम् । उद्धरिष्यन्-उत्पूर्वाद् हरतेर्भविष्यति हेतौ शतृप्रत्यय । अनुन्मना उन्मना सम्पद्यमानः उन्मनी, उन्मन.-शब्दाद् भवतियोगे च्वि, " अरुर्मनश्चक्षुश्चेतो—" इति सलोपः । " अस्य च्वौ " इतीत्वम् । मा भू -" माङि लुङ् " । मध्यमपुरुषैकवचनम् । " न माङ्योगे " इत्यडागमाभावः । तपसामिति प्रसिद्धिसम्बन्धे षष्ठी, प्रसिद्धे'-" पञ्चम्यपाङ्परिभिः " इति कर्मप्रवचनीयस्य आङो योगे पञ्चमी, " आङ् मर्यादावचने " इत्याङः कर्मप्रवचनीयत्वम् । अस्मद्-"पृथग्विनानानाभि · " इति विनायोगे पञ्चमी ।

व्याख्या—पङ्कभूते-कर्दमसदृशे, ( पङ्करूपेण परिणते-इति-चित्रभानु )

---

* निभसकाशनीकाशप्रतीकाशोपमादयः इत्यत्रादिना भूतरूपकल्पादय.—इति रामाश्रम्या भानुजीदीक्षित । भूत क्ष्मादौ पिशाचादौ न्याय्ये सत्योपमानयो इति विश्वश्च ।

द्विषताम्-शत्रूणाम्, * छद्मनि-छले तत्प्रयुक्ते द्यूतादौ कपटे, मग्नाम्-निपत्य अदर्शनं गताम्-लीनाम्, सम्भावनाम्-योग्यताम्-जनेषु बहुमानम्-गौरवमिति यावद्, भूतिमिव-सम्पदमिव †, उद्धरिष्यन्-उद्धर्तुं प्रवर्त्स्यन्, त्वम्, आधिद्विषाम्-आधयः-मानस्यो व्यथा -दुःखानि, तान् द्विषन्ति-छिन्दन्ति इति तथाभूतानाम्, तपसाम्-बह्वीनां तपश्चर्याणाम्, प्रसिद्धेः आ-सम्यक्सिद्धिपर्यन्तम्, अस्मद् विना-अस्माकं विरहे, भृशम्-अत्यर्थम्, मा उन्मनीभूः-दुर्मनाः-उत्कण्ठितो न न भवेः, इत्याशंसा प्रार्थना वा ।

भा०—शत्रुभिश्छलेन यथा भवता सर्वा राज्यसम्पद् हृता, तथैव भवता सम्भावनापि हृता । पूर्वं लोकाः 'पाण्डवाः शूराः सन्तीति' भवतः समभावयन्, आसीच्च भवत्सु तेषां बहुमानः, परं सा सम्भावना-स बहुमानः, राज्यश्रिया सहैव द्विषच्छद्मनि लीनः । यथा गवादिः पङ्के निमज्जति, तथैव, पङ्कमग्नत्वाद् दुरुद्धरः सः । तस्य समुद्धारार्थैव भवान् तपसि प्रवर्तते, बहूनि तपांसि त्वया कर्तव्यानि स्युः । अत एव तपःसिद्धिपर्यन्तमस्मासु उत्कण्ठितेन दुर्मनायमानेन न भवितव्यम् भवता, यतः तपःसिद्धाविव न आधयो निवर्तिष्यन्ते । दौर्मनस्यं च तपोविघ्नकरमिति । यद्यपि भ्रात्रादिषु उत्कण्ठा दुस्त्यजा, तथापि तथा नोत्कण्ठितव्यम्-यथा तपो विहन्येत, एष एवार्थो भृशपदेन सूचितः । उन्मनीभूः-इति च्विप्रत्ययेन तस्य स्वाभाविकं धैर्यं द्योत्यते । समानोद्धार एव तपसां मुख्यं फलम्, सम्पदुद्धारस्तु आनुषङ्गिक इति च इवेन व्यञ्जितम् ।

अल०—यद्यपि भूतिमिवेतीवशब्देन भूतिसम्भावनयोरुपमानोपमेयभावः प्रतीयते, तथापि संभावनाया इव भूतेरपीह प्रस्तुतत्वमेवास्ति, उभयोर्वर्ण्ययोश्च समानधर्मसम्बन्धे तुल्ययोगितैव । भावार्थोक्तरीत्या सम्भावनाया एव मुख्यत्वादुपमैव वास्तु । पङ्कभूते-इत्यप्युपमा, रूपकं वा । सम्भावनाया गवादिसादृश्यं व्यङ्ग्यम् ।

यशोधिगन्तुं सुखलिप्सया वा मनुष्यसंख्यामतिवर्तितुं वा ।
निरुत्सुकानामभियोगभाजां समुत्सुकेवाङ्कमुपैति सिद्धिः ॥४०॥

---

* 'छलं छद्मस्खलितयोः' इति हैमः । † भूतिर्भस्मनि सम्पदि—इत्यमरः ।

अ०--यश अधिगन्तुम् वा सुखलिप्सया वा मनुष्यसख्याम् अतिवर्तितुम् अभियोगभाजाम् निरुत्सुकानाम् अङ्कम् समुत्सुकेव सिद्धिः उपैति ।

व्याक०--सुखस्य लिप्सया सुखलिप्सया, लिप्साशब्दे लब्धुमिच्छेति लभते सन्, "सनि मीमाधुरभलभ " इत्यनेन इस्, "अत्र लोपोऽभ्या· सस्य", "अ प्रत्ययात्" इति स्त्रियामप्रत्ययश्च । हेतौ तृतीया । मनुष्येषु सख्याम् मनुष्यसख्याम्, सख्याम् सपूर्वाच्चक्षे ख्याञादेशः, "आतश्चोपसर्गे" इत्यङ् । अभियोग भजन्ते इति तेषाम् अभियोगभाजाम्, "भजो ण्वि" उपपदसमास । अभियोगशब्दो घञन्त. । निर् उत्सुकानाम् निरुत्सुकानाम्, निरित्यव्ययमत्र नञर्थे । प्रादिसमास' । अथवा उत्सुकशब्दोत्र मत्सरादिशब्दवद् गुणवाची, तथा च निर्गत उत्सुकः ( औत्सुक्यम् ) येषा तेषा निरुत्सुकानाम्- इति बहुव्रीहि , अङ्कसम्बन्धे षष्ठी । अधिगन्तुम्, अतिवर्तितुम्, उभयत्र गच्छते , वर्ततेश्च क्रियार्थाया क्रियाया तुमुन् । उपैति-उपपूर्वादिण्धातोर्लट्, "एत्येधत्यूठ्सु" इति वृद्धिः । वाशब्द. समुच्चये विकल्पे वा ।

व्याख्या—यशः-कीर्तिम्, अधिगन्तुम्-प्राप्तुम्, वा-अथवा सुखलिप्सया- सुखप्राप्तीच्छया. वा, मनुष्येषु-मानवेषु, संख्याम्-गणनाम्, अतिवर्तितुम्- लोकोत्तर कर्म विधाय लोकवैलक्षण्य प्राप्तुमिति यावद्, अभियोगभाजाम्- अभितो योग अभियोग.-तत्परता, तद्वताम्, एकतानमनसा सलग्नानाम्, निरुत्सुकानाम्-स्वजनोत्कण्ठारहितानाम्, अत्यन्तोत्कण्ठारहिताना वा, पुरुषा- णाम्. अङ्कम्-उत्सङ्गम्. समुत्सुकेव-उत्कण्ठिता भूत्वेव, यद्वा समुत्सुका कामिनीव, सिद्धि -फलनिष्पत्ति , स्वयम्, उपैति-प्राप्नोति ।

भा०—ये पुरुषा यशोलाभाय, सुखप्राप्तये, लोकोत्तर कर्म विधाय दिव्यत्वाधिगतये वा निरुत्सुका भूत्वा प्रयतन्ते, फलसिद्धिस्तेषा पार्श्वे स्वयमेवागच्छति । यथोत्कण्ठिता प्रेयसी कान्तस्याङ्कमागच्छति तथेति । यदि कान्त. स्वयमेवौत्सुक्य प्रकटयेत्, तदा सा मान प्रदर्श्य विलम्बते, यदि तु कान्तो निरुत्सुक इव स्यात्, तदा सा समुत्सुका अङ्कमागच्छति, तथैव ये सिद्धावत्यर्थमासक्तिं दर्शयन्ति, न तेषा सिद्धिः सुलभा, ये तु केवलं प्रयत्नपरा अनुत्सुका , तेषा पार्श्वे सिद्धि. स्वय समेति । एतेन फलेऽप्यत्यर्थमौत्सुक्यं

निषिद्धम् । यद्वा यथा दिव्यपदमोक्षलाभार्थिभिः स्वजनौत्सुक्य परिहार्यम्, तथा लौकिकफलार्थिनामपि एकाग्रतामपत्तये यद्विषयक प्रयत्नस्तदितर-विषयकमौत्सुक्य निषिद्धमेव । अत एवार्जुनो द्रौपद्या भूयो भूय प्रबोध्यते, यत् तप सिद्धिपरायणेन भवता अस्मासु औत्सुक्य परिहर्तव्यमेवेति ।

अल०—समुत्सुकेवेति सिद्धेरनायासप्राप्तौ औत्सुक्यहेतुकत्वसम्भावना-दुत्प्रेक्षा, अनया च सिद्धेर्नायिकासाम्य व्यज्यते । 'सुमुत्सुकेव-अनुरक्तकान्तेव' इत्येव व्याख्याने त्वनुरक्तकान्तासाम्यादुपमा । विशेषे प्रस्तुते सामान्योपन्यासा-दप्रस्तुतप्रशसा । इह 'यशोऽधिगन्तुम्' 'सख्यामतिवर्तितुम्' इति तुमुन्न-न्तयोर्मध्ये 'सुखलिप्सया' इति प्रकारान्तर निवेशितमिति 'भग्नप्रक्रमता' दोष काव्यप्रकाशकार उदाजहार । चित्रभानुस्तु अत्रापि समाधिमाह-यशसो दिव्यपदप्राप्तेश्चोत्कर्ष प्रमाणान्तरैरेवावगम्यते, तत एव च तदुपायज्ञानमिति द्वय विज्ञाय पश्चादिच्छा प्रवर्तते-इतीच्छाया मुख्यत्वाभावात्साध्यसाधनभावबो-धकेन तुमुन्प्रत्ययेनैव तत्रोपादान युक्तम्, सुखस्य तु इच्छा प्राणिमात्रे स्वाभाविकी, इच्छयैव च तत्रोपायादिविमर्श इति इच्छाया प्राधान्यमभि-व्यञ्जयितु 'सुखलिप्सया' इति लाभेच्छाया हेतुत्वमुपात्तम् । यद्वा-सुखलिप्सया यशोऽधिगन्तु वा मनुष्यसख्यामतिवर्तितु वा—इति योजनीयम् । तेन सुखेच्छा मुख्या, तया च यश.प्राप्तौ दिव्यपदलाभे वा प्रवृत्तिरिति विकल्पद्वयमेव, न विकल्पत्रयम् । प्रत्येक विकल्पार्थं वापदसम्बन्ध इति ।

अथ चतुर्भिरर्जुनस्य तप प्रवृत्ति द्रढयितु कोपोद्दीपनाय
शत्रुकृतापकार वर्णयति—

**लोक विधात्रा विहितस्य गोप्तु क्षत्रस्य मुष्णन् वसु जैत्रमोज ।**
**तेजस्वितायाः विजयैकवृत्तेर्निघ्नन् प्रिय प्राणमिवाभिमानम् ॥४१॥**

अ०—विधात्रा लोकम् गोप्तुम् विहितस्य क्षत्रस्य जैत्रम् ओज वसु मुष्णन्, विजयैकवृत्ते तेजस्वितायाः प्रियम् प्राणमिव अभिमानम् निघ्नन् ।

व्याक०—विजय एव एका वृत्ति यस्याः, तस्या विजयैकवृत्ते· । विधात्रा-दधातेस्तृच्, विधानक्रियाकर्तरि तृतीया । गोप्तुम्-गुप्धातोस्तुमुन्, लोकमिति गोपनकर्म । विहितस्य-दधाते क्तः । जैत्रम्-जिधातो. ताच्छील्ये

तृन्, तत "प्रज्ञादिभ्यश्च" इति स्वार्थे ऽण्प्रत्यय । मुष्णन्-मुष्णातेः लक्षणे शतृप्रत्यय । तेजस्वितायाः-तेजश्शब्दाद् "अस्मायामेधास्रजो विनि", तदन्ताद् भावे तल् । प्रियम्-प्रीणाते क । अभिमानम्-मन्यतेर्घञ् । निघ्नन्-हन्तेर्लक्षणे शतृप्रत्यय । वसु-मुष्णाते कर्मणि द्वितीया ।

व्याख्या—विधात्रा-ब्रह्मणा, लोकम् भुवनम्, गोप्तुम्-रक्षितुम्, विहितस्य-कृतस्य-उत्पादितस्य, क्षत्रस्य-क्षत्रियजाते, जैत्रम्-जयशीलम्, *ओज -बलम्, तेजो वा, तदेव †वसु-धनम्, ( यद्वा-वसु-जैत्रम्-इत्येक पदम्, धनजयशीलम् ओज -इति चित्रभानु. ) मुष्णन्-अपहरन्, विजय -‡विजयलब्ध-धनमेव, एका-प्रधानीभूता, §वृत्ति -जीवनोपाय, यस्या तथोक्तायाः, तेजस्वितायाः-तेजस्विधर्मस्य-अर्थात् तेजस्विनाम्, ( विजये एकस्मिन् वृत्तिः-अवस्थिति. यस्या, तथाभूतायाः तेजस्वितायाः तेजोविशिष्टवृत्तेर्धर्मस्य इति चित्रभानु ) प्रियम्, प्राणमिव-प्राणतुल्यम्, अभिमानम्-अहङ्कारम्, निघ्नन्-खण्डयन्, स-शत्रुकृतो निकार, मे हृदय पुनर्नवीकरिष्यतीत्यग्रिमेण चतुर्थश्लोकेनान्वय । अत्रोक्त द्वयमपि निकारविशेषणम् ।

भा०—शत्रुभिर्योऽयमस्माक केशाकर्षणादिरूपः परिभव कृत, तेन खलु अस्माक तेजो हृतम्, तेज एव च क्षत्रियजातेर्मुख्यं धनम्, यतो लोकरक्षार्थमिय जातिर्विधात्रा सृष्टा, लोकरक्षा च दुष्टविजयसाध्या, विजयश्च तेजोऽधीन इति यद्वा सर्वेषामेव क्षत्रियाणा तेजोऽनेन हृतम्-यतो हि क्षत्रियाणा पश्यतामेवैतदत्याहित स्थानमलभत, यदि क्षत्रियाणा तेजोऽभविष्यत् तर्हि किमेतदत्याहितमप्रतीकार स्थानमलप्स्यतेति लोका विचारयन्ति । किंचैतेन परिभवेन स्वभुजार्जितमात्रमुपभुञ्जानाना तेजस्विना प्राणवत् प्रियोऽभिमानोऽपि

---

* ओजो बले च दीप्तौ च—इति विश्व ।

† वसु तोये धने मणौ—इति वैजयन्ती ।

‡ स्वामी रिक्थक्रयसविभागपरिग्रहाधिगमेषु, ब्राह्मणस्याधिक लब्धम्, क्षत्रियस्य विजितम्, निर्विष्टं वैश्यशूद्रयो., इति गौतमीये धर्मशास्त्रे विजिते क्षत्रियस्यासाधारणस्वत्वप्रतिपादनात् ।

§ वृत्तिर्वर्तनजीवने—इत्यमर ।

सरज्यते, क्षत्रियाणां हि मानहानिः प्राणहानिसमा । तेषां हि विजयसाधनी तेजस्विता माने एव तिष्ठति, मानस्तस्याः प्राण इव, मानाभावे तदनवस्थितेः । अत्र विजयैकवृत्ते इत्यनेन विशेषणेन क्षत्रियस्य विजितं द्रव्यमेवासाधारणं स्वं भवति इत्युक्तम् । तथा च अहं त्वया अनेकेषां क्षत्रियाणां मध्ये मत्स्यवेधं विधाय विजिता, अतस्तव मयि असाधारणं स्वत्वं भवति, इत्थं च त्वादृशस्य तेजस्विनः क्षत्रियस्य स्ववस्तुनः परिभवं पश्यतः किमेषा प्राणहानिसदृशी मानहानिः सोढव्या-इति निगूढोऽभिप्रायः । विजय इत्यर्जुनस्यैकं नाम, तेन विजये-त्वय्येवैकस्मिन् तेजस्विता तिष्ठतीत्यपि ध्वनितमिति चित्रभानुः ।

अल०—प्राणमिवेत्युपमालङ्कारः । विशेषणानां साभिप्रायत्वात् परिकरः । मुष्णन्-इत्यपहरणे लाक्षणिकम्, तथा तेजोऽपमानेनापह्रियते यथा क्षत्रियाणां तदपहरणविज्ञानमपि न भवतीति व्यङ्ग्यम् । ओजः वसु-इति रूपकम् ।

**व्रीडानतैराप्तजनोपनीतः संशय्य कृच्छ्रेण नृपैः प्रपन्नः ।**
**वितानभूतं विततं पृथिव्या यशः समूहन्निव दिग्विकीर्णम् ॥४२॥**

अ०—आप्तजनोपनीतः संशय्य व्रीडानतैः नृपैः कृच्छ्रेण प्रपन्नः पृथिव्याः वितानभूतम् दिग्विकीर्णम् विततं यशः समूहन्निव ।

व्याक०—आप्तैः जनैः ( कर्म० ) उपनीतः ( तृ० तत्पु० ) आप्तजनोपनीतः । उपनीत इति क्तान्तम् । कर्तरि तृतीयान्तस्य समासः । व्रीडया आनतैः व्रीडानतैः, व्रीडाशब्दे व्रीडधातोः "गुरोश्च हलः" इत्यप्रत्ययः । आनतैः-नमतेः क्तः । अवितानं वितानं भूतमिति वितानभूतम्, अथवा वितानमिव वितानभूतम् । वितानशब्दे तनोतेर्घञ् । दिक्षु विकीर्णम्-दिग्विकीर्णम्, विकीर्णशब्दे किरतेः क्तः, "ॠत इद्धातोः" । संशय्येति व्याख्यातम् । प्रपन्नः-पद्यतेः क्तः । रदाभ्यामिति नत्वम् । विततम् तनोतेः क्तः । समूहन्निव-ऊहतेः "उपसर्गादस्यत्यूह्योर्वेति वाच्यम्" इति पाक्षिके परस्मैपदे शतृप्रत्ययः, इकारे परे "ङमो ह्रस्वादचि ङमुण्नित्यम्" इति ङुडागमः । नृपैः-प्रपदनक्रियाकर्तरि तृतीया । कृच्छ्रेण-प्रकृत्यादित्वात् तृतीया ।

व्याख्या—आप्तैः-विश्वसनीयैः, जनैः, उपनीतः-प्रापितः-ज्ञापितः, तथापि ( असंभावितबुद्ध्या ) संशय्य-सन्दिह्य, ( जुगुप्सितवृत्तान्तश्रवणाद् जातया )

व्रीडया-लज्जया, आनतै -नम्रशिरस्कै, नृपै -(देशान्तरस्थै ) राजभि, कृच्छ्रेण-कथचित्, प्रपन्न -स्वीकृतः, विश्वस्त इति यावद्, ( अथवा आप्तजनै -स्वज्ञातिपुरुषै, उपनीत -उपस्थापित -कृत इति यावत्, सशय्य-कथमिदमन्याय्यमुपेत्यम्-इति विमृश्य, ( जुगुप्सितकर्मदर्शनाद् ) व्रीडानतै नृपै -तत्रत्यै-राजभि, कृच्छ्रेण कष्टेन, प्रपन्न -अङ्गीकृत -कुटुम्बकलहेषु मध्यस्थैरुदासितव्यमिति ( बुद्धयोपेक्षित इति ) पृथिव्याम्-भूमौ, *वितानभूतम्-उल्लोचतां प्राप्तम् उल्लोचसदृश वा, दिक्षु, विकीर्णम्-प्रसृतम्, दिगन्तविश्रान्तम् ( यद्वा वितानेन-यज्ञेन, राजसूयादिना, भूतम्-कृतम्, उत्पादितम् इति चित्रभानु• ) यश -( युष्माकम् ) कीर्तिम्, समूहन्निव-मार्जन्या सर्वतोऽपसार्य सकोचयन्निव, स शत्रुकृतो निकार इत्यादि पूर्वपद्यवच्छ्लेषो बोध्य ।

भा०—यदेष सभामध्ये जातोऽस्माक परिभवः देशान्तरीयैर्नृपतिभि श्रुत तदा तैरपि सहसा न तत्र विश्वास कृत•, यतस्तै• पूर्वं विचारित यद् नैवविध पराभव ईदृशाना वीराणा सभवति, परन्तु श्रावयितारो विश्वसनीया आसन्-अतस्तै कथचिद् विश्वास कृत एव, तदा च अस्माभिरसबद्धानामपि तेषा राज्ञा स्त्रीकेशकर्षणादिरूपस्य जुगुप्सितवृत्तस्य श्रवणाद् लज्जया मुखान्यवनतान्यासन्। अथवा सभाया विद्यमानैरन्यै राजभिरेषोऽत्याचार एतदर्थमुपेक्षितो-यद् दुर्योधनः पाण्डवानामात्मीय एव, आत्मीयकलहे च मध्यस्थैरुदासितव्यमेवेति, इतरथा ते कदापि नोपैक्षिष्यन्त। किं च यथा मार्जन्या प्राङ्गणादिगतोऽवकर• समृज्यते-तथैवैतेन परिभवेन दिक्षु वितानवद् विस्तृत भवता यशो निरवशेष प्रमृष्टम्। लोका युष्माक पूर्वतन प्रताप व्यस्मरानिति भाव । इह ' पृथिव्या वितानभूतम् ' इत्युक्त्या स्वर्गे यशःप्रसारो बोधित•, तेनार्जुनकृत खाण्डवदाहे देवपराभव• स्मार्यते, विततम्-इत्युक्त्या पृथिव्या विस्तार, तेन युधिष्ठिरस्य प्रजापालनसौष्ठव स्मार्यते, दिग्विकीर्णमित्युक्त्या भीमादिकृतो दिग्विजय स्मार्यते-इति चित्रभानु ।

अल०—समूहन्निवेत्युत्प्रेक्षा। वितानभूतमिति रूपकम्, उपमा वा। प्रपन्नतायामाप्तजनोपनीतत्वस्य हेतुत्वोक्त्या काव्यलिङ्गम्। यशसो वितानसादृ-

* अस्त्री वितानमुल्लोच-इत्यमर• ।

श्योक्त्या पृथिव्या भवनसादृश्य व्यज्यते इति चित्रभानुः ।

वीर्यावदानेषु कृतावमर्षस्तन्वन्नभूतामिव सम्प्रतीतिम् ।
कुर्वन् प्रयामक्षयमायतीनामर्कत्विषामह्न इवावशेष ॥ ४३ ॥

अ०—वीर्यावदानेषु कृतावमर्षः, सप्रतीतिम् अभूतामिव तन्वन्, आयतीनाम् प्रयामक्षयम् अह्नः अवशेष अर्कत्विषामिव कुर्वन् ।

व्याक०—वीर्येषु एव अवदानेषु वीर्यावदानेषु इति मल्लिनाथ, वीर्याणि चावदानानि च वीर्यावदानानि, तेष्विति चित्रभानुः । अथवा वीर्ययुक्तेष्ववदानेषु वीर्यावदानेषु, शाकपार्थिवादित्वान्म यमपदलोपः । अवदानशब्दे ' दैप् शोधने ' इत्यस्माद् धातोर्ल्युट् । कृत अवमर्ष. येन स कृतावमर्ष । अवमर्षशब्दे मृषुधातोर्घञ् । संप्रतीतिम्-इण्धातो क्तिन्, सम्प्रती उपसर्गो । तन्वन्-तनोतेर्लक्षणे शतृप्रत्यय । प्रयामशब्दे-प्रपूर्वाद् यम्धातोर्घञ् । क्षयम् क्षिधातो " एरच् " । अवशेष -अवपूर्वात् ' शिष्लृ ' धातोर्घञ् ।

व्याख्या—वीर्येषु-पुराकृतपराक्रमेष्वेव, †अवदानेषु-प्रशस्तकर्मसु, ( यद्वा वीर्येषु, अवदानेषु-प्रशस्तकर्मसु च ) कृत, अवमर्ष -आस्कन्दनम्-विनाशोपक्रम, येन तथोक्त, अत एव ‡ सम्प्रतीतिम्-प्रख्यातिम्, अभूतामिव-कदाप्यजातामिव, तन्वन्-विदधत्, आयतीनाम्-उत्तरकालिकसमृद्धीनाम्, प्रयामस्य-दीर्घताया क्षयम्-नाशम्, अह्न -दिनस्य, अवशेष -शेषभाग -सूर्यास्तसमय, अर्कस्य-सूर्यस्य, त्विषामिव-कान्तीना यथा, तथा कुर्वन्, निकार इत्यादि पूर्ववत् ।

भा०—किंचैतेन शत्रुकृतापकारेण भवता विक्रमे, पुराकृतेषु वीरकर्मसु तथाक्रमण कृतम्, यथा तेषा विलोप इव जात. । लोका न स्मरन्ति-न च श्रद्दधते यदेतै मध्येसभ स्वपत्नीतिरस्कार तूष्णीं सहमानै पाण्डवैः कदाचिद् विक्रान्त भवेत् । किं च अयैतेन तिरस्कारेण भवता कीर्तिस्तथा लोपिता, यथेय कदाचिज्जातेव नेत्यनुभूयते । अपि च-यथास्तमय काल. विस्तृता

---

* वीर्यापदानेषु कृताभिमर्शः-इति दाक्षिणात्यपाठ ।

† अवदान कर्म वृत्तम्—इत्यमर. ।

‡ प्रतीतप्रथितख्यातवित्तविज्ञातविश्रुता —इत्यमर ।

सूर्यप्रभा सङ्कोचयति, तथैवायमपकारो भवतामुत्तरकालिकीं समृद्धिमपि सङ्कोचितवान्। तिरस्कृताना कुत समृद्धिरिति।

अल०—अह इवावशेष इति उपमा। अभूतामिवेत्युत्प्रेक्षा, अप्रतीतिस्तत्र निमित्तम्। कृतावमर्ष इत्यवमर्षपद विनाशहेतुताया लाक्षणिकम्। बलादिव विनाशन व्यङ्ग्यम्।

**प्रसह्य योऽस्मासु परै प्रयुक्त स्मर्तुं न शक्य किमुताधिकर्तुम्।**
**नवीकरिष्यत्युपशुष्यदार्द्र स त्वद् विना मे हृदय निकार ॥ ४४ ॥**

अ०—परै अस्मासु प्रसह्य प्रयुक्त, य स्मर्तुम् न शक्यः अधिकर्तुम् किम् उत स निकार त्वद् विना आर्द्र (सन्) उपशुष्यद् मे हृदयम् नवीकरिष्यति।

व्याक०—प्रसह्य-प्रपूर्वात् सहतेर्ल्यप्। प्रयुक्त-युजूधातो कर्मणि क्त। स्मर्तुम्-स्मरते "शकधृष" इत्यादिना तुमुन्। शक्य-"शकि सहोश्च" इति शक्नोतेर्यत्। निकार-करोतेर्घञ्। उपशुष्यत्-शुष्यते शतृप्रत्ययः। नवीकरिष्यति-नवशब्दात् करोतेर्योगेऽभूततद्भावे च्वि। परैः-प्रयोजनकर्तरि तृतीया, अस्मासु अधिकरणत्वविवक्षया सप्तमी। त्वद्-विनायोगे पञ्चमी "पृथग्विनानानाभिस्तृतीयान्यतरस्याम्" इति।

व्याख्या—परै-शत्रुभि, अस्मासु, प्रसह्य-हठाद्-बलेन, प्रयुक्त-कृत, य-मध्येसभ केशाकर्षणादिरूपो निकार, स्मर्तुम्-चिन्तयितुमपि, न शक्य, अधिकर्तुम्-अनुभवितुम्, (आरब्धुम्-इति चित्रभानु) किमुत, स., निकार.-अपमान, त्वद् विना-भवद्वियोगे, आर्द्र-नूतनता प्राप्नुवन् सन्, उपशुष्यत्-कालक्रमेण क्षीणशोकम्, मे-मम (द्रौपद्या) हृदयम्, नवीकरीष्यति आर्द्रता नेष्यति, पुनः पूर्ववच्छोकातुर विधास्यति इति। इह मल्लिनाथ-त्वया विनेति उपशुष्यदित्यनेनापि योजयित्वा त्वया विना शुष्क मे हृदय निकारो नवीकरिष्यति-इत्यपि व्याचष्टे। उपशुष्यत्-साम्राज्यभ्रशवनवासादिना क्षीणप्राय हृदय निकार त्वया विना नवीकरिष्यति-नवदु.खानुबन्धं करिष्यति इति च व्याख्यान्तर चित्रभानुराह।

भा०—शत्रुभिर्हठादनुष्ठितस्य केशाकर्षणादिरूपस्य नः परिभवस्य स्मरणमपि दु.सहम्, तस्य प्रयोगविषये चिर तत्सहनविषये वा किमु वक्तव्यम्।

यद्यपि चिरात् तत् परिभवोद्भिम मे हृदय कालक्रमेण कथंचित् तत्सहने धीरता प्राप्तम्, तथापीदानीं त्वद्वियोगखेदापातात् स पुरातन परिभव• पुन स्मर्यमाणो नूतन इव पूर्ववद् हृदय खेदयिष्यति । यथा शनै शनै शुष्यति कस्मिश्चित् पुराणव्रणे यदि आघातान्तर भवेत्, तर्हि स पुनरार्द्रता गत पीडयति, तथैव दु खितस्य पुनरुपनतं दु खान्तर पुनरपि पुराण दु खमुद्घाटयतीति इति ।

अल०—अत्र शोषादिविशेषणसाम्याद् अप्रस्तुतव्रणवृत्तप्रतीते• समासोक्तिरिति मल्लिनाथः । उपशुष्यद्, नवीकरिष्यतीत्यादीना पदाना व्रण एव स्वारस्याद् निकारे व्रणत्वारोपप्रतीतेर्व्यङ्ग्य रूपकमिति युक्त भाति । चतुर्णां पद्यानामेक एवान्वय इति कलापकमिदम् । ‘ चक्र कलापको वा चतुर्भिरथ कुलकमत ऊर्ध्वम् ’ इति ।

प्राप्तोऽभिमानव्यसनादसह्य दन्तीव दन्तव्यसनाद् विकारम् ।
*द्विषत्प्रतापान्तरितोरुतेजा शरद्घनाकीर्ण इवादिरह्न ॥४२॥

अ०—( त्वम् ) अभिमानव्यसनाद् दन्तीव दन्तव्यसनाद् असह्यम् विकारम् प्राप्त द्विषत्प्रतापान्तरितोरुतेजा शरद्घनाकीर्ण अह्न आदिरिव ( अन्यम् आकारम् अभिपन्न इव ) ।

व्याक०—द्विषता प्रतापेन ( प०त० ) अन्तरितम् ( तत्पु० ) उरु तेज यस्य स द्विषत्प्रतापान्तरितोरुतेजाः, “ अत्वसन्तस्य ••” इति सौ दीर्घ । द्विषत्-शत्रन्तम्, “ द्विषोऽमित्रे ” इति । अन्तरितशब्दे-करोतिणिजन्तादन्तरशब्दात् क्त । प्रतापेनेति तत्कर्तरि तृतीया । प्रताप इति घञन्तम् । शरदि शरदो वा घनै आकीर्ण शरद्घनाकीर्ण । आकीर्णशब्दे किरते क्त । दन्ती-दन्तशब्दाद् “ अत इनिठनौ ” । व्यसनाद्-व्यसनशब्दे विपूर्वाद् अस्यतेर्ल्युट्, हेतौ पञ्चमी । सह्यम्-“ शकिसहोश्च ” इति सहतेर्यत् । प्राप्त-कर्तरि क्त , त्वमित्यस्य विशेषणम् ।

व्याख्या—हे अर्जुन ! त्वम्, अभिमानस्य-आत्मोन्नते , व्यसनाद्-भ्रशाद्, दन्तीव-हस्ती यथा, दन्तस्य, †व्यसनाद्-भ्रशात्, तथा, असह्यम्-सोढुम-

---

* द्विषत्प्रवाहान्तरितोरुतेजा , द्विषत्प्रभावान्तरितोरुतेजा –इति वा पाठान्तरम् ।

† व्यसन विपदि भ्रशे दोषे कामजकोपजे–इत्यमर ।

शक्त्यम्, विकारम् वैरूप्यम्, प्राप्त , द्विषताम्-शत्रूणाम् , प्रतापेन-तेजसा, अन्तरितम्-निगीर्णम्-तिरस्कृतम्, उरु-महत्, तेज -प्रताप -प्रभावो यस्य तादृश , अत एव शरद्घनै.-शरत्कालिकैर्मेघै , आकीर्ण -आवृत', अहः-दिनस्य, आदिरिव-प्रारम्भ इव-प्रत्यूष इव, स्थित., अन्यम् आकारमभिपन्नोऽसीत्युत्तरश्लोकेनान्वय ।

भा० —हे पार्थ ! यथा कश्चन दन्ती दन्तभ्रंशे जाते स एवायमिति प्रत्यभिज्ञातु न शक्यते, तथैव त्वमप्यात्माभिमाननाशेन न शक्यसे प्रत्यभिज्ञातुम्, यदय स एव धनजय -य उत्तरकुरून् विजित्यासंख्यं धनमाहृतवान्। वर्धमानेन शत्रुप्रतापेन तव तेजस्तथाच्छादितम् यथा त्व शरदृतुमेधैराच्छन्न प्रात काल इव निष्प्रभो न प्रत्यभिज्ञायसे । तदानीं हि एकत सूर्यप्रभा स्वय नृद्धी, सापि च मेघैरावृता इति हेतो प्रात काल एवायमिति प्रत्यभिज्ञा न प्रसरति, एव त्वमपि पूर्वतनतेजसो विनाशेन सर्वथा स एवायमिति न परिचीयसे । मध्याह्नस्तु मेघावरणे सत्यपि प्रत्यभिज्ञायते एवेति प्रत्यूषस्यैवोपमानत्वमुक्तम् । यथा शरद्घना न प्रावृड्घनवद् दुर्भेद्या , तथा तवापीयमापद् न दुर्भेद्या, अपि तु कृतयत्नस्त्व शीघ्रमिमा तरिष्यसीति शरत्पदव्यङ्ग्य चित्रभानुराह ।

अल० —एकस्यार्जुनस्यानेकोपमानप्रदर्शनान्मालोपमा । पूर्वत्र साधारणो धर्म आवरयकावयवभ्रंशेनाप्रत्यभिज्ञायमानता । अभिमानस्याप्यवयवत्वमुपचरितम् ।

**सव्रीडमन्दैरिव निष्क्रियत्वान्नात्यर्थमस्त्रैरवभासमान * ।**

**यश †क्षयक्षीणजलार्णवाभस्त्वमन्यमाकारमिवाभिपन्नः ॥ ४६ ॥**

अ० —निष्क्रियत्वाद् सव्रीडमन्दैरिव ( स्थितै ) अस्त्रै. अत्यर्थम् न अवभासमान , यश क्षयक्षीणजलार्णवाभ त्वम् अन्यम् आकारम् अभिपन्न इव (असि)

व्याक० —निर्गता क्रिया येभ्यस्तानि निष्क्रियाणि, तेषा-भावस्तत्त्वम्,

* ' रवभास्यमान ' इति-चित्रभानुधृतः पाठ. ।

† ' यश क्षयात् क्षीण ' इति चित्रभानुधृत' पाठ । युक्तश्च स , इह समासस्यासार्वत्रिकत्वात् ।

तस्माद् । क्रिया-कृधातो शप्रत्यय. । व्रीडया सह वर्तमानैः सव्रीडै., तुल्य-योगे बहुव्रीहि । सव्रीडैश्च तै. मन्दै सव्रीडमन्दै, विशेषणयो कर्मधारय, तदनु इवशब्देन समास । अर्थमतिक्रान्तमत्यर्थम्-'अत्यादय क्रान्ताद्यर्थे द्वितीयया" इत्यनेन समास । द्वितीयान्त क्रियाविशेषणमिदम । क्षीण जल यस्य स क्षीणजल, क्षीणशब्दे क्षिधातोः क्त, "निष्ठायामण्यदर्थे" इति दीर्घ, "क्षियो दीर्घात्" इति निष्ठातस्य नत्वम् । यशस क्षयात् (ष० तत्पु० ) क्षीणजलस्य अर्णवस्य (कर्म ) आभा इव आभा यस्य ( बहु० तत्पु० ) स यश शयक्षीणजलार्णवाभ । अर्णवशब्दे, अर्णस्शब्दाद् 'अर्णसो लोपश्च" इत्यनेन मतुबर्थीयो व-प्रत्यय., सकारलोपश्च । अवभासमान - भासते शानच् । अभिपन्न.-पद्यते कर्तरि क्त' ।

व्याख्या—निष्क्रियत्वाद्-शत्रुहननादिव्यापारशून्यत्वात्, सव्रीडै.-सलज्जानीमानीति सम्भाव्यमानै, अत एव मन्दै.-*अपटुभिरिव स्थितै, अपटुतया सम्भाव्यमानै, अस्त्रै -आयुधै., अत्यर्थम्-अतिशयेन, न अवभासमान -न विशुद्ध प्रकाशमान.-न शोभमान, यशस -कीर्ते, क्षयाद्-लोपात्, क्षीणम्-विनष्टम्, जल यस्य तादृशो य अर्णव -समुद्र, तदाभ -तत्सदृश', त्वम्, अन्यम्-पूर्वापेक्षया विलक्षणम्, आकारम्-स्वरूपम्, अभिपन्न इव-प्राप्त इव, असि ।

भा०—हे पार्थ ! इदानीं तवास्त्राणि क्रियाशून्यतया सलज्जानीव भान्ति, सलज्जो हि न विचेष्टितु प्रगल्भते । तव निकारेण तवास्त्राणामपि लज्जाभूत्, तत एव तानि व्यापारे न प्रवर्तन्ते-इति सम्भाव्यते । लज्जितस्य च अपटुतानि सत्त्वता स्वाभाविकी, अतो नि सत्त्वैरिव तैरस्त्रैस्त्व न शोभसे । 'अर्जुनोऽस्त्रैस्त्रिलोकीं जेतु समर्थ.-इति पूर्वं तव शोभाभूत्, इदानीन्तु शस्त्राणि व्यापारशून्यानि दृष्ट्वा न तथा सम्भावयन्ति लोका । तव पूर्वं सञ्चित यशोपि क्षीणम्, तथा च यथा क्षीणजल. समुद्र. केवल रिक्तगर्त' प्रतीयेत, तथैव यश क्षयात् त्वमपि नि सा.र प्रतीयसे । किं बहुना, त्वयि सर्वं तथा परिवृत्तम् यथा त्व पूर्वविलक्षणो लक्ष्यसे, न प्रत्यभिज्ञायसे इति । अस्त्रैः त्वमनवभास-

* मूढाल्पापटुनिर्भाग्या मन्दा —इत्यमर. ।

मान इत्युक्तम्, न तु अस्त्राण्यनवभासमानानीति, तेन अस्त्रेषु न प्रतीघातादिदोषः, त्वय्येव तदव्यापारण दोष इति द्योतितमिति चित्रभानु ।

अल०—सव्रीडमन्दैरिवेत्यस्त्रेषु व्रीडामान्द्यसम्भावनादुत्प्रेक्षा आभिपन्न इवेत्यप्युत्प्रेक्षा । क्षीणजलार्णवाभ इत्युपमा, जलयशसोर्विम्बप्रतिविम्बभावो गम्य । आसा ससृष्टि द्वयो पद्ययोरेकान्वय इति युग्मकमिदम्, संदानितकमिति केचित् ।

***दु शासनामर्षरजोविकीर्णैरेभिर्विनाथैरिव भाग्यनाथै. ।**
**केशै कदर्थीकृतवीर्यसार कच्चित स एवासि धनञ्जयस्त्वम् ॥ ४७ ॥**

अ०—दु शासनामर्षरजोविकीर्णैः ( अत एव ) विनाथैरिव भाग्यनाथैः एभिः केशैः कदर्थीकृतवीर्यसार त्वम् स. एव धनञ्जय. असि कच्चित् ।

व्याक०—दु शासनस्य ( कर्तरि षष्ठी ) आमर्षेण (ष० त० ) रजसा कर्म० ) विकीर्णैः (तृ० त० ) दु शासनामर्षरजोविकीर्णैः । दु शासनशब्दे शास्ते "भाषाया शासियुधि · " इत्यनेन युच् । आमर्षणम्-आमर्ष । घञन्तम् । विनष्ट. नाथ येषा तैरिव विनाथैरिव । भाग्यमेव नाथो येषा तै भाग्यनाथै । कुत्सित † अर्थ कदर्थः, "कुगतिप्रादय " इति समास. । "कोः कत्तत्पुरुषेऽचि " इति कुशब्दस्य कदादेश, अकदर्थौ कदर्थौ कृतौ कदर्थीकृतौ, अभूततद्भावे च्वि । वीर्यं च सारश्च वीर्यसारौ, कदर्थीकृतौ वीर्यसारौ यस्य स कदर्थीकृतवीर्यसार. । केशै.-कदर्थीकरणकर्तरि तृतीया ।

व्याख्या—दु.शासनस्य-दुर्योधनानुजस्य, आमर्ष -आकर्षणम्, दुःशासनकर्तृकमाकर्षणम्, तदेव ( अपकर्षलक्षणमालिन्यहेतुत्वाद् ) रज -धूलि, तेन विकीर्णैः-व्याप्तै, शिथिलबन्धैर्वा, अत एव विनाथै -अशरणैरिव, भाग्यनाथैः भाग्यमेव-दैवमेव, नाथ -शरणम्, येषा तथोक्तै·, एभि.-परिदृश्यमानै, बन्धरहितै, केशैः-शिरोरुहै, कदर्थीकृतौ-गर्हणीयवस्तुता प्रापितौ, ‡ वीर्यसारौ-शौर्य बले यस्य तादृशः, त्वम्, स एव-प्रसिद्ध उत्तरकुरुजेता, धनञ्जय -अर्जुन·,

---

* 'दुःशासनामर्श '—इति पाठान्तरम् ।

† अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु—इत्यमर. ।

‡ सारो बले स्थिरांशे च इत्यमर ।

असि-भवसि, * कच्चिद्, अन्यो वा तस्माद्विलक्षण कश्चिदर्जुनस्त्वमिति । चित्रभानुस्तु-त्वं स धनञ्जय एवासि कच्चिदिति योजयति । स प्रसिद्धोऽर्जुन एव किं त्वम्, अन्यो वा-इति जायते सन्देह इति ।

भा०—सभ्येसभ तव पश्यत इमे मम केशा दुःशासनेन आकृष्टाः, तदानीमेषां नाभूत् कश्चिद् रक्षकः, सत्स्वपि युष्मासु नाथेषु अनाथा इव इमे जाताः, तदानीं केवलं भाग्यमेवैतेषां शरणमभूत्, अन्यथैतेषां स्वरूपमपि लुप्येत, एवं स्वपत्नीकेशाकर्षणं तूष्णीमुपेक्षमाणस्य ते शौर्यं बलं चोभयमपि गर्हणीयतां गतम् । यत्तव वीर्यं देवैरपि दुरासदम्, तदचेतनैः केशैः कदर्थितम् । स एष विलक्षणः परिवर्तः तव धनञ्जयत्वं सन्देहयति, तस्मात् पृच्छामि-किं त्वं स एव-प्रसिद्धकर्माऽर्जुनोऽसि, उतान्यः कश्चिदिति । प्रश्नकाकुः न सः, यदि स एव त्वमभविष्यः, कथमस्मानुपैक्षिष्यथाः इत्याशयं मल्लिनाथ आह । चित्रभानुस्तु कच्चिदित्युक्त्या-'केवलमिष्टविषयं त्वां पृच्छामि, नत्वाक्षिपामीति' अभिप्रायमाह ।

अल०—विनाथैरिवेत्युत्प्रेक्षा । दुःशासनामर्षेति, भाग्यनाथैरिति च तत्र निमित्तम् । आमर्षरजः इति रूपकम् । मल्लिनाथरीत्या काकुवैशिष्ट्येन ध्वनिः । केशेषु कदर्थीकरणकर्तृत्वमौपचारिकम्, प्रयोजकत्वं लक्ष्यम् ।

**स क्षत्रियस्त्राणसहः सतां यस्तत् कार्मुकं कर्मसु यस्य शक्तिः ।**
**वहन् †द्वयीमप्यफलेऽर्थजाते ‡करोत्यसंस्कारहतामिवोक्तिम् ॥४८॥**

अ०—यः सताम् त्राणसहः सः क्षत्रियः, (अस्ति) यस्य कर्मसु शक्तिः तत् कार्मुकम् (अस्ति) अफले अपि अर्थजाते द्वयीम् उक्तिम् वहन् (जनः) (ताम्) असंस्कारहताम् इव करोति ।

व्याक०—त्राणे त्राणस्य वा सहः त्राणसहः । त्राणशब्दे त्रायतेर्ल्युट्, सहशब्दे सहते पचाद्यच् । अर्थस्य § जातं अर्थजातं, विषयसप्तमी ।

* कच्चित् कामप्रवेदने—इत्यमरः । 'कच्चिदिष्टपरिप्रश्ने' इति चित्रभानुधृतोऽमरः ।

† द्वयीं यद्यफलेऽर्थजाते इति पाठान्तरम् । तत्र यदिशब्दार्थान्वयश्चिन्त्यः, 'वहन्' इति शत्रन्तेन तदन्वयस्यास्वारसिकत्वात् ।

‡ 'त्यसत्कारहता' इति चित्रभानुधृतः पाठः ।

§ जातं जात्योघजन्मसु—इति विश्वः ।

सस्कारस्याभाव. असस्कारम्, अर्थाभावेऽव्ययीभाव, तेन हतामिव असस्कार-हतामिव । उक्तेर्विधेयविशेषणमिदम् । सताम्-अस्ते शत्रन्तस्य षष्ठीवहुवचनम् । क्षतात् त्रायत इति क्षत्र., पृषोदरादित्वात् साधु, अथवा क्षतस्त्रायत इति क्षत्र, क्विबन्तक्षदुपपदात् त्रायते. "सुपि" इति योगविभागात् क. । तस्यापत्य क्षत्रिय, "क्षत्राद् घ" । कर्मणे प्रभवति कार्मुकम्, कर्मशब्दात् "कर्मण उकञ्" । द्वयीम्-द्विशब्दादवयवार्थे तयप्, तस्य अयजादेश, तत. "टिड्ढाणञ् " इति ङीप् ।

व्याख्या—य.-पुरुष., सताम्-साधूनाम्, त्राणसह -रक्षणक्षमः, स एव, क्षत्रिय -*क्षत्रियशब्दवाच्य, अस्तीति शेष. । यस्य कर्मसु-युद्धक्रियासु, शक्ति -सामर्थ्यम्, तदेव कार्मुकम्-कार्मुकशब्दवाच्यम्, अस्ति । अफले-निष्फलेऽपि क्षतत्राणाक्षमे युद्धक्रियासामर्थ्यरहिते च अर्थजाते-अर्थसमुदाये, द्वयीम् उक्तिम्-उभाविमौ क्षत्रिय-कार्मुकशब्दौ, वहन्-नयन्-प्रयुञ्जान, जन, तामुक्तिम्, असस्कारेण-अव्युत्पत्त्या, हतामिव-दूषितामिव-अर्थशून्यामिव करोति ।

भा०—विपन्नरक्षणमेव क्षत्रियशब्दस्य प्रवृत्तिनिमित्तम्, एव रणकर्म-करणशक्तिरेव कार्मुकशब्दस्य प्रवृत्तिनिमित्तम् । क्षत्रियो वीर्यप्रधानेषु कर्मसु कर्ता, कार्मुक तु तत्र करणमिति द्वयोरनयोर्नित्य सम्बन्ध । परं य खलु क्षत्रकुलोत्पत्तिमात्रेण स्व पर वा क्षत्रिय मन्यते, न च विपन्नत्राण कर्तु क्षमते, यश्च इद श्रेष्ठवशनिर्मित प्रत्यञ्चासहित च विद्यते-इत्येतावतैव स्वरूपशोभामात्रफलेऽस्त्रे कार्मुकशब्दस्य प्रयोग करोति, स पुरुष इमौ क्षत्रियकार्मुकशब्दौ असस्कारेण दूषिताविवकरोति । अवयवार्थ एवात्र सस्कारशब्देन गृह्यते, उक्तेर्दूषितत्व चार्थशून्यत्वमेव । तथा च यस्य शब्दस्य यत्र व्युत्पत्तिर्न घटते, रुढिमात्रेण स शब्दस्तत्र प्रयुज्यमानो दुष्ट एव मन्तव्य, यथा अपचनकर्तरि पाचकशब्दो दुष्ट । एव च क्षत्रियस्त्व स्वकार्मुकेण विपद्ग्रस्तान् नो न रक्षसि चेत्तर्हि त्वयि क्षत्रियशब्दः, त्वदस्त्रे च कार्मुकशब्दो व्यर्थ एव भवेदिति ।

---

* क्षतत्राता क्षत.नीव क्षान्त. स्नोपु च नाधुपु । क्षत्रियः इति क्षत्रियगुणा भनिपुर्तरुका ।

अल०—अस्मानरक्षतस्ते क्षत्रियत्वं कार्मुकं च निष्फलमिति वक्तव्ये सामान्येनोपक्षेपादप्रस्तुतप्रशंसा । असंस्कारहतामिवेत्यत्रोत्प्रेक्षा मल्लिनाथ आह । तत्र हतत्वमात्रमुत्प्रेक्ष्यम्, असंस्कारस्तु तत्र निमित्तम् । अनयोः समासो दोषापादकः । यदि त्विवशब्दोऽपूर्णताबोधकः, उक्तिः सर्वथा नार्थशून्या, रूढ्या वाच्यस्यार्थस्य सत्त्वात्, परमवयवार्थासमन्वयेन कथंचिदर्थशून्येति, तदा नालंकारो न वा दोषः ।

**वीतौजसः सन्निधिमात्रशेषा भवत्कृतां *भूतिमपेक्षमाणाः ।**

**†समानदुःखा इव नस्त्वदीयाः सरूपतां पार्थ गुणा भजन्ते ॥ ४३ ॥**

अ०—हे पार्थ ! वीतौजसः सन्निधिमात्रशेषाः भवत्कृताम् भूतिम् अपेक्षमाणाः, त्वदीयाः गुणाः समानदुःखाः इव नः सरूपताम् भजन्ते ।

व्याक०—वीतम् ओजः येषां ते वीतौजसः, वीतशब्दे-विपूर्वाद् एतेः क्तः । सन्निधिरेव सन्निधिमात्रम्, मयूरव्यंसकादिसमासः, सन्निधिशब्दे दधातेः किः । तत् शेषः येषां ते सन्निधिमात्रशेषाः । भवता कृता भवत्कृताम्, "आशंसायां भूतवच्च" इत्यनेन करोतेः भविष्यदर्थे निष्ठा । समानं दुःखं येषां ते समानदुःखाः । समानं रूपं येषां ते सरूपाः, तेषां भावस्तत्ता, ताम् । "ज्योतिर्जनपदनाभिनाम ..." इत्यनेन समानस्य सादेशः । पार्थः-पृथाशब्दाच्छैषिकोऽण्-इति कौमुद्यां दीक्षितः, शिवादित्वादपत्यार्थेऽण्-इति तत्त्वबोधिनीकारः । अपेक्षमाणाः-ईक्षतेः शानच् । त्वदीयाः-युष्मच्छब्दाद् "वृद्धाच्छः" "प्रत्ययोत्तरपदयोश्च" इति युष्मदो मपर्यन्तस्य त्वादेशः ।

व्याख्या—हे पार्थ-हे अर्जुन, वीतम्-विनष्टम्, ओजः-दीप्तिः, प्रभा, (पक्षे-बलं प्रभावो वा) येषां तथोक्ताः, सन्निधिमात्रम्-सत्तामात्रम्, शेषः येषां तादृशाः अकिञ्चित्कराः, भवता, कृताम्-करिष्यमाणाम्, भूतिम्-अभ्युदयम्, अपेक्षमाणाः-आकाङ्क्षन्तः, (चित्रभानुस्तु भवता पूर्वं कृतां भूतिम्-खाण्डवदाह-कुबेरजयादिजनिताम्, समृद्धिम् अवेक्षमाणाः-विचारयन्तः, यथा पूर्वं कृता तथा पुनरपि करिष्यते इत्याशासानाः, इत्याह ) त्वदीयाः-त्वत्सम्ब-

---

* मवेक्षमाणाः-इति पाठान्तरम् ।

† सामान्यदुःखाः-इति चित्रभानुमतः पाठः ।

न्धिन , गुणा -शौर्यादय , समानम्-तुल्यम्, दु खं येषा तथोक्ता इव, सम्भाव्यमाना , न -अस्माकम्, सरूपताम्-सादृश्यम्, भजन्ते-प्राप्नुवन्ति ।

भा०—हे पार्थ ! इदानीं तव गुणा अपि सर्वथाऽस्मत्सादृश्य प्राप्नुवन्ति, तथाहि-यथा वय शत्रुतिरस्कारेण क्षीणप्रभावा., तथैव तव शौर्यादयो गुणा अपि निष्प्रभा', न लोके ख्यातिमन्तः, यथा नि.सारा वय स्वरूपमात्रेणाव-शिष्यामहे, एव तव गुणा अपि निष्फलत्वात् सत्तामात्रावशिष्टा , किं च यथा वय स्वाभ्युदयाय तव मुख प्रेक्षामहे, तथैवेमेऽपि तवालम्ब प्रतीक्षन्ते, मन्ये शत्रुकृतापकारदु.खमस्मानिवैतानपि व्यथयति, तत एवैतेऽपि वार्ताज-स्वादिधर्मविशिष्टा जाता इति । त्वया गुणा सामान्यदु खाः-त्वयि सुखिनि सुखिन , दु खिनि च दु खिन इति चित्रभानु ।

अल०—सरूपता भजन्ते इत्युपमा । सा च समानदुःखा इवेति हेतूत्प्रेक्षया सङ्कीर्यते ।

**आक्षिप्यमाण रिपुभि प्रमादान्नागैरिवालूनसटं मृगेन्द्रम् ।**
**त्वा धूरिय योग्यतयाधिरूढा *दीप्त्या दिनश्रीरिव तिग्मरश्मिम् ॥२०॥**

अ०—प्रमादाद् रिपुभि आक्षिप्यमाणम् ( अत एव ) नागै आलूनसटम् मृगेन्द्रमिव ( स्थितम् ) त्वाम् योग्यतया इयम् धू तिग्मरश्मिम् दीप्त्या दिनश्रीरिव अधिरूढा ।

व्याक०—आलूना सटा यस्य तम् आलूनसटम् । आलूना-लुनातेः क्त , 'ल्वादिभ्य " इति निष्ठातस्य नत्वम् । नागैरिति लवनकर्तरि तृतीया । तिग्मा रश्मयो यस्य त तिग्मरश्मिम् । दिनस्य श्रीरिव दिनश्रीरिव । प्रमादाद्-मायतेर्घञ्, हेतौ पञ्चमी । आक्षिप्यमाणगत प्रमादो रिपुकर्तृकाक्षेपे हेतु । आक्षिप्यमाणम्-क्षिपते कर्मणि शानच्, रिपुभिरिति तत्कर्तरि तृतीया । योग्यतया-युज्धातोर्ण्यत्, ' चजो " इति कुत्वम् । ततो भावे तल् । अधिरोहणहेतौ तृतीया, एव 'दीप्त्या' इत्यत्रापि बोध्यम् । अधिरूढा-रोहते॰ कर्तरि क्त ।

* दीप्ता दिनश्रीरिव—इति दाक्षिणात्यपाठः ।

व्याख्या—*प्रमादाद्-अनवधानाद्, रिपुभि -शत्रुभि, आक्षिप्यमाणम्-तिरस्क्रियमाणम्, अत एव प्रमादाद्, †नागै हस्तिभि, आलूना -आलुञ्चिता, ‡सटा -केसरा, यस्य तादृश मृगेन्द्रमिव-सिंहमिव, स्थितम्, त्वाम्, योग्यतया-निर्वाहकतया इय धू -शत्रुविजयरूप -प्रकृत कार्यभारः, तिग्मरश्मिम्-सूर्यम्, दीप्त्या-तेजसा, (हेतुभूतेन) दिनश्रीरिव-दिवसलक्ष्मीरिव-अधिरूढा-आश्रितवती।

भा०—हे पार्थ ! त्वयैतन्न मन्तव्यम्-यत्सत्स्वप्यन्येषु मय्येव विशिष्य किमर्थमयं भार आरोप्यते इति, यत अस्य भारस्य वहनयोग्यस्त्वमेवासि, यथा दिनशोभा दीप्तियुक्ते प्रखरकिरणे सूर्य एवायतते, न पुनरन्यत्र, एवमेव त्वय्येव एष भारो युक्त । नाय भारस्त्वयि केनचिदारोपित., अपि तु त्वा वहनक्षम दृष्ट्वा स्वय त्वय्यारूढ । यस्तु तवापि शत्रुभि. परिभव. कृत, तत्र तव प्रमाद एवालम्, न तु दुर्बलता, त्वयि सावधाने हि न जात्वपि शक्नुयुस्ते त्वा तिरस्कर्तुम् । मृगेन्द्रो हस्तिभिस्तावदेवालुञ्च्यते यावत् स प्रमादान् तान् उपेक्षते, तस्मिन्नवहिते तु तेषा नाश एव प्रत्यासीदति, तथैव त्वयि सावधाने शत्रून् नष्टानेव जानीहि । अतस्त्वयात्र कार्ये प्रमादिना न भवितव्यम् ।

अल०—पूर्वार्धे मृगेन्द्रार्जुनयोरुपमा, आक्षेपसटालवनयोर्बिम्बप्रतिबिम्बभाव । उत्तरार्धे दिनश्रीभारयोरुपमा । सूर्यार्जुनयो, दीप्तियोग्यतयोश्च बिम्बप्रतिबिम्बभावः । एवमुभयो ससृष्टि. । उपमाव्यङ्ग्य भावार्थे उक्तम् ।

**करोति §योऽशेषजनातिरिक्ता सभावनामर्थवतीं क्रियाभि ।**
**ससत्सु जाते पुरुषाधिकारे न पूरणी त समुपैति सख्या ॥ २१ ॥**

अ०—य अशेषजनातिरिक्ताम् सभावनाम् क्रियाभिः अर्थवतीम् करोति तम् ससत्सु पुरुषाधिकारे जाते पूरणी सख्या न समुपैति ।

व्याक०—अशेषाद् जनाद् अतिरिक्ताम् अशेषजनातिरिक्ताम् । शेषशब्दो

---

* प्रमादोऽनवधानता, इत्यमरः ।

† गजेऽपि नागमातङ्गौ—इत्यमर ।

‡ जटा सटाकेसरयोः—इत्यमरः ।

§ 'य. शेषजनातिरिक्ताम्'-इति चित्रभानुधृतः पाठः । शेष -स्वस्माद् भिन्न, जन.-लोक, तस्माद् अतिरिक्ताम्-अधिकाम्-इति तद्व्याख्यान तेन कृतम् ।

घजन्त । अतिपूर्वाद् रिच् धातोर्निष्ठायामतिरिक्ता । अर्थवतीम्-अर्थशब्दात् प्राशस्त्ये मतुप्। ससीदन्त्यस्यामिति ससत्, अधिकरणे क्विप् । पूरणी-पूर्यतेऽनयेति पूरयतेर्ल्युट्, टित्त्वाद् ङीप् । समुपैति-एतेर्लट्, समुपावुपसर्गौ, वृद्धि । क्रियाभि करणे तृतीया । जाते-सति सप्तमी ।

व्याख्या—य पुरुषः, अशेषजनातिरिक्ताम्-अखिलान् जनान् अतिक्रम्य वर्तनानाम्-सर्वाधिकाम्, सम्भावनाम्-योग्यताम् सर्वजनाशसाम्-इति यावत्, (सम्भावनाम्-सनतिम्, लोकाना स्वविषयिणीम् इति चित्रभानु ) क्रियाभि'-स्वकर्मभि. पौरुषेण, अर्थवतीम्-सफलाम्, करोति, तम्-पुरुषम्, ससत्सु-सभासु, पुरुषाणाम्-योग्यव्यक्तीनाम्, अधिकारे-गणनाप्रस्तावे-जाते सति, पूरणी सख्या तीयादि-पूरणप्रत्ययान्ता सख्यावाचका द्वितीय-तृतीयादिशब्दा , न समुपैति-न प्राप्नुवन्ति-नाभिदधते ।

भा०—य. पुरुष स्वविषये प्रवृत्ताम् 'अयमेव भव्यो निपुणश्च नान्ये' इत्येव सर्वजनातिशायिनी लोकाना सभावना तदनुरूपाणि कर्माणि कृत्वा चरितार्था विधत्ते, स पुरुष सभासु योग्यपुरुषगणनाप्रसङ्गे सर्वत' प्रथम एव गण्यते। पूरणप्रत्ययान्ता द्वितीयादिशब्दास्तद्विषये न प्रयुज्यन्ते । यदि कश्चित्तदपेक्षयोत्कृष्ट स्यात्, तदा स द्वितीयस्तृतीयो वा गण्येत, स एव तु सर्वोत्कृष्ट इति प्रथम एव स गण्यत इति । त्वयि च सर्वेषा विशिष्टा सभावना, यदय सर्वातिशायी वीर इति, 'पार्थ एव धनुर्धर ' इति हि लोके प्रथते। यदि शत्रून् विजित्य सा सम्भावना त्वया सफला क्रियेत तदा त्वमेव लोके प्रथमगणनीय सुयशोभाक् स्याः इति ।

अल०—विशेषे प्रस्तुते सामान्येन वर्णनादप्रस्तुतप्रशसा । सर्वमुख्यत्वप्रतिरूपस्यार्थस्य भङ्ग्यन्तरेणाभिधानात् पर्यायोक्त च ।

प्रियेषु यै पार्थ विनोपपत्तेर्विचिन्त्यमानै क्लममेति चेत ।
तव प्रयातस्य जयाय तेषा क्रियादघाना * मघवा विघातम् ॥५२॥

अ०—हे पार्थ ! प्रियेषु उपपत्ते विना विचिन्त्यमानै. यै ( अघै ) चेत क्लमम् एति, जयाय प्रयातस्य तव तेषाम् अघानाम् मघवा विघातम् क्रियात् ।

* मघवान् विधातम् इति चित्रभानुधृत पाठ ।

व्याक०—प्रियेषु-प्रीणातेः-" इगुपधज्ञाप्रीकिरः कः " विषयसप्तमी । उपपत्तें -पद्यते क्तिन्, विनायोगे पञ्चमी । विचिन्त्यमाने -चिन्तयतेः कर्मणि शानच् । क्लमम्-क्लाम्यतेर्घञ्, उदात्तोपदेशत्वाद् वृद्धिनिषेधः प्रयातस्य याते-र्निष्ठा । विघातम्-हन्तेर्घञ्, ' हनस्तो ' इति नस्य तकार, "हो हन्ते .." इति हस्य घः । क्रियात्-करोतेराशीर्लिङ्, " रिङ् शयग्लिङ्क्षु " इति रिङ् । यै -क्लमहेतौ तृतीया । जयाय-तादर्थ्ये, जय लब्धुमिति अप्रयुज्यमानतुमुन्नन्त-कर्मणि वा चतुर्थी । अघानाम्-विघातकर्मणि षष्ठी ।

व्याख्या—हे पार्थ ! हे अर्जुन ! प्रियेषु-प्रियजनविषये, ( अस्मासु इति मल्लिनाथ. ) उपपत्तें विना- कारणं विनैव, ( युक्तिं विनैवेति वा ) विचिन्त्य-माने -अशङ्क्यमाने , यैः † अघै -दु.खै., चेत -प्रियजनमन , क्लमम्-खेदम्, एति-प्राप्नोति, जयाय-शत्रुविजयार्थम्, प्रयातस्य-प्रोषितस्य, तव, तेषाम् अघा-नाम्-दु खानाम्, मघवा-इन्द्रः, विघातम्-विनाशम् , क्रियात्-विधेयात् ।

भा०—पार्थ ! प्रियजना प्रोषितस्य स्वप्रियस्य सम्बन्धे बहून्यनिष्टान्या-शङ्कन्ते, आशङ्क्य च स्वय दुःखिता भवन्ति, ' इदमनिष्ट तस्य कुत. सम्भा-व्यते, एवविधे तस्मिन् ईदृशस्यानिष्टस्य योग्यतास्ति न वा ' इति कारणानि युक्तीश्च न ते विचारयन्ति, अपि तु प्रेम्ण स्वभाव एष -यत्स पापशङ्की भवति तथा च त्वद्विषयेऽप्यस्माभिर्बहून्यनिष्टान्याशङ्किष्यन्ते । तेषा सर्वेषामस्माभिश्चि-न्तयिष्यमाणाना तवानिष्टाना त्वया आराधयिष्यमाणो भगवानिन्द्र एव समूल नाश विदधातु । अस्मच्चिन्तितान्यनिष्टानि मा ते भूवन्निति । ' प्रियजनाचि-न्तित कस्यापि मा भूद् ' इति हि लोकोक्ति । मल्लिनाथस्तु प्रोषितस्य तव चेतसि अस्माकं विषये-कथं मे भ्रातर. स्युः ' किमपि कष्ट तु नापतित तेषामुपरि ' मद् विना कथ ते स्थास्यन्ति ' इत्याद्या अनर्थशङ्काः उत्पद्येरन्, ताभिश्च तव दुःखमपि सम्भाव्यते, तस्य दु खस्य स भगवानिन्द्रो नाश विदधातु इत्यभि-प्रायमाह । पर तस्मिन्नर्थे ' तव अघानाम् ' इत्युक्तिस्वारस्य नास्ति । ' अस्म-द्विना मा भृशमुन्मनीभू. ' इति पूर्वोक्तमेव च तथा सति पुनरुक्त स्यात् । स्वस्य दु खनाशप्रार्थनापेक्षया प्रियस्य दु खनाशप्रार्थनैव युक्ततरेति च विवेच-

† दुःखाघव्यमनेष्वघम्—इत्यमर ।

यन्तु सुधियः । किं चात्राशीरर्थके लकारे सत्यपि स्वयं तथा व्याख्यायापि च कर्तव्योपदेशमत्र मल्लिनाथो मनुते-इत्यहो महतामपि प्रमाद ।

अल०—सर्वाण्यनिष्टानि ते दूरीभवन्तु-इत्यर्थस्य वैचित्र्येणोक्त्या पर्यायोक्तम, लोकप्रवादानुकरणाल्लोकोक्ति । विनोपपत्तेर्विचिन्त्यमानैरिति गम्यो विरोध । आशसया प्रेमातिशयो व्यङ्ग्य ।

**मा गाश्चिरायैकचर प्रमाद वसन्नसबाधशिवेऽपि देशे ।**
**मात्सर्यरागोपहतात्मना हि स्खलन्ति साधुष्वपि मानसानि ॥५३ ॥**

अ०—असबाधशिवे अपि देशे चिराय वसन् एकचर (त्वम्) प्रमादम् मा गा, हि मात्सर्यरागोपहतात्मनाम् मानसानि साधुषु अपि स्खलन्ति ।

व्याक०—न सम्बाध यस्मिन् ( बहु० ) स चासौ शिवश्च ( कर्म० ) तस्मिन् असबाधशिवे । अथवा सबाधस्याभावोऽसबाधम्, अर्थाभावेऽव्ययीभाव, तेन शिवे । सम्बाधशब्दे कर्मणि घञ्, चरतीति चरः, पचाद्यच्, एकश्चासौ चरश्च एकचर, "पूर्वकालैकसर्वजरत्—" इत्यनेन समास., मात्सर्येण च रागेण च ( द्वन्द्व० ) उपहत. ( तत्पुरु ) आत्मा येषा ( बहु० ) तेषा मात्सर्यरागोपहतात्मनाम्, मानससम्बन्धे षष्ठी । मात्सर्यशब्दे मत्सरशब्दात् स्वार्थे ष्यञ्, चातुर्वर्ण्यादित्वात् । ( यद्वा रञ्जन राग', मात्सर्येण राग, तेनोपहतात्मनाम्—इति चित्रभानु. ) वसन्-वसतेःलक्षणे शतृप्रत्यय । मा गा, एतेर्लुङि रूपम् "इणो गा लुङि" इति गादेश, माङ्योगेऽडागमाभावः। साधुषु-इति विषयसप्तमी ।

व्याख्या—* सबाधः-जनसमर्द, तद्रहिते, अत एव शिवे-शान्तेऽपि, देशे-स्थाने, चिराय-बहुकालपर्यन्तम्, वसन्-निवास कुर्वन्, एकचर -एकाकी, विचरन्-त्वम्, प्रमादम्-अनवधानम्, मा गा -प्रमाद मा कार्षीरित्यर्थ. । हि-यत, मात्सर्येण-अन्योन्नतिद्वेषेण, रागेण-अनुचिताभिलाषेण च, उपहत -दूषित, †आत्मा-मनः, स्वभावो वा येषाम् ( यद्वा-मात्सर्येण, राग -रञ्जनम्, तेन-मात्सर्यरञ्जिततया दूषितमनसाम्-इति चित्रभानु ) तेषा पुरुषाणाम्,

* सकट ना तु सबाध.—इत्यमर. ।

† आत्मा यत्नो धृतिर्बुद्धि. स्वभावो ब्रह्म वर्ष्म च—इत्यमरः ।

मानसानि-चेतांसि, साधुषु-सज्जनेष्वपि, स्खलन्ति-विचलन्ति विकुर्वते, साधूनपि वञ्चयितुं मात्सर्यशालिनः प्रवर्तन्ते इत्यर्थः । चित्रभानुस्तु चिराय-बहुकालम् प्रमादं मा गा -इति योजयति ।

भा०—पार्थ ! विजने प्रदेशे चिरं त्वया स्थेयम्, भृत्यादिविरहेण चैकाकिनैव तत्र तत्र पर्यटनीयम् । अन्यो यदि सहायो भवेत्, तर्हि स समये समये हितं बोधयेत्, परं तादृशस्य सहायस्याभावात् स्वयमेव त्वया सततमवहितेन स्थातव्यम् । 'विजनः शान्तश्चायं प्रदेशः, किमत्रानिष्टं सम्भाव्यते, किं च नाहमत्र कस्यापि प्रियमप्रियं वा करोमि, तत्कुतो मे कश्चिद्वैरी स्यात्' इति विचार्य प्रमादस्त्वया न कार्यः । यतो हि भवन्ति तादृशा रागद्वेषदूषिता जनास्तत्रापि, ये सत्पुरुषाणामप्यनिष्टं संपादयितुं यतन्ते इति । मात्सर्यदूषिततया शत्रुसम्भावनोपन्यस्ता, रागदूषितत्वोक्त्या चाप्सरःप्रभृतीनां स्त्रीणामासक्तिसंभावना प्रोक्ता, उभयत्रापि सावधानेन त्वया भाव्यमिति कर्तव्योपदेशः ।

अल०—प्रमादपरिहारोपदेशसूचितायाः अनिष्टप्राप्तेः सामान्येनोत्तरार्द्धे समर्थनादर्थान्तरन्यासः । यद्वा प्रमादपरिहारस्य हेतूपन्यासेन समर्थनात् काव्यलिङ्गम् । असंबाधशिवेपि-इत्यपिद्योत्यो विरोधः, स च तत्रानिष्टसम्भावनया द्योतिततया सह ज्ञेयः । एकचरः इति प्रमादसम्भावनासूचकमिति परिकरश्च ।

**तदाशु कुर्वन् वचनं महर्षेर्मनोरथान्नः सफलीकुरुष्व ।**
**प्रत्यागतं त्वास्मि कृतार्थमेव स्तनोपपीडं परिरब्धुकामा ॥२४॥**

अ०—तद् महर्षेः वचनम् आशु कुर्वन् नः मनोरथान् सफलीकुरुष्व, कृतार्थम् प्रत्यागतम् एव त्वा स्तनोपपीडम् परिरब्धुकामा अस्मि ।

व्याक०—महत् ऋषेः महर्षेः, "आन्महतः—" इति महच्छब्दस्यात्वम्, गुणश्च । *मन एव रथो यत्र तान्, वा मनसो रथाः, तान्, वा मनांसि रथाः

---

* मनोरथाः कामा उच्यन्ते, तत्तासां काम्यविषयसंपृक्तानां वासनानां मन एव रथः, मनसि ता उपारूढा भवन्तीति प्रथमव्युत्पत्तावर्थः । ता एव कामना मनसः परिचालिकाः तत्र तत्र नेत्र्यो भवन्ति रथा इव जनानामिति द्वितीयव्युत्पत्तौ । मनःपदं मनोवृत्तिपरम्, ताश्च वृत्तयो रथा इव पुरुषस्य तत्र तत्र नेत्र्य इति तृतीयव्युत्पत्तौ ।

इव, तान् मनोरथान् । फलेन सह वर्तन्ते सफलाः, असफलान् सफलान् कुरुष्व इति सफलीकुरुष्व । प्रार्थनाया लोट् । कृत अर्थ येन त कृतार्थम् । स्तनाभ्याम् उपपीड्य स्तनोपपीडम् । "सप्तम्या चोपपीडरुधकर्ष" इत्यनेन तृतीयान्त उपपदे णमुल् । "तृतीयाप्रभृतीन्यन्यतरस्याम्" इत्यनेन समासः । परिरब्धु कामो यस्या सा परिरब्धुकामा । परिरब्धुम्–परिपूर्वाद् रभतेस्तुमुन् । "तुकाममनसोरपि" इति तुमुनो मलोप. । कुर्वन्-करोते. हेतौ शतृप्रत्यय. । त्वा-त्वामितयस्य "त्वामौ द्वितीयायाः" इति त्वादेश । त्वमिति कुरुष्व क्रियाया , अहमिति अस्मिक्रियाया कर्तृपदे अध्याहार्ये । अस्मीत्यव्ययमहमर्थे-इति चित्रभानु., तन्मते क्रियान्तरमध्याहार्यं स्यात् ।

व्याख्या—तत्-तस्मात् कारणात्, मयोक्त सर्वं सम्यग् विचार्य, महर्षे -व्यासस्य, वचनम्-आदेशम्-तप करणरूपम्, आशु-शीघ्रम्, कुर्वन्-अनुतिष्ठन्, त्वम्, न.-अस्माक सर्वेषाम्, मनोरथान्-अभिलाषान्-शत्रुनाश-राज्यलाभादिरूपान्, सफलीकुरुष्व-सफलान् विधेहि । अहम्, कृतार्थम्-कृतकृत्यम् , प्रत्यागतम्-प्रतिनिवृत्तम्, एव त्वाम्, स्तनोपपीडम्-*स्तनाभ्याम्-कुचाभ्याम्, उपपीड्य-संबाध्य, गाढम्, परिरब्धुकामा अस्मि-आलिङ्गितुमिच्छामि ।

भा०—पार्थ ! यन्मया विवृतम्, तत्सर्वं विचार्य महर्षेरादेशमनुसृत्य तपोऽनुतिष्ठन् सर्वेषा त्वद्भ्रातृणा मम च कामान् पूरयस्व । अस्माक केवलं ते मनोरथा एव, त्व तु तत्पूरणेऽपि समर्थ इति । तेन तवापि अस्माभि सह समृद्धिलाभ , कीर्तिलाभश्च स्वतन्त्र स्यादिति कुरुष्वेत्यात्मनेपदेन द्योत्यते । यद्यपि प्रवासकाले गाढमालिङ्गन कर्तुमुचितम्, तथापि निकारसतप्ते मनसि न तत्प्रीतिदमिति, यदा त्व कृतार्थ प्रत्यावर्तिष्यसे, तदैव त्वा गाढमालिङ्गिष्यामि । एवपदेन 'नास्मिन् समये' इति वर्तमाने परिरम्भण व्यावर्त्यते । ईदृशे अत्यावश्यकेऽपि नर्मण्यप्रवृत्ति परिभवजनितस्य सतापस्यातिशय व्यनक्ति । यद्वा-कृतार्थमेव प्रत्यागतमिति योज्यम्, तेन न त्व यत्नपरोऽकृतार्थ कथमपि स्या -इति फलप्राप्तौ निश्चयो द्योत्यते । 'कृतार्थमेवम्' इति पाठान्तर चित्रभानुराह, तत्रायमर्थ

---

* स्तनयोरुपपीड्य इति व्याचचाण , पुरुषस्यापि स्तनौ, तयोरपि च स्त्रिया उपपीडन प्रकल्पयन् मल्लिनाथस्तु सर्वथा वन्द्य एव ।

कृतालिङ्गना द्रौपदी ब्रवीति-यदा त्वं कृतार्थः परावर्तिष्यसे तदा एवमेव त्वां पुनरालिङ्गिष्यामि-इति ।

अल०-प्रथमव्याख्यायां परिसंख्यालङ्कारः । तृतीयव्याख्यायाम् 'एवमिति' सादृश्योक्तेरुपमा व्यङ्ग्या । शृङ्गाररस चित्रभानुराह, न तु स सहृदयानां हृदयविश्रामभूमिरत्र । परिभवप्रतीकारेच्छाया एवोत्कटत्वात् ।

**उदीरितां तामिति याज्ञसेन्या नवीकृतोद्ग्राहितविप्रकाराम् ।**

**आसाद्य वाचं स भृशं दिदीपे काष्ठामुदीचीमिव तिग्मरश्मिः ॥ ५१॥**

अ०—इति याज्ञसेन्या उदीरिताम् नवीकृतोद्ग्राहितविप्रकाराम् ताम् वाचम् आसाद्य सः उदीचीम् काष्ठाम् (आसाद्य) तिग्मरश्मिरिव भृशम् दिदीपे ।

व्याक०—अनवो नवः सम्पद्यमानः कृतः नवीकृतः, पूर्वं नवीकृतः पश्चात् उद्ग्राहितः विप्रकारः यया तां नवीकृतोद्ग्राहितविप्रकाराम्, "पूर्वकालैकसर्व-" इति कर्मधारयगर्भो बहुव्रीहिः । अथवा नवीकरणं नवीकृतं, "नपुंसके भावे क्तः" तेन उद्ग्राहितः (तत्पु०) विप्रकारः यया ताम्, अत्र पक्षे नवीकृतमिति उद्ग्राहणाया करणम्, नवीकरणद्वारा ग्राहितः इत्यर्थः । चित्रभानुस्तु-उद्ग्राहितो विप्रकारः उद्ग्राहितविप्रकारः, नवीकृतः उद्ग्राहितविप्रकारो ययेति व्याचष्टे । उद्ग्राहितशब्दे गृह्णातेर्णिजन्तात् क्तः, विप्रकारः-विप्रपूर्वकात् करोतेर्घञ् । यज्ञसेनस्यापत्यं स्त्री याज्ञसेनी, तया, उदीरणकर्तरि तृतीया । उदीरिताम् ईर्धातोः क्तः । आसाद्य-आसादयतेर्ल्यप् । उदीचीम्-उत्पूर्वादञ्चतेः क्विन्, स्त्रीत्वविवक्षायाम् "उगितश्च" ङीप्, भत्वाद् "उदईत्" ।

व्याख्या-इति-पूर्वोक्ताम्, याज्ञसेन्या-द्रौपद्या, उदीरिताम्-कथिताम्, नवीकृतः-पुनरुद्घाटनेन नवतां नीतः, उद्ग्राहितः-अनुभावितश्च, विप्रकारः-परिभवः, यया ताम् (यद्वा नवीकृतेन-नवीकरणेन-नवीकरणपूर्वकम्, उद्ग्राहितः-अनुभावितो विप्रकारो यया ताम्, यद्वा-चित्रभानुरीत्या नवीकृतः, उद्ग्राहितविप्रकारः-शत्रुदत्तपरिभवो यया ताम्) ताम्-पूर्वोक्ताम्, वाचम्-वाणीम्, (यद्वा-उदीरितान्ताम्-उदीरितः-कथितः अन्तः सिद्धान्तो यस्याम्, तथाभूतां वाचमिति व्याख्यान्तरं चित्रभानुः) आसाद्य-प्राप्य-ज्ञात्वा-श्रुत्वा, उदीचीम् उत्तराम्, काष्ठाम्-दिशम्, आसाद्य-प्राप्य,

* दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः—इत्यमरः ।

तिग्मरश्मिरिव सूर्य इव, भृशम्-अत्यर्थम्, दिदीपे-जज्वाल चुक्रोध।

भा०—पूर्वं प्राप्तोऽपि परिभवो व्यासङ्गाद् विस्मृत इव, स इदानीं द्रौपद्या अभिनिवेशवाचा पुनरुद्घाट्य-पुनर्नवीकृत्यानुभावित, इति तेनार्जुनस्य क्रोध· प्रदीप्तोऽभूत्। यथा स्वभावदीप्तोऽपि सूर्यो दक्षिणा दिशमासाद्य कथचिदल्प-तेजा उदीचीं प्राप्य पुन प्रदीप्तो भवति, तथैव स्वभावेन तेजस्वी अप्यर्जुनो ज्ञातिवात्सल्यात्कथचित्सौम्यता गतो द्रौपदीवाचमाकर्ण्य पुन प्रदीप्तोऽभूदिति।

अल०—उपमा स्फुटैव। नवीकृतेत्यादिविशेषण दीपने साभिप्रायमिति परिकर। अर्जुननिष्ठो वीररस इत आरभ्य परिपोष नीयते। तस्य व्यभिचारी क्रोध इहोपस्थापित। उपजातिरिद छन्द। अस्मिन् सर्गे प्रायेणेदमेव च्छन्द आरम्भात्, क्वचित्तु शुद्धा इन्द्रवज्रा, उपेन्द्रवज्रा वापि।

**अथाभिपश्यन्निव विद्विष· पुर· पुरोधसारोपितहेतिसहति।**
**बभार रम्योऽपि वपुः स भीषण गत क्रिया मन्त्र इवाभिचारिकीम्॥२६॥**

अ०—अथ विद्विष पुर अभिपश्यन्निव (स्थितः) पुरोधसा आरोपित-हेतिसहति, स रम्य अपि आभिचारिकीम् क्रियाम् गत, मन्त्र इव भीषणम् वपु बभार।

व्याक०—आरोपिता हेतीनाम् सहति (ष० त०) यस्य यस्मिन् (बहु०) वा स आरोपितहेतिसहति, आरोपितशब्दे णिजन्ताद् रोहते क्त, "रुह पोऽन्यतरस्याम्"। हेतिशब्द-"ऊतियूतिजूतिसातिहेतिकीर्तयश्च" इत्यनेन हन्ते क्तिनि एत्वनिपातनेन, हिनोते क्तिनि गुणनिपातनेन वा निष्पन्न। अभिपश्यन् पश्यते हेतौ शतृप्रत्यय। विद्विष इति द्वितीयाबहुवचनमभिदर्श-नस्य कर्म। रम्यम्-रमते "पोरदुपधात्" इति यत्। अभिचारः प्रयोजन यस्या इत्याभिचारिकी ताम्, अभिचारशब्दात् "प्रयोजनम्" इति ठञ्, "ठस्येक" ततो ङीप्। भीषणम्-भीषयत इति णिजन्ताद् भीधा-तोर्नन्द्यादित्वाल्ल्यु, "भियो हेतुभये षुक्"। बभार-बिभर्तेर्लिट्। पुरोधसा इत्यारोपणकर्तरि तृतीया।

व्याख्या—अथ-अनन्तरम्, विद्विष-शत्रून्, पुरः-अग्रे, अभिपश्यन्निव-साक्षात्कुर्वन्निव, स्थित·, पुरोधसा-पुरोहितेन धौम्येन, आरोपिता-समन्त्रमा-

हिता, * हेतीनाम्-आयुधानाम्, महति -समुदायो यस्य तादृश , स -अर्जुन , रम्यः-प्रकृत्या सौम्य , अपि, आभिचारिकीम्-आभिचार -शत्रुमारणम्, प्रयोजन यस्यास्तादृशीम्, क्रियाम्-प्रयोगम्, गत -प्राप्त , हिंसाकर्मणि विनियुक्त , मन्त्र इव, भीषणम्-भयङ्करम्, वपु -शरीरम्, बभार-दधार ।

भा०—द्रौपदीवाचमाकर्ण्य परिभवस्मरणेन अर्जुनस्य तथा वृत्तिर्बभूव यथा शत्रवस्तस्य सम्मुख एव तिष्ठन्ति, यथा शत्रून् पुरो दृष्ट्वा क्रोधो दीप्यते, तथैव तस्य क्रोधदीप्तिरभून् । प्रस्थानकाले पुरोहितेन समन्त्रमस्त्राणि तच्छरीरे यथोचित स्थापितानि । तेन रम्यापि तदाकृतिरिदानीं भयप्रदा प्रतीयते स्म । यथा स्वभावसौम्योऽपि मन्त्रो यदा मारणादिकर्मसु विनियुज्यते, तदा भयप्रदो भवति, तद्वदेव कार्यकाले अर्जुनस्य भीषणत्वमिति ।

अल०—उपमा । अभिपश्यन्निवेति क्रोधोद्दीपने हेतूत्प्रेक्षा । शत्रुस्मरणमुद्दीपनम् । आयुधधारणमप्युद्दीपनम्, अनुभावो वा, भीषणाकृतिरनुभाव । तद्व्यञ्जित. क्रोधो व्यभिचारी । वीररस । वशस्थ वृत्तम् ।

अथ त्रिभिरर्जुनप्रस्थान वर्णयति—

**अविलङ्घ्यविकर्षणं परै प्रथितज्यारवकर्म कार्मुकम् ।**
**अगतावरिदृष्टिगोचर शितनिस्त्रिंशयुजौ महेषुधी ॥२७॥**

अ०—परै. अविलङ्घ्यविकर्षणम् प्रथितज्यारवकर्म कार्मुकम् अरिदृष्टिगोचरम् अगतौ शितनिस्त्रिंशयुजो महेषुधी ( उद्वहन् ) ।

व्याक०—न विलङ्घ्यम् विकर्षण यस्य तद् अविलङ्घ्यविकर्षणम्, विलङ्घ्यशब्दे लङ्घतेर्ण्यत् । विकर्षणम्-कर्षतेर्ल्युट् । प्रथिते-ज्याया' रव ( तत्पु० ) कर्म च ( द्वन्द्व० ) यस्य तत् प्रथितज्यारवकर्म । प्रथितशब्दे प्रथते. क्त । रव.-रौते. 'अप्' । अरीणा दृष्टे ( तत्पु० ) गोचरम् ( तत्पु० ) अरिदृष्टिगोचरम् । गच्छते कर्मणि द्वितीया । गोचरशब्द "गोचरसञ्चर " इत्यनेन निपातित । न गतौ अगतौ । निर्गत. त्रिंशतोऽङ्गुलिभ्य इति निस्त्रिंश , "निरादय क्रान्ताद्यर्थे पञ्चम्या" इत्यनेन समास , "सङ्ख्यायास्तत्पुरुषस्य वाच्य " इत्यनेन ड । शितेन निस्त्रिंशेन ( कर्म धा० ) युज्जाते

* हेतिर्ज्वालाङ्कुरायुधे—इत्यमर ।

( उपपु० ) इति शितनिस्त्रिंशयुजौ । युनक्ते "सत्सूद्विष " इति क्विप् । शितशब्दे श्यते क्त, "शाच्छोरन्यतरस्याम्" इत्यनेनेत्त्वम् । महान्तौ इषुधी महेषुधी "आन्महत." इति महत आत्वम् । इषुधिशब्दे इषवो धीयन्ते अस्मिन्निति, इषूपपदाद् दधाते अधिकरणे किः । कार्मुकम्, महेषुधी इति द्वितीयपद्योक्तोद्वहनक्रियाया कर्मणी, परैरिति विलङ्घनकर्तरि तृतीया ।

व्याख्या–परे -शत्रुभि , अविलङ्घ्यम्-अनतिक्रमणीयम्, विकर्षणम्-आकर्षणम्, यस्य तादृशम्, (अविलङ्घ्यम्-अप्राप्यम्, विकर्षण यस्येति चित्रभानु·) प्रथिते-प्रसिद्धे,*ज्यायाः-मौर्व्या , रव -शब्द , कर्म-बाणमोचनलक्ष्यवेधादिक्रिया च यस्य तथोक्तम्, कार्मुकम्-धनु , ( संग्रामेऽनिवर्तित्वाद् ) अरीणाम्-शत्रूणाम्, दृष्टिगोचरम्-दर्शनविषयताम्, अगतौ-अप्राप्तौ, शितेन-तीक्ष्णेन, निस्त्रिंशेन-खड्गेन, युञ्जाते-सयोग भजेते-इति तथाभूतौ, महान्तौ, †इषुधी-तूणीरौ, उद्वहन्, अर्जुन तपोभृता हृदयानि समाविवेश-इति तृतीयेन पद्येनान्वय ।

भा०—पुरोहितनोऽर्जुनस्य शस्त्राण्यारोपितानीत्युक्तम्, कानि तानीति विवृणोति-सति यस्याकर्षणे कोऽपि शत्रुर्योद्धु न शक्नोति, ( मल्लिनाथरीत्या ) यद्वा-यस्याकर्षणमर्जुनादृते कोऽप्यन्यो न कर्तु शक्नोति ( चित्रभानुरीत्या ) यद्वा-कस्याप्यन्यस्य धनुषो विकर्षणा यस्य विकर्षणं नातिशेते-तद् गाण्डिव धनुरर्जुनेन धृतम् । अक्षय्यबाणनिधी तूणीरौ च निबद्धौ, ययोर्दर्शनं कदापि शत्रुभिर्न कृतम् । तूणीरौ हि पृष्ठतो बध्येते, यदि सग्रामे योद्धा पलायेत, तदा तूणीरौ शत्रुभिर्दृश्येताम्, न ह्यर्जुन कदापि संग्रामान्निवृत्त·, तेनास्य तूणीरौ शत्रुभिर्न दृष्टौ । तूणीरपार्श्व एव खड्गोऽप्यर्जुनेन बद्ध. ।

अल०—कर्म, कार्मुकमित्याद्यनुप्रासः । आयुधविशेषणानि तन्महत्त्वबोधने साभिप्रायाणीति परिकर. ।

यशसेव तिरोदधन्मुहुर्महसा गोत्रभिदायुधक्षती. ।
कवच च सरत्नमुद्वहन् ज्वलितज्योतिरिवान्तर दिव ॥२८॥

* ज्या मौर्वी ज्या वसुधरा–इति शाश्वत ।

† तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयो. । तूण्या खड्गे तु निस्त्रिंशचन्द्रहासासिरिष्टय –इत्यनरः ।

अ०—च गोत्रभिदायुधक्षती महसा यशसेव मुहु तिरोदधत् सरत्नम् ( अतएव ) ज्वलितज्योति दिवः अन्तरमिव कवचम् उद्वहन् ।

व्याक०—गोत्रान् ( पर्वतान् ) भिनत्तीति गोत्रभिद्, तस्य आयुधाना ( तत्पु० ) क्षतीः गोत्रभिदायुधक्षती, आयुधशब्दे आयुध्यन्ते अनेनेति घनर्थे कः । क्षतिशब्दे क्षणुधातोः क्तिन्, द्वितीयाबहुवचनम्, तिरोधानक्रियाया कर्म । रत्नैं सह वर्तमान सरत्नम् । "तेन सहेति तुल्ययोगे" इति बहुव्रीहिः । ज्वलितानि ज्योतींषि यत्र तद् ज्वलितज्योति । तिरोदधत्-तिरम्-पूर्वाद् दधाते लक्षणे शतृप्रत्यय । महसेति तिरोधानकरणे तृतीया । कवच-मित्युद्वहने कर्म, अन्यानि द्वितीयान्तानि तद्विशेषणानि ।

व्याख्या—च-किं च, गोत्रभिद इन्द्रस्य, आयुधानाम्-अस्त्राणाम्-वज्रादीनाम्, ( खाण्डवदाहसमये जाता. ) क्षती -व्रणान्, महसा-तेजसा, ( श्वेत-वर्णसाम्याद् ) यशसेव-मूर्तिमतया कीर्त्येव, मुहु भृशम्, तिरोदधत्-आच्छादयत्, च-पुन, सरत्नम्-रत्नैर्जटितम्, अत एव ज्वलितानि-दीप्तानि, *ज्योतींषि-नक्षत्राणि, यत्र तादृशम्, दिव -आकाशस्य, † अन्तरमिव-मध्यभागमिव स्थितम्, कवचम्-वर्म, उद्वहन्-धारयन्, तपोभृता हृदयानि समाविवेशेति पूर्ववच्छेपो बोध्य. ।

भा०—कवचमप्यर्जुनेन वृतम् । तस्मिन् कवचे रत्नानि तत्र तत्र निवेशितान्यासन् । अत एव तत्कवचमर्जुनस्य शरीरे स्थितान् तान् व्रणान् तेजसा तिरोधत्ते स्म, ये खाण्डवदाहे इन्द्रेण सह युध्यमानस्य तस्येन्द्रायुधै कृता । तत्र सादृश्यमुच्यते-यथा इन्द्रेण सह कृतसङ्गरोऽयम्, तद्वज्रप्रहारानपि सोढ्वा खाण्डवदाह चकारेवेति अर्जुनस्य प्रथितेन यशसा व्रणा तिरोहिता जनाना मनस्सु न गण्यन्ते स्म, तथैव कवचेनापि ते तिरोहिता इति । किं च कवचमिद रत्नैस्तथा प्रतीयते स्म यथा तारकाकलितो नभसो मध्यभागो भवेत् । लोहनिर्मित तस्य कवचस्य कृष्णवर्णतया प्रतीयमानेनाकाशैकदेशेन साम्यम्, रत्नाना

* ज्योतिस्ताराग्निभाज्वालादृक्पुत्रार्थधरात्मसु—इति वैजयन्ती ।

† अन्तर परिधानीये बाह्ये स्वीयेऽन्तरात्मनि । क्लीबे मध्ये प्रकारे च इति वैजयन्ती ।

तारकाभिः । कवचस्यैकदेशसाम्योक्त्या अर्जुनस्य कृत्स्ननभःसाम्यं प्रतीयते-इति चित्रभानु ।

अल०—उपमाद्वयम् । यश एकत्रोपमानम्, मणातिरोधान साधारणधर्मः। ज्वलितज्योतिर्नभोऽपरत्रोपमानम् । उपमेयमुभयत्र कवचमेव । यद्वा-पूर्वत्र यशस्त्व तस्मिन् सम्भावितमित्युत्प्रेक्षापि सम्भवति ।

**अलकाधिपभृत्यदर्शित शिवमुर्वीधरवर्त्म सम्प्रयान् ।**
**हृदयानि समाविवेश स क्षणमुद्बाष्पदृशा तपोभृताम् ॥२६॥**

अ०—अलकाधिपभृत्यदर्शितम् शिवम् उर्वीधरवर्त्म सम्प्रयान् स क्षणम् उद्बाष्पदृशाम् तपोभृताम् हृदयानि समाविवेश ।

व्याक०—अलकाया अधिपस्य ( तत्पु० ) भृत्येन ( तत्पु० ) दर्शितम् अलकाधिपभृत्यदर्शितम् । भृत्यशब्दे भरते " भृञोऽसज्ञायाम् " इति क्यप् । दर्शितम्-णिजन्तात्पश्यतेर्निष्ठा । उर्वीधरस्य वर्त्म उर्वीधरवर्त्म । उर्वीधरशब्दे उर्व्या धर इति पचाद्यजन्तेन धरशब्देन उर्वीशब्दस्य षष्ठीसमासः, याते कर्मत्वाद् द्वितीया । उद्गतानि बाष्पाणि यासु, तादृश्यो दृश येषाम्, तेषाम् उद्बाष्पदृशाम्, बहुव्रीहिपूर्वपदो बहुव्रीहि । तपो बिभ्रति इति तेषाम् तपोभृताम् । हृदयसम्बन्धे षष्ठी । सम्प्रयान्-याते लक्षणे शतृप्रत्यय । समाविवेश-विशतेर्लिट् ।

व्याख्या—अलकाया-अलकापुर्याः, अधिपस्य-स्वामिन, कुबेरस्य, भृत्येन-सेवकेन-गुह्यकेन, दर्शितम्-बोधितम्, शिवम्-निर्बाधम्, उर्वीधरस्य-हिमालयपर्वतस्य, * वर्त्म-मार्गम्, सम्प्रयान्-गच्छन्, सः-अर्जुन, क्षणम्-क्षणमात्रम्, ( वियोगेन ) उद्बाष्पा-उद्गताश्रवः, दृशः-नेत्राणि, येषाम्, तेषा तपोभृताम् द्वैतारण्यवासिना तपस्विनाम्, हृदयानि-मनासि, समाविवेश-प्रविवेश खेदयामास इति यावत् ।

भा०—कुबेरस्य भृत्यो गुह्यकोऽर्जुन प्रति मार्ग बोधयति स्म, तेनैव मार्गेण पूर्वोक्तवेषोऽर्जुनो हिमालयस्य इन्द्रकीलसज्ञक शिखर प्रति प्रास्थित । अभिज्ञेन गुह्यकेन शिव पन्थास्तदर्थ निर्दिष्ट, येन व्रजतोऽस्य न क्वापि बाधा भवेत् ।

---

* अयन वर्त्म मार्गाध्वपन्थान. पदवी सृति.—इत्यमर. ।

तदा च तत्रत्या सर्वेऽपि तपस्विनः तद्गतमनस्का बभूवु । तद्वियोगेन च तेषा वाष्पोद्गमोऽप्यभूत्, परं तपस्वितया क्षणेनैव वाष्पवेग. स्तम्भित ।

अल०—प्रस्तुतेन तपस्विना वाष्पादिना कार्येण प्रस्तुतस्यैव कारणस्य वियोगदु खस्य द्योतनमिति प्रस्तुताङ्कुर । त्रयाणा पद्यानामत्रैक एवान्वय इति विशेषकमिदम् । पद्यत्रयेऽस्मिन् वृत्त द्वितीयसर्गवत् ।

**अनुजगुरथ दिव्य *दुन्दुभिध्वानमाशा**
**सुरकुसुमनिपातैर्व्योम्नि लक्ष्मीर्वितेने ।**
**प्रियमिव कथयिष्यन्नालिलिङ्ग स्फुरन्ती**
**भुवमनिभृतवेलावीचिबाहु' पयोधि. ॥ ६० ॥**

**इति भारविकृतौ महाकाव्ये किरातार्जुनीये तृतीय सर्ग ।**

अ०—अथ आशा दिव्य दुन्दुभिध्वानम् अनुजगु, व्योम्नि सुरकुसुमनिपातै लक्ष्मी. वितेने, अनिभृतवेलावीचिबाहु पयोधि. स्फुरन्ती भुवम् प्रिय कथयिष्यन्निव आलिलिङ्ग ।

व्याक०—दुन्दुभीना ध्वान दुन्दुभिध्वानम्, ध्वानमिति ध्वनतेर्घञ्। सुराणा कुसुमाना निपाता सुरकुसुमनिपाता, तै, वितननकर्तरि तृतीया, निपाता इति णयन्ताद् निपातयतेर्घञ् । न च 'कुसुमानाम्' इति षष्ठया "उभयप्राप्तौ कर्मणि" इत्यनेन विधीयमानत्वात्, "कर्मणि च" इत्यनेन समासनिषेधे कुसुमनिपातैरि-त्यसाधु स्यादिति वाच्यम्, कुसुमानामिति षष्ठी शेषलक्षणेति स्वीकारात्। अथवा "शेषे विभाषा" इत्यत्र अविशेषेण विभाषापक्षस्यापि विद्यमानत्वेन यत्र पक्षे "उभयप्राप्तौ " इति नियमाप्रवृत्ति, तत्र ' कर्मणि च" इति निषेधस्याप्यप्रवृत्त्या समास सगच्छत एव । अत्र पक्षे 'आचार्यस्य शब्दानामनुशासनम्, इतिवत् सुराणा कुसुमानाम् निपातैरिति-उभयत्र कर्तृकर्मणो षष्ठ्येव । यद्वा-निपातै रित्यत्र निपपतेर्घञ्, तस्य च कुसुमानामिति कर्तरि षष्ठया समास, ततश्च सुरा णामिति सम्बन्धसामान्यषष्ठ्या समास । सुरसम्बन्धिकुसुमनिपातैरित्यर्थ । वेलाया वीचय वेलावीचय, अनिभृता वेलावीचय एव वाहवो यस्य स अनि-भृतवेलावीचिबाहु., अनिभृतशब्दे न निभृता इति नञ्समास । दिव्यम् दिविभ-

* दुन्दुभिह्रादमाशा इति दाक्षिणात्यपाठः ।

वन्-भवार्थे यत् । अनुजगु -गायतेर्लिट्, प्रथमपुरुषबहुवचनम् । तेने वितनोते कर्मणि लिट् । पयोधि -पयांसि धीयन्तेऽस्मिन्निति दधाते अधिकरणे कि । स्फुरन्तीम्-स्फुरतेः शतृप्रत्यय , ततो ङीप् । कथयिष्यन्-कथयते क्रियार्थाया क्रियाया लृट्, तस्य हेतौ शत्रादेशः, फलस्यापि हेतुत्वात् । आलिलिङ्ग-लिङ्गते-लिट् । प्रियमिति कथने कर्म, भुवमित्यालिङ्गने ।

व्याख्या—अथ-अर्जुनप्रस्थानानन्तरम्, आशा -दिशः, दिव्यम्-द्युलोके प्रवृत्तम्, दुन्दुभीनाम्-वाद्यविशेषाणाम्, ध्वनिम्-शब्दम्, अनजगु -प्रतिदध्वनु । व्योम्नि-आकाशे, सुराणाम्-देवानाम्, कुसुमनिपातै -पुष्पवर्षणै , लक्ष्मी शोभा, वितेने-विस्तारिता, अनिभृता-चञ्चला, *वेलायाम्-तटे, वीचय -तरङ्गा ,त एव बाहव -भुजा , यस्य, तथाभूत , पयोधि -समुद्र', स्फुरन्तीम्-उल्लसन्तीम् (कम्पमानाम् इति चित्रभानुः) (पक्षे हर्षात् स्पन्दमानाम्) भुवम्-पृथ्वीम्, प्रियम्-इष्टम्-भारावतरणरूपम्, कथयिष्यन्निव-कथयितुमिव, आलिलिङ्ग-आशिश्लेष, परित पस्पर्श ।

भा०—अथ प्रस्थितेऽर्जुने तद्विजयनिश्चयप्रहृष्टा , तन्मङ्गलमारचयन्तश्च देवा स्वर्गदुन्दुभीर्वादयामासु , तस्य शब्दस्य प्रतिध्वनिः सर्वासु दिक्षु श्रूयते स्म । किं च पुष्पाण्यपि देवा ववृषु , तैर्नभ शोभान्वितमभूत् । अधार्मिकाणा-मनुरपद्याणा दुर्योधनादीना विघातो देवकार्यमेवार्जुनेन सपाद्यमिति तेषा हर्ष. । किं च भाविमहासमरसूचनाय भूमिश्चकम्पे, समुद्रश्च प्रवृद्ध उच्चरङ्गमाल आसीत् । तत्र कविरुत्प्रेक्षते-प्रिय -समुद्र स्वप्रिया पृथिवीम् 'मा बिभीहि, भारस्ते क्षिप्रमपनेष्यते ' इति प्रिय सदेशमाख्यातु वीचिभिर्भुजसदृशैरालिलिङ्ग, सा च सात्त्विकभावोदयेन प्रकम्पिता, हर्षोल्लसिता चाभूदिति । यथा कश्चित्-कान्त प्रिय सदेशमाख्यातु कान्ता भुजाभ्यामालिङ्गति, सा च हर्षोल्लसिता वेपमाना च भवति, तद्वदिति । समुद्रकर्तृकमालिङ्गन परित स्पर्श एव । सर्ग-समाप्तिपद्ये लक्ष्मीपद लक्ष्म्यङ्कमहाकाव्यशैलीसरक्षणाय ।

अल०—इह समुद्रपृथिवीवृत्तान्तेनाप्रस्तुतनायकनायिकावृत्तान्तपरिस्फुरणात्समासोक्ति । नायकयोरालिङ्गनमन्यादृशम्, अन्यादृश च समुद्रपृथिव्योरिति

* वेला कूलविकारयो इति शाश्वत. ।

तयोर्भेदेऽप्यभेदाध्यवसायादतिशयोक्तिश्च तदङ्गमिति मल्लिनाथः । वस्तुतस्तु वीचिषु बाहुत्वारोपे शाब्दे समुद्रेऽपि पुरुषत्वारोपः पृथिव्या च नायिकात्वारोप आर्थ इत्येकदेशविवर्तिरूपकमत्राभिधातुमुचितम् । प्रियं कथयिष्यन्निवेति हेतूत्प्रेक्षा चाङ्गभूतेति । मालिनी वृत्तम् ।

इति छात्रोपकारिण्या महाकाव्यसङ्ग्रहव्याख्याया

षष्ठः सर्ग ।



* श्री *

# महाकाव्य-संग्रहः ।

## किरातार्जुनीये एकादशः, संग्रहे सप्तमः सर्गः ।

### कथासम्बन्धः—

इन्द्रकील नाम हिमालयस्यान्यतम शिखर गतोऽर्जुन इन्द्रप्रसादनाय दुश्चर तपस्तेपे । वनरक्षकमुखेन श्रुततद्वृत्तान्त इन्द्र परीक्षार्थं तपोविघ्नायाप्सरोगणमादिदेश । गन्धर्वैः सहिता अप्सरसोऽर्जुनाधिष्ठितपर्वतसमीपमेत्य विविधान् विहाराश्चक्रुः । अनुकूलर्तुसहायाश्च विविधाभिश्चेष्टाभिरर्जुनं प्रलोभयितु प्रयेतिरे । किन्त्वर्जुनस्यासाधारण सयममालोक्य विफलप्रयासा स्व स्व धाम प्रतिजग्मुरिति दशमे सर्गे गतम् ।

तदनन्तर वृत्तमुच्यते—

**अथामर्षान्निसर्गाच्च जितेन्द्रियतया तया ।**
**आजगामाश्रम जिष्णो प्रतीत पाकशासन ॥ १ ॥**

अ०—अथ पाकशासनः तया अमर्षाद् निसर्गाद् च ( जातया ) जितेन्द्रियतया प्रतीत जिष्णोः आश्रमम् आजगाम ।

व्याक०—पाकस्य ( असुरविशेषस्य ) शासन पाकशासनः, शास्ते नन्द्यादित्वाद् ल्युप्रत्यये शास्तीति शासन, जितानि इन्द्रियाणि येन, तस्य भावो जितेन्द्रियता, तया । हेतौ तृतीया । प्रतीत -इण्धातो क्त । जिष्णो - जयते. " ग्लाजिस्थश्च ग्स्नु " । अमर्षाद्, निसर्गाद्-हेतावुभे पञ्चम्यौ ।

व्याख्या—अथ-भग्नमनोरथानामप्सरसा निवर्तनानन्तरम्, *पाकशासनः-इन्द्र, तया-अप्सरोमुखाच्छ्रुतया, ( यद्वा-विलक्षणया-अनिर्वचनीयया ) अमर्षात्-शत्रुषु द्वेषाद् निसर्गात्-स्वभावाच्च, जातया, जितानि-वशीकृतानि,

* इन्द्रो मरुत्वान् मघवा बिडौजाः पाकशासनः—इत्यमर ।

इन्द्रियाणि-चक्षुरादीनि येन, तथाभूततया-सयमेन, *प्रतीत -हृष्ट., मन, †जिष्णो -अर्जुनस्य, आश्रमम्-स्थानम्, आजगाम ।

भा०—प्रतिनिवृत्य ताभिरप्सरोभिस्तद्वृत्तमिन्द्राय निवेदितम् । इन्द्रश्चार्जुनस्य स्वाभाविकीमागन्तुका चोभयविधामपि जितेन्द्रियतामाकलय्य प्रससाद, अर्जुनो हि स्वभावेनैव जितेन्द्रिय आसीत्, तदानीं शत्रुजनितामर्षेण विशेषतो जितेन्द्रियता संपादिता, नह्यमर्षवशीकृते मनसि विलासेच्छा स्थान लभते। ततश्चेन्द्रः स्वयमेव तद्दार्ढ्यपरीक्षार्थं छद्मवेषेण तदाश्रम जगाम ।

अल०—अमर्षनिसर्गयोर्जितेन्द्रियताया हेतुत्वात् काव्यलिङ्गम् ।

अथ पञ्चभिरिन्द्र वर्णयति—

**मुनिरूपोऽनुरूपेण सूनुना ददृशे हरि ।**
**द्राघीयसा वयोतीतः परिश्रान्त ‡इवाध्वना ॥ २ ॥**

अ०—मुनिरूप वयोतीत· द्राघीयसा अध्वना परिश्रान्तइव ( लक्ष्यमाण ) हरि. अनुरूपेण सूनुना ददृशे ।

व्याक०—मुने रूपमिव रूप यस्य स मुनिरूप । लाक्षणिकपूर्वपदो बहुव्रीहि । वय: अतीत वयोतीत । "द्वितीयाश्रितातीत " इत्यनेन समासः, अतीत इत्यत्र अतिपूर्वादेते क्त. । द्राघीयसा-अतिशयेन दीर्घ इति दीर्घशब्दादीयसुन्, "प्रियस्थिर—" इत्यादिना द्राघादेश । परिश्रान्त - श्राम्यते क्तः, "अनुनासिकस्य क्वि " इत्यनेन दीर्घ. । रूपेणानुगत, रूपमनुगतो वा अनुरूप तेन, प्रादिसमास , अध्वना-परिश्रान्तिकरणे तृतीया । सूनुना दर्शनक्रियाया अनुक्ते कर्तरि तृतीया । हरि -कर्मणि प्रथमा ।

व्याख्या—मुनिरूप -मुनिवेषधारी, वयोतीत -योग्य वयोऽतिक्रान्त , वृद्ध इव दृश्यमान , द्राघीयसा-अतिदीर्घेण, अध्वना-मार्गेण, परिश्रान्त इव-खिन्न इव लक्ष्यमाण , हरिः-इन्द्रः, अनुरूपेण-योग्येन, सूनुना-सुतेन अर्जुनेन, ददृशे·

* ख्याते हृष्टे प्रतीत —इत्यमर ।

† जिष्णु शक्रे धनञ्जये—इत्यमरः ।

‡ 'परिश्रान्त किलाध्वना'—इति पाठान्तरम् ।

दृष्ट । किलेतिपाठे किलेत्यलीके, तस्य दृश्यमान वृद्धत्वं श्रान्तत्वं चोभयमप्यलीकमिति ।

भा०—स्वाश्रमे समागत मुनिवेषधारिणमिन्द्रमर्जुन साक्षाच्चकार, तेन स वृद्धो मार्गश्रान्तश्च मुनिरिति विज्ञातः। अर्जुनो हीन्द्रस्यैव सुतः, पराक्रमसयमादिना योग्यश्चेति दर्शनयोग्यतामाकलय्य इन्द्रेण तस्मै दर्शन दत्तम् ।

अल०-अनुरूपेणेति विशेषण मुनिरूपस्य दर्शने साभिप्रायमिति परिकर ।

**जटाना कीर्णया केशै सहत्या परित सितैः ।**

**पृक्तयेन्दुकरैरह्न पर्यन्त इव सध्यया ॥ ३ ॥**

अ०—परित सितै केशै कीर्णया जटानाम् सहत्या ( उपलक्षित ) इन्दुकरै पृक्तया सध्यया ( उपलक्षित ) अह्न पर्यन्त इव ( ददृशे ) ।

व्याक०— परित.-"पर्यभिभ्या च" इति तसिल् । कीर्णया किरते क्त । सहत्या-हन्ते क्तिन् "इत्थभूतलक्षणे" तृतीया, एव सध्ययेत्यत्रापि । पृक्तया-पृचीधातो क्त । केशै कर्तरि तृतीया । इन्दुकरै-पृक्त इति क्रियाकर्तरि सहयोगे वा तृतीया ।

व्याख्या—परित.-सर्वत., सितै -श्वेतै, केशै.-शिरोरुहै, कीर्णया-व्याप्तया, जटानाम्-परस्परश्लिष्टकेशानाम्, सहत्या-समूहेन, उपलक्षित, अत एव इन्दो -चन्द्रमस, करैः-किरणै, पृक्तया-समिश्रया, सध्यया, उपलक्षित, अह्न -दिवसस्य, पर्यन्तइव-अन्तिमभागइव, स्थित स इन्द्रो ददृशे-इति पूर्वेण पद्येन सम्बन्ध. ।

भा०—वृद्धमुनिवेषेणार्जुनसमीपमुपागतस्येन्द्रस्य शिर श्वेतकेशनिबद्धजटाजालमण्डितमासीत्, तेन शोभमान इन्द्रस्तदानीं चन्द्रकिरणसम्पृक्तया सन्ध्यया शोभितस्य दिनान्तस्य सादृश्यमुवाह । परिणतरूपत्वमिन्द्रदिनान्तयो सादृश्यम् । सन्ध्या तमसा श्यामापि चन्द्रकिरणैः श्वेता भवति, तथैव केशाः स्वभावेन श्यामा अपि आगन्तुकजरया श्वैत्य नीता इति तयो साम्यम् ।

अल०—पूर्णोपमा ।

**विशदभ्रूयुगच्छन्नवलितापाङ्गलोचन ।**

**प्रालेयावततिम्लानपलाशाब्ज इव ह्रद ॥ ४ ॥**

अ०—विशदभ्रूयुगच्छन्नवलितापाङ्गलोचन प्रालेयावततिम्लानपलाशाब्ज हृदइव सः ( ददृशे ) ।

व्याक०—विशदेन भ्रुवो युगेन ( प० त०-कर्म० ) छन्ने ( तत्पु० ) किं च वलितौ अपाङ्गौ ययोः ( बहु० ) तादृशे लोचने यस्य स विशदभ्रूयुगच्छन्नवलितापाङ्गलोचनः । छन्नशब्दे छद्धातो क्त । वलितशब्दे वल्धातो क्तः । प्रालेयस्य अवतत्या म्लानानि पलाशानि येषाम् ( बहुव्रीहि ) तादृशानि अब्जानि यस्मिन् स प्रालेयावततिम्लानपलाशाब्जः । प्रलीयन्ते पदार्था अत्रेति प्रलयो हिमाद्रि , तत आगत प्रालेयम्, प्रलयशब्दात् "तत आगतम्" इत्यण् " केकयमित्रयुप्रलयाना यादेरिय " । अवतति -तनोते क्तिन् । म्लानशब्दे- म्लायते क्त., " सयोगादेरातोधातोर्यण्वतः " इति तस्य नत्वम् , अब्जशब्दे अप्सु जायते इति " सप्तम्या जनेर्ड " ।

व्याख्या—विशदेन-वार्धक्यात् पाण्डुरवर्णेन, भ्रुवो -नेत्रोपरिस्थितयो , युगेन-युग्मेन, छन्ने-( भ्रुवोरतिलम्बत्वाद् ) आवृते, वलितौ-किञ्चिन्नतौ-*अपाङ्गौ- प्रान्तभागौ ययोस्तादृशे च लोचने-नेत्रे यस्य तथोक्तः, अत एव प्रालेयस्य- तुषारस्य, अवतत्या-संहत्या, म्लानानि-म्लानिं प्राप्तानि, पलाशानि-दलानि येषा तादृशानि, अब्जानि-कमलानि यस्मिन् तादृश , हृदइव-सरइव, ददृशे ।

भा०—इन्द्रस्य नेत्रे कमलसदृशे, वृद्धत्वात् तस्य भ्रुवौ पालित्य प्राप्ते, लम्बमानाश्च तयोर्वाला नेत्रे आच्छादयन्ति स्म । मासस्य श्लथत्वान्नेत्रप्रान्त- भागावपि वलीविशिष्टौ, किञ्चिन्नतौ, अत एव स तदानीं तस्य सरस साम्य प्राप, यस्मिन् निरन्तरतुषारपातेन कमलाना दलानि म्लानानि स्यु । तुषार- समाः श्वेता भ्रूवाला , म्लानता च वलितत्वादिति ।

अल०—पूर्णोपमा । म्लानकमललोचनयो सादृश्यमूलक हृदेन्द्रयो सादृश्यम् ।

आसक्तभरनीकाशैरङ्गैः परिकृशैरपि ।
आद्यूनः सद्गृहिण्येव प्रायो यष्ट्यावलम्बित ॥२॥

अ०—परिकृशै. अपि आसक्तभरनीकाशैः अङ्गैः ( उपलक्षित ) अत एव

---

* अपाङ्गौ नेत्रयोरन्तौ—इत्यमर ।

प्राय यष्ट्या आद्यून सद्गृहिण्येव अवलम्बित ( ददृशे )।

व्याक०—परित. क्लिशैः परिक्लिशैः, प्रादिसमास । क्लिशशब्दे इगुपधत्वात् क्लिशधातो. क । आसक्त भर येषु तानि आसक्तभराणि, तत्सदृशैः आसक्तभरनीकाशै । नीकाशशब्दे निपूर्वात् काशेर्घञ् " इक काशे " इत्यनेन दीर्घः। सत्या गृहिण्या सद्गृहिण्या, कर्मधारयः, पूर्वपदस्य पुवद्भाव । कर्तरि तृतीया, एव यष्ट्येत्यत्रापि । *आद्यून -आङ्पूर्वाद् दीव्यते क्त, " च्छ्वो शूडनुनासिके च " इत्यूठ " दिवो विजिगीषायाम् " इत्यनेन निष्ठानत्वम् । अङ्गैरिति " इत्थभूतलक्षणे " तृतीया, यष्ट्या-इत्यवलम्बनकर्तरि ।

व्याख्या—परिक्लिशै -अतिजीर्णैरपि, आसक्तभराणि-भाराक्रान्तानि, तन्नीकाशै -तत्सदृशै.-भारवद्भिरिव प्रतीयमानै, अङ्गै -पाणिपादाद्यवयवै, उपलक्षित, अत एव प्राय -प्राचुर्येण, यष्ट्या-अवलम्बनदण्डेन, आद्यून -औदरिक -उद्योगशून्योऽपि बहुभोजी जन, सद्गृहिण्येव-पतिभक्तया भार्यया यथा, तथा अवलम्बित -धारित, ददृशे इति पूर्वेणान्वय ।

भा०—यद्यप्यतिवृद्धस्य तस्य पाणिपादाद्यवयवा अतिक्लिशा, तथापि स निर्बलत्वान्न तान् वोढु प्राभवत्, तेन ते भारयुक्ता इव प्रतीयन्ते स्म, निर्बलस्य स्वशरीरमपि भारायते इति भाव. । अत एव स प्राय शरीरोपष्टम्भाय यष्टिमवलम्बते स्म । यथा पतिव्रता स्त्री अनुद्योग भोजनपर भर्तार स्वय भोजनायवलम्ब्य दत्त्वा धरति तथैव यष्टिरपि धरति स्म । अवलम्बनयष्ट्या कर्तृत्वप्रतिपादनेन वृद्धस्य स्वशक्त्यभावो द्योतित, न हि स यष्टिं धरति स्म, अपि तु यष्टिस्त धरति स्मेति ।

अल०—परिक्लिशैरपि आसक्तभरनीकाशैरितिविरोध., उत्तरार्धे उपमा ।

गूढोऽपि वपुषा राजन् धाम्ना लोकाभिभाविना ।
अंशुमानिव †तन्वभ्रपटलच्छन्नविग्रह ॥ ९ ॥

अ०—वपुषा गूढ. अपि लोकाभिभाविना धाम्ना तन्वभ्रपटलच्छन्नविग्रह अंशुमानिव राजन् ( ददृशे )

* आद्यून. स्यादौदरिको विजिगीषाविवर्जिते—इत्यमर. ।

† तन्वभ्रमण्डलच्छन्नमण्डल.-इति पाठान्तरम् । अर्थ: स एव ।

व्याक०—लोकान अभिभवतीति तेन लोकाभिभाविना । तनुना अभ्राणा पटलेन च्छन्नः विग्रह यस्य स तन्वभ्रपटलच्छन्नविग्रह । गूढ -गूहते क्त । अंशुमान् अंशवो विद्यन्तेऽस्य इति अंशुशब्दाद् भूम्नि मतुप् । राजन-राजते-र्लक्षणे शतृप्रत्यय । वपुषा-प्रकृत्यादित्वात् तृतीया । धाम्ना इति राजते करणे तृतीया ।

व्याख्या—वपुषा-शरीरेण-रूपेण, गूढ-प्रच्छन्नोऽपि, लोकाभिभाविना सकललोकाक्रमणशीलेन-सर्वातिशायिना, ( लोकव्यापिना-इति मल्लिनाथ ) धाम्ना-तेजसा, तनुना-अल्पेन, अभ्राणाम्-मेघानाम्, पटलेन-समूहेन-मण्डलेन, छन्नः-आवृत , विग्रह'-स्वरूप यस्य तादृश , अंशुमानिव-सूर्यो यथा, तथा राजन्-दीप्यमान , ददृशे इति पूर्ववत् ।

भा०—यद्यपि मुनिवेषेणेन्द्र. स्वस्वरूप गोपयामास, तथापि लोकाति-शायि तस्य तेजो बोधयति स्म यदस्त्यय कश्चन महापुरुष इति । यथा वर्षासु स्वल्पेन मेघमण्डलेनाच्छन्नोऽपि सहस्रकिरणो दुरभिभवेन स्वतेजसा दीप्यत एव, तथैव सोऽपि दीप्यते स्म । अंशुमानिति लोकाभिभाविना इति च, आ-च्छादनेऽपि प्रकाशनयोग्यता व्यनक्ति ।

अल०—पूर्वार्धे गूहने भासनप्रतिबन्धके सत्यपि भासनप्रतिपादनेन विभावना, उत्तरार्धे तूपमा स्पष्टैव । पञ्चाना पद्यानामेक एवान्वय इति कुलकम् ।

जरतीमपि *बिभ्राणस्तनुमप्राकृताकृति ।
†चकाराक्रान्तलक्ष्मीक. स साध्वसमिवाश्रमम् ॥७॥

अ०—जरतीम् तनुम् बिभ्राण अपि अप्राकृताकृति आक्रान्तलक्ष्मीक. स आश्रमम् ससाध्वसमिव चकार ।

व्याक०—न प्राकृती आकृति यस्य स अप्राकृताकृति , प्रकृतिशब्दात् "तत आगत." इत्यणि स्त्रिया प्राकृती । बहुव्रीहौ पुवत् । आक्रान्ता लक्ष्मी. येन सः आक्रान्तलक्ष्मीक । एकवचनान्तलक्ष्मीशब्दस्य उर'प्रभृतिषु पाठाद् ' उर प्रभृतिभ्य कप् " इति नित्य कप् समासान्त., बहुवचनान्तेन

* 'मप्राकृताकृतिम्' इति क्वचित्, तत्र तनुविशेषणमिदम् ।

† 'राक्रान्तलक्ष्मीकम्' इति क्वचित् । तत्राश्रमविशेषणमिदम् ।

विग्रहे तु विकल्पेन कप्, तत्रापि "नद्यृतश्च" इति नित्य कप् तु न शङ्क्य., उर प्रभृतिषु पाठस्य नियमार्थत्वादिति मनोरमा । साध्वसेन सह वर्तमान ससाध्वसम् । जरतीम्-"जीर्यतेरतृन्" इति भूते अतृन्प्रत्यय, उगित्त्वान् ङीप् । बिभ्राण -बिभर्तेे शानच् ।

व्याख्या —*जरतीम्-जीर्णाम्, तनुम्-शरीरम्, बिभ्राण -धारयन्, अपि, अप्राकृती-असाधारणी, आकृति -मूर्ति, यस्य तादृश, आक्रान्ता-अभिभूता, आश्रमस्य लक्ष्मी.-शोभा, येन तथोक्तः, स -वृद्धमुनिवेषधारी इन्द्र, आश्रमम्-अर्जुनस्य तपस्यास्थानम्, ससाध्वसम्-सभयमिव, चकार ।

भा०—यद्यपीन्द्र शरीरेण वृद्धो लक्ष्यते स्म, तथापि तस्य दिव्या मूर्तिराश्रमस्य शोभामतिशेते स्म । तदानीमतितेजस्विनस्तस्यागमने तत्प्रभावेणाश्रमो नीरवस्तब्धतया समुत्पन्नभीतिरिव ददृशे । तेजस्विदर्शनाद्धि भय भवति, भयाच्च नीरवता जायते इति । अत एव कविना ससाध्वसमिवेत्युत्प्रेक्षितम् । यद्वा-इवशब्दोऽपूर्णतार्थ । भय प्रतीयते स्म, पर दुःखद नाभूत् । तस्मान्न वास्तव भयमिति ।

अल०—भावार्थोक्तपूर्वरीत्योत्प्रेक्षालङ्कार । जरतोऽपि साध्वसकारित्वमिति विरोधोक्ति । साध्वसकरणे हेतुगर्भ विशेषणद्वयमिति परिकरश्च ।

**अभितस्त पृथासूनु. स्नेहेन परितस्तरे ।**
**अविज्ञातेऽपि बन्धौ हि बलात् प्रह्लादते मन ॥८॥**

अ०—पृथासूनु तम् अभित स्नेहेन परितस्तरे, हि अविज्ञाते अपि बन्धौ मन बलात् प्रह्लादते ।

व्याक०—पृथाया. सूनु पृथासूनु, स्तरणक्रियाया उक्ते कर्मणि प्रथमा । "अभित परित समया " इत्यनेन तमिति द्वितीया । स्नेहेन-स्निह्यतेर्घञ्, परिस्तरणकर्तरि तृतीया । परितस्तरे-स्तृणाते· कर्मणि लिट्, "ऋतश्च-सयोगादेर्गुण " । बन्धौ विषयसप्तमी ।

व्याख्या—पृथासूनु.-अर्जुन, तम्-इन्द्रम्, अभित.-अभिलक्ष्य, स्नेहेन-बन्धुप्रेम्णा, परितस्तरे-आच्छादित, परिपूर्णोऽभूत्, स्नेहाक्रान्तोऽभूदित्यर्थ. ।

* प्रवीणो जीर्णो जरन्नपि-इत्यमर. ।

हि-यत , अविज्ञाते-'वन्धुरयम्' इत्यपरिचितेऽपि, वन्धौ, मन'-चेत , बलात् प्रल्हादते-हृष्यति । यद्वा तमभिलक्ष्य अर्जुन. स्नेहेन-प्रेम्णा ( करणभूतेन ) परितस्तरे-आसनेन भूमिमास्तृणाति स्म-इति कर्तृवाच्यतयापि शक्यते व्याख्यातुम् ।

भा०—स्वाश्रमे समागतमिन्द्र दृष्ट्वा तद्विषयेऽर्जुनस्य मनसि महान् स्नेहोदयो जात । यत इन्द्रस्तस्य जनक आसीत् । यद्यपीन्द्रस्य कपटमुनि-तयार्जुनेन न ज्ञात यदेष मम जनक इति, तथापि प्रकृतिरिय यद् बान्धवे अज्ञातेऽपि तत्सत्तामात्रेण चेत स्वयमेव प्रसीदति । परितस्तरे-इति पूर्णतया संवन्धे लाक्षणिकम् । व्याख्यान्तरे तु अतिप्रेम्णा अर्जुनस्तस्मा आसनादिक ददाविति भावः । पूर्ववदन्यत् ।

अल०—सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यास. ।

**आतिथेयीमथासाद्य सुतादपचितिं हरि ।**
**विश्रम्य विष्टरे नाम व्याजहारेति भारतीम् ॥९॥**

अ०—अथ हरिः सुताद् आतिथेयीम् अपचितिम् आसाद्य विष्टरे विश्रम्य नाम इति भारतीम् व्याजहार ।

व्याक०—अतिथिषु साध्वीम् आतिथेयीम्, अतिथिशब्दात् "पथ्यतिथि वसतिस्वपतेर्ढञ्" । अपचितिम्-चायते क्तिन्, "चायते क्तिनि चिभावो वाच्य " । आसाद्य-आङ्पूर्वात् सादयतेर्ल्यप् । विष्टरे-विपूर्वात् स्तृणात , "ऋदोरप्" "वृक्षासनयोर्विष्टरः" इति षत्वम् । अधिकरणे सप्तमी । सुताद्-अपा दाने पञ्चमी, आसादनोपसर्जनीभूते दाने विभागस्य सत्त्वात् । नाम इत्यलीके।

व्याख्या—अथ-अनन्तरम्, हरि -इन्द्र , सुतात्-स्वपुत्राद् अर्जुनात्, आतिथेयीम्-अतिथिषु साध्वीम्-अतिथियोग्याम्, अपचितिम्-पूजाम्-सत्कारम्, आसाद्य-प्राप्य, विष्टरे-आसने, विश्रम्य-श्रान्तिमपनीय नाम, श्रान्तेरपनय नाट यित्वा, इति वक्ष्यमाणाम्, भारतीम् वीणाम्, व्याजहार-उक्तवान् ।

भा०—अर्जुनेनातिथ्य कृतम् । इन्द्रेण तद् गृहीतम् । यद्यपि वस्तुतस्तस्य न कापि श्रान्तिरासीत् । तथापि च्छद्मवेषतया तेन श्रान्तेरपनयो नाटित. । ततश्च वक्तुमारेभे ।

अल०—वहूना वाक्यार्थाना सक्षिप्य कथनादोजोगुणः ।

**त्वया साधु समारम्भि नवे वयसि यत्तप ।**

**ह्रियते विषयै प्रायो वर्षीयानपि मादृश ॥ १० ॥**

अ०—त्वया साधु समारम्भि, यद् नवे वयसि तपः (चर्यते) प्राय मादृशः वर्षीयान् अपि विषयै ह्रियते ।

व्याक०—समारम्भि-'सम्' 'आङ्' एतदुपसर्गद्वयपूर्वाद् रभते कर्मणि लुङ्, "रभेरशब्लिटोः" इति नुमागमः । त्वयेति समारम्भणकर्तरि अध्याहृत-चरणक्रियाकर्तरि वा तृतीया। मादृश -अहमिव दृश्यते इति मादृश , "त्यदादिषु दृशो " इति कञ् । वर्षीयान्-अतिशयेन वृद्ध इति, वृद्धशब्दाद् ईयसुनि "प्रियस्थिर..." इत्यादिना वर्षादेश । विषयै-हरणकर्तरि तृतीया । साधु-इति क्रियाविशेषण द्वितीयान्तम् । यच्छब्दस्योत्तरवाक्यगतत्वेन तच्छब्दानपेक्षा ।

व्याख्या —त्वया-अर्जुनेन, साधु-शोभनम्, समारम्भि आरब्धम्-उपक्रान्तम्, यद् नवे वयसि युवावस्थायाम्, तप -तपस्या, चर्यते, यत प्रायः-बाहुल्येन, मादृश-मत्सदृश , वर्षीयान्-अतिवृद्धोऽपि, विषयैः-इन्द्रियार्थै शब्दस्पर्शादिभिः, ह्रियते-आकृष्यते-वशीक्रियते ।

भा०—इन्द्र स्वस्यापरिचितता दर्शयन् अर्जुन मुमुक्षु मत्वा वक्ति-त्वया युवावस्थायामेव तप प्रारभ्य साधु कृतम्, यत तप एव वैराग्यमुत्पादयति, विषयवैराग्येनैव च जन्मन साफल्यम् । लोके बहुल दृश्यते-मादृशा सजात-वलीपलिता शिथिलेन्द्रिया अतिवृद्धा अपि विषयैराकृष्यन्ते, यूना तु का कथा । अतस्त्वादृशः साधुकारी प्रशस्य एव ।

अल०—साधुत्वेन प्रशसाया हेतूपादानात् काव्यलिङ्गम् । 'वर्षीयानपि' इत्यपिशब्देन किमु भवादृशो युवा' इति काव्यार्थापत्तिर्व्यज्यते । वैधर्म्येण वि-शेषसमर्थनरूपोऽर्थान्तरन्यास ।

**श्रेयसीं तव सम्प्राप्ता, गुणसम्पदमाकृति ।**

**सुलभा रम्यता लोके दुर्लभ हि गुणार्जनम् ॥ ११ ॥**

अ०—तव आकृति श्रेयसीम् गुणसम्पदम् सम्प्राप्ता, हि लोके रम्यता सुलभा, गुणार्जनम् दुर्लभम् (अस्ति) ।

व्याक०—गुणा एव सपद् गुणसपद्, ताम् । श्रेयसीम्-प्रशस्यशब्दादीयसुन्, "प्रशस्यस्य श्र" । उगित्त्वाद् ङीप् । रम्यता-रमे.-पवर्गोपधत्वात् यत, ततस्तल् । सुलभा, दुर्लभम्-उभयत्र-लभते खल् । "न सुदुर्भ्यां केवलाभ्याम्" इति नुम्निषेध· ।

व्याख्या—तव-भवत एव, आकृति -रम्या मूर्ति , श्रेयसीम्-शोभनाम्, गुणसम्पदम्-तप समारम्भरूपा गुणलक्ष्मीम् , सप्राप्ता-लब्धवती । हि-निश्चयेन, लोके, रम्यता-आकृतिसौन्दर्य्यम् , सुलभा-सुखेन लभ्यते, गुणानाम्, अर्जनम्-सपादन तु, दुर्लभम्-क्वचिदेव दृष्टम् ।

भा०—भद्र ! त्व न केवलमाकृत्या मनोहर , अपि तु स्वरूपानुरूपा गुणा अपि त्वया लब्धा·, यतस्त्व श्रेयस्करे तपसि प्रवृत्त , एव भूतस्त्वमेव श्लाघ्योऽसि । लोके रमणीयरूपा बहवो भवेयु , गुणार्जनपरा पर केचिदेव, त्वयि तु रम्यता गुणार्जन चेत्युभयमप्यस्तीति सुवर्णसौरभयोर्योग ।

अलं०—तवैवाकृतिर्गुणविशिष्टा, नान्यस्येति गम्या परिसख्या । तस्याश्च सामान्येन समर्थनादर्थान्तरन्यास· । गुणेषु सपत्त्वारोपाद्रूपकमपि ।

**शरदम्बुधरच्छायागत्वर्यो यौवनश्रिय. ।**
**आपातरम्या विषया पर्यन्तपरितापिन ॥ १२ ॥**

अ०—यौवनश्रिय शरदम्बुधरच्छायागत्वर्यः ( भवन्ति ) विषया. आपातरम्या पर्यन्तपरितापिन ( च ) ( सन्ति ) ।

व्याक०—यूनो भावो यौवनम्, "हायनान्तयुवादिभ्योऽण्" तस्य श्रिय यौवनश्रिय· । यौवन श्रियश्चेति द्वन्द्वो वा । शरदः अम्बुधराणाम् छाया इव गत्वर्य शरदम्बुधरच्छायागत्वर्य. । "गत्वरश्च" इत्यनेन गम्धातो क्वरपि गत्वर , तत "टिड्ढाणञ्" इति ङीपि गत्वरी, यौवनश्रिया विधेयविशेषणमिदम् । आपाते रम्या आपातरम्या । पर्यन्ते परितापयन्ति इति पर्यन्तपरितापिनः, तापयतेस्ताच्छील्ये णिनि । इमे उभे अपि विषयाणा विधेयविशेषणे ।

व्याख्या—यौवनस्य-युवावस्थाया , श्रियः-शोभाः, ( अथवा यौवनम्, श्रिय -सपदश्च ) शरद -शरदृतो., अम्बुधराणाम्-मेघानाम्, छायाइव,

गन्वर्य अस्थायिन्य , भवन्ति, किं च विषयाः-शब्दादय , *आपातरम्याः-तत्कालरमणीया , पर्यन्ते-परिणामे, परितापयन्ति-दुःख कुर्वन्तीति तथोक्ता सन्ति ।

भा०—यथा शरत्कालिकमेघाना छाया अस्थिरा भवति, तूर्णमेव नश्यति, तथैव यौवनशोभापीयमस्थिरा, न हि यौवन कस्यापि स्थिर भवति, येनोन्मायन्ति लोकाः । श्रीरप्यस्थिरेति व्याख्यान्तरे । तथा शब्दादयो विषया इमे उपभोगकाल एव रमणीया प्रतीयन्ते, परिणामे तु शरीरेन्द्रियादिशैथिल्य-हेतुतया दु खदायिनो भवन्ति, अता विषयान् विहाय तपसि मनो ददता त्वया साधु कृतम् ।

अल०—पूर्वार्धे समासगा वाचकलुप्तोपमा । व्याख्यान्तरे तुल्ययोगितापि । पूर्वोक्तस्य साधुसमारम्भस्य सामान्येन समर्थनादर्थान्तरन्यास ।

अन्तक पर्यवस्थाता जन्मिन सततापद ।
इति त्याज्ये भवे भव्यो मुक्तावुत्तिष्ठते जन ॥ १३ ॥

अ०—सततापद जन्मिन, अन्तक पर्यवस्थाता ( अस्ति ) इति त्याज्ये भवे भव्य जन मुक्तौ उत्तिष्ठते ।

व्याक०—सतता आपद यस्य तस्य सततापदः, संतत-शब्दे तनोतेः क्त । जन्मिन -जन्मशब्दात् "व्रीह्यादिभ्यश्च" इति मत्वर्थाय इनि , पर्यवस्थान-कर्मणि षष्ठी कृद्योगे। पर्यवस्थाता-तिष्ठते तृच्। त्याज्ये-त्यजते. "ऋहलोर्ण्यत्" "त्यजेश्च" इति निषेधात् कुत्व न । भव्य -भवतीति भूधातो "भव्यगेय " इत्यादिना कर्तरि यत् । उत्तिष्ठते-"उदोऽनूर्ध्वकर्मणि" इत्यनेन नात्मनेपदम् , मुक्तौ-विषयसप्तमी ।

व्याख्या—सतता -अनवच्छिन्ना , आपदः-क्लेशा , यस्य तथोक्तस्य, †जन्मिन -शरीरधारिण पुस., अन्तक -मृत्यु., पर्यवस्थाता-विरोधी प्रतिरोधक अस्ति, इति-हेतो., त्याज्ये-परिहरणीये, भव-ससारे, भव्य.-योग्यः, जन., मुक्तौ-मोक्षविषये, उत्तिष्ठते-सप्रयत्नो भवति । यद्वा-यो जनो मुक्तावुत्तिष्ठते, स-

* नदास्ते पान आपात —इति वैजयन्ती ।

† प्राणी तु चेतनो जन्मी—इत्यमर. ।

एव भव्य अस्तीति व्याख्येयम ।

भा०—किं च तपस्विन् ! सर्वथा जगदिदं त्याज्यमेव, दुःखाक्रान्तत्वात् । आदौ हि जन्मिनो गर्भवासादिदुःखमेव महत्, ( इदं जन्मिपदेन ध्वनितम ) ततो जातस्य जीवनमप्यनेकसंकटाकीर्णम्, यदि सुखमपि क्वचिद्भवेत् तर्हि दुःखाक्रान्तमेव तत् । ( इदं सततापद इति विशेषणेन व्यञ्जितम ) तदपि च कालाधीनम, न जाने कदा म्रियेत । तस्मात् पण्डितजन संसारमिमं त्यक्त्वा मुक्तिलाभायैव यतते ।

अल०—त्याज्यत्वे हेतूपादानात् काव्यलिङ्गम् । अत्र पद्ययुग्मे मति-र्व्यभिचारी व्यक्त इति भावध्वनि. ।

**चित्तवानसि कल्याणी यत्त्वा मतिरुपस्थिता ।**
**विरुद्ध केवल वेष. सन्देहयति मे मन ॥ १४ ॥**

अ०—त्व चित्तवान् असि यत् त्वाम् कल्याणी मति उपस्थिता, केवलम् विरुद्ध· वेष मे मन सन्देहयति ।

व्याक०—चित्तवान्-चित्तशब्दात् प्राशस्त्ये मतुप् । कल्याणी-कल्याण-शब्दाद् " बह्वादिभ्यश्च " इति ङीप् । मति.-मन्यते क्तिन् । उपस्थिता-उप-तिष्ठते कर्तरि क्त । विरुद्ध रुधिर्धातो क्त. । वेष -विष्लृधातोर्घञ् । सदेह-यति-सपूर्वाद् दिहधातोर्णिच्, मन -" गतिबुद्धि ·· " इति सूत्रेण प्रयोज्य-कर्मणि द्वितीया । वेष प्रयोजक । केवलमिति क्रियाविशेषणम्, * अवधा-रणेऽर्थे " सामान्ये नपुसकम् " वा ।

व्याख्या—त्वम्, चित्तवान्-प्रशस्तचित्त -विवेकशील , असि, यत्, त्वाम्-भवन्तम्, कल्याणी-श्रेष्ठा-तप.प्रवृत्तिकरी, मतिः-बुद्धिः, उपस्थिता-प्राप्ता, किंतु केवलम्-एक यथा स्यात्तथा, विरुद्ध -तपस्विजनप्रतिकूलः, वेष -कवचादि-धारणरूप , मे-मम, मन , सन्देहयति-संशयापन्न करोति । यद्वा-विरुद्ध· वेष केवलम्-विरुद्धो वेष एव संदेहयति इति ।

भा०—श्रेयस्करे तपश्चरणे तव मतिं विलोक्य विज्ञायते यत् तव चित्त विवेकशीलम्, अतोऽतिप्रशस्तम् । केवल तपस्विविपरीत तव वेष दृष्ट्वा मे

---

* केवल कृत्स्न एके च, केवल चावधारिते—इति शाश्वत ।

मनसि सन्देहो जायते, यद् भवान् मुमुक्षुरस्ति न वा इति ।

अल०—हेतुना साध्यसाधनादनुमानालङ्कारः ।

युयुत्सुनेव कवच किमामुक्तमिद त्वया ।
तपस्विनो हि वसते केवलाजिनवल्कले ॥ १५ ॥

अ०—त्वया युयुत्सुनेव इदम् कवचम् किम् आमुक्तम् ? हि तपस्विनः केवलाजिनवल्कले वसते ।

व्याक०—अजिन च वल्कल च अजिनवल्कले, केवले च ते अजिनवल्कले केवलाजिनवल्कले । युयुत्सुना-योद्धुमिच्छु युयुत्सु, तेन, युधे सन्, "हलन्ताच्च" इति कित्त्वान्न गुणः । ततोऽप्रत्यय । आमुक्तम्-मुचे क्त. । तपस्विन -तप शब्दाद् विनि । वसते-'वस् आच्छादने' धातोर्लटि प्रथम-पुरुषबहुवचने रूपम् । त्वयेति अमोचनकर्तरि तृतीया ।

व्याख्या—त्वया, युयुत्सुना-योद्धुमिच्छुना पुरुषेणेव, इदम्-दृश्यमानम्, कवचम्-वर्म, किम्-किमर्थम्, आमुक्तम्-धृतम् ? हि-यत, तपस्विन, केवले-अन्योपस्कररहिते, अजिनवल्कले-अजिनम्-मृगचर्म, वल्कलम्-वृक्षत्वचम्, च वसते-परिदधते ।

भा०—यथा कश्चन युद्धार्थी कवच धारयति, तथा त्वयापि धृतमस्ति, तत् कस्य हेतो. ? किं युयुत्सुरसि ?, तपस्विनस्तु केवलं मृगचर्म वृक्षत्वच च धारयन्ति । न तु वस्त्राद्यपि, कवचस्य तु का कथा ! अतस्तपस्विनस्ते कवचधारण सर्वथा विपरीतम् ।

अल०—युयुत्सुनेवेत्युपमा । पूर्वार्धे सूचित वैपरीत्य सामान्येन समर्थ्यत उत्तरार्द्ध इत्यर्थान्तरन्यास ।

प्रपित्सो किं च ते मुक्तिं निःस्पृहस्य कलेवरे ।
महेषुधी धनुर्भीम भूतानामनभिद्रुह. ॥ १६ ॥

अ०—मुक्तिम् प्रपित्सो कलेवरे निःस्पृहस्य भूतानाम् अनभिद्रुहः ते महेषुधी भीमम् धनु च किम् ।

व्याक०—निर्गता स्पृहा यस्य तस्य नि.स्पृहस्य । अभिद्रुह्यतीति, तस्य अभिद्रुह्, न अभिद्रुह. अनभिद्रुह । द्रुह्यते. "सत्सूद्विष" इति कर्तरि

क्विप्। भूतानामिति अभिद्रोहकर्मणि कृद्योगे षष्ठी, "कृवत्रुहोरुपसृष्टयोः कर्म" इत्यनेन कर्मत्वम्। महान्तौ इषुधी महेषुधी। प्रपित्सो -प्रपत्तुमिच्छो-रिति सन्नन्तात् पद्यते उः। "सनिमीमा " इत्यनेनेसादेश। अभ्यासलोपः, मुक्तिमिति प्रपदनकर्मणि द्वितीया। "न लोका " इति निषेधात् षष्ठी न। कलेवरे-विषयसप्तमी। किमिति सामान्ये नपुसकमेकत्व च।

व्याख्या—मुक्तिम्-मोक्षम्, प्रपित्सो -प्राप्तुमिच्छो, कलेवरे-शरीरे, नि स्पृहस्य, भूतानाम्-प्राणिनाम्, अनभिद्रुहः-अहिंसकस्य, ते-तव, महेषुधी-महान्तौ तूणीरौ, भीमम्-भयोत्पादकम्, धनु -कार्मुक च, किम्-किमर्थं सन्ति ? मल्लिनाथस्तु कि चेत्यादौ पूर्वसमुच्चयार्थं व्याख्याय द्वितीयश्लोकेनान्वय योजयति।

भा०—त्वया भयङ्कर धनु, महान्तौ तूणीरौ च धृतानि सन्ति, तद्धारण च शरीररक्षार्थं मृगयार्थं वोपयुज्यते, न हि शरीरे तेऽनुराग, शरीरनिरपेक्षतयैव तपसि प्रवृत्तत्वात्। न वा त्व प्राणिहिंसक, मुमुक्षुत्वात्, अत एतद् धनुरादिधारण किमर्थमिति न प्रतीयते।

अल०—विशेषणाना साभिप्रायत्वात् परिकर।

**भयङ्कर प्राणभृता मृत्योर्भुज इवापर।**
**असिस्तव तपस्थस्य न समर्थयते शमम्॥१७॥**

अ०—प्राणभृताम् भयङ्कर मृत्यो अपर भुजइव असि तपस्थस्य तव शमम् न समर्थयते।

व्याक०—प्राणान् बिभ्रतीति, तेषाम् प्राणभृताम्, क्विप्। भय करोतीति भङ्करः "मेघर्तिभयेषु कृञः" इति खच्। 'अरुर्द्विष " इति मुमागमः। तपसि तिष्ठतीति तपस्थ "सुपि स्थ" इति क, तस्य "खर्परे शरि वा विसर्गलोपो वक्तव्य." इति विसर्गलोप.। शमो व्याख्यात। समर्थयते-अर्थयतेर्लट्, आगवीयत्वाद् आत्मनेपदम्।

व्याख्या—प्राणभृताम्-जीवानाम्, भयङ्कर भयजनक., मृत्यो.-यमस्य, अपर -प्रसिद्धेतर., भुज -बाहुरिव, असि -खड्ग, तपस्थस्य तपश्चरत, तव, शमम्-शान्तिम्, न समर्थयते-न परिपोषयति।

भा०—तप स्थितेनापि त्वया धृता प्राणिभयङ्करीयमसिलता मृत्यो

( प्रसिद्धभुजातिरिक्त ) भुजङ्ग इव दृश्यते । अनयाऽपि ज्ञायते तव चेतसि शमो नास्तीति । शान्तिमत शस्त्रानुपयोगात् ।

अल०—असौ कालभुजत्वसम्भावनादुत्प्रेक्षा । न समर्थयते—इत्यनुमानम् ।

**जयमत्रभवान्नूनमरातिष्वभिलाषुक ।**

**क्रोधलक्ष्म क्षमावन्त क्वायुध क्व तपोधनाः ॥१८॥**

अ०—नूनम् अत्रभवान् अरातिषु जयम् अभिलाषुक ( अस्ति ) क्रोधलक्ष्म आयुधम् क्व ( अस्ति ) क्षमावन्त तपोधना क्व ( च ) ( सन्ति ) ।

व्याक०—तप एव धन येषा ते तपोधना । अत्रभवान्-इद शब्दात् प्रथमान्ताद् भवच्छब्दयोगे " इतराभ्योऽपि दृश्यन्ते " इत्यनेन त्रल् प्राग्-दिशीयस्ताद्धित । तदनु भवच्छब्देन " सुपा " इति समासः । अभिलाषुक - अभिलष्यते "लषपतपद " इत्यनेन उकञ् कृत्प्रत्ययः । तद्योगे 'नलोक ' इति षष्ठीनिषेधात् ' जयम् ' इत्यत्र कर्मणि द्वितीया । क्षमावन्त -क्षमाशब्दात् नित्ययोगे मतुप् । अरातिषु-वैषयिके अधिकरणे सप्तमी ।

व्याख्या—*नूनम्-निश्चयेन, † अत्रभवान्-पूज्यो भवान्, अरातिषु-शत्रुषु-तद्विषये, जयम्, अभिलाषुक -विजयेच्छावान्, अस्तीति शेष, ( अन्यथा ) क्रोधस्य-कोपस्य, लक्ष्म-चिह्नम्, आयुधम्-अस्त्रम्, क्व, अस्ति, क्षमावन्त -शान्तिशीला , तपोधना -तपस्विन क्व च, आयुधधारण तपश्चरण च परस्परविरुद्धमित्यर्थ ।

भा०—शत्रुविजिगीषयैव त्व तपश्चरसीति तर्कयामि, यदि त्वं मुक्तये तपोऽतप्स्य , तर्हि शस्त्र नाधारयिष्य । इमानि शस्त्राणि तव चेतसि क्रोध-मनुभापयन्ति, मुमुक्षवस्तु शान्तिप्रधाना भवन्ति, यथा नैकत्र शान्तिक्रोधयो सम्भव , विरोधात्, तथैव तत्कार्ययोर्मुख्यतप शस्त्रधारणयोरपि नैकत्र सम्भव , विरोधादेवेति । तस्माद् आयुधधारिणस्ते तप इद गौणमेव । तपोधना - इत्युक्त्या तप एव तेषा धनम्, न हि प्रयोजनान्तरसिद्धये तपस्तेषाम्, तव तु प्रयोजनान्तरार्थं तप इति न त्व तपोधन इति द्योतितम् ।

---

* नून तर्केऽपि निश्चये—इत्यमर ।

† त्रिषु तत्रभवान् पूज्यस्तथैवात्रभवानपि—इति यादव ।

अल०—क्रोधचिन्हैरायुधैः शत्रुविजिगीषानुमानादनुमानालङ्कारः । आयुधतपसो सहयोगस्याघटितत्वानिबन्धनाद्विषम । क्रोधलक्ष्मेत्यायुधविशेषणं साभिप्रायमिति परिकरश्च ।

**यः करोति वधोदर्का निःश्रेयसकरीः क्रियाः ।**
**ग्लानिदोषच्छिदः स्वच्छाः स मूढः पङ्कयत्यपः ॥१६॥**

अ०—यः निःश्रेयसकरीः क्रियाः वधोदर्काः करोति सः मूढः ग्लानिदोषच्छिदः स्वच्छाः अपः पङ्कयति ।

व्याक०—निश्चितं श्रेयः निःश्रेयसम्, "कुगतिप्रादयः" इति समासः, "अचतुर..." इत्यादिना अच् समासान्तः, तत् कुर्वन्ति ताः निःश्रेयसकरीः । "कृञो हेतुताच्छील्यानुलोम्येषु" इति हेत्वर्थे टः। टित्त्वात् ङीप्। द्वितीयान्तं क्रियाणां विशेषणम्। वधः उदर्कः यासां ताः वधोदर्काः। वधशब्दे हन्तेरप्, वधादेशश्च। इदं क्रियाणां विधेयविशेषणम् । ग्लानिमेव दोषम् छिन्दन्ति ग्लानिदोषच्छिदः, क्विप्, द्वितीयाबहुवचनम्, अपां विशेषणम्, मूढशब्दे मुह्यतेः क्तः । पङ्कयति-पङ्कवतीः करोति इति मतुवन्तात् पङ्कशब्दात् "तत्करोति तदाचष्टे" इति णिच्, णाविष्ठवद्भावेन मतुपो लुक्। यद्वा-केवलादेव पङ्कशब्दाद् णिच् ।

व्याख्या—यः-पुरुषः, निःश्रेयसम्-मुक्तिः, तत्करीः-तद्धेतुभूताः, क्रियाः-तपोनुष्ठानादीनि कर्माणि, वधोदर्काः-वधः-परहिंसा, *उदर्कः-परिणामः, यासां तथाभूताः, करोति, सः, मूढः-विवेकरहितः पुरुषः, ग्लानिदोषच्छिदः-ग्लानिम्-पिपासामेव, दोषम्, छिन्दन्ति-नाशयन्ति, तथाभूताः, स्वच्छाः-निर्मलाः, अपः-जलानि, पङ्कयति-पङ्कवतीः करोति । यद्वा-ता अपः पङ्कयति-पङ्कं करोति, पङ्कतां नयतीति ।

भा०—ननु जयार्थमेव तपश्चेत् को दोषः इत्येवं शङ्कायामुच्यते यथा पिपासानिवृत्तिहेतूनां महाफलानां स्वच्छानामपां कर्दमकरणे विनियोगो विद्वद्भिर्गर्ह्यते, तथा मोक्षरूपमहाफलसाधनीभूतस्य तपसः परहिंसारूपे तुच्छे फले

* उदर्कः फलमुत्तरम्—इत्यमरः ।

विनियोगोऽपि गर्ह्य एव, तस्मात् परहिसामात्रार्थं निर्जने तव तपस्युद्योग सुतरामविवेकपूर्ण एवेति ।

अल०—त्वया शत्रुजयार्थं तपो न कर्तव्यमिति विशेषे प्रस्तुते, सामान्याभिधानादप्रस्तुतप्रशसा । यत्तच्छब्दघटितपूर्वोत्तरवाक्ययो. 'यद्‌निश्रेयसफलाया क्रियाया वधोदर्कीकरणम्, तदपा पङ्करूपताकरणम्' इति वाक्यार्थस्योपमाकल्पन विना पर्यवसानाभावाद् निदर्शना ।

**मूल दोषस्य हिसादेरर्थकामौ स्म मा पुष. ।**
**तौ हि तत्त्वाववोधस्य दुरुच्छेदावुपप्लवौ ॥२०॥**

अ०—हिंसादे दोषस्य मूलम् अर्थकामौ मा स्म पुष , हि तौ तत्त्वाववोधस्य दुरुच्छेदौ उपप्लवौ ( स्त. ) ।

व्याक०—हिंसा आदिः यस्य तस्य हिंसादे , तद्‌गुणसंविज्ञानो वहुव्रीहिः, तेन हिंसाया अपि सग्रह । अर्थश्च कामश्च अर्थकामौ । मा स्म पुष -"स्मोत्तरे लङ् च" इति मास्मयोगे लुङ्, पुषादित्वात् च्लेरङ् "न माङ्योगे" इत्यडागमाभाव । अववोधशव्दो घजन्तः । दुरुच्छेदौ-छिनत्ते· कृच्छ्रार्थे खल् । उपप्लवौ-प्लवते. "ऋदोरप्" ।

व्याख्या—हिंसादे -परमारणानृतवचनप्रभृते , दोषस्य-अवगुणस्य, मूलम्-कारणम्, अर्थकामौ-द्रव्यार्जनविषयोपभोगरूपौ गौणपुरुषार्थौ, मा स्म पुष -न वर्धयस्व, हि-यत·, तौ-अर्थकामा, तत्त्वाववोधस्य-तत्त्वज्ञानस्य, दुरुच्छेदौ-दुर्वारो, * उपप्लवौ-उत्पातौ-अन्तरायौ, स्त ।

भा०—यद्यप्यर्थकामावपि पुरुषार्थमध्ये गणिताविति तदुन्नतये तप सम्भवेन्नाम, तथापि अर्थकामयोरत्यन्तमासक्तिर्निषिद्धैव । यतः, अर्थकामौ खलु हिसानृतस्तेयादीना प्रवलाना दोषाणा मूलकारण स्त , तदुक्तमभियुक्तै -'स्त्रीकामा धनकामाश्च किं न कुर्वन्ति पातकम्' इति । किं च, तौ मोक्षसाधनस्य तत्त्वज्ञानस्यान्तरायभूतौ, न ह्यर्थकामसक्तयोस्तत्त्वजिज्ञासाप्युदेति । प्रवृद्धयोश्च तयोर्वारणमतिदुष्करम् । अत परमपुरुषार्थमोक्षपरिपन्थित्वादर्थकामयोरासक्तिस्त्याज्यैवेति ।

---

* उपप्लव. सैंहिकेये विप्लवोत्पातयोरपि–इति रामाश्रमी ।

अल०—अर्थकामयोरपोषणे हेतूपन्यासात् काव्यलिङ्गम्।

**अभिद्रोहेण भूतानामर्जयन् गत्वरीः श्रियः ।**
**उदन्वानिव सिन्धूनामापदामेति पात्रताम् ॥ २१ ॥**

अ०—भूतानाम् अभिद्रोहेण गत्वरीः श्रियः अर्जयन् (पुरुषः) उदन्वान् सिन्धूनामिव आपदां पात्रताम् एति।

व्याक०—अभिद्रोहेण-अभिपूर्वाद् द्रुह्यतेर्घञ्, हेतौ तृतीया। भूतानामिति अभिद्रोहकर्मणि षष्ठी। गत्वरी-"गत्वरश्च" इति गमेः क्वरबन्तं निपात्यते, "टिड्ढा०" इति ङीप्, श्रिया विशेषणम्, द्वितीयान्तम्। अर्जयन् अर्जयतेर्हेतौ शतृप्रत्ययः। उदकमस्यास्तीति उदन्वान्, उदकशब्दान् मतुप्, "उदन्वानुदधौ च" इति निपातनादुदकशब्दस्योदन्नादेशः, नलोपाभावश्च। पात्रताम्-तलन्तं द्वितीयान्तम्। श्रिय इत्यर्जनकर्म।

व्याख्या—भूतानाम्-प्राणिनाम्, अभिद्रोहेण-पीडया, गत्वरीः-गमनशीला-अस्थिराः, श्रियः-लक्ष्मीः, अर्जयन्-संपादयन्, पुरुषः, उदन्वान्-समुद्रः, सिन्धूनामिव-नदीनां यथा, तथा आपदाम्-आपत्तीनाम्-पतनस्य, पात्रताम्-आश्रयत्वम्, एति-प्राप्नोति, आश्रयो भवतीति।

भा०—अर्थकामयोर्दैयत्वमुक्तम्। तत्रार्थस्य विशेषेण दोषा उद्भाव्यन्ते-न हि अन्येषां प्राणिनां विद्रोहेण विना सम्पल्लभ्यते-इति प्रसिद्धमेतत्। यैश्च सम्पदर्जने विरोधः कृतः, ते प्राप्तेऽवसरे एतं द्रोग्धारमपि पातयिष्यन्त्येवेति सुलभाः श्रीपरस्यापदः। यथा समुद्रे निरवच्छिन्नप्रवाहा नद्यः पतन्ति तथैव तस्मिन् पुरुषे निरन्तरं विपद आपतन्ति य ऐश्वर्यप्राप्तये प्राणिहिंसां विधत्ते। भूतानामिति श्रिय इति च बहुवचनोपन्यासेन लोभाक्रान्तेन बहुविधसम्पदर्जने बहुभिर्भूतैरनेन विद्रोहः कृतः, ते सर्वेऽपि क्रमेण निर्यातनं कुर्युरिति आपदां सातत्यं व्यञ्जितम्, तदेव चोदन्वन्नद्युपमया दृढीकृतम्। न च सम्पद एव ता विपद्भ्यो रक्षिष्यन्तीति भ्रमितव्यम्, यतः सम्पदो गत्वर्यः गमनशीलाः नैकत्र तिष्ठन्ति, ता विनङ्क्ष्यन्ति, आपदश्चागमिष्यन्तीत्यनर्थोदर्कता दृढीकृता।

अल०—उपमा। उदन्वानुपमानम्, पुरुष उपमेयः। बिम्बप्रतिभावापन्ननदीविपदाश्रयता समानो धर्मः। पात्रशब्द आश्रये निरूढलाक्षणिकः।

गत्वरीति विशेषणस्य साभिप्रायत्वात्परिकर ।

**या गम्या सत्सहायाना यासु खेदो भय यतः ।**
**तासा किं यन्न दु खाय विपदामिव सपदाम् ॥ २२ ॥**

अ०—या सत्सहायाना गम्या ( सन्ति ) यासु ( सतीषु ) खेद ( भवति ) यतः भयम् ( जायते ) विपदामिव तासा सपदा किम् ( अस्ति ) यद् दु खाय न ( सपद्यते ) ।

व्याक०—सन्त. सहाया येषा तेषा सत्सहायानाम् । "कृत्याना कर्तरि वा" इति कर्तरि षष्ठी । गम्या -गमे "पोरदुपधात्" इति शक्यार्थे यत् । खेद खिद्यतेर्घञ् । यतः-यच्छब्दात्तसिल् । "भीत्रार्थाना भयहेतु" इत्यपादानत्वम् । यासु-सति सप्तमी । तासामिति षष्ठी किंसम्बन्धे । दुःखाय-अध्याहृतक्लृपधातुयोगे "क्लृपि सपद्यमाने च" इति चतुर्थी । 'यद् दुःखाय न' इत्युत्तरवाक्यगतो यच्छब्दस्तच्छब्दोपादान नापेक्षते—इत्यसकृदुक्तम् ।

व्याख्या—या -सम्पद , सन्त -श्रेष्ठा ( विद्यमाना वा ) सहाया - पृष्टपोषका सहचरा , येषा तथाभूतानामेव पुरुषाणाम् , गम्याः-तैरेव प्राप्तु शक्या , ( विपत्पक्षे तथाविधै गम्या -निस्तरणीया. ) सन्ति, यासु-सम्पत्सु सतीषु, खेद -रक्षणादिक्लेश , ( विपत्पक्षे स्वरूपसत्तामात्रेण खेद ) जायते, यत -याभ्य -सम्पद्भ्य , भयम्-अपहरणादिभीतिः, ( विपत्पक्षे-विपत्स्वरूपेणैव ) जायते, किं बहुना, विपदामिव, तासा सपदाम्, सम्बन्धि, किमस्ति, यद् दु खाय-क्लेशाय, न भवति, सर्वमपि दु खमेवोत्पादयतीत्यर्थ ।

भा०—विचारे क्रियमाणे प्रतीयते-यत्सपदो विपदश्च तुल्या एव । तथा हि यथा विपदः प्रशस्तान् सहायान् विना सर्वथा अगम्याः ( अनिस्तरणीया ) तथैव सपदोऽपि तान् विना अगम्या ( अप्राप्याः ) सन्ति । सहायान्वेषणे च क्लेशो जायत एव, न हि सहाया सर्वदा सुलभा भवन्ति, तदानुगत्ये च स्वातन्त्र्यहानिरित्यपर क्लेश । किं च यथा विपत्सु सतीषु खेदो जायते, तथा सपत्स्वपि रक्षणादिक्लेशो दुर्निवार , यथा च विपद. स्वरूपतो भयहेतव , तथैव सपदोऽपि चोरादिभय नित्यमेवावहन्ति । अतो विपदो यथा लोके दु खदा इति हेयतया प्रसिद्धा , तथैव सपदोऽपि मन्तव्या ।

अलं०—उपमालङ्कार । गम्या इति श्लिष्ट पदम् । विपदुमया सपदा हेयत्व व्यज्यते इति अलङ्कारेण वस्तुध्वनि ।

**दुरासदानरीनुग्रान् धृतेर्विश्वासजन्मनः ।**
**भोगान् भोगानिवाहेयानध्यास्यापन्नदुर्लभा ॥२३॥**

अ०—दुरासदान् विश्वासजन्मन धृते उग्रान् अरीन् भोगान् आहेयान् भोगानिव अध्यास्य ( स्थितेन पुरुषेण ) आपद् दुर्लभा न अस्ति ।

व्याक०—विश्वासाद् जन्म यस्यास्तस्या विश्वासजन्मन । जन्मोत्तरपदो व्यधिकरणबहुव्रीहि । विश्वास इति श्वसितेर्घञ् । दुरासदान्-दु खेनासद्यन्त इति सीदतेः कर्मणि कृच्छ्रार्थे खल् । धृतिशब्द क्तिन्नन्त । भोगान्-भुज्यन्ते इति भुजेर्घञ् । "अधिशीङ्स्थासा कर्म" इत्यनेन अध्यासनकर्मत्वे द्वितीया । आहेयान्-अहिषु भवानिति अहिशब्दाद् "दृतिकुक्षिकलशिवस्त्यस्त्यहेर्ढञ्" । अध्यास्य-अधिपूर्वाद् आस्तेर्ल्यप् । अध्याहृतसमानकर्तृक-स्थितिक्रियापेक्ष तादृशलाभक्रियापेक्ष वा पूर्वकालिकत्वम् । दुर्लभशब्दो व्याख्यात ।

व्याख्या—दुरासदान्-दुष्प्रापान्, विश्वासाद्-विस्रम्भाद्, जन्म, यस्या तथोक्तायाः, धृते-धैर्यस्य, उग्रान्-महतः, अरीन्-शत्रून्, भोगान्-उपभोग-साधनानि धनानि-सपदः, आहेयान्-अहिषु सर्पेषु भवान्, सर्पाणाम्, *भोगानिव-फणासदृशान्, अध्यास्य-अधिष्ठाय-स्थितेन, अधितिष्ठता पुरुषेण आपत्-पतनम् ( पक्षे मरण च ) दुर्लभा, नास्ति । अवश्य लभ्यते इति ।

भा०—पूर्वं तु धन दुर्लभमेव, दैवाद् बहून् क्लेशान् सोढ्वा लब्धमपीद विश्वासधैर्ययोर्नाशक भवति, यतस्तद्रक्षायै चेतश्चञ्चल भवति, अत्र वा रक्ष्य तत्र वेति निरन्तर सङ्कल्पयति, न क्वापि स्थिति लभते, धनिकस्य सर्वत्रा-विश्वासात् । अविश्वस्तस्य च शान्तिसुख दूर एव । तथा च यथा सर्पस्य फणाया स्वय स्थितेन पुरुषेण मरण प्राप्यत एव, तथा धनार्जनपरेणाप्याप-त्प्राप्यत एव । स्वरूपेणैव धनमापद्रूपमेवेति । दुरासदादिविशेषण सर्पपक्षेऽपि योज्यम्, सर्पफणापि दूरासदा ( दुर्ग्रहा ) भवति, गृहीतापि च दशनभिया स्वान्तमधीर विधत्ते, न जाने कदावसर गृहीत्वा दशेदित्यविश्वासश्च तत्र ।

---

* भोग सुखे धने चाहे. शरीरफणयोरपि—इति विश्व. ।

अल०—उपमा । आपदा हेतुतैव साधर्म्यम् ।

नान्तरज्ञाः श्रियो जातु प्रियैरासां न भूयते ।
आसक्तास्तास्वमी मूढा वामशीला हि जन्तवः ॥ २४ ॥

अ०—श्रियः जातु अन्तरज्ञाः न ( भवन्ति ) आसां प्रियैः न भूयते मूढाः अमी तासु आसक्ताः ( भवन्ति ) हि जन्तवः वामशीलाः ( सन्ति ) ।

व्याक०—अन्तरं जानन्तीत्यन्तरज्ञाः । ज्ञाधातोः "आतोऽनुपसर्गे कः" उपपदसमासः । वामं शीलं येषां ते वामशीलाः । प्रियैः-प्रीणातेः "इगुपधज्ञाप्रीकिरः कः" । भवनक्रियाया अनुक्ते कर्तरि तृतीया । भूयते-भवतेर्भावे लट् । आसक्ताः-आङ्पूर्वात् षञ्जधातोः क्तः । तासु-विषयसप्तमी ।

व्याख्या—श्रियः-सम्पदः, जातु-कदाचिदपि, अन्तरज्ञाः-भेदज्ञाः-योग्यायोग्यविवेकवत्यः, न भवन्ति, अत एव आसाम्-श्रीणाम्, प्रियैः-प्रेमपात्रैः ( कैरपि ) न भूयते, नेमाः कुत्राप्यनुरागं बध्नन्तीति यावत् । मूढाः-विवेकशून्याः, अमी-धनैषिणः पुरुषाः, तासु-विवेकरहितासु-अननुरक्तासु च लक्ष्मीषु, आसक्ताः-कृतानुरागाः, भवन्ति, हि-निश्चयेन, जन्तवः-प्राणिनः, वामशीलाः-विपरीतस्वभावाः सन्ति ।

भा०—इतोऽपि हेतोः सम्पदो हेयाः-तथा हि इमा विवेकशून्या योग्यायोग्यविशेषं न परिचिन्वन्ति, योग्यं विहायायोग्याश्रयणात्, अयोग्यवद् योग्यस्यापि त्यागाद् वा । नापि इमाः कुत्रचिदेकस्मिन् बद्धानुरागा भवन्ति, यः-पुरुषोऽद्य श्रीभिः सेव्यते, स एव परेद्युस्ताभिरेव तृणत्याजं त्यज्यते, तथा च पण्यपुरन्ध्रीष्विवासु श्रीषु मूढा एव पुरुषा आसजन्ति, न बुद्धिमन्तः । ये आसक्ताः, तेषां विपरीतस्वभावजन्यो दोषः ।

अल०—श्रीषु प्रस्तुतासु अप्रस्तुतपण्यस्त्रीव्यवहारप्रतीतेः समासोक्तिः । उत्तरार्धे अर्थान्तरन्यासः ।

कोपवादः स्तुतिपदं यदशीलेषु चञ्चलाः ।
साधुवृत्तानपि क्षुद्रा विक्षिपन्त्येव संपदः ॥२५॥

अ०—( संपदः ) अशीलेषु चञ्चलाः इति यद् ( अत्र ) स्तुतिपदे कः अपवादः ( अस्ति ) ( किन्तु ) क्षुद्राः संपदः साधुवृत्तान् अपि विक्षिपन्ति एव ।

व्याक०—अविद्यमान शील येषु तेषु अशीलेषु, 'नञोस्त्यर्थाना वाच्यो वा चोत्तरपदलोप." इति बहुव्रीहिः । स्तुते पदे स्तुतिपदे, ष्टुञ् धातो. क्तिनि स्तुति । साधु वृत्त येषा तान् साधुवृत्तान् । वृत्तमिति वृतुधातो क्तान्तम्, अपवाद.-अपपूर्वाद् वदतेर्घञ् ।

व्याख्या—सपद -श्रिय , अशीलेषु-दुर्वृत्तेषु, चञ्चला -अस्थिरा , भवन्ति, इति यद् दृश्यते, अत्र स्तुतिपदे-स्तुतिस्थाने, ( स्तुतिविषये वा ) कः अपवाद -को विरोध -का निन्देति, न कोप्यपवाद इत्यर्थ । किन्तु क्षुद्रा - तुच्छा , सम्पदः, (दुर्वृत्तानिव) साधुवृत्तान्-सुशीलानपि पुरुषान्, विक्षिपन्त्येव- दूर त्यजन्त्येवेति । स एष साधुपुरुषत्याग एव तासामपवादपदम् ।

भा०—ननु दुष्टेभ्य एव पुरुषेभ्य श्रियोऽपयान्ति, न तु शिष्टेभ्य इति चेद्, मैव वोच । तथा सति श्रिया चाञ्चल्यापवादो लोके न स्यात् । दुर्वृत्त पुरुषं त्यजन्त्य श्रिय. केन वा न प्रशस्यन्ते, अपात्रत्यागस्य सर्वैरपि प्रशसनात् । किन्तु क्षुद्रा विवेकशून्या इमा श्रिय दुर्वृत्तमिव सद्वृत्तमपि दूरतस्त्यजन्ति, अत एव इमा निन्द्यन्ते । तस्मात्त्याग आसा स्वाभावसिद्ध एवेति हेया एवेमा । अनेन सदर्भेण अर्थो न पुरुषार्थ इति दृढीकृतम् ।

**कृतवानन्यदेहेषु कर्ता च विधुरं मन" ।**
**अप्रियैरिव सयोगो विप्रयोग प्रियै सह ॥ २६ ॥**

अ०—अप्रियै सयोगइव प्रियै. सह विप्रयोग. अन्यदेहेषु मन विधुर कृतवान् कर्ता च ।

व्याक०—अन्येषु देहेषु अन्यदेहेषु । सयोगविप्रयोगयोर्युनक्तेर्घञ् । कृत-वान्-करोतेर्भूते क्तवतु । कर्ता करोते' लुट्तृचो श्लिष्ट रूपम्, करिष्यति, करोति इति चार्थः । अप्रियै', प्रियै -उभयत्र सहयोगे तृतीया ।

व्याख्या—अप्रियै -अनिष्टै., सयोग इव-सम्बन्धो यथा, तथा, प्रियै' सह विप्रयोगः-इष्टविरह , अन्यदेहेषु-स्वस्यैव देहान्तरेषु अतीतानागतेषु, मन , विधुरम्-दु खितम्, कृतवान्, कर्ता च-करिष्यति च, वर्तमाने करोति च ।

भा०—यदि कथयसि-वैरनिर्यातनार्थं तपस्तपस्यामि इति तदपि नोचि-तम्, अप्रियकरणेन शत्रूणा पीडोत्पादन विना वैरनिर्यातनासिद्धे , अप्रिय

सम्पाद्य कस्यचित् पीडोत्पादन च सर्वथा त्याज्यम्, यतः तव मनोपि अप्रिय-सयोगप्रियविप्रयोगाभ्या पीडितमभूत्, भविष्यति, वर्तमाने भवति च, तथा च 'अतो यदात्मनोऽपथ्य परेषा न तदाचरेत्' इत्यभियुक्तोक्त्या आत्मदृष्टान्तेन त्वया पराप्रियकरणाद् विरमणीयमेव । यद्वा-अर्थनिन्दा प्रपञ्चिता, कामनिन्दा प्रारभ्यते । कामे जीवातु. प्रियसयोग , स एव निन्द्यते-विरहदु खभीतेः सद्भावात् प्रियसयोग एव नाभिलषणीय इति ।

अल०—उपमा, अप्रियसयोग उपमानम्, प्रियवियोग उपमेय. ।

**शून्यमाकीर्णतामेति तुल्य व्यसनमुत्सवै ।**
**विप्रलम्भोऽपि लाभाय सति प्रियसमागमे ॥ २७ ॥**

अ०—प्रियसमागमे सति शून्यम् आकीर्णताम् एति, व्यसनम् उत्सवैः तुल्यम् ( भवति ) विप्रलम्भ अपि लाभाय ( कल्पते )।

व्याक०—'सम्' 'आङ्' एतत्पूर्वाद् गमेरप्प्रत्यये समागम· । आकीर्णताम्-आङ्पूर्वात् 'कॄ विक्षेपे' धातोर्निष्ठा, "ॠत इद् धातो· ", निष्ठान्ताद् भावे तल् । उत्सवै -उत्सूते हर्षम् इति पूङ्धातो पचाद्यच् । "तुल्यार्थैरतुलोपमाभ्याम् ··" इति तृतीया । विप्रलम्भ.-विप्रपूर्वाल्लभतेर्घञ्, "लभेश्च" इति नुमागम । लाभाय-पूर्ववद् घञ् । नुम् तु न, "उपसर्गात् खल्घञोः" इति नियमात् सोपसर्गस्यैव लभेस्तद्विधानात् । क्लृपिं सम्पदि जनि वाध्याहृत्य "क्लृपि सम्पद्यमाने च" इत्यनेन चतुर्थी ।

व्याख्या—प्रियसमागमे-इष्टसंयोगे सति, शून्यम्-रिक्तमपि स्थानम्, आकीर्णताम्-सकुलताम्-पूर्णताम्, एति-प्राप्नोति, समृद्धमिव प्रतीयते इति यावत्, व्यसनम्-विपदपि, उत्सवै तुल्यम्-उत्सवसदृशम्, आनन्दजनक भवति, विप्रलम्भ -वञ्चनापि, लाभायैव कल्पते ।

भा०—प्रियसमागमस्य सुखैकहेतुता लोकैर्मता-इति प्रपञ्च्यते-प्रियसमागम एव लोकै सर्वस्व मन्यते, प्रियेण सह स्थितौ सत्या शून्यमपि स्थान समृद्ध प्रतीयते, दु खमपि प्रियेण सह भुज्यमानमुत्सव इव मन्यते, प्रियो यदि वञ्चनामपि कुर्यात्, तदापि लाभ एव मन्यते लोकै ।

अल०—शून्यादीनामाकीर्णत्वादिप्रतिपादनाद् विरोधोक्ति , प्रियसमागम-

स्य सर्वसुखनिदानता व्यङ्ग्या ।

**तदा रम्याण्यरम्याणि प्रिया शल्यं तदासवः ।**
**तदैकाकी सबन्धुः सन्निष्टेन रहितो यदा ॥ २८ ॥**

अ०—यदा ( जनः ) इष्टेन रहितः ( भवति ) तदा ( तस्य ) रम्याणि ( अपि ) अरम्याणि ( भवन्ति ) तदा प्रियाः असवः शल्यं ( भवन्ति ) तदा सबन्धुः सन् ( अपि ) एकाकी ( भवति ) ।

व्याक०—बन्धुभिः सह वर्तमानः सबन्धुः । तुल्ययोगे बहुव्रीहिः । रहितः-रहयतेः चौरादिकान्निष्ठा, मित्त्वाद् ह्रस्वः । एतत्कर्तरि 'इष्टेन' इति तृतीया । एकाकी "एकादाकिनिच्चासहाये" इत्याकिनिच् प्रत्ययः ।

व्याख्या—यदा-यस्मिन्नवसरे, जनः, इष्टेन-प्रियेण, रहितः-त्यक्तः, विप्रयुक्तः, भवति, तदा तस्य कृते रम्याणि-मनोहराण्यपि वस्तूनि, अरम्याणि-अमनोहराणि-दुःखकराणि, भवन्ति, तदा, प्रियाः-सततम् एष्टव्याः, असवः-प्राणाः, शल्यम्-बाणाग्रवद् दुःखदा असत्या वा, भवन्ति, तदा, सबन्धुः-बन्धुयुक्तः सन्नपि, एकाकी-निःसहाय इव भवति ।

भा०—यथा प्रिययोगः सुखैकनिदानम्, तथा प्रियविरहो दुःखैकनिदानं लोकानां मतं इत्याह, स्पष्टो भावार्थः ।

**युक्तः प्रमाद्यसि हितादपेतः परितप्यसे ।**
**यदि नेष्टात्मनः पीडा मा सञ्जि भवता जने ॥२९॥**

अ०—( त्वम् ) युक्तः ( सन् ) हितात् प्रमाद्यसि, अपेतः ( सन् ) परितप्यसे, यदि आत्मनः पीडा न इष्टा ( तर्हि ) भवता जने मा सञ्जि ।

व्याक०—प्रमाद्यसि-प्रपूर्वात् माद्यतेर्दैवादिकाल्लट् । अपेतः-अपपूर्वात् इणधातोः क्तः । परितप्यसे-तपेर्दैवादिकाल्लट् । पीडा-भिदादित्वात् "षिद्भिदादिभ्योऽङ्" इत्यनेनाङ्, एषणक्रियाया उक्ते कर्मणि प्रथमा । तर्हि-तच्छब्दाद् "अनद्यतने र्हिलन्यतरस्याम्" इति र्हिल् प्रत्ययः । मा सञ्जि षञ्जधातोः कर्मणि लुङ्, "न माङ्योगे" इत्यडागमनिषेधः । हितादिति 'जुगुप्साविरामप्रमादार्थानामुपसङ्ख्यानम्" इति प्रमादयोगे अपादानत्वाद् अपादाने पञ्चमी । भवतेति-एषणस्य सञ्जनस्य च कर्तरि तृतीया । जने-अधिकरणत्वविवक्षया सप्तमी ।

व्याख्या—त्वम्, प्रियजनेन, युक्त-सयुक्त सन्, हितात् श्रेयसः-करणीयात्, प्रमाद्यसि च्युतो भवसि, अपेत-वियुक्तस्तु सन्, परितप्यसे-दु खी भवसि, तस्माद्, यदि आत्मन पीडा-दु खम्, न इष्टा-न अभिमता, तर्हि भवता-त्वया, जने-कस्मिश्चिदपि स्वजने, मा सञ्जि-सङ्ग-स्नेह, न क्रियताम् । मल्लिनाथस्तु हितेन युक्त प्रमाद्यसि-हृष्टो भवसि, हिताद् अपेत-रहितस्तु परितप्यसे । यदि स्वस्य पीडा नाभिमता तर्हि जने-अन्यस्मिन्नपि, सा पीडा मा सञ्जि-न सञ्ज्यताम्-इति व्याचख्यौ । तत्रोत्तरार्द्धेनैव सर्वस्मिन्नभिधेये सगृहीते पूर्वार्द्धमपुष्टार्थम्, प्रमाद्यसीति हर्षेऽर्थे अवाचक चेति तदुपेक्षितम् ।

भा०—प्रियसप्रयोगविप्रयोगयोः सुखदु खैकहेतुता लोकदृष्ट्या व्याख्याय तत्त्वदृष्ट्या हेयतामाह यदि जन प्रियेण सयुक्तो भवेत्, तदा कामवशगो हिताचरणे न प्रवर्तते-इत्यनर्थ., यदि तु वियुक्तो भवेत्, तदा वियोगदुःखेनाकर्मण्यता याति । ततश्चोभयथाप्यनर्थसद्भावादयमेव दु खविघातक उपायो यत्केनचित्सङ्ग एव न कर्तव्य । तेन न हितप्रमादो न वियोगदु.ख च स्यात् ।

अल०—असङ्गस्य हेतुना समर्थनात् काव्यलिङ्गम् ।

**जन्मिनोऽस्य स्थितिं विद्वाँल्लक्ष्मीमिव चलाचलाम् ।**
**भवान् मा स्म वधीन्न्याय्य न्यायाधारा हि साधव ॥३०॥**

अ०—अस्य जन्मिन स्थितिम् लक्ष्मीमिव चलाचलाम् विद्वान् भवान् न्याय्य मा स्म वधीत्, हि साधव न्यायाधारा ( भवन्ति ) ।

व्याक०—न्याय. आधारो येषा ते, न्यायस्य आधारा वा न्यायाधारा । न्यायशब्दे निपूर्वादिणः " परिन्योर्नीणोर्द्यूताभ्रेषयो " इत्यनेनाभ्रेषार्थे घञ् । आधारेति " अवहाराधारावायानामुपसख्यानम् " इत्यनेन आङ्पूर्वाद् धरतेर्घञन्त निपात्यते । जन्मिन-जन्मास्यास्तीति जन्मशब्दाद् " व्रीह्यादिभ्यश्च " इतानि । तिष्ठते क्तिनि स्थितिम् । चलाचलाम्-चलते पचाद्यच्, " चरिचलिपतिवदीना द्वित्वमच्याक् चाभ्यासस्येति वक्तव्यम् " इत्यनेन द्विर्भाव., अभ्यासस्यागागमश्च । विद्वान्-विदेर्हेतौ शतृप्रत्यये तस्य " विदेः शतुर्वसुः " इति वस्वादेश । न्याय्यम्-न्यायादनपेतम् " धर्मपथ्यर्थन्यायादनपेते " इति न्यायशब्दाद् यत् । मा स्म वधीत्-स्मोत्तरे माङ्युपपदे हन्ते " स्मोत्तरे लङ्

च " इत्यनेन लुङ्, " लुङि च " इत्यनेन हन्ते वधादेश , युष्मच्छब्दा-भावात् प्रथमपुरुष ।

व्याख्या—अस्य जन्मिन -उत्पत्तिधर्मकस्य शरीरस्य ( शरीरिणो वा, शरीरविशिष्टस्य तस्यापि जन्मित्वात् ) स्थितिम्-अवस्थानम्, लक्ष्मीमिव-सपत्नसदृशीम्, चलाचलाम्-चञ्चलाम्, अनित्याम्, विद्वान्-जानान , भवान्, न्याय्यम्-न्यायोपेत मार्गम्, मा स्म वधीत्-न जहि न त्यजेति यावत् । हि-यत , साधवः-सत्पुरुषा , न्यायाधारा -न्याय.-औचित्यमेव, आधारः-अवलम्ब , येषाम्, तथाभूता , ( यद्वा-न्यायस्य आधारा -आश्रया -औचित्यपक्षपातिनः ) भवन्ति ।

भा०—यथा लक्ष्मीरस्थिरा, तथेद जीवनमप्यस्थिरमिति त्व सम्यग् वेत्सि, अतोऽस्थिरवस्तुकृते त्वया परपीडनेन न्यायमार्गो न त्यक्तव्य. । साधव खलु न्याय्यमेव कर्म विदधते, नान्याय्यम्, यदि त्व परान् पीडयसि, तर्हि लोकै-रसाधुरिति व्यपदेक्ष्यसे ।

अल०—विद्वान् इति शतृप्रत्ययेनास्थैर्यवेदनस्य न्याय्यात्यागे हेतुत्वप्रति-पादनात् काव्यलिङ्गम् । 'न्यायाधारा ' इति सामान्येन विशेषस्य समर्थनादर्था-न्तरन्यास । इवशब्देन लक्ष्मीजीवनयोरुपमानोपमेयभावप्रतिपादनाद् उपमा ।

**विजहीहि रणोत्साह मा तप साधु नीनश ।**
**उच्छेद जन्मन कर्तुमेधि शान्तस्तपोधन ! ॥३१॥**

अ०—हे तपोधन ' रणोत्साह विजहीहि, साधु तप मा नीनशः जन्मन उच्छेद कर्तु शान्त एधि ।

व्याक०—तप धन यस्य स तपोधन., सम्बोधने सुलोप विजहीहि-' ओहाक् त्यागे ' इति जौहोत्यादिकाद् लोटि मध्यमपुरुषैकवचनम्, सन्व-द्भावदीर्घो । तप इति " गतिबुद्धि " इति सूत्रेण प्रयोज्यकर्म । उच्छेदम्-उत्पूर्वाच्छिनत्तेर्घञ् । शान्त -शाम्यते क्रान्तम्, उगित्त्वाद् " यस्य विभाषा " इतीण्निषेध । एधि-अस्तेर्लोटि मध्यमपुरुषैकवचनम् ।

व्याख्या—हे तपोधन-तपस्विन्, रणे-सग्रामविषये, उत्साहम्-अध्य-

---

* उत्साहोऽध्यवसाय स्यादित्यमर. ।

वसायम्-( उद्योगम्-*लोकोत्तरेषु कार्येषु स्थेयास प्रयत्नमिति मल्लिनाथ ) विजहीहि विशेषतो मुञ्च । साधु नि -श्रेयससाधकत्वात् समीचीनम् श्रेष्ठम्, तप - कृच्छ्रादिकर्म, ( लक्षणया तज्जनिता सिद्धिम् ) मा नीनशः-न नाशय । जन्मन -भूय शरीरबन्धस्य, उच्छेदम्-निरोधम्, कर्तुम्-मोक्षमधिगन्तुम् , शान्त , एधि-शमपरो भव, विजिगीषा त्यजेति यावत् ।

भा०—अतो हे तपस्विन् ! त्व रणोत्साह त्यज, मोक्षसाधकस्य तपसो वैरनिर्यातनरूपायाल्पफलाय दुरुपयोग मा कार्षा । मोक्षप्राप्तये शान्ति धत्स्व । तत एव ते तपोवनत्व सम्यक् समर्थित स्यात् ।

अल०—साधु इति तपसो विशेषणम्, तपोवन इति विशेष्य च साभिप्रायमिति परिकरपरिकराङ्कुरौ ।

**जीयन्ता दुर्जया देहे रिपवश्चक्षुरादयः ।**
**जितेषु ननु लोकोऽय तेषु कृत्स्नस्त्वया जित ॥३२॥**

अ०—दुर्जया देहे ( वर्तमाना ) चक्षुरादय रिपव जीयन्ताम्, तेषु जितेषु त्वया अय कृत्स्न लोकः ननु जित ।

व्याक०—चक्षु आदि येषा ते चक्षुरादयः । दुर्जया -दुःखेन जीयन्त इति दुर्पूर्वाज्जयते. खल् । जीयन्ताम्-जयते प्राप्तकाले कर्मणि लोट् । उत्तरार्धोक्त त्वयेतिकर्तृतृतीयान्तमत्राप्यनुषञ्जनीयम् । रिपव इति जयनस्योक्ते कर्मणि प्रथमा । देहे इति अध्याहृतवर्तनक्रियाधिकरणे सप्तमी जितेषु इति सति सप्तमी ।

व्याख्या—दुर्जया -दु खेन जेतु शक्या , देहे-स्वशरीरे वर्तमाना ( सदा सन्निहिता ) चक्षुरादय.-चक्षुरादीनीन्द्रियाणि, रिपव -शत्रवः, जीयन्ताम्-अभिभूयन्ताम्-स्ववशे क्रियन्ताम्, तेषु-षट्स्विन्द्रियेषु, जितेषु-वशीकृतेषु, त्वया-भवता, अयम्, कृत्स्न -सकल , लोकः, ननु-निश्चयेन, जित ।

भा०—यदि सर्वथा शत्रुविजिगीषा त्यक्तुमसमर्थोऽसि, तर्हि देहे वर्तमानान इमाश्चक्षुरादीन् शत्रून् विजयस्व, इमे खलु देहधारिशत्रूणामपेक्षया दुर्जया सन्ति । देहे इति पदेन तेषा नित्यसान्निध्यमुक्तम्, सदा सन्निहितेभ्य-

* कार्यारम्भेषु सरम्भ स्थेयानुत्साह उच्यते—इति विश्वनाथ ।

एभ्यो यथा भय तथेतरशत्रुभ्यो नास्ति । त्वया एषा स्वायत्तीकरणेन सर्वोऽपि लोक स्वायत्तीकृत स्यात्, जितेन्द्रियस्यार्थनि स्पृहस्य वैरानुदयात् सर्व एव मित्राणि उदासीना वा भवन्तीत्येतावता तस्य सर्वविजयव्यपदेश ।

अल०—चक्षुरादिषु रिपुत्वारोपाद्रूपकम् । तेषा दुर्जयत्वोक्त्या चाविकपर्यवसायि तत् । उत्तरार्द्धे कैमुतिकन्यायेनाभिमतरिपुजयवोधनात्काव्यार्थापत्तिर्व्यंग्या । इन्द्रियेषु जयपद स्वायत्तीकरणे लाक्षणिकम् ।

**परवानर्थसंसिद्धौ नीचवृत्तिरपत्रप ।**

**अविधेयेन्द्रियः पुसा गौरिवैति विधेयताम् ॥२३॥**

अ०—अविधेयेन्द्रिय. ( पुरुष ) अर्थसंसिद्धौ परवान् नीचवृत्ति· अपत्रप. ( सन् ) गौरिव पुसाम् विधेयताम् एति ।

व्याक०—न विधेयानि इन्द्रियाणि यस्य स अविधेयेन्द्रियः । विधेयेति धाधातो "अचो यत्", "ईद्यति" इति आत ईत्वम्, गुण । नीचा वृत्तिर्यस्य स नीचवृत्ति , वर्ततेः क्तिनि वृत्ति । अपगता त्रपा यस्य सोऽपत्रप । त्रपा 'त्रपूष् लज्जायाम्' धातो· षित्वादङ् । ततष्टाप्, बहुव्रीहिसमासे 'गोस्त्रियोरुपसर्जनस्य" इति तस्य ह्रस्व । पर स्वामित्वेन विद्यते यस्य स परवान् । अस्त्यर्थे मतुप् । विधेयताम्-तलन्तम् । पुसामिति "कृत्याना कर्तरि वा" इति कर्तरि षष्ठी । संसिद्धाविति विषयसप्तमी ।

व्याख्या—अविधेयानि-अवश्यानि, इन्द्रियाणि-चक्षुरादीनि, यस्य, तादृश. पुरुष , अर्थस्य-भोजनाच्छादनादिरूपस्य स्वार्थस्य, संसिद्धौ-साधने, *परतन्त्र -पराधीन , नीचा-हलकर्षणभारवहनादिरूपा निकृष्टा, वृत्ति -जीविका, यस्य, तथोक्तः, अपत्रप.-निर्लज्ज सन्, गौरिव-बलीवर्द इव, पुसाम्-पुरुषाणाम्, †विधेयताम्-अधीनताम्-प्रेष्यताम्, एति-प्राप्नोति ।

भा०—य पुरुष इन्द्रियाणि विजित्य स्ववशे न करोति, स्वयमिन्द्रियवशे भवति, स इन्द्रियपराधीन· पुरुषो यदा स्वाभिलषित स्वय न प्राप्तु शक्नोति तदा परमुख निरीक्षते, तत् प्राप्तये स कर्षणवहनादि नीचान्नीचमपि कर्म कर्तुं

---

* परतन्त्र पराधीन परवान्—इत्यमर ।

† विधेयो विनयग्राही वचने स्थित आश्रव.—इत्यमर ।

सन्नद्धो भवति, तथा कुर्वतस्तस्य लज्जापि न जायते । केवलं स्वेन्द्रियतुष्टये स बलीवर्द इवान्येषा दासभाव प्राप्नोति ।

अल०—उपमा । परवत्त्वादिक साधर्म्यम् ।

**श्वस्त्वया सुखसवित्ति स्मरणीयाधुनातनी ।**

**इति स्वप्नोपमान् मत्वा कामान् मा गास्तदङ्गताम् ॥३४॥**

अ०—अधुनातनी सुखसवित्ति, श्व. त्वया स्मरणीया इति कामान् स्वप्नोपमान् मत्वा तदङ्गता मा गा. ।

व्याक०—सुखस्य सवित्ति सुखसवित्ति, सपूर्वाद् 'विद्ज्ञाने' धातोः क्तिनि सवित्तिः । स्वप्न उपमा येषा तान् स्वप्नोपमान्, कामाना विधेयविशेषणम्, स्वप्न इति स्वपितेः " स्वपो नन् " । उपमीयतेऽनयेति उपपूर्वाद् माङ्धातो. " आतश्चोपसर्गे " इत्यङि उपमा । तेषामङ्गता तदङ्गताम्, अङ्गशब्दात्तलि अङ्गताम् । अयनकर्मणि द्वितीया । अधुनाभवा अधुनातनी, अधुनेत्यव्ययात् " सायचिरप्राह्णेप्रगे " इत्यनेन ट्युप्रत्यय, तुडागमश्च, "युवोरनाकौ" । स्मरणीया-स्मरतेरनीयर्, त्वयेति तत्कर्तरि तृतीया । कामान्-काम्यन्ते इति कमुधातोर्घञ् । मत्वा-मन्यतेः क्त्वान्तम्, " अनुदात्तोपदेश " इति न लोप । मा गा -इणो लुङि मध्यमपुरुषैकवचने रूपम् । " इणो गा लुङि " इति गादेश, माङो योगादडागमाभाव ।

व्याख्या—अधुनातनी-इदानींतनी, सुखसवित्ति -सुखानुभव, श्व.-परेऽहनि, त्वया, स्मरणीया-स्मरणमात्रेण ज्ञेया, न त्वनुभवनीया, इति हेतो, कामान्-शब्दादिविषयान्, स्वप्नोपमान्-स्वप्नतुल्यान्-स्वप्नविषयवद् अतात्त्विकान्, मत्वा-निश्चित्य, तदङ्गताम्-तदधीनताम्, मा गा -न प्राप्नुहि ।

भा०—किं च हे तपस्विन् ! योऽय विषयानन्दोऽद्यानुभूयते, परेऽहनि स न तिष्ठति, तस्य स्मरणमात्र जायते, न त्वनुभव, तस्य क्षणिकत्वात्, ईदृशेषु का प्रीतिः ? तथा चेन्द्रियविषयान् स्वप्नवत् क्षणिकसुखान् मत्वा त्वया तत्रासक्तिर्न कर्तव्या, न हि स्वप्ने कश्चिद् बुद्धिमान् सक्तो भवतीति ।

अल०—कामत्यागस्य हेतुना समर्थनात् काव्यलिङ्गम् । स्वप्नोपमानित्युपमा ।

श्रद्धेया विप्रलब्धारः प्रिया विप्रियकारिण ।
सुदुस्त्यजास्त्यजन्तोऽपि कामा कष्टा हि शत्रव. ॥ २५ ॥

अ०—श्रद्धेया ( अपि ) विप्रलब्धार प्रिया ( अपि ) विप्रियकारिणः त्यजन्तः अपि सुदुस्त्यजा कामा हि कष्टा शत्रव ( भवन्ति ) ।

व्याक०—श्रद्धातुं योग्या श्रद्धेया, श्रत्पूर्वाद् दधाते "अचो यत्" विप्रलभन्ते इति विप्रलब्धार, ताच्छील्ये तृन्। विप्रिय कुर्वन्ति इति विप्रियकारिण, करोतेस्ताच्छील्ये हेतौ वा णिनि, प्रियाद् विपरीत विप्रियम्, प्रादिसमास । प्रियशब्दे प्रीधातो कप्रत्ययः । त्यजन्त. त्यजे शत्रन्तम् । सुदुस्त्यजा -सुतरा दुःखेन त्यज्यन्त इति त्यजेः खल् । कष्टा. कषे कर्तरि क्त, "कृच्छ्रगहनयो कष" इतीण्निषेध ।

व्याख्या—श्रद्धेया -पुरुषेण विश्वसनीया अपि, विप्रलब्धारः-वञ्चका, प्रिया -प्रीतिजनका अपि, विप्रियकारिण -अनिष्टकरणशीला, त्यजन्त -पुरुष स्वय परिहरन्तोऽपि, सुदुस्त्यजा -पुरुषेण स्वय त्यक्तुमशक्या, कामाः-शब्दादिविषया, हि-निश्चयेन, कष्टा -अतिगहना -दुरभिभवा ( कुत्सिता इति मल्लिनाथ ) शत्रवः, सन्ति ।

भा०—अपि च हे तपस्विन् ! इमे विषया अतिकष्टदाः कुत्सिता शत्रव सन्ति, तथा हि सुखदतया लोकैरेषु विश्वास क्रियते, परमिमे लोकान् वञ्चयन्ति, सर्वदानुपलम्भ एव तेषा वञ्चनम्, विश्वस्ताना वञ्चनमतीव कष्टप्रदम् । लोकास्तेषु प्रेम विदधते, पर ते सेव्यमाना अनेकरोगशोकप्रदानेन विप्रियमाचरन्ति, वृद्धावस्थाया जराजीर्णतया स्वसेविन स्वय परित्यजन्तोऽपि लोकैर्दुस्त्यजा भवन्ति, चेतसस्तत्रासक्तत्वात् । अत इमे परिहरणीया एव । प्रसिद्धा शत्रवस्तु श्रद्धेया. प्रियाः, दुस्त्यजा वा न भवन्तीति तदपेक्षया वैलक्षण्यमेषाम् ।

अल०——श्रद्धेयत्वविप्रलम्भकत्वादीना सामानाधिकरण्यस्य विरुद्धत्वात् विरोधाभास. । विषयस्वाभाव्याद् विरोधसमाधानम् । तेन प्रसिद्धशत्रुभ्यो व्यतिरेकवननाद् अलङ्कारेणालङ्कारध्वनि ।

विवक्तेऽस्मिन्नगे भूयः प्लाविते जन्हुकन्यया ।
प्रत्यासीदति मुक्तिस्त्वा पुरा माभूरुदायुध ॥ २६ ॥

अ०—विविक्ते जन्हुकन्यया भूय. साविते अस्मिन् नगे मुक्ति त्वा पुरा प्रत्यासीदति, उदायुधः मा भू ।

व्याक०—उद्यतम् आयुध येन स उदायुध ।आयुधशब्दे आयुध्यतेऽनेनेति युध्यते "घञर्थे कविधानम्" इति क । विविक्ते-विपूर्वकाद् 'विचिर् पृथग् भावे' धातो क्त. । प्लाविते-प्लवतेर्णिजन्तात् क्त । जन्हुकन्ययेति तत्कर्तरि तृतीया। प्रत्यासीदति 'प्रति' 'आङ्' एतत्पूर्वात् सीदते "यावत्पुरानिपातयोर्लट्" इति पुरायोगे लट् । सद् धातुरय यद्यप्यकर्मक , तथापीह प्राप्त्यर्थकत्वादर्थान्तरे वृत्ते सकर्मक इति त्वामिति तत् कर्मणि द्वितीया। यद्वा प्रतियोगे द्वितीयात्र व्याख्येया । मा भू.-भवते "माङि लुङ्" ।

व्याख्या—(हे तपस्विन्) *विविक्ते-विजने-एकान्ते, जन्हुकन्यया-गङ्गया, †भूय.-भूयिष्ठम्-पुन पुनर्वा, प्लाविते सिक्ते, (पाविते इति पाठे पवित्रीकृते) अस्मिन्-त्वयाधिष्ठिते, ‡नगे इन्द्रकीलपर्वते, मुक्ति -मोक्ष , त्वाम्-भवन्तम्, §पुरा-प्रत्यासीदति-निश्चयेन सन्निधास्यते । (यद्वा-पुरा-निकटे, प्रत्यासीदति प्राप्नोति ) उदायुध -गृहीतशस्त्र., मा भू -न भवे ,अमर्षचिन्हानि शस्त्राणि त्यजेति यावत् ।

भा०—देशकालसम्पत् कार्यसिद्धौ मुख्य कारण भवति। तत्र सौभाग्याद्देशसम्पत्त्वयातिश्रेष्ठा प्राप्ता । एकान्ते सुरसरिद्-वारिसेकादतिपवित्रितेऽस्मिन् पर्वते शान्तो भूत्वा तप. कुरु, तथा सति मुक्तिस्त्वयातिसुलभा, शस्त्रं त्यज । 'मुक्ति' स्वय त्वा प्राप्नोतीति कर्तृप्रथमया पुरेति निपातप्रयोगेण च मुक्तेरतिसौलभ्यं द्योतितम् ।

**व्याहृत्य मरुता पत्याविति वाचमवस्थिते ।**
**वच. प्रश्रयगम्भीरमथोवाच कपिध्वज ॥ ३७ ॥**

अ०—मरुता पत्यौ इति वाच व्याहृत्य अवस्थिते ( सति ) अथ कपिध्वज प्रश्रयगम्भीरम् वच उवाच ।

---

* विविक्तविजनच्छन्नानि शलाकास्तथा रह. इत्यमरः ।

† भूय. पुन. पुन. स्यात भूतार्थे पुनरव्ययम्- इति विश्व ।

‡ शैलवृक्षौ नगावगौ—इत्यमर ।

§ पुरा पुराणनिकटप्रबन्धातीतनाविषु इति विश्व ।

व्याक०—कपिः ध्वजे यस्य स कपिध्वजः, कपीति कपिशब्दात् "इवे प्रतिकृतौ" इति कनि, तस्य देवपथादित्वाल्लुप्, प्रश्रयेण गम्भीरं प्रश्रयगम्भीरम्। प्रश्रय इति प्रपूर्वाच्छ्रयतेः "श्रिणीभुवोऽनुपसर्गे" इत्यत्र 'अनुपसर्गे' इति निषेधात् घञोऽभावे "एरच्" । वाचम्-वच् धातो "क्विब्वचिप्रच्छि" इत्यादिना क्विप्, दीर्घं च । व्याहरणकर्मत्वाद् द्वितीया। व्याहृत्य-'वि' 'आङ्' एतत्पूर्वाद् हरतेर्ल्यप्। अवस्थिते-इति क्तान्तम् । पत्यौ इति "यस्य च भावेन भावलक्षणम्" इति सप्तमी ।

व्याख्या—मरुताम्-देवानाम्, पत्यौ-स्वामिनि, ब्राह्मणरूपिणि इन्द्रे, इति-पूर्वोक्ताम्, वाचम्-वाणीम्, व्याहृत्य-उक्त्वा, अवस्थिते-विरते सति, अथ-इन्द्र-वचनानन्तरम्, कपिध्वज -कपि -ध्वजे-पताकाया यस्य तथाभूत. अर्जुन, प्रश्र-यगम्भीरम्--प्रश्रयेण-विनयेन, गम्भीरम्-गुर्वर्थम्, विनयनिचुलित गुर्वर्थं च, (विनयमधुरम् इति मल्लिनाथ ) वच.-वाक्यम्, उवाच-जगाद ।

भा०-इन्द्रोपदेश श्रुत्वार्जुनो विनयनिचुलित गभीरार्थं प्रत्युत्तर दातुमारभत।

**प्रसादरम्यमोजस्वि गरीयो लाघवान्वितम् ।**
**साकाङ्क्षमनुपस्कार विष्वग्गति निराकुलम् ॥ ३८ ॥**

अ०—प्रसादरम्यम् ओजस्वि गरीय लाघवान्वितम् साकाङ्क्षम् अनुपस्कार विष्वग्गति निराकुलम् (वाक्य क॰ व्याकुर्यात )

व्याक०—प्रसादेन रम्य प्रसादरम्यम्, प्रसादेति घजन्तम् । ओजस्वि-ओज शब्दाद् ' अस्मायामेधा " इति विनि । गरीय.-गुरुशब्दाद् ईयसुन्, गुरुशब्दस्य गरादेश । लाघवेन अन्वितम्-लाघवान्वितम्, "कर्तृकरणे कृता बहुलम्" इति समास । लाघवमिति लघुशब्दाद् युवादित्वाद् भावेऽण् । अ-न्वितमिति अनुपूर्वाद् एते क्तान्तम् । आकाङ्क्षया सह वर्तमान साकाङ्क्षम् । तुल्ययोगे बहुव्रीहि., आकाङ्क्षेति आङ्पूर्वात् काङ्क्षि धातो "गुरोश्च हल " इत्यप्रत्यय । अविद्यमान उपस्कारो यत्र तद् अनुपस्कारम्, उपस्कारेति उप-पूर्वात् करोतेर्घञ् । "उपात् प्रतियत्नवैकृतवाक्याध्याहारेषु च" इति वाक्याध्या-हारार्थे सुडागम । विष्वग् गति यस्य तद् विष्वग्गति, विष्वगित्यव्ययम् । नि आकुलम् निराकुलम्, निरित्यव्यय नञर्थे, सर्वाण्येतानि द्वितीयान्तानि ।

* विनयप्रश्रयौ समौ—इति यादव. ।

व्याख्या—प्रसादरम्यम्-प्रसाद -अर्थवैमल्यम्, प्रसिद्धार्थपदत्व वा, तेन रम्यम्-हृदयग्राहि, ओजस्वि-ओज -पदाना साभिप्रायत्वम् (†समासभूयस्त्वम् इति मल्लिनाथ ) तद्वत्, गरीय -अर्थभूयस्त्वयुक्तम्, न तु शब्दाडम्बरमात्रम्, लाघवान्वितम्-लाघवम्-शब्दसक्षेप:, तेन अन्वितम्-युक्तम्, विस्तरदोषशून्यम्, साकाङ्क्षम्-आकाङ्क्षा-पदार्थाना वाक्यार्थाना च परस्परसम्बन्ध, तद्युक्तम्, अनुपस्कारम् उपस्कार -वाक्याध्याहार , त विनैवार्थबोधजनकम्, विष्वक्-समन्तत.'अपेक्षितसकलार्थप्रतिपादनेन, गति -सामर्थ्यम् , यस्य तथाभूतम् , निराकुलम्-असकीर्णार्थम्-अनेकार्थकशब्दाभावादसदिग्धार्थम्, ईदृश वाक्यं को वक्ता व्याकुर्यादिति चतुर्थेन पद्येन सम्बन्ध ।

भा०—पूर्वमर्जुनस्तद्वाक्य शालीनतया प्रशसति-हे मुने ! भवद्वाक्य स्फुटार्थप्रतिपादकतया प्रसादगुणयुक्तम्, अत एव श्रोतुर्हृदयावर्जकम्, यद्यपि पदार्थविशदीकरणे पुनरुक्तिर्भवति, अर्थगौरव च नश्यति, परं भवता साभिप्रायपदप्रयोगेण पुनरुक्तिरपि न कृता, अर्थगौरव च रक्षितम्, श्रोतुरुद्वेगकर शब्दविस्तरोऽपि परिहृत , असम्बद्ध किमपि नाभिहितम्, आवश्यकसर्वशब्दप्रयोगाद् अध्याहारोऽपि परिवर्जित:, उपदेशस्य मिताक्षरत्वेऽपि वक्तव्याशो न त्यक्त , अनेकार्थकशब्दप्रयोगादर्थसदेहोऽपि निरस्त इत्यहो अभिनन्दनीया वचनचातुरी भवत: ।

अल०—विशेषाणा साभिप्रायत्वात् परिकर: ।

**न्यायनिर्णीतसारत्वान्निरपेक्षमिवागमे ।**
**अप्रकम्प्यतयान्येषामाम्नायवचनोपमम् ॥ ३९ ॥**

अ०—न्यायनिर्णीतसारत्वाद् आगमे निरपेक्षमिव अन्येषाम् अप्रकम्प्यतया आम्नायवचनोपमम् ।

व्याक०—न्यायेन निर्णात (तत्पु०) सारो यस्य (बहु०) तस्य भाव , तस्माद् न्यायनिर्णातसारत्वाद्, समस्तपदाद् भावे त्व । हेतौ पञ्चमी । निर्णात इति निर्पूर्वाद् नयते क्तान्तम् । “उपसर्गादसमासेऽपि..” इति णत्वम् ।

* प्रसिद्धार्थपदत्व यत् न प्रमादो निगद्यते—इत्यालङ्कारिका ।
† ओज समासभूयस्त्वम् ।

मारेति सरते 'सृस्थिरे" इति घञ् । निर्गता अपेक्षा यस्य तद् निरपेक्षम्, अपेक्षेति अपपूर्वादीक्षते "गुरोश्च हल" इत्यप्रत्ययः । न प्रकम्पितुं शक्यम्, अप्रकम्प्यम्, तस्य भावस्तत्ता, तया अप्रकम्प्यतया । कम्पे 'ऋहलोर्ण्यत्" ततो भावे तल् । हेतौ तृतीया । आम्नायस्य वचनम् उपमा यस्य तद् आम्नायवचनोपमम्, अम्नायते (अभ्यस्यते) असौ आम्नाय , 'म्ना अभ्यासे' धातो "अकर्तरि च कारके सञ्ज्ञायाम्" इति घञ् "आतो युक् " इति युगागम । उपमाशब्दो व्याख्यातापूर्व । आगमे-गमेरखन्तः,अपेक्षाविषये सप्तमी । अन्येषामिति 'कृत्यानां कर्तरि वा" इति कर्तरि षष्ठी ।

व्याख्या—किं च न्यायनिर्णीतसारत्वात्-न्यायेन-युक्त्या, (पक्षे न्यायै-जैमिनिना द्वादशलक्षण्या प्रतिपादितैः सहस्रसंख्याकैरधिकरणै ) निर्णीत-निश्चित , सार-तात्पर्यार्थो यस्य तथाभूतत्वात्, ( स्वप्रामाण्यदृढतासिद्धये ) आगमे-शास्त्रविषये, ( पक्षे स्वातिरिक्तस्मृत्यादिशास्त्रे ) निरपेक्षमिव-अनाकाङ्क्षमिव, ( एकत्र युक्तिदार्ढ्याद्, अपरत्र स्वतःप्रामाण्याद् अन्येषाम्-प्रतिवादिनाम्, अप्रकम्प्यतया-विरुद्धयुक्त्युपन्यासेन-अप्रत्याख्येयतया ( पक्षे अन्येषाम्-प्रत्यक्षादिप्रमाणानाम्, अप्रकम्प्यतया-अबाध्यतया ) आम्नायवचनोपमम्-आम्नायवचनम्-वेदवाक्यम्-तत्सदृशम्, वाक्यं को ब्रूयादिति पूर्ववत्क्षेप ।

भा०—हे मुने ! भवद्वचो वेदवाक्यतुल्यम्, तथा हि-यथा वेदवाक्य मीमांसाशास्त्रेण निर्धारितस्वार्थं स्मृत्यादि प्रमाणान्तरं नापेक्षते, स्वत प्रमाणत्वात्, तथैव भवद्वचोऽपि युक्तिभि साधिते स्वार्थे उपोद्बलकं शास्त्रान्तरं नापेक्षते, युक्तीनामतिदार्ढ्यात् । किं च यथा वेदार्थ प्रत्यक्षादिभिर्न बाध्यते, तथैव भवत्प्रतिपादितोऽर्थोऽपि प्रतिवादिभिर्विरुद्धयुक्त्युपन्यासेन खण्डयितुं न शक्यते । इवशब्दोऽत्र सम्भावनायाम्, युक्तिदार्ढ्यादागमनिरपेक्ष सम्भाव्यते इति । वस्तुतस्तु आगमसिद्धार्थकथनमेवेदम् इति तेन द्योत्यते ।

अलं०—उपमा । उपमानोपमेययो सादृश्य भावार्थे दर्शितम् ।

अलङ्घ्यत्वाज्जनैरन्यैः क्षुभितोदन्वदूर्जितम् ।
औदार्यादर्थसम्पत्तेः शान्तं चित्तमृषेरिव ॥ ४० ॥

अ०—अन्यै जनै अलङ्घ्यत्वात् क्षुभितोदन्वदूर्जितम् औदार्याद् ( च )

अर्थसपत्तः ऋषेः चित्तमिव शान्तम्।

व्याक०—न लङ्घ्यत्वाद् अलङ्घ्यत्वाद्। लङ्घितु योग्य लङ्घ्यम्, लङ्घते "ऋहलोर्ण्यत्"। जनैरिति तद्योगे कर्तरि तृतीया। ततो भावे त्व। हेतौ पञ्चमी। क्षुभित उदन्वानिव ( कर्म० ) ऊर्जितम् ( उपमान० ) क्षुभितोदन्वदूर्जितम्। क्षुभित इति क्षुभ्यते क्तान्तम् उदन्वदिति-"उदन्वानुदधौ" इत्यनेनोदकशब्दाद् मतुवन्त निपात्यते। ऊर्जितमिति ऊर्जेः क्तान्तम्। उदारस्य भाव औदार्यम्, भावे ष्यञ्। शान्तम्-शाम्यते क्तान्तम्। चित्तम्-चित्यतेऽनेनेति 'चिती सज्ञाने' धातोर्निष्ठा। "श्वीदितो निष्ठायाम्" इतीण्निषेध।

व्याख्या—अन्यै, जनै, अलङ्घ्यत्वाद्-अनतिक्रमणीयत्वाद्, क्षुभित-उद्वेल-तरङ्गितः, य उदन्वान्-समुद्र, तद्वद् ऊर्जितम्-गम्भीरम्, ( पक्षे दुरवगाहम् ) *औदार्याद्-उक्तिविशेषत्वात्, श्लाघ्यविशेषणत्वाद् वा, ग्राम्यत्वदोषरहितत्वाद् वा, (पक्षे त्यागित्वाद्) अर्थसपत्ते-सदर्थप्रतिपादकत्वाद्, प्रयोजनवत्त्वाद् वा प्रयोजनसपत्ते, (पक्षे अणिमादिसमृद्धे) ऋषे, चित्तमिव, शान्तम्-सौम्यम्। वाक्य को व्याकुर्याद् इति शेष।

भा०—यथा समुत्पन्नोत्तालतरङ्गवारिधिरूर्जितो भवति, न केनाप्युल्लङ्घितु शक्यते, तथैव भवद्वचोऽपि ऊर्जितमनुल्लङ्घनीय चास्ति, एवं यथा त्यागशीलमणिमादिसिद्धिसम्पन्न च ऋषेश्चित्त शान्त भवति, तथैवोक्तिवैचित्र्ययुक्तं सदर्थप्रतिपादक ( प्रयोजनवद् वा ) च भवद्वचोऽपि शान्तमालक्ष्यते।

अल०—उपमयो सङ्कर।

इदमीदृग्गुणोपेत लब्धावसरसाधनम्।
व्याकुर्यात् क. प्रिय वाक्य यो वक्ता नेदृगाशय ॥ ४१ ॥

अ०—ईदृग्गुणोपेतम् लब्धावसरसाधन प्रियम् इदम् वाक्य क व्याकुर्याद् य. वक्ता ईदृगाशयः न स्यात्।

व्याक०—ईदृग्भि गुणै. उपेतम् ईदृग्गुणोपेतम्। ईदृग्-इदमुपपदाद्

*—उत्कर्षवान् गुण कश्चिदुक्ते यस्मिन् प्रतीयते, तदुदाराह्वय तेन सनाथा काव्यपद्धति.। श्लाघ्यैर्विशेषणैर्युक्तमुदार कैश्चिदुच्यते इति दण्डी। उदारता ग्राम्यत्वमिति विश्वनाथ।

दृशे "त्यादादिषु दृशोऽनालोचने कञ् च" इत्यनेन क्विप् 'इदङ्किमोरीश्की" इतीशादेश । उपेतमिति उपपूर्वादेते क्तान्तम् । लब्धे अवसरश्च साधनं च येन तल्लब्धावसरसाधनम । द्वन्द्वगर्भो बहुव्रीहि । अवसरेति सरते· "पुसि सज्ञाया घ प्रायेण ।" साधनम्-साधयतेर्ल्युडन्तम् । ईदृग् आशयो यस्य स ईदृगाशय , आशय इति आङ् पूर्वात् 'शीङ्' धातो "एरच्" । वाक्यमिति वचेर्ण्यत् ।

व्याख्या—ईदृग्भि·-पूर्वोक्तैः, गुणै·, उपेतम्-युक्तम्, लब्धे-प्राप्ते अवसर·-उचित· काल , साधनम्-उपाय , युक्तिर्वा, येन तादृशम्-कालोचितम्-साधनबोधक च, अत एव प्रियम्-प्रीतिकरम् , इदम्-भवदुक्तम्, वाक्यम्-वच , क·,पुरुष , व्याकुर्यात्-व्याहर्तुं शक्नुयात्, न कोपीति भाव । यो वक्ता-व्याहर्ता, ईदृगाशय -भवत्सदृशगम्भीराशयवान्, न भवेदिति शेष , मल्लिनाथस्तु 'यो वक्ता, स ईदृगाशयो न भवेत्' इति व्याचष्टे ।

भा०—साम्प्रतमिन्द्रवाक्यप्रशसामुपसहरति, एतादृश प्रमादादिगुणयुक्त कालोचित साधनबोधक युक्त्युपेत वा वाक्य भवन्त विहायान्य को वक्तुमर्हति न कोपि । यद्यपि लोके वक्तारो न दुर्लभा·, तथापि भवत्सदृशो गभीराशयो न सुलभ इति ।

**न ज्ञात तात यत्नस्य पौर्वापर्यममुष्य ते ।**
**शासितु येन मा धर्मं मुनिभिस्तुल्यमिच्छसि ॥ ८२ ॥**

अ·—हे तात ! अमुष्य यत्नस्य पौर्वापर्यं ते न ज्ञातम्, येन मा मुनिभि तुल्य धर्मं शासितुम इच्छसि ।

व्याक०—पूर्वं चापर चानयो· समाहार पूर्वापरम् तदेवपौर्वापर्यम् , चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ् । यद्वा-भावे ष्यञ् । ज्ञातम्-जानाते "मति-बुद्धिपूजार्थेभ्यश्च" इत्यनेन षष्ठी । शासितुम्-शास्तेरिच्छतावुपपदे "समानकर्तृकेषु तुमुन्" । येन-हेतौ तृतीया, यच्छब्दपरामृश्यमानपूर्ववाक्यार्थोत्र हेतु । माम् , धर्मम्-उभे अपि शास्ते कर्मणी, पूर्वमकथित कर्म, द्वितीय तु प्रधानम् । मुनि-भिस्तुल्यम् 'तुल्यार्थैरतुलोपमाभ्याम् " इत्यनेन तृतीया ।

व्याख्या—हे तात-हे *पूज्यवर ! अमुष्य-मया अनुष्ठीयमानस्य, यत्नस्य-

---

* पुत्रे पितरि पूज्ये च तातशब्द प्रचलते-इति ।

तपोरूपस्य प्रयासस्य, पौर्वापर्यम्-पूर्वम्-कारणम्, अपरम्-कार्यम्-फलं च, (यद्वा-पूर्वापरयोर्भाव -सवन्ध ) न ज्ञातम्-त्वया न ज्ञायते। येन-कारणेन, माम् मुनिभि तुल्यम्-मुनिजनोचितम्, धर्मम्-कर्तव्यम् ( मोक्षधर्मम् ) शासितुम्-उपदेष्टुम्, इच्छसि-कामयसे ।

भा०—परन्तु हे माननीय मुने ! मह्य मोक्षप्राप्तिहेतु मुनिधर्ममुपदिशता भवता 'केन प्रेरित किमुद्दिश्य वाह तप करोमि' इति न विदितम्, यदि तद् भवान् अवेक्ष्यत् तर्हि नैवमनधिकारिण मा मोक्षधर्ममुपादेक्ष्यत् ।

अल०—हेतुना साध्यसाधनादनुमानम् ।

**अविज्ञातप्रबन्धस्य वचो वाचस्पतेरपि ।**
**व्रजत्यफलतामेव नयद्रुह इवेहितम् ॥४३॥**

अ०—अविज्ञातप्रबन्धस्य वाचस्पते अपि वच नयद्रुहः ईहितमिव अफलता व्रजति एव ।

व्याक०—न विज्ञात प्रबन्ध येन तस्य अविज्ञातप्रबन्धस्य, प्रबन्धेति बध्नातेर्घञन्तम् । वाच पत्यु वाचस्पते, षष्ठीसमास "षष्ठ्या पतिपुत्रपृष्ठ-पारपदपयस्पोषेषु" इति विसर्गस्य सकार, एतस्मादेव ज्ञापकात् षष्ठ्या अलुक्। नयद्रुह.-नयाय द्रुह्यतीति नयपूर्वाद् द्रुहेः "सत्सुद्विष" इत्यनेन क्विप्। ङसि रूपम्।

व्याख्या—अविज्ञात -अविदित, प्रबन्ध -पूर्वापरसङ्गति, येन तथोक्तस्य, वाचस्पते बृहस्पतेरपि, वच -वाक्यम्, नयद्रुह -नीतिविरुद्धकारिण, ईहितमिव-चेष्टितमिव, अफलताम्-निष्फलताम्, व्रजत्येव-प्राप्नोत्येव ।

भा०—प्रासङ्गिक एव उपदेश सर्वैरादियते, वाचस्पतिरपि यदि प्रसङ्गम-विज्ञायैवोपदिशेत् तर्हि तस्य स प्रयासो फलैर्ग्रहिन स्यात् । यथा नीतिविरुद्ध-कारिणामुद्योगो व्यर्थ एव भवति, तथा । तथा च महाविदुषोऽपि तव वाक्यमप्रासङ्गिकत्वान्न सफल भवितुमर्हति ।

अल०—विशेषे प्रस्तुते सामान्याभिधानादप्रस्तुतप्रशसा । वाचस्पतेरपि विफलतामेति किमन्यस्येति काव्यार्थापत्ति । नयद्रुह इवेत्युपमा ।

**श्रेयसोऽप्यस्य ते तात वचसो नास्मि भाजनम् ।**
**नभस स्फुटतारस्य रात्रेरिव विपर्यय ॥४४॥**

अ०—( हे ) तात श्रेयस अपि अस्य ते वचस स्फुटतारस्य नभस रात्रेः विपर्ययइव भाजनम् अहम् न अस्मि ।

व्याक०—स्फुटा ताराः यत्र तस्य स्फुटतारस्य । स्फुटेति स्फुटते "इगुपधज्ञाप्रीकिर क"। "गोस्त्रियोरुपसर्जनस्य" इति ताराशब्दस्य ह्रस्व । श्रेयस इति प्रशस्यशब्दादीयसुन, "प्रशस्यस्य श्र" । विपर्ययः-विपरिपूर्वात् एते "एरच्"।

व्याख्या—हे तात-हे पूज्यवर ! श्रेयसः-हितार्थप्रतिपादकत्वात् प्रशस्ततरस्यापि, अस्य-पूर्वोक्तस्य, ते-तव, वचस -उपदेशस्य, स्फुटा-प्रकाशमाना, ताराः-नक्षत्राणि, यत्र तादृशस्य, नभस -आकाशस्य, रात्रे विपर्यय रात्रिवैपरीत्यम्-दिन यथा, ( तथा ) भाजनम्-पात्रम्, अहम्, नास्मि न भवामि ।

भा०—यद्यपि मोक्षधर्मप्रतिपादकत्वाद् भवद्वच प्रशस्ततरम्, तथापि मोक्षेच्छाभावादह तस्याधिकारी नास्मि, अहं वैरनिर्यातनार्थी, कुतो मे मोक्षाधिकार । यथा तारकितं नभोतिशोभितम्, पर दिवसस्तस्याधिकारी न भवति, तथेति । दिनस्य स्वोपमानताकथनात्स्वस्य तद्वत्प्रदीप्तता व्यञ्जिता ।

अल०—उपमा । श्रेयसोऽपि न भाजनमिति विरोधाभास ।

**क्षत्रियस्तनय पाण्डोरहं पार्थो धनञ्जय ।**
**स्थितः प्रास्तस्य दायादैर्भ्रातुर्ज्येष्ठस्य शासने ॥४२॥**

अ०—क्षत्रिय पाण्डो तनय पार्थ धनञ्जय अहम् दायादै प्रास्तस्य ज्येष्ठस्य भ्रातु शासने स्थित ( अस्मि )।

व्याक०—क्षत्राज्जात क्षत्रिय "क्षत्राद् घ"। क्षत्र पार्थश्चापि व्याख्यातपूर्व, धनानि जयतीति धनञ्जय, "सञ्ज्ञाया भृतृवृजि ०" इत्यनेन खच्, खित्वान्मुम् । दायम् ( रिक्थम्-पैतृक धनम् ) आददते इति दायादा, ते । यद्यपि "आतोऽनुपसर्गे क" इत्यत्रानुपसर्ग इति प्रतिषेधात्, कर्मण्यणि दायादाय इति प्राप्तम्, तथापि "स्वामीश्वराधिपतिदायादसाक्षि " इत्यत्र निपातनात् कप्रत्यय । अथवा आददत इत्यादा. "आतश्चोपसर्गे" इति क, दायस्य आदा दायादा । प्रास्तस्य-प्रपूर्वात् असु क्षेपणे' धातो. क्त । ज्येष्ठस्य-वृद्धशब्दात् इष्ठन्, "ज्य च" इति ज्यादेशः । शासने-शास्तेर्ल्युडन्तम् ।

अधिकरणत्वविवक्षया सप्तमी ।

व्याख्या—क्षत्रिय.-क्षत्रकुलोत्पन्न., पाण्डो -तन्नामकस्य राज्ञ तनय -पुत्र., पार्थ -पृथाया अपत्यम्-कुन्तीसुतः, धनञ्जयः-उत्तरकुरुभ्योऽपि धनस्य विजेता, अर्जुनः, अहम्, *दायादै.-स्वज्ञातीयै दुर्योधनादिभि , प्रास्तस्य-राज्यात् प्रवासितस्य, ज्येष्ठस्य-वयोवृद्धस्य, भ्रातुः-युधिष्ठिरस्य, शासने-आज्ञायाम्. स्थित.-वर्तमानः, अस्मि, तदाज्ञयैव तपस्यामि, न तु विरक्त' सन् मोक्षाय तपस्यामि ।

भा०—साम्प्रत केन प्रेरित किमुद्दिश्य वा तपः करोमीति स्वजात्यादि-वर्णनपुरस्सरमर्जुन. कथयति हे मुने ! क्षत्रियकुले मम जन्म जातम्, ( तेना-मर्षयोग्यता सूचिता ) तत्रापि न साधारणे, पाण्डोरह पुत्र , अत एव महा-कुलप्रसूतोऽस्मि, ( तेन सा दृढीकृता ) पाण्डुपुत्रेष्वप्यह पार्थ -पृथापुत्रोऽस्मि, न तु माद्रीसुतः, ( तेन सातिदृढता नीता ) पृथापुत्रेष्वपि महावीरोऽर्जुनोऽस्मि य उत्तरकुरून् विजित्य धनाहारणाद् धनञ्जय इति लोके प्रसिद्ध । ( एतेना-मर्षयोग्यतातिभूमिं नीता ) दायादैर्दुर्योधनादिभी राज्यलोभाद् मम ज्येष्ठभ्राता युधिष्ठिरो राज्यान्निरस्त', अपमानप्रतिकारार्थिनस्तस्याज्ञयाहं तपस्या करोमि न तु मोक्षेच्छया, तदाज्ञाननुसरणे मानहानि , सौभ्रात्रभङ्गः, पूज्यपूजाव्यति-क्रमश्च भवति, तथाचैवममर्षपूर्णस्य वैरनिर्यातनार्थिनो रागद्वेषकषायितचेतसो मम न सर्वथा मोक्षेऽधिकार' । अत्र धनञ्जय इत्युक्ते शरीरस्थो वायु सर्प-विशेषो वा स्यात्तद्व्यतिरेकार्थं पार्थ इति, गन्धर्वोऽपि कश्चित् पृथासुतोऽस्ति, तदर्थं पाण्डोस्तनय इति, नैमिषारण्ये पाण्डुर्विप्र , तत्पत्नी पृथा नाम काचिद् ब्राह्मणी तत्पुत्रोऽपि सम्भाव्यते, तदर्थं क्षत्रिय इति विशेषणमिति मल्लिनाथ । एवं व्यङ्ग्यार्थास्तु दर्शिता एव ।

अल०—विशेषणाना साभिप्रायत्वात् परिकर ।

कृष्णद्वैपायनादेशाद् बिभर्मि व्रतमीदृशम् ।
भृशमाराधने यत्त स्वाराध्यस्य मरुत्वत ॥ ४६ ॥

* दायादौ ज्ञातिपुत्रयो , विभक्तपितृद्रव्य च दायमाहुर्मनीषिण.—इति च विश्व ।

अ०—कृष्णद्वैपायनादेशाद् स्वाराध्यस्य मरुत्वत आराधने भृश यत्त ईदृश व्रत बिभर्मि ।

व्याक०—कृष्णस्य द्वैपायनस्य आदेशात् कृष्णद्वैपायनादेशात् । द्वैपायनेति व्याख्यातम् । आदेशेति दिशेर्घञन्तम् । हेतौ पञ्चमी । ईदृशमिति व्याख्यातम् । स्वाराध्यस्य-सुखमाराध्य स्वाराध्य तस्य, " कुगतिप्रादय " इत्यनेन समास । अथवा स्वस्य आराध्य इति विग्रहीतव्यम् । आराध्येति राधेर्ण्यदन्तम् । स्वाराधस्येति पाठान्तरे खल् । मरुत्वत.-मरुच्छब्दान्मतुप् । " झय. " इति मस्य व । " तसौ मत्वर्थे " इति भत्वेन पदत्वबाधात् जश्त्व न । आराधनकर्मणि षष्ठी, आराधन इति राधेर्ल्युडन्तम् । यत्त -' यती प्रयत्ने ' धातोः क्तान्त । " श्वीदितो निष्ठायाम् " इतीण्निषेध ।

व्याख्या—अहम्, कृष्णद्वैपायनस्य-व्यासस्य, आदेशाद्-उपदेशात्, ईदृशम्, व्रतम्-तपोनियमम्, बिभर्मि-धारयामि, न तु स्वेच्छया, स्वाराध्यस्य-( क्षत्रियदैवतत्वात् ) सुखमुपासनीयस्य) ( अथवा स्वस्य-बल कामयमानस्यात्मन., आराध्यस्य-( बलाधिष्ठातृत्वेन ) उपासनीयस्य, मरुत्वत.-इन्द्रस्य, आराधने-उपासनायाम्, भृशम्-अत्यर्थम्, यत्तः-यत्नवान्, अस्मि ।

भा०—यच्चोक्त ' विरुद्ध केवल वेष ' इत्यादि, तदुत्तरयति ' समाचराचारमुपात्तशस्त्र ' इत्यादि भगवतो व्यासस्योपदेशेन विरुद्धवेषधारणादितपोनियमो मया पाल्यते, न तु स्वेच्छया, किञ्चानेन तपसाहमिन्द्रमाराधयामि, क्षत्रियदैवतत्वेन तस्यैव सुखाराध्यत्वाद्, अथवा वैरशोधनार्थिना मया तपस्तप्यत इति पूर्वमुक्तम्, वैरशोधनं च बलवतैव कर्तुं शक्यते, बलप्राप्तिश्च देवताप्रसादाद् भवति, बलाधिष्ठातृदेवता चेन्द्र , तदुक्त निरुक्ते ' या च का च बलकृतिरिन्द्रकर्मैव तत् ' इति । तथा च बलार्जनकामस्य ममेन्द्र एव सुष्ठुतयाराध्यः ।

अल०—स्वाराध्यस्येतिविशेषणस्य साभिप्रायत्वान् परिकर. । द्वैपायनादेशाद् व्रतम्, न तु मोक्षार्थमिति परिसंख्या ।

दुरक्षान् दीव्यता राज्ञा राज्यमात्मा वय वधू ।
नीतानि पणता नूनमीदृशी भवितव्यता ॥ ४७ ॥

अ०—दुरक्षान् दीव्यता राज्ञा राज्यम् आत्मा वय वधू पणता नीतानि, भवितव्यता ( एव ) ईदृशी नूनम् ( आसीत् )

व्याक०—दुष्टान् अक्षान् दुरक्षान्, " कुगतिप्रादय " इति समासः । देवनकरणानामक्षाणा " दिव कर्म च " इत्यनेन कर्मत्वम्, अतो द्वितीया । दीव्यता-दिवुधातो हेतौ शतृप्रत्यय, " दिवादिभ्यः श्यन् " । राज्य व्याख्यातपूर्वम् । पणताम्-पण्यते ऽनेनेति पण, " पुसि संज्ञाया घ प्रायेण " इति पण धातो घः, ततस्तल् । नयनस्य गौणे कर्मणि द्वितीया, नीतानि, नीतम् ( राज्यम् ) नीतः ( आत्मा ) नीता ( वयम् ) नीता ( वधू ) इति नीतानि, " नपुसकमनपुसकेनैकवच्चास्यान्यतरस्याम् " इति नपुसकैकशेष । एकवद्भावस्य पाक्षिकत्वाद् बहुवचनम् । ' प्रधाने नीहृकृष्वहाम् ' इतिवचनात् प्रधाने कर्मणि क्तविधानाद् राज्यादयो वध्वन्ता सर्वे प्रथमान्ता । भवितव्यता-भूधातोस्तव्य. प्रत्यय, स च कर्तरि बाहुलकात्, ततस्तल् । ईदृशी-कञ्प्रत्ययान्त, " टिड्ढाणञ्द्वयसज्दघ्नञ् " इति ङीप् ।

व्याख्या—दुरक्षान्-कपटपाशकै, दीव्यता-द्यूत कुर्वता, राज्ञा-युधिष्ठिरेण, राज्यम्-राष्ट्रम्, आत्मा-स्वयम्, वयम्-भीमादयश्चत्वारोऽनुजा, वधू-जाया-द्रौपदी ( च ) * पणताम्-ग्लहताम् ( दाव इति लोके प्रसिद्धम् ) नीतानि-प्रापितानि, पणीकृत्य हारितानीतियावत् । भवितव्यता-अनर्थानामवश्य भावितैव, ईदृशी-इत्थभूता, आसीत्, नूनम्-निश्चयेन ।

भा०—भवादृशे वीरे भ्रातरि युधिष्ठिरस्य कथमेव विनिपात इत्यत आह-द्यूत कुर्वता राज्ञा युधिष्ठिरेण राज्यादि सर्वमपि पणीकृत्य हारितम्, नात्र राज्ञ कश्चिद् दोष, भवितव्यतैवेदृश्यासीत् ।

अल०—भवितव्यतैवेदृशीति लोकवादानुकाराल्लोकोक्तिरलङ्कार. ।

तेनानुजसहायेन द्रौपद्या च मया विना ।
भृशमायामियामासु यामिनीष्वभितप्यते ॥ ४८ ॥

अ०—अनुजसहायेन तेन द्रौपद्या च मया विना आयामियामासु यामिनीषु अभितप्यते ।

* पणोऽक्षेषु ग्लहोऽक्षास्तु देवना पाशकाश्चते—इत्यमर ।

व्याक०—अनुजा सहाया यस्य तेन अनुजसहायेन। अनुजायन्त इत्यनुजा, "अन्येष्वपि दृश्यते" इति जनेर्ड। द्रौपद्या-द्रुपदशब्दात् "तस्यापत्यम्" इत्यण्। ततो ङीप्। अभितपनकर्तरि तृतीया, तेनेत्यपि तथैव। आयामिनः यामा यासा तासु आयामियामासु। आयाम एषामस्तीति आयामिन.-आङ्पूर्वाद् यम्धातोर्घञ् तत: "अत इनिठनौ" इति मत्वर्थीय इनि। यामशब्दोप्यायामशब्दवद् घञन्त। यामिनीषु-यामा सन्त्यासामिति यामशब्दाद् इनि, ततो नान्तत्वाद् ङीप्, अधिकरणे सप्तमी। अभितप्यते-तपेर्भावे लट्। मयेति "पृथग्विनानानाभि" इति विनायोगे तृतीया।

व्याख्या—अनुजसहायेन-भीमादिभि भ्रातृभि सह, तेन युधिष्ठिरेण, द्रौपद्या-याज्ञसेन्या च, मया विना-मद्वियोगेन, आयामिन.-दीर्घा:, *यामा-प्रहरा, यासा तथाभूतासु, † यामिनीषु-रात्रिषु, भृशम-अतिमात्रम्, अभितप्यते-अभिताप -खेद, अनुभूयते।

भा०—युधिष्ठिरादिषु यथा तवानुरागस्तथा तेषा त्वयि नास्तीत्यपि न शङ्कनीयम्, युधिष्ठिरादयश्चत्वारो भ्रातर, द्रौपदी च मद्वियोगेऽतितरा खिद्यन्ते, मद्विरहार्ताना तेषा कृते रात्रयोऽप्यतिदीर्घा दुर्यापनीयाश्च भवन्ति।

अत—वैरनिर्यातनस्यावश्यभावद्योतनाय चतुर्भिररिनिकार वर्णयति।

**हृतोत्तरीया प्रसभ सभायामागतह्रिय।**
**मर्मच्छिदा नो वचसा निरतक्षन्नरातयः॥ ४६॥**

अ०—सभाया प्रसभ हृतोत्तरीया. अरातय आगतह्रिय न मर्मच्छिदा वचसा निरतक्षन्।

व्याक०—हृतम् उत्तरीय यैस्ते हृतोत्तरीया। आगता ह्री यान् येषु वा ते आगतह्रिय। ह्रीशब्द 'ह्री लज्जायाम्' धातो क्विबन्त, स्त्रीप्रत्ययान्तत्वाभावाद्-"गोस्त्रियो" इति ह्रस्वाप्रवृत्ति, "नेयङुवङ्स्थानावस्त्री' इति नदीत्वप्रतिषेधात् "नद्यृतश्च" इति कबपि न। मर्मच्छिदा-मर्म च्छिनत्तीति मर्मोपपदाच्छिदे कर्तरि क्विप्। निरतक्षन्-तक्षधातोर्लङ्। प्रथमपुरुषबहुवचनम्। न -तक्षण-

---

* द्वौ यामप्रहरौ समौ—इत्यमर।

† रजनी यामिनी तमी-इति निशानामस्वमर।

कर्मणि द्वितीयाबहुवचनम्, वचसेति लक्षणस्य करणे तृतीया। जातावेकवचनम्।

व्याख्या—सभायाम्-राजसभामध्ये, प्रसभम्-हठात्, हृतम्, उत्तरीयम्-(द्रौपद्या) उत्तरासङ्ग, यैस्तथाभूता., अरातय-शत्रव, आगतह्रिय -ह्रियमाण-वस्त्रां द्रौपदीं निरीक्ष्य) आगता प्राप्ता, ह्री-लज्जा, यान् येषु वा तथाभूतान्, न अस्मान्, मर्मच्छिदा अरुन्तुदेन, वचसा वाक्येन, निरतक्षन्-अशातयन्, अव्य-थयन्।

भा०—शत्रवो मध्येसभ बलाद् द्रौपद्या उत्तरीयं हृत्वास्मान् ह्रेपितवन्त, किं च तत्रैवारुन्तुदै. क्रकचसदृशैर्वाक्यैरस्माक हृदयं व्यथयामासुः।

अल०—भेदनापरपर्यायस्य तक्षणस्य वचसि बाधितत्वाद् व्यथने लक्षणा, यथा, क्रकचकुठारादिना तष्टे शरीरावयवे व्यथा जायते, तथैव तद्वचोऽभिरपि जाता, व्यथातिशयप्रतीतिश्च लक्षणाप्रयोजनम्। तक्षणशब्दसामर्थ्याद् वचसो वास्यौपम्य गम्यत इति वस्तुनालङ्कारध्वनिरिति मल्लिनाथः।

**उपाधत्त सपत्नेषु कृष्णाया गुरुसन्निधौ।**
**भावमानयने सत्या सत्यकारमिवान्तक ॥ ४० ॥**

अ०—अन्तक सत्या कृष्णाया गुरुसन्निधौ आनयने भाव सपत्नेषु सत्यकार-मिव उपाधत्त।

व्याक०—अन्तकशब्दो व्याख्यातपूर्व। सन्निधाविति सनिपूर्वाद् दधाते कि। अधिकरणत्वविवक्षया सप्तमी। सत्यस्य कार सत्यकारम्, "कारे सत्याग-दस्य" इति सत्यशब्दस्य मुमागमः। कारेति करोते करणघञन्तम्, सत्या.-अस्ते शतरि रूपम्, उगित्त्वाद् स्त्रीत्वे ङीप्, पष्ठ्येकवचन कृष्णाया विशेषणम्। आनयने-आङ्पूर्वान्नयतेर्ल्युट्, विषयसप्तमी। उपाधत्त-उपपूर्वाद् दधाते कर्तरि लङ्। सपत्नेषु अधिकरणसप्तमी।

व्याख्या—अन्तक.-मृत्यु, सत्या -पतिव्रताया, कृष्णायाः-द्रौपद्या, गुरूणाम्-भीष्मादीनाम्, सन्निधौ-सन्निधाने-समीपे, आनयने-सभामध्ये प्रवेशने (केशाम्बरा कर्षणे इति मल्लिनाथ) भावम्-अभिप्रायम्, सत्यकारमिव-इत परमनेन पाण्ड-वाभिभवेन एतान् (धार्तराष्ट्रान्) स्वनगर नेष्यामि-इति सत्यापनमिव, सपत्नेषु-पाण्डवाना शत्रुषु धार्तराष्ट्रेषु, उपाधत्त-निहितवान्।

भा॰—शत्रूणा हृदये भीष्मादिगुरुजनसन्निधौ साध्वीं द्रौपदीमानेतु योय-मभिलाष समुत्पन्न , स पापाभिलाष एव तान् प्रति मृत्योस्तन्नाशाय सत्यङ्कार-सदृश आसीत्। अयमभिसन्धि -चिकीर्षितस्य कार्यस्यावश्य क्रियास्थापनार्थं पर-हस्ते यद्दीयते स सत्यङ्कार उच्यते, मृत्युना स्वचिकीर्षितस्य धार्तराष्ट्रनाशस्याव-श्यकर्तव्यतासूचनार्थं तेषा हृदये सभामध्ये द्रौपद्यानयनाभिलाष उत्पादित , तद् विनाशाय तेषा विपरीता बुद्धिमुत्पादितवान् इति तत्त्वम् ।

**तामैक्षन्त क्षण सभ्या दु शासनपुरस्सराम् ।**
**अभिसायार्कमावृत्ता छायामिव महातरो ॥ ८१ ॥**

अ॰—सभ्या दुःशासनपुरस्सरा ता अभिसायार्कम् (स्थितस्य) महातरोः आवृत्ता छायामिव क्षणम् ऐक्षन्त ।

अल॰—भावस्य सत्यङ्कारत्वसम्भावनाद् उत्प्रेक्षा ।

व्याक॰—दु शासन पुरस्सरो यस्या॰ ता दु शासनपुरस्सराम् । दु खेन शिष्यत इति दु शासन , "भाषाया शासियुधि..." इत्यनेन कर्मणि युच् । पुरस्सरेति व्याख्यातपूर्व । सायस्य अर्कम् (ष॰ त॰) अभिलक्ष्य अभिसा-यार्कम्, "लक्षणेनाभिप्रती आभिमुख्ये" इत्यनेनाव्ययीभाव , अथवा "अभिर-भागे" इत्यनेनाभे कर्मप्रवचनीयत्वम्, सायार्कमिति तद् योगे द्वितीया । सभ्या॰ सभाया साधव , इति "सभाया यः" । आवृत्ताम्-आङ्पूर्वाद् वर्तते॰ क्तान्तम् । ऐक्षन्त-ईक्षतेर्लङ्, प्रथमपुरुषबहुवचनम् ।

व्याख्या-सभ्या॰-सभास्था भीष्मादय , दुःशासन -दुर्योधनानुज , पुरस्सरः पुरोगम , यस्याः तथाभूताम्, पुर स्थितेन दु शासनेन सभा प्रत्याकृष्यमाणामिति यावत्, ताम्-द्रौपदीम, अभिसायार्कम्-सायार्क -दिनान्तसूर्य , तदभिमुख स्थि-तस्य, महातरो -महावृक्षस्य, आवृत्ताम्-पृष्ठवर्तिनीम्, छायामिव-अनातपमिव, क्षणम्-क्षणमात्रम्, न तु चिरम्, ऐक्षन्त-अवालोकयन्त ।

भा॰—दु शासनो द्रौपदीं म ध्येसभमानेतु वस्त्रे गृहीत्वा आकर्षति स्म, आकर्षणकाले अग्रेऽग्रे दु शासन पश्चाच्च पराङ्मुखीभूय स्थिता द्रौपद्यासीत्, तदानीमग्रत स्थितेन दु शासनेनाकृष्यमाणा द्रौपदी तथा प्रतीयते स्म यथा साय-कालिकसूर्याभिमुख स्थितस्य कस्यचिद् महावृक्षस्य पृष्ठवर्तिनी छाया प्रतीयते,

सूर्याभिमुख स्थितस्य च्छाया पृष्ठवर्तिनी भवतीति निसर्ग । आकृष्यमाणाया द्रौपद्या अक्रूष्टार प्रति पराङ्मुखत्वाद् आवृतच्छयौपम्यम्, तथापि ता न मुञ्चतीति दु.शासनस्य तरसाम्यम्, इत्थ खेपा पश्यतामनाद्रियमाणा द्रौपदी सभ्या. क्षणमात्रमेक्षन्त, न तु चिरम्, पापदर्शनस्य जुगुप्सितत्वात्। नापि दु शासनम-नाचाराद् निवर्तयितु किञ्चिदवदन्, किन्तु माध्यस्थ्यभङ्गभिया सूर्यवत् साक्षि-रूपेण स्थिता इतिमल्लिनाथ । सूर्यस्य सायेतिविशेषण यथास्तमुपगच्छन् सूर्यो हतप्रभो भवति तथा स्वसम्मुखे पतिव्रतापमानं पश्यन्त सभ्या अपि हतप्रभा अभवन्निति द्योतनाय ।

अल०—उपमा०

अयथार्थक्रियारम्भै पतिभि· किं तवेक्षितै. ।
अरुध्येतामितीवास्या नयने बाष्पवारिणा ॥ ५२ ॥

अ०—अयथार्थक्रियारम्भैः तव पतिभिः ईक्षितै किम् ? इतीव अस्या नयने वाष्पवारिणा अरुध्येताम् ।

व्याक०—न यथार्थं क्रियाया आरम्भो येषा तैः अयथार्थक्रियारम्भै. अर्थ-मनतिक्रम्य यथार्थम्, यथार्थेऽव्ययीभाव । आरम्भ इति आङ्पूर्वाद् रभेर्भावे घञ्। "रभेरशब्लिटो" इति नुमागम । पतिभि -पान्तीति पातेर्डतिरौणादिक । ईक्षितैः-ईक्षते कर्मणि क्तान्तम्, पतीना विधेयविशेषणम्, "गम्यमानाऽपि क्रिया कारकविभक्तीना निमित्तम्" इत्याभियुक्तोक्त्या गम्यमानसाधनाक्रिया प्रति करणत्वे तृतीया । अरुध्येताम्-रुधे कर्मणि लङ्, प्रथमपुरुषाद्विवचनम् । नयने इति रोधनस्य उक्ते कर्मणि प्रथमाद्विवचनम् । वाष्पवारिणेति तस्यैव कर्तरि तृतीया।

व्याख्या–अयथार्थम्-अयथायथम्-अवसराननुरूप , क्रियारम्भ -क्रियोद्योग येषा तथाभूतै , अरिभि केशाम्बरेषु गृहीत्वाकृष्यमाणा पत्नी निरीक्ष्या-प्यनुचित मौनधारण कुर्वद्भिः, ( अयथार्था -मिथ्याभूता , क्रियारम्भा -पति-शब्दप्रवृत्तिनिमित्तभूतकर्मोद्योगा , येषा तै कान्तामरक्षद्भिरित्यर्थ इति मल्लिनाथ ) तव-भवत्याः, पतिभि -भर्तृभि., ईक्षितै·-अवलोकितै.-किम्-किं साध्यमस्ति, न किमपीति काकूक्ति । इतीव-भर्तृनिरीक्षणस्य निष्फलत्वादिव, ( इति विचार्येवेति मल्लिनाथ ) अस्या.-द्रौपद्या , नयने-नेत्रे, वाष्पवारिणा-

अश्रुजलेन, अरुध्येताम्-आव्रियेताम् ।

भा०—इत्थं स्वपतीनां पश्यतां परैः परिभूयमाना द्रौपदी स्वामशरणां विभाव्य रुरोद, रुदत्यास्तस्या नेत्रे अश्रुभिरावृते अभवताम्, तत्र कविरश्रुभिर्नेत्रावरणे हेतुमुत्प्रेक्षते, स्वपत्नीं परपरिभवाक्रान्तां विलोक्यापि पाणिपादमस्पन्दयित्वा सहमानानां पत्नीरक्षणरूपं पतिधर्ममपालयतामेषामुपरि दृष्टिपातेन किं फलम् ? कातरया दृष्ट्या निरीक्षिता अपीमे क्लीबकल्पा अप्रतीकारास्तिष्ठेयुः, अतो निरर्थकमेषां दर्शनमिति विचार्यैव बाष्पवारिभिर्नेत्रावरणं कृतम् इति ।

अल०—हेतूत्प्रेक्षा, पतिभिरितिविशेष्य योगार्थपुरस्कारेण साभिप्रायमिति परिकराङ्कुरोऽपि ।

**सोढवान्नो दशामन्त्यां ज्यायानेव गुणप्रियः ।**
**सुलभो हि द्विषां भङ्गो दुर्लभा सत्स्ववाच्यता ॥२३॥**

अ०—गुणप्रियः ज्यायान् एव नः अन्त्यां दशां सोढवान्, हि द्विषां भङ्गः सुलभः (किन्तु) सत्सु अवाच्यता दुर्लभा ।

व्याक०—गुणाः प्रिया यस्य स गुणप्रियः, "वा प्रियस्य" इतिप्रियस्य परनिपातः । ज्यायान्-अतिशयेन वृद्धः इति वृद्धशब्दादीयसुन् "ज्यादादीयसः" इत्याकारादेशः । अन्ते भवाम् अन्त्याम् भवार्थे यत् । सोढवान्-सहते कर्तरि क्तवतु, द्विषां व्याख्यातम्, कर्मषष्ठ्यन्तम् । भङ्गः-'भञ्जो आमर्दने' रौधादिकः, ततो घञ् । सुलभदुर्लभशब्दौ लभेः खलन्तौ । सत्सु-अस्तेः शत्रन्तम्, "यतश्च निर्धारणम्" इति निर्धारणे सप्तमी । अवाच्यता-वचेर्ण्यति वाच्यम्, ततस्तल् भावे । "वचोऽशब्दसंज्ञायाम्" इति कुत्वनिषेधः ।

व्याख्या—गुणाः-तितिक्षादयः, प्रियाः-इष्टव्याः, यस्य तथाभूतः, ज्यायान्-ज्येष्ठभ्राता युधिष्ठिर एव, नः-अस्माकम् इमाम् अन्त्याम्-अन्ते भवाम्-अतिनिकृष्टाम्, दशाम्-निर्जनवनविहरणरूपामवस्थाम्, सोढवान्-मर्षयति स्म । ननु वीराणामरिनिकारसहनं नोचितमित्यत आह-हि-यतः, द्विषाम्-अपकारिणाम, भङ्गः-मर्दनम्, कालान्तरेऽपि सुलभः-सुखेन कर्तुं शक्यते, किन्तु सत्सु-सतां मध्ये, अवाच्यता-अनिन्द्यता, दुर्लभा-दुष्प्रापा ।

ता०—ननु भवद्भिः किमर्थमेतत् सोढमितीन्द्राशङ्कायामर्जुनः समाधत्ते-

वस्तुत इमा नो निकृष्टा दशा ज्येष्ठभ्राता युधिष्ठिर एव सहते स्म, न तु वयम्, अस्माभिस्तु तदाज्ञाप्रतिरुद्धै प्रतीकार कर्तुमपारितमत सोढमित्र, स एव महामना कथ सहते स्मेत्यत्रोच्यते-युधिष्ठिर. खलु क्षमासत्यभाषणादिगुण-पक्षपाती लोकापवादाद् बिभेति, प्रतीकारचेष्टाया क्रियमाणाया शत्रूणामग्रे-कृताया प्रतिज्ञाया उल्लङ्घनस्य दुर्निवारतया तदुल्लङ्घने कदाचित् सत्पुरुषा अप-वदेयुर्यद् युधिष्ठिर सत्याद् भ्रष्ट इति, अस्मादेवापवादाद् बिभ्यता युधिष्ठिरेणापि सोढम्, शत्रूणा परिभवस्तु कालान्तरेऽपि कर्तुं शक्यते, पर सता मध्येऽनिन्द्यता दुर्लभा, सकृदप्युदिताया निन्दाया दुष्प्रतिसमाधेयत्वात् ।

अल०—अर्थान्तरन्यास , गुणप्रियइतिविशेषणस्य साभिप्रायत्वात् परि-करश्च ।

**स्थित्यतिक्रान्तिभीरूणि स्वच्छान्याकुलितान्यपि ।**
**तोयानि तोयराशीना मनासि च मनस्विनाम् ॥२४॥**

अ०—तोयराशीना तोयानि मनस्विना मनासि च स्थित्यतिक्रान्तिभीरूणि ( भवन्ति ) ( अत एव ) आकुलितानि अपि स्वच्छानि ( एव ) ( तिष्ठन्ति )

व्याक०—तोयाना राशय , तेषा तोयराशीनाम् । स्थिते अतिक्रान्ते ( ष०त० ) भीरूणि ( पञ्च०त० ) स्थित्यतिक्रान्तिभीरूणि । अतिक्रान्ति-शब्दात् पञ्चमी तु " भीत्रार्थाना भयहेतु " इत्यपादानत्वात् । स्थित्यति-क्रान्तिशब्दौ तिष्ठते क्रामतेश्च क्तिन्नन्तौ । भीरुशब्दे ' ञिभी भये ' धातो " भिय क्रुक्लुकनौ " इति क्रुक् ।

व्याख्या—तोयराशीनाम्-समुद्राणाम्, तोयानि-जलानि, मनस्विनाम्-उदारमनसाम्-महात्मनाम्, मनासि च, स्थित्यतिक्रान्ते -मर्यादोल्लङ्घनाद्, भीरूणि-भीतानि भवन्ति, मर्यादातिक्रम न कामयन्त इति यावत्, अत एव, आकुलितानि-सक्षोभितान्यपि, स्वच्छानि-निर्मलानि-अविकाराण्येव तिष्ठन्ति ।

भा०—मनस्विपुरुषाणा मनासि समुद्राणा जलानि च तुल्यधर्माणि भवन्ति, तथाहि-उभयान्यपि मर्यादातिक्रमाद् बिभ्यति, वृद्धौ हानौ वा जाताया न जातु मर्यादा त्यजन्ति, किंच जातेऽपि सक्षोभे न कदापि कालुष्य प्राप्नु-वन्ति यद्यपि मनस्विनि मर्यादाया अत्याग श्रुतिस्मृतिसदाचारानुमोदितप-

थानुसरणम्, समुद्रे च वेलाया अनतिक्रमणम्, मनस्विनि सक्षोभ परकृता-पकारादि, अकालुष्यचाविकारः, एव समुद्रे सक्षोभो वात्यादिना तरङ्गमाला-कुलत्वम्, अकालुष्य च अपङ्किलत्वम, इत्युभयेपा धर्मभेदान्न समानधर्मता, तथापि एकशब्दप्रतिपादनेनाभेदाध्यवसायाद् मिथो विम्बप्रतिविम्बभावाच समानधर्मता बोध्या ।

अल०—युधिष्ठिरस्य शत्रुकृतापकारसहन युक्तमिति विशेषे प्रस्तुते तत्प्र-त्यायनार्थमप्रस्तुतसामान्यमभिहितमित्यप्रस्तुतप्रशसा । अप्रस्तुतयोरेकधर्मा-भिसम्बन्धात् तुल्ययोगिता च ।

**धार्तराष्ट्रैः सह प्रीतिर्वैरमस्मास्वसूयत ।**
**असन्मैत्री हि दोषाय कूलच्छायेव सेविता ॥२२॥**

अ०—धार्तराष्ट्रै सह प्रीति अस्मासु वैरम असूयत, हि असन्मैत्री कूलच्छा-येव सेविता दोषाय ( कल्पते )

व्याक०—असताम् असद्भिर्वा मैत्री असन्मैत्री, अस्ते. शत्रन्तस्य नञ्समासे असच्छब्द सिध्यति, मैत्रीति मित्रशब्दाद् भावेऽण्, ततो ङीप् । कूलच्छायेति षष्ठीतत्पुरुष " विभाषा सेनासुराच्छाया " इति नपुसकत्वस्य वैभाषिकत्वात्, " परवल्लिङ्ग द्वन्द्वतत्पुरुषयो " इतिपरवल्लिङ्गता। धृतराष्ट्रस्य अपत्यानि पुमास तैः धार्तराष्ट्रै । " तस्यापत्यम् " इत्यण् । सह योगे तृतीया । प्रीति.-प्रीङ् प्रीतौ क्तिन् । असूयत-षूङ् धातोर्लङ्, " दिवादिभ्यः श्यन् " । प्रीतिः सवनस्य कर्त्री, वैर च कर्म । अस्मासु अधिकरणसप्तमी । दोषाय-क्लृपिमध्याहृत्य " क्लृपिसपद्यमाने च " इत्यनेन चतुर्थी ।

व्याख्या—धार्तराष्ट्रै -धृतराष्ट्रसुतैर्दुर्योधनादिभि , सह, प्रीति -प्रेम, अस्मासु-पाण्डवेषु, वैरम्-अप्रीतिम्, असूयत-उदपादयत् । हि-यत , असताम्-असज्जनानाम् ( असद्भि -असज्जनैर्वा ) मैत्री-प्रीति , कूलस्य-नदीतटस्य, च्छायेव-अनातपइव, सेविता आश्रिता सती, दोषाय-अनर्थाय कल्पते-अनर्थ-मुत्पादयति ।

भा०—अस्माभिर्धार्तराष्ट्रै सह सौहार्देन वर्तितम्, पर तैस्तत्परिवर्ते अस्मासु द्वेष कृत , परमेतन्नातिविस्मयकरम्, कुत [1] नदीतटच्छायावद

असता मैत्री अनर्थमेव जनयति । नदीतट हि भूयो भूयो नदीजलाघातेन जर्जर भवति छायार्थ तत् सेवमानस्याध श्वो वा नदीपातो दुर्निवार , एवमेवासता हृदयमपि दुर्भावनाभि कलुषितं भवति, तै सह सम्पर्के ऽनर्थोत्पत्तिर्नाश्चर्यकरी ।

अल०—पूर्वार्धे विरूपकार्यजननाद् विषमालङ्कारः, उत्तरार्धे-उपमानुप्राणितोऽर्थान्तरन्यास इति मल्लिनाथ. । कुवलयानन्दकारमते तु विकस्वरालङ्कार , लक्षण तु प्रागुक्तम् ।

**अपवादादभीतस्य समस्य गुणदोषयो ।**
**असद्वृत्तेरहो वृत्त दुर्विभाव विधेरिव ॥५६॥**

अ०—अपवादाद् अभीतस्य गुणदोषयो समस्य असद्वृत्ते· ( पुरुषस्य ) वृत्त विधे ( वृत्तम् ) इव दुर्विभावम् ( इति ) अहो ।

व्याक०—गुणश्च दोषश्च, तयो गुणदोषयो , विषयसप्तमीद्विवचनम्, असती वृत्तिर्यस्य तस्य असद्वृत्तेः, बहुव्रीहौ असच्छब्दस्य पुंवद्भाव । अपवादाद्-वदतेर्घञन्त , "भीत्रार्थाना भयहेतु" इत्यपादानत्वात् पञ्चमी, अभीतस्य-अजुगुप्समानस्येति व्याचक्षाणस्य मल्लिनाथस्य मते तु "जुगुप्साविरामप्रमादार्थानामुपसख्यानम्" इत्यनेन पञ्चमी, वृत्तमितिवर्तते क्तान्तम् । विधिशब्दो व्याख्यातपूर्व । दुर्विभावम्-भवतेर्ण्यन्तात कृच्छ्रार्थे खल् प्रत्यय. । अहो इत्याश्चर्यार्थकमव्ययम् ।

व्याख्या—अपवादाद्-जनाक्रोशाद, अभीतस्य-निर्भयस्य (अजुगुप्समानस्य वा ) गुणदोषयोः, समस्य-तुल्यबुद्धे , गुणदोषावननुरुध्यैवानुग्रहनिग्रहौ कुर्वाणस्य, असद्वृत्ते -दुराचारस्य-धूर्तस्य पुरुषस्य, ( विशेषणत्रयमिद विधावपि योज्यम् ) वृत्तम्-चेष्टितम्, विधेरिव-दैवस्य वृत्तमिव, दुर्विभावम्-विभावयितुमप्यशक्यम् । इत्यहो आश्चर्यम् । अथवा असद्वृत्तेरहोवृत्तमित्यत्र रहोवृत्तमितिच्छेद. गोप्यवृत्तमिति च तदर्थ ।

ना०—ननु तेषा वृत्तमविज्ञाय कुतस्तै सह मैत्री कृतेत्यत आह-ब्रह्मण इव दुराचारस्यापि मनोहित कार्यानन्तरमेव विज्ञायते, न तु पूर्वम्, दुर्विज्ञेयत्वात्, किं च यथा स्वस्वकर्मानुसारेण लोकान् शुभाशुभफलमुपभो-

जयतो ब्रह्मण लोकापवादाद् भय नास्ति, तथा स्वदुर्वासनानुरूपमाचरतो दुर्वृत्तस्यापि लोकापवादाद् भीतिर्न भवति, अपि च यथा विधिर्निग्रहानुग्रहा कुर्वन् तात्कालिकगुणदोषौ नानुरुन्धे तथैव दुराचारोऽपि 'एतेन ममोपकृतमपकृतं वा' इति गुणदोषौ न पश्यति, किं तु यथेच्छं व्यवहरति ।

अल०—उपमालङ्कार , अत्रविधेर्दुर्वृत्तोपमानतया वर्णनमनुचितार्थत्वदोषाक्रान्त भाति ।

**ध्वसेत हृदय सद्य परिभूतस्य मे परै ।**

**यद्यमर्प प्रतीकार भुजालम्ब न लम्भयेत् ॥२७॥**

अ०—परै. परिभूतस्य मे हृदय सद्य ध्वसेन यदि अमर्ष-प्रतीकार भुजालम्ब न लम्भयेत् ।

व्याक०—भुजस्य आलम्ब भुजालम्बम्, आलम्बमिति आङ्पूर्वाद् 'लबि' धातोर्घञ् । परिभूतस्य-परिभवते कर्मणि क्तान्तम् । परैरिति परिभवनकर्तरि तृतीया । मे-अस्मच्छब्दस्य षष्ठ्येकवचनम् "तेमयावेकवचनस्य" इत्यनेन 'मे' इत्यादेश । सद्य.-"सद्य परुत्परार्येषम " इत्यनेन निपातनात् सिद्धम् । ध्वसेत-ध्वसधातो "हेतुहेतुमतोर्लिङ्" । अमर्ष-'मृषु सहने च' घञ् । प्रतीकारम्-प्रतिपूर्वात् करोतेर्घञ् । "उपसर्गस्य घञ्यमनुष्ये बहुलम्" इत्यनेन दीर्घ. । लम्भयेत्-लभतेर्ण्यन्ताल्लिङ्, अमर्षो लम्भनस्य प्रयोजककर्ता, अध्याह्रियमाण 'हृदयेन' इति तृतीयान्त च तस्य प्रयोज्यकर्तृपदम् ।

व्याख्या—परै -शत्रुभि., परिभूतस्य-तिरस्कृतस्य, मे-मम, हृदयम्-मन., सद्य -शीघ्रमेव, ध्वसेत-विशीर्येत, यदि, अमर्ष -अक्षमा, क्रोधो वा, प्रतीकारम्-प्रतिविधानम्-प्रतिविधानेच्छारूपम् , भुजालम्बम्-हस्तावलम्बनम्-माहाय्य न लम्भयेत्-नग्राहयेत् । हृदयेनेतिशेष ।

भा०—अह शत्रुवैरप्रतीकारेच्छयैव जीवामि, यदि मम क्रोध. प्रतीकारेच्छा नोदपादयिष्यत्, तर्हि मम हृदय तत्कालमेवा ध्वसिष्यत ।

अल०—हृदय ध्वसस्य हेतुना समर्थनात् काव्यलिङ्गम् ।

**अवधूयारिभिर्नीता हरिणैस्तुल्यवृत्तिताम् ।**

**अन्योन्यस्यापि जिह्रीम किं पुन सहवासिनाम् ॥२८॥**

अ०—अरिभि अवधूय हरिणै तुल्यवृत्तिता नीता. ( वयम् ) अन्योन्यस्य अपि जिह्रीमः सहवासिना किं पुनः।

व्याक०—तुल्या वृत्ति येषाम्, तेषा भाव तत्ता, ता तुल्यवृत्तिताम् । सह वसन्ति तेषा सहवासिनाम्, वसतेर्णिनि, उपपदसमास । सम्बन्धसामान्ये षष्ठी, मातु स्मरतीत्यादिवत एवमन्योन्यस्येत्यत्रापि । अवधूय-अवपूर्वात् 'धूञ् कम्पने' धातोर्ल्यप्। अन्योन्यशब्दो व्याख्यातपूर्व । जिह्रीम -ह्रीधातोर्लट्, उत्तमपुरुषबहुवचनम् । "जुहोत्यादिभ्य श्लु" "श्लौ" इति द्वित्वम् । वयमिति तत्कर्तृपदमध्याहार्यम् । अरिभि -अवधवननयनयो कर्तरि तृतीया । हरिणै - तुल्यशब्दयोगे तृतीया ।

व्याख्या—अरिभि -शत्रुभि, अवधूय-तिरस्कृत्य, हरिणै -मृगैः, तुल्या-समाना, वृत्ति -जीविका, येषा तथाभूतताम्, मृगवद् वन्याहारतामितियावत्, नीता प्रापिता· वयम्, पञ्चापि भ्रातर, अन्योन्यस्यापि-परस्परस्मादपि जिह्रीमः-लज्जामहे, सहवासिना किं पुन.-सहचारिभ्यो लज्जामह इत्यत्र किमु वक्तव्यम् ।

भा०—ननु तवैव मनसि कुतोऽयमपमानामर्ष., नान्येषाम् इत्यत आह-शत्रुभिस् तिरस्कृता वय पञ्चाप्यद्य वनाद् वनमटन्तो हरिणवद् वन्याहारैर्जीवन निर्वहाम, इमा निकृष्टा दशा प्राप्तानामस्माक परस्परस्मादपि लज्जोत्पद्यते, नैकस्याग्रे ऽपरस्त्रपाभरनम्रा ग्रीवामुन्नमयितु शक्नोति । सहवासिना सकाशा-ल्लज्जोत्पत्तौ तु किमु वक्तव्यम्, तथा च वय पञ्चापि तुल्याभिमाना, इदं तु मदेकसाध्य कर्मेति मुनिशासनान्मयैवानुष्ठीयते ।

अल०—हरिणैस्तुल्यवृत्तितामित्युपमा । लज्जाया अन्योन्यासम्बन्धेऽपि सम्बन्धाभिधानादतिशयोक्ति, कैमुत्येनार्थससिद्धे काव्यार्थापत्तिश्च ।

**शक्तिवैकल्यनम्रस्य नि सारत्वाल्लघीयस ।**
**जन्मिनो मानहीनस्य तृणस्य च समा गति ॥५६॥**

अ०—शक्तिवैकल्यनम्रस्य नि सारत्वाद् लघीयस मानहीनस्य जन्मिन तृणस्य च समा गति ।

व्याक०—शक्ते वैकल्येन नम्रस्य शक्तिवैकल्यनम्रस्य, शक्यतेऽनयेति शक्ति शके क्तिन । विकलशब्दाद् भावे ष्यञि वैकल्यम् । नमते

"नमिकम्पि " इति रप्रत्यये नम्र । निर्गत सारो यस्मात्, तस्य भावस्तत्त्वम, तस्माद् नि.सारत्वाद् । हेतौ पञ्चमी । सारशब्दो व्याख्यातपूर्व । मानेन हीनस्य । 'ओहाक् त्यागे' ततो निष्ठाया हीन । "ओदितश्च" इति नत्वम । लघुशब्दादीयसुनि षष्ठ्येकवचने लघीयस । जन्मास्यास्ति तस्य जन्मिन । व्रीह्यादित्वादिनि. । समाशब्दयोगे "तुल्यार्थैरतुलोपमाभ्याम् " इति षष्ठी । एव तृणस्येत्यत्रापि । गच्छतेः क्तिनि गति ।

व्याख्या—शक्ते -शारीरादिबलस्य, उत्साहादिशक्तेर्वा, ( तृणपक्षे अवष्टम्भसामर्थ्यस्य ) वैकल्येन-विरहेण, नम्रस्य-प्रह्वीभूतस्य-विधेयतां गतस्य ( तृणपक्षे नतस्य ) निस्सारत्वाद्-दुर्बलत्वाद् ( तृणपक्षे स्थिराशरहितत्वाद् ) लघीयस'-गौरवहीनस्य ( तृणपक्षे नीरसस्य ) मानहीनस्य-अभिमानशून्यस्य, ( पक्षे परिमाणशून्यस्य-अल्पपरिमाणस्येति यावत् ) जन्मिनः-जन्तोः तृणस्य च, गति.-अवस्था, समा-तुल्या, अस्तीतिशेष. ।

भा०—य केवलमुत्साहादिशक्तेरभावात् परेषामग्रे नम्रो भवति, अन्येषामपहृत दुरुक्त वा तूष्णी सहते, यस्य च दुर्बलतया परैरभ्युत्थानादिना गौरव न क्रियते प्रत्युत सति समये तिरस्कारो विधीयते, यश्चात्माभिमानशून्य , स पुरुषस्तृणेन तुल्य., तृणसादृश्य च श्लिष्टाना जन्मिविशेषणाना तृणेऽपि योजनेन व्याख्याया दर्शितमेव । यथा तृण सुखेनोच्छिद्यते तथा मानहीनोऽपीति तात्पर्यम् ।

अल०—श्लेषानुप्राणितोपमा ।

**यलङ्घ्य तत्तदुद्वीक्ष्य यद्यदुच्चैर्महीभृताम् ।**
**प्रियता ज्यायसी मा गान् महता केन तुङ्गता ॥२०॥**

अ०—महीभृता यद् यद् उच्चै ( अस्ति ) तद् तद् अलङ्घ्यम् उद्वीक्ष्य महता तुङ्गता केन ( हेतुना ) ज्यायसी प्रियताम् मा गात् ।

व्याक०—अस्मिन् पद्ये सर्वाणि पदानि व्याख्यातपूर्वाणि । उद्वीक्ष्येत्यत्र स्थितस्येत्यध्याहृत स्थितिक्रियया समानकर्तृकत्व निर्वाह्यम्, तुङ्गतेति अगमनक्रियाया. कर्तरि प्रथमा । प्रियतामिति तस्या एव कर्मणि द्वितीया । केन- "सर्वनाम्नस्तृतीया च" । इत्यनेन तृतीया ।

व्याख्या—महीभृताम्-पर्वतानां सम्बन्धि, यद् यद्-शृङ्गादि, उच्चैः-उन्नतम्, अस्ति, तद्, तद्-अलङ्घ्यम्-अनतिक्रमणीयम्, उद्वीक्ष्य विचार्य, श्रितस्य पुरुषस्य, महताम्-तुङ्गता-मानौन्नत्यम्-अभ्युदय, केन हेतुना, ज्यायसीम्-महीयसीम्, प्रियताम्-स्पृहणीयताम्, मा गाद्-न गच्छेत्, अपि तु गच्छेदेव । केचित्तु उद्वीक्ष्यमिति पठन्ति, यद् यदुच्चैस्तत्तदलङ्घ्यमुद्वीक्ष्यम्-अवलोकनीयम्, अतो महतमित्यादि योजयन्ति ।

भा०—पर्वतेषु शृङ्गाणि वृक्षा वा यदेवोन्नतमस्ति तत् सर्वमप्यलङ्घ्यं भवति, इति दृष्ट्वा महात्मना मानोन्नति केन प्राप्तु नेष्यते, सर्वैरपीष्यते । पर्वतदृष्टान्तेन तस्या अप्यलङ्घ्यत्वात् । उन्नतेरलङ्घ्यत्वहेतुतया तत्कामैः सर्वैरप्युन्नतये यत्न क्रियते-इति तत्त्वम् ।

**तावदाश्रीयते लक्ष्म्या तावदस्य स्थिर यश ।**
**पुरुषस्तावदेवासौ यावन्मानान्न हीयते ॥६१॥**

अ०—तावद् ( असौ ) लक्ष्म्या आश्रीयते, तावद् अस्य यश स्थिरम् ( भवति ) तावद् एव असौ पुरुष ( उच्यते ) यावद् मानाद् न हीयते ।

व्याक०—आश्रीयते-श्रयते. कर्मणि लट्, लक्ष्म्येति आश्रयणकर्तरि तृतीया, असाविति तत्कर्म अध्याहार्यम् । हीयते-'ओहाक् त्यागे' कर्म कर्तरि लट्, "घुमास्थागापा " इतीत्वम् । मानाद्-अपादाने पञ्चमी ।

व्याख्या—तावद्-तत्कालपर्यन्तम्, असौ, लक्ष्म्या-श्रिया, आश्रीयते-अवलम्ब्यते, तावद्, अस्य-पुरुषस्य, यशः-कीर्ति, स्थिरम्-अविचलम्, तावदेव, असौ, पुरुष ( उच्यते ) पुरुषत्वेन गण्यते, यावद्-यत्कालपर्यन्तम्, मानाद्-अभिमानाद्, न हीयते-न त्यज्यते ।

भा०—आत्माभिमानिन पुरुषस्यैव श्रियो यशासि च भवन्ति, किं च स एव पौरुषाद् हेतोः पुरुषत्वेन गण्यते, अभिमानशून्यस्य तु श्रियो निरस्यन्ति, यशासि क्षीयन्ते, पौरुषाभावाल्लोकास्त क्लीवमाचक्षते ।

अन०—श्रीयशसो स्थैर्ये पुरुषव्यवहारे च मानस्य हेतुताप्रतिपादनात् काव्यलिङ्गम् ।

**स पुमानर्थवज्जन्मा यस्य नाम्नि पुर स्थिते ।**

नान्यामङ्गुलिमभ्येति सङ्ख्यायामुद्यताङ्गुलि ॥६७॥

अ०—यस्य नाम्नि पुरः स्थिते ( सति ) सङ्ख्यायाम् उद्यता अङ्गुलि अन्याम् अङ्गुलिम् न अभ्येति, स. पुमान् अर्थवज्जन्मा ( अस्ति ) ।

व्याक०—अर्थवद् जन्म यस्य स अर्थवज्जन्मा । अर्थवदिति अर्थशब्दात मतुप् । सङ्ख्यायाम्-सपूर्वात् चक्षिङ्धातोः "गुरोश्च हल" इत्यप्रत्यय । 'चक्षिङ ख्याञ्" इति ख्याञादेश । अधिकरणत्वविवक्षया सप्तमी । उद्यता-उत्पूर्वाद् यम्-धातो क्त । अभ्येति-अभिपूर्वाद् एतेर्लट् । पुमान्-पुम्शब्दस्य-प्रथमैकवचने रूपम "पुंसोऽसुङ्" ।

व्याख्या—यस्य-पुंस , नाम्नि-अभिधाने, पुर -अग्रे, स्थिते सति सङ्ख्यायाम्-पुरुषगणनोपक्रमे, उद्यता-( गुणमधिकृत्य ) उन्नमिता अङ्गुलि अन्याम्-द्वितीयाम्, ( उद्यताम् ) अङ्गुलिम्, न अभ्येति-न प्राप्नोति, अद्वितीया भवतीति यावत्, स , पुमान्-पुरुष , अर्थवत्-सफलम्, जन्म-उत्पत्ति , यस्य तथोक्त अस्ति ।

भा०—उत्तमपुरुषगणनाप्रसङ्गे यस्य नाम्नि प्रथम समुत्थिताङ्गुलि. द्वितीयामङ्गुलि न प्राप्नोति, द्वितीयस्योत्तमपुरुषस्याभावाद्, द्वितीयाङ्गुलेरुत्थानाप्रसङ्गाद्, तस्यैव जन्म सफलम्, एतद् मानिन एव सम्भवति, नान्यस्य, अतो मानो न त्याज्यः ।

अल०—कारणे माने प्रस्तुतेऽप्रस्तुतस्य तत्कार्यस्याभिधानाद् अप्रस्तुत-प्रशसा । अद्वितीयत्वस्य भङ्ग्यन्तरेण प्रतिपादनात पर्यायोक्तम ।

दुरासदवनज्यायान् गम्यस्तुङ्गोऽपि भूधर. ।
न जहाति महौजस्क मानप्रांशुमलङ्घ्यता ॥६८॥

अ०—दुरासदवनज्यायान् तुङ्ग. अपि भूधर गम्य ( भवति ) ( किन्तु ) महौजस्क मानप्रांशुम् अलङ्घ्यता न जहाति ।

व्याक०—दुरासदं वने ज्यायान्, दुरासदवनज्यायान्, दुरासदेति दु खेनासाद्यत इति सीदते कृच्छ्रार्थे खल् । ज्यायान् इति व्याख्यातम् । भुव धर भूधर, धरशब्दो धरते पचाद्यजन्त । महत् ओज यस्य स महौजस्कम् "शेषाद् विभाषा" इति शैषिक कप । मानेन प्रांशुम्

मानप्राशुम् । अलङ्घ्यता-लघिधातोर्ण्यत्, ततस्तल्, ततो नञ्समास. । गम्य -गच्छ्यते "पोरदुपधात्" इति यत् । जहाति-'ओहाक् त्यागे' लट् ।

व्याख्या—दुरासदे-दुर्गमे, वनै.-अरण्यै., ज्यायान-प्रवृद्धतर:, तुङ्ग -उच्च , अपि भूधर -पर्वत , गम्य भवति-सुखेन गम्यते । किन्तु महौजस्कम्-प्रतापिनम्, मानप्राशुम्-मानोन्नतम् पुरुषम्, अलङ्घ्यता-अनतिक्रमणीयता, न जहाति-न त्यजति । तेजस्वी मानधन पुरुष सर्वदाऽलङ्घनीय एव भवति ।

भा०—अत्युन्नतो गहनवनाकीर्णोऽपि गिरि कथंचिल्लङ्घितु शक्यते, परमोजस्विन मानोन्नत पुरुप न कोप्युल्लङ्घितु शक्नोति, स खलु सर्वैरपि दुष्प्रधृष्यो भवति ।

अल०—पर्वताद् मानिन उत्कर्षबोधनाद् व्यतिरेकः ।

**गुरून् कुर्वन्ति ते वश्यानन्वर्था तैर्वसुधरा ।**

**येषा यशासि शुभ्राणि ह्रेपयन्तीन्दुमण्डलम् ॥६४॥**

अ०—ते वश्यान् गुरून् कुर्वन्ति तै वसुधरा अन्वर्था ( अस्ति ) येषा शुभ्राणि यशासि इन्दुमण्डल ह्रेपयन्ति ।

व्याक०—वश्यान्-वशशब्दाद् भवार्थे यत् । गुरूनिति वश्याना विधेयविशेषणम् । अर्थमनुगता अन्वर्था, प्रादिसमास. । वसूनि धरतीति वसुधरा, " सज्ञाया भृतृवृजि " इति खच् । खित्त्वान्मुम् । ह्रेपयन्ति-ह्रीधातोर्णिजन्ताल्लट्, प्रथमपुरुपबहुवचनम् । "अर्तिह्री " इत्यनेन पुगागम । इन्दुमण्डल ह्रेपणस्य प्रयोज्यकर्म, यशासि प्रयोजककर्तॄणि । तै -हेतौ, प्रकृत्यादित्वाद् वा तृतीया ।

व्याख्या—ते-पुरुपा , वश्यान्-स्ववशोत्पन्नान्, गुरून्-माननीयान्-प्रख्यातान् वा कुर्वन्ति-विदधते, तै -पुरुषै , वसुन्धरा-पृथिवी, अन्वर्था-पुरुषरत्नधारणाद् वसुधारणरूपानुगतार्था, अस्ति । येपाम्, शुभ्राणि-निर्मलानि, यशासि-कीर्तय , इन्दुमण्डलम्-चन्द्रमण्डलम्, ह्रेपयन्ति लज्जयन्ति ।

भा०—येषा यशो निष्कलङ्कतया चन्द्रमण्डलमपि लज्जयन्ति, त एव पुरुषा इक्ष्वाकुरघ्वादिवत् स्वनाम्ना 'इक्ष्वाकुकुलोत्पन्नोऽयम्' इत्येव स्ववश-

* देवभेदेऽनले रश्मौ वसू रत्ने धने वसु—इत्यमर

जान् लोके प्रख्यापयन्ति, किं च वसु रत्नमुच्यते, तद्रूपाणां तेषां पुरुषाणां धारणादेव पृथिवी वसुधरेति यथार्थनामवती-अस्ति । इन्दुमण्डलमित्यत्र मण्डलपदं पूर्णचन्द्रोपस्थापनाय, तस्यैव सकलङ्कत्वेन हेयणीयत्वात् । शुभ्राणीति विशेषणं च शुभ्राण्येवेत्यवधारणविषया यशसा सकलङ्कत्वपरिहाराय ।

अल०—हेयणस्य सादृश्ये पर्यवसानादुपमेति मल्लिनाथः व्यतिरेक इतितूचितं भाति ।

**उदाहरणमाशीःषु प्रथमे ते मनस्विनाम् ।**
**शुष्केऽशनिरिवामर्षो यैररातिषु पात्यते ॥६९॥**

अ०—यैः अरातिषु अमर्षः शुष्के अशनिरिव पात्यते, मनस्विनां प्रथमे ते आशीःषु उदाहरणम् ( भवन्ति ) ।

व्याक०—न राति (सुखम्) येभ्यस्ते अरातयः, राधातोः क्तिनि रातिः । अधिकरणसप्तमी । अमर्ष-मृषुधातोर्घञ् । शुष्क इति शुष्धातोः क्तान्तम् ' शुषः कः " । पातनस्यानुक्ते कर्मणि प्रथमा । पात्यते-णिजन्तात् पततेः कर्मणि लट् । यैरितिपातनकर्तरि तृतीया । मनस्विनाम्-मनःशब्दाद् विनि , यतश्च निर्धारणम् " इति निर्धारणे षष्ठी । प्रथमे-जसि रूपम् । ' प्रथमचरमतया…" इत्यनेन विभाषया सर्वनामत्वे " जसः शी " । आशीःषु-आशास्यन्ते इति ' आङः शासु इच्छायाम् ' धातोः क्विप्, ' आशासः क्वावुपधाया इत्वं वाच्यम् " " शासिवसिघसीनां च " इति षत्वम् ।

व्याख्या—यैः-पुरुषैः, अरातिषु-शत्रुषु, अमर्षः-क्रोधः, शुष्के-नीरसे वृक्षादौ, अशनिरिव-वज्रमिव, पात्यते-प्रक्षिप्यते, मनस्विनाम्-मानवताम्, प्रथमे-अग्रेसराः, ते, आशीःषु-' त्वमेव भव ' इत्येवं रूपासु शुभाशंसासु, उदाहरणम्-निदर्शनम्, भवन्ति, उपमानतां प्राप्नुवन्तीति यावत् ।

भा०—ये वीराः शुष्कवनसदृशेषु शत्रुषु तद्विनाशायाशनिसदृशं स्वक्रोधं पातयन्ति, त एव मानवतामग्रगण्याः, त एव च त्वमेव भूयाः इत्याद्याशीःप्रदानप्रसङ्गे आदर्शतामुपयान्ति, यथा ' त्वं रामवद् वीरकर्मा भूयाः ' इत्यस्यामाशिषि रामः उदाहरणम्, तथैव रामादिवत्तेऽपि उदाहरणं भवन्तीत्यभिसन्धिः । यथा नीरसतया शुष्कवनान्ता अनम्रा भवन्ति, तथाहङ्कारितया

शत्रवोऽप्यनम्रा.-अविनीता -इत्यनम्रत्वमुभयेषा साधर्म्यम् । क्रोधेऽशनिसाधर्म्यं च विनाशकत्वरूपम्, क्रोधपातनकर्तॄणामिन्द्रसादृश्य व्यङ्ग्यम् ।

अल०—उपमा ।

न सुख प्रार्थये नार्थमुदन्वद्वीचिचञ्चलम् ।
नानित्यताशनेस्त्रस्यन् विविक्त ब्रह्मण. पदम् ॥६६॥

अ०—( अहम् ) उदन्वद्वीचिचञ्चलम् सुख न प्रार्थये ( तथा ) अर्थं न ( प्रार्थये ) अनित्यताशने त्रस्यन् विविक्त ब्रह्मण. पद न ( प्रार्थये ) ।

व्याक०—उदन्वत वीचिरिव ( ष० त० ) चञ्चलम् ( उपमान० ) उदन्वद्वीचिचञ्चलम् । उदन्वच्छब्द " उदन्वानुदधौ च " इत्यनेन निपात्यते । अनित्यता अशनिरिव ( उपमित० ) अनित्यतैव अशनिरिति वा तस्माद् अनित्यताशने , " भीत्रार्थाना भयहेतु " इत्यनेनापादानत्वात् पञ्चमी । प्रार्थये-अर्थधातोश्चौरादिकाल्लट् । उत्तमपुरुषैकवचनम् । आगर्वीयत्वाद् आत्मनेपदम् । अहमिति तत्कर्तृपदमध्याहार्यम् । त्रस्यन्-त्रस् धातो हेतौ शतृप्रत्यय'। " वा भ्राशभ्लाश .. " इत्यनेन वैकल्पिकः श्यन् । विविक्तम्-विचिर्धातो क्तान्तम् ।

व्याख्या—उदन्वत.-समुद्रस्य, वीचिरिव-तरङ्ग इव, चञ्चलम्-अस्थिरम्, सुखम्-विषयानन्दम्, न प्रार्थये-न कामये, तथा अर्थम्-धन च, न प्रार्थये, किं च-अनित्यताशने -वज्रसदृशात् अर्थकामयोर्विनश्वरत्वात्, अर्थकामयोर्या विनश्वरता तत्स्वरूपाद् वज्राद् वा त्रस्यन्-बिभ्यत्, विविक्तम्-विजनम्-अद्वितीयत्वाद् निर्भयम्, ब्रह्मण -परात्मन , पदम्-स्थानम् कैवल्यापरपर्याय मोक्षम्, न प्रार्थये । उदन्वदित्यादिविशेषणमर्थेऽपि योजनीयम् ।

भा०—अह सुख श्रिय च न कामये, तयो समुद्रतरङ्गवदस्थिरत्वेन क्षयित्वात्, नाप्यनयो क्षये वज्रपातवद् दु ख जायत इति भीत सन् निर्भय निर्बाधमक्षय मुक्तिपदमभिलष्यामि, रागद्वेषकषायितचेतसो मम तत्रानधिकारात् ।

अल०—अर्थसुखयोरप्रार्थनायामुदन्वदित्यादिविशेषण साभिप्रायम् इति परिकर , अनित्यताशनिरिव, अनित्यतैवाशनिरितिवोपमारूपकयोरन्यतरस्य

सावकवावकप्रमाणाभावेन सदेहसङ्कर । मुक्तेरकामनाया हेतोरनुपन्यासात् निर्हेतुतात्र दोष प्रतिभाति ।

प्रमार्ष्टुमयश.पङ्कमिच्छेय छद्मना कृतम् ।
वैधव्यतापितारातिवनितालोचनाम्बुभिः ॥६७॥

अ०—( किन्तु ) छद्मना कृतम् अयशःपङ्कम् वैधव्यतापितारातिवनितालोचनाम्बुभिः प्रमार्ष्टुम् इच्छेयम् ।

व्याक०—अयश एव पङ्कम् अयश पङ्कम् । वैधव्येन तापिता अरातीना वनिता', तासा लोचनानि, तेषाम् अम्बुभिः वैधव्यतापितारातिवनितालोचनाम्बुभि । समस्तपदात् तृतीया प्रमार्जनकरणे । वैधव्यमिति विधवाशब्दात् भावे ष्यञ् । विनष्टो धव (पति ) यस्या सा विधवा । तापितेति णिजन्ततपे. क्तान्तम् । वनिता-' वन षण् सम्भक्तौ ' ततो निष्ठा । प्रमार्ष्टुम्-मृजे' इच्छतावुपपदे ' समानकर्तृकेषु तुमुन् " । मृजेर्वृद्धि । इच्छेयम्-इषे " इच्छार्थेभ्यो विभाषा वर्तमाने " इत्यनेन वर्तमाने लिङ् । छद्मनेति करणे तृतीया ।

व्याख्या—किन्तु अरिभि , छद्मना-कपटेन, कृतम्-आपादितम्, अयश -पङ्कम्-अकीर्तिरूप कर्दमम्, वैधव्येन-भर्तृनाशेन, तापितानाम्-पीडितानाम्, अरातिवनितानाम्-शत्रुस्त्रीणाम्, लोचनाम्बुभि -नेत्रजलै अश्रुभि , प्रमार्ष्टुम्-प्रक्षालयितुम्, इच्छेयम्-इच्छामि ।

भा०—ननु सासारिकपारमार्थिकसुखातिरिक्त किं तव काम्यमित्यत्राह शत्रुभि कपटद्यूत विधाय यदिदमस्मास्वकीर्तिरूप पङ्क क्षिप्त तत् प्रक्षालनमेवाहमिच्छामि, नान्यत् किमपि सुखादिकम्, पङ्कप्रक्षालन च जलेनैव भवितुमर्हति, तदपि जल न साधारणम्, अपि तु पतिवियोगेन दु खिताना शत्रुनारीणा नेत्रेभ्य उद्गतम्, तेनैवच्छद्मकृतस्याकीर्तिपङ्कस्य क्षालयितु शक्यत्वात्।

अल०—अयश पङ्कमिति रूपकम्, उपमा तु न, अम्बुभिरयश.क्षालनासङ्गते. ।

अपहस्येऽथवा सद्भि प्रमादो वास्तु मे धिय ।
अस्थानविहितायास. काम जिह्रेतु मा भवान् ॥६८॥

अ०—अथवा (अहम्) सद्भि अपहस्ये, वा मे धिय प्रमाद. अस्तु, (किन्तु) अस्थानविहितायास. भवान् काम मा जिहेतु ।

व्याक०—अस्थाने विहित आयाम येन सः अस्थानविहितायासः। विहितेति विपूर्वात् दधाते. क्त, "दधातेर्हि"। आयामेति, 'यमु प्रयत्ने' धातोर्घञन्त रूपम्। अपहस्ये-अपपूर्वात् हसते कर्मणि लट्, स च "वर्तमानसामीप्ये" इत्यनेन भविष्यति, उत्तमपुरुषैकवचनम्। सद्भिरिति अपहसनकर्तरि तृतीया, अहमिति च तत्कर्माध्याहार्यम्। प्रमाद -प्रपूर्वाद् माद्यते "मदोऽनुपसर्गे" इत्यत्रानुपसर्ग इतिनिषेधाद् घञ्। अस्तु-इति सासूयाङ्गीकारे। जिहेतु ह्रीधातोरवीष्टे लोट्। "माङि लुङ्" इति लुङ्लकारस्तु न शङ्क्य, ङितो माशब्दस्यैव तत्र ग्रहणात्, अत्र तु अङित् माशब्दः।

व्याख्या—अथवा, अहम्, *सद्भि -विद्वद्भि, अपहस्ये-अपहसिष्ये, वा, मे-मम, धिय -बुद्धे, प्रमाद -अनवधानम् †अस्तु-भवतु, किन्तु-अस्थाने-अयोग्यविषये, विहित -कृत·, आयास हितोपदेशदानप्रयत्न, येन तथोक्त, भवान्, कामम्-बाढम्, मा जिहेतु-न लज्जताम्।

भा०—शत्रुविजिगीषया तपस्तपन्त मा दृष्ट्वा सन्तः काम हसन्तु, अत्र विषये मम बुद्धिर्भ्रान्ता वा किं न भवेत्, पर नाह स्वोद्देश्यात् पदमपि चलेयम्, ममोपहासानवधानविषये भवता चिन्ता न कार्या, इद तु प्रार्थ्यते यदपात्रे मयि मोक्षोपदेशयत्नस्य वैफल्येन भवता लज्जा न कर्तव्या। अर्जुनस्य सोल्लुण्ठोक्तिरियम्।

**वशलक्ष्मीमनुद्धृत्य समुच्छेदेन विद्विषाम्।**
**निर्वाणमपि मन्येऽहमन्तराय जयश्रियः ॥६१॥**

अ०—अह विद्विषा समुच्छेदेन वशलक्ष्मीम् अनुद्धृत्य निर्वाणम् अपि जयश्रिय: अन्तराय मन्ये।

व्याक०—अनुद्धृत्य-उत्पूर्वाद् हरतेः ल्यप्। ततो नञ्समासः। समुच्छेदेन समुत्पूर्वात् छिदेर्घञ। हेतौ करणे वा तृतीया। निर्वाणम्-निरुप-

* सन् सुधी कोविदो बुध, इति विद्वन्नामस्वमर।

† असूयोपगमेऽस्तु च—इत्यमर।

सर्गाद् यातेर्ल्युट्, "कृत्यचः" इति णत्वम् । विद्विषा समुच्छेदनकर्मणि षष्ठी ।

व्याख्या—अहम्, विद्विषाम्-शत्रूणाम्, समुच्छेदेन-सम्यग् विनाशनेन, वंशलक्ष्मीम्-स्वकुलस्य राज्यश्रियम्, अनुद्धृत्य-शत्रुभ्य अनाकृष्य, अपरावर्त्य वा, निर्वाणम्-मोक्षमपि, जयश्रियः-जयलक्ष्म्याः, अन्तरायम्-विघ्नम् ( न तु पुरुषार्थम् ) मन्ये-स्वीकरोमि ।

भा०—यावत् शत्रून् विनाश्य जयश्रिय उद्धारो न कृतः, तावदहं मोक्षमपि जयश्रियो विघ्नरूपं मन्ये, मोक्षस्य शमप्रधानतया विजिगीषाशमकत्वात्। अन्योत्सवादीना तु कथैव का ।

अलं०—भावार्थोक्तरीत्या काव्यार्थापत्ति ।

**अजन्मा पुरुषस्तावद् गतासुस्तृणमेव वा ।**

**यावन्नेषुभिरादत्ते विलुप्तमरिभिर्यश ॥७०॥**

अ०—पुरुष यावद् अरिभि विलुप्त यश इषुभिः न आदत्ते, तावद् अजन्मा, गतासुः, वा तृणमेव ( अस्ति ) ।

व्याक०—न जन्म यस्य सोऽजन्मा । गता असवो यस्य स गतासु । विलुप्तम्-' लुप्लृ छेदने ' निष्ठा । आदत्ते-आङ्पूर्वाद्दातेर्लट् । "आङो दोऽनास्यविहरणे" इत्यनेनात्मनेपदम् । अरिभिः विलोपनकर्तरि तृतीया । यश इति आदानकर्मणि द्वितीयान्तम् । इषुभिः-आदानकरणे तृतीया ।

व्याख्या—पुरुष.-यावत्, अरिभि -शत्रुभिः, विलुप्तम्-विनाशितम्, यश -कीर्तिम्, इषुभि -बाणै ( शत्रून् निपात्य ) न आदत्ते-न पुनरुज्जीवयतीतियावत् । तावत्, अजन्मा-अनुत्पन्न इवास्ति, अथवा जातोऽपि गता , असव -प्राणा , यस्य तथाभूत -मृततुल्य , अस्ति, वा अथवा तृणमेव-तृणसदृशमेव, अकिञ्चित्-करत्वाज्जीवन्मृत इतियावद्, अस्ति ।

भा०—पुरुषो यावद् बाणै· शत्रून निपात्य तैर्विलोपित स्वकीय यश पुनर्न प्राप्नोति, तावत् स जातोऽपि अजातप्राय , तस्य जन्मनो निष्फलत्वात् , नन्वजातस्य जन्मान्तर उपयोग सभवति इति न निष्फलत्वम् , इत्यत आह गतासुरिति, जातोऽपि मृततुल्य. स. जीवतस्तस्यानुपयोगात्, मृतोऽपि पूर्वजन्मन्युपयुज्यते स्मेत्यत आह, तृणमेव स इति, यथा तृण निरन्तर

पादाभ्यामुपहन्यमानमपि न प्रतीकाराय समर्थम्, तथैव सोऽपि, इति तृणतुल्य स ।

अल०—निष्फलत्वादिनिमित्तया जन्माभावादिसंभावनायोत्प्रेक्षा, सा चेवशब्दाभावाद् गम्या, तृणमेवेति रूपकम् ।

**अनिर्जयेन द्विषता यस्यामर्ष प्रशाम्यति ।**

**पुरुषोक्ति कथ तस्मिन् ब्रूहि त्व हि तपोधन ! ॥७१॥**

अ०—यस्य अमर्षः द्विषताम् अनिर्जयेन प्रशाम्यति, तस्मिन् पुरुषोक्तिः कथम् ? ( हे ) तपोधन त्व हि ब्रूहि ।

व्याक०—तप एव धन यस्य स तपोधन, सम्बोधने सुलोप । पुरुष इति उक्ति पुरुषोक्ति । वचे. क्तिनि उक्ति, संप्रसारणम् । द्विषताम्-"द्विषोऽमित्रे" इति द्विषे शतृप्रत्यय॰, कर्मणि षष्ठी । अनिर्जयेन-निर्पूर्वाद् जिधातो "एरच्" ततो नञ्समास । उपलक्षणे तृतीया इति मल्लिनाथ । प्रशाम्यति-शमुधातोर्लट्, "शमामष्टाना दीर्घ श्यनि" । कथम्-व्याख्यातम् । ब्रूहि-ब्रवीतेर्लोट्, मध्यमपुरुषैकवचनम् । "सेर्ह्यपिच्च" इति सिपो हिः, तस्मिन्निति विषयसप्तमी ।

व्याख्या—यस्य-पुरुषस्य, अमर्ष -क्रोध , द्विषताम्-शत्रूणाम्, अनिर्जयेन जय विनैव, प्रशाम्यति-शान्तो भवति, तस्मिन्-पुरुषे, पुरुषोक्ति -पुरुष इत्ययं शब्द , कथम्-केन प्रकारेण, प्रवर्तत इति सगच्छत इति वा शेष , न कथंचिदपि, इत्यर्थ ।

भा०—हे तपस्विन् ! विदितवेदितव्यस्त्वमेव कृपया ब्रूहि यद् यस्य क्रोधो द्विषता जयमविधायैव शान्तो भवति, तस्मिन् पुरुषइतिशब्द कथ सगच्छते, तत्प्रवृत्तिनिमित्तस्य पौरुषस्य तत्राभावात् ।

**कृत पुरुषशब्देन जातिमात्रावलम्बिना ।**

**योऽङ्गीकृतगुणै. श्लाघ्य सविस्मयमुदाहृत ॥७२॥**

अ०—जातिमात्रावलम्बिना पुरुषशब्देन कृतम् । यः ( पुरुष ) अङ्गीकृतगुणै ( पुरुषै ) सविस्मयम् उदाहृतः ( सः ) श्लाघ्य. ।

व्याक०—जातिरेव (मयूर०) जातिमात्रम्, तद् अवलम्बते (उपपद०)

तेन जातिमात्रावलम्बिना, लम्बतोरणानि । पुरुष इति शब्द , तेन पुरुषशब्देन, अथवा पुरुष इति शब्द ( वाचक ) यस्य तेनेति बहुव्रीहिणा व्यक्तिपरोय शब्द॰, न तु शब्दपर , गम्यमानसाधनक्रिया प्रति करणत्वात् तृतीया । अङ्गीकृता गुणा यैस्ते अङ्गीकृतगुणै । पुरुषैरिति तद्विशेष्यमध्याहार्यम्, उदाहरणकर्तरि तृतीया । अथवा अङ्गीकृतै गुणैरिति कर्मधारय , उपलक्षणे तृतीया, अङ्गीकृतगुणै उपलक्षित मन इत्यन्वय । अत्र पक्षे लोकैरित्युदाहरणकर्ताध्याहार्यः । अङ्गीकृतेति करोतेर्योगे अङ्गशब्दात् च्वि । विस्मयेन सह सविस्मयम्, अव्ययीभाव॰, "अव्ययीभावे चाकाले" इति सहस्य सादेश , उदाहरणक्रियाविशेषणम् । कृतमित्यलशब्दवन्निषेधार्थकमव्यय चादिषु पठ्यत-इति मल्लिनाथ , पक्षान्तर तु किरातार्जुनीयस्य द्वितीयसर्गीयसप्तदशश्लोके उक्तमेव, तत एवावधेयम । उदाहृत - उन' 'आङ्' एतत् पूर्वाद् हरते कर्मणि क्त । श्लाघ्य -श्लाघितु योग्य इति श्लाघृधातोर्ण्यत ।

व्याख्या—जातिमात्रावलम्बिना-जाति -नित्यमेकमनेकानुगत सामान्य पुरुषत्वादि, तन्मात्रम् ( न तु गुणक्रिये ) अवलम्बते-वाच्यतया ( अथवा धर्मरूपेण ) आश्रयति इति तथोक्तेन, पुरुषशब्देन-पुरुषइतिपदेन, ( अथवा पुरुषशब्दवाच्येन जन्तुना ) कृतम्-अलम्, न किञ्चित् साध्यत इति । य - पुरुष , अङ्गीकृतगुणै -गुणपक्षपातिभि पुरुषै ( अथवा अङ्गीकृतै -पुरुषशब्द-वाच्यतायै स्वीकृतै -अपेक्षितै , गुणै -पौरुषादिभि उपलक्षितः सन् ) सविस्मयम्-साश्चर्यम्, उदाहृत —'पुसा ईदृशेन भवितव्यम्' इत्येवमादर्शतया निदर्शित॰, स , श्लाघ्य -स्तुत्य -प्रशमनीय , अस्तीति शेष ।

भा॰—ननु पौरुषाभावेऽपि पुरुषत्वजातेस्तत्रसत्त्वे युक्तव पुरुषशब्दप्रवृत्ति-स्तत्रेत्यत आह-जातिमात्राभिधायिना पुरुषशब्देन न किञ्चित् साध्यते, अथवा य. केवल जातिमात्रेण पुरुष इति व्यपदिश्यते, न तु तत्र पौरुष विद्यते, काष्ठमय-हस्तिनेव तेन न किञ्चित् साध्यम्, लोके स एव श्लाघनीय पुरुषो य स्वपौरुषेण गुणिना विस्मयमुत्पादयति, अत एव सति प्रसङ्गे तै साश्चर्यमुदाह्रियते ।

प्रसमानमिवौजासि सदसा गौरवेरितम् ।
नाम यस्याभिनन्दन्ति द्विषोऽपि स पुमान् पुमान् ॥

अ०—सदसा गौरवेरित ओजांसि ग्रसमानमिव ( स्थितम् ) यस्य नाम द्विषः अपि अभिनन्दन्ति, स पुमान् पुमान् ( अस्ति ) ।

व्याक०—गौरवेण ईरित गौरवेरितम्, गौरवेति गुरुशब्दात् युवादित्वात् भावेऽण्, विग्रहे तृतीया तु सहयोगे । ईरितमिति 'ईर्' धातोः क्तान्तम् । ग्रसमानम्-'ग्रसु अदने' कर्तरि शानच् । अभिनन्दन्ति-अभिपूर्वात् 'टुनदि समृद्धौ' धातोः लट्, इदित्त्वान्नुम्, प्रथमपुरुषबहुवचनम् । सदसेति ईरणकर्तरि तृतीया । ओजांसि ग्रसनकर्मणि द्वितीया ।

व्याख्या—सदसा-सभया, गौरवेण-गौरवपूर्वकम्, ईरितम्-प्रसङ्गवशाद् उच्चारित सत्, शृण्वताम्, ओजांसि-तेजांसि, ग्रसमानमिव-कवलयदिव, श्रोतॄन् निष्प्रभानिव विदधदितियावत्, यस्य-पुरुषस्य, नाम-अभिधानम्, द्विषः-शत्रवोऽपि, अभिनन्दन्ति-अनुमोदन्ते, सः, पुमान्-पुरुषः, पुमान्-पौरुषादि-गुणविशिष्टः पुमान्, अस्ति, अन्यस्तु तदाकृतिसामान्यमात्रेण पुमानुच्यते ।

भा०—सभासु कथाप्रसङ्गेन सबहुमानमुच्चारित यन्नाम शत्रवोऽप्यनुमोदन्ते, किं च यन्नामश्रवणसमनन्तर तत्पराक्रमाद्यतिशयस्मरणाच्छ्रोतारस्तथा निस्तेजस इव प्रतीयन्ते यथा मन्ये तन्नाम्ना तेषा तेजो निगीर्णं भवेत्, स पुमान् वस्तुतः पुमान्-पौरुषापरपर्यायपुंस्त्वादिविशिष्टोऽस्ति, इतरे तु जातिमात्र-वाहका काष्ठमयहस्त्यादिवदप्रयोजका एव ।

अल०—ईर्ष्यावता स्वापेक्षयाधिकस्य नामश्रवणे तत्पराक्रमाद्यतिशय-स्मरणोत्पन्नभयादिना निष्प्रभत्व ( मुखमालिन्यम् ) नैसर्गिकम्, तत्र प्रभा-भावस्य कवलनजन्यत्वम्, कवलने नाम्न कर्तृत्व चेत्युभयमपि कविनोत्प्रेक्षि-तम् इत्युत्प्रेक्षा । उद्देश्यविधेयतया तात्पर्यभेदात् पुमान् पुमान् इति लाटानु-प्रास । अत्र द्वितीयपुंस्शब्दो मुख्यार्थे तात्पर्याभावाद् बाधित पौरुषादिगुण-विशिष्ट पुमास लक्षयति, पौरुषाद्यतिशयश्च व्यङ्ग्य इत्यर्थान्तरसंक्रमितवाच्य-ध्वनि, विध्यलङ्कार इत्यप्पय्यदीक्षित, 'सिद्धस्यैव विधान यत्तदाहुर्विध्य-लङ्कृतिम्' इति तल्लक्षणम् ।

यथाप्रतिज्ञ द्विषता युधि प्रतिचिकीर्षया ।
ममैवाध्येति नृपतिस्तृष्यन्निव जलाञ्जलम् ॥७४॥

तेन जातिमात्रावलम्बिना, नम्यतोऽणिनि । पुरुष इति शब्द , तेन पुरुषशब्देन, अथवा पुरुष इति शब्द ( वाचक. ) यस्य तेनेति बहुव्रीहिणा व्यक्तिपरोय शब्द', न तु शब्दपर , गम्यमानमाधनक्रिया प्रति करणत्वात् तृतीया । अङ्गीकृता गुणा यैस्ते अङ्गीकृतगुणै । पुरुषैरिति तद्विशेष्यमध्याहार्यम्, उदाहरणकर्तरि तृतीया । अथवा अङ्गीकृतै गुणैरिति कर्मधारय , उपलक्षणे तृतीया, अङ्गीकृतगुणै उपलक्षित सन इत्यन्वय । अत्र पक्षे लोकैरित्युदाहरणकर्ताध्याहार्यः । अङ्गीकृतेति करोतेर्योगे अङ्गशब्दात् च्वि । विस्मयेन सह सविस्मयम, अव्ययीभाव', "अव्ययीभावे चाकाले" इति सहस्य सादेश , उदाहरणक्रियाविशेषणम । कृतमित्यलशब्दवाच्चिपेधार्थकमव्यय चादिषु पठ्यत- इति मल्लिनाथ , पक्षान्तर तु किरातार्जुनीयस्य द्वितीयसर्गीयसप्तदशश्लोके उक्तमेव, तत एवावबेयम । उदाहृत - उत' 'आङ्' एतत् पूर्वात् हरते कर्मणि क्त । श्लाघ्य -श्लाघितु योग्य इति श्लाघृधातोर्ण्यत ।

व्याख्या—जातिमात्रावलम्बिना-जाति -नित्यमेकमनेकानुगत सामान्य पुरुषत्वादि, तन्मात्रम् ( न तु गुणक्रिये ) अवलम्बते-वाच्यतया ( अथवा धर्मरूपेण ) आश्रयति इति तथोक्तेन, पुरुषशब्देन-पुरुषइतिपदेन, ( अथवा पुरुषशब्दवाच्येन जन्तुना ) कृतम्-अलम, न किञ्चित् साध्यत इति । य - पुरुष , अङ्गीकृतगुणै -गुणपक्षपातिभि पुरुषै ( अथवा अङ्गीकृतै -पुरुषशब्द- वाच्यतायै स्वीकृतै -अपेक्षितै , गुणै पौरुषादिभि. उपलक्षित. सन् ) सविस्मयम्-साश्चर्यम्, उदाहृत —'पुसा ईदृशेन भवितव्यम्' इत्येवमादर्शतया निदर्शित., स , श्लाघ्य -स्तुत्य -प्रशमनीय , अस्तीति शेष. ।

भा०—ननु पौरुषाभावेऽपि पुरुषत्वजातेस्तत्रसत्त्वे युक्तेव पुरुषशब्दप्रवृत्ति- स्तत्रेत्यत आह-जातिमात्राभिधायिना पुरुषशब्देन न किञ्चित् साध्यते, अथवा य केवल जातिमात्रेण पुरुष इति व्यपदिश्यते, न तु तत्र पौरुष विद्यते, काष्ठमय- हस्तिनेव तेन न किञ्चित् साध्यम्, लोके स एव श्लाघनीय पुरुषो य स्वपौरुषेण गुणिना विस्मयमुत्पादयति, अत एव सति प्रसङ्गे तै साश्चर्यमुदाह्रियते ।

असमानमिवौजासि सदसा गौरवेरितम् ।
नाम यस्याभिनन्दन्ति द्विषोऽपि स पुमान् पुमान् ॥

अ०—सदसा गौरवेरित ओजासि ग्रसमानमिव ( स्थितम् ) यस्य नाम द्विषः अपि अभिनन्दन्ति, स पुमान् पुमान् ( अस्ति ) ।

व्याक०—गौरवेण ईरित गौरवेरितम्, गौरवेति गुरुशब्दात् युवादित्वात् भावेऽण्, विग्रहे तृतीया तु सहयोगे । ईरितमिति 'ईर' धातो क्तान्तम । ग्रसमानम्-'ग्रसु अदने' कर्तरि शानच् । अभिनन्दन्ति-अभिपूर्वात् 'टुनदि समृद्धौ' धातो लट्, इदित्त्वान्नुम्, प्रथमपुरुषबहुवचनम् । सदसेति ईरणकर्तरि तृतीया । ओजासि ग्रसनकर्मणि द्वितीया ।

व्याख्या—सदसा-सभया, गौरवेण-गौरवपूर्वकम्, ईरितम्-प्रसङ्गवशाद् उच्चारित सत्, शृण्वताम्, ओजासि-तेजासि, ग्रसमानमिव-कवलयदिव, श्रोतॄन् निष्प्रभानिव विदधदितियावत्, यस्य-पुरुषस्य, नाम-अभिधानम्, द्विष-शत्रवोऽपि, अभिनन्दन्ति-अनुमोदन्ते, स., पुमान्-पुरुष., पुमान्-पौरुषादि-गुणविशिष्ट. पुमान्, अस्ति, अन्यस्तु तदाकृतिसामान्यमात्रेण पुमानुच्यते ।

भा०—सभासु कथाप्रसङ्गेन सबहुमानमुच्चारित यन्नाम शत्रवोप्यनुमोदन्ते, किं च यन्नामश्रवणसमनन्तर तत्पराक्रमाद्यतिशयस्मरणाच्छ्रोतारस्तथा निस्तेजस इव प्रतीयन्ते यथा मन्ये तन्नाम्ना तेषा तेजो निगीर्ण भवेत्, स पुमान् वस्तुतः पुमान्-पौरुषापरपर्यायपुस्त्वादिविशिष्टोस्ति, इतरे तु जातिमात्र-वाहका काष्ठमयहस्त्यादिवदप्रयोजका एव ।

अल०—ईर्ष्यावता स्वापेक्षयाधिकस्य नामश्रवणे तत्पराक्रमाद्यतिशय-स्मरणोत्पन्नभयादिना निष्प्रभत्व ( मुखमालिन्यम् ) नैसर्गिकम्, तत्र प्रभा-भावस्य कवलनजन्यत्वम्, कवलने नाम्न कर्तृत्व चेत्युभयमपि कविनोत्प्रेक्षि-तम् इत्युत्प्रेक्षा । उद्देश्यविधेयतया तात्पर्यभेदात् पुमान् पुमान् इति लाटानु-प्रास । अत्र द्वितीयपुस्शब्दो मुख्येर्थे तात्पर्याभावाद् बाधित पौरुषादिगुण-विशिष्ट पुमास लक्षयति, पौरुषाद्यतिशयश्च व्यङ्ग्य इत्यर्थान्तरसक्रमितवाच्य-ध्वनि, विध्यलङ्कार इत्यप्पय्यदीक्षित, 'सिद्धस्यैव विधान यत्तदाहुर्विध्य-लङ्कृतिम' इति तल्लक्षणम् ।

यथाप्रतिज्ञ द्विषता युधि प्रतिचिकीर्षया ।
ममैवाध्येति नृपतिस्तृप्यन्निव जलाञ्जलेः ॥७४॥

अ०—नृपति यथाप्रतिज्ञ युधि द्विषता प्रतिचिकीर्षया मम एव तृष्यन् जलाञ्जलेरिव अध्येति।

व्याक०—प्रतिज्ञामनतिक्रम्य यथाप्रतिज्ञम्, "एकविभक्तिचापूर्वनिपाते" इति प्रतिज्ञाशब्दस्योपसर्जनत्वे "गोस्त्रियो" इति ह्रस्व। युधि-युध्यते: भावे क्विप्। अधिकरणसप्तमी। द्विषताम्-व्याख्यातम्। प्रतिकर्तुमिच्छया प्रतिचिकीर्षया प्रतिपूर्वात् करोतेरिच्छार्थे सन्, तत "अप्रत्ययात्"। हेतौ तृतीया। तृष्यन्-तृष्धातोर्दिवादिकात् हेतौ शतृप्रत्यय। अध्येति-नित्यमधिपूर्वात् 'इक् स्मरणे' धातोर्लट्। मम जलाञ्जले-"अधीगर्थदयेशां कर्मणि" इत्यनेन षष्ठी।

व्याख्या—नृपति-राजा युधिष्ठिर, यथाप्रतिज्ञम-प्रतिज्ञानुसारेण, युधि-सग्रामे, द्विषताम्-शत्रूणाम्, प्रतिचिकीर्षया-प्रतिकर्तुमिच्छया-वैरनिर्यातनार्थमिति-यावत्, ममैव, तृष्यन्-तृषार्त, जन्तु, जलस्य-पानीयस्य, अञ्जलेर्यथा, तथा अध्येति-स्मरति।

भा०—ननु सत्सु भीमादिषु वैरनिर्यातने तवैवाय कोऽभिनिवेश इत्यत आह-प्रतिज्ञानुसारेण सग्रामे शत्रून जिघांसुर्युधिष्ठिरो नृपतिर्मामेव स्मरति, नान्यम्, यथा तृषार्तो जलाञ्जलि स्मरति, अत्रात्मनो जलाञ्जल्युपमया यथा जलाञ्जलिरेव तृषाया प्रतीकार, नान्यत् किमपि, तथैव वैरनिर्यातनमपि मदेकसाध्यम्, तथा च यत्र यस्योपयोग:, तत्र तस्यैव नियोगउचित इति राज्ञाहमेव नियुक्त, इति बोध्यते, किं च युधिष्ठिरस्य नृपतिपदेनाभिधान राजाज्ञयाहमायातोस्मि, राजाज्ञाया च 'अहमेव किमर्थं नियुक्त, नान्य.' इति विचारानवसर इति बोधनार्थम्।

अल०—उपमा।

स वशस्यावदातस्य शशाङ्कस्येव लाञ्छनम्।
कृच्छ्रेषु व्यर्थया यत्र भूयते भर्तुराज्ञया॥ ७९॥

अ०—स अवदातस्य वशस्य शशाङ्कस्येव लाञ्छनम् (अस्ति) यत्र कृच्छ्रेषु भर्तुः आज्ञया व्यर्थया भूयते।

व्याक०—शश. अङ्को यस्य तस्य शशाङ्कस्य। अङ्किधातोर्घञि अङ्क.।

विनष्टः अर्थो यस्याः तया व्यर्थया । लाञ्छनमिति 'लाछि लक्षणे' धातोर्ल्युडन्तम् लाञ्छ्यतेऽनेनेति । यत्र यच्छब्दस्थाने त्रल् । भर्तुः-भरतेस्तृच् । आज्ञया-आङ्पूर्वाज्जानाते 'आतश्चोपसर्गे' इत्यङ् । भवनस्यानुक्ते कर्तरि तृतीया । भूयते-भवतेर्भावे लट् । कृच्छ्रेषु-सति सप्तमी ।

व्याख्या—स·-नर, अवदातस्य-उज्ज्वलस्य, वशस्य कुलस्य, शशाङ्कस्येव-चन्द्रस्य यथा, लाञ्छनम्-कलङ्क, अस्ति । यत्र नरे, कृच्छ्रेषु-कष्टेषु सत्सु, भर्तुः-भरणकर्तुः स्वामिन, आज्ञया-आदेशेन, व्यर्थया-निष्फलया, अपालितयेतियावद्, भूयते ।

भा०—स पुरुषश्चन्द्रमस्तुल्ये स्वच्छे स्ववशे कलङ्करूपोऽस्ति, यो विपत्सु भर्तुराज्ञा न पालयति, तथा च मया विपद्ग्रस्तस्य भर्तुर्युधिष्ठिरस्याज्ञावश्यपालनीया । न पुन स्वार्थपरेण भवितव्यम् ।

अल०—विशेषे प्रस्तुते सामान्यमभिहितमित्यप्रस्तुतप्रशसा । शशाङ्कस्येवेत्युपमा ।

**कथ वादीयतामर्वाङ् मुनिता धर्मरोधिनी ।**
**आश्रमानुक्रम पूर्वै स्मर्यते न व्यतिक्रम ॥ ७६ ॥**

अ०—धर्मरोधिनी अर्वाग् मुनिता कथ वा आदीयताम् ? पूर्वैः आश्रमानुक्रम· स्मर्यते, व्यतिक्रम. न ( स्मर्यते ) ।

व्याक०—धर्मस्य रोधिनी धर्मरोधिनी, रोधिनीति 'रुधिर् आवरणे' ग्रह्यादित्वाद् णिनि । अवरे अञ्चति इत्यर्वाग्, पृषोदरादित्वात् साधु, "दिक्शब्देभ्य" इति अस्ताति, तस्य "अञ्चेर्लुक्" इति लुक् । मुनेर्भावो मुनिता, भावतलन्तम् । आदानस्य उक्ते कर्मणि प्रथमा । आदीयताम्-आङ्पूर्वाद् ददाते कर्मणि सप्रश्ने लोट्, यक् । मयेति तृतीयान्तं तत्कर्तृपदमध्याहार्यम् । अश्रमानुक्रमशब्दौ श्रमुक्रम्योर्घञन्तौ । एव व्यतिक्रमोऽपि । स्मर्यते-स्मृधातो कर्मणि लट् । "गुणोऽर्तिसंयोगाद्यो" इत्यनेन गुण. । पूर्वैरिति स्मरणस्य कर्तरि तृतीया, आश्रमानुक्रम इति च तस्यैवोक्ते कर्मणि प्रथमा ।

व्याख्या—धर्मरोधिनी-धर्मस्य-गार्हस्थ्योचितस्य इष्टापूर्तादे ( अथवा

धर्मशास्त्रस्य ) रोधिनी-प्रतिबन्धिका, ( अथवा विरोधिनी ) अर्वाग्-गार्हस्थ्यात् प्राक्, मुनिता-वानप्रस्थत्व पारिव्राजकत्व वा, कथ वा आदीयताम्-केन प्रकारेण स्वीक्रियताम्, गार्हस्थ्यानन्तरमेव तद्विधानात्। पूर्व -पुरातनैर्मन्वादिभिर्धर्माचार्ये ( अजाततीव्रवैराग्याणा कृते ) आश्रमाणाम्-ब्रह्मचर्यादीनाम्, अनुक्रम -क्रमिकत्वम्-ब्रह्मचारी भूत्वा गृही भवेद्, गृही भूत्वा वनी भवेत्, वनी भूत्वा प्रव्रजेत् इत्येव क्रमवर्तिता, स्मर्यते-प्रतिपाद्यते इति यावत्, व्यतिक्रम.-उपर्युक्तक्रमवैपरीत्यम्, न स्मर्यते ।

भा०—अहमिदानी गार्हस्थ्यधर्ममाश्रितोऽस्मि, तमनिर्वाह्य पूर्वमेव कथ वानप्रस्थता सन्यासाश्रम वा स्वीकरवाणि, गार्हस्थ्यमसमाप्याश्रमान्तरस्वीकारे धर्मविरोध स्यात्, यतो धर्मशास्त्राचार्यैराश्रमाणा क्रमः प्रतिपादित , पूर्वं ब्रह्मचर्यम्, ततो गार्हस्थ्यम्, ततो वानप्रस्थता, तदन्ते सन्यास.-इति, न तु व्युत्क्रम , येनाह स्वीकृत गार्हस्थ्यमपरिपक्वेऽपि वैराग्ये परित्यज्य वानप्रस्थ. सन्यासी वा भवेयम् ।

अलं०—सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यास इति मल्लिनाथ , कुवलयानन्दकारमते तु स्वाभिहितेर्थे शब्दप्रमाणोपन्यासाच्छब्दप्रमाणालङ्कार. ।

**आसक्ता धूरिय रूढा जननी दूरगा च मे ।**
**तिरस्करोति स्वातन्त्र्य ज्यायाश्चाचारवान् नृप ॥ ७७ ॥**

अ०—आसक्ता रूढा इय धू., च दूरगा जननी, च ज्यायान् आचारवान् नृप मे स्वातन्त्र्य तिरस्करोति ।

व्याक०—आसक्ता-आङ्पूर्वात् 'षञ्ज सङ्गे' धातोः क्त । रूढा-रोहते क्त । दुर गता दूरगा, दूरोपपदाद् गमे "अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु ड" टिलोपश्च । जननी-जन्यतेऽनयेति जनयतेर्ल्युट्, टित्त्वाद् ङीप् । ज्यायान्-व्याख्यातपूर्व । आचारवान्-आचारशब्दात् प्राशस्त्ये मतुप् । स्वतन्त्रस्य भाव स्वातन्त्र्यम्, भावे ष्यञ् । तिरस्करोति-"तिरसोऽन्यतरस्याम्" इति विसर्गस्य सत्वम् । धू , जननी, नृप. एतानि तिरस्करणस्य कर्तृपदानि, तिरस्करोति इति प्रत्येक पृथक् २ सम्बध्यते, धू तिरस्करोति-इत्येवमादि, अन्यथा तिरस्कर्तॄणा बहुत्वात् तिरस्कुर्वन्तीति बहुवचन स्यात् ।

व्याख्या—आसक्ता-अवश्यकर्तव्यतया सम्प्राप्ता, रूढा-प्रसिद्धा-महतीति यावत् (अथवा अर्जुनोवंश्य वैरनिर्यातन करिष्यति इत्येव लोके प्रसिद्धा) इय धू-वैरनिर्यातनभार, च-पुन, दूरगा-इत प्रदेशाद् दूरास्थिता, जननी-माता, च-पुन ,ज्यायान्-वयसा ज्येष्ठः, आचारवान्-सद्वृत्तः, नृप -राजा (न तु साधारणो जन ) युधिष्ठिर, मे स्वातन्त्र्यम्-वैरनिर्यातन परित्यज्य 'विजहीहि रणोत्साहम्' इत्यादि त्वदुपदेशस्वीकृतौ स्वाच्छन्द्यम्, गार्हस्थ्य विहाय चतुर्थाश्रमस्वीकारस्वाधीनता वा, तिरस्करोति-प्रतिबध्नाति ।

भा०—इतोऽप्यह भवद्वचनेनाश्रमान्तर नैव स्वीकर्तुं शक्नोमि, यदेष वैरनिर्यातनभारो राज्ञा मय्येव निक्षिप्त इत्यवश्यकर्तव्य, किं च स्वजनेष्वेतत् प्रसिद्ध यदर्जुनो वैरनिर्यातनोद्देशेन तपस्तप्तु गत, तथा च स्वोद्देशत्यागे ममाकीर्ति स्यात्, सभावितस्य चाकीर्तिर्मरणादतिरिच्यते, अपि चाह मातुराज्ञा विना किमपि कार्यं न करोमि, न चेदानीमह तदाज्ञा ग्रहीतु शक्नोमि, तस्या दूरस्थितत्वात्, किं चाह ज्येष्ठभ्रातुराज्ञया तपसि प्रवृत्त, तदाज्ञोल्लङ्घने चाधर्म स्यात्, ज्येष्ठस्यापि दुर्वृत्तस्याज्ञोल्लङ्घितु शक्यते, न च मे ज्येष्ठो दुर्वृत्तः, अपि तु प्रशस्ताचार, प्रशस्ताचारस्यापि कदाचित् स्वार्थहानिपरिहाराय शक्यमुल्लङ्घनम्, पर न युधिष्ठिरस्य, कुत ? तस्य नृपतित्वाद्, धर्मिकस्य नृपतेर्विरोधोऽवश्यमनर्थमुत्पादयेत्-इति सर्वथा परतन्त्रोह नाश्रमान्तरस्वीकाराय प्रभवामि ।

अल०—विशेषणाना साभिप्रायत्वात् परिकर ।

**स्वधर्ममनुरुध्यन्ते नातिक्रममरातिभि ।**
**पलायन्ते कृतध्वसा नाहवान् मानशालिन ॥ ७८ ॥**

अ०—मानशालिन स्वधर्मम् अनुरुध्यन्ते अतिक्रमम् न (अनुरुध्यन्ते) अरातिभि कृतध्वसाः (सन्तः) आहवाद् न पलायन्ते ।

व्याक०—मानेन शालन्ते मानशालिन, शाङ्धातोर्णिनि, डलयोरभेदाल्लत्वम् । उपपदसमास । कृत ध्वसो येषा ते कृतध्वसाः, ध्वसेर्घञि ध्वस इति । अनुरुध्यन्ते-'अनो रुध कामे' इति दैवादिकात् कर्तरि लट्, प्रथमपुरुषबहुवचनम् । 'अनुरुन्धन्ते' इति क्वाचित्कोऽपपाठ. । रुधिर् धातोर्लटि झप्रत्यये "आत्मनेपदेष्वनत." इति झस्यादादेशे-अनुरुन्धते इत्येव रूपसिद्धेः ।

आहवात्-आङ्पूर्वाद् ह्वेञ् धातो 'आङि युद्धे" इत्यनेन अप्, सम्प्रसारणं च। अपादाने पञ्चमी। पलायन्ते-परापूर्वाद् अयतेर्लट्, प्रथमपुरुषबहुवचनम्, "उपसर्गस्यायतौ" इत्यनेन रेफस्य लत्वम्। अरातिभिः कृतेति क्तान्तस्य कर्तरि तृतीया।

व्याख्या—मानशालिनः-आत्माभिमानवन्तः, क्षत्रियाः स्वधर्मम्-शास्त्रविहित युद्धादिकं स्वकर्तव्यम्, अनुरुध्यन्ते-कामयन्ते-अनुवर्तन्ते, ( अनुरुन्धत इति वा पाठः, अर्थः स एव ) अतिक्रमम् स्वधर्मोल्लङ्घनम्, न अनुरुध्यन्ते। अत एव अरातिभिः-शत्रुभिः, कृतक्षमाः-कृतापकाराः, सन्तः, आहवात्-संग्रामात्, न पलायन्ते-न धावन्ति, संग्रामपराङ्मुखा न भवन्तीति यावत्।

भा०—मानिनः क्षत्रियाः सर्वथा स्वधर्ममनुवर्तन्ते, कदाचिदपि तदुल्लङ्घनं न कुर्वते, अत एव ते शत्रुभिः कृतापकाराः संग्रामात् पराङ्मुखा न भवन्ति, किन्तु तान् संग्रामे पराजित्य स्वापकारप्रतीकारेण स्वधर्मं पालयन्ति।

अल०—विशेषे प्रस्तुते सामान्याभिधानादप्रस्तुतप्रशंसा। उत्तरवाक्यार्थं पूर्ववाक्यार्थस्य हेतुत्वात् काव्यलिङ्गं च।

**विच्छिन्नाभ्रविलायं वा विलीये नगमूर्धनि।**

**आराध्य वा सहस्राक्षमयशःशल्यमुद्धरे ॥७६॥**

अ०—वा ( अहं ) नगमूर्धनि विच्छिन्नाभ्रविलायं विलीये, वा सहस्राक्षम् आराध्य अयशःशल्यम् उद्धरे।

व्याक०—नगस्य मूर्धनि नगमूर्धनि, न गच्छतीति नगः, 'अन्यत्रापि दृश्यते" इति गच्छतेर्डः, "नगोऽप्राणिष्वन्यतरस्याम्" इति नञः प्रकृतिभावः। विच्छिन्नम् अभ्रम् ( कर्म० ) इव विलीये विच्छिन्नाभ्रविलायम्-विच्छिन्नाभ्रोपपदाद् विपूर्वकलीधातोः "उपमाने कर्मणि च" इति णमुल्। "अमैवाव्ययेन" इत्यनेन समासः। "कृषादिषु यथाविध्यनुप्रयोगः", वर्तमानसमीपे भविष्यति लट्। सहस्रम् अक्षीणि यस्य तं सहस्राक्षम्। "बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्" षित्त्वाद् ङीष्। अयश एव शल्यम् अयशःशल्यम्। उद्धरे-उत्पूर्वाद् हरतेर्लट्। अहमितिविलयनोद्धरणयोः कर्तृपदमभ्याहार्यम्। वा शब्दो विकल्पे।

व्याख्या—वा-अथवा, अहम्, नगमूर्धनि-अस्मिन् पर्वतशिखरे, विच्छिन्नाभ्रविलायम्-विच्छिन्नम्-वाताघातेन विशीर्णम्, अभ्रमिव-मेघइव, विलीये-विलेष्ये-विलीनो भविष्यामि । वा, सहस्राक्षम्-इन्द्रम्, आराध्य-उपास्य, अयश शल्यम्-अकीर्तिरूप ( हृदये निखातम् ) बाणाग्रम्, उद्धरे-उद्धरिष्यामि । उभयोरेकतरमवश्य प्रतिपत्स्य इति तात्पर्यम् ।

भा०—किं च हे मुने ममाय दृढो निश्चय -यद् यथा मेघा वाताघातेन विशीर्णा भूत्वा विलय प्राप्नुवन्ति, तथैवात्र पर्वतेऽहमपि विलय प्राप्स्यामि, अथवा भगवन्तमिन्द्रमाराध्य तत्प्रसादेन शत्रुभिरस्माकं हृदये निखातमकीर्तिशल्यमुद्धरिष्यामि, एतदतिरिक्त नाह किमपि वाञ्छामि ।

अल०—विकल्पालङ्कार ।

**इत्युक्तवन्त परिरभ्य दोर्भ्यां तनूजमाविष्कृतदिव्यमूर्ति. ।**
**अघोपघात मघवा विभूत्यै भवोद्भवाराधनमादिदेश ॥८०॥**

अ०—मघवा इति उक्तवन्त तनूजम् आविष्कृतदिव्यमूर्ति. ( सन् ) दोर्भ्यां परिरभ्य विभूत्यै अघोपघात भवोद्भवाराधनम् आदिदेश ।

व्याक०—आविष्कृता दिव्या मूर्ति. येन स आविष्कृतदिव्यमूर्ति । अघानाम् उपघातम् अघोपघातम्, उपहन्यतेऽनेनेति उपघातम्, उपपूर्वाद् हन्तेर्घञ्, अघानि उपहन्ति इति " कर्मण्यण् " वा । भवस्य उद्भव , तस्य आराधनम्-भवोद्भवाराधनम् । आदेशनक्रियाया प्रधानकर्म । भवतीति भव., भवते पचाद्यच् । उद्भवत्यस्मादिति उत्पूर्वाद् भवते " ऋदोरप् " । आराधनमिति राधेर्ल्युडन्तम् । तन्वा जात तनूजम्-" पञ्चम्यामजातौ " इति अन्येष्वपि दृश्यते " इति वा ड । आदेशनक्रियाया अकथित कर्म । परिरभ्य-परिपूर्वाद् रभतेर्ल्यप् । विभूत्यै-विशिष्य भूयादिति भवतेः क्तिच् । अप्रयुज्यमानतुमुन्नन्तकर्मणि तादर्थ्ये वा चतुर्थी, विभूतिं प्राप्तुमित्यर्थ । आदिदेश-दिशे परोक्षे लिट्, प्रथमपुरुषैकवचनम् । दोर्भ्यामिति करणे तृतीया ।

व्याख्या—मघवा-इन्द्र, इति पूर्वोक्तम्, उक्तवन्तम्, तनूजम्-पुत्रम्-अर्जुनम्, आविष्कृता-प्रकटिता दिव्या-देवोचिता, मूर्ति -स्वरूपम्, येन तथोक्त सन्, स्वकीय वास्तव रूप प्रकटय्येति यावत्, दोर्भ्याम्-बाहुभ्याम्, परिरभ्य-

आश्लिष्य, विभूत्यै-ऐश्वर्याय, अघोपघातम्-कष्टविनाशनम्, भवोद्भवाराधनम्-भवः-संसारः, तस्योद्भवः-कारणं शिवः, तस्य आराधनम्-उपासनम्, आदिदेश-उपदिष्टवान् ।

भा०—एवं स्वसुतस्यार्जुनस्य वचनेन परमां प्रीतिमाप्त इन्द्रः स्वं दिव्यं रूपं प्रकटय्य भुजाभ्यां तमालिलिङ्ग । तदनु विभूतिप्राप्तये सर्वदुःखविनाशनं जगत्कारणस्य श्रीशङ्करस्याराधनमस्मा उपदिदेश ।

अल०—दोः परिरम्भेणानुभावेनेन्द्रस्यार्जुनविषयं वात्सल्यं व्यज्यते, तनूजमिति परिरम्भणे साभिप्रायम् । वृत्तमुपजातिः ।

प्रीते पिनाकिनि मया सह लोकपालै-
र्लोकत्रयेऽपि विहिताऽप्रतिवार्यवीर्यः ।
लक्ष्मीं समुत्सुकयितासि भृशं परेषा-
मुच्चार्य वाचमिति तेन तिरोबभूवे ॥ ८१ ॥

इति भारविकृतौ महाकाव्ये किरातार्जुनीये एकादशः सर्गः ।

अ०—पिनाकिनि प्रीते ( सति ) लोकपालैः सह मया लोकत्रये अपि विहिताप्रतिवार्यवीर्यः ( त्वम् ) परेषां लक्ष्मीं भृशं समुत्सुकयितासि इति वाचम् उच्चार्य तेन तिरोबभूवे ।

व्याक०—विहितम् अप्रतिवार्यं वीर्यं यस्य स विहिताप्रतिवार्यवीर्यः । न प्रतिवार्यमप्रतिवार्यम्, प्रतिपूर्वाद्वारयतेः "अचो यत्" । वीर्यं व्याख्यातम् । लोकान् पालयन्ति, ते लोकपालैः, पालयतेः कर्मण्यण्, सहयोगे तृतीया । पिनाको विद्यतेऽस्य तस्मिन् पिनाकिनि, पिनाकशब्दाद् "अत इनिठनौ" । प्रीते-प्रीङ् धातोः क्तः । सति सप्तमी । लोकत्रय इत्यत्र त्रय इति त्रिशब्दाद् अयच् । अधिकरणसप्तमी । समुत्सुकां कर्तासि समुत्सुकयितासि । समुत्सुकशब्दात् "तत्करोति तदाचष्टे" इति णिच् । ततो लुट्, मध्यमपुरुषैकवचनम् । त्वमिति तत्कर्ताध्याहार्यः। उच्चार्य-उत्पूर्वाच्चरतेर्णिजन्ताल्ल्यप् । तिरोबभूवे भवतेर्भावे लिट्, तेनेति तिरोभवनस्य, मया-विहितेति क्तान्तस्य कर्तरि तृतीया ।

व्याख्या—पिनाकिनि-अजगवाख्यधनुर्धारिणि महादेवे, प्रीते-प्रसन्ने सति, लोकपालैः-वरुणादिभिः सह, मया, लोकत्रये-भुवनत्रयेऽपि, विहितम्-कृतम्,

अप्रतिवार्यम्-दुर्निवारम्, वीर्यम् पराक्रम, यस्य तथाभूत, त्वम्, परेषाम्-शत्रूणाम्, लक्ष्मीम्-श्रियम्, भृशम्-अत्यर्थम्, समुत्सुकयितासि-स्वस्मिन्ननुरक्ता कर्तासि, पुन प्राप्स्यसीति यावत्, इति, वाचम्-वाणीम्, उच्चार्य-कथयित्वा, तेन-इन्द्रेण, तिरोबभूवे-अन्तर्दधे-अन्तर्हितम् ।

भा०—हे अर्जुन ! तपसा प्रसादितो भगवान् शङ्कर, अह लोकपालाश्च तुभ्य तथाविधा शक्ति वितरिष्याम, या त्रिलोक्या कश्चिदप्यतिक्रमितु न शक्नुयात् । तयैव च त्व सग्रामे शत्रून् पराजित्य शत्रूणा राजलक्ष्मीम् आत्मसात् करिष्यसि । इत्युक्त्वेन्द्रस्तिरोबभूव । अत्र 'समुत्सुकयितासि' इति पदेन यथा परकीयाऽपि काचन नायिका गुणवति नायकान्तरे स्वयमेवानुरज्यति तमभिसर्तुं यतते च, तथैव तथाविध शक्तिमन्त त्वामप्यवलोक्य परेषा राजलक्ष्मीरुत्कण्ठिता भविष्यति, तदधिगतये त्वया न कश्चन यत्नः कर्तव्यो भविष्यति । स्वयमेव सा त्वामुपैष्यति, यतः सम्पदो वीरभोग्या, वीरमेवाश्रयन्ते, इति व्यञ्जितम् । किं च पिनाकीति पदम्-'तपोमात्रेण भगवत शङ्करस्य सन्तोषो न स्यात् त्वया तेन सह योद्धव्यमपि, पिनाकधारिणो वीरस्य वीरकर्मणैव सन्तोषोदयात्' इति किरातरूपस्य शिवस्यार्जुनेन भविष्यद् युद्धमभिव्यनक्ति ।

अल०—लक्ष्म्या नायिकाव्यवहारसमारोपात् समासोक्तिः, पिनाकीतिपदस्य साभिप्रायत्वात् परिकराङ्कुरः, वार्यवीर्येति च्छेकानुप्रासः । वसन्ततिलकावृत्तम्, लक्ष्म्यद्भुतानुगतये लक्ष्मीपदम् ।

इति महाकाव्यसङ्ग्रहस्य च्छात्रोपकारिण्या व्याख्याया सप्तम सर्गः ।



श्री

# महाकाव्य-संग्रहः ।

## ( संग्रहे-अष्टमः सर्गः )

### महाकविमाघकृते

# शिशुपालवधमहाकाव्ये

### प्रथमः सर्गः ।

श्रियः पति श्रीमति शासितु जगज्जगन्निवासो वसुदेवसद्मनि ।
वसन् ददर्शावतरन्तमम्बराद्धिरण्यगर्भाङ्गभुव मुनि हरि. ॥१॥

अ०—श्रिय पति जगन्निवास. जगत् शासितुम् श्रीमति वसुदेवसद्मनि वसन् हरि अम्बराद् अवतरन्तम् हिरण्यगर्भाङ्गभुवम् मुनिम् ददर्श ।

व्याक०—जगता निवास जगन्निवास., निवास.-निवसन्त्यस्मिन्निति निवसते "हलश्च" इत्यधिकरणे घञ् । वसुदेवस्य सद्मनि वसुदेवसद्मनि । *हिरण्यस्य गर्भ. हिरण्यगर्भ., तस्य अङ्गाद् ( ष० त० ) भवतीति हिरण्यगर्भाङ्गभू, तम् । भवते क्विप्, उपपदसमास । श्रिधातो 'क्विब्वचिप्रच्छि-" इत्यादिना क्विपि दीर्घे च श्री. । शासितुम्—शास्ते "तुमुन्ण्वुलौ क्रियाया क्रियार्थायाम्" इत्यनेन तुमुन । श्री अस्य अस्तीति तस्मिन् श्रीमति, श्रीशब्दात् प्राशस्त्ये मतुप् । वसन् ददर्श—"धातुसम्बन्धे प्रत्ययाः" इत्यनेन वसतेर्भूते लट्, तस्य लक्षणेऽर्थे "लक्षणहेत्वो. क्रियायाः" इति शत्रादेश । अतीतवासकर्तृ-कर्तृक दर्शनमर्थ इति भट्टोजिदीक्षित. । दर्शन-

---

* हिरण्यस्य–हिरण्मयाण्डस्य । 'तदण्डमभवद्धैम सहस्रांशुसमप्रभम् । तस्मिन् जज्ञे स्वय ब्रह्मा सर्वलोकपितामह ' इति मनुना ब्रह्मणो हिरण्मयेऽण्डे जन्मोक्तमिति ।

समानकालिकत्वेन दर्शनापेक्षया वर्तमानत्वमादाय लट्, अयमेव "धातुसम्बन्धे प्रत्ययाः" इति सूत्रस्याशयः, दर्शन-समानकालिको वास इत्यर्थ इति परे। तथैवावतरन्तमित्यत्रापि लट्, तस्याप्रथमासामानाधिकरण्ये शत्रादेशः। अम्बराद्-अपादाने पञ्चमी।

व्याख्या—श्रियः-लक्ष्म्याः, पतिः-स्वामी, जगताम्-भुवनानाम्, निवासः-आधारभूतः, जगद्-लोकम्, शासितुम्-निग्रहानुग्रहाभ्यां नियन्तुम्, श्रीमति-शोभायुते, * रुक्मिणीरूपेण विराजमानया श्रिया-लक्ष्म्या युते इति वा, वसुदेवस्य, सद्मनि-गृहे, वसन्-कृष्णरूपेण निवासं कुर्वन्, हरिः-विष्णुः, अम्बराद्-आकाशाद्, अवतरन्तम्-नीचैरायान्तम्, हिरण्यगर्भः-ब्रह्मा, तस्य अङ्गाद्-अवयवाद्-उत्सङ्गाद्, † भवति-उत्पद्यत इति तथाभूतम्, (अङ्गभू-शब्दस्य पुत्रवाचकत्वाद् ब्रह्मपुत्रम्-इत्येव वा) मुनिम्-नारदम्, ददर्श-आलोकयामास।

भा०—अस्मिन् महाकाव्ये शिशुपालस्य राज्ञः कृष्णकृतो वधो वर्णनीयः, अत एव प्रतिपाद्यप्रतिपादकयोरभेदोपचारात् 'शिशुपालवधम्' इति काव्यस्य नाम। तद्भूमिकारूपेण 'शिशुपालो हन्तव्यः' इतीन्द्रस्य संदेशं निवेदयितुं भगवतो नारदस्य कृष्णसमीपं आगमनं वर्ण्यते। भूभारहरणाय पृथिव्या देवैश्च प्रार्थितो भगवान्नारायणः स्वयं कृष्णरूपेण प्रादुर्बभूव, स स्वकार्यं दुष्टानां दमनं शिष्टानां पालनं च क्रमेण कुर्वन् पितृत्वेन स्वीकृतस्य दत्तपूर्ववरस्य कश्यपावतारस्य वसुदेवस्य गृहे निवसति स्म। यद्यपि नारायणोऽयं विभुः, अस्यैव कुक्षौ सर्वाणि भुवनानि कल्पान्ते निवसन्ति, तथापि स्वेच्छया स्वीकृतविग्रहस्य तस्य कस्मिंश्चिद् गृहे निवास उपपन्न एव। तत्रैव रुक्मिणीरूपेण प्रादुर्भूय लक्ष्मीरपि विराजते, श्रियः पत्युः श्रियमन्तरेणावस्थानस्यायोग्यत्वात्, पतिव्रताशिरोमणेर्भगवत्याः श्रियः पतिं विरहय्य

---

* 'राघवत्वेऽभवत्सीता रुक्मिणी कृष्णजन्मनि' इति विष्णुपुराणाद् रुक्मिणी लक्ष्म्या अवतार इति गम्यते।

† 'उत्सङ्गान्नारदो जज्ञे दक्षोऽङ्गुष्ठात् स्वयंभुवः' इति श्रीमद्भागवतोक्तिरत्र प्रमाणम्।

स्थितेरसम्भवाच्च । यत्र साक्षाच्छ्रीर्निवसति, किमु वक्तव्यं तस्य भुवनस्य शोभाविषये । तेनानेन भगवता कृष्णेन सभायां तिष्ठता कदाचिद् दृष्टम्-यत् स्वर्गाद्भगवान्नारदो महर्षिराकाशमार्गेणागच्छतीति ।

अल०—जगन्निवासस्य महीयसो भगवतोऽल्पीयसि गृहरूप आधारे स्थितिकथनाद् * अधिको नाम अलङ्कारः । जगन्निवासस्य जगदेकदेशनिवासित्वमिति विरोधश्च । 'पति श्रीमति' 'वसुदेवसद्मनि वसन्' 'तरन्तमम्बराद्धिरण्य' इत्यादौ तकारसकाररेफादेरावृत्त्या वृत्त्यनुप्रासः, जगज्जगदित्यपि वृत्त्यनुप्रास इति मल्लिनाथः । लाटानुप्रास इति तु युक्तं भाति । 'पति श्रीमति' इति च्छेकानुप्रासोऽपि । एषां सर्वेषामलङ्काराणां परस्परमयन्वाभावात् संसृष्टिः । आदौ श्रीशब्दोपादानं मङ्गलाय, भगवतः श्रीकृष्णस्य ब्रह्मपुत्रनारददर्शनरूपमङ्गलवस्तूपन्यासोऽपि वस्तुनिर्देशात्मकं मङ्गलमिति मल्लिनाथः । आदौ श्रीशब्दोपादानादेव वर्णगणादिशुद्धौ नात्यादरः । तदुक्तम्-'देवतावाचकाः शब्दा ये च भद्रादिवाचकाः । ते सर्वे नैव निन्द्याः स्युर्लिपितो गणतोऽपि वा' । † वंशस्थं वृत्तम् ।

**गतं तिरश्चीनमनूरुसारथेः प्रसिद्धमूर्ध्वज्वलनं हविर्भुजः ।**
**पतत्यधो धाम विसारि सर्वतः किमेतदित्याकुलमीक्षितं जनैः ॥२॥**

अ०—अनूरुसारथेः गतम् तिरश्चीनम् ( अस्ति ) हविर्भुजः ऊर्ध्वज्वलनम् प्रसिद्धम् ( अस्ति ), सर्वतः विसारि पतत् किं धाम अधः पतति—इति जनैः ( तदा ) आकुलम् ईक्षितम् ।

व्याक०—अविद्यमानौ ऊरू यस्य सः अनूरुः, सः सारथिः यस्य तस्य अनूरुसारथेः, बहुव्रीहिपूर्वपदो बहुव्रीहिः । हवींषि भुङ्क्ते इति तस्य हविर्भुजः, भुजेः क्विप्, उपपदसमासः । ऊर्ध्वं ज्वलनम् ऊर्ध्वज्वलनम् । "सह सुपा" इति केवलसमासः, ऊर्ध्वमिति क्रियाविशेषणम् । गतम् गच्छतेः "नपुंसके भावे क्तः", तिरश्चीनम्-तिरस्पूर्वाद् अञ्चत्यन्तात् प्रातिपदिकाद्—"विभाषाऽञ्चेरदिक्स्त्रियाम्" इत्यनेन स्वार्थे खस्तद्धितः, खस्य ईनादेशः । सर्वतः-

* 'आधाराधेययोरानुरूप्याभावोऽधिको मतः' ।

† 'जतौ तु वंशस्थमुदीरितं जरौ' ।

सर्वशब्दात् तसिल् । विसारि-विपूर्वात् सरतेस्ताच्छील्ये णिनि, धामविशेषणम्, क्लीबे सोर्लुका लुप्तत्वेन "सौ च" इति दीर्घो न । ईक्षितम्-ईक्षते कर्मणोऽविवक्षयाऽकर्मकत्वाद् भावे क्त, अथवा कर्मणि क्त, जनैरिति ईक्षणकर्तृपदम् । आकुलम्-इति ईक्षणक्रियाविशेषणम् ।

व्याख्या—†अनूरु -अरुण, सारथिः-सूत -रथचालक, यस्य तथोक्तस्य सूर्यस्य, गतम्-गमनम्, तिरश्चीनम्-तिर्यग्भूतम्, अस्ति। हविर्भुजः-अग्ने, ऊर्ध्वज्वलनम्, ऊर्ध्वादिशि स्फुरणम्-दीपनम्, प्रसिद्धम्-सर्वलोकाविदितम्, अस्ति किन्तु सर्वत -सर्वासु दिक्षु, विसारि -प्रसरणशीलम्, एतद्-दृश्यमानम्, सूर्याग्निविलक्षणम्, किम्, ‡धाम-कान्ति -तेज, अध -नीचैः, पतति-आयाति, इति तदा नारदागमनकाले, जनैः-लोकै, आकुलम्-विस्मयात् सम्भ्रान्त यथा स्यात्तथा, ईक्षितम्-दर्शनम्-आलोकनम्, कृतम्। अथवा एवरूपेण साश्चर्यं जनैः ईक्षितम्-दृष्टम्, मुनिं ददर्शेति पूर्वेणान्वय । अस्मात्पद्यात् पूर्वम् 'द्विधाकृतात्मा किमय दिवाकरो विधूमरोचि किमय हुताशनः।' इति चरणद्वय योजयित्वा षट्पदमिद छन्द इति वृत्तरत्नाकरटीकाया दिवाकरेणोक्तम् । तत्रायमर्थ -किम्, अयम्-दृश्यमान, द्विधाकृत आत्मा-स्वरूप येन तथाभूत, दिवाकरः-सूर्य, अस्ति, वा विगतो धूमो यस्य तथाभूत रोचि -दीप्ति -यस्य, तथाभूत, हुताशन·-अग्निरस्ति, इति संशयमुत्थाप्य पद्य पूर्वोक्तरीत्या योज्यम्। पदद्वयस्याभावे तु व्यन्वयः संशय ।

भाव०—तेज पुञ्ज नारदमाकाशादवतरन्तं दृष्ट्वा तेजसाभिभवाद् दूरस्थतया चाकृते प्रत्यभिज्ञाभावाज्जनाना मनस्येव संशय उदभूद्-यत् किमिद तेज ? किं सूर्य एकेन रूपेण दिवि तपन्नपि रूपान्तर धृत्वा इहागच्छति, वा धूम परित्यज्य प्रज्वलन्नग्निरायाति ? ततस्तैर्विचिन्तिम्-सूर्यो हि तिर्यग्गच्छति, (अनूरुसारथेरिति पदेन तस्याग्रे अरुणप्रकाशोऽपि भवति, अत्र तु न तथेत्यपि

---

* धातोरर्थान्तरे वृत्ते धात्वर्थेनोपसंग्रहात् । प्रसिद्धेरविवक्षात कर्मणोऽकर्मिका क्रिया ।

† सूर्यसूतोऽरुणोऽनूरुः इत्यमर ।

‡ धाम रश्मौ गृहे देहे स्थाने जन्मप्रभावयो, इति हेमचन्द्र । गृहदेहत्विट् प्रभावा धामानि इत्यमर ।

द्योतितम्) अग्निश्च ऊर्ध्वज्वाल, (किं च स हविर्भुक्, हवींषि इन्धनानि विना न ज्वलति, अत्र तु नेन्धनं किमपि) इदं तु तेजः ऊर्ध्वाद्देशादध आयाति, सर्वतः प्रसरणशीलं च (प्रसरणशीलोक्त्या कदाचिदुल्का स्यादिति संशयोऽपि निरस्तः)। तस्मान्न सूर्य, नापि अग्नि, ततश्च किमिदमिति विचिन्तयन्तो निर्धारणाभावात्ते विस्मयस्तिमिता बभूवुः।

अल०—ससंदेहालंकार । भेदकोक्तौ निश्चयगर्भस्यापि तस्यालंकारिकैः स्वीकृतत्वात् । स च पूर्वपादद्वयनिबन्धने वाच्य, तदनिबन्धने तु व्यङ्ग्य । मल्लिनाथसूरिस्तु सूर्याग्न्यपेक्षया विलक्षणत्ववर्णनाद् व्यतिरेकमाह । सोऽपि व्यङ्ग्य एव संभवति ।

**चयस्त्विषामित्यवधारितं पुरा ततः शरीरीति विभाविताकृतिम् ।**
**विभुर्विभक्तावयवं पुमानिति क्रमादमुं नारद इत्यबोधि सः ॥३॥**

अ०—विभु स. पुरा त्विषाम् चय इत्यवधारितम् ततः विभाविताकृतिम् शरीरी इति (अवधारितम्) विभक्तावयवम् पुमान् इति (अवधारितम्) अमुम् क्रमाद् नारदः इति अबोधि ।

व्याक०—विभाविता आकृतिः यस्य तं विभाविताकृतिम्, विभावितशब्दे णिजन्ताद् भावयते क्त । आकृतिरिति कर्मणि क्तिन्नन्तम् । विभक्ता अवयवा यस्य तं विभक्तावयवम् । विभु -भवते "विप्रसंभ्यो ड्वसंज्ञायाम्" इति डु । त्विषाम्-त्विष्धातोः क्विपि रूपम् । अवधारितम्-धारयते कर्मणि क्त । शरीरी-"अत इनिठनौ" इति शरीरशब्दादिनि । अबोधि-बुध्यते. कर्तरि लुङ्, "दीप जनबुध . " इत्यनेन च्लेश्चिण्, "चिणो लुक्" इति तशब्दस्य लुक् । नारद इतीत्यत्र इति शब्देन निपातेन कर्मण उक्तत्वात् प्रथमा, तदुक्तं वामनेन "निपातेनाभिहिते कर्मणि न कर्मविभक्तिः" इति मल्लिनाथ । वस्तुतस्तु नारद इतीति श्रीकृष्णज्ञानाकारस्यानुकरणम्, तेन नारद इत्यत्र प्रातिपदिकार्थमात्रे प्रथमा, तस्य कर्मत्वाभावात् । इतिशब्दोपस्थाप्याकार एव कर्मेति । एवमेव चय, शरीरी, पुमान्-इत्यत्राप्यनुकरणेषु प्रथमा । अन्यथा विभावितमिति द्वितीयान्तेन सामानाधिकरण्याद् द्वितीया तत्र दुर्वारा स्यादिति नागेशानुयायिना पन्थाः। क्रमाद् ल्यब्लोपे पञ्चमी, क्रममाश्रित्येत्यर्थ । अथवा क्रमस्य

विशेषज्ञाने हेतुत्वाद् हेतौ पञ्चमी ।

व्याख्या—विभु -सर्वान्तर्याम्यपि, ( वस्तुतत्त्वावधारणसमर्थोऽपि-इति मल्लिनाथः ) स -हरि , पुरा-पूर्वम्, त्विषाम्-तेजसाम् , चयः-समूह , इति-एवरूपेण, अवधारितम्, निश्चितम्, तत -किंचित्सन्निधाने, विभाविता-विशेषेण ज्ञाता, आकृति -अवयवसन्निवेश , यस्य तम्, ( अत एव ) शरीरी-शरीरधारी, इति अवधारितम्, ततश्च, विभक्ता -पार्थक्येन गृहीता , अवयवा -मुखपाणिपादादयो यस्य तथोक्तम्, ( अत एव ) पुमान्-पुरुषोऽयमिति, अवधारितम्, अमुम्-आकाशादवतरन्त व्यक्तिविशेषम्, क्रमाद्-पूर्वोक्तसामान्य-विशेषज्ञानक्रमेण, नारद.-इति अबोधि-अथ नारद इति विशिष्य बुबुधे ।

भा०—भगवानपि पूर्वं दूरान्नारद दृष्ट्वा तेज पुञ्ज-इत्येवाजानात्, तत क्रमेण सन्निहिते तस्मिन्, अवयवसन्निवेशे दृष्टिं गते कश्चित् शरीरधारीति बुध्यते स्म । ततोऽपि सन्निधाने विशेषेणावयवेषु दृष्टेषु पुरुष इति ज्ञातम् । अतिसन्निधाने च नारद इति स्पष्ट बुद्धम् । सर्वज्ञेऽपि भगवति लोकदृष्ट्यायमुपन्यास इति मल्लिनाथ । यद्वा विभुरप्येव क्रमेण ज्ञातु शक्तोऽभूदिति नारदस्य तेजोऽतिशयनिबन्धन माहात्म्य व्यक्तीकृतम् ।

अल०—तत्तज्ज्ञाने 'विभाविताकृतिम्' 'विभक्तावयवम्' इति हेतूपन्यासात् *काव्यलिङ्गम् । क्रमेणावधारणोक्त्या पूर्वं भगवद्गत सशयो व्यङ्ग्य ।

**नवानधोऽधो बृहत पयोधरान् समूढकर्पूरपरागपाण्डुरम् ।**
**क्षण क्षणोत्क्षिप्तगजेन्द्रकृत्तिना स्फुटोपम भूतिसितेन शम्भुना ॥४॥**

अ०—नवान् बृहत पयोधरान् अधोऽध ( स्थितम् ) समूढकर्पूरपरागपाण्डुरम् ( अत एव ) क्षणम् क्षणोत्क्षिप्तगजेन्द्रकृत्तिना भूतिसितेन शम्भुना स्फुटोपमम् ( अमुम् अबोधि ) ।

व्याक०—समूढ कर्पूरस्य पराग इव ( ष० त०, कर्म० ) पाण्डुर ( उपमान० ), तम् समूढकर्पूरपरागपाण्डुरम् । समूढशब्दे वहते क्त । पाण्डुरशब्दे पाण्डुशब्दाद् "नगपांसुपाण्डुभ्यश्च" इति मत्वर्थीयो र । क्षणेषु उत्क्षिप्ता ( त० ) गजेन्द्रस्य कृत्ति ( त० ) येन ( बहु ) तेन क्षणोत्क्षिप्त-

---

* हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम् ।

गजेन्द्रकृत्तिना । उत्क्षिप्ता क्षिपते कर्मणि क्त, कृत्ति -कृत्यते इति कृन्तते कर्मणि क्तिन् । भूत्या सितेन भूतिसितेन । भूति -भवते. करणे क्तिन् । करणतृतीयान्तस्य क्तान्तेन समास । स्फुटा उपमा यस्य त स्फुटोपमम । स्फुटा-स्फुटते.-"इगुपधज्ञाप्रीकिर. क", उपमा-उपपूर्वात् माधातोः "आत-श्चोपसर्गे" इत्यङ् । अधोऽध -"उपर्यध्यधस सामीप्ये" इत्यनेन द्वित्वम्, तद्योगे पयोधरान्-इत्यत्र "उभसर्वतसो कार्या धिगुपर्यादिषु त्रिषु द्वितीया" इत्यादिना द्वितीया । क्षणम- कालाध्वनो " इत्यादिना द्वितीया । शम्भुना-"सह युक्तेऽप्रधाने" इत्यनेन सहार्थयोगे तृतीया, शम्भुना सह स्फुटोपममि-त्यर्थः । "तुल्यार्थे " इत्यनेन तु न तृतीया, "अतुलोपमाभ्याम्" इति निषेधात् । मल्लिनाथस्तु-सदृशवाचिन एवोपमाशब्दस्य "अतुलोपमाभ्याम्" इत्यनेन पर्युदासात् इह सादृश्यवाचिन उपमाशब्दस्य योगे तृतीया निर्बाधैवेत्याह । तृतीयाया उपमाशब्देनान्वये उपमाया सापेक्षत्वेऽपि गमकत्वात्समास इत्यपि तेनैवोक्तम् ।

व्याख्या—नवान्-नूतनान्-जलसम्भृतान् अतिनीलान्, बृहत -विपुलान् पयोधरान्-मेघान्, अधोऽध -मेघाना समीपाध.प्रदेशे स्थितम्, समूढः-पुञ्जीभूतः, य † कर्पूरस्य, पराग -चूर्णम्, तद्वत् पाण्डुरम्-श्वेतवर्णम्, अत एव क्षणम्-मेघाध प्रदेशावस्थानक्षणे, ‡ क्षणेषु ताण्डवनृत्योत्सवेषु, उत्क्षिप्ता-उपरिधारिता, गजेन्द्रस्य-करिराजस्य, § कृत्ति.-चर्म, येन तादृशेन, $ भूत्या-भस्मना, सितेन-श्वेतवर्णेन, शम्भुना-महादेवेन सह, स्फुटा, उपमा-सादृश्यम्, यस्य तथोक्तम् । इत आरभ्य नारदवर्णनपराणा समाना श्लोकाना पूर्वपद्येन सहैक एवान्वय , विभज्य व्याख्याने तु असु नारद इत्यबोधीति सर्वत्र योज्यम् ।

---

* ' समूढ पुञ्जिते भुग्न ' इति विश्व ।

† ' घनसारस्तु कर्पूरे दक्षिणावर्तपारदे ' इति हैम ।

‡ निर्व्यापारस्थितौ कालविशेषोत्सवयो। क्षण इत्यमर ।

§ अजिन चर्म कृत्ति स्त्री—इत्यमरः ।

$ भूतिर्भस्मनि सम्पदि-इत्यमर ।

भावार्थ —आकाशादवतरन् नारदो यदा सजलानां महतां नीलवर्णानां मेघानामध प्रदेशे आजगाम, तदा तस्य तथा कान्तिरभवद्, यथा ताण्डव-नृत्यसमये गजेन्द्रचर्म स्वोपरि वितन्वत श्रीशिवस्य भवति। श्यामेन वर्णेन गजेन्द्रचर्मणा मेघानां सादृश्यम्, श्रीशिव श्वेतरूप, विभूत्या चाधिक श्वेतो भवति, नारदोऽपि स्वयमेव कर्पूरसदृश स्वच्छश्वेतवर्ण इति । नवान् इति सजलत्व मेघानां बोधितम्, बृहत इति निविडत्वम् ।

अल०—शिवेन सहोपमा मुख्या । कर्पूरोपमा तु तदङ्गम् । पूर्वार्धे धका-रस्य रेफस्य चानुप्रास, उत्तरार्द्धे क्षण क्षणोति यमकम् । क्षणोत्विसे-त्यनुप्रासोऽपि ।

**दधानमम्भोरुहकेसरद्युतीर्जटा शरच्चन्द्रमरीचिरोचिषम् ।**
**विपाकपिङ्गास्तुहिनस्थलीरुहो धराधरेन्द्र व्रततीततीरिव ॥ ५ ॥**

अ०—अम्भोरुहकेसरद्युती जटा दधानम्, शरच्चन्द्रमरीचिरोचिषम्, विपाकपिङ्गा तुहिनस्थलीरुह व्रततीतती (दधानम्) धराधरेन्द्रमिव ।

व्याक०—रोहतीति रुहम्, इगुपधत्वात् कः, अम्भसि रुहम् अम्भो-रुहम्, तस्य केसरस्य (ष० त०) द्युतिरिव द्युति यासां ता अम्भोरुहकेसर-द्युती, मध्यमपदलोपी बहुव्रीहि । केसर इव द्युतिरिति वा। केसरपद केसर-द्युतौ लाक्षणिकम्। द्वितीयाबहुवचनान्त ' जटा ' इत्यस्य विशेषणम्। शरदि शरदो वा चन्द्रस्य (तत्पु० ) मरीचिरिव रोचि यस्य तम् शरच्चन्द्रमरीचि-रोचिषम्, पूर्वपद पूर्ववद् लाक्षणिकम् । विपाकेन पिङ्गा, विपाकपिङ्गा, तुहि-नस्य स्थाल्या (तत्पु० ) रोहन्ति-इति तुहिनस्थलीरुह, कर्तरि क्विप्, उप-पदसमास । द्वितीयाबहुवचनम्। स्थलीशब्दे " जानपदकुण्डगोणस्थल " इत्यादिना ङीष्। व्रततीनां तती व्रततीतती, व्रतती इत्यत्र व्रततिशब्दात् " कृदिकारादक्तिन " इति वा ङीष्। ततिशब्दे तनोतेः क्तिन्। धराया धरा, धराधरा, पचाद्यच्। तेषामिन्द्र धराधरेन्द्र । दधानम् दधाते शानच्। जटा इति व्रततीततीरिति च धानक्रियाकर्मणि द्वितीया। मरीचिरोचिषमिति कर्मणो नारदस्य विशेषणम्, धराधरेन्द्रमिति तदुपमानम् ।

एणाजिनविशेषण द्वितीयान्तम् । सुवर्णस्य सूत्रेण (प० तत्पु०) आकलितम् (तत्पु०) अधरम् अम्बर यस्याम् (वहु०) ता सुवर्णसूत्राकलिताधराम्बराम् । आकलितशब्दे-आङ्पूर्वात् कलयते क्तः । शिति वासो यस्य स शितिवासा, तस्य शितिवासस । विडम्बयन्तम्-विडम्बयते शतृप्रत्यय । वसानम्-'वस् आच्छादने' धातो शानच् । एणाजिनमिति तत्कर्म । अन्यानि द्वितीयान्तानि पूर्वार्द्धे नारदविशेषणानि, उत्तरार्द्धे तनुमिति विडम्बयते कर्म, विडम्बयन्तामिति नारदविशेषणम् ।

व्याख्या—पिशङ्गी-पीतवर्णा, या मौञ्जी-मुञ्जतृणनिर्मिता मेखला, तद्युजम्-तद्युक्तम्, तया नद्धकटिप्रदेशम्, •अर्जुना-धवला, छवि -कान्ति , यस्य तादृशम्, (विशेषणमिदमुपमाने वलभद्रेऽपि योज्यम्) अञ्जनद्युति-कज्जलकान्ति कृष्णवर्णम्, एणस्य-मृगस्य, अजिनम्-चर्म, वसानम्-धारयन्तम्, मृगचर्मणा आच्छन्नम्, अत एव सुवर्णसूत्रै-स्वर्णमेखलया, आकलितम्-वद्धम्, अधराम्बरम्-अन्तरीयकम्-अधोवस्त्रम्, यस्या तथाभूताम्, शितिवासस नीलाम्बरस्य-वलभद्रस्य, तनुम्-शरीरम्, विडम्बयन्तम्-स्वशोभया तिरस्कुर्वन्तम्-तत्सदृशकान्तिम्, (नारदमद्राक्षीत्)

भा०—नारदेनाध परिहितस्य वस्त्रस्योपरि मौञ्जी मेखला निवद्धा, कृष्णमृगचर्म च उत्तरीयरूपेण धृतम्, स्वय च नारद शुभ्रवर्णः, तेन स भगवत कृष्णस्य ज्येष्ठ भ्रातर वलभद्रमनुकरोति स्म । वलभद्रोऽपि 'शुभ्रवर्ण' अध परिहितस्य वस्त्रस्योपरि सुवर्णमेखला धारयति स्म, नील चोतरीयं धत्ते स्म । तदत्र सुवर्णमेखलायाः मौञ्ज्याश्च पीतवर्णेन सादृश्याद् विम्बप्रतिविम्बभाव । नीलाम्बर-कृष्णमृगचर्मणोश्चापि सादृश्यात्तथैवेति वलभद्रनारदयो सादृश्यमुपपन्नम् ।

अल०—आर्थी पूर्णोपमा । वलभद्रसादृश्याख्यानेन कृष्णस्य विशेषेण समर्हणीयता द्योतिता ।

विहङ्गराजाङ्गरुहैरिवायतैर्हिरण्मयोर्वीरुहवल्लितन्तुभि ।
कृतोपवीत हिमशुभ्रमुच्चकैर्घन घनान्ते तडिता गणैरिव ॥ ७ ॥

---

• वलक्षो धवलोऽर्जुन —इत्यमर ।

अ०—विहङ्गराजाङ्गरुहैरिव आयतै हिरण्मयोर्वीरुहवल्लितन्तुभि कृतोपवीत हिमशुभ्र घनान्ते तडिता गणे (उपलक्षितम्) उच्चकै घनमिव (स्थितम्)

व्याक०—विहङ्गाना राज्ञ (ष० त०) अङ्गे (ष० त०) रुहे (तत्पु०) विहङ्गराजाङ्गरुहे, राजान्ततत्पुरुषे टच् । विहङ्गेति विहाय.पूर्वाद् गम् धातो "गमे सुपि वाच्य" इत्यनेन खच्. "विहायसो विह इति वाच्यम्" इत्यनेन विहादेश., 'खच डिद् वा वाच्यः" इति डित्त्वपक्षे टिलोप । 'खित्यनव्ययस्य" इति पूर्वपदस्य मुमागम । रुहेति रोहते इगुपधत्वात् क । ततस्तृतीयान्तस्य "इवेन समासो विभक्त्यलोपश्च" । हिरण्यमय्याम् उर्व्याम् (कर्म०) रुहाणा (तत्पु०) वल्लीना (कर्म०) तन्तुभि (ष० त०) हिरण्मयोर्वीरुहवल्लितन्तुभि । हिरण्मयेति हिरण्यशब्दाद् विकारार्थे मयटि "दाण्डिनायनहास्तिनायन" इत्यादिना यलोपनिपात । मयटष्टित्त्वाद् ङीपि, 'पुंवत् कर्मधारय" इति पुंवद्भाव । वल्लिशब्दोऽत्र ह्रस्वान्त, वल्लीनामिति षष्ठी जन्यजनकभावसवन्धे, व्याख्यान्तरे तु अवयवावयविभावसम्बन्धे । कृतम् उपवीत येन त कृतोपवीतम् । उपवीतशब्दे 'उप' 'वि' एतत्पूर्वात् इण् धातो क्त । हिममिव शुभ्रम् हिमशुभ्रम् । "उपमानानि सामान्यवचनै." इत्यनेन समास. । घनशब्दे "मूर्तौ घन" इति हन्तेरप्प्रत्यय घनादेशश्च । उच्चकै -उच्चैरित्यव्ययाद् "अव्ययसर्वनाम्नामकच् प्राक् टे" इत्यनेनाकच् ।

व्याख्या—विहङ्गराजस्य-पक्षिराजस्य-गरुडस्य अङ्गरुहैरिव लोमभिरिव, आयतै -दीर्घै, हिरण्मय्याम्-स्वर्णमय्याम्, उर्व्याम्-पृथिव्याम्, रुहाणाम्-उत्पन्नानाम्, वल्लीनाम्-लतानाम्, तन्तुभि, तादृशलतासूत्पन्नै सूक्ष्मावयवै सूत्रैः कृतम्-विहितम्, उपवीतम्-यज्ञसूत्र येन तथोक्तम्, हिमशुभ्रम्-हिमवत्-तुषारवत्, शुभ्रम्-श्वेतवर्णम्, (उपमाने घनेऽपि विशेषणमिद योज्यम्) अतएव घनानाम्-मेघानाम्-(लक्षणया) घनसम्बन्धिकालस्य वर्षर्तोः, अन्ते-अवसाने-शरदीति यावत्, *तडिताम्-विद्युताम्, गणे -समूहे, उपलक्षितम्, उच्चकै -उन्नतम्, घनमिव-मेघमिव, स्थितम्, नारदमबोधीति ।

---

* 'तडित् सौदामनी विद्युत्' इत्यमर. ।

भावार्थ —नारदेन पीतं यज्ञोपवीतं धृतम्, तच्च कुतः पीतमित्यत्रोच्यते, सुमेरुप्रान्ते सुवर्णमय्या देवभूमौ याः कार्पास्यो लता उत्पद्यन्ते-ता अपि कारणगुणानुसरणात्सुवर्णमय्य, तासूत्पन्नस्य, कर्पासस्य तन्तवोऽपि तथैव सुवर्णमया -इति तन्निर्मितस्य यज्ञोपवीतस्य युज्यते एव पीतत्वम् । गरुडलोमानीवायताश्च यज्ञोपवीततन्तव । केचित्तु दीर्घलतावयवभूतैर्लतातन्तुभिरेव शोभार्थमपरं यज्ञोपवीतं निर्माय नारदेन धृतमिति व्याचक्षते । ततश्च तेन यज्ञोपवीतेन शुभ्रस्य नारदस्य तथा च्छविर्दृश्यते स्म, यथा शरत्काले शुभ्रस्य मेघस्य विद्युद्गणैर्दृश्यते ।

अल०—पूर्णोपमा । विद्युद्गणस्य सुवर्णसूत्रयज्ञोपवीतस्य च विम्बप्रतिविम्बभावः । विहङ्गराजाङ्गरुहैरिवेत्यपराप्युपमा । इह सुवर्णमय्यां भूमौ जातानां लतानां सुवर्णमयत्वं पीतवर्णत्वं च कल्पितमितीमं प्रौढोक्तिमलङ्कारं कुवलयानन्दकार आह । तदुक्तं तेन 'प्रौढोक्तिरुत्कर्षाहेतौ तद्धेतुत्वप्रकल्पनम् । कचा कलिन्दजातीरतमालस्तोममेचकाः' इति ।

**निसर्गचित्रोज्ज्वलसूक्ष्मपक्ष्मणा लसद्बिसच्छेदसिताङ्गसङ्गिना ।**
**चकासतं चारुचमूरुचर्मणा कुथेन नागेन्द्रमिवेन्द्रवाहनम् ॥८॥**

अ०—निसर्गचित्रोज्ज्वलसूक्ष्मपक्ष्मणा लसद्बिसच्छेदसिताङ्गसङ्गिना चारुचमूरुचर्मणा कुथेन इन्द्रवाहनं नागेन्द्रमिव चकासतम् ।

व्याक०—निसर्गेण चित्राणि (तत्पु०) उज्ज्वलानि सूक्ष्माणि पक्ष्माणि यस्य तत् निसर्गचित्रोज्ज्वलसूक्ष्मपक्ष्म, तेन । निसर्गेणेति तृतीया प्रकृत्यादित्वात्, निपूर्वात् सृजेर्घञि निसर्गशब्दसिद्धिः । उज्ज्वलशब्दे उत्पूर्वाद् ज्वलतेः पचाद्यच् । लसति विसस्य च्छेदे इव ( ष० त०—कर्म० ) सिते ( उपमान० ) अङ्गे ( कर्म० ) सङ्गिना ( त० ) लसद्बिसच्छेदसिताङ्गसङ्गिना । लसदिति लसतेः शतृप्रत्ययः । सङ्गिशब्दे 'षञ्ज सङ्गे' धातोर्घञ्, ततः "अत इनिठनौ" । चारुणा चमूरोः चर्मणा चारुचमूरुचर्मणा । इन्द्रस्य वाहनम् इन्द्रवाहनम्, षष्ठ्यर्थः स्वस्वामिभावसम्बन्ध, इन्द्रस्वामिकं वाहनमित्यर्थ, अत एव "वाहनमाहितात्" इत्यनेन णत्वं न, इन्द्र इममारुह्य गच्छतीत्यर्थकस्य आहितत्वस्य अविवक्षितत्वात् । वामनेनाप्युक्तम्-'नेन्द्रवाहन-

शब्दे णत्वम्, आह्नितत्वस्याविवक्षितत्वात्' इति । चकासतम्-चकास्धातो शतृप्रत्यय । "जक्षित्यादय षट्" इत्यभ्यस्तत्वात् "नाभ्यस्ताच्छतुः" इति नुम् न । कुथेन इति हेतौ तृतीया ।

व्याख्या—निसर्गेण-स्वभावेनैव, चित्राणि-कर्बुराणि नानावर्णानि, उज्ज्वलानि-भास्वराणि, सूक्ष्माणि-लघीयांसि-कोमलानि, पक्ष्माणि-लोमानि यस्य तादृशेन, लसन्-शोभमान , विसस्य-मृणालस्य, *छेद -खण्ड., तद्वत् सिते-शुभ्रे, अङ्गे, सञ्जिना-सक्तेन-धृतेनेतियावत्, चारुणा-मनोहरेण, चमूरो - मृगविशेषस्य, चर्मणा-अजिनेन, हेतुना, †कुथेन-पृष्ठास्तरणेन, इन्द्रवाहनम्-इन्द्रस्वामिक वाहनम्, नागेन्द्रम्-हस्तिराजम्-ऐरावतमिव-चकासतम्-शोभमानम्, ( नारदमबोधीति ) ।

भा०—नारदेन स्वीये स्वच्छशुभ्रेऽङ्गे चमूरुमृगस्याजिन धृतम्, तस्याजिनस्य लोमानि नानावर्णानि, स्वच्छानि, कोमलानि च, तेन तदजिन बहुमूल्यराजोचितगजपृष्ठाद्यास्तरणमिव शोभते स्म । तेन च परिहितेनाजिनेन धृतमहार्हपृष्ठास्तरणस्य शुभ्रवर्णस्यैरावताख्यगजेन्द्रस्येव नारदस्य शोभासीत् ।

अल०—उपमा, ऐरावत उपमानम्, वर्ण्यो नारद उपमेय । चमूरुचर्मणा सह कुथस्य बिम्बप्रतिबिम्बभाव. । यद्यपि सुपमावर्णनार्थमियमुपमा कविना प्रयुक्ता, तथापि सर्वलोकवन्द्यस्य नारदस्य धृतपृष्ठास्तरणेनेन्द्रवाहनेन सादृश्यमिद न शोभते एव । अस्मिन् पद्ये अनुप्रासप्रकर्षान्नृत्यन्तीव पदानि भासन्त इति प्राक्तनालंकारिकसमत उदारताख्योऽत्रगुण. ।

‡अजस्रमास्फालितवल्लकीगुणक्षतोज्ज्वलाङ्गुष्ठनखांशुभिन्नया ।
पुर. प्रवालैरिव पूरितार्द्धया विभान्तमच्छस्फटिकाक्षमालया ॥९॥

अ०—अजस्रम् आस्फालितवल्लकीगुणक्षतोज्ज्वलाङ्गुष्ठनखांशुभिन्नया (अत एव) पुर. प्रवालैः पूरितार्द्धयेव अच्छस्फटिकाक्षमालया विभान्तम् ।

---

* 'छेदः खण्डोऽस्त्रियाम्' इति त्रिकाण्डशेष ।

† 'प्रवेण्यास्तरण वर्ण परिस्तोमः कुथो द्वयो ' इत्यमर ।

‡ "अजस्रमाथावित" इति पाठान्तरम् ।

व्याक०—अजस्रम्-नञ्पूर्वाद् 'जसु' धातो "नमिकम्पिस्म्यजस" इति सूत्रेण र, अत एव निपातनाद् नञो धातुना समास । क्रियाविशेषणमिदम् । आस्फालितानां वल्लक्या गुणानां ( ष० तत्पु०, कर्म० ) क्षतेन ( ष० तत्पु० ) उज्ज्वलस्य ( तत्पु० ) अङ्गुष्ठनखस्य ( कर्म० ) अंशुभि ( ष० तत्पु० ) भिन्नया ( तत्पु० ) आस्फालितवल्लकीगुणक्षतोज्ज्वलाङ्गुष्ठनखांशुभिन्नया । आस्फालितेति आङ्पूर्वाद् णिजन्तात् 'स्फुर् सञ्चलने' धातो. क्त, "चिस्फुरोर्णौ" इत्यनेनात्वम्, रलयोर्भेदाद् रेफस्य लत्वम् । विग्रहे गुणानामिति कर्तरि षष्ठी, अथवा 'आस्फालितै वल्लकीगुणै क्षतेन' इत्येव तृतीयासमासोऽभ्युपगन्तव्य, तृतीया च करणे । क्षतेन-'क्षणु' धातो भावे क्त । भिन्नयेति-'भिदिर् विदारणे' धातो क्त । पूरितम् अर्द्ध यस्या तया पूरितार्द्धया । पूरितमिति णिजन्तान्निष्ठा । अर्द्ध प्रयोज्यकर्तृ । अच्छाना स्फटिकानाम् अक्षमालया अच्छस्फटिकाक्षमालया । अक्षमालाशब्दोऽत्र जपमालापर, अथवा अच्छाः स्फटिका एवाक्षाः, तेषा मालयेति विग्रहीतव्यम् । विभान्तम्-विपूर्वाद् भाते. शतृप्रत्यय ।

व्याख्या—अजस्रम्-निरन्तरम्-प्राचुर्येण, आस्फालितानाम्-स्वरसामञ्जस्यज्ञानाय न्युब्जाङ्गुष्ठेन ताडितानाम्, वल्लक्याः-वीणायाः, गुणानाम्-तन्त्रीणाम्, क्षतेन-सङ्घर्षणेन, उज्ज्वल -विकासी-भास्वररक्तवर्ण, अङ्गुष्ठनख., तस्य अंशुभि -किरणै, भिन्नया-विच्छुरितकान्त्या-मिश्रया तद्रागरक्तया, अत एव पुर -अग्रभागे, ( रक्तवर्णसाम्यात् ) * प्रवालै -विद्रुमै, पूरितम्-सम्पादितम्, अर्द्धम्-अर्द्धभागो यस्यास्तथाभूतयेव प्रतीयमानया, † अच्छानाम्-निर्मलानाम्, स्फटिकानाम्, अक्षमालया-जपमालया, विभान्तम्-शोभमानम् । नारदमबोधि इति ।

भा०—नारदो हि करे जपार्थं स्फटिकनिर्मिता माला धत्ते, न हि स कामाय मन्त्रान् जपति, अपि तु मोक्षाय, मोक्षार्थिना च 'स्फटिको मोक्षद

---

* "अथ विद्रुम. पुंसि प्रवाल पुनपुंसकम्" इत्यमर ।

† "अच्छो भल्लूके स्फटिकेऽनलेऽच्छाभिमुखेऽव्ययम्" इति हेमचन्द्र. ।

परम् ' इति स्फटिकमाला विहिता । वीणावादने च दृढतरस्तस्याभ्यास इति वीणासौष्ठवपरीक्षणाय अङ्गुष्ठनखेन मुहुर्वीणातन्त्री ताडयति । तादृशदृढतर-तन्त्रीणा मुहु मर्घर्षणेनाङ्गुष्ठनखस्य भास्वरा रक्तता जायते । सा चात्यन्त स्वच्छेषु स्फटिकेषु संक्राम्यतीति यस्मिन् भागेऽङ्गुष्ठनखांशुसबन्धेन रागसक्रम-सभव , तस्मिन् भागे स्फटिका प्रवाला सभाव्यन्ते, यत्र तु व्यवहितत्वान्ना-शुसबन्धस्तत्र स्फटिका एव, तेन सा मालार्द्धभागे प्रवालै , अर्द्धभागे च स्फटिकैर्घटितेव विच्छित्ति ददाति । तयाद्भुतया मालया नारदो विराजते स्म ।

अल०—मालाया प्रवालघटितत्व मभाव्यत इत्युत्प्रेक्षा । भ्रान्तिमास्तु न, इवशब्देन सभावनाया एव बोधनात् । स्फटिकाना स्वगुण श्वैत्य त्यक्त्वान्य-गुणरक्तताग्रहणोक्त्या तद्गुण उत्प्रेक्षाङ्गम् । अङ्गुष्ठसौन्दर्यम् स्फटिकाना महा-र्घता च व्यङ्ग्ये ।

**रणद्भिराघट्टनया नभस्वत पृथग् विभिन्नश्रुतिमण्डलै. स्वरै ।**
**स्फुटीभवद्ग्रामविशेषमूर्च्छनामवेक्षमाणा महतीं मुहुर्मुहु ॥१०॥**

अ०—नभस्वत आघट्टनया पृथग् रणद्भि विभिन्नश्रुतिमण्डलै स्वर. स्फुटीभवद्ग्रामविशेषमूर्छनाम् महतीम् मुहु मुहु अवेक्षमाणम् ।

व्याक०—विभिन्नानि श्रुतीना मण्डलानि येषा ते विभिन्नश्रुतिमण्डलै । श्रुतिशब्दे श्रृणोते भावे क्तिन् । अस्फुटाः स्फुटाः यथा सम्पद्यन्ते, तथा भवन्त्यः, ग्रामविशेषाणा मूर्छना ( ष० तत्पु० ) यस्या ता स्फुटीभवद्-ग्रामविशेषमूर्च्छनाम्, स्फुटीभवद् इति स्फुटशब्दाद् अभूततद्भावे च्वि , भवच्छब्देन शत्रन्तेन " कुगतिप्रादय ' इति समास । स्त्रिया ङीप्, नुम् च, ततो बहुव्रीहौ पुवत् । मूर्च्छनाशब्दे णिजन्ताद् मुर्छा धातो " ण्यासश्रन्थो युच् " " युवोरनाकौ " । नभस्वत -नभ शब्दान् मतुप्, " तसौ मत्वर्थे " इति भत्वाद् रुत्वाभाव । आघट्टनया-णिजन्तघट्टधातो. स्त्रिया युच् । रण-नकरणे तृतीया । रणद्भि -रण्धातो शतृप्रत्यय । महतीम्-महच्छब्दाद् " उगितश्च " इति ङीप् । अवेक्षमाणम्-अवपूर्वाद् ईक्षते -शानच् । नारद-विशेषण द्वितीयान्तम् । मुहुर्मुहु· वीप्साया द्विर्वचनम् । स्वरै -स्फुटीभवनकरणे तृतीया । महतीमितीक्षणकर्मणि द्वितीया ।

व्याख्या—नभस्वत -वायो , आघट्टनया-आघातेन सघर्षेण, पृथग्-असकीर्णम्-भेदेन, रणद्भि -ध्वनद्भिः तन्त्र्यामाहताया योय स्वानो जायते तदनुजायमानैरनुरणनापरपर्यायै , विभिन्नानि-पृथक्पृथगवस्थितानि, नियत-सख्याकानि, श्रुतीनाम्-स्वरारम्भकाणा शब्दविशेषाणाम्, मण्डलानि-समूहा', येषा तथोक्तैः, स्वरै -गान्धर्वशास्त्रप्रसिद्धै षड्जादिभि , स्फुटीभवन्त्य -स्पष्ट-मनुभूयमाना , ग्रामविशेषाणाम्-स्वरसमूहरूपाणा षड्जमध्यमगान्धारनामभि ख्याताना त्रयाणा ग्रामाणाम्, मूर्च्छना -स्वरारोहावरोहक्रमभेदा यस्या तथा-भूताम्, महतीम्-*महतीति नाम्ना प्रसिद्धा स्वीया वीणाम्, मुहुर्मुहु -भूयो भूय , सकौतुकम्, अवेक्षमाणम्-अवलोकयन्तम् । नारदमबोधीति ।

भा०—गान्धर्वशास्त्रविषयोऽत्र तदीयै पारिभाषिकै शब्दैर्निबद्ध । स च मल्लिनाथरीत्या स्पष्टीक्रियते-गायकस्य कण्ठताल्वाद्यभिघातेन वीणादिवाद्येषु हस्ताङ्गुल्याद्यभिघातेन वा यः प्रथम शब्द उत्पद्यते, स †श्रुतिर्नाम, तस्याः सततनाद् अनुरणनरूपश्चिर जायमानो मनोहरो ध्वनि ‡ स्वर इत्याख्यायत अनेकाभि श्रुतिभिरेक स्वर उत्पद्यते, ताः श्रुतय स्वरस्यावयवा भवन्ति । अनेका. श्रुतय स्वरमवयविनमुत्पादयन्ति तन्तवइव पटम । तत्र चास्ति § सख्यानियमोऽपि-कियतीभि. श्रुतिभि क स्वर उत्पद्यत इति, त इमे स्वरा सप्त प्रसिद्धा.-षड्ज , ऋषभ , गान्धार., मध्यम , पञ्चम , धैवत , निषाद इति, एत एव सक्षेपेण स–रि–ग–म–प–ध–नी इत्याख्यायन्ते ।

---

* 'विश्वावसोस्तु बृहती तुम्बुरोस्तु कलावती । महती नारदस्य स्यात् सरस्वत्यास्तु कच्छपी' इति वैजयन्त्या वीणाविशेषनामानि ।

† प्रथमश्रवणाच्छब्दः श्रूयते ह्रस्वमात्रक । सा श्रुति सपरिज्ञेया स्वरावय-वलक्षणा ।

‡ श्रुत्यनन्तरभावी य स्निग्धोऽनुरणनात्मक. । स्वतो रञ्जयति श्रोतुश्चित्त स स्वर उच्यते । इति रत्नाकरे । "श्रुत्यारब्धमनुरणन स्वर " इत्यन्यत्र ।

§ चतुश्चतुश्चतुश्चैव षड्जमध्यमपञ्चमा । द्वे द्वे निषादगान्धारौ त्रिस्त्रिऋ्षभधैवतौ । इति ।

एषा विभिन्नया रीत्या भिन्ना भिन्ना सघाता ‡ ग्रामा इत्युच्यन्ते, ते च त्रय - षड्जग्राम , मध्यमग्राम , गान्धारग्राम इति । अन्येऽपि तज्ज्ञास्त्रय नन्द्यावर्त-जीमूतसुभद्राख्या । ग्रामेषु निविशमानाना स्वराणाम्-आरोहावरोहक्रमभेदा § ' मूर्च्छना ' इत्याख्यायन्ते,

ताश्च प्रतिग्राम सप्तेत्येकविंशतिर्भवन्ति । सर्वमेतत्पुरुषप्रयत्नेन गाने वाचा, वाद्ये तु हस्तादिव्यापारेण-सपाद्यते, पर नारदस्य वीणाया तादृशेन लोकातिशायिना शिल्पेन तन्त्रीयोजना कृता यदन्तरिक्षे गमनकाले वायोराघातेनैव सा विभिन्नेषु स्वरस्थानेषु ध्वनन्ती असकीर्णान् स्वरान्, ग्रामान्, मूर्च्छनाश्च पुरुषप्रयत्नमन्तरेणैव प्रकटयति । तादृशं च विलक्षण स्वन श्रुत्वा 'केनेय वादिता' इति सकौतुक नारदस्ता विलोकते ।

अल० —पुव्यापारमन्तरेण स्वगविर्भावोक्त्या कोऽपि लोकातिक्रान्त शिल्पसौष्ठवातिशयो वीणाया प्रतीयते, तेन सह स्वतःसिद्धातिशयस्याभेदेनाध्यवसितत्वात्तन्मूलातिशयोक्तिरलकार इति मल्लिनाथ आह । क्लिष्टकल्पनामात्रमिदम् । पुव्यापारमन्तरेण महत्या मूर्च्छनाय सबन्धेपि संबन्धाभिधानात् सबन्धातिशयोक्तिः, तदा च कारण विना कार्योत्पत्तिकथनरूपा विभावना व्यज्यत इत्यलकारध्वनिरपि तेनैवोक्त , स तु सम्यगेव । मुहुर्मुहुर्निरीक्षणेन नारदगतो विस्मयश्च व्यज्यते, तस्य पराङ्गत्वाद्रसवदलकारोऽपि ।

**निवर्त्य सोऽनुव्रजतः कृतानतीनतीन्द्रियज्ञाननिधिर्नभस्सदः ।**
**समासदत्सादितदैत्यसम्पद पद महेन्द्रालयचारु चक्रिण. ॥११॥**

अ०—अतीन्द्रियज्ञाननिधि स अनुव्रजत नभस्सद कृतानतीन् निवर्त्य सादितदैत्यसम्पद. चक्रिण महेन्द्रालयचारुपदम् समासदत् ।

व्याक०—इन्द्रियाण्यतिक्रान्तानि ।-अतीन्द्रियाणि, "अत्यादय क्रान्ताद्यर्थे द्वितीयया" इत्यनेन समास , तेषा ज्ञानस्य निधि. अतीन्द्रियज्ञाननिधि ।

---

‡ यथा कुटुम्बिन. सर्वेऽप्येकीभूता भवन्ति हि । तथा स्वराणा सदोहो ग्राम इत्यभिधीयते ।

§ क्रमात् स्वराणा सप्तानामारोहश्चावरोहणम् । सा मूर्च्छेत्युच्यते ग्रामस्था एता. सप्त सप्त च । इति ।

नानमिति ल्युडन्तम् । निधिशब्दे निपूर्वाद् दधातेः कि. । कृता आनति ये. तान् कृतानतीन् । आनति -आङ्पूर्वाद् नमते क्तिन । नभसि सीदन्तीति नभस्सद -नभ पूर्वात् सीदते· "सत्सूद्विष" इत्यादिना क्विप् । द्वितीयान्तम, निवर्तने प्रयोज्यस्तु कर्मता गतस्य वाचकम् । सादिता दैत्याना सम्पदो येन, तस्य सादितदैत्यसम्पद । सादितेति सीदतेर्णिजन्तात् क्तः, दैत्यशब्दे दितिशब्दादपत्यार्थे "दित्यदित्यादित्य " इति ण्य । महेन्द्रस्य आलयमिव चारु महेन्द्रालयचार । आलयेति 'लीङ् श्लेषणे' धातो "एरच्" । अनुव्रजत -अनुपूर्वाद् व्रजतेः "धातुसम्बन्धे प्रत्यया" इति लट्, तस्य शत्रादेश । निवर्त्य-णिजन्ताद्वर्ततेर्ल्यप् । चक्रिण -चक्रशब्दाद् "अत इनिठनौ" । समासदत्-'सम्' 'आङ्' एतत्पूर्वात् 'पद्लृधातोः' लुङ्, लृदित्त्वात् "पुषादि " इति च्लेरङ् ।

व्याख्या—अतीन्द्रियाणाम्-दिकालविप्रकर्षात् स्वरूपेण सूक्ष्मत्वाद् वा चक्षुरादीन्द्रियैरग्राह्याणा वस्तूनाम्, ज्ञानस्य, निधि -आकरः, सर्वज्ञ इति यावत्, सः-नारद , अनुव्रजत -अनुगच्छत , नभस्सद.-देवान्, कृतानतीन्-कृतप्रणामान्, निवर्त्य-प्रतिषिध्य-प्रतिगमय्य, सादिता -विनाशिता , दैत्यानाम्-हिरण्यकशिप्वादीनाम्, सम्पद -समृद्धय , येन, तस्य चक्रिणः-चक्रधरस्य-विष्णो -कृष्णरूपेणावतीर्णस्य, महेन्द्रालयमिव-वैजयन्ताख्येन्द्रप्रासादसदृशम्, चारु-मनोहरम्, पदम्-स्थानम् , समासदत्-आप ।

भा०—अन्तरिक्षे नारदेन सह तद्गौरवाय बहवो देवा अनुचररूपेण व्रजन्ति स्म, भूलोकसन्निधाने सति नारदेन ते स्वर्गं प्रति प्रेषिता प्रणाम कृत्वा निवृत्ता. । ततश्च नारदो भगवत कृष्णस्य सदन प्राप्त । इन्द्रसदनान्नारद आगतः, इदमपि सदनमिन्द्रसदनसदृशमेवेति तस्य पृथिव्यागमनेऽपि न कोऽपि विशेष इति 'महेन्द्रालयचारु' विशेषणेन द्योतितम् । सादितदैत्यसम्पद इति चक्रिविशेषणेन स्थाने समृद्धिबाहुल्य व्यञ्जितम् । दैत्याना सम्पदो विनाश्य स्वीया समृद्धिर्वृद्धि नीतेति । चक्रिण इति दैत्यनाशनयोग्यता व्यनक्ति । अतीन्द्रियज्ञाननिधिरिति विशेषणेन नारदस्य देवदर्शनसंलापादियोग्यता स्फुटीकृता ।

अल०—'नतीनती' 'पद. पदम्' इति छेकानुप्रास मल्लिनाथ आह ।

यमकमिति तु युक्तं भाति । वृत्त्यनुप्रासस्यापि पद्येऽस्मिन्नुत्कर्षः । भावार्थोक्तरीत्या परिकरोऽर्थालङ्कारः । महेन्द्रालयचारु-इत्युपमापि

**पतत्पतङ्गप्रतिमस्तपोनिधिः पुरोऽस्य यावन्न भुवि व्यलीयत ।**
**गिरेस्तडित्वानिव तावदुच्चकैर्जवेन पीठादुदतिष्ठदच्युतः ॥ १२ ॥**

अ०—पतत्पतङ्गप्रतिमः तपोनिधिः अस्य पुरः भुवि यावद् न व्यलीयत, तावद् अच्युतः जवेन उच्चकैः पीठात् तडित्वानिव गिरेः उदतिष्ठत् ।

व्याक०—पतन् पतङ्गः प्रतिमा यस्य स पतत्पतङ्गप्रतिमः । प्रतिमा-प्रतिमीयतेऽनयेति प्रतिपूर्वाद् माधातोः करणे " आतश्चोपसर्गे " इत्यङ् । ( कस्मादपि गुणाद्, धर्मपथाद्, मर्यादाया वा ) न च्युतः अच्युतः, च्युत इति च्यवतेः क्तः । यावत्, तावत्-इमे उभे अपि अव्यये । पुर इत्यप्यव्ययम् । व्यलीयत-विपूर्वाद् दैवादिकाद् लीङ्धातोर्लङ् कर्तरि । तडित्वान्-तडितोऽस्य सन्तीति तडिच्छब्दान्मतुप्, " मादुपधायाश्च मतोर्वोऽयवादिभ्यः " इति मकारस्य वकारः । " तसौ मत्वर्थे " इति भत्वेन पदत्वस्य बाधितत्वाद् जश्त्वाभावः । उदतिष्ठद्-उत्पूर्वात् तिष्ठतेर्लङ् । " उदोऽनूर्ध्वकर्मणि " इति सूत्रे अनूर्ध्वकर्मणीति पर्युदासान्नात्मनेपदम् । गिरेः, पीठाद् उभयत्र अपादाने पञ्चमी, जवेन करणे तृतीया ।

व्याख्या—पतन्-आकाशाद् नीचैरवतरन्, * पतङ्गः-सूर्यः, प्रतिमा-उपमानम्, यस्य तादृशः, तपसा निधिः-आकरः नारदमुनिः, अस्य-हरेः, पुरः-अग्रे, भुवि-पृथिव्याम्, यावद्-यत्कालपर्यन्तम्, न व्यलीयत-नावतीर्य स्थितोऽभूत्, तावत्-मुनिचरणयोः भूस्पर्शकालात्प्रागेव, अच्युतः-शास्त्रोक्तमर्यादापालको हरिः,जवेन-वेगेन, उच्चकैः-उन्नतात्, पीठाद्-आसनात्, तडित्वानिव-मेघो यथा, गिरेः-पर्वतात्, तथा उदतिष्ठत-उत्थितवान् ।

भा०—गृहागतः श्रेयान् पुरुषोऽभ्युत्थानेन सत्कर्तव्य इति शास्त्रमर्यादा । तदुक्तं मनुना— ऊर्ध्वं प्राणा ह्युत्क्रामन्ति यूनः स्थविर आयति । प्रत्युत्थानाभिवादाभ्यां पुनस्तान् प्रतिपद्यते, इति । तामेनां मर्यादां रक्षन् भगवान् हरिः, यावन्नारदोऽम्बरादवतीर्य भूम्यां स्थितोऽपि न, तावदेव सिंहासनादुत्थितः ।

---

* ' पतङ्गौ पक्षिसूर्यौ च ' इत्यमरः ।

उन्नतसिंहासनादुत्तिष्ठन्तो जनस्य मस्य हरे पर्वतादुत्तिष्ठन ( ऊर्ध्वमायत ) मेघस्येव सुपमामन् मूर्यस्यास्तगमन पतनशब्देन कविभिर्व्यवह्रियते, तस्मिन् काले च । मन यागम् ) सेना उत्तिष्ठन्तीति तदनुकृतिरिह प्रतार्यते, परमस्मिन् गच्छत. सूर्यस्य नारदोपमानत्वानौचित्यात् , सत यामेघाना श्यामत्वाभावाच्च न सा हृदयङ्गमा ।

अल०—उद्योपमानभूत पतन् पतङ्गो न प्रसिद्ध इत्यभूतोपमाशब्देनेय-मुपमा आचार्यदण्डिप्रभृतिभिरुच्यते । अप्रसिद्धस्योपमानत्वायोगादुत्प्रेक्षेय-मित्याधुनिका इति मल्लिनाथ । परमुत्प्रेक्षावादिना प्रतिमपदस्वारस्य चिन्त्यम्, तस्य सम्भावनात्पार्थवाचकत्वादर्शनात् । गिरेस्तडित्वानिवेत्यप्युपमा । तत्रापि तडित्वच्छब्देन मेघे विद्युत्सत्ता द्योतिता, भगवति कृष्णे तु तत्प्रतिबिम्बभूत पीताम्बर न केनापि पदेन द्योतितामिति न्यूनत्वमुपमादोष प्रसज्जते । तडित्वच्छब्दस्य रूढ्या मेघार्थकत्वमुपगम्य तु स कथञ्चित्समाधेय । द्वयो क्रिययोर्युग-पदुक्त्या समुच्चयोऽपि ।

**अथ प्रयत्नोन्नमितानमत्फणैर्धृते कथञ्चित्फणिना गणैरध ।**
**न्यधायिषातामभिदेवकीसुतं सुतेन धातुश्चरणौ भुवस्तले ॥ १३ ॥**

अ०—अथ धातु सुतेन प्रयत्नोन्नमितानमत्फणै फणिना गणै अध कथ-चिद् धृते भुव तले अभिदेवकीसुत चरणौ न्यधायिषाताम ।

व्याक०—प्रयत्नेन उन्नमिता ( तत्पु० ) आनमन्त्य. फणा यै, तै प्रयत्नोन्नमितानमत्फणै. । प्रयत्नेति प्रपूर्वकाद् यतते " यजयाचयतविच्छ-प्रच्छरक्षो नङ् " । करणे तृतीया । उन्नमितशब्दे नमतेर्णिजन्तात् क्तप्रत्यय., आनमदिति नमते. शतरि रूपम् । उभयोरपि " स्त्रिया पुंवद् " इत्यनेन पुंवत्त्वम् । देवक्या सुतम् ( ष० त० ) अभिलक्ष्य अभिदेवकीसुतम्, "अभि-रभागे " इति कर्मप्रवचनीयत्वाद् द्वितीया, ततो लक्षणेनाभिप्रती आभि मुख्ये " इत्यव्ययीभावः । फणिनाम्-फणा सन्त्येषामिति फणाशब्दाद् " व्रीह्यादिभ्यश्च " इति इनि , फणाशब्दाद् " अत इनिठनौ " इति इनि वा । न्यधायिषाताम्-निपूर्वाद् दधाते कर्मणि लुङ्, " स्यसिच्सीयुट् " इत्यादिना चिण्वदिट्, ' आतो युक्चिण्कृतो. " इति युगागम । सुतेनेति

अनुक्ते कर्तरि तृतीया, चरणौ इति निधानक्रियाया उक्तं कर्म । गणैरिति धृत इति क्तान्तस्य कर्तरि तृतीया । तले-अधिकरणे सप्तमी ।

व्याख्या—अथ-श्रीकृष्णाभ्युत्थानानन्तरम्, धातु-ब्रह्मण, सुतेन-पुत्रेण-नारदेन, प्रयत्नेन-महता आयासेन, उन्नमिता-ऊर्ध्वीकृता, आनमन्त्य-मुनिपादन्यासेन नीचैर्भवन्त्य, फणा ये, तथाभूतै, ( यद्वा-प्रयत्नोन्नमिता अपि आनमन्त्य फणा येषा तथाभूतै ) फणिनाम सर्पाणाम, गणै-समूहै, अव-अधःप्रदेशे, कथचित् केनापि प्रकारेण-अतिकृच्छ्रेण, धृते-स्थिति प्रापिते, भुव-पृथिव्या, तले-पृष्ठे अभिदेवकीसुतम-कृष्णस्याभिमुखम, चरणौ पादौ, न्यधायिषाताम्-निहितौ स्थापितौ ।

भा०—भगवति श्रीकृष्णे आसनादुत्थित एव नारदोऽपि तत्सम्मुखभाग एव भूमिष्ठोऽभवत् । तेन चरणन्यासे कृते तद्गौरवाद् भूमिनाचैः प्रायात्, भूमि दधत शेषस्य फणा भुग्ना नता बभूवु, ततस्तत्साहाय्यार्थं बहुभि पातालस्थै सर्वैर्भूमिं धर्तुं फणा भूमेरध स्थापिता सर्वैरपि चानमन्त्य फणा. कथचिद-तिकृच्छ्रेणोर्ध्वीकृता, तेन कथमपि भूमण्डल स्थिरमभूत् ।

अल०—फणाना नमनोन्नमनासम्बन्धेऽपि मुनिगौरवाय तत्सम्बन्धाभि-धानादतिशयोक्तिभेद इति मल्लिनाथ । देवर्षिनारदशरीरस्येदृशभारवत्ववर्णने का वा विच्छित्तिरिति तत्रभवान् कविरेव जानाति । पूज्यत्वलक्षण गौरव भारवत्त्वलक्षणगौरवाभेदेनाध्यवसाय वर्णितमिति काचिच्चमत्कृतिरुदेति चेत् मतुष्यन्तु सहृदया । अधोगच्छता भूतलेन फणिफणानामानमन नारदचरण-न्यासादुत्तरकालिक विधेय च, इह तु शब्दमर्यादया तत. पूर्वमेवानुवाद्यतया प्रतीयत इति विधेयाविमर्शदोषोऽपि ।

तमर्घ्यमर्घ्यादिकयादिपूरुष सपर्यया साधु स पर्यपूपुजत् ।
गृहानुपैतु प्रणयादभीप्सवो भवन्ति नापुण्यकृता मनीषिण ॥१४॥

अ०—आदिपूरुष स अर्घ्यं तम् अर्घ्यादिकया सपर्यया साधु पर्यपूपुजत् । मनीषिण अपुण्यकृता गृहान् प्रणयाद् उपैतुम् अभीप्सव न भवन्ति ।

व्याक०—आदि पूरुष आदिपूरुष । "अन्येषामपि दृश्यते" इत्यनेन पूरुषशब्दादेरकारस्य दीर्घ । अर्घार्थं द्रव्यम्-अर्घ्यम्, "पादार्घाभ्या च" इति

यत्प्रत्यय । तद् आदि यस्या, तया अर्घ्यादिकया, 'शेषाद् विभाषा" इति कप् । पुण्य कृतवन्तः पुण्यकृत, "सुकर्मपापमन्त्रपुण्येषु कृञ" इति भूते क्विप् । ततो नञ्समासे 'अपुण्यकृताम्' । अर्घमर्हत्यर्घ्यः, तम्, अर्घ-शब्दाद् "दण्डादिभ्यो य" । सपर्यया-'सपर् पूजायाम्' धातोः कण्ड्वा-दित्वाद् यकि, "अप्रत्ययात्" इति स्त्रीत्वे अप्रत्ययः, ततष्टाप् । सपर्याशब्दोऽत्र लक्षणया तत्साधनद्रव्यवाची, करणे तृतीया । अथवा सपर्य्यतेऽनयेति करणे एव अप्रत्ययः । पर्यपूपुजत्-परिपूर्वात् पूजयतेर्लुङ्, च्लेश्चङ्, द्वित्वम्, सन्वद्भावदीर्घौ । मनीषा अस्त्येषामिति मनीषिण व्रीह्यादित्वाद् मत्वर्थाय इनि । मनस ईषिण इत्यर्थे पृषोदरादित्वान्मनीषिण इति मल्लिनाथ । मनीषाशब्दश्च 'मनस ईषा' इत्यर्थे शकन्ध्वादित्वात् पररूपेण साधु । गृहान्-ग्रहधातो. "गेहे क." । कित्वात् सम्प्रसारणम्, 'गृहा पुंसि च भून्म्येव' इति कोशात् पुस्त्व बहुत्व च । प्रणयाद्-प्रपूर्वाद् नयतेः "एरच्" । हेतौ, प्रणयमाश्रित्येति ल्यब्लोपे वा पञ्चमी । उपैतुम्-उपपूर्वाद् एतेस्तुमुन् "एत्येधत्यूठ्सु" इति वृद्धि । गृहानिति तत्कर्म । अभीप्सव -अभिपूर्वाद् आप्लृधातोः इच्छार्थे सन् । "आप्ज्ञप्यृधामीत्" इति धातोराकारस्येकारः । तत उप्रत्यय 'सनाशसभिक्ष उ" । यद्यपि सन्नन्त आप्नोति प्राप्तीच्छामभि धत्ते, *तथाप्यत्रास्येच्छामात्रवाचित्वम्, अन्यथा गृहान् अभीप्सव -अभ्याप्तुम्-आभिमुख्येन प्राप्तुमिच्छव:, न भवन्ति, इत्येतावतैव वाक्यार्थे पर्यवसिते उपैतुमिति पुनरुक्त स्यात् ।

व्याख्या—आदिपूरुष -पुराणपुरुष, स -कृष्ण, अर्घ्यम्-पूजार्हम्, तम्-नारदम्, अर्घ्यादिकया सपर्यया-†अर्घोदकप्रभृति ‡ पूजासामग्र्या, साधु-सम्यग् यथा स्यात्तथा, पर्यपूपुजत्-परिपूजितवान् । मनीषिणः-प्रज्ञावन्त., अपुण्यकृताम् पुण्यमकृतवताम्-अपुण्यशीलाना पुरुषाणम्, गृहान्, प्रणयात्-स्नेहाद्, उपैतुम्-उपगन्तुम्, अभीप्सव -अभिलाषिण, न भवन्ति । किन्तु

* अभीष्टेऽभीप्सित हृद्यम् इत्यमर ।

† 'मूल्ये पूजाविधावर्घ ' षट् तु त्रिष्वर्घ्यमर्घार्थे' इत्यमर ।

‡ पूजा नमस्यापचिति सपर्य्यार्चार्हणाः समा -इत्यमर ।

पुण्यकृतामिव भवन्तीति ।

भा०—पूजायोग्यं नारदमागत दृष्ट्वा मर्यादारक्षणार्थमवतीर्ण पुराणपुरुषो भगवान्, यथाविधि अर्घ्यादिभिस्तं पूजितवान । पुण्यलभ्य हीदृशाना महात्मना दर्शनम्, पुण्यकृतामिव सदन ते गच्छन्ति, ये तु एतान्न पूजयन्ति, न ते पुण्यकृत , न च तत्सदन, महान्तो यान्ति । तस्मात्पूज्या एव ते इति भगवतापि पूजितो देवर्षिर्नारद ।

अलं०—पूजाया सामान्येन समर्थनादर्थान्तरन्यास । त-'मर्त्यमर्या' इति च्छेकानुप्रासो यमक वा, सपर्य-मपर्य-इत्यपि तथा । अन्योऽप्यनुप्रास-श्चमत्कारी ।

**न यावदेतावुदपश्यदुत्थितौ जनस्तुषाराञ्जनपर्वताविव ।**
**स्वहस्तदत्ते मुनिमासने मुनिश्चिरन्तनस्तावदभिन्यवीविशत् ॥१२॥**

अ०—जन उत्थितौ एतौ तुषाराञ्जनपर्वताविव यावद् न उदपश्यत्, तावत् चिरन्तन मुनि. स्वहस्तदत्ते आसने मुनिम् अभिन्यवीविशत् ।

व्याक०—तुषारस्य च अञ्जनस्य च ( द्वन्द्व० ) पर्वताविव ( ष० तत्पु० ) तुषाराञ्जनपर्वताविव । पर्वताविवेति 'इवेन समासो विभक्त्यलोपश्च' । स्वेन स्वस्य वा हस्तेन दत्ते स्वहस्तदत्ते । दत्तेति क्तान्तम् । उदपश्यत् दृशेर्लङ् । चिरन्तन -चिरमित्यव्ययात् "साय चिरम् " इत्यनेन ट्युप्रत्ययस्तुडागमश्च । आसनशब्दे 'आस उपवेशने' धातो अधिकरणे ल्युट् । अभिन्यवीविशत्-'अभि' 'नि' एतत्पूर्वाद् णिजन्ताद् विश् धातो कर्तरि लुङ्, "णिश्रि-" इति चङ्, मुनिमिति प्रयोज्यकर्म, अभिनिविशमान मुनि प्रैरिरदित्यर्थ । 'उत्थितौ' 'यावत्' इति व्याख्यातपूर्वौ शब्दौ ।

व्याख्या—जनः-सभास्थो लोक , उत्थितौ, एतौ-नारदकृष्णौ, तुषारा-ञ्जनयो -हिमकज्जलयो , पर्वताविव-पर्वतसदृशौ स्थितौ, यावद् , न-उदपश्यत्-न उत्प्रेक्षितवान्-न सम्यग् दृष्टवान् , न सभावितवान् । तावत्-तत प्रागेव, चिरन्तनः-पुराण *मुनि -नारायणावतार. कृष्ण , स्वहस्तदत्ते-स्वयं समर्पित-

---

* नरनारायणाभ्या मुनिरूपाभ्या बदरिकाश्रमे तपस्तप्तम्, स नारायण एव कृष्णरूपेणावतीर्ण इति पुराणाद्भगवानत्र चिरन्तनो मुनिरित्युक्त ।

आसने-सिहासने, मुनिम्-नारदम्, अभिन्यवीविशन्-स्वाभिमुख्येन उपवेशितवान् ।

भा०—आभिमुख्येन स्थितावेतौ कृष्णनारदौ सम्यग् द्रष्टुमपि यावत् सभास्था लोका नापारयन्, तावदेवातिशीघ्रतयाऽर्घ्यादिक निवेद्य कृष्णेन भृत्यादिकमनपेक्ष्य स्वहस्तेनैव सिहासनमग्रत कृत्वा तत्र नारद उपवेशित, अथवा इदानीमयमागत, अयमुत्थास्यति पूजयिष्यति-इति सभावनापि यावल्लोकस्य नाभूत्, तावदेव भगवता पूजा समाप्य नारद उपवेशित इति । यद्वा-नारदकृष्णौ श्वेत-कृष्णवर्णतया तुषाराञ्जनपर्वतसदृशौ, तयो सादृश्य-मूलिका तुषाराञ्जनपर्वतत्वसभावना यावल्लोकेन न कृता तावदेवोपवेशितो नारद इति ।

अल०—शीघ्रतातिशयप्रत्यायनादतिशयोक्तिभेद । तुषाराञ्जनपर्वताविवेत्युपमा । अनुप्रासस्तु सर्वत्रैव कवेरस्य कृतौ प्रौढ जागर्ति ।

**महामहानीलशिलारुच पुरो निषेदिवान् कसकृष स विष्टरे ।**
**श्रितोदयाद्रेरभिसायमुच्चकैरचूचुरच्चन्द्रमसोऽभिरामताम् ॥१६॥**

अ०—महामहानीलशिलारुच कसकृष पुर उच्चकै विष्टरे निषेदिवान् स अभिसाय श्रितोदयाद्रे चन्द्रमस अभिरामताम् अचूचुरत् ।

व्याक०—महत्या महानीलस्य शिलाया ( ष० त०-कर्म ) रुगिव रुग् यस्य, तस्य महामहानीलशिलारुच, "सप्तम्युपमानपूर्वपदस्योत्तरपदलोपश्च" इत्यभियुक्तोक्तदिशा बहुव्रीहौ उपमानोत्तरपदस्य रुगित्यस्य लोप । अथवा महानीलशिलेव रुग् यस्येति लाक्षणिकपूर्वपदो बहुव्रीहि । रुक्शब्द रोचतेर्भावे क्विपि निष्पन्न. । कस कृष्टवान् इति कसकृट्, तस्य कसकृष । कृषे कर्तरि क्विप् । सायमभिलक्ष्य इति अभिसायम्, "लक्षणेनाभिप्रती आभिमुख्ये" इत्यनेनाव्ययीभाव. । श्रित उदयाद्रि येन तस्य श्रितोदयाद्रे । श्रित इति कर्मणि निष्ठा । विष्टरे-विपूर्वात् स्तृणातेरप्, "वृक्षासनयोर्विष्टर" इत्यनेन षत्वम् । निषेदिवान्-निषसादेति विग्रहे सीदतेर्लिट्, तस्य "भाषाया सदवसश्रुव" इति क्वसुरादेश । अभिरामताम्-रमतेर्घञन्ताद् भावे तल् । अचूचुरत् स्वार्थणिजन्तात् चोरयतेः कर्तरि लुङ्, "णिश्रिद्रुस्रुभ्य •" इति चङ् ।

व्याख्या—महत्या -बृहत्या॰, महानीलस्य-सिंहलदेशोद्भवस्य इन्द्रनील-मणे., शिलाया॰, रुगिव-कान्तिरिव, रुक्-कान्ति , यस्य, तथाविधस्य, कसरुप -कसनाशकस्य कृष्णस्य, पुर॰ अग्रे सम्मुखे, उच्चकै -उन्नते, विष्टरे-आसने, निषेदिवान्-उपविष्ट , सः-नारदमुनि., अभिसायम्-सायङ्कालाभिमुखम्, स्थितस्य, श्रित -आश्रित , उदयाद्रि -उदयाचल , येन तस्य, चन्द्रमस -इन्दो , अभिरामताम्-रमणीयताम् शोभाम्, अचूचुरत्-चोरितवान्-प्राप्तवान् ।

भा०—नीलमणिसवर्णो घनश्याम कृष्ण सम्मुखे तिष्ठति स्म, तदभिमुख स्वच्छश्वेतकान्तिर्नारद उन्नते सिंहासन उपविष्ट , तेन तस्य तादृशी शोभा लक्ष्यते स्म, यादृशी कृष्णवर्णं सायङ्कालमभिमुखीकृत्य स्थितस्य, उदय-पर्वतमारूढस्य चन्द्रस्य लक्ष्यते । तेनेद भाति-तथाविधस्य चन्द्रस्यैव शोभा नारदेन चोरिता । चुरधात्वर्थेन स्तेयेन प्राप्तिर्लक्ष्यते, सैव शोभेति तत्-व्यङ्ग्यम् । तत्कालोद्भूततमोबाहुल्यात् सायङ्काल कृष्णवर्ण कविभिर्वर्ण्यते । श्रितोदयाद्रे-रिति विशेषणेन उदित एव चन्द्रो नेदानीं यावत् कृत्स्न तम निरोद्धुमशकत्, सन्निधौ तमस्तेन विनाशितम्, प्रतीच्यान्तु तद्वर्तत एवेति तमसोऽभिमुख स्थितिश्चन्द्रस्योपपादिता ।

अलं०—अन्यशोभाया अन्यत्र वस्तुगत्या असम्भवात् सादृश्ये पर्यवसानमिति निदर्शनालङ्कार । महामहानीलशिलारुच इत्युपमा तदङ्गम् । चकारानुप्रास उत्तरार्द्धे चमत्कारी ।

**विधाय तस्यापचितिं प्रसेदुष प्रकाममप्रीयत यज्वना प्रिय ।**
**ग्रहीतुमार्यान् परिचर्यया मुहुर्महानुभावा हि नितान्तमर्थिन ॥१७॥**

अ०—यज्वना प्रिय प्रसेदुष तस्य अपचितिं विधाय प्रकामम् अप्रीयत, हि महानुभावा आर्यान् परिचर्यया मुहु ग्रहीतु नितान्तम् अर्थिन (भवन्ति) ।

व्याक०—महान् अनुभावो येषा ते महानुभावाः । अनुभावशब्दे पूर्वम-नुपसृष्टाद्भवते॰ "श्रिणी भुवोऽनुपसर्गे" इति घञ्, ततोऽनुना प्रादिसमास । विधिना इष्टवन्त इति यज्वान , तेषाम् । यजेः "सुयजोर्ङ्वनिप्" । प्रससाद इति प्रसेदिवान्, तस्य प्रसेदुष । सीदतेर्लिट्, तस्य क्वसु., ततो ङसि भत्वाद्

* "सिंहलस्थाकरोद्भूता महानीलास्तु ते स्मृता " इति भगवानगस्त्य ।

"वसो' सम्प्रसारणम्" । अपचितिम्-अपपूर्वात् 'चायृ पूजानिशामनयो' धातो क्तिनि "चायते क्तिनि चिभावो वाच्य" इति चिरादेश । प्रकामम्-'कमु कान्तौ' धातोर्घञ् । प्रीतिक्रियाविशेषण द्वितीयान्तम् । अप्रीयत-'प्रीङ् प्रीतौ' इति दैवादिकात् कर्तरि लङ् । आर्यान्-अर्यन्ते-पूजयोपगम्यन्त इति "ऋहलोर्ण्यत्" । यद्वा "अर्य· स्वामिवैश्ययो" इतीश्वरार्थे निपातितार्यशब्दादपत्यार्थेऽण्, आर्या -ईश्वरपुत्रा इति । ग्रहणकर्मणि द्वितीया । "परिचर्यया-"परिचर्यापरिसर्यामृगयाटाट्यानामुपसख्यानम्" इत्यनेन परिपूर्वात् चरतेः शो यक् च निपात्यते । करणे तृतीया । ग्रहीतुम्-'अर्थिन' इतीच्छार्थक उपपदे ग्रह धातो· "समानकर्तृकेषु तुमुन्"। 'ग्रहोऽलिटि दीर्घ" इतीटो दीर्घ । नितान्तम्-तमुकाङ्क्षायाम् धातो क्त' "अनुनासिकस्य " इति दीर्घ । अर्थनक्रियाविशेषणम् । अर्थिन - अर्थ उपयाञ्चायाम्' धातो ग्रह्यादित्वाद् नि । मल्लिनाथस्तु-अर्थनमर्थ -अभिलाष , सोऽस्यास्तीति विगृह्य "अत इनिठनौ" इति मत्वर्थीय इनि , न तु णिनि । 'कृद्वृत्तेस्ताद्धितवृत्तिर्वलीयसी" इति भाष्यादित्याह ।

व्याख्या—*यज्वनाम्-विधिपूर्वकं याग कृतवताम्, प्रिय:-प्रेम्णा आराध्यः कृष्ण , प्रसेदुष -प्रसन्नस्य, तस्य-नारदस्य, †अपचितिम्-पूजाम् , विधाय-विशेषेण मनोवाक्कायकर्मभि· सम्पाद्य, प्रकामम्-अत्यन्तम्, अप्रीयत-समतुष्यत् । हि-यत , महानुभावा -महात्मान , आर्यान्-श्रेष्ठान्-पूज्यान्, परिचर्यया-सेवया, मुहु:-भूयो भूय , ग्रहीतुम्-वशीकर्तुम्-प्रसन्नान् कर्तुम्, नितान्तम्-अत्यर्थम्, अर्थिन·-अभिलाषुका भवन्तीति शेष ।

भाव॰—पूर्वमर्घ्यादिभि पूजितस्य प्रसन्नता गतस्योपविष्टस्य नारदस्य पुनरपि गन्धपुष्पमधुपर्कादिभि पूजा भगवता कृष्णेन कृता । नात्र किमप्याश्चर्यम्, स्वभाव एष महानुभावानाम, यत्ते श्रेष्ठान् पुन पुनस्तथा पूजयन्ति, तथा पूजया तया सन्तुष्टा एते श्रेष्ठा पूजकस्य वशगा एव भवन्ति । एषा च पूजा न केनचिदभिलाषेण कस्यचित् प्रेरणया वा महानुभावै क्रियते, यतस्ते स्वय महानुभावा , कस्तेषा प्रेरक स्यात्, को वा तेषामभिलापः, पर प्रकृतिरेव तेषा तथाविधा यत्पूज्यपूजा कर्तुमुत्कटोऽभिलापस्तेषा मनसि सतत जागर्ति । यज्वना

* यज्वा तु विधिनेष्टवान् इत्यमर , † पूजा नमस्यापचिति इत्यमर ।

प्रिय इति कृष्णवाचकाभ्यां पदाभ्यामिदमभिप्रेतम्, यन्निर्व्याज योगादिकर्म कृतवता मनसि भगवति कृष्णे परमा प्रीतिरुदेति, त एव भक्ता उच्यन्ते, तेष्वग्रगण्योऽयं नारद, अस्य भगवान् कृष्ण परमप्रेमास्पदम्। एवंविधाश्च भक्ता स्वयं कृष्णेन समर्च्यन्त इति तस्य स्वभाव.।

अल०—अर्थान्तरन्यास.। अनुप्रासविपये तूक्तमेव।

**अशेषतीर्थोपहृता कमण्डलोर्निधाय पाणावृषिणाभ्युदीरिता ।**
**अघौघविध्वंसविधौ पटीयसीर्नतेन मूर्ध्ना हरिरग्रहीदपः ॥ २५ ॥**

अ०—हरिः अशेषतीर्थोपहृताः कमण्डलोः पाणौ निधाय ऋषिणा अभ्युदीरिताः अघौघविध्वंसविधौ पटीयसीः अपः नतेन मूर्ध्ना अग्रहीत्।

व्याक०—अशेषेभ्य तीर्थेभ्य (कर्म०) उपहृता अशेषतीर्थोपहृता, अपादानपञ्चम्यन्तस्य पञ्चमीति योगविभागात् समास। उपहृतशब्दो हरते. क्तान्त। अघानाम् ओघस्य विध्वंसस्य विधौ अघौघविध्वंसविधौ, षष्ठीतत्पुरुषत्रयम्, समस्तपदाद् विषयसप्तमी। विध्वंसेतिध्वंसतेर्घञ्। अभ्युदीरिता 'अभि' 'उद्' एतद्द्वयपूर्वाद् 'ईर् गतौ कम्पने च' धातो क्त, अप इत्यस्य विशेषणम्। पटीयसी -अतिशयेन पट्वीरिति पटुशब्दाद् ईयसुन्, उगित्त्वाद् ङीप, इदमप्यपा विशेषणम्। नतेन-नमते क्त.। अग्रहीत्-ग्रहधातोर्लुङ्। कमण्डलोः अपादाने पञ्चमी। निधायेति निधानक्रियया उद्धरणक्रिया आक्षिप्ता, तन्निरूपितमपादानत्व द्रष्टव्यम्, निधाने विभागानन्तर्भावात्। पाणौ अधिकरणसप्तमी। ऋषिणा-अभ्युदीरणकर्तरि तृतीया। मूर्ध्ना करणे तृतीया।

व्या०—हरि -कृष्ण, अशेषेभ्य -सकलेभ्य, तीर्थेभ्य पवित्रजलाशयेभ्य, उपहृताः-आनीता, * कमण्डलो -जलपात्राद् उद्धृत्य, पाणौ-हस्ते, निधाय-स्थापयित्वा, ऋषिणा-नारदेन, अभ्युदीरिता -आभिमुख्येन क्षिप्ता, अघानाम्-पापानाम्, ओघस्य-समूहस्य, विध्वंसविधौ-विनाशकरणे, पटीयसी -समर्थतरा., अप -जलानि, नतेन-नम्रेण, मूर्ध्ना-शिरसा, अग्रहीत्-स्वीकृतवान्।

भावा०—यथा जगदधिपतिनापि भगवता कृष्णेन लोकमर्यादा पालिता, तथा त जगन्नाथ विदन्नपि नारदो लोकमर्यादा पालयामास। नारदस्य कमण

* अस्त्री कमण्डलु. कुण्डी इत्यमर।

डतौ सर्वेषां तीर्थानां जलमासीत्, तस्य सर्वत्र भ्रमणशीलत्वात् । तीर्थेभ्यश्च जलग्रहणमित्यास्तिकसंप्रदायात् । तस्य जलभ्याशो नारदेन कमण्डलोरुद्धृत्य स्वपाणौ संस्थाप्य मङ्गल्याभिषेकाय भगवतः कृष्णस्य शिरसि क्षिप्त, भगवतापि मूर्धानमवनमय्याभिषेकजलं गृहीतम् । इदं हि तीर्थोदकं सर्वपापापहारि विशेषतश्च नारदहस्तात्प्राप्तमिति सत्कारपूर्वकं तस्य ग्रहणं युक्तमेव ।

अलं०—अघौघविध्वंसविधौ पटीयसीरिति विशेषण ग्रहणे साभिप्रायमिति परिकर ।

**स काञ्चने यत्र मुनेरनुज्ञया नवाम्बुदश्यामवपुर्न्यविक्षत ।**
**जिगाय जम्बूजनितश्रियः श्रियं सुमेरुशृङ्गस्य तदा तदासनम् ॥ १६॥**

अ०—नवाम्बुदश्यामवपुः सः मुनेः अनुज्ञया यत्र काञ्चने (आसने) न्यविक्षत, तद् आसनं तदा जम्बूजनितश्रियः सुमेरुशृङ्गस्य श्रियं जिगाय ।

व्याक०—नवः अम्बुद इव ( कर्म० ) श्याम ( उपमान० ) वपुः यस्य (बहु०) स नवाम्बुदश्यामवपुः । अम्बु ददातीत्यम्बुदः, "आतोऽनुपसर्गे कः"। जम्ब्वा जनिता (तत्पु०) श्री यस्य तस्य जम्बूजनितश्रियः । शृङ्गविशेषणमिदम्, यद्यपि नपुंसकत्वान्नुम् प्राप्नोति, तथापि बहुव्रीहेर्भाषितपुंस्कत्वात् "तृतीयादिषु भाषितपुंस्कं पुंवद् गालवस्य" इत्यनेन पाक्षिके पुंवद्भावे नुमभावः । जनितेति जनयतेर्णिजन्तान्निष्ठा । जम्बूः प्रयोजककर्त्री, श्रीश्च प्रयोज्या । अनुज्ञया-अनुपूर्वाद् 'ज्ञा' धातोः 'आतश्चोपसर्गे" इति 'अङ्'। हेतौ तृतीया। काञ्चने-काञ्चनशब्दाद् वैकारिकोऽण् इति मल्लिनाथः । न्यविक्षत-निपूर्वाद् विशतेर्लुङ्, "नेर्विशः" इत्यनेनात्मनेपदम्, "शल इगुपधादनिटः क्सः" इति च्लेः क्सः । जिगाय-जयतेर्लिट्, "सन्लिटोर्जेः" इत्यनेनाभ्यासात् परस्य कुत्वम् ।

व्याख्या—नवाम्बुद इव-नूतनजलधर इव, श्यामम्-श्यामवर्णम्, वपुः-शरीरम्, यस्य तथोक्तः, स कृष्णः, मुनेः-नारदस्य, अनुज्ञया-अनुमत्या, यत्र, काञ्चने-स्वर्णमये, आसने सिंहासने, न्यविक्षत-उपाविशत्, तद्, आसनम्, तदा कृष्णोपवेशनसमये, जम्ब्वा-'जामुन' इति प्रसिद्धेन कृष्णवर्णेन जम्बूवृक्षेण, जनिता-उत्पादिता, श्रीः शोभा, यस्य तादृशस्य, सुमेरोः-स्वर्णमयस्य सुमेरुपर्वतस्य, शृङ्गस्य-शिखरस्य, श्रियम्-शोभाम्, जिगाय-अभिबभूव-अतिशेते स्म ।

भावार्थः—अभिषेकानन्तरं नारदेन कृष्णायोपवेशनानुमतिर्दत्ता, अनुमतश्च भगवान् कृष्णः स्वर्णमयसिंहासने उपविष्टः । स्वर्णमयस्य सुमेरोः पर्वतस्य शृङ्गं यथोपरि विराजमानेन श्यामेन जम्बूवृक्षेण शोभते, ततोऽप्यधिकं घनश्यामेन महावपुषा भगवता कृष्णेनाधिष्ठितं विशालं तत्स्वर्णमयं सिंहासनम् शोभते । तेन तस्यापि श्रीरनेन जितेति प्रतीयते स्म । स्वर्णमयत्वेनोन्नतत्वेन च सुमेरुशृङ्गसिंहासनयोः साम्यम्, श्यामत्वेन जम्बूकृष्णयोः, वृक्षेषु हरितवर्णसद्भावेऽपि कविसम्प्रदाये श्यामहरितयोरभेदान्नानुपपत्तिः, जम्बूवृक्षस्य श्यामताप्रधानत्वाच्च । सुमेरोः शृङ्गविशेषे जम्बूवृक्षः, तस्य मूलाज्जम्बूनदी प्रवहति, तत्सम्बन्धादेव च जम्बूद्वीपमिदमिति पौराणिकवर्णनमस्या उपमाया मूलम् । मल्लिनाथेन तु जम्बूफलं कृष्णस्योपमानतया व्याख्यातम् । तत्रोपमानस्य परिमाणकृताल्पतादोषो दुर्निवारः । न च जम्बूफलं सुमेरुशृङ्गे तिष्ठतीति क्वचित्प्रसिद्धमित्यास्तां तावत् ।

अलं०—जयेनातिशयो लक्ष्यते, सादृश्यं चाक्षिप्यत इत्युपमा मल्लिनाथ आह । व्यतिरेक इति तु युक्तं भाति । श्रियं श्रियमिति लाटानुप्रासः । तदा तदा-इति यमकं छेकानुप्रासोऽपि । जिगाय जम्बूजनितेत्यादौ तु वृत्त्यनुप्रासः । अनुप्रासैरुपमायाः संसृष्टिरिति मल्लिनाथः ।

**स तप्तकार्तस्वरभास्वराम्बरः कठोरताराधिपलाञ्छनच्छविः ।**
**विदिद्युते वाडवजातवेदसः शिखाभिराश्लिष्ट इवाम्भसां निधिः ॥२०॥**

अ०—तप्तकार्तस्वरभास्वराम्बरः कठोरताराधिपलाञ्छनच्छविः सः वाडवजातवेदसः शिखाभिः आश्लिष्टः अम्भसां निधिरिव विदिद्युते ।

व्याक०—तप्तं कार्तस्वरमिव ( कर्म० ) भास्वरम् ( उपमा० ) अम्बरं यस्य ( बहु० ) स तप्तकार्तस्वरभास्वराम्बरः । भास्वरशब्दे भासते “ स्थेशभासपिसकसो वरच् ” । कठोरस्य ताराणाम् अधिपस्य ( ष० तत्पु०, कर्म० ) लाञ्छनम् इव ( तत्पु० ) छविः यस्य स कठोरताराधिपलाञ्छनच्छविः । यद्वा लाञ्छनस्यच्छविरिव च्छविर्यस्येत्युत्तरपदलोपः । लाक्षणिकपूर्वपदो बहुव्रीहिः । लाञ्छनमिति लाछिधातोर्ल्युडन्तम् वाडवस्य जातवेदसः वाडवजातवेदसः । आश्लिष्ट इति आङ्पूर्वात् श्लिष्यतेः क्तः । शिखाभिरित्येतस्य कर्तृपदम् । विदि-

द्युते-द्योततेर्लिट्, "द्युतिस्वाप्योः सम्प्रसारणम्" ।

व्याख्या०—तप्तम्-अग्नौ पुटपाकशोधितम्, * कार्तस्वरमिव सुवर्णमिव, भास्वरम्-दीप्यमानम्, पीतवर्णम्, अम्बरम् वस्त्रम्, यस्य तादृश , † कठोरस्य-पूर्णमण्डलस्य, ताराणाम्-नक्षत्राणाम्, अधिपस्य स्वामिन -चन्द्रमस , § लाञ्छनस्येव कलङ्कस्येव, ( कलङ्कच्छविसदृशी, ) छवि.-कान्ति , यस्य तथोक्त., श्यामवर्ण , स -कृष्ण , वाडवजातवेदस -वडवानलस्य, शिखाभि· ज्वालाभि , आश्लिष्ट -अभित संसृष्ट -व्याप्त , अम्भसाम्-जलानाम्, निधिरिव-आकरइव-समुद्रइवेति यावत्, विदिद्युते-बभासे ।

भावा०—भगवान् कृष्ण स्वयं श्यामवर्ण , पूर्णे चन्द्रमसि प्रतीयमानस्य श्यामवर्णस्य कुरङ्गस्येव तस्य कान्ति , तप्तस्वर्णसदृश भास्वरपीत च वस्त्र तेन धृतम् । ततस्तस्य तथा शोभा प्रतीयते स्म, यथा अभितो वाडवाग्निना संश्लिष्टस्य समुद्रस्य प्रतीयते । समुद्रोऽपि स्वय श्याम , वाडवजातवेद शिखाश्च पीता इति ।

अल०—उत्तरार्द्धोपात्ता समुद्रोपमा मुख्या । अभितो दृश्याना वाडवाग्निशिखानाम्, शरीरमभितो दृश्यमानस्याम्बरस्य च बिम्बप्रतिबिम्बभावः । शिखाना बहुत्वम्, अम्बरस्य तु एकत्व द्वित्व वा, तथापि भिन्नेषु शरीरभागेषु तस्य भेदेन ( बहुत्वेन ) प्रतीतेर्न वचनभेददोषः । वस्त्रेऽग्निप्रतिबिम्बतोक्तिरियं कथंचिदुद्वेजयतीव । पूर्वार्धोक्तमुपमाद्वयन्तु अङ्गम् ।

**रथाङ्गपाणेः पटलेन रोचिषामृषित्विषः संवलिताः विरेजिरे ।**
**चलत्पलाशान्तरगोचरास्तरोस्तुषारमूर्तेरिव नक्तमंशव ॥ २१ ॥**

अ०—रथाङ्गपाणेः रोचिषा पटलेन संवलिता ऋषित्विष नक्त तरो चलत्पलाशान्तरगोचरा तुषारमूर्तेः अंशवइव विरेजिरे ।

व्याक०—रथस्य अङ्गम् ( ष० तत्पु० ) पाणौ यस्य तस्य रथाङ्गपाणे "प्रहरणार्थेभ्य परे निष्ठासप्तम्यौ" इत्यनेन पाणे परनिपातः । चलता

* रुक्म कार्तस्वर जाम्बूनदमष्टापदोऽस्त्रियाम्-इति सुवर्णनामस्वमर ।

† कठोरौ पूर्णकठिनौ इति हैम. ।

§ कलङ्काङ्कौ-लाञ्छन च इत्यमर ।

पलाशानाम् ( कर्म० ) अन्तराणि ( ष० त० ) गोचर येषा ते चलत्पलाशा- न्तरगोचरा । गोचरशव्द ' गोचरसचर ' इत्यनेनाप्प्रत्ययान्तो निपात्यते । तरोरिति षष्ठ्या पलाशेन सम्बन्धादसमर्थत्वेऽपि देवदत्तस्य गुरुकुलमित्या- दिवत्समुदायेन सम्बन्धकल्पनात्समास । तुषारा मूर्ति यस्य तस्य तुषारमूर्ते । मूर्तिशब्दो व्याख्यात । सवलिता-वलते क्त । त्विष्धातो क्विपि त्विष । विरेजिरे-राजतेर्लिट्, " फणा च सप्तानाम् " इत्येत्वाभ्यासलोपौ ।

व्याख्या—रथाङ्गम्-चक्रम्, पाणौ-हस्ते, यस्य, तथाभूतस्य कृष्णस्य । रोचिषाम्-छवीनाम्, पटलेन-समूहेन, संवलिता -मिलिता., अपे.-नारदस्य, त्विष -कान्तयः, नक्तम्-रात्रौ, तरो -वृक्षस्य, चलताम्-कम्पमानानाम्, पलाशा- नाम् पत्राणाम्, *अन्तराणि-अवकाशप्रदेशा, गोचर'-आश्रय, येषा तादृशा, † तुषारमूर्ते -चन्द्रमस, अशवइव-किरणाइव- विरेजिरे-शुशुभिरे ।

भा०—श्यामस्य भगवत कृष्णस्य ‡ मूर्तावनुस्यूताया स्निग्धकृष्ण- प्रभाया उपरि अविदूरस्थितस्य नारदस्य शुभ्रा रश्मय पतिता, तयो समि- श्रणेन तथा च्छविर्दृश्यते स्म, यथा रात्रौ घनस्य वृक्षस्योपरि यदा चन्द्ररश्मय पतन्ति, तदा श्यामाना वृक्षपत्राणा रुचे अन्तराले दृश्याना चान्द्ररश्मीना च समिश्रणेन दृश्यते । उभयोर्भास्वरप्रभावच्छरीरत्वमेतेनोक्त भवति ।

अल०—उपमा । § कृष्णससक्तशुभ्रत्व साधर्म्यम् । कृष्णनारदरूपयो रामणीयक व्यङ्ग्यम् ।

---

* अन्तरमवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्ये । छिद्रात्मीयविनाबहिरवसर- मध्येऽन्तरात्मनि च ।

† तुषार शीतलः शीतो हिम. सप्तान्यलिङ्गका इत्यमरः ।

‡ मूर्तेर्निर्गत्य बहि प्रसरन्तस्तेजोऽवयवा अंशुरश्म्यादिशब्दैः, मूर्त्यनुस्यूता तु प्रभासमष्टिर्दीप्तिरुचिरोचिरादिशब्दैरुच्यत इति किरातार्जुनीये (२ सर्गे २ श्लोके) व्याख्यातमिहानुसन्धेयम् ।

§ वृक्षपलाशाना यद्यपि हरितत्वम्, तथापि श्यामहरितयोर्वर्णयोः कवि- सम्प्रदाये न भेद इत्यसकृदावेदितम् ।

प्रफुल्लतापिच्छनिभैरभीपुभि शुभैश्च सप्तच्छदपांशुपाण्डुभि ।
परस्परेण च्छुरितामलच्छवी तदेकवर्णाविव तौ बभूवतुः ॥ २२ ॥

अ०—प्रफुल्लतापिच्छनिभै च सप्तच्छदपांशुपाण्डुभि शुभै अभीपुभि परस्परेण च्छुरितामलच्छवी तौ तदा एकवर्णाविव बभूवतु ।

व्याक०—प्रफुल्लेन तापिच्छेन सदृशै. प्रफुल्लतापिच्छनिभै । † निभादीना नित्योत्तरपदताया अभिधानाद् विग्रहे न निभशब्दप्रयोगः, तेन अस्वपदविग्रह । प्रफुल्लेति 'फुल्ल विकसने' धातोः पचाद्यच् । क्षीरस्वामी तु फलधातो. निष्ठाया पूर्वम् "अनुपसर्गात् फुल्लक्षीवकृशोल्लाघा" इति फुल्लशब्द निपात्य तत प्रादिसमासमाह । तापिच्छस्य पुष्प तापिच्छम्, तापिच्छशब्दाद् वैकारिकेऽणि, तस्य 'पुष्पमूलेषु बहुलम्" इति लुक् 'द्विहीन प्रसवे सर्वम्' इत्यस्य नपुसकत्वम् । सप्त सप्तच्छदा (पर्वसु) यस्य स सप्तच्छदः, 'सख्याशब्दस्य वृत्तिविषये वीप्सार्थत्वम्' इति भाष्ये । तस्य पुष्पाणि सप्तच्छदानि तापिच्छवद् विकारार्थकप्रत्ययस्य लुक्, तेषा पांशुभिरिव पाण्डुभिः सप्तच्छदपांशुपाण्डुभि, "उपमानानि सामान्यवचनै" इत्यनेन समास । छुरिते अमले छवी ययोस्तौ च्छुरितामलच्छवी । छुरितेति छुर् धातो क्त. । एकः वर्णो ययोस्तौ एकवर्णौ । शुभै.-शोभते इगुपधत्वात् क । परस्परेण-"कर्मव्यतिहारे सर्वनाम्नो द्वे वाच्ये" इत्यनेन परशब्दस्य द्वित्वम् । "असमासवद्भावे पूर्वपदस्य सुप. सुर्वक्तव्य" सोर्विसर्गे तस्य कस्कादित्वात् स । सहयोगे प्रकृत्यादित्वाद्वा तृतीया । टावभावस्तु बाहुलकात् । अभीपुभि -हेतौ तृतीया ।

व्याख्या—प्रफुल्लम्-विकसितम्, ‡ तापिच्छम्-तमालपुष्पम्, तन्निभै.-तत्सदृशै च-किं च, ¶सप्तच्छदानाम्-सप्तपर्णाख्यवृक्षपुष्पाणाम्, पांशुवत्

---

. दन्त्यपाठोऽपि क्वचित्, उभयविधोऽयं शब्द, पाशु. पांसुरिति ।

† "स्युरुत्तरपदे त्वमी निभसङ्काशनीकाशप्रतीकाशोपमादयः" इत्यमरः, उत्तरपद च समासचरमावयवे इति व्याकरणे स्पष्टम् ।

‡ कालस्कन्धस्तमाल. स्यात्तापिच्छोऽपि इत्यमर ।

¶ सप्तपर्णो विशालत्वक्शारदो विषमच्छद. इत्यमरः ।

परागवत्, पाण्डुभि -श्वेतवर्णै , शुभ्रै -दीप्यमानैः, *अभीशुभि -रश्मिभि , परस्परेण-अन्योन्यम्, छुरिते-लिप्ते सम्भिन्ने, अमले-निर्मले, छवी-कान्ती, ययोस्तथाभूतौ, तौ-कृष्णनारदौ, तदा-अन्योन्याभिमुख्येन स्थितिकाले, एक-वर्णाविव-समानरूपाविव, बभूवतु -जातौ ।

भावा०—कृष्णनारदयो परस्परसम्मुखे स्थितत्वाद् भास्वरकान्तितया चैकैकस्य रश्मयोऽन्यस्य शरीररुचौ समक्ता , तेन च यद्यपि कृष्णनारदौ श्यामशुभ्रतया अत्यन्त भिन्नवर्णौ, तथापि एकवर्णाविव प्रतीतौ । कृष्णोऽपि नारदशरीररश्मिसम्बन्धाच्छुभ्रसङ्कीर्णकृष्णवर्ण , नारदोऽपि कृष्णशरीररश्मि-सम्बन्धात्कृष्णसङ्कीर्णशुभ्रवर्ण इत्येकवर्णता द्वयो सम्भाविता । 'उभय-प्रभामेलनादुभयोरपि सर्वाङ्गीणो गङ्गायमुनासङ्गम इव स्फटिकेन्द्रनीलमणि-प्रभामेलनप्राय कश्चिदेको वर्ण प्रादुर्बभूव ' इति मल्लिनाथ॰ । छव्योरभीषूणा चावयवावयविभावाद्भेदनिर्देश इति च मल्लिनाथ । वस्तुतस्तु ' मूर्तेर्बहिर्निर्गत्य प्रसरन्तस्तेजोऽवयवा अशव , मूर्त्यनुस्यूता तु कान्ति रोचिश्छविर्वा ' इति किरातार्जुनीयव्याख्यायामुक्त नेहापि विस्मर्तव्यम् । एकस्य च्छवौ परस्य रश्मिसम्बन्ध , तेन च्छवेरन्यथाभाव इति ।

अल०—इवशब्दप्रयोगादुत्प्रेक्षा मल्लिनाथ आह । वस्तुतो नैकवर्णत्वम् । अपि तु परस्परकान्तिच्छुरणादेकवर्णत्व सम्भाव्यत इति । यद्वा-इवशब्दोऽ-यमपूर्णताद्योतक , पूर्णतया एकवर्णता न गतौ, अपि तु कथञ्चिद्गतौ, एकत्र कृष्णवर्णप्राधान्यादपरत्र तु शुभ्रवर्णप्राधान्यात् । अस्मिन् मार्गे स्व रूप परित्यज्य रूपान्तरस्वीकार इति तद्गुणालङ्कार ।

**युगान्तकालप्रतिसंहृतात्मनो जगन्ति यस्यां सविकाशमासत ।**
**तनौ ममुस्तत्र न कैटभद्विषस्तपोधनाभ्यागमसम्भवा मुद ॥२३॥**

अ०—युगान्तकालप्रतिसंहृतात्मन कैटभद्विष यस्या तनौ जगन्ति सविकाशम् आसत, तत्र तपोधनाभ्यागमसम्भवा मुद॰ न ममु॰ ।

व्याक०—युगानामन्त॰ युगान्त॰, तस्य काले प्रतिसंहृता आत्मान येन ( यद्वा—प्रतिसंहृत आत्मा येन ) तस्य युगान्तकालप्रतिसंहृतात्मन ।

---

*अभीषु प्रग्रहे रश्मौ—इत्यमर ।

सह्रतेति सम्पूर्वाद् हरते. क्त । कैटभ द्वेष्टि इति तस्य कैटभद्विप । द्विपे कर्तरि क्विपि द्विट्, उपपदसमास । विकाशेन सह सविकाशम्, अव्ययीभाव, ' अव्ययीभावे चाकाले " इति सहस्य सादेशः । तपोधनस्य अभ्यागमात् सम्भवः यासा ता, तपोधनाभ्यागमसम्भवा, " अवर्ज्यो बहुव्रीहिर्जन्माद्युत्तरपदः " इति वामनसूत्रेण व्यधिकरणपदो बहुव्रीहिः । अथवा—सम्भवन्तीति सम्भवा. पचाद्यच् तपोधनाभ्यागमात्सम्भवा इति पञ्चमीतत्पुरुष पञ्चमी तु " भुव' प्रभव " इत्यनेनापादानत्वात् । योगविभागात् समास । अभ्यागमशब्द. ' अभि ' ' आङ् ' एतत्पूर्वाद् गच्छतेर्घनि निष्पन्न, आसत-आस्ते' कर्तरि लङ् । मुद -मोदतेर्भावे क्विप् ।

व्याख्या—युगानाम्-कृतत्रेतादीनाम्, अन्त -अवसानम्-प्रलय, तस्य काले-अवसरे, प्रतिसह्रता -स्वस्मिन् समावेशिता, आत्मान -जीवाः, येन तस्य, यद्वा-प्रतिसह्रत -विस्तार परित्यज्यैकता नीतः, आत्मा-` स्वरूप येन तथाभूतस्य कैटभद्विप -कैटभारे -नारायणस्य, यस्याम्, तनौ-शरीरे, जगन्ति-भुवनानि, सविकाशम्-सावकाशम्-असम्बाधम्, आसत-अतिष्ठन्, तत्र तनौ, तपोधनस्य-तप एव धन यस्य तस्य नारदस्य, अभ्यागमात्-स्वसमीपागमनात्, सम्भव -उत्पत्ति, यासा तादृश्य, मुद -हर्षा, न ममुः-न सम्यक् सन्निविष्टा -अतिरिच्यन्ते स्मेत्यर्थ ।

भा०—यदाय भगवान् कृष्ण स्वलीलया प्रलये स्वरूपभूत जगदुपसहरति, तदा सर्वाणीमानि दृश्यानि जगन्ति अस्यैवोदरे (शरीरान्त तिष्ठन्ति) न च तत्र तिष्ठतामनन्तब्रह्माण्डाना कोऽपि सम्बाधो भवति, सावकाश सर्वाणि जगन्ति तत्र शेरते-ततोऽपि बह्वतिरिच्यते तदुदरम् । ( एतेन तनोरतिविशालत्वम्-अनन्तत्व ख्यापितम् ) पर तस्यामेव तनौ नारदागमनजन्यो हर्षो न कथमपि समाविष्टोऽभूत् । स तु तनोरतिरिच्य बहिरपि प्रवहति स्मेव । अनेन हर्षस्यानन्तब्रह्माण्डातिरेककथनादतुलत्वमुक्त भवति ।

अल०—मुदामन्त　　सबन्धेऽप्यसबन्धकथनात्सबन्धातिशयोक्तिरिति

---

* भगवत्स्वरूपभूतमेव जगत्, स एव यदा स्वरूप विस्तारयति, तदा भेदेन जगत् दृश्यते, यदा तूपसहरति, तदैकरूप व्यवतिष्ठते इति ।

मल्लिनाथ आह । पृथुलादप्याधारादाधेयस्याधिक्यमुक्तमित्यधिकालङ्कारप्रकरणे कुवलयानन्द उदाहृतमिदम् । एतावद्वर्णोक्त्या नारदविषया भगवतो रतिर्व्यङ्ग्या ।

**निदाघधामानमिवाधिदीधितिं मुदा विकाशं मुनिमभ्युपेयुषी ।**
**विलोचने बिभ्रदधिश्रितश्रिणी स पुण्डरीकाक्ष इति स्फुटोऽभवत् ॥२४॥**

अ०—निदाघधामानमिव अधिदीधितिम् मुनिम् अभि मुदा विकाशम् उपेयुषी अधिश्रितश्रिणी विलोचने बिभ्रत् स पुण्डरीकाक्ष इति स्फुट अभवत् ।

व्याक०—निदाघ धाम यस्य तम् निदाघधामानम् । अधिका दीधितिर्यस्य तम् अधिदीधितिम् । दीधितिरिति दीधीङ्धातोः सञ्ज्ञायां क्तिच् । अप्रहादौ पाठस्वीकारादिण्निषेधाभाव । अधिश्रिता श्री याभ्यां ते अधिश्रितश्रिणी, विलोचनविशेषणमेतत् । अत एव नपुंसकत्वात् "इकोऽचि विभक्तौ" इति नुम् । अधिश्रितेति श्रयते क्त । पुण्डरीके इव अक्षिणी यस्य स पुण्डरीकाक्ष । "बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्" विकाशम्-काशेर्घञ् । उपेयुषी-"उपेयिवाननाश्वाननूचानश्च" इत्यनेन एते· क्वसुप्रत्ययान्तमिदं रूपम् । उपेयाय-इत्युपेयिवद् । ततो द्वितीयाद्विवचने, "नपुंसकाच्च" इति आविभक्ते शीत्यादेशे भत्वात् सम्प्रसारणम् । बिभ्रत्-बिभर्ते शतृप्रत्यय । "उभे अभ्यस्तम्" इत्यभ्यस्तत्वाद् "नाभ्यस्ताच्छतु" इति नुम् न । विलोचने-लोचृधातोः करणे ल्युट्, भरणकर्मेदम्, स्फुटशब्दे-स्फुटते इगुपधत्वात् कः । मुनिम् अभि "अभिरभागे" इत्यभे लक्षणे, इत्थम्भूताख्याने वार्थे कर्मप्रवचनीयत्वात्, तद्योगे द्वितीया, मुदा-हेतौ तृतीया ।

व्याख्या—*निदाघम्-उष्णम्, धाम-तेज, यस्य तथाविधम्-सूर्यमिव-सूर्यसदृशम्, अधिदीधितिम्-अधिकतेजसम्, मुनिम् अभि-नारदमभिलक्ष्य नारद-सम्मुखे, मुदा-हर्षेण, विकाशम्-उत्फुल्लताम्, उपेयुषी-प्राप्तवती, अत एव अधिश्रिता-प्राप्ता, श्री·-शोभा, याभ्यां तथाभूते विलोचने-नेत्रे, बिभ्रत्-धारयन्, स -कृष्णाख्यो नारायण , पुण्डरीकाक्ष इति पुण्डरीकाक्षपदवाच्यः, स्फुट - अभवत्-स्पष्ट जात ।

भा०—भगवत कृष्णस्य 'पुण्डरीकाक्ष·' इति नाम प्रसिद्धम्, तत्तस्मिन्

* निदाघो ग्रीष्मकाले स्यादुष्णस्वेदाम्बुनोरपि इति विश्व· ।

काले अनुगतार्थमभून् । कमलसदृशे नेत्रे यस्येति तदर्थः, कृष्णनेत्रयोश्च कमलसादृश्य तदा अनुभूतम् । कमल हि सूर्ये समुखमागते विकास प्राप्य कामपि श्रिय धत्ते, कृष्णनेत्रे अपि सूर्यसदृशे तेजस्विनि नारदे समुखस्थिते हर्षेण विकास प्राप्य विशिष्टा शोभा गते इति ।

अल०—विभ्रत्-स्फुटोऽभवदिति पदार्थहेतुक काव्यलिङ्गम् । निदाघबा-मानमिवेत्युपमा तदङ्गमिति मल्लिनाथ । अत्रापि नेत्रविकासादिना मुनिविषया रतिर्व्यङ्ग्या । हर्षस्तु न व्यङ्ग्य, मुदा इति स्वशब्देनोपादानात् ।

**सित सितिम्ना सुतरां मुनेर्वपुर्विसारिभि सौधमिवाथ लम्भयन् ।**
**द्विजावलिव्याजनिशाकरांशुभि शुचिस्मिता वाचमवोचदच्युत ॥२५॥**

अ०—अथ अच्युत विसारिभि द्विजावलिव्याजनिशाकरांशुभि सितं मुनेः वपुः सौधमिव सुतरा सितिम्ना लम्भयन् शुचिस्मिता वाचम् अवोचत् ।

व्याक०—द्विजानाम् आवलि ( ष० तत्पु० ) व्याजो यस्य, स चासौ निशाकरश्च, ( कर्म० ) तस्य अंशुभिः द्विजावलिव्याजनिशाकरांशुभि । अथवा द्विजावलेर्व्याजेन निशाकर, तस्य अंशुभिरिति विग्रहीतव्यम्, त्रावलिशब्दे षष्ठी राहो शिर इत्यादिवन्, व्याजेनेति तृतीया तु प्रकृत्यादित्वाद् बोध्या । समासश्च 'तृतीया' इति योगविभागात् । द्विर्जायन्त इति द्विजा, जनेर्ड । निशाकरशब्दे निशोपपदात् करोते "दिवाविभानिशा ." इयादिना ट । शुचि स्मित यस्या सा शुचिस्मिता । स्मितशब्दे स्मयते भावे क्त. । विसारिभि -सरतेः "बहुलमाभीक्ष्ण्ये" इत्यनेन णिनिः । सौधम्-सुधा अस्यास्तीति ज्योत्स्नादित्वाद् मत्वर्थायोऽण् । सुतरामिति सुशब्दात् तरप् प्रत्यय, तत "किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे" इत्यामु । सितिम्ना-सितस्य भाव इति सितशब्दाद् इमनिच्, लम्भनस्य प्रयोज्यकर्तरि तृतीया, सितिमा ( वपु ) लभते, लभमान तम् अच्युत प्रेरयति इति अच्युतः सितिम्ना लम्भयति । "गतिबुद्धि " इत्यादिसूत्रेण सितिम्नः कर्मत्व तु न शङ्क्यम्, लभेरगत्यर्थत्वात्, प्राप्तिर्हि लभेरर्थ । यद्यपि, प्राप्तिर्नाम सयोग, तत्रापि गतिरस्ति, गतिमन्तरेण सयोगासभवात्, तथापि सा गतिरुपसर्जनीभूता । तस्मान्न लभेर्गत्यर्थता मन्यत इति तद्योगे प्रयोज्यकर्तुः कर्मत्व न । यदा तु

प्राप्ता गतिरपि प्राधान्येन विवक्ष्यते, तर्हि भवत्येव कर्मत्वमिति अत एवोक्त वामनेन "लभेर्गत्यर्थत्वात् णिच्यणौ कर्तु कर्मत्वाकर्मत्वे" इति । लम्भयन्- लभतेर्णिजन्ताल्लक्षणे शतृप्रत्यय, "लभेश्च" इति नुमागमः । अवोचत्- ब्रुवेर्लुङ्, वच्यादेशः, "वच उम्" इत्युमागम, गुण ।

व्याख्या—अथ-उभयोरुपवेशनानन्तरम्, अच्युत -श्रीकृष्णाख्य, विसारिभि -भूयो भूय प्रसरद्भि, *द्विजावलि †-दन्तपङ्क्ति, मेव व्याज - कपट यस्य तद्रूपः, यो निशाकर -चन्द्र, ( अथवा द्विजावलिव्याजेन- दन्तपङ्क्तिमिषेण, स्थित, निशाकर ) तस्य अंशुभि -किरणै, सितम्- स्वभावेन शुभ्रम्, मुने नारदस्य, वपु शरीरम्, सौधमिव-प्रासादमिव, सुतराम्-अत्यन्तम्, सितिम्ना—धावल्येन, लम्भयन्-प्रापयन्, स्वभावत धवलमपि अतिधवल कुर्वन्, शुचि-उज्ज्वलम्, स्मितम्-मन्दहासः, यत्र तथाभूताम्, वाचम्-वाणीम्, अवोचत्-उक्तवान् ।

भा०—अथ सुखोपविष्टे नारदे तदागमनकारणजिज्ञासया भगवान् कृष्णो वक्तुमारभत । स्मितपूर्वाभिभाषी हि भगवानिति । शुचि स्मित तस्य तदा प्रादुर्भूतम्, तेन दन्तकिरणा नि सृता । अत्युज्ज्वल्यादेव सम्भाव्यते स्म, भगवतो दन्ता इमे न दन्ताः, अपि तु दन्तच्छलेन चन्द्र एवाय स्थित । ततश्चात्युज्ज्वलैस्तत्किरणै सम्पर्कात् स्वभावशुभ्रमपि नारदस्य वपुरतिशयेन शुभ्रता गतम् । यथा हि कश्चिद्धवलमपि प्रासाद पुन सुधालेपनादत्यन्त धव- लयेत्, तथा शुभ्रमपि मुनिशरीर भगवता कृष्णेनातितरा शुभ्रता नीतमिति ।

अल०—सौधमिवेत्युपमा । सितिम्ना लम्भयन्निति सितिम्नोऽसम्बन्धेऽपि सम्बन्धोक्त्या सम्बन्धातिशयोक्ति । द्विजावलिव्याजेति व्याजशब्देन दन्तेषु दन्तत्वमपह्नुत्य चन्द्रत्वस्यारोपात्कैतवापह्नुति । एषा परस्पर निरपेक्षतया मसृष्टिरिति मल्लिनाथ ।

**हरत्यघ सप्रति हेतुरेष्यत शुभस्य पूर्वाचरितै कृत शुभै ।**
**शरीरभाजा भवदीयदर्शन व्यनक्ति कालत्रितयेऽपि योग्यताम् ॥२६॥**

---

* दन्तविप्राण्डजा द्विजा —इत्यमर ।

† वीथ्यालिरावलि पङ्क्ति श्रेणी—इत्यमर ।

अ०—भवदीयदर्शन शरीरभाजा कालत्रितये अपि योग्यता व्यनक्ति, (तथा हि) सम्प्रति अघ हरति, एष्यत शुभस्य हेतुः, ( भवति ) पूर्वाचरितै शुभै. कृतम् ( अस्ति ) ।

व्याक०—भवदीय दर्शनं भवदीयदर्शनम्, भवदीयशब्दे भवत इदमिति कर्मषष्ठ्यन्ताद् " वृद्धाच्छ " त्यदादित्वाद् वृद्धत्वम्, शरीर भजन्ते शरीरभाज, तेषाम्, " भजो ण्वि " उपपदसमास । कालाना त्रितये कालत्रितये, त्रितय इति त्रिशब्दात् " सख्याया अवयवे तयप् " । पूर्वम् आचरितै पूर्वाचरितै " सुपा " इति समास । आचरितशब्दो निष्ठान्त । योग्यताम्-युजेः " ऋहलोर्ण्यत् " ततो भावे तल्, व्यनक्ति-विपूर्वाद् ' अञ्जू ' धातो रौधादिकाद् वर्तमाने लट् । एष्यत -आङ्पूर्वाद् एतेर्लट्, तस्य शत्रादेश ।

व्याख्या—हे नारद ! भवदीयदर्शनम्-तव साक्षात्कार, शरीरभाजाम्-द्रष्टॄणा प्राणिनाम्, कालत्रितयेऽपि-वर्त्तमानादिषु त्रिष्वपि कालेषु, योग्यताम्-पवित्रताम्-पुण्ययोगम्, व्यनक्ति-प्रकटयति, तथा हि-सम्प्रति-वर्तमानकाले, अघम्-पापम्, हरति-दूरीकरोति, ( अनेन वर्तमानकालिकी-योग्यतोक्ता ) एष्यत -आगमिष्यत -जनिष्यमाणस्य, शुभस्य-कल्याणस्य, हेतु -कारणम्, भवति । ( अनेन भविष्यत्कालिकी योग्यता दर्शिता ) पूर्वाचरितै -पूर्वजन्मनि, इह जन्मन्यपि वा इत पूर्वम्, अनुष्ठितै शुभैः-शुभकर्मभि, कृतम्-सम्पादितम्, अस्ति ( अनेन भूतकाले योग्यता-प्रोक्ता ) ।

भा०—भगवान् कृष्णो वक्ति । भगवन्नारद ! भवादृशा दर्शने असाधारण किमपि महत्त्वम् । अनेन हि भवद्दर्शनेन दर्शनकाले द्रष्टॄणा पापानि नाश्यन्ते, पुण्य चोत्पाद्यते । अग्रेपि शुभयोग सूच्यते । पूर्वं यैः पुण्य कृतम्-तैरेव दर्शन लभ्यते । तेन भूते वर्तमाने भविष्यति चेति त्रिष्वपि कालेषु पुण्ययोगो ज्ञापितो भवति भवद्दर्शनेन । वर्तमाने भविष्यति च पुण्यजनकत्वं ज्ञापकत्व च, भूते तु ज्ञापकत्वमेव दर्शनस्य । 'अनाप्तपुण्योपचयैर्दुरापा ' इत्याद्यानारवेरुक्तिरत्रोपजीवितेत्युक्त प्राह् ।

अल०—कालत्रयेपि योग्यताव्यञ्जनस्य हेतुरूपा समर्थनात्काव्यलिङ्गमिति मल्लिनाथ । मुनिविषयो रतिभावोऽत्र प्राधान्येन व्यङ्ग्य इति भावध्व-

निरत्र मम्मटाचार्येणोक्त' ।

**जगत्यपर्याप्तसहस्रभानुना न यन्नियन्तु समभावि भानुना ।**
**प्रसह्य तेजोभिरसख्यता गतैरदस्त्वया नुन्नमनुत्तम तम ॥ २७ ॥**

अ०—जगति अपर्याप्तसहस्रभानुना भानुना ( अपि ) यत् ( तम ) नियन्तु न समभावि, अनुत्तमम् अद तमः असख्यता गतैः तेजोभि त्वया प्रसह्य नुन्नम् ।

व्याक०—न पर्याप्ता सहस्र भानव यस्य तेन अपर्याप्तसहस्रभानुना, पर्याप्तेति परिपूर्वाद् आप्नोते क्त । अविद्यमानम् उत्तम यस्मात् तद् अनुत्तमम्, "नञोऽस्त्यर्थाना वाच्यो वा चोत्तरपदलोप." । उत्तमशब्दे उदित्यव्ययाद् "अतिशायने तमविष्ठनौ" । न संख्या येषा तानि असख्यानि, तेषा भावस्तत्ता, ताम् असख्यताम् । नियन्तुम्-निपूर्वाद् यच्छतेस्तुमुन् । समभावि-सम्पूर्वाद् भवतेः भावे लुङ्, सम्पूर्वो भवतिरिह शक्यार्थे । गतै -कर्तरि क्तान्तमिदम्, प्रसह्य-प्रपूर्वात् सहेर्ल्यप् । नुन्नम्-' नुद प्रेरणे ' धातो क्त, " नुदविदोन्दत्रा-घ्राह्रीभ्योऽन्यतरस्याम् " इति विकल्पेन नत्वम् । भानुना-नियमनकर्तरि तृतीया । तेजोभि , त्वयेति च नोदनस्य करणे कर्तरि च तृतीया ।

व्या०—जगति, अपर्याप्ता -अपूर्णा , ( * अपरिच्छिन्ना -इति मल्लिनाथ ) सहस्रम्-सहस्रसंख्याका , ‡ भानव -रश्मय , यस्य तादृशेन भानुना सूर्येण, यत्-तम , नियन्तुम्-निवारयितुम्, न समभावि-न शेके-न पारितम्, अनुत्तमम्-सर्वापेक्षयाधिकम्, अद , तम -मोहात्मक आन्तरोऽन्धकार , असख्यताम्-अगणनीयताम्, गतै -प्राप्तै -अगणनीयै , तेजोभि -धामभि -ज्ञानरश्मिभिः, त्वया-भवता, प्रसह्य-बलात्, नुन्नम्-छिन्नम् नाशितम् ।

भा०—भगवन्नारद ! सूर्येण केवलो बाह्यान्धकार एवापसार्यते, आन्तर मोहाख्यमन्धकारमपनेतु तु न सूर्यः शक्त , भवता तु आन्तरमपि तमो बलान्नाशितमिति सूर्यापेक्षयाप्युत्कृष्टो भवान् । तत्र हेतुरुच्यते-सूर्यस्य किरणा यद्यपि बहव , तथापि ते सहस्रमिति परिच्छिन्ना एव, अत एवानन्ते जगति

---

* अपरिच्छिन्नै अनन्तैरपि किरणैर्यत्तमो न नुन्नमिति तदाशय' ।

‡ भानवोऽर्कहराशव —इति वैजयन्ती ।

सर्वत्र पर्याप्तु न शक्नुवन्ति । भवतस्तु तेजासि असख्यातानि-इति भवान् सर्वमन्धकार निवर्तयितु शक्त । मोहाख्यतमोविनाशकत्वादिह ज्ञानस्यैव तेजस्त्वमुक्त द्रष्टव्यम् । तस्य चासख्यातत्वमनन्तत्वमेव । तथा चानन्तेन ज्ञानेन समूलो मोहस्त्वयापसारित इति फलति ।

अल०—सूर्यापेक्षया नारदस्य व्यतिरेको व्यङ्ग्य । तम शब्देन मोहस्य, तेज शब्देन च ज्ञानस्याध्यवसितत्वादतिशयोक्ति । मुनिविषया रतिस्तु सर्वत्रास्मिन् प्रकरणे व्यङ्ग्या । इह सूर्यकिरणाना जगत्यपर्याप्तत्व विधेयमपि समासे गुणीकृतमिति विधेयाविमर्शो दोषः । मल्लिनाथरीत्या व्याख्याने तु न दोष, पर 'तेजोभिरसख्यता गतै' इत्युक्ते स्वारस्याभाव ।

कृत प्रजाक्षेमकृता प्रजासृजा सुपात्रनिक्षेपनिराकुलात्मना ।
सदोपयोगेऽपि गुरुस्त्वमक्षयो निधि श्रुतीनां धनसम्पदामिव ॥२८॥

अ०—प्रजाक्षेमकृता सुपात्रनिक्षेपनिराकुलात्मना प्रजासृजा त्व धनसम्पदामिव श्रुतीना सदा उपयोगे अपि अक्षय गुरुः निधि कृत ।

व्याक०—प्रजायाः क्षेम करोति इति तेन प्रजाक्षेमकृता । करोते कर्तरि क्विप्, तुगागमश्च । प्रजेति-व्याख्यातम् । सु ( शोभने ) पात्रे ( प्रादिस० ) निक्षेपेण ( तत्पु० ) निराकुल ( तत्पु० ) आत्मा यस्य ( बहु० ) तेन सुपात्रनिक्षेपनिराकुलात्मना । निक्षेपेति निपूर्वात् क्षिपतेर्भावे घञ् । प्रजा सृजतिइति प्रजासृड्, तेन प्रजासृजा । सृजे क्विप्, कर्तरि तृतीया । अविद्यमान क्षयो यस्य स अक्षय, क्षय इति क्षिधातोः "एरच्" । सदा-सर्वस्मिन् काले इति सर्वशब्दात् "सर्वैकान्यकियत्तद काले दा" । तस्मिन् परे च 'सर्वस्य सोऽन्यतरस्या दि" इत्यनेन सर्वस्य सादेश । उपयोगे इति उपपूर्वाद् युनक्तेर्घञ् । निधि -निपूर्वाद् दधाते "उपसर्गे घो किः" । धनसम्पदाम्, श्रुतीनाम्- उभे अपि षष्ठ्यौ निधिसम्बन्धे ।

व्याख्या—*प्रजानाम्-जनानाम्, (पक्षे-सततीनाम) †क्षेमम्- कुशलम्- करोतीति तथाभूतेन, सुपात्रे ‡ विश्वासयोग्यपुरुषे, (पक्षे कटाहादौ दृढभाजने),

* प्रजा स्यात् सततौ जने-इत्यमर । † कुशल क्षेममस्त्रियाम् इत्यमर ।
‡ योग्यभाजनयो पात्रम्-इत्यमरः ।

निक्षेपेण-निधानेन-स्थापनेन, निराकुलः-निश्चिन्त -स्वस्थ., आत्मा-अन्त करणम्, यस्य तथाभूतेन, प्रजासृजा-ब्रह्मणा, (पक्षे पुत्रवता च ) त्वम्-नारद , धनसंपदामिव-धनसंपत्सदृशीनाम्, श्रुतीनाम्-वेदानाम्, सदा-सर्वदा, उपयोगेऽपि व्यवहरणेऽपि, (पक्षे दानभोगाभ्या व्ययेऽपि) अक्षय -अविनश्वर , (एकत्र आम्नानाद्, अपरत्रानन्त्यात्) गुरुः-उपदेष्टा, (पक्षे महान्) निधि कोश', कोशस्थापनस्थानम्, कृतः-विहित ।

भावा०—यथा कश्चिद्बहुसतति पुरुषो भवेत्, स च स्वपुत्राणा क्षेममिच्छेत्, स स्वशक्त्या तावन्तमर्थराशिम् (निधिम्) अर्जयति, यस्य तत्पुत्रै सततं दानभोगादियूपभोगे क्रियमाणेऽपि न क्षयो भवेत् । त च निधि स दृढे *कटाहादौ निक्षिप्य सुस्थाने स्थापयित्वा निश्चिन्तो भवति, तथैव भगवता ब्रह्मणापि सर्वासा स्वप्रजाना हितमिच्छता तदर्थं श्रुतिसमूहरूपा सपदर्जिता, (तपस्तप्त्वा परमेश्वरात्प्राप्ता) सेय श्रुतिसपदपि तादृशी या सर्वाभि प्रजाभिरुपयुज्यमानापि न क्षय याति, यास्यति वा, (विद्याया उपभोगे वर्धनशीलत्वात्) तस्या निधानार्थं भवानेव (नारद एव) पात्रत्वेन ब्रह्मणा स्वीकृत । त्वयि च ता सपद निधाय स निश्चिन्तोऽभूत्, अयमेव संप्रदायप्रवर्तनेन श्रुतिसपदमिमा सम्यक् पास्यतीति । (निधिस्थाने निधिशब्दप्रयोग तादर्थ्यलक्षणामूलक । (यद्वा-निधीयतेऽस्मिन्निितिनिधिरित्यधिकरणसाधनो द्रष्टव्य ) । एव च श्रुतिसप्रदायप्रवर्तनेन धर्माधर्मव्यवस्थापको भवान् दुर्लभदर्शन एव लोकानामिति ।

अल०—इह 'प्रजासृजा' 'सुपात्रनिक्षेप' इत्यादि शब्दमात्रमेव समानम्, न तु कश्चिदनुगत साधारणो धर्म उपमानोपमययोरिति श्लेष एवालकार इति मल्लिनाथ.। काव्यप्रकाशकारादिभिस्तु शब्दमात्रसाम्येऽप्युपमा स्वीकृता । तथा चात्र धनसपद श्रुतेश्चोपमा वाच्या, नारदस्य दृढपात्रस्य च व्यङ्ग्येति ।

**विलोकनेनैव तवामुना मुने कृते कृतार्थोऽस्मि निवर्हितांहसा ।**
**तथापि शुश्रूषुरहं गरीयसीर्गिरोऽथवा श्रेयसि केन तृप्यते ॥ २९ ॥**

अ०—(हे) मुने (यद्यपि) निवर्हितांहसा अमुना तव विलोकनेनैव (अहम्) कृतार्थं कृत. अस्मि, तथा अपि अहं (तव) गरीयसीः गिर शुश्रूषु अस्मि, अथवा

---

* पुरा भारते धनरक्षणस्येयमेव प्रथासीत् ।

श्रेयसि केन तृप्यते ।

व्याक०—निर्वार्हितम् अह येन तेन निर्वार्हिताहसा, निर्वार्हितेति निपूर्वा-चौरादिकाद् वर्हयते क्त । कृत अर्थः यस्य स कृतार्थ । अतिशयेन गुर्वा गरीयसी, गुरुशब्दादीयसुन्, "प्रियस्थिर " इति गुरुशब्दस्य गरादेश । शुश्रूषु -श्रोतुमिच्छुः इति शृणोते सन्नन्ताद् उ । 'उगितश्च" इति ङीप् । गिर इति "न लोका " इति षष्ठीनिषेधात् शुश्रूषणकर्मणि द्वितीया। श्रेयसि-प्रशस्यशब्दादीयसुन् "प्रशस्यस्य श्र" इति श्रादेश, विषयसप्तमी । तृप्यते इति तृप्-धातो कर्मणि लट् । केनेति तत्कर्तरि तृतीया । विलोकनेनेति कृत इत्यस्य कर्तरि तृतीया । अहमिति तत्कर्मणि प्रथमा । तवेति विलोकनकर्मणि षष्ठी *अथवेति निपातसमुच्चयोऽत्र प्रसिद्धौ, यद्वा-पक्षान्तर एव ।

व्या०—हे मुने !-हे नारद ! यद्यपि, निर्वार्हितम्-नाशितम्, †अह -पापम्, येन, तादृशेन अमुना, तव, विलोकनेन-दर्शनेनैव, अहम्, कृतार्थ -कृतकृत्य., कृत, अस्मि, तथापि गरीयसी.-अतिशयेन गुर्वर्थाः, तव गिर -वाच ,शुश्रूषु -श्रोतुमिच्छु, अस्मि, नैतदाश्चर्यम्, अथवा-एतत् प्रसिद्धम्, यत् श्रेयसि-कल्याणविषये, केन, तृप्यते-मतुष्यते, न केनापीत्यर्थः । यद्वा-तथापि श्रोतु-मिच्छुरस्मीत्यहो, आश्चर्यमेतत्, अथवा-पक्षान्तरे, नैव वा आश्चर्यम्, यत श्रेयसि केन तृप्यते इति ।

भावा०—भगवान् कृष्णो वक्ति-मुने ! नारद ! भवद्दर्शनेनैवाह कृतार्थः, यतो दर्शनमिद सर्वाणि दुरितानि दूरीकरोति तथापि मम सतोषो नास्ति, यतोऽह गौरवयुता भवद्वाचोऽपि श्रोतुमिच्छामि । नात्र मम दोष । स्वभाव एवाय जनानाम्, यत्ते श्रेय प्राप्तौ न तृप्यन्ति, अधिकमधिक श्रेयो वाञ्छन्ति इति । तथा च यथा आगमनकृपा भवता कृता तथा किमप्युपदिश्य कृतार्थ-नीय इति ।

अल०—विशेषस्य सामान्येन समर्थनादर्थान्तरन्यास । 'भवता किमपि वक्तव्यम्' इत्यर्थस्य भङ्ग्यन्तरेण कथनात् पर्यायोक्तम् ।

---

* अथवेति पक्षान्तरप्रसिद्ध्यो -रिति गणव्याख्यानम् । †कलुष वृजिनैनोघमहो दुरितदुष्कृतम् इति पापनामस्वमर ।

**गतस्पृहोऽप्यागमनप्रयोजन वदेति वक्तु व्यवसीयते यया ।**
**तनोति नस्तामुदितात्मगौरवो गुरुस्तवैवागम एष धृष्टताम् ॥३०॥**

अ०—गतस्पृह. अपि ( त्वम् ) आगमनप्रयोजन वद-इति यया वक्तु व्यवसीयते, ता न धृष्टताम् उदितात्मगौरव गुरु एष तव आगम एव तनोति ।

व्याक०—गता स्पृहा यस्य स गतस्पृह, उदितम् आत्मनः गौरव येन ( यस्माद्वा ) स उदितात्मगौरव । उदितमिति वदते क्त, " वचिस्वपि " " इत्यनेन संप्रसारणम् । यद्वा-उत्पूर्वकादेते क्त । गौरवम्-गुरुशब्दाद् युवादित्वाद् भावेऽण् । वदेति प्रार्थनाया लोट् । त्वमिति कर्ताध्याहार्य । व्यवसीयते-' वि 'अव ' एतत्पूर्वात् ' षोऽन्तकर्मणि ' धातोर्भावे लट्, " घुमास्था " " इतीत्वम् । ययेत्येतत्कर्तृपद तृतीयान्तम् । धृष्टताम्-धृषे क्तान्ताद् भावे तल् । आगम. गम् धातोः " ग्रहवृदृनिश्चिगमश्च " इत्यनेन ' अप् ' । तनोति-' तनु-विस्तारे ' लट् ।

व्याख्या—गतस्पृह.-वीतरागतया निरभिलाषोऽपि, त्वम्, आगमनस्य-इह प्राप्ते., प्रयोजनम्-उद्देश्यम्, वद-कथय, इति वक्तुम्-कथयितुम्-प्रष्टुम्, यया-धृष्टतया, व्यवसीयते-उद्यम्यते, ताम्, न -अस्माकम्, धृष्टताम्-वैयात्यम्, उदितम्-प्रकटितम्, आत्मन -मम, गौरवम्-महिमा येन तथोक्त, यद्वा-उदितम्-उत्पन्नम्, आत्मनो गौरवम, यस्मात्तथोक्त., गुरु.-महान्-गौरवोत्पादक, एष, तव, आगम -आगमनमेव, तनोति-विस्तारयति-उत्पादयति ।

भावा०—भगवन् नारद ! भवन्त प्रति यद्वय पृच्छाम ' अत्र भवत-आगमने कि प्रयोजनम् ? तन्निगद्यताम् ' इति, सैषा अस्माक धृष्टता । यतो भवान् वीतराग, न किमपि जगति भवत करणीयम्, अतो न भवत प्रयोजन सभाव्यते । वीतराग प्रति प्रयोजनप्रश्नोऽवश्य धृष्टतैव, पर क्षम्यताम्, सेय धृष्टता त्वदागमनेनैवोत्पादिता, वीतरागाणा प्रयोजनशून्याना क्वचिद्गमनमप्याश्चर्यकरम् । ततश्च महत्त्वास्पदेन भवदागमनेन यदस्मासु गौरव जनितम्, द्योतित वा, तेन वय तथा प्रगल्भा जाता -यत्प्रयोजन प्रष्टुमप्यस्माक जिह्वा प्रसरति । ज्ञातेऽपि नि स्पृहत्वे न प्रयोजनशून्या प्रेक्षावत्प्रवृत्तिरिति आगमने किमपि प्रयोजन स्यादेव इति विचारेण प्रश्ने प्रवृत्तिर्जायत एवेति मल्लिनाथ ।

अल०—अपिर्विरोधद्योतक तेन विरोधाभास । आगमनप्रयोजन पृच्छामि-इत्यर्थस्य वैचित्र्येण उपन्यसनात् पर्यायोक्तम् । 'निरास्पद प्रश्नकुतूहलित्वम्' इति भारवेरुक्तिरत्रोपजीविता, पर न तावत्सौकुमार्यमत्र । आगमन-प्रयोजन वद-इति स्पष्टोक्त्या तस्योपमर्दादिति ।

इति ब्रुवन्त तमुवाच स व्रती न वाच्यमित्थ पुरुषोत्तम त्वया ।
त्वमेव साक्षात्करणीय इत्यत किमस्ति कार्यं गुरु योगिनामपि ॥३१॥

अ०—इति ब्रुवन्त तम् स व्रती उवाच, (हे) पुरुषोत्तम ! त्वया इत्थ न वाच्यम्, योगिनाम् अपि त्वमेव साक्षात्करणीय इति अत. गुरु कार्यम् किम् अस्ति ।

व्याक०—पुरुषेषु उत्तम पुरुषोत्तम. । निर्धारणार्थे सप्तम्या "सप्तमी" इति योगविभागात्समास । षष्ठ्यास्तु "न निर्धारणे" इति निषेध स्यात् । सम्बुद्धौ सुलोप । व्रती-व्रतशब्दात् प्राशस्त्ये मत्वर्थीय इनि । इत्थम्-इद शब्दात् "इद-मस्थमु" । वाच्यम् वचेर्ण्यत्, "वचोऽशब्दसज्ञायाम्" इत्यनेन कुत्वनिषेधः । युज्यन्ते इति योगिन. 'युज् समाधौ' धातो "सपृचानुरुधाऽङ्यम्" इत्यादिना घिनुण्, घित्वात् कुत्वम् । योगिनामिति 'करणीय' कर्तरि 'कार्य' कर्तरि च षष्ठी, "कृत्याना कर्तरि वा" इति ।

व्या०—इति-पूर्वोक्तम्, ब्रुवन्तम्-कथयन्तम्, तम्-हरिम्, स , व्रती यमनियमादिपरायणो नारद , उवाच, हे पुरुषोत्तम पुरुषेषु-क्षराक्षरपरेषु, उत्तम सर्व-व्यापकत्वादिना श्रेष्ठ, परमात्मपदवाच्य नारायण ! त्वया-भवता, इत्थम्-एवम् (पूर्वोक्त गतस्पृहोऽपीत्यादि) न वाच्यम्-न वक्तु योग्यम् । कुत ?, यतो, योगिनाम्-विषयेभ्याश्चित्तवृत्तिं निरुध्य समाधिमनुतिष्ठतामपि, त्वमेव-भवानेव, साक्षात्करणीय -प्रत्यक्षीकर्तव्य , इति-समाप्तमेतावतैव, अत -त्वद्दर्शनाद्, गुरु महत्तरम्, किं कार्यमस्ति, न किमपीत्यर्थ । यद्वा-इतिर्हेतौ, इति हेतो , अत -त्वद्दर्शनादित्यादि । यद्वा-इतिर्निदर्शने, इत्यत निर्दिष्टात् तव प्रत्यक्षीकरणात्कार्याद् अन्यद् गुरु कार्य किमस्ति इति ।

भावा०—भगवत कृष्णस्य पूर्वोक्त वचनजातमाकर्ण्य नारदेनोक्तम्-भगवन् भवत इयमुक्तिर्न योग्या, अन्ये मनुष्या कथयन्तु तावदित्थ-भवास्तु पुरुषोत्तम·-पर पुरुष.-साक्षान्नारायण । वीतस्पृहा महान्तो योगिनोऽपि त्वद्दर्शनमभिवा-

न्थन्त्येव । त्वद्दर्शनार्थमन्यत्र स्पृहा निवर्त्यते, त्वद्दर्शने तु स्पृहा न कदापि कस्यापि निवर्तते-इति । किं च-दृष्टे त्वयि सर्वे पुरुषार्थे समाप्यन्ते न तत्र प्रयोजनान्तरमवशिष्यते, यदर्थं प्रश्न स्यात् । तस्मात्त्वद्दर्शनार्थमेवाहमभ्यागत । इति ब्रुवन्त तामिति वर्तमानार्थकशतृप्रत्ययेन स्वप्रशमा कृष्णमुखाच्छ्रोतुमनुन्महमानो नारदो मध्य एव तद्वाक्यमाक्षिप्य वक्तुमारभतेति द्योत्यते ।

अल०—पुरुषोत्तमेति विशेष्यस्य साभिप्रायत्वात्परिकराङ्कुर । योगिनामपि मुख्यमिद कार्यम्, किं मादृशामिति काव्यार्थापत्तिर्व्यङ्ग्या, भवद्दर्शनार्थमागतोऽस्मीत्यस्यार्थस्य वैचित्र्येण कथनात् पर्यायोक्तम् ।

**उदीर्णरागप्रतिरोधक जनैरभीक्ष्णमक्षुण्णतयातिदुर्गमम् ।**
**उपेयुषो मोक्षपथ मनस्विनस्त्वमग्रभूमिर्निरपायसश्रया ॥ ३२ ॥**

अ०—उदीर्णरागप्रतिरोधकम् अभीक्ष्णम् अक्षुण्णतया जनै अतिदुर्गमम् मोक्षपथम् उपेयुषः मनस्विन त्वम् निरपायसश्रया अग्रभूमि (असि) ।

व्याक०—उदीर्ण राग प्रतिरोधको यस्मिन् तम् उदीर्णरागप्रतिरोधकम् । उदीर्णशब्दे उत्पूर्वाद् 'ॠगतौ' धातो क्त, "श्रयुक क्रिति" इतीण्निषेध., "रदाभ्याम् " इति निष्ठानत्वम् । प्रतिरोधक इति रुधेर्ण्वुल्। न क्षुण्णम् अक्षुण्णम्, तस्य भावस्तत्ता, तया अक्षुण्णतया । क्षुदिर् सम्पेषणे' धातो क्त, रदाभ्याम् .'इति नत्वम्,तस्तल्। हेतौ तृतीया। अतिशयित दुर्गमम् अति दुर्गमम्, प्रादिसमासः । दुर्गमशब्दे गमे खल्, जनैरिति तत्कर्तरि तृतीया, 'न लोका इति निषेधात् षष्ठी न । मोक्षस्य पन्थान मोक्षपथम् । ' ऋक्पूरब्धूः पथामानक्षे" इत्यप् । निर्गत अपाय यस्मात् स निरपाय., स सश्रयो यस्या स निरपायसश्रया । अपपूर्वादेतेरचि अपाय. । सश्रय श्रयतेः ' एरच्" । अग्रा भूमि अग्रभूमि । उपेयुष -' उपेयिवाननाश्वान् " इत्यादिना निपातितस्य क्वस्वन्तस्य 'उपेयिवस्' शब्दस्य षष्ठ्या रूपम् । मनस्विन -मन शब्दाद् अस्मायामेधास्रजो विनि " इति प्रशसाया विनि । अग्रभूमिसम्बन्धे षष्ठी ।

व्याख्या—उदीर्ण -उद्रिक्त -वृद्धिगत , यो राग -विषयाभिलाप , स एव प्रतिरोधक प्रतिबन्धक , (पक्षे-पाटच्चर -लुण्टाक ) यस्मिन्, तथाभूतम्, अ-

---

* प्रतिरोधिपरास्कन्दिपाटच्चरमलिम्लुचा इत्यमर ।

भीक्ष्णम्-पौन पुन्येन, अक्षुण्णतया-अनभ्यस्तत्वेन, (पक्षे अप्रहततवेन-यातायाताभावेन च) जनैः, अतिदुर्गमम्-अतिदुःखेन गन्तु शक्यम्, मोक्षपथम्-मोक्ष-मार्गम्, उपेयुप -प्राप्तवत , मनस्विन -सुमनस -मोक्षमिच्छत , (पक्षे-धीरस्य) पुस , त्वम, निरपाय -विश्लेषरहित -(पक्षे भयरहित ) सश्रय -प्राप्ति*, यस्यास्तादृशी, अग्रभूमि*-प्राप्यस्थानम्, असि । त्वामेव ते प्राप्नुवन्तीति ।

भावा०—यथा कश्चित्कश्चित्कान्तारमार्गं गच्छेत्, स मार्ग पाटच्चरैराक्रान्त स्यात्, जनाना गतागताभावेन दुर्गमश्च स्यात्, स तत्र संकटापन्नो बिभ्यत् कथचित्त निस्तीर्ण स्व प्राप्यस्थान प्राप्य निर्भयो भवति, तथा मोक्षमार्ग य आश्रयन्ते, यत्र उद्रिक्तो विषयाभिलाप एव प्रतिबन्धकत्वात् पाटच्चर , न च ससारिणा यत्र बाहुल्येन गमनम्, तन्मार्गगास्ते (योगिनः) त्वामेव प्राप्यस्थान प्राप्य निर्भया भवन्ति, न च ततस्तेषा वियोग , 'न स पुनरावर्तते' इति श्रुते , तथा च फलकाले भवत्प्राप्तिरेव, उपायकालेऽपि 'तमेव विदित्वा अतिमृत्युमेति, नान्य पन्था विद्यते अयनाय', इति श्रुत्या त्वद्दर्शनोपासनाज्ञानान्येव मुख्यानीति तत्रैव योगिनो रमन्ते । पूर्वश्लोकोक्तस्य समर्थनम् ।

अल०—त्वम् अग्रभूमिरिति सावयवरूपकम्। प्रतिरोधकशब्दे तदुत्थापक श्लेषस्त्वदङ्गम् । मोक्षपथमिति पथिशब्द उपाये लाक्षणिकः । सतताभ्यासयोग्यता तद्व्यञ्जयन् । कान्तारगामिपुरुषव्यवहारो व्यङ्ग्य , तत्सादृश्यस्य प्राधान्येन ध्वननाच्च ध्वनिरिति मल्लिनाथ । तन्मते अग्रभूमिपद केवल प्राप्यबोधक त्वमित्येतस्य विधेयाविशेषणमिति रूपकाभाव । प्रतिरोधकादिशब्दशक्तिमूलो ध्वनिरेव । परम् अग्रभूमिरिति भूमिपदस्वारस्य तत्र चिन्त्यम् ।

**उदासितार निगृहीतमानसैर्गृहीतमध्यात्मदृशा कथचन ।**

**बहिर्विकार प्रकृतेः पृथक् विदु पुरातन त्वा पुरुप पुराविद ॥२३॥**

अ०—पुराविदः त्वाम् निगृहीतमानसै अध्यात्मदृशा कथञ्चन गृहीतम् उदासितारम् बहिर्विकारम् प्रकृते पृथक् पुरातन पुरुप विदु ।

व्याक०—विदन्तीति विद , क्विप्, पुरा विदः पुराविद । निगृहीत मानस ये., ते निगृहीतमानसै । निगृहीतमिति गृह्णाते क्त. । आत्मनीत्यध्यात्मम्,

---

* अग्रमालम्बने प्राप्ये-इति विश्व ।

विभक्त्यर्थेऽव्ययीभावः, "अनश्च" इति टच्, अध्यात्म दृक् अध्यात्मदृक्, तया अध्यात्मदृशा । करणे तृतीया । विकारेभ्यो बहिः इति बहिर्विकारम्, "अपपरिबहिरञ्चवः पञ्चम्या" इत्यनेनाव्ययीभाव । उदासितारम्-उत् पूर्वाद् आस धातोस्तृच् । पुरातनम-पुरेत्यव्ययात्-"सायचिरप्राह्णेप्रगे " इत्यादिना ट्यु, तुडागमश्च । विदु -वेत्तेर्लट्, प्रथमपुरुषबहुवचनम्, "विदो लटो वा" इति झे उसादेशः । प्रकृते -पृथग्योगे पञ्चमी ।

व्याख्या—पुराविद.-सृष्ट्यादिपूर्ववृत्तविद्वांस. कपिलादय, त्वाम्-भवन्तम्, निगृहीतम्-विषयेभ्यो व्यावर्तितम्, मानस यैस्तथा भूत, योगिभि, अध्यात्मदृशा-प्रत्यग्दृष्ट्या-आत्माभिमुख्या दृष्ट्या, कथञ्चन-केनापि प्रकारेण-दुर्ज्ञेयतया क्लेशेन, गृहीतम्-ज्ञातम्, उदासितारम्-उदासीनम्, प्रकृत्या क्रियमाणेष्वपि कार्येषु जलेन पुष्करपलाशवत् कर्तृत्वादिधर्मैरलिप्तम्, बहिर्विकारम्-विकारेभ्य -प्रकृतिविकारेभ्यो *महदादिभ्य त्रयोविंशते तत्त्वेभ्यः, बहि -पृथग्भूतम्, प्रकृते -सत्त्वरजस्तमोगुणात्मकाद् मूलकारणात् प्रधानात्, पृथक्-भिन्नम्, पुरातनम्-अनादिम्, पुरुषम्-पुरुषपदवाच्य विज्ञानघनम्, विदुः-जानन्ति ।

भा०—भगवन् कृष्ण ! कपिलाद्या साङ्ख्याचार्या. साङ्ख्ये त्रयोविंशते-र्विकारेभ्य, मूलकारणाच्चतुर्विंशात्प्रकृतिपदवोध्यात् प्रधानाच्च पृथग्भूत पञ्चविंश विज्ञानघनं पुरुष य निरूपयन्ति, य च योगिनो बाह्यविषयेभ्यो मन आकृष्यात्मनि सयोज्य चातिक्लेशेन जानन्ति, स सर्वात्मभूतो भवानेव । यद्यपि साङ्ख्या पुरुषबहुत्वमिच्छन्ति, तथापि न तत्तेषा दर्शन सम्यक् । विभिन्नत्वेन भासमानाः पुरुषा वह्निविस्फुलिङ्गन्यायेन भवत एव निर्गता भवदंशभूता इति भवानेव सर्वकारण सर्वेभ्य प्राक्तन । तदेतत् 'पुरातनम्' इति पदेन द्योतितम् । यद्वा-उत्तरसाङ्ख्यज्ञा योगाचार्या पतञ्जलिप्रभृतय पुरुषेभ्योऽपि पर य षड्विंश क्लेशकर्मविपाकाशयैरस्पृष्ट पुरुषविशेष पुरातन पुरुष

---

* मूलप्रकृतिरविकृतिर्महदाद्या. प्रकृतिविकृतय सप्त । षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुष । इति साङ्ख्यकारिका । सप्त षोडश चेति त्रयोविंशतिर्विकारा ।

निरूपयन्ति, स भवानिति योज्यम् । तस्माद्योगिजनदर्शनीय एव भवानिति शास्त्रप्रक्रिययात्र भगवत्स्वरूपनिरूपणम् ।

**निवेशयामासिथ हेलयोद्धृत फणाभृता छादनमेकमोकसः ।**
**जगत्त्रयैकस्थपतिस्त्वमुच्चकैरहीश्वरस्तम्भशिरस्सु भूतलम् ॥३४॥**

अ०—जगत्त्रयैकस्थपति त्व हेलया उद्धृत फणाभृताम् ओकस एक छादन भूतलम् उच्चकै अहीश्वरस्तम्भशिरस्सु निवेशयामासिथ ।

व्याक०—जगता त्रयस्य ( ष० तत्पु० ) एक स्थपति ( कर्म० तत्पु० ) जगत्त्रयैकस्थपति । त्रिशब्दात्तयपि, तस्यायजादेशे त्रयमिति । फणा बिभ्रतीति तेषाम् फणाभृताम् । क्विप्, उपपदसमास । अहीनाम् ईश्वर., स एव स्तम्भ , तस्य शिरस्सु अहीश्वरस्तम्भशिरस्सु । ईष्टेर्वरचि ईश्वर । उद्धृतम्-उत्पूर्वाद् हरतेर्धरतेर्वा क्त । छादनम्-छाद्यतेऽनेनेति च्छादयते करणे ल्युट् । उच्चकैः-व्याख्यातम् । निवेशयामासिथ-निपूर्वाद् णिजन्ताद् विशतेर्लिट्, मध्यमपुरुषैकवचनम्, प्रत्ययान्तत्वाद्-अनेकाच्त्वाद् वा आम् । कृञ्चानुप्रयुज्यते लिटि" इत्यनेन अस्तेरनुप्रयोग । भूतलमिति निवेशने प्रयोज्यकर्म, "गतिबुद्धि " इत्यनेन विशतेरकर्मकत्वात् कर्मत्वम् । त्वामिति प्रयोजककर्ता, हेलया-हेतौ तृतीया ।

व्याख्या—हे भगवन्, जगत्त्रयस्य-भुवनत्रयस्य, एक -अद्वितीय , *स्थपति -अधिपति , ( पक्षे शिल्पी ) त्वम्, वराहावतारे हेलया-अनायासेनैव, उद्धृतम्-उपरि आनीतम्, फणाभृताम्-सर्पाणाम्, †ओकस.-आश्रयस्य पातालस्य ( पक्षे सद्मन ) एकम्-असाधारणम्, छादनम्-आवरणम्, भूतलम्-महीमण्डलम्, उच्चकै.-अत्युन्नतेषु, अहीश्वरः-शेष., स एव-स्तम्भ., तस्य शिरस्सु-मूर्धसु-फणासहस्रेषु ( पक्षे अग्रेषु ) निवेशयामासिथ-स्थापितवानसि ।

भा०—य एव साख्यादिभिर्निर्गुण पुरुष इति निरूपित., तमेव त्वा पौराणिका सृष्टिकर्तारमामनन्ति । अस्य दृश्यस्य लोकत्रयस्य त्वमेव शिल्पी । यथा शिल्पी गृह निर्माय तदाच्छादनायोपरि तृणादिनिर्मितमिष्टकाप्रस्तरादि-

---

* स्थपतिरधिपतौ तद्वित् बृहस्पतिसचिवयो. इति वैजयन्ती ।

† ओक सद्मनि चाश्रये—इति विश्व ।

निर्मित वा च्छादनम्-छप्पर इति, छत इति वा भाषाया प्रसिद्ध, स्तम्भाग्रेषु निधत्ते तथा भवतापि च्छादनरूप भूमण्डलमिद स्वयमेव वराहरूपेण जलादुद्धृत्य पातालस्य च्छादनाय शेषनागरूपस्य स्तम्भस्य शिर सु निहितम् ।

अल०—भगवति शिल्पित्वारोपाय भूमण्डले च्छादनत्वस्य अहीश्वरे स्तम्भत्वस्य चारोप इति परम्परित रूपकम् । तच्च स्थपतिपदस्य श्लेक पदस्य च श्लिष्टत्वात्तत्र श्लिष्टम्, अहीश्वरस्तम्भेति तु शुद्धमिति श्लिष्टाश्लिष्टम् ।

**अनन्यगुर्वास्तव केन केवल पुराणमूर्त्तेर्महिमावगम्यते ।**
**मनुष्यजन्मापि सुरासुरान् गुणैर्भवान् भवच्छेदकरै करोत्यध ॥३५॥**

अ०—अनन्यगुर्वाः तव पुराणमूर्त्ते केवल महिमा केन अवगम्यते । मनुष्यजन्मा अपि भवान् भवच्छेदकरैः गुणै सुरासुरान् अध करोति ।

व्याक०—न अन्य गुरुः यस्या तस्या अनन्यगुर्वा, बहुव्रीहि, उकारान्तस्य "ङिति ह्रस्वश्च' इति नदीत्वे "आण् नद्या" इत्याडागम । गुरुशब्दाद् "वोतो गुणवचनात्" इति ङीष् तु न, समासात्प्राग्गुरुशब्दे स्त्रीवाचकत्वाविवक्षणात्, समासादनन्तर तु "अनुपसर्जनात्" इति पर्युदासात्, बहुव्रीहौ गुरुशब्दस्योपसर्जनत्वात् । केचित्तु पूर्वमपि गुरुशब्दस्य स्त्रीवाचकत्व मत्वा पूर्वमेव ङीषि तत समास इति 'अनन्यगुर्व्या.' इति पाठमाहु । "नद्यृतश्च" इति समासान्त कप्प्रत्यय च "समासान्तविधिरनित्य" इति वारयन्ति । पुराणाया मूर्ते, पुराणमूर्ते । मूर्छते क्तिनि मूर्ति । मनुष्याद् जन्म यस्य स मनुष्यजन्मा, "अवर्ज्यो बहुव्रीहिर्जन्माद्युत्तरपद" इति वामन. । यद्वा-मनुष्येषु जन्म यस्येति सप्तम्यन्तपूर्वपदो बहुव्रीहि । भवस्य च्छेद कुर्वन्तीति तैः भवच्छेदकरै. । "कृञो हेतुताच्छील्यानुलोम्येषु" इत्यनेन करोतेर्हेतौ ट । सुरान् असुरांश्च सुरासुरान्, "येषा च विरोध शाश्वतिक." इति द्वन्द्वैकवद्भावस्तु न शङ्क्य, सुरासुरविरोधस्य कार्योपाधिकत्वेनाशाश्वतिकत्वाद्-इति मल्लिनाथ । महिमा-महच्छब्दाद्भावे इमनिच् । अवगमनक्रियाया उक्ते कर्मणि प्रथमा । अवगम्यते-गच्छते. कर्मणि लट् । केनेति कर्तृपदम् । गुणै -करणे तृतीया । युष्मच्छब्दप्रयोगाभावाद् 'अध करोति' इति प्रथमपुरुष ।

व्याख्या—न अन्यः, गुरु-श्रेष्ठ, ( यद्वा-नियन्ता ) यस्या तस्या सर्वोत्तमाया, तव, पुराणमूर्ते-नामरूपाभ्यामव्याकृतस्य सर्वादिभूतस्य अमानुषस्य स्वरूपस्य †केवल-कृत्स्न, ( यद्वा-एक-अद्वितीय ) महिमा-महत्त्वम्, केन अवगम्यते-ज्ञायते, न केनापीत्यर्थ । मनुष्यजन्मा-मनुष्येषु गृहीतावतारोऽपि भवान्, भवच्छेदकरै ससारनिवृत्तिहेतुभि, गुणैः ज्ञानशौर्यादिभि, सुरासुरान्-देवान् दैत्यांश्च, अध करोति नीचै करोति-अतिशेते इत्यर्थ ।

भा०—भगवन्! यन्निर्गुण ते रूप साख्यादिभि प्रतिपादित पूर्वमुक्तम्, यच्च सर्वनियामक जगत्स्रष्टृ पूर्वस्मिन् पद्ये निरूपितम्, तस्य तस्य च महत्त्व को वक्तु ज्ञातु वा समर्थ, न कोऽपि तज्जानाति, न च वक्तुं शक्नोति । एकत्र गुणाभावेन वाङ्मनसयोरप्रवृत्ते, अपरत्र च गुणानामानन्त्येन कृत्स्नपरिच्छेदासम्भवात् । आस्ता तद्रूपद्वयम्, पर मनुष्यरूपेणावतीर्णस्यापि ते गुणा सुरासुरातिशायिन, अपरिच्छेद्या एव । एतेषामेव च स्मरणेन गानेन च भक्ता भवाब्धि तरन्ति ।

अल०—मनुष्यजन्मापि सुरासुरानधःकरोतीति विरोधः । एतदपि रूप सर्वातिशायि, किं तदिति काव्यार्थापत्ति । उत्तरार्द्धे छेकानुप्रास इति मल्लिनाथ ।

**लघूकरिष्यन्नतिभारभङ्गुरामम् किल त्व त्रिदिवादवातर ।**
**उदूढलोकत्रितयेन साम्प्रत गुरुर्धरित्री क्रियतेतरां त्वया ॥३६॥**

अ०—त्वम् अतिभारभङ्गुराम् अमू ( धरित्रीम् ) लघूकरिष्यन् त्रिदिवाद् अवातर किल, ( परन्तु ) साम्प्रतम् उदूढलोकत्रितयेन त्वया धरित्री गुरुः क्रियतेतराम् ।

व्याक०—अतिशयितेन भारेण ( प्रादिस० ) भङ्गुराम् अतिभारभङ्गुराम्, भङ्गुराम्-भञ्जे "भञ्जभासमिदो घुरच्" स च कर्मकर्तरि इति वामन, स्वयमेव भज्यते इत्यर्थ । कर्मणि तु न, अनुशासनाभावात् । उदूढ लोकाना

* अस्या व्याख्याया पदमिद पञ्चम्यन्तम्, यदपेक्षया श्रेष्ठो नास्तीति । पदेऽनि व्याख्याने तु षष्ठ्यन्तम् ।

† केवलः कृत्स्न एकः स्यात्केवलश्चावधारणे—इति विश्व. ।

त्रितयं येन तेन उद्धृतलोकत्रितयेन, उद्धृतमिति-उत्पूर्वाद् वहते. क्तः । त्रितयं व्याख्यातम् । अलघु लघु करिष्यन् लघूकरिष्यन्, च्विः, "च्वौ च" इति दीर्घः । करिष्यन्नित्यत्र करोते "धातुसम्बन्धे प्रत्ययाः" इत्यनेन लृट्, अवतरणापेक्षया लघूकरणस्य भविष्यत्कालिकत्वात्, लृट्स्थाने "लक्षण-हेत्वोः क्रियायाः" इत्यनेन हेतौ शत्रादेशः । तृतीया द्यौः त्रिदिवः, त्रिशब्दो वृत्तिविषये पूरणार्थे, दिवधातोश्च घञर्थे कप्रत्यय इति मल्लिनाथः । त्रयो ब्रह्मविष्णुरुद्रा दीव्यन्त्यत्रेत्यर्थे "हलश्च" इति दीव्यतेर्घञ्, सञ्ज्ञापूर्वकत्वान्न गुण इति * रामाश्रमी । अवतार -अवपूर्वात् तरतेर्लङि, सिपि रूपम् । गुरुः-धरित्र्या विधेयविशेषणम्, "वोतो गुणवचनात्" इत्यत्र वावचनाद् ङीषो-ऽभावः । क्रियतेतराम्-करोतेः कर्मणि लट्, "तिङश्च" इति तरप् । "किमेत्तिङव्ययघात् " इत्यनेनामु । त्रिदिवाद्-अपादाने पञ्चमी । त्वयेति करोतेः अनुक्ते कर्तरि तृतीया । धरित्रीति तस्यैवोक्ते कर्मणि प्रथमा ।

व्याख्या—हे भगवन्, त्वम्, अतिभारेण हेतुना भङ्गुराम्-स्वयं भज्यमानाम्, अमूम्-धरित्रीम्, लघूकरिष्यन्-भाररहितां विधातुम्, त्रिदिवात्-‡ स्वर्गात्-स्वस्य क्रीडाधाम्नो लोकाद्, अवातरः-अवतीर्णवानसि, मनुष्यदेहं धृतवानित्यर्थः । परन्तु साम्प्रतम्, त्वत्कुक्षौ उद्धृतम्-धृतम् लोकत्रितयम्-भुवनत्रयं येन तथाभूतेन, त्वया धरित्री-पृथिवी, गुरुः-भारवती (पक्षे पूज्या) क्रियतेतराम्-अतिशयेन क्रियते ।

भावा०—भगवन् ! भाराक्रान्ताया पृथिव्या भारापनयनेन लघूकरणं तवावतारस्योद्देश्यम्, परमहं विपरीतं पश्यामि, भवानिदानीं भुवि स्थितोऽसि, भवतश्च कुक्षौ त्रिलोकी तिष्ठति, तदा पृथिवीयं लोकत्रयाश्रयाश्रयभूता सती कथं लघुर्जाता, प्रत्युतातिशयेन भाराक्रान्ता जातेति संभाव्यते । पक्षे गुरुशब्दस्य पूज्येत्यर्थः, तेन लोकत्रयं दधानोऽपि भवान् पृथिव्यां स्थित -इति पृथिव्याः परं पूज्यत्वं त्वया संपादितमिति मुख्योऽभिप्रायः । तेनैव विरोधपरिहारः ।

अलं०—लघु कर्तुं प्रवृत्तो गुरुमकरोः-इति विरोधाभासं मल्लिनाथ आह ।

---

* अमरकोषटीका ।

‡ वैकुण्ठलोकोऽपि स्वर्गविशेष एवेति न विरोधः ।

कुवलयानन्दादिमते तु 'अन्यत्कर्तुं प्रवृत्तस्य तद्विरुद्धकृतिस्तथा' इति लक्षिता असगतिरत्र। उद्दण्डलोकत्रितयेनेति विशेषणस्य साभिप्रायत्वात् परिकरः।

**निजौजसोज्जासयितु जगद्द्रुहामुपाजिहीथा न महीतल यदि।**
**समाहितैरप्यनिरूपितस्तत पद दृश स्या कथमीश मादृशाम् ॥२७॥**

अ०—हे ईश ! (त्वम्) निजौजसा जगद्द्रुहाम् उज्जासयितु महीतल यदि न उपाजिहीथाः तत समाहितै. अपि अनिरूपित मादृशा दृश पद कथ स्या ।

व्याक०—जगद्भ्यो द्रुह्यन्ति तेषा जगद्द्रुहाम्, "सत्सूद्विष " इत्यादिना क्विप् । विग्रहे जगद्भ्य इति चतुर्थी, "क्रुधद्रुहेर्ष्यासूयार्थाना य प्रति कोप" इत्यनेन सम्प्रदानत्वात् । समासात् षष्ठी तु "जासिनिप्रहण-नाटक्राथपिषा हिसायाम्" इत्यनेन उज्जासयितुमिति तुमुन्नन्तस्य कर्मणि शेषत्वेन विवक्षिते । उज्जासयितुम्-'जसु हिंसायाम्' इति चौरादिकात् तुमुन् । उपाजिहीथा -उपपूर्वाद् 'ओहाङ्गतौ' इति जौहोत्यादिकाद् धातोर्लङि थासि रूपम् । तत -तच्छब्दात् तसिल् । ईशेति-'ईश् ऐश्वर्ये' धातो पचाद्यच् । समाहितः-'सम् आङ्' एततपूर्वाद् दधाते कर्तरि क्त., सकर्मकस्यापि कर्मणोऽविवक्षया अकर्मकत्वात् । अथवा—समाहितै -समाहितचित्तैरित्यर्थः, तथा च कर्मण्येव क्त, ततो "विनापि प्रत्यय पूर्वोत्तरपदयोर्लोपो वक्तव्यः" इति चित्तपदस्य लोप । विभक्तधना विभक्ता -इतिवत्, सत्यभामा-सत्या इत्यादिवच्चेति । यद्वा समाङ्पूर्वो दधातिरिह चित्तैकाग्रीकरणे वर्तते, समाधत्ते-चित्तमेकाग्रीकरोति इति । तथा च चित्तरूपकर्मणो धात्वर्थोपसंगृहीतत्वाद् अकर्मकत्वम् । निरूपितेति निपूर्वाच्चौरादिकाद् रूपधातोः क्त । मादृशाम्-अस्मदुपपदाद् दृशे "त्यदादिषु दृशोऽनालोचने ' " इति क्विन्, "प्रत्ययोत्तरपदयोश्च" इति मादेश, "आ सर्वनाम्न" इत्यनेनात्वम । दृशे -दृश्यतेऽनयेति पश्यने सम्पदादित्वात क्विप् । स्या.-अस्ते सम्भावनाया लिङि सिपि रूपम् ।

व्याख्या—हे ईश-स्वामिन्, त्वम्, निजेन-स्वेन, ओजसा-तेजसा-स्वपराक्रमेण वा, जगद्द्रुहाम्-लोकदु खदाना कसादीनाम्, उज्जासयितुम्-विनाश

कर्तुम्, महीतलम्-इमा पृथ्वीम्, यदि न उपाजिहीथा -नोपागच्छः, नावातर, ततः-तर्हि, समाहितैः -समाधिनिष्ठैः, समाहितचित्तैर्वा योगिभिरपि, अनिरूपित - अगृहीत -न साक्षात्कृत, मादृशाम्-चर्मचक्षुषाम्, दृशः -दृष्टेः, पदम्-गोचरः, कथं स्याः -कथं भवेः, न कथमपीत्यर्थः ।

भावा०—भगवन् ! कृष्ण ! त्वं पृथिव्यामवतीर्णोऽसि, अत एव मादृशा अपि साधारणा जना स्वचक्षुषा भवन्तं द्रष्टुं प्रभवो जाताः । स्वे महिम्नि स्थितं तु त्वां वशीकृतचित्ता योगिनोऽपि सम्यग्द्रष्टुं न शक्नुवन्ति, किं पुनर्मादृशाः । यद्यपि नारदः परमो योगी, तथापि विनयप्रदर्शनार्थं स्वस्य साधारणत्वमुक्तवान् । न केवलं जगतः परिपन्थिनां नाश एव तवावतारस्योद्देश्यम्, अपि तु भक्तान् दर्शनदानेनानुगृह्य स्वस्मिंस्तेषां चेतस आकर्षणमपीति ।

अल०—पूर्वार्धे जकारानुप्रासो मनोज्ञः । समाहितैरप्यनिरूपित इति विरोधः । भावार्थोक्तरीत्या काव्यार्थापत्तिः । कंसादिभिः कृतो जगतां द्रोहोऽपि त्वद्दर्शनहेतुतयास्माकं गुणतां गत इत्युल्लासस्तु कष्टलभ्यः ।

**उपप्लुतं पातुमदो मदोद्धतैस्त्वमेव विश्वंभर विश्वमीशिषे ।**

**ऋते रवेः क्षालयितुं क्षमेत कः क्षपातमस्काण्डमलीमसं नभः ॥ ३८ ॥**

अन्व०—( हे ) विश्वम्भर ! मदोद्धतैः उपप्लुतम् अदः विश्वं पातुं त्वम् एव ईशिषे, क्षपातमस्काण्डमलीमसं नभः क्षालयितुं रवेः ऋते कः क्षमेत ॥

व्याक०—मदेन उद्धतैः मदोद्धतैः, उपप्लवकर्तरि तृतीया, "मदोऽनुपसर्गे" इति माद्यतेरप्प्रत्यये मदः । उद्धतशब्दे उत्पूर्वाद् हन्तेः क्तः । क्षपायाः तमसा (ष०तत्पु०)काण्डैः (ष०तत्पु०) मलीमसं क्षपातमस्काण्डमलीमसम् । तमस्काण्ड-शब्दे "कस्कादिषु च" इत्यनेन सत्वम् । मलीमसशब्दः "ज्योत्स्नातमिस्रा " इत्यादिना निपात्यते । विश्वम्भर-विश्वं बिभर्तीति 'विश्वोपपदाद् बिभर्तेः "संज्ञायां भृतॄवृजिधारिसहितपिदमः" इत्यनेन खच्, खित्त्वान्मुम्, उपपदसमासः । उपप्लुतम्-प्लवतेः क्तः । ईशिषे-ईश्धातोर्लटि थासि रूपम्, "ईशः से" इतीडागमः । क्षाल-यितुम्-शक्यार्थे क्षमतावुपपदे क्षालयतेस्तुमुन् । क्षमेत-क्षमतेः शक्यार्थे लिङ् । रवेरितिपञ्चमी ऋतेशब्दयोगे "अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते" । इति ।

व्याख्या—हे विश्वम्भर ! जगद्रक्षक नारायण ! मदोद्धतै -ऐश्वर्यगर्वेण उच्छृङ्खलै कसादिभिः, उपप्लुतम्-पीडितम्, अद , विश्वम्-जगत्, पातुम्-रक्षितुम्, त्वमेव, ईशिषे-प्रभवसि समर्थोऽसि । क्षपाया.-रात्रे *तमस्काण्डैः-तम समूहै., †मलीमसम्-मलिनम् , नभ -आकाशम्, क्षालयितुम्-शोधयितुम्-स्वच्छं कर्तुम् रवे ऋते-सूर्य विना, क क्षमेत क शक्तो भवेत् , न कोऽपीत्यर्थ. ।

भावा०-सूर्यस्यैव नैशतमोऽपसारणे सामर्थ्यम्, नान्यस्य । तथैव जगदुपद्रव-कारिणामुद्धताना बलाधिकाना दुष्टाना शासने तेभ्यो जगता रक्षणे च तवैव सामर्थ्यम् , नान्यस्य । तेषा मदोद्धततया इन्द्रादिभि. शासितुमशक्यत्वात् । ननु तथापि जगदीश्वरेण किमिति ते शासनीया॰, तस्य द्वेषाभावादिति तत्रोक्तं विश्वम्भर इति । विश्वरक्षा तव स्वभाव , ततो विश्व पीडयन्तः शासनीया एव तवेति ।

अल०—एकस्यैव सामर्थ्यरूपस्य धर्मस्य 'ईशिषे' 'क्षमेत', इति भिन्नाभ्या पदाभ्या वाक्यद्वयेन प्रतिपादनात्प्रतिवस्तूपमा । परं वाक्य प्रतिषेधरूपमिति वैधर्म्येण सा। मदोद्धतैरिति विश्वम्भरेति च विशेष्ययो साभिप्रायतया परिकराङ्कुरः । मदो मदो इति यमकम् । विश्वम्भर विश्वेति लाटानुप्रासः ।उत्तरार्धे नैत्यक्षरस्य वृत्त्यनुप्रास ।

**करोति कसादिमहीभृता वधाज्जनो मृगाणामिव यत्तव स्तवम् ।**
**हरे हिरण्याक्षपुर.सरासुरद्विपाद्विप प्रत्युत सा तिरस्क्रिया ॥ ३९ ॥**

अन्व०—हे हरे ! जनः मृगाणामिव कसादिमहीभृता वधाद् यत् तव स्तव करोति, सा हिरण्याक्षपुर.सरासुरद्विपद्विष. (तव ) प्रत्युत तिरस्क्रिया अस्ति ।

व्याक०—कसादीना महीभृता कसादिमहीभृताम् महीं बिभ्रतीति बिभर्ते. क्विपि तुकि च महीभृता । हिरण्याक्ष. पुरःसरो येषाम्, ( बहु० ) ते च ते असुराश्च ( द्वन्द्व ) ते द्विपा इव, ( उपमि० समा० ) यद्वा त एव द्विपा (कर्म०) तान् द्वेष्टि इति (उपप० समा०) तस्य हिरण्याक्षपुरस्सरासुर-द्विपद्विपः, द्विप इति द्वेष्टे क्विप् । पुर. सरतीति पुरउपपदात् सरतेः "पुरोग्र-

---

* काण्डोऽस्त्री दण्डबाणार्ववर्गावसरवारिषु-इत्यमर. ।

† मलीमस तु मलिन कच्चर मलदूषितम्-इत्यमरः ।

तोऽग्रेषु सर्तेः" इति टप्रत्यये पुरस्सरशब्दः । द्वाभ्या पिबन्तीति द्विपा , पिबते 'सुपि' इति योगविभागात् क । वधात्-"हनश्च वध " इति हन्तेरप वधादेशश्च हेतौ पञ्चमी । स्तवम्-'ष्टुञ् स्तुतौ' धातोः 'ऋदोरप्' । तिरस्क्रियेति क्रिया-शब्दो व्याख्यातः । "तिरसोऽन्यतरस्याम्' इति विसर्गस्य पाक्षिक सत्वम् । यदिति करोत्यन्तवाक्यार्थपरामर्शक सामान्ये नपुसकम् , सेति तिरस्क्रियाविशेप-णमिति विधेयालिङ्गम् । तदुक्त कैयटेन-उद्देश्यप्रतिनिर्दिश्यमानयोरैक्यमापाद-यन्ति सर्वनामानि पर्यायेण तत्तल्लिङ्गमुपाददते इति ।

व्यख्या—हे हरे-कृष्ण ! जन -लोक , मृगाणामिव-मृगसदृशानाम्, कसा-दीनाम्, महीभृताम्-राज्ञाम्, वधाद्-नाशात्, यत् तव, *स्तवम्-स्तुतिम् करोति, सा-स्तुति , हिरण्याक्षपुरस्सरा-हिरण्याक्षप्रमुखाः, ये असुरा -दैत्या , ते द्विपा-इव-गजसदृशा , यद्वा-ते एव द्विपा-हस्तिन , तेषा द्विषः-शत्रो -शातयितु , तव, †प्रत्युत-वैपरीत्येन, तिरस्क्रिया-तिरस्कार -अपमान , अस्ति ।

भावा०—भगवन् लोकः 'कसाद्यास्त्वया हता.' इति त्वा स्तौति, परमह तु न तन्मृष्यामि, यतो हि मत्तगजगण्डविदारणदक्ष केसरिण यदि कश्चित् 'मृगहन्तायम्' इति स्तुवीत तर्हि न सा सिंहस्य स्तुतिः, प्रत्युत अपमानस्तस्य। तथैव येन त्वया हिरण्याक्षप्रभृतयो दैत्या हता , तस्य कसादिवधेन का स्तुति (हिरण्याक्षप्रभृतयो मत्तगजेन्द्रतुल्याः, तदग्रे कसाद्या मृगतुल्या एव ) प्रत्युत अपमाननैवेति ।

अल०—'असुरद्विप' इति रूपक मल्लिनाथेनोक्तम् , तथा हरिपदेन कृष्णस्य सिहस्य चोपस्थितौ श्लेषमूल कृष्णे सिहत्वारोपः-इति श्लिष्टपरम्परितरूपक स आह । मृगाणामिवेत्युपमा तु रूपकस्याङ्गमिति । वस्तुतस्तु मृगाणामिवेत्युपमा-स्वारस्याद् 'असुरा द्विपा इवेति' लुप्तोपमैव तत्रापि युक्ता, हरे इत्यत्र तु कृष्णस्य सिहेन व्यङ्ग्योपमाऽस्तु । यदि तु रूपक एवात्र चमत्कार. सहृदयसाक्षिक , तर्हि उपमाद्वयानुप्राणित रूपकमुच्यताम् । जन. कृष्ण स्तोतु प्रवृत्त , तेन च निन्दा कृतेति विरुद्धकृतिरूपा असगति । यद्वा जनाना स्तुतिकरण गुणो नार-

* स्तवः स्तोत्र स्तुतिर्नुति.-इत्यमर ।

† प्रत्युतेत्युक्तवैपरीत्ये इति गणव्याख्यानम् ।

देन निन्दाकरणरूपदोषत्वेन गृहीत इति लेश । यद्वा-यो हेतुः स्तुत्यर्थं तै प्रयुक्त , स एव नारदेन तद्विरुद्धार्थसाधने योजित इति व्याघातोऽपि सभवेत् । सर्वेऽपीमे अस्फुटप्राया इति विवेचयन्तु सहृदया ।

**प्रवृत्त एव स्वयमुज्झितश्रमः क्रमेण पेष्टु भुवनद्विषामसि ।**
**तथापि वाचालतया युनक्ति मा मिथस्त्वदाभाषणलोलुप मन ॥४०॥**

अन्व०—( यद्यपि ) ( त्वम् ) उज्झितश्रम ( सन् ) क्रमेण भुवनद्विषा पेष्टु स्वयमेव प्रवृत्त असि, तथापि मिथः त्वदाभाषणलोलुप मन. मा वाचालतया युनक्ति ।

व्याक०—उज्झित श्रमः येन स उज्झितश्रम । उज्झतेर्निष्ठायामुज्झितः । श्राम्यतेर्घञि श्रम । एव क्रमशब्दोऽपि । उभयत्रापि "नोदात्तोपदेशस्य" इति वृद्धिनिषेध. । त्वया (सह) आभाषणे लोलुप त्वदाभाषणलोलुपम्, 'प्रत्ययोत्तरपदयोश्च" इति युष्मदस्त्वादेश. । आभाषणेति भाषतेर्भावल्युडन्तम् । गर्हित लुम्पतीति 'लुप्लृ धातोः' "लुपसदचरजपजभ .." इति यङन्तात् पचाद्यचि लोलुपशब्दः सिध्यति । पेष्टुम्-पिनष्टेः, "तुमुण्णमुलौ " इति तुमुन्, तद्योगे "जासिनिप्रहणनाटक्राथपिषा हिंसायाम्" इति सूत्रेण भुवनद्विषामिति क्विबन्तात् षष्ठी । प्रवृत्त -वर्तते क्तः । वाचालतया-वाचो बह्व्योऽस्य सन्तीति वाक्शब्दाद् "आलजाटचौ बहुभाषिणि" इत्यनेनालच् । ततो भावे तल् । विनापि तद्योग तृतीयेति सहयोगे तृतीया । युनक्ति-'युजिर् योगे' धातोर्लट्, रुधादित्वात् श्नम् । क्रमेणेति तृतीया प्रकृत्यादित्वात् ।

व्याख्या—हे भगवन् ! यद्यपि, त्वम्, उज्झित -त्यक्त , श्रमः-परिश्रमजन्य खेद., येन तथाभूत सन्, सर्वशक्तिमत्त्वात् श्रान्तिमन्तरेणैव, हेलयैवेति यावत्, क्रमेण-पर्यायेण, भुवनद्विषाम्-लोकदु खदाना दैत्यानाम्, पेष्टुम्-विनाश कर्तुम्, स्वयमेव-विश्वम्भरत्वात् परप्रेरणा विनैव ( स्वकर्तव्यबुद्ध्या ) प्रवृत्त -लग्न., असि, तथापि, त्वयि स्वत प्रवृत्तेऽपि, मिथ -रहसि, त्वदाभाषणे-त्वया सह सलापे, *लोलुपम्-अतिशयेन लुब्धम्, मन -मम चित्तम्, माम्, †वाचाल-

---

* लुब्धोऽभिलाषुकस्तृष्णक् समौ लोलुपलोलुभौ-इत्यमर ।

† स्याज्जल्पाकस्तु वाचालो वाचाटो बहुगर्ह्यवाक्- इत्यमर ।

तया सह युनक्ति-वाचालं करोति-वक्तुं प्रेरयतीत्यर्थः ।

भावा०—इदानीं नारदः स्वस्यागमनप्रयोजनं विवरीतुमारभते । नारदो हि शिशुपालहननाय इन्द्रस्य संदेशं वक्तुमागतः, तत्र वक्तव्ये भूमिकामारचयति भगवन् ! यदा त्वं विनैव कस्यचित्प्रेरणां स्वावतारप्रयोजनं पूरयितुं दुष्टानां हननं क्रमेण यथावसरं कुर्वन्नेवासि, न हि तत्र ते श्रमोऽपि भवति, एवंविधानां कार्याणां तव लीलामात्रत्वात्, ततश्च व्यर्थप्रायमेव त्वां प्रति दुष्टहननप्रार्थनम्-इति मम वाक् पिष्टपेषणमात्रं स्यात्, परमनेनैव व्याजेन कियन्तं कालं त्वया सहालापगोष्ठीप्रमोदः स्यादिति तत्र लुब्धं मे मनो मां कथने प्रवर्तयत्येव । क्रमेणेत्युक्त्या अवसराप्राप्त्यैवाद्यावधि शिशुपालो न हतः, न तूपेक्षयेति सूचितम् । वाचालतया युनक्तीत्युक्त्या वाचालता मम न निसर्गसिद्धो धर्मः, अपि तु लोलुपेन मनसैवेदानीं संपाद्यते इति सूचितम् । तेनालापगोष्ठीमहत्त्वं व्यञ्जितम् ।

अलं०—कथनप्रवृत्तेर्हेतुना समर्थनात् काव्यलिङ्गम् ।

**तदिन्द्रसंदिष्टमुपेन्द्र ! यद् वचः क्षणं मया विश्वजनीनमुच्यते ।**
**समस्तकार्येषु गतेन धुर्यतामहिद्विषस्तद् भवता निशम्यताम् ॥४१॥**

अ०—तत् (हे) उपेन्द्र ! इन्द्रसंदिष्टं विश्वजनीनम् यद् वचः क्षणं मया उच्यते, तद् अहिद्विषः समस्तकार्येषु धुर्यतां गतेन भवता निशम्यताम् ॥

व्याक०—इन्द्रमुपगतः उपेन्द्रः, "कुगतिप्रादयः" इति समासः । सम्बुद्धौ सुलोपः । इन्द्रेण संदिष्टम् इन्द्रसंदिष्टम्, "कर्तृकरणे कृता बहुलम्" संदिष्टमिति संपूर्वाद् दिशतेः क्तः । अहिं द्वेष्टीति, तस्य अहिद्विषः, क्विप्, कार्यसम्बन्धे षष्ठी । विश्वस्मै जनाय हितमिति विश्वपूर्वपदाद् जनशब्दात् "आत्मन् विश्वजनभोगोत्तरपदात् खः" । तस्य ईनादेशः । उच्यते-ब्रुवेः कर्मणि लट् । मयेति तत्कर्तरि तृतीया । धुर्यताम्-धुरं वहति धुर्यः, "धुरो यड्ढकौ" इति यत् । तस्य भावस्तत्ता, ताम्, भावे तल् । गच्छतेः कर्मणि द्वितीया । निशम्यताम्-निपूर्वात् शाम्यतेर्णिजन्तात् कर्मणि प्रार्थनायां लोट्, अमन्तत्वान्मित्त्वम्, मित्त्वाद् ह्रस्वः । अथवा-निपूर्वात् केवलात् शाम्यतेर्लोटि रूपम्, भवतेति निशमनकर्तरि तृतीया ।

व्या०—तत्-तस्मान् कारणात्, हे-उपेन्द्र-इन्द्रावरज ! कृष्ण !, इन्द्रेण-पुरन्दरेण, सदिष्टम्-मन्मुखेन कथितम्, विश्वजनीनम्-सकललोकहितकरम्, यद्, वच -वाक्यम्, क्षणम्-क्षणमात्रम्, न तु चिरम्, सक्षेपेण, मया, उच्यते-कथ्यते, तद्-वचः, -अहिद्विषः-वृत्रवधकर्तुरिन्द्रस्य, समस्तकार्येषु-सकलावश्यककर्तव्येषु, धुर्यताम्-धुरन्धरत्वम्-कार्यनिर्वाहकत्वम्, गतेन-प्राप्तेन भवता-निशम्यताम्-श्रोतव्यम् । यद्वा-क्षण निशम्यताम्-क्षण तत्रावधीयताम्-इति योज्यम् ।

भावा०-भगवन् कृष्ण ! पूर्वोक्तात् त्वद्गोष्ठीविनोदरसिकत्वाद् हेतोरिदानी-महमिन्द्रसदेश ब्रवीमि । तच्च मे वाक्य नेन्द्रस्यैव स्वार्थसाधकम्, अपि तु लोकहितकरम्, सक्षेपेणैव च स्वल्पेन कालेन मया वक्ष्यते । भवतश्चेन्द्रोपरि तथाविधा कृपा, यया तत्कार्यसाधनाय तत्कनिष्ठत्वमपि भवता कश्यपाददित्या प्रादुर्भवता स्वीकृतम् । सततं च तस्य सर्वाणि कार्याणि भवतैव निर्व्यूढानि । तस्मात्तत्सदेशवाक्यमधुनाप्यवधानेन श्रोतव्यमेवेति ।

अल०—'उपेन्द्र' इति सबोधनम्, विश्वजनीनमिति वचनविशेषणम्, धुर्यता गतेनेति भवद्विशेषण च वचनस्य श्रवणे हेतुसमर्पकमिति पदार्थहेतुक काव्यलिङ्ग स्फुट मल्लिनाथ आह । वस्तुतस्तु नात्र स्फुट हेतुत्वमुपपाद्यते, अपि तु हेतुगर्भतया साभिप्रायाणि पदानीति परिकर, परिकराङ्कुरश्चालकार-इति युक्तम् ।

अभूदभूमि प्रतिपक्षजन्मना भिया तनूजस्तपनद्युतिर्दितेः ।
यमिन्द्रशब्दार्थनिषूदन हरेर्हिरण्यपूर्वं कशिपु प्रचक्षते ॥४२॥

अ०—प्रतिपक्षजन्मना भियाम् अभूमि तपनद्युति दितेः तनूज अभूत् । (लोका ) हरे. इन्द्रशब्दार्थनिषूदन य हिरण्यपूर्वं कशिपु प्रचक्षते ।

व्या०—प्रतिपक्षाद् जन्म यासा तासा प्रतिपक्षजन्मनाम् । व्यधिकरण-णपदत्वमस्य पुरस्तादनेकशो वामनोक्त्या समाहितम् । प्रतिपूर्वात् 'पक्ष परिग्रहे' धातो पचाद्यचि घञि वा प्रतिपक्ष । भिया विशेषणमिदम्, नान्तत्वात् प्राप्तौ टीप् "मन" इत्यनेन निषिध्यते । तपनस्य द्युतिरिव

---

* नपें वृत्रासुरेऽप्यहि -इति वैजयन्ती ।

द्युतिर्यस्य स तपनद्युतिः । लुप्तमध्यमपदो लाक्षणिकपूर्वपदो वा बहुव्रीहिः। इन्द्रशब्दार्थस्य निषूदनम्, इन्द्रशब्दार्थनिषूदनम् । इन्दतीति 'इदि परमैश्वर्ये' धातोः "ऋज्रेन्द्र" इत्यादिना औणादिके रन्प्रत्यये इन्द्रः । निषूदनशब्दे निपूर्वात् सूदयतेश्चौरादिकाद् नन्द्यादित्वाद् ल्युः, सूदते "अनुदात्तेतश्च हलादेः" इत्यनेन युच् तु न, "सूददीपदीक्षश्च" इति निषेधात् । बाहुलकात् कर्तरि ल्युडिति मल्लिनाथः । 'हिरण्य' इति पूर्वं यस्य तत् हिरण्यपूर्वम्, कशिपुमित्यस्य विशेषणमिदम्, तेन हिरण्यकशिपुमिति फलति । अत्रेयं शङ्का—शब्दानामर्थबोधकत्वस्वाभाव्यात्कशिपुशब्दोऽयमर्थबोधकः, हिरण्यशब्द-पूर्वकत्वं तु कशिपुशब्दस्यैव, न तु संज्ञिनस्तदर्थस्येति अर्थपरस्य कशिपुशब्दस्य शब्दपरत्वेन प्रयोगोऽनुचितः, तेन अवाच्यवचनं दोष इति । तत्र मल्लिनाथः समादधे-अर्थबोधकस्यापि कशिपुशब्दस्येह स्वरूपशब्दपरत्वं लक्षणया, वाचकत्वं मुख्यार्थेन सह सबन्धः । तत एव प्रचक्षते इति क्रियया कर्मत्वेनान्वय उपपन्नः । अन्यथार्थस्य प्रख्यानकर्मत्वानुपपत्त्या वाक्यार्थो बाधितः स्यादिति । एवैव च 'देवपूर्वं गिरिं ते' 'धनुरुपपदमस्मै वेदमभ्यादिदेश' इत्यादौ च गतिरिति । परे तु विनापि लक्षणां स्वरूपबोधकत्वं शब्दानां वाक्यपदीयरीत्या ब्रुवते इति कृतमप्रकृतविस्तरेण । भियाम्-बिभेतेः क्विप्, दीर्घत्वात् तुङ् न् । तन्वां जातस्तनूजः, "पञ्चम्यामजातौ" इत्यनेन डः ।

व्याख्या—प्रतिपक्षात्-शत्रोः, जन्म-उत्पत्तिः, यासां तासाम्, शत्रूत्पा-दितानाम्, भियाम्-भयानाम्, अभूमिः-अस्थानम्, निर्भीक इति यावत्, तपनद्युतिः-सूर्यतुल्यकान्तिः, दितेः-दितिनाम्न्या कश्यपस्त्रियः, तनूजः-पुत्रः, दैत्य एकः, अभूत् । लोकाः, *हरेः-इन्द्रस्य, इन्द्रशब्दार्थः-इन्द्रशब्दप्रवृत्तिनिमित्त परमैश्वर्यम्, तस्य निषूदनम्-विनाशकम्, यम्-दैत्यम्, हिरण्यपूर्वं कशिपुम्-हिरण्यकशिपुम्, 'हिरण्यकशिपु' इति नाम्ना, प्रचक्षते-व्यपदिशन्ति ।

भा०—'शिशुपालो हन्तव्यः' इति नारदस्य संदेशविषयः । तदुपयो-गितया शिशुपालस्य प्रबलत्वख्यापनाय नैसर्गिकौद्धत्यख्यापनाय च तदीय

---

* हरिश्चन्द्रार्कवाताश्वशुकभेकयमाहिषु । कपौ सिंहे हरेऽनेशो शक्रे लोकान्तरे पुमान् । इति मेदिनी ।

पूर्वजन्मद्वयवृत्तमप्युपन्यस्यति नारद । तत्र प्रथमं जन्माह-पूर्वस्मिन् हि कृतयुगे कश्यपाद् दित्या हिरण्यकशिपुरिति ख्यात एको दैत्योऽभवत् । सूर्यस्येव तस्य तेज आसीत्, शत्रुपक्षाद्भय तस्य कदापि न जातम् । इन्द्रस्य हि परमैश्वर्यं यद्यपि नैसर्गिकम्, अत एव तादिन्द्र इत्यभिधाने प्रवृत्तिनिमित्तता गतम्, 'इदि परमैश्वर्ये' इति धातुना इन्द्रशब्दस्य व्युत्पादनात् । नचेतः पूर्वं परमैश्वर्येणेन्द्र कदापि विरहितोऽभूत् । पर हिरण्यकशिपुना तत्परमैश्वर्यमपहृतमेव । तेनैव हिरण्यकशिपोरसाधारण प्राबल्य प्रकटीभूतम् ।

अल०—परमैश्वर्यापहरणस्यार्थस्य भङ्गयन्तरेणोपन्यासात् पर्यायोक्तम् । तपनद्युतिरित्युपमा । अनुप्रासस्तु चमत्कुर्वन् जागर्त्येव ।

**समत्सरेणासुर इत्युपेयुषा चिराय नाम्न प्रथमाभिधेयताम् ।**
**भयस्य पूर्वावतरस्तरस्विना मनस्सु येन द्युसदां न्यधीयत ॥४३॥**

अ०—समत्सरेण असुर इति नाम्न प्रथमाभिधेयताम् चिराय उपेयुषा तरस्विना येन द्युसदा मनस्सु भयस्य पूर्वावतर न्यधीयत ।

व्याकृ०-मत्सरेण सह वर्तते इति तेन समत्सरेण । तुल्ययोगे बहुव्रीहिः । प्रथम अभिधेय' प्रथमाभिधेय, तस्य भाव, ताम् । अभिधेयशब्दे अभिपूर्वाद् दधाते "अचो यत्" । दिवि सीदन्ति इति द्युसदः, तेषाम् । सीदते. क्विप्, पूर्वपदे "दिव उत्", मन सम्बन्धे षष्ठी । पूर्वः अवतर पूर्वावतर, 'पूर्वापरप्रथमचरम" इति समास । अवतर -तरते "ॠदोरप्" इत्यप् । निधानक्रियाया उक्ते कर्मणि प्रथमा । असुर -अस्यतीति "असेरुरन्" औणादिक । शब्दस्वरूपनिर्देशात् प्रातिपदिकार्थमात्रे प्रथमा । चिरायेति विभक्तिप्रतिरूपकमव्ययम् । उपेयुपेति व्याख्यातम् । तरस्विना-तरश्शब्दाद् "अस्मायमेधास्रजो विनि" । न्यधीयत-निपूर्वाद् दधाते कर्मणि लङ्, येनेति तत्कर्तरि तृतीया । भयस्येति पूर्वावतरसम्बन्धे षष्ठी ।

व्याख्या—समत्सरेण-अन्यशुभद्वेषो * मत्सर इति उच्यते, तत्सहितेन, अन्यस्यैश्वर्यादिकमसहमानेन, असुर इति नाम्न.-सज्ञाया, प्रथमाभिधेयताम्-(अन्वर्थतया) मुख्यार्थताम्, (अथवा असुरपदस्य सर्वप्रथमा वाच्यताम्)

* मत्सरोऽन्यशुभद्वेषे इत्यमर ।

* चिराय-चिरकालेन, चिरकालानन्तरम्, चिरकालपर्यन्त वा, उपेयुषा-प्राप्तवता, † तरस्विना-बलवता, येन हिरण्यकशिपुना, द्युसदाम-देवानाम्, मनस्सु, भयस्य, पूर्वावतर -प्रथमा प्रवृत्ति , न्यधीयत-निहिता स्थापिता-कृता इति ।

भावा०—अनेनैव हिरण्यकशिपुना देवै सह द्वेष कुर्वता मत्सर पूर्वं प्रकटित , नेतः पूर्वं क्वचिदपि तास्मिन् युगे मत्सरोऽभूत् , रागद्वेषशून्या एव प्रजा आदियुगे उत्पद्यन्ते इति । कि च असुर इति शब्दमात्र यद्यपि सृष्टेरारम्भात् प्रवृत्तमासीत्, पर चिरकालपर्यन्तमय शब्दो रूढ एव गण्यते स्म हिरण्यकशिपुस्तु सुरविरोधात्, सुराणामसनात्-स्वस्थानेभ्य क्षेपणाद् निष्कासनाद्वा-असुरशब्दस्य मुख्यार्थतामगमत् । यद्वा-इत पूर्वमसुरशब्दस्य प्रवृत्तिरेव नासीत्, अयमेव सुरविरोधात् प्रथममेव असुर इति ख्यातिं गत , सोऽय सुरविरोधश्चिरकालपर्यन्तमनेन दैत्यकुले प्रचारित , तत प्रभृति सर्वेऽपि दैत्या देवविरोध चक्रु । किं च देवाना मनस्सु कदापि तत पूर्वं कुतोऽपि भय नासीत्, अनेनैव प्रथम देवान् पराजित्य तेषा मनस्सु प्रथममेव भय स्थापितम् ।

अल०—सुरविरोधस्य, सुरपराजयस्य च असुरशब्दवाच्यतालक्षणेन, भयनिधायकत्वलक्षणेन च कार्येणाभिधानादप्रस्तुतप्रशसा, प्रस्तुताङ्कुरो वा । तरस्विनेति विशेषण भयनिधाने साभिप्रायमिति परिकरः ।

**दिशामधीशाँश्चतुरो यत सुरानपास्य त रागहृता सिषेविरे ।**
**अवापुरारभ्य ततश्चला इति प्रवादमुच्चैरयशस्कर श्रिय ॥४४॥**

अ०—श्रिय यत दिशाम् अधीशान् चतुर सुरान् अपास्य रागहृता: ( सत्य: ) तं सिषेविरे, तत आरभ्य चला इति उच्चैः अयशस्कर प्रवादम् अवापु ।

व्याक०—रागेण हृता.-रागहृताः । रञ्जेर्घञि राग । " घञि च भावकरणयो " इति न लोप । न यशस्करम् अयशस्करम् । यशस्करशब्दे करोते " कृञो हेतुताच्छील्यानुलोम्येषु " इति हेतौ ट , " अत कृकमि " इत्यादिना विसर्गस्य सत्वम् । यत.-" पञ्चम्यास्तसिल् " पञ्चमी च ल्यब्लोपे,

* चिराय चिररात्राय चिरस्याद्याश्चिरार्थका -इत्यमर. ।

† तरसी बलरहमी-इति विश्व ।

यत्कालमारभ्येत्यर्थ । मल्लिनाथस्तु यदेति व्याचष्टे, तन्मते सार्वविभक्तिकस्तसि । अधीशते इत्यधीशा, अधिपूर्वादीष्टेः इगुपधत्वात् क । अपास्य-अपपूर्वाद् 'असु क्षेपणे' धातोर्ल्यप् । सुरानिति तत्कर्मणि द्वितीया । सिषेविरे-सेवतेलिटि झप्रत्यये रूपम् । तमिति सेवनकर्म । तत -पूर्ववत् तसिल्, पञ्चमीत्वन्त्वारभ्यशब्दयोगे भाष्यप्रामाण्यात् । चला -चलते पचाद्यच् । प्रातिपदिकार्थमात्रे प्रथमा । प्रवादम्-वदेर्घञ् ।

व्याख्या—श्रिय -सम्पद , यत -यत्कालमारभ्य (यदा वा) दिशाम्, अधीशान्-स्वामिन -दिक्पतीन्, चतुर -चतु सख्याकान्, सुरान्-देवान्, इन्द्रवरुणयमकुवेरान्, अपास्य-त्यक्त्वा, रागेण-अनुरागेण (न तु बलेन) हृता -आकृष्टा सत्य , तम्-हिरण्यकशिपुम्, सिषेविरे-सेवितवत्य , आश्रिता इति यावत्, तत आरभ्य-तत्कालमवधिं कृत्वा', चला इति-'सम्पद. अस्थिरा भवन्ति' इति, उच्चै - अतिशयेन, अयशस्करम्-अकीर्तिहेतुम्, प्रवादम्-लोकापवादम्, अवापु -प्राप्तवत्य ।

भावा०—सपदस्तथा तास्मिन् हिरण्यकशिपौ समाश्रिता अनुभूयन्ते स्म, यथा लोकैः 'अस्य सर्वातिशायि बल दृष्ट्वा बलानुरागादेवैतदाश्रय श्रीभि स्वीकृत , 'न तु बलेनापहाराद्' इति प्रतीयते स्म । श्रीषु स्त्रीत्वमत्रारोप्यते, स्त्रियश्च रागहृता एव सुख निवसन्ति, बलहृतास्तु अस्थिरा भवन्तीति-सपदा सुस्थिरतामालोक्य रागहृतत्वमुत्प्रेक्षितम् । यतश्च यत्र पूर्व श्रियो न्यूषु , तान् चतुरो दिगीशान् परित्यज्य तदाश्रयस्ताभिरुररीकृत , तत एव लोके श्रिया चलत्वप्रवाद. प्रवृत्तोऽभूत् । स चाय प्रवाद श्रियामकीर्तये, स्त्रीणा परपुरुषाश्रयप्रयोजक चाञ्चल्य सर्वथाप्यकीर्त्तिकर भवतीति । इतः पूर्वमिन्द्रादिषु लोकपालेष्वेवासाधारण्येन श्रिया निवास आसीत्, हिरण्यकशिपुना तु सर्वेपा लोकपालाना श्रीरपहृतेति तात्पर्यम् ।

अल०—दिक्पतीना श्रीस्तेनापहृता-इत्यर्थस्य भङ्ग्यन्तरेणोपन्यासाद् पर्यायोक्तम् । रागहृता इति हेतूत्प्रेक्षा, सा च वाचकाभावाद् गम्या । श्रीषु स्त्रीत्वारोपत्वप्रयोज्य आर्थ इति व्यङ्ग्य रूपकमङ्गि । हिरण्यकशिपोः संपदाधिक्य मुख्य व्यङ्ग्यम् ।

पुराणि दुर्गाणि निशातमायुध बलानि शूराणि घनाश्च कञ्चुका. ।

**स्वरूपशोभैकफलानि नाकिना गणैर्यमाशङ्क्य तदादि चक्रिरे ॥ ६२ ॥**

अ०—नाकिना गणैः यम् आशङ्क्य तदादि स्वरूपशोभैकफलानि पुराणि दुर्गाणि, आयुध निशातम्, वलानि शूराणि, च कञ्चुका घनाः चक्रिरे ।

व्याक०—स (काल) आदिर्यस्य यस्मिन् वा, यथा भवति तथा, तदादि, क्रियाविशेषणम् । स्वरूपस्य शोभा (एव) एक फल येषा तानि, ते च स्वरूपशोभैकफलानि, नपुसकान्यपदार्थ एको बहुव्रीहि, पुरुषान्यपदार्थोऽपर, तयोश्च "नपुंसकमनपुसकेनैकवच्चास्यान्यतरस्याम्" इति नपुसककैशेष । नाकिनाम्- नाकशब्दाद् "अत इनिठनौ", नाक (स्वर्ग) येषामस्तीति विग्रह । आशङ्क्य- आङ्पूर्वात् 'शकि' धातो ल्यप् । दुर्गाणि "सुदुरोरधिकरणे" इत्यनेन दुरुपपदाद् गच्छतेर्डः । पुराणा विधेयविशेषणम् । कर्मण उक्तत्वात् प्रथमा । आयुधम्-आयुध्यतेऽनेनेति युध्यतेः "घजर्थे कविधानम्" । जातावेकवचनम् । निशातम्-निपूर्वात् 'शो तनूकरणे' धातो क्त, "शाच्छोरन्यतरस्याम्" इति विकल्पादित्वाभाव । चक्रिरे-करोते कर्मणि लिट् । गणैरिति तत्कर्तृपदम् । आयुधं निशातमित्यत्र वचनविपरिणामेनान्वय, निशात चक्र इति ।

व्या०—नाकिनाम्-देवानाम्, गणै -समूहै, यम्-हिरण्यकशिपुम्, आशङ्क्य-कदायमस्मानाक्रामेद् इति सदिह्य, यस्माद् भय प्राप्येति यावत्, तदादि-तं कालमारभ्य, स्वरूपशोभा-सौन्दर्य्यमेव, यद्वा-स्वरूपस्य प्राप्तस्य तत्तदधिकारस्य, शोभा-प्रतिष्ठारक्षणमेव, एकम्-केवलम्, फलम्- प्रयोजन येषा तथाभूतानि, पुराणि-नगराणि, दुर्गाणि-परित प्राकारपरिखादिनिर्माणेन दुर्गरूपाणि दुर्गमानि, (अथवा दुर्गाणीत्यनुवाद्यम्, पुराणीति विधेयविशेषणम्, दुर्गाणि पर्वतादिदुर्गमस्थानानि ) पुराणि-वसतय, आयुधम्-शस्त्रम्, निशातम्-तीक्ष्णम्, वलानि-सैन्यानि, शूराणि-पराक्रमवन्ति, च पुन, *कञ्चुका -लोहवर्माणि, घना - सान्द्राः-दुर्भेदा, चक्रिरे-विदधिरे ।

भा०—हिरण्यकशिपो पूर्वं देवाना पुरैरायुधै सैन्यैर्लोहवर्मभिर्वा किमपि प्रयोज्य नासीत्, शत्रोरभावाद्रक्षार्थमप्रवृत्ते । तस्मात् केवलमैश्वर्यख्यापनाय, स्वरूपसौन्दर्यवर्धनाय, आधिपत्यादि-स्वस्वाधिकृतपदप्रतिष्ठारक्षणाय वा

* कञ्चुको वारवाणोऽस्त्री-इत्यमर ।

तैरेतानि कथचिद् ध्रियन्ते स्म। हिरण्यकशिपुस्तु यदा तान् बाधितु प्रवृत्त, तदा-एषा स्वरूपशोभास्थाने रक्षा मुख्य प्रयोजन बभूव, इति तदनुकूलतार्थं तानि तानि वस्तूनि तथैव तै सज्जीकृतानि। पुराणि दुर्गरूपता नीतानि, ( केचित्त्वाहु पुराणा स्वरूपशोभैकफलकत्व न संभवति, शत्रोरभावेऽप्यन्त-तस्तेषा शीतोष्णादिनिवारणार्थत्वाद् निवासार्थत्वात्। तस्माद् दुर्गाणि पुराणि चक्रिरे-इति वैपरीत्येन व्याख्येयम्। दुर्गाणा पूर्व प्रयोजन नासीद् इदानीन्तु भयात्तान्येव वसतिरूपाणि कृतानि, तत्रैव निवास देवाश्चक्रुरिति ) शस्त्राणि तीक्ष्णता नीतानि, सेनासु शूरा सनिवेशिता, लोहवर्माणि च दुर्भेदानि परिधीयन्ते स्म इति। इत्थ तद्भयान्नित्यसन्नद्धा देवा जाग्रति स्म।

अल०—दुर्गादिकरणे यमाशङ्कयेति हेतोरुपन्यासात् काव्यलिङ्गम्। देवेषु भयम्, तेन हिरण्यकशिपोः प्रभावो व्यङ्ग्य।

स सचरिष्णुर्भुवनान्तरेषु या यदृच्छयाशिश्रियदाश्रय श्रिय।
अकारि तस्यै मुकुटोपलस्खलत्करैस्त्रिसन्ध्य त्रिदशैर्दिशे नम॥४६॥

अ०—भुवनान्तरेषु सचरिष्णु श्रिय आश्रयः स यदृच्छया याम् ( दिशम् ) अशिश्रियत्, तस्यै दिशे मुकुटोपलस्खलत्करै त्रिदशै त्रिसध्य नम अकारि।

व्याक०—अन्येषु भुवनेषु भुवनान्तरेषु, मयूरव्यसकादिसमास। मुकुटानाम् उपलेषु स्खलन्त करा येषा तै मुकुटोपलस्खलत्करै, स्खलदिति स्खलते शतरि रूपम्। तिस्र सध्या त्रिसध्यम्, "तद्धितार्थोत्तरपदसमाहारे च" इति समाहारे द्विगु, "द्विगुरेकवचनम्" "स नपुसकम्" इत्येकवचन नपुसकत्व च, क्रियाविशेषणत्वाद्, अत्यन्तसयोगे वा द्वितीया। तिस्र दशा ( बाल्यकौमारयौवनाख्या न तु जरामरणाद्या, यद्वा-जन्मसत्तावृद्धय, न त्वपक्षयपरिणतिनाशा ) येषा तै, त्रिदशै। "अलकृञ्निराकृञ् " इत्यादिना इष्णुच्। आश्रय -आङ्पूर्वाच्छ्रयतेः "एरच्"। यदृच्छया-ऋच्छनम् ऋच्छा, 'ऋच्छ गतीन्द्रियप्रलयमूर्तिभावेषु' इति धातो "गुरोश्च हल" इत्यप्रत्य। या ऋच्छा यदृच्छा, तया, हेतौ तृतीया। अशिश्रियत्-श्रिधातोर्लुङि रूपम्, "णिश्रिद्रुस्रुभ्य कर्तरि चङ्" "चङि" इति द्वित्वम्, इयङ्। अकारि-करोतेः कर्मणि लुङ्। "चिण् भावकर्मणो" इति चिण्।

नम इत्यव्यय तत्कर्मबोधकम् । त्रिदशैरिति तत्कर्तरि तृतीया । तस्यै-"नमः स्वस्ति स्वाहा " इत्यादिना नमोयोगे चतुर्थी । कर्म च तु न, तस्य क्रियया सबन्धाविवक्षणात् ।

व्याख्या—भुवनान्तरेषु-अन्येषु लोकेषु, सचरिष्णु -सञ्चरणशील, श्रियः-लक्ष्म्या, आश्रय -एक आधारभूत, स -हिरण्यकशिपु, *यदृच्छया-स्वैरवृत्त्या-यथेच्छम्, ( नत्वाक्रमणेच्छया ) याम्-दिशम्, अशिश्रियत्-आश्रितवान्-जगाम, तस्यै-दिशे, †मुकुटोपलेषु-मुकुटप्रोतरत्नेषु, स्खलन्त -पतन्त, करा -हस्ता', येषा तथाभूतैः, शिरसि बद्धाञ्जलिभि, त्रिदशै.-देवै, त्रिसन्ध्यम्-तिसृषु सध्यासु-प्रातर्मध्याह्नसायकालेषु, नम अकारि प्रणाम क्रियते स्म ।

भा०—देवास्ततो दैत्यादेव भीता बभूवु यद्यत्र तस्य दर्शनम्, यस्मिन् स्थाने वा तस्य स्थिति, तत्र तद्वन्दनविषये तु वक्तव्यमेव किम्, किन्तु सञ्चरणशीलतया स्वैरवृत्त्याऽपि स यस्या दिशि जगाम, तस्यै दिशे अपि देवास्तिसृषु सन्ध्यासु शिरसि बद्धाञ्जलय प्रणेमु । तस्या दिशि स्थित त प्रणेमुरिति न, किन्तु तत्संबन्धात्प्राप्तगौरवा ता दिशमपि प्रणेमु. । तदपि नैकवारम्, किन्तु प्रत्यह तिसृषु सन्ध्यासु । सन्ध्यासु इत्युक्त्या सन्ध्यावन्दनकालेऽपि दिङ्नियम त्यक्त्वा तदधिष्ठिता दिगेव प्रणम्यते स्म-इति द्योतितम् । स्खलत्करैरित्युक्त्या प्रणामे संभ्रमो व्यञ्जितः । मुकुटोपलस्खलत्करैरिति च मुकुटमणीनामपि विस्रंसनपतनादाववधान नास्ति, भयाधिक्यादिति ध्वनितम् । यस्या दिशि सूर्यो भवति, तद्दिगभिमुखा देवमनुष्या सन्ध्यासु सूर्यं प्रणमन्ति, एतदाश्रिता तु दिगेव प्रणम्यते स्म । किं च सूर्यस्य तत्तद्दिगवस्थान नियतम्, अय तु स्वैरवर्ती, यथेच्छ यस्या कस्यामपि दिशि विहरतीत्यादिना सूर्याद् व्यतिरेको व्यञ्जित ।

अल०—देवेषु भय व्यङ्ग्यम्, तेन दैत्यप्रभावः प्राधान्येन ध्वन्यते । तस्याद्भुतातिशयबोधनादत्युक्तिः । व्यतिरेकस्य व्यङ्ग्यता भावार्थे निरूपिता ।

---

* यदृच्छा स्वैरवृत्ति.—इत्यमरः ।

† उपल. प्रस्तरे रत्ने—इति विश्व ।

सटाच्छटाभिन्नघनेन बिभ्रता नृसिंह ! सैंहीमतनु तनु त्वया ।
स मुग्धकान्तास्तनसङ्गभङ्गुरैरुरोविदार प्रतिचस्करे नखैः ॥४७॥

अ०—( हे ) नृसिंह ! अतनु सैंहीं तनु बिभ्रता सटाच्छटाभिन्नघनेन त्वया स॰ मुग्धकान्तास्तनसङ्गभङ्गुरै नखैः उरोविदार प्रतिचस्करे ।

व्याक०—ना सिंह इव नृसिंह , उपमितसमास. । ना चासौ सिंहश्चेत्यपि प्रकरणात् । सटाना छटाभिः भिन्ना घना येन तेन सटाच्छटाभिन्नघनेन । भिन्नघनशब्दौ व्याख्यातौ । मुग्धायाः कान्ताया॰ (कर्म०) स्तनयोः (तत्पु०) ( यद्वा-मुग्धयो कान्तास्तनयो ) सङ्गेन भङ्गुरै॰ मुग्धकान्तास्तनसङ्गभङ्गुरै । 'मुह वैचित्ये' धातो क्तप्रत्यये मुग्धेति, "वाद्रुहमुह " इति वैकल्पिक घत्वम्, "पुवत्कर्मधारय " इति पुस्त्वम् । काम्यते इति कान्ता, केवलात् 'कमु कान्तौ' धातो कर्मणि क्तः । "अनुनासिकस्य क्वि॰ " इति दीर्घ. । सङ्ग इति 'षञ्ज सङ्गे' धातोर्घञन्त । भङ्गुर इति भञ्जेः "भञ्जभासमिदो घुरच्" । न ख येषु तैर्नखैः, "नभ्राण्णपान्न " इति नलोपाभावो निपात्यते। उरो विदार्येत्युरोविदारम्, उरउपपदाद् विदारयते. "परिक्लिश्यमाने च" इत्यनेन णमुल् । "अमैवाव्ययेन" इत्युपपदसमास । सिंहस्येमा सैंहीम्, "तस्येदम्" इति शैषिकोण् । अणन्ताद् ङीप् । प्रतिचस्करे-प्रतिपूर्वात् किरते कर्मणि लिट्, "ऋच्छत्यृताम्" इत्यनेन गुण , "हिंसाया प्रतेश्च" इति सुडागम । त्वयेति प्रतिस्करणक्रियाया कर्तृपदम्, स इति प्रथमान्त तस्या एव उक्त कर्म ।

व्याख्या—हे नृसिंह-हे नरश्रेष्ठ ! यद्वा-हे नृसिंहावतारधारिन् ! अतनुम्-महतीम्, सैंहीम्-सिंहस्य *तनुम्-शरीरम्, बिभ्रता-धारयता, †सटानाम्-केसराणाम्-ग्रीवोपरिस्थाना केशानाम्, छटाभि -समूहै , भिन्नाः-अत्युच्चतया सघर्षेण खण्डिता , घना -मेघा , येन तथाभूतेन, त्वया-भवता, स॰-हिरण्यकशिपु॰, मुग्धाया -नवोढाया , कान्ताया प्रियाया , स्तनयो कुचयो , (मुग्धयो.-‡नवयो , कान्तास्तनयो -प्रियाकुचयोरिति वा) सङ्गेन-सम्बन्धेनापि,

* तनु॰ काये कृशेऽल्पे च-इति विश्व ।

† सटा जटाकेसरयो -इति विश्व । ‡ मुग्ध. सौम्ये नवे मूढे-इति वैजयन्ती ।

भङ्गुरैः-भङ्गशीलैः-त्रुट्यद्भिः, वक्रतामापद्यमानैरिति वा, नखैः, उरोविदारम्-उरः-वक्षस्थलम्, विदार्य-द्विधाकृत्य, प्रतिचस्करे-हतः ।

भावा०—भगवन् कृष्ण ! तस्य हिरण्यकशिपोर्विनाशाय त्वयैव नृसिंह-रूपं धृतम् । तद्धि तव रूपमतिविशालं भयङ्करं चासीत् । यस्य सिंहरूपस्य स्कन्धस्थितानां केसराणां संघर्षेण मेघा अपि विदीर्णा बभूवुः । तेनैव रूपेण नखैर्वक्षो विदार्य स दैत्यस्त्वया हतः । अहो ! ये ते नखा विलासे कान्तानां कठोरस्तनविमर्दनेऽपि त्रुट्यन्ति ( वक्रीभवन्ति वा ) तैरेव वज्रसारस्य तस्य दैत्यस्य वक्षो विदारितमिति विलक्षणस्ते महिमा ।

अल०—स्तनसङ्गभङ्गुरैरपि दैत्यवक्षोविदारणमिति विरोधः । स च अपेरभावाद् गम्यः । भगवतो विलक्षणो महिमेति परिहारः । 'सटाच्छटा' 'नृसिंह सैंहीम्' 'अतनुं तनुम्' 'सङ्गभङ्गु' इति चेतोहरा अनुप्रासाः । अतनुं तनुमिति यमकं वा ।

**विनोदमिच्छन्नथ दर्पजन्मनो रणेन कण्ड्वास्त्रिदशैः समं पुनः ।**

**स रावणो नाम निकामभीषणं बभूव रक्षः क्षतरक्षणं दिवः ॥४८॥**

अ०—अथ सः त्रिदशैः समं रणेन दर्पजन्मनः कण्ड्वाः पुनः विनोदम् इच्छन् निकामभीषणं दिवः क्षतरक्षणं रावणः नाम रक्षः बभूव ।

व्याक०—दर्पाद् जन्म यस्याः तस्याः दर्पजन्मनः । कण्ड्वाः विशेषणम् । दर्पेति दृप्यतेर्घञन्तः । निकामं भीषणं निकामभीषणम्, निकामे निपूर्वात् कमुधातोर्घञ् । भीषणशब्दे णिजन्ताद् भीधातोर्ल्युः नन्द्यादित्वाद्, "भियो हेतुभये षुक्" क्रियाविशेषणस्य "सुपा" इति समासः । क्षतं रक्षणं येन तत् क्षतरक्षणम् । रक्षणशब्दस्य द्युशब्दसापेक्षत्वेऽपि गमकत्वात् समास इति मल्लिनाथः । दिवः समुदायान्वयविवक्षयेत्यर्थः । विवृतं प्रागिदम् । क्षतेति क्षणुधातोः क्तान्तम् । रक्षणमिति रक्षतेर्ल्युट् । विनोदम्-विपूर्वाद् 'णुद् प्रेरणे' धातोर्घञ् । इषिकर्मत्वाद् द्वितीया । कण्ड्वा इति विनोदकर्मणि षष्ठी । इच्छन्-इषेर्हेतौ शतृप्रत्ययः । विश्रवसोऽपत्यं पुमानिति रावणः, विश्रवश्शब्दात् "तस्यापत्यम्" इत्यणि "विश्रवसो विश्रवणरवणौ" इत्यनेन रवणादेशः

आदिवृद्धि । अथवा * रावयतीति णिजन्तरुधातोर्ल्यो प्रत्यये रावण इति । त्रिदशैः—समशब्दयोगे "सहयुक्तेऽप्रधाने" इति तृतीया, रणेन-करणे तृतीया । रक्ष शब्दो नियतनपुसक इति रावणवाचकत्वेऽपि तस्य नपुसकत्व-मेव । रावणशब्दस्तु वाच्यलिङ्गत्वात् पुसि ।

व्याख्या—अथ-पूर्वशरीरनाशानन्तरम्, स -हिरण्यकशिपु॰, त्रिदशै॰-देवै , †समम्-सह, रणेन-सग्रामेण, दर्पजन्मन -गर्वादुत्पन्नाया , कण्ड्वा॰-भुजखर्ज्वा -प्रबलयुद्धेच्छाया, पुन॰-भूयोऽपि, विनोदम्-विनयनम्-अपाकरणम्, इच्छन्-कामयमान , निकामभीषणम्-अत्यन्तभयङ्करम्, दिव॰-स्वर्गस्य, क्षतम्-विनाशितम्, रक्षणम्-रक्षा, येन तथाभूतम-स्वर्गपीडाकरम, रावण॰ नाम-रावण इति सज्ञया प्रसिद्धम्, रक्ष -राक्षस , बभूव-उत्पन्नम् ।

भावा॰—अथ तस्य द्वितीयं जन्म प्रस्तूयते । यद्यपि हिरण्यकशिपुना देवै सह बहव॰ सग्रामाः कृता , तथापि तस्य भुजयो रणकण्डूतिर्न शान्ति गतेति मन्ये । ( नृसिंहनखैरपि न कण्डूरपनुन्नेत्याश्चर्यं द्योतयति कविः ) । गर्वातिशयस्तत्र हेतु । तत एव स पुनर्देवै सह योद्धु रावणनाम्ना पुनर्जन्म गृहीतवान् । अस्मिन् जन्मन्यय पूर्वापेक्षयाऽप्यधिको भयङ्कर आसीत् । अनेन स्वर्गस्य रक्षैव विक्षता । देवसर्वस्वमपहृतमिति यावत् ।

अल॰—विनोदमिच्छन्निति गूढा हेतूत्प्रेक्षा । कण्ड्वा विनोदमिच्छन्निति लोकप्रवादानुकरणाल्लोकोक्तिरपि ।

**प्रभुर्बुभूषुर्भुवनत्रयस्य य शिरोतिरागाद् दशम चिकर्तिषु ।**
**अतर्कयद् विघ्नमिवेष्टसाहस॰ प्रसादमिच्छासदृशे पिनाकिन ॥ ४६ ॥**

अ॰—य भुवनत्रयस्य प्रभु बुभूषु इष्टसाहस अतिरागात् दशम शिर चिकर्तिषु इच्छासदृश पिनाकिन प्रसाद विघ्नमिव अतर्कयत् ।

व्याक॰—भुवनाना त्रयस्य भुवनत्रयस्य, त्रयेति व्याख्यातम । यद्यपि पर्याप्त्यर्थकप्रभुशब्दयोगे "नम स्वस्ति .." इति चतुर्थी प्राप्नोति, तथापि

---

* यस्माल्लोकत्रय चैतद्रावित भयमागतम् । तस्मात्त्व रावणो नाम नाम्ना वीरो भविष्यसि इति रामायणे उत्तरकाण्डे ।

† साक सार्द्ध सम सह-इत्यमर ।

'स एषा ग्रामणी ' इत्यादिनिर्देशात् प्रभ्वादियोगे षष्ठ्यपि साधुः इति दीक्षितः। इष्टं साहसं यस्य स इष्टसाहसः, इष्टेति इषेः क्तः । इच्छायाः सदृशम् इच्छासदृशम्, "इच्छा" इत्यनेनेच्छाशब्दः इषेः शान्तो निपात्यते। सदृशशब्दे समान इव दृश्यते इति समानोपपदाद् 'दृश्' धातोः "समानान्ययोश्च" इत्यनेन क्ञ्, "दृग्दृशवतुषु" इति समानस्य सः । भवतेः सन्नन्तादुप्रत्यये बुभूषुः । दशानां पूरणमिति दशन्शब्दात् "तस्य पूरणे डट्" डटो मडागमश्च। चिकर्तिषुः-कर्तितुमिच्छुरिति 'कृती छेदने' धातोः सन्, तत उ.। पिनाकिन.-पिनाकोऽस्यास्तीति "अत इनिठनौ" प्रसादसम्बन्धे षष्ठी । प्रसादमिति सीदतेर्घञ् । विहन्यतेऽनेनेति विघ्नः, विपूर्वाद् हन्तेः "घञर्थे कविधानम्" । अतर्कयत्-चौरादिकात् तर्कयतेर्लङ् । इत प्रभृति षट्सु पद्येषु सर्वत्रान्वयान्ते, पूर्वपद्योक्तः स रावणो नाम रक्षो बभूवेति संयोज्य यच्छब्दस्य निराकाङ्क्षत्व मपाद्यम् । रावणौद्धत्यवर्णनपराणां पद्यानां परस्परमन्वयस्तु न, मीमांसायाम-रुणाधिकरणसिद्धाद् 'गुणानां च परार्थत्वादसम्बन्धः समत्वात् स्याद्' इति न्यायादिति मल्लिनाथः ॥

व्याख्या—यः रावणः, भुवनत्रयस्य, प्रभुः-अधिपतिः, बुभूषुः-भवितुमिच्छुः, इष्टम्-प्रियम्, साहसम्-दुष्करकर्म, यस्य तादृशः, अतिरागाद्-अतिप्रेम्णः, उत्साहात्, दशमम्, शिरः-मूर्धानम्, चिकर्तिषुः-छेत्तुमिच्छुः, इच्छासदृशम् मनोरथानुरूपम्, पिनाकिनः-शिवस्य, †प्रसादम्-जगत्त्रयसंपत्प्रदानरूपमनुग्रहम्, विघ्नमिव-अन्तरायभूतम्, अतर्कयत्-अमन्यत ।

भावा०—सोऽयं रावणो लोकत्रयाधिपतित्वप्राप्तये भगवन्तं शिवमाराधयत् । तदाराधने चैतावत्साहसं कृतवान्, यत् स्वस्यैव शिरांसि कर्तं कर्तं पुष्परूपेण शिवाय न्यवेदयत् । इदं चातिमहत्कर्म न तेन फलप्राप्तिविलम्बनिर्देशात् कृतम्, अपि तु भगवति शिवे प्रेमातिशयात्, स्वस्य साहसैकरसत्वाच्च । नव शिरांसि निकृत्य गदार्पितानि, दशममपि च कर्तितुमुद्यतोऽभूत्, तदा तुष्टः शिवः दृष्टः लोकत्रयीसंपदाधिपत्यं वरमस्मै प्रायच्छत् । किन्तु तं प्रसादमप्ययं स्वसा-

* साहसं तु दमे दुष्करकर्मणि । अविमृश्यकृतौ धाष्टर्य-इति हैमः ।

† प्रसादोऽनुग्रहस्वास्थ्यप्रसत्तिषु । काव्यगुणे-इति हैमः ।

हसे विघ्नमिवामन्यत। 'मया दशम शिरश्छेत्तुं न पारितम्, कुतो मध्य एव भगवता प्रसाद कुर्वता ममेच्छाया विघ्न उत्पादित' इति।

अलं०—इवशब्दस्य सादृश्यबोधकत्वे उपमा, इच्छाप्रतिघातकत्वमत्र विघ्नप्रसादयो सादृश्यम्। अतर्कयदिति क्रियान्वयानुगुण्यादिवशब्दस्य संभावनापरत्वे तु प्रसादे विघ्नत्वसंभावनादुत्प्रेक्षा। *अथेवशब्दस्यापूर्णतामात्रबोधकत्वे प्रसादरूपे गुणे दोषत्वकल्पनाल्लेश। युक्तायुक्तता सुधीभि. स्वयमूह्या।

**समुत्क्षिपन् यः पृथिवीभृता वरं वरप्रदानस्य चकार शूलिन.।**
**त्रसत्तुषाराद्रिसुतासमम्भ्रमस्वयङ्ग्रहाश्लेषसुखेन निष्क्रयम् ॥ ५०॥**

अ०—य पृथिवीभृता वर समुत्क्षिपन् त्रसत्तुषाराद्रिसुतासमम्भ्रमस्वयङ्ग्रहाश्लेषसुखेन शूलिन वरप्रदानस्य निष्क्रयम् चकार।

व्याक०—तुषारस्य, तुषार, तुषारालयो वा अद्रि तुषाराद्रि, प्रथमे आधयाश्रयिभाव षष्ठ्यर्थ., द्वितीये तुषारशब्द शीतवाची, तृतीये शाकपार्थिवादित्वान्मध्यमपदलोप। त्रस्यन्त्या तुषाराद्रेः सुतायाः (ष० तत्पु०, कर्म०) सम्भ्रमेण सहितः (तुल्ययोगे बहु०) स्वयं ग्रहः (सुपा, प० तत्पु०) आश्लेष, तेन सुखम्, तेन त्रसत्तुषाराद्रिसुतासमम्भ्रमस्वयङ्ग्रहाश्लेषसुखेन। 'सम्' 'उत्' इत्येतत्पूर्वात् क्षिपते हेतौ शतृप्रत्यये समुत्क्षिपन्। शूलोऽस्यास्तीति शूलशब्दाद् "अत इनिठनौ" इति इनिप्रत्यये शूली। निष्क्रीयतेऽनेनेति निष्पूर्वपदात् क्रीणाते. "एरच्" "इदुदपधस्य ·" इति विसर्गस्य षत्वम्। व्रियते इति वर.-"ग्रहवृदृ···" इत्यप्, तस्य प्रदानशब्देन षष्ठीसमास। ननु 'वरस्य' इति षष्ठ्या. "उभयप्राप्तौ कर्मणि" इत्यनेन विधीयमानत्वात्, "कर्मणि च" इति निषेधे समासो नोचितः, किं च कर्मण एव षष्ठीति नियमात् 'शूलिनः' इति कर्तरि षष्ठ्यप्यसङ्गता, इति चेदुच्यते 'शेषे विभाषा" इति सूत्रे अविशेषेण विभाषापक्षे यदा नियमाप्रवृत्तिस्तदा कर्तृकर्मणोरुभयोरपि षष्ठ्येव साधु, समासोऽपि च नासङ्गतः-इत्युक्त प्राक्। शेषषष्ठ्या समासोऽयमिति वाभ्युपगन्तव्यम्। पृथिवीभृतामिति निर्धारणे षष्ठी।

* प्रसाद. सर्वथा विघ्नरूपो न, सर्वेच्छाव्याघातकत्वाभावात्, अपि तु कथचिद् विघ्नरूप, सादृश्यप्रतिरोधादिति।

सुखेनेति निष्क्रयकरणे तृतीया ।

व्याख्या—य -रावण , पृथिवीभृताम्-पर्वतानाम्, वरम्-श्रेष्ठम्-कैलासम् समुत्क्षिपन्-उत्पाट्योर्ध्वं धारयन्, त्रस्यन्त्या -उत्पाटनसमये पर्वतचलनेन बिभ्यत्या , तुषाराद्रे -हिमालयस्य, सुतायाः-पार्वत्या , ससंभ्रम -सत्वर , य स्वयङ्ग्रह , प्रियप्रार्थनामन्तरेणैव कण्ठग्रहणरूप , आश्लेष -आलिङ्गनम्, तेन यत्-सुखम्-आनन्द , तेन, शूलिन -महादेवस्य, वरप्रदानस्य-स्वस्मै त्रैलोक्याधिपत्यरूपेष्टवितरणस्य, *निष्क्रयम्-प्रत्युपकारनिर्गतिम्, ( यद्वा मूल्यप्रदानम् ) चकार-विदधे ।

भा०—महादेवाद्वरं प्राप्य भुजबलदर्पेन रावणेन कैलासपर्वत एव लङ्का नेतु समुत्पाटित. । तत्र निगूढमुत्प्रेक्ष्यते यद्रावणेनेद कर्म शिवस्य प्रत्युपकारचिकीर्षया कृतम् । रावणो हि मनस्वी न याच्ञादैन्य सहते, ततश्च शिवेन यदस्मै त्रैलोक्याधिपत्य दत्तम्, तस्य मूल्यमनेन दातव्यमेव । यदा चानेन कैलास उत्पाटित , तदा अकस्मादुत्पातशङ्किन्या पार्वत्या भयमभूत्, भीतया च तया स्त्रीस्वभावेन भगवान् शिवः स्वयमाश्लिष्ट । तेन शिवस्य यत्सुखमभूत्, तत् त्रैलोक्यराज्यप्राप्तेरप्यधिकमिति तेन रावणस्य प्रतिदानं सिद्धमिति ।

अल०—सुखवरदानयोर्विनिमयात् परिवृत्तिरिति मल्लिनाथः । दर्पकृते कैलासोत्पाटने प्रत्युपकारफलकत्वोत्प्रेक्षणाद्गम्या फलोत्प्रेक्षा, हेतूत्प्रेक्षा वा । रावणस्य मनस्विता तया व्यज्यते ।

**पुरीमवस्कन्द लुनीहि नन्दन मुषाण रत्नानि हरामराङ्गना ।**
**विगृह्य चक्रे नमुचिद्विषा वली य इत्थमस्वास्थ्यमहर्दिव दिव ॥२१॥**

अ०—य बली नमुचिद्विषा विगृह्य पुरीम् अवस्कन्द, नन्दन लुनीहि, रत्नानि मुषाण, अमराङ्गना हर, इत्यम् अहर्दिव दिव अस्वास्थ्य चक्रे ।

व्याक०—नमुचे द्विषा नमुचिद्विषा । न मुञ्चति-इति नमुचि , मुच् धातो "सर्वधातुभ्य इन्" औणादिक , तस्य "इगुपधात् कित्" इति कित्त्वान्न गुणः । "नभ्राण्नपाद्-" इति नञ प्रकृतिभाव । अहनि च दिवा च अहर्दिवम् । "अचतुरविचतुर" इत्यजन्तो द्वन्द्वो निपातित । बलमस्यास्तीति

---

* निष्क्रयो वृद्धियोगे स्यात् सामर्थ्ये निर्गतावपि—इति वैजयन्ती ।

वली-"अत इनिठनौ"। विगृह्य-विपूर्वाद् ग्रहधातोर्ल्यप्, कित्वात् संप्रसारणम्। अवस्कन्द-लुनीहि-मुषाण-हर एषु चतुर्ष्वपि 'स्कदि' 'लूञ्' 'हृञ्' धातुभ्यः "समुच्चयेऽन्यतरस्याम्" इत्यनेन कालसामान्ये लोट्, तस्य च "लोटो हिस्वौ वा च तध्वमोः" इत्युक्ते सर्वपुरुषवचनसामान्येन हिरादेश, त्रिषु "अतो हेः" इति हेर्लुक्। अवस्कन्द-इत्यत्र शप्, लुनीहीत्यत्र तु क्र्यादित्वात् श्ना, तस्य "ई हल्यघो" इतीत्वम्। 'मुषाण' इत्यत्रापि श्ना, "हल श्न शानज्झौ" इति श्न शानजादेशो विशेषः। हर-इत्यत्रापि शप्। "समुच्चये सामान्य-वचनस्य" इति विधे 'चक्रे' इति क्रियासामान्यवाचिन करोतेरनुप्रयोग, अनुप्रयुज्यमानाच्च यथाकाल लकारा इति भूतानद्यतनपरोक्षार्थविवक्षाया लिट्। अवस्कन्दनादिक्रियाविशेषाणा कृधात्वर्थेन क्रियासामान्येन सह अभेदान्वयः, सामान्यविशेषयोरभेदान्वय इति व्युत्पत्ते। अत एव 'अवस्कन्दनलवनादिरूपा भूतानद्यतनपरोक्षा एककर्तृका अस्वास्थ्यक्रिया' इत्यर्थः-फलति। अवस्कन्दनादौ पौन पुन्यमपि प्रतीयते-'पुन पुनश्चस्कन्द' इत्यादीति मल्लिनाथः। तत्प्रामा-दिकम्, "समुच्चयेऽन्यतरस्याम्" इति सूत्रे क्रियासमभिहारानुवृत्तेरभावादिति कौमुद्या भट्टोजिदीक्षिता.। प्रकरणादिना कालविशेषप्रतीतिरित्यपि मल्लिनाथस्य भ्रम। अनुप्रयुज्यमानेन धातुना तत्प्रतीते· न्यायसिद्धत्वात्। अस्वास्थ्यम्-स्वस्थशब्दाद् भावे ष्यञ्। ततो नञ्समास।

व्याख्या—य, वली-बलवान्, रावण, नमुचिद्विषा-इन्द्रेण, विगृह्य-वैर कृत्वा, पुरीम्-अमरावतीम्, अवस्कन्द-अवचस्कन्द-अवरुरोध, *नन्दनम्-नन्दनाख्यमिन्द्रवनम, लुनीहि-लुलाव-चिच्छेद †रत्नानि-श्रेष्ठवस्तूनि, मुषाण-मुमोष-लुलुण्ठ, अमराणाम्-देवानाम्, अङ्गना-स्त्रिय, हर-जहार-प्रसह्य नीतवान्, इत्थम्-अनेन प्रकारेण, सर्वमिद युगपत् कुर्वन्, अहर्दिवम्-अहन्यहनि, दिव-स्वर्गस्य, अस्वास्थ्यम्-पीडाम्-उपद्रवम्, चक्रे-कृतवान्।

भा०—भगवतः शिवाद्वर प्राप्य स्वर्गं जेतु रावणेनेन्द्रोपर्याक्रमणं कृतम्। तदा चैकदैवैव तेनामरावती देवपुरी समाक्रम्य ध्वस्ता, नन्दन देववनं

* हय उच्चै श्रवा सूतो मातलिर्नन्दन वनम्—इतीन्द्रपरिकरे अमर।

† रत्न श्रेष्ठे मणावपि—इति विश्व.।

च्छिन्नम्, रत्नानि हृतानि, देवाङ्गनाश्च हृता । युगपत्सर्वमिदं कुर्वाणेन स्वर्गे महानुपद्रव प्रादुर्भावित ।

अल०—युगपदनेकक्रियानिबन्धनात् समुच्चयोऽलङ्कार । तिङां वैचित्र्यात 'सुपां तिङां परावृत्तिः सौशब्दमिति कीर्त्यते इति लक्षित. सौशब्दाख्यो गुण इति मल्लिनाथः ।

**सलीलयातानि न भर्तुरभ्रमोर्न चित्रमुच्चैःश्रवस पदक्रमम् ।**
**अनुद्रुत. संयति येन केवलं बलस्य शत्रु. प्रशशंस शीघ्रताम् ॥५२॥**

अ०—संयति येन अनुद्रुत. बलस्य शत्रु. अभ्रमोः भर्तु. सलीलयातानि न (प्रशशंस) उच्चैःश्रवस. चित्र पदक्रम न (प्रशशंस) (किन्तु) केवल शीघ्रता प्रशशंस।

व्याक०—लीलया सहित सलीलम्, अव्ययीभाव, सलील यातानि सलीलयातानि, "सुप्सुपा" इति केवलसमास । यातानीति याधातो· "नपुंसके भावे क्त·" । उच्चै श्रवसी यस्य तस्य उच्चै श्रवस, अनुद्रुत·-द्रुधातो क्त । येनेति तत्कर्तरि तृतीया । भर्तु -भरतेस्तृच् । शीघ्रताम्-भावे तल् ।

व्याख्या—*संयति-संग्रामे, येन-रावणेन, अनुद्रुत·-अनुधावितः, बलस्य-बलाख्यदैत्यस्य, शत्रुः-शातयिता-इन्द्र, †अभ्रमो -अभ्रमुनाम्न्या हस्तिन्या, भर्तु -पत्युः-ऐरावतस्य गजस्य, सलीलयातानि-लीलासहितानि मत्तमन्दगमनानि, न प्रशशंस, तथा उच्चैःश्रवसः-तन्नामकस्य स्वकीयस्य अश्वस्य, चित्रम्-अद्भुतम्-नानाविधम्, पदक्रमम्-पादविक्षेपम्-अर्धपुलायितादिगतिविशेषम्, न प्रशशंस, किन्तु केवलम्, शीघ्रताम् शीघ्रगतिमेव, प्रशशंस-तुष्टाव, अभिललाषेत्यर्थ ।

भा०–रावणात्पराजित इन्द्रः कदाचिदैरावत गज कदाचिदुच्चैःश्रवसमश्वं च समारुह्य यदा समरात्पलायितोऽभूत्, रावणश्च त ग्रहीतु पृष्ठतोऽनुदुद्राव, तदा रावणभयादतिशीघ्र यातुमिन्द्रस्याभिलाष आसीत् । मन्दगमने रावणो गृहीत्वा रोत्स्यतीति । ततश्च यद्यप्यैरावत उच्चै श्रवाश्च विविधा विलासगतीर्जानीत, परमिन्द्रस्य तदा तासु गतिष्वनुरागो नाभूत् । केवल तयो शीघ्र-

---

* 'समुदाय स्त्रिया संयत् समित्याजिसमिद्युध ' इत्यमर·।

† करिण्योऽभ्रमुकपिलापिङ्गलानुपमा क्रमात्-इति दिग्गजस्त्रीणा नामान्यमरः ।

गमनमेव तस्येष्टमासीत् । भयेनोद्विग्नत्वादिति । येनेन्द्रेण बलाद्या असुरा नाशिताः, सोऽपि रावणादेव भीत इति रावणस्य प्राबल्यातिशयो बलस्य शत्रुरित्यनेन व्यज्यते ।

अलं०—इन्द्रस्य भयरूपाद्दोषादैरावतादीना सलीलयातेषु दोषत्वकल्पन-मित्युल्लासालकार । प्रशसाया एकतो निषिध्यान्यत्र व्यवस्थापनमिति परिसख्या । इन्द्रगत भय व्यङ्ग्यम् ।

**अशक्नुवन् सोढुमधीरलोचन सहस्ररश्मेरिव यस्य दर्शनम् ।**
**प्रविश्य हेमाद्रिगुहागृहान्तरं निनाय बिभ्यद्दिवसानि कौशिक ॥५३॥**

अ०—अधीरलोचन कौशिकः सहस्ररश्मेरिव यस्य दर्शन सोढुम् अशक्नुवन् हेमाद्रिगुहागृहान्तर प्रविश्य बिभ्यद् दिवसानि निनाय ।

व्याक०—अधीरे लोचने यस्य सः अधीरलोचन । सहस्र रश्मयो यस्य तस्य सहस्ररश्मे । हेमाद्रे गुहा (तत्पु०) गृहमिव, (उपमि०) तस्य अन्तर हेमाद्रिगुहागृहान्तरम । सोढुम्-सहते शक्नोतावुपपदे तुमुन् । अशक्नुवन्-शक्नोतेः हेतौ शतृप्रत्ययः । प्रविश्य-प्रपूर्वाद् विशतेर्ल्यप् । बिभ्यद्-बिभेते -लक्षणे शतृप्रत्ययः "नाभ्यस्ताच्छतुः" इति नुमभाव । निनाय नयतेर्लिट् ।

व्याख्या—अधीरे-अस्थिरे (एकत्र भयात्, अपरत्र तेजसोऽसहनात्) लोचने-नेत्रे यस्य, तथोक्तः, *कौशिक -इन्द्र (पक्षे उलूक ) ससस्ररश्मेरिव-सूर्यसदृशस्य, यस्य-रावणस्य, दर्शनम्-अवलोकनम्, सोढुम्, अशक्नुवन्-अपारयन्, हेमाद्रे -सुरालयस्य पर्वतस्य, गुहागृहम्-गृहसदृश गह्वरम्, तस्य अन्तरम्-अन्त प्रदेशे, प्रविश्य-प्रवेश कृत्वा, बिभ्यद्-त्रस्यन्, तत्रापि भीत्या वेपमान एव, † दिवसानि-दिनानि, निनाय-अतिवाहितवान् ।

भावा०—इन्द्रस्य रावणात्तथा भयमासीद् यथा रावणस्य दर्शनमपि तस्योद्वेगकर बभूव । तस्य दर्शनाय तन्नेत्रयोर्धैर्य नासीत् । तेन नाह रावणं पश्येयम्, न वा रावणो मा पश्येदिति, स मेरोर्गुहायामन्तर्निवास कृतवान् । तत्रापि च भयेन वेपमान एवासीत् । यथा उलूक सूर्यस्य दर्शन कर्तुं न

* महेन्द्रगुग्गुलूलूकव्यालग्राहेषु कौशिकः—इत्यमरः ।

† वा तु क्लीबे दिवसवासरौ—इत्यमर ।

शक्नोति, ( तस्य नेत्रयोस्तद्दर्शनशक्तिर्नास्ति ) इति दर्शनं परिहरन् दिवसे पर्वतगुहास्वन्तस्तिष्ठति तद्वदेवेति ।

अल०—सहस्ररश्मेरिवेत्युपमा । रावण उपमेय , कौशिकेन असत्यदर्शनत्व समानो धर्म. । कौशिक इति पदस्य प्राकरणिकोऽर्थ इन्द्र , उलूकस्तु व्यङ्ग्योऽर्थ , अभिधाया प्रकरणेन नियन्त्रणात् । सा च व्यञ्जना वाच्याया उपमाया अङ्गम । इन्द्रस्योलूकोपमापि व्यङ्ग्या । इन्द्रगत भय च व्यङ्ग्यम् ।

**बृहच्छिलानिष्ठुरकण्ठघट्टनाद् विकीर्णलोलाग्निकण सुरद्विष. ।**
**जगत्प्रभोरप्रसहिष्णु वैष्णव न चक्रमस्याक्रमताधिकन्धरम् ॥२४॥**

अ०—बृहच्छिलानिष्ठुरकण्ठघट्टनाद् विकीर्णलोलाग्निकणम् ( अत एव ) अप्रसहिष्णु वैष्णव चक्रम् जगत्प्रभो अस्य सुरद्विषः अधिकन्धरम् न अक्रमत ।

व्याक०—बृहति शिलायामिव निष्ठुरे (उपमान०कर्म०) कण्ठे (कर्म०) घट्टनाद् बृहच्छिलानिष्ठुरकण्ठघट्टनाद् । हेतौ-पञ्चमी । घट्टनादिति घट्टयतेर्ल्युट् । विकीर्णा लोला. अग्ने कणा यस्य येन वा तद् विकीर्णलोलाग्निकणम्, विकीर्णेति किरते क्तान्तम् । सुरान् द्वेष्टीति तस्य सुरद्विष सत्सूद्विष " इति क्विप्, उपपदसमास । कन्धारायामित्यधिकन्धरम्, विभक्त्यर्थेऽव्ययीभाव । "अव्ययीभावश्च" इति नपुंसकत्वात् ' ह्रस्वो नपुंसके प्रातिपदिकस्य ' इति ह्रस्वान्तता । अप्रसहिष्णु ' षह मर्षणे अभिभवे च ' धातो ' अलङ्कृञ्निराकृञ् " इति इष्णुच् । विष्णोरिद वैष्णवम्, ' तस्येदम् " इत्यण् । चक्रमिति क्रियतेऽनेनेति घञर्थे कविधानम् " " द्वित्वप्रकरणे के कृञादीनामिति वक्तव्यम् " इति वार्तिकेन द्वित्वम् । अक्रमत-क्राम्यतेर्लङ्, " वृत्तिसर्गतायनेषु क्रम " इत्यनेन वृत्तौ (अप्रतिबन्धे) आत्मनेपदम् ।

व्याख्या—बृहति-महति, शिलायामिव-प्रस्तरघनवद् निष्ठुरे-अतिकठिने कण्ठे-ग्रीवायाम्, घट्टनाद्-अभिघातात्, विकीर्णा -इतस्ततः क्षिप्ता ,-प्रस्फुरिता , लोला -चञ्चला , अग्निकणा -स्फुलिङ्गा , यस्य येन, वा तादृशम्, अत एव, कुण्ठितया अप्रसहिष्णु-अनभिभावकम्, वैष्णवम्-विष्णो , चक्रम्-सुदर्शनाख्यमायुधम, जगत्प्रभो.-भुवनत्रयैकस्वामिनः, अस्य, सुरद्विष.-राक्षसस्य-रावणस्य * अधिकन्धरम्-ग्रीवायाम्, न अक्रमत-अप्रतिहत न प्रवर्तते स्म ।

* कण्ठो गलोऽथ ग्रीवायां शिरोधि कन्धरेत्यपि–इत्यमर. ।

भावा०—न केवलमिन्द्रस्यैव दुर्दशानेन रावणेन कृता अपि तु अन्येऽपि पराभूता । तथा हि-यदानेन जगत्प्रभुत्वमधिकृत्य सुरैर्द्वेष आरब्ध, तदा सुरपक्षपातिना विष्णुनाप्यनेन सह सग्राम' कृतः, तत्र च सुदर्शन चक्र तेनास्य शिर कर्तितु क्षिप्तम् । यच्चक्र कदाचिदपि क्वचिदपि मोघ न दृष्टम्, तदेवास्य ग्रीवा प्राप्य नैष्फल्यमलभत । शिलेव निष्ठुरा रावणस्य ग्रीवा, चक्रस्य सघर्षात् प्रस्तरादिव ततोऽग्निकणा निष्पेतु , न तु चक्र ता कर्तितु समर्थमभूदिति ।

अल०—' विष्णुना नाय पराभूत ' इति प्रस्तुतस्यार्थस्य ' चक्र नाक्रन्त ' इति प्रस्तुतेनैव कारणेन द्योतनात् प्रस्तुताङ्कुर । शिलानिष्ठुरकण्ठेत्युपमा ।

**विभिन्नशङ्ख कलुषीभवन्मुहुर्मदेन दन्तीव मनुष्यधर्मण ।**
**निरस्तगाम्भीर्यमपास्तपुष्पक प्रकम्पयामास न मानस न स. ॥५५॥**

अ०—स दन्तीव विभिन्नशङ्ख ( सन् ) मदेन कलुषीभवद् निरस्तगाम्भीर्यम् अपास्तपुष्पक मनुष्यधर्मण. मानस मुहु. न प्रकम्पयामास [ इति ] न ।

व्याक०—विभिन्न शङ्खो येन स. विभिन्नशङ्ख , विभिन्न इति भिनत्ते क्तान्तम्, निरस्त गाम्भीर्यं यस्य तद् निरस्तगाम्भीर्यम्, निरस्तेति ' असु क्षेपणे ' धातो क्त , गाम्भीर्यमिति-गम्भीरशब्दाद् भावे ष्यञ् । अपास्त पुष्पक यस्मात् तत् , अपास्तानि पुष्पाणि यस्य तच्च अपास्तपुष्पकम्, द्वितीयबहुव्रीहौ " शेषाद् विभाषा " इति कप् । अपास्तेति अपपूर्वाद् अस्यतेः पूर्ववत् क्त । मनुष्यस्येव धर्मो ( श्मश्रुलत्वादि ) यस्य तस्य मनुष्यधर्मण । लाक्षणिकपूर्वपदो बहुव्रीहि । " धर्मादनिच् केवलात् " इत्यनिच् समासान्त । मानससम्बन्धे षष्ठी । अकलुष कलुष भवत् कलुषीभवन् , च्विरभूततद्भावे, अप्रथमासामानाधिकरण्ये शतृप्रत्यय. । प्रकम्पयामास-कम्पतेर्णिजन्ताल्लिटि रूपम्, अस्तेरनुप्रयोग । 'सभाव्यनिषेधनिवर्तने नन्द्वयम्" इति वामनोक्तदिशा निषेधसभावना निरस्य प्रकृतार्थे दार्ढ्यबोधनाय नन्द्वयम् । मदेन-करणे तृतीया।

* शङ्खो निधौ ललाटास्थ्नि कम्बौ न स्त्री इत्यमर । शङ्खो निध्यन्तरे कम्बुललाटास्थिनखेषु च इति विश्व ।

व्याख्या—स -रावण , दन्तीव-हस्ती यथा तथा, विभिन्न.-विघटित , *शङ्खः-कुवेरस्य निधिविशेष , ( हस्तिपक्षे कम्बु ) येन तथाभूत. मन्, मदेन-गर्वेण, ( हस्तिपक्षे दानजलेन ) कलुषीभवत्-क्षुब्धताम् ( पक्षे आविलत्वं च ) प्राप्नुवद्, निरस्तम्-दूरीकृतम, गाम्भीर्यम्-अविकारिता, ( पक्षे अगाधत्व च ) यस्य तथाभूतम्, अपास्तम्-अपहस्तितम्-वलाद् गृहीतम्, पुष्पकम्-पुष्पकाख्य विमान यस्मात् तथाभुतम् । ( पक्षे अपास्तानि-शुण्डादण्डलीलया लूनानि, पुष्पाणि कुसुमानि, यस्य तथाभूतम् ) *मनुष्यधर्मण.-कुवेरस्य, मानसम्-†मन , ( पक्षे मानसाख्य सरश्च ) मुहु - भूयो भूय ,.न प्रकम्पयामास-न क्षोभयामास, इति न, अपि तु प्रकम्पयामासैव।

भा०—इदानीं कुवेरपराभवो वर्ण्यते-यथा कश्चिन्मत्तो हस्ती मानसाख्य-मतिविशाल कुवेरस्य सर. प्रविश्य भूयो भूयस्तद् विक्षोभयेत्, तथा रावणेन कुवेरस्य मानस ( मन ) भूयो भूयस्त्रासाकुलमक्रियत । हस्ती हि सरसि शङ्खान् भिनत्ति, रावणेन च कुवेरस्य शङ्खाख्य परमो निधिर्भिन्न -नाशित । ( कुवेरो हि देवाना निधेरधिप , निधेर्नामसु शङ्ख इति परमो निधिरुच्यते, एकदशशतादिषु गणिताङ्केषु शङ्ख इति चरमा सख्या सस्कृते, तत्परिमितो निधि शङ्ख. । रावणेन कुवेरस्य निधिरपहृत इति शङ्खाख्यो निधिः कुवेरस्य नष्ट । इह कुवेरस्य मानस प्रकृतम्, तस्य शङ्खो भिन्न इत्युक्त्या तथा कुवेर पराभूतो यथा तन्मनसापि शङ्खाख्यो निधिर्विस्मृत , न तन्मनस्यपि शङ्खस्य पुनःप्राप्तिराशाऽवशिष्टाभूदिति द्योतितम् ) किं च हस्ती मदजलेन सर. कलुषता नयति, रावणेनापि कुवेरमानस मदेन कलुषता नीतम् । य एव कुवेरस्य मद इत पूर्वं चित्तसमुन्नतेर्हेतुरभूत्, स एव पराभवे सति चेत. कलुषीचकार, 'अहो ईदृशोऽहमप्यनेन पराभूत.' इति विशेषेण खेदोदयात् । हस्तिना चालोड्यमानस्य सरसो गाम्भीर्यमपयाति, यदेव सरो जनैरगाधमिति मन्यते, तस्यैवाविलता दृष्ट्वा गाधता सर्वेऽपि जानन्ति । रावणेनापि कुवेरमनसो गाम्भीर्यं नामाविकारित्व दूरीकृतम् । कुवेरचेतस्यपि अधैर्यलक्षणा

* मनुष्यधर्मा धनदो राजराजो धनाधिप इति कुवेरनामस्वमर ।

† मानस सरसि स्वान्ते इति विश्वः ।

विकारिता सर्वैर्दृष्टा । किं च हस्ती सरसः पुष्पाण्यपहरति, रावणेनापि कुबेरस्य पुष्पकमपहृतम् । ( अत्रापि कुबेरमनसोऽपि पुष्पकमपहृतमिति व्यङ्ग्य पूर्ववदनुसंधेयम् )। कुबेरो हि महामहिमशालीति तस्य भयाभाव-सम्भावना समुदयेत, तन्निरसनाय नञ्द्वयम् । कदाचित् शङ्खो भिन्न: कदाचित् पुष्पकमपहृतम्-इत्येवमादिरीत्या भूयो भूयः प्रकम्पनं सम्यङ् निबद्धम् ।

अल०—श्लेषानुप्राणिता उपमा । मल्लिनाथस्तु प्रकृताप्रकृतश्लेषमेवाह, तद्भ्रमसात् । कुबेरस्य भय व्यङ्ग्यम् ।

**रणेषु तस्य प्रहिता प्रचेतसा सरोषहुङ्कारपराङ्मुखीकृताः ।**
**प्रहर्तुरेवोरगराजरज्जवो जवेन कण्ठं सभया प्रपेदिरे ॥५६॥**

अ०—रणेषु प्रचेतसा प्रहिता उरगराजरज्जवः तस्य सरोषहुङ्कारपराङ्मुखी-कृताः ( अत एव ) सभयाः ( सत्यः ) जवेन प्रहर्तुः एव कण्ठं प्रपेदिरे ।

व्याक०—उरगराजा रज्जव इव उरगराजरज्जवः, सभया इति विशेषणानुरोधेन पूर्वपदार्थप्रधानः उपमितसमासः, अथवा उरगराजानां रज्जव इति विग्रहः, राहोः शिर इत्यादिवत् षष्ठी । उरगराजशब्दे राजशब्दः प्रशंसावाची, तस्य चोरगशब्देन सह "प्रशंसावचनैश्च" इति कर्मधारयः, "राजाहः सखिभ्यष्टच्" इति टच् समासान्तः । उरगेति-"उरसो लोपश्च" इति उरउपपदाद् गच्छतेर्डः सलोपश्च । रोषेण सह वर्तते, तादृशेन, ( तुल्ययोगे बहु० ) हुङ्कारेण पराङ्मुखीकृताः सरोषहुङ्कारपराङ्मुखीकृताः । रोषेति रुष्धातोर्घञ् । हुङ्कारेति कृधातोर्घञि, तेन हुमित्यनुकरणशब्दस्य, समासः । पराङ्मुखीकृतेति-पराङ् मुखं यासां ता इति बहुव्रीहेरभूततद्भावे कृयोगे च्विप्रत्ययः । पराङिति परापूर्वाद् 'अञ्चु' धातोः क्विन् । भयेन सह वर्तमाना सभया, भयशब्दो बिभेतेरच्प्रत्ययान्तः । प्रहिता प्रपूर्वाद् 'हि गतौ' धातोः क्तः । प्रहर्तुः-हरतेस्तृच्, कण्ठसम्बन्धे षष्ठी । प्रपेदिरे-पद्यतेर्लिटि तप्रत्यये रूपम् । जवेन करणे तृतीया । प्रचेतसेति प्रहिणोतेः कर्तरि तृतीया ।

व्याख्या—रणेषु सङ्ग्रामेषु, प्रचेतसा-वरुणेन, प्रहिताः-प्रेरिताः-उरगराज-रज्जवः-नागपाशाः, तस्य रावणस्य, सरोषेण-क्रोधसहितेन, हुङ्कारेण-हुशब्देन,

पराङ्मुखीकृता -परावर्तिता , अत एव सभया -भीताः सत्य जवेन-वेगेन, प्रहर्तुः-नागपाशप्रेरयितु , अचेतस एव, कण्ठम्-ग्रीवाम्, प्रपेदिरे-प्रापु , तस्य कण्ठ जगृहुरित्यर्थः ।

भा०—वरुणोऽप्येव पराभूत । सग्रामे यदा वरुणेन स्वीयो नागपाशो रावण बन्द्धु क्षिप्त , तदा रावणेन सक्रोध हुशब्द. कृत ।· तेन भीता नागा रावणस्य समीप गन्तुमशक्नुवन्त परावृत्य वरुणस्यैव कण्ठे पतितास्तमेव बबन्धु । अमोघाना तेषा क्वचित्साफल्यस्यावश्यभावात् । अनेन रावणस्या-लौकिको महिमाविष्कृतः, दिव्यान्यायुधान्यपि ततो भयमासादितवन्तीति ।

अल०—परापकाराय प्रवृत्त्या स्वस्यैवानर्थसबन्ध इति विषमोऽलकार । सभया इति कण्ठप्राप्तौ हेतुगर्भम्, तेन परिकरः ।

**परेतभर्तुर्महिषोऽमुना धनुर्विधातुमुत्खातविषाणमण्डल ।**
**हृतेऽपि भारे महतस्त्रपाभरादुवाह दु खेन भृशानत शिर ॥४७॥**

अ०—अमुना धनु विधातुम् उत्खातविषाणमण्डल परेतभर्तु महिष· भारे हृते अपि महत त्रपाभराद् भृशानत शिर· दु खेन उवाह ।

व्याक०—उत्खात विषाणयोर्मण्डल यस्य स उत्खातविषाणमण्डल । उत्खातेति उत्पूर्वात् खनते क्त , "जनसनखनाम् " इत्यात्वम् । परेताना भर्तु परेतभर्तुः, परेतेति परापूर्वाद् एतेः क्त । त्रपैव भर , तस्मात् त्रपाभरात्, त्रपेति 'त्रपूष् लज्जायाम्' धातो -"षिद्भिदादिभ्योऽङ्" ततष्टाप्, भर -भरणमिति "पुसि सज्ञाया घ प्रायेण" इति सूत्रेण प्रायेण सज्ञाया-मिति व्याख्यामनुसृत्य घप्रत्य । क्रैयादिकाद् भृधातो "ऋदोरप्" इति मल्लिनाथ । भृशमानत भृशानतम्, केवलसमास· । भार इति त्रिभर्तेर्भावे घञ् । उवाह वहतेर्लिटि णलि रूपम् । "लिट्यभ्यासस्योभयेषाम्" इत्यनेन सम्प्रसारणम । 'वचिस्वपीत्यादिना सम्प्रसारणमिति' मल्लिनाथव्याख्याया दृश्यमान पाठस्त्वपपाठ , णल कित्त्वासभवात् । अमुना-उत्खननकर्तरि तृतीयान्तम् । दु खेनेति तृतीया प्रकृत्यादित्वात् ।

व्याख्या—अमुना-रावणेन, धनु -शार्ङ्ग कार्मुकम्, विधातुम्-निर्मातुम्, उत्खातम्-उत्पाटितम्, विषाणयो -शृङ्गयो , मण्डलम्-वलय यस्य तथाभूतः,

परेतभर्तु,-यमस्य, वाहन-महिषः, भारे-विषाणरूपे शिर स्थिते, हृते-दूरीकृतेऽपि, महत, त्रपाभराद्-लज्जारूपाद् भाराद्, भृशम्-अत्यर्थम्, आनतम्-नम्रम्, शिर-मस्तकम्, दुःखेन-अतिकृच्छ्रं यथा तथा, उवाह-वहति स्म ।

भा०—यमपराभवो वर्ण्यते-यदा स्ववाहन महिषमारुह्य यमो रावणेन युयुधे, तदा त पराजित्य रावणेन विचारितम् 'एतन्महिषस्य शृङ्गयोर्धनु. श्रेष्ठ निर्मीयते, विष्णो शार्ङ्ग धनुः श्रूयते, ममापि तथास्तु' इति । इत्थ विचार्य तेन यमवाहनस्य महिषस्य शृङ्गमण्डलमुत्पाटितम् । यद्यप्येव शृङ्गभारापनयेन महिषस्य शिर सुस्थित समुन्नत भवेदिति सभावितमासीत्, पर लज्जारूपो भारस्तथा तच्छिरसि पतित. येन तत्पूर्वापेक्षयाप्यवनतमभूत् । कृच्छ्रेण च तस्य धरण महिषेणाक्रियत । 'पराभूतस्य मे धिक् शिरः प्रदर्शनम्' इति तन्मनसि निर्वेदोदयात् ।

अल०—प्रस्तुतो यमपराभव. प्रस्तुतेनैव तद्वाहनपराभवेन द्योतित इति प्रस्तुताङ्कुर । हृतेऽपि भारे नतमिति विरोध मल्लिनाथ आह । कुवलयानन्दमते तु पूर्वरूपमत्रालकार । तदुक्त तत्र 'पूर्वावस्थानुवृत्तिश्च विकृते सति वस्तुनि । दीपे निर्वापितेऽप्यासीत्काञ्चीरत्नैर्महन्महः' इति । त्रपाभर इति अवनतिहेतुत्वसाधर्म्यात् त्रपाया भरत्वोत्प्रेक्षा विरोधानुप्राणितेति मल्लिनाथ. । त्रपाया भरत्वारोपाद्रूपकमिति तु युक्त भाति, उत्प्रेक्षावाचकादर्शनात्, तदुपस्थापकाभावाच्च ।

**स्पृशन् सशङ्कः समये शुचावपि स्थित करारैरसमग्रपातिभि. ।**
**अघर्मघर्मोदकविन्दुमौक्तिकैरलञ्चकारास्य वधूरहस्कर ॥२८॥**

अ०—अहस्करः शुचौ समये स्थितः अपि सशङ्क असमग्रपातिभि कराग्रैः स्पृशन् अघर्मघर्मोदकविन्दुमौक्तिकै अस्य वधू अलचकार ।

व्याक०—शङ्कया सह वर्तमान सशङ्क. । "गोस्त्रियोरुपसर्जनस्य" इति ह्रस्व । न समग्र पतन्तीति ते असमग्रपातिभि, समग्रेति क्रियाविशेषणे उपपदे पततेर्णिनि., ततो नञ्समास । न घर्मा घर्मोदकस्य विन्दव, त एव मौक्तिकानि, तै अघर्मघर्मोदकविन्दुमौक्तिकै. । "मन्थौदन " इत्यादिना उदकशब्दस्योदादेशस्तु न, विकल्पात् । करणे तृतीया । मुक्ता एव मौक्तिकानि,

" विनयादिभ्यष्ठक् " । अह. करोतीत्यहस्कर, " दिवाविभानिशा ··· " इति ट., उपपदसमास । कस्कादित्वात् मः । स्पृशन्-स्पृशते हेतौ शतृ-प्रत्ययः । अलचकार-करोतेर्लिट् । वधूरिति तत्कर्म । समये-अधिकरणे सप्तमी । कराग्रै.-स्पर्शनकरणे तृतीया ।

व्याख्या—*अहस्कर -सूर्यः, † शुचौ ‡ समये-ग्रीष्मकाले (पक्षे शुचौ-पवित्रे, समये-आचारे) स्थितोऽपि-वर्तमानोऽपि, सशङ्क सभय, असमग्रम्-असम्पूर्णं पतन्तीति तथाभूतैः ( नचेदिमास्तापमनुभवेयुरिति हेतो· ) सकुचितवृत्तिभिरिति यावत, ( पक्षे हस्तस्पर्श उद्वेजको न भवेदिति व्यवहितैरेव कार्यं संपादयद्भि. §कराणाम्-रश्मीनाम् ( पक्षे हस्तानाम् ) अग्रै अग्रभागै, स्पृशन्-आमृशन्, अघर्मा.-अनुष्णाः, ※ घर्मोदकस्य विन्दव·-स्वेदजलकणाः, त एव मौक्तिकानि-मुक्ताफलानि, तै , अस्य रावणस्य, वधू.-स्त्रिय , अलचकार-भूषयामास ।

भावा०—तेन पराभूतो भीतः सूर्योऽपि तदनुगति चक्रे-इत्युच्यते । ग्रीष्मेऽपि काले तदन्त.पुरे सूर्य उद्दण्ड न तपति स्म, रावणस्य वधूना तापानुभवो मा भूदिति । किन्तु स्वस्वभावोऽपि यथा न विरोधित. स्याद्, रावणस्यापि च यथा प्रिय भवेदिति विचार्य भीतभीतः कथंचित्किरणैस्तथा तद्वधू स्पृशति स्म-यथा स्वेदकणा मौक्तिकवत्तच्छरीरभागान् मण्डयेयु, तापानुभवश्च कथंचिदपि तासा न भवेदिति । अत्र च पद्ये राजावरोधे प्रसाधकस्य पुरुषविशेषस्य वृत्तान्तोऽपि श्लिष्टैर्विशेषणै. प्रतीयते, स हि शुचौ समये-पवित्र आचारे स्थितोऽपि भूषणार्थं मया स्पृश्यमानानि वधूनामङ्गानि दृष्ट्वा प्रभोर्वधूना वा अविश्वासो मा भूदिति भीत एव पूर्णं करस्पर्शमकृत्वैव चातुर्येण

---

* ' भास्कराहस्करब्रध्नप्रभाकरविभाकरा इति सूर्यनामस्वमर ।

† शुचि· शुद्धेऽनुपहते शृङ्गाराषाढयोरपि । ग्रीष्मे हुतवहेऽपि स्यात् इति विश्व. ।

‡ समया· शपथाचारकालसिद्धान्तसविद:-इत्यमर ।

§ करो वर्षोपले पाणौ रश्मौ प्रत्ययशुण्डयो: इति मेदिनी, वलिहस्तांशव कराः-इत्यमरश्च ।

※ घर्म. स्यादातपे ग्रीष्मेप्युष्णस्वेदाम्बुनोरपि-इति रामाश्रमी ।

मौक्तिकैर्वधूना मण्डन करोतीति ।

अल०—अनुगतिरूपेण कार्येण सूर्यपराभवो द्योतित इति अप्रस्तुतप्रशसा, प्रस्तुताङ्कुरो वा । अप्रस्तुतस्य प्रसावकवृत्तान्तस्य प्रतीत्या च समासोक्ति । इह अनुष्णा स्वेदबिन्दव आसन्नमरणानामेव भवन्तीति आयुर्वेदप्रसिद्धे भीतेन सूर्येण रावणस्त्रीणा तदुत्पादनमनुचित निबद्धमिति दोष केचिदाहु ।

**कलासमग्रेण गृहानमुञ्चता मनस्विनीरुत्कयितु पटीयसा ।**
**विलासिनस्तस्य वितन्वता रति न नर्मसाचिव्यमकारि नेन्दुना ॥२६॥**

अ०—कलासमग्रेण गृहान् अमुञ्चता मनस्विनी उत्कयितु पटीयसा रति वितन्वता इन्दुना विलासिन. तस्य नर्मसाचिव्य न अकारि ( इति ) न ।

व्याक०—कलाभि. समग्रेण कलासमग्रेण । कलाभिरिति तृतीया प्रकृत्यादित्वात् । "तृतीया" इति योगविभागात्समास । नर्मणि साचिव्य नर्मसाचिव्यम्, साचिव्यमिति सचिवशब्दाद् भावे ष्यञ्, करोतेरुक्ते कर्मणि प्रथमा । मनस्विनी -मन शब्दाद् विनिः, नान्तत्वाद् ङीप् । उत्कयितुमिति तुमुन्नन्तस्य कर्मणि द्वितीया 'उत्क उन्मना ' उत्का कर्तुम्-उत्कयितुम्, उत्कशब्दात् "तत्करोति तदाचष्टे" इति णिच्, तत जानात्यर्थकेनार्हत्यर्थकेन वा पटीय.शब्देन योगे तुमुन् । पटीयसा-पटुशब्दादतिशयार्थे ईयसुन् । रतिम्-रमते क्तिन्, विलासिन -विपूर्वाल्लसते "वौ कषलसकत्थस्रम्भ " इत्यनेन घिनुण् । साचिव्यसम्बन्धे षष्ठी । अकारि-कर्मणि लुङ्, इन्दुनेति तत्कर्तरि तृतीया, पूर्ववत् प्रकृतार्थे दार्ढ्यबोधनाय नञ्द्वयोपादानम् ।

व्याख्या—*कलाभिः-षोडशांशैः ( नर्मसचिवपक्षे कामशास्त्रप्रसिद्धाभिश्चतु षष्ट्या कलाभि ) समग्रेण-सम्पूर्णमण्डलेन ( पक्षे-अपरिहीणेन ) गृहान् अमुञ्चता-सदा तत्प्रासादेष्वेव निवसता तत्सेवकत्व प्राप्नुवता, मनस्विनी - मानिनी', उत्कयितुम् उत्कण्ठिता कर्तुम्, तन्मन उल्लासयितुम्, पटीयसा-चतुरेण, एकत्र चन्द्रिकाभि., अपरत्र चतुरोक्तिभि', रतिम्-रागम्, वितन्वता-वर्धयता, इन्दुना-चन्द्रमसा विलासिन -क्रीडाशीलस्य, तस्य-रावणस्य, नर्म-

* काले शिल्प विचवृद्धौ चन्द्रांशे कलने कला-इति वैजयन्ती ।

साचिव्यम्-*क्रीडासम्बन्धिमन्त्रित्वम्, न अकारि-न कृतम्, इति न, अपि तु कृतमेव । यद्वा विलासिन तस्य रावणस्य, रतिम् अनुरागम्, वितन्वता-इति व्याख्येयम् ।

भावा०—चन्द्रस्यापि भयादनुगतिर्वर्ण्यते-चन्द्रो हि भीतस्तद्दण्डभयात्सदा तद्गृहेष्वेव निवसन् तस्य नर्मसचिवता गत । चतुरोक्तिभिरुपहासादिभिर्विनोदयन् स्त्रीणा रागविवर्धकः सर्वकलाभिज्ञो राज्ञा नर्मसचिवो भवति । चन्द्रमा अपि तद्वत् कलाभि परिपूर्ण ( कलाधर इति हि स प्रसिद्ध्यति ) ( परिपूर्णमण्डल एव रावणगृहे निवसति स्म, न तु ह्रासवृद्धिशील )। अच्छाभिश्चन्द्रिकाभि. काममुद्दीपयन् स मानवतीरपि रावणप्रिया उत्कण्ठता करोति स्म, तासा तद्विषये रावणस्य च रति वर्धयति स्म । एव रावण प्रसादयन् काल यापयामास ।

अल०—पूर्ववदप्रस्तुतप्रशसा प्रस्तुताङ्कुरो वा । नर्मसाचिव्यमकारीति निदर्शना, गम्य रूपक वा । कलादिशब्दगत. श्लेषस्तदङ्गम् ।

**विदग्धलीलोचितदन्तपत्रिकाविधित्सया नूनमनेन मानिना ।**
**न जातु वैनायकमेकमुद्धृत विषाणमद्यापि पुन प्ररोहति ॥६०॥**

अ०—नून मानिना अनेन विदग्धलीलोचितदन्तपत्रिकाविधित्सया जातु उद्धृतम् वैनायक एक विषाणम् अद्य अपि पुन. न प्ररोहति ।

व्याक०—† लीलाया उचिता लीलोचिता., दन्तस्य, पत्रिका दन्तपत्रिका., प्रकृतिविकृतिभाव षष्ठ्यर्थ । विदग्धाना लीलोचिता दन्तपत्रिका तासा विधित्सया विदग्धलीलोचितदन्तपत्रिकाविधित्सया । विदग्धा लीला यासा ता विदग्धलीला, तासामुचिता दन्तपत्रिका इति मल्लिनाथ, । विधित्सेति विपूर्वाद् दधातेः सन्, "सनिमीमाघुरभ " इति इस् । "अत्र लोपोऽभ्यासस्य" तत. "अप्रत्ययात्" इत्यकार. प्रत्ययः । तत. स्त्रिया टाप् । हेतौ तृतीया । मानिना-मानोऽस्यास्तीति "अत इनिठनौ" उद्धरणकर्तरि तृतीया । उधृद्तम्-उत्पूर्वाद् हरतेः क्त. । विनायकस्येद वैनायकम्, 'तस्येदम्"

* क्रीडा लीला च नर्म च-इत्यमरः ।

† लीला, विदु केलिविलासखेलाशृङ्गारभावप्रभवक्रियासु-इति विश्वः ।

इति शैषिकोऽण्। प्ररोहति-'रुह बीजजन्मनि प्रादुर्भावे च' वर्तमाने लट्।

व्याख्या—नूनम् सभाव्यते, यद् मानिना-अह सर्वतो महीयान् इत्यभिमानवता, अनेन-रावणेन, विदग्धानाम्-चतुराणाम्, लीलाया -विलासस्य, उचिता -योग्या, विलासार्था, या दन्तपत्रिका -दन्तनिर्मितकर्णभूषणानि तेषाम् विधित्सया-विधातुमिच्छया, * जातु-कदाचित्, उद्धृतम्-उत्पाटितम्, वैनायकम्-विनायकस्य-गणेशस्य, एकम्, † विषाणम-दन्त, अद्यापि, पुन-भूय, न प्ररोहति-न प्रादुर्भवति। मल्लिनाथस्तु विदग्धा लीला यासा ता विदग्धलीला -चतुरविलासिन्य, तासामुचिता या दन्तपत्रिका, तद्विधित्सया इत्यादि व्याख्यातवान्। तत्र च विदग्धलीलापदेन विलासिनीना प्रतीतिर्व्यवहिता कष्टाद्भवतीति कष्टत्वमर्थदोष स्वयमुद्भाव्य 'विलासिनीविभ्रमदन्तपत्रिकाविधित्सया' इति पाठ कवीन्द्र स स्वय क्लृप्तवान्। वयन्तु महाकविविन्यस्तमेव पाठमकष्ट व्याख्यातपूर्व साधु मन्यामहे इति युक्तायुक्त सहृदया विवेचयन्तु।

भावा०—गणेशस्यापि पराभवो रावणेन कृत इत्येषोऽर्थ उत्प्रेक्षामुखेन कविना निबध्यते। एव सभाव्यते, यद्रावणस्य विदग्धतया कदाचन स्वप्रियाणा कृते नूतनहस्तिदन्तरचितकर्णाभरणस्येच्छा मनसि प्रादुरभूत्। तदर्थं तेन सर्वश्रेष्ठहस्तिदन्तलाभाय गणेशस्यैको दन्त उत्खात। स च तथा समूलमुत्पाटितो बलेन, यथा पुन प्ररोहोऽपि तस्य नाभूत्, अतएव गणेशस्यैकदन्तता जाता।'

अल०—उत्प्रेक्षा। दन्तोत्पाटनकार्यमुखेन पराभव प्रत्यायित इत्यप्रस्तुतप्रशसा मुख्या।

निशान्तनारीपरिधानधूननस्फुटागसाप्यूरुषु लोलचक्षुष।
प्रियेण तस्यानपराधबाधिता प्रकम्पनेनानुचकम्पिरे सुरा ॥६१॥

अ०—निशान्तनारीपरिधानधूननस्फुटागमा अपि ऊरुषु लोलचक्षुष तस्य प्रियेण प्रकम्पनेन अनपराधबाधिता सुराः अनुचकम्पिरे।

---

* कदाचिज्जातु इत्यमर।

† विषाण पशुशृङ्गे स्यात् क्रीडादिरददन्तयोः-इति विश्वः।

व्याक०—निशान्ते नारीणा ( तत्पु० ) परिधानाना ( ष० तत्पु० ) धूननेन ( ष० तत्पु० ) स्फुटम् ( तत्पु० ) आग यस्य तेन निशान्तनारी परिधानधूननस्फुटागसा । परिधानम्-परिधीयते इति दधातेः कर्मणि ल्युट् । धूननेति चौरादिकाद् धूञ्धातोर्भावे ल्युट्, "धूञ्प्रीञोर्नुग् वक्तव्य "। लोले चक्षुषी यस्य तस्य लोलचक्षुष. । अपराधस्याभाव अनपराधम्, अर्थाभावेऽव्ययी भाव , तत्र बाधिता अनपराधबाधिता । यद्वा-अपराधेन बाधिता इति समस्य तदनु नञ्समास. । प्रकम्पनेन-प्रकम्पत इति प्रपूर्वात् कम्पते "अनुदात्तेतश्च हलादेः" इति युच् । अनुचकम्पिरे-कम्पते कर्मणि लिटि झप्रत्यये रूपम् । प्रियेणेति तत्कर्तरि तृतीया, सुरा इति उक्ते कर्मणि प्रथमा । ऊरुषु-इत्यधिकरणसप्तमी ।

व्याख्या— * निशान्ते–गृहे–अन्त पुरे, नारीणाम्–रावणवधूनाम्, †परिधानानि-अधोवस्त्राणि, तेषा धूननेन-कम्पनेन, स्फुटम्-प्रकटम्, ‡आग.-अपराधो यस्य तादृशेनापि, §ऊरुषु तासा नितम्बाधोभागेषु, $लोले सतृष्णे, चक्षुषी-नेत्रे, यस्य, तस्य रावणस्य, प्रियेण-प्रियकर्त्रा, प्रकम्पनेन वायुना, अनपराधबाधिता -अपराधाभावेऽपि ( राजपुरुषै ) पीडिताः, सुरा , अनुचकम्पिरे अनुकम्पिता । यद्वा अपराधेन बाधिता न अभूवन्-इत्येव अनुकम्पिता ।

भावा०—वायुरपि पराभूतस्ततः शङ्कित एवासीदित्युच्यते । यदा वायुप्रवहति, तदा अन्त पुरस्त्रीणा परिधानवसनानि प्रकम्पितानि स्थानादपसरन्ति, स्त्रीणा परिधानवस्त्रापसारण च महानपराध इति तस्य प्रचण्डो दण्डः सभावित आसीत् । पर सौभाग्याद्विपरीतमेव जातम्, सुन्दरीणा तासामूर्वादिगुप्ताङ्गदर्शनेच्छा विलासिनो रावणस्य सदैव जागर्त्ति, सा च वायुना कृते वस्त्रापसारणे विनैवायास पूर्ति गतेति वायुरय प्रत्युत रावणस्य प्रियकरत्वेन

* निशान्त गृहशान्तयो इति विश्व ।

† अन्तरीयोपसव्यानपरिधानान्यधोंशुके-इत्यमर ।

‡ पापापराधयोराग इत्यमरः ।

§ सक्थि क्लीबे पुमानूरु. इत्यमर· ।

$ लोलश्चलसतृष्णयो इत्यमरः ।

प्रियो बभूव। ततश्चास्य दण्डकथा तु दूरे आस्ताम्, येऽन्येऽपि सुरा विनैवा-पराध राजपुरुषै पीडिता आसन्, तेऽपि वायुना रावणाय निवेद्य पीडाया मोचिता इति मल्लिनाथानुसारी भाव.। यद्वा यदि वायोरपराधो रावणेन गण्येत तदैकस्यास्य प्रबलेनापराधेन तज्जातीया सर्वेऽपि सुरा दण्डिताः स्यु, पर रावणेन न तस्यापराधोऽपराधपक्षे गणित इति देवेषु दण्डोऽपि न पातित, इयमेव देवेषु मरुतोऽनुकम्पाऽभूत्, यत्तेषा दण्डनं नाभूदिति।

अल०—अप्रस्तुताख्यानेनानेन वायोर्दण्डयोग्यतारूपपराभवप्रत्यायनाद-प्रस्तुतप्रशसा। दोषोऽपि गुणपक्षे परिणत इत्युल्लासः।

**तिरस्कृतस्तस्य जनाभिभाविना मुहुर्महिम्ना महसा महीयसाम्।**
**बभार बाष्पैर्द्विगुणीकृत तनुस्तनूनपाद् धूमवितानमाधिजै ॥६२॥**

अ०—तस्य महीयसा महसा जनाभिभाविना महिम्ना मुहुः तिरस्कृतः तनु. तनूनपाद् आधिजै. बाष्पैः द्विगुणीकृत धूमवितानम् बभार।

व्याक०—जनानाम् अभिभाविना जनाभिभाविना, अभिभाविशब्द अभिपूर्वाद् भवतेस्ताच्छील्यणयन्त। न पातयतीति नपाद्, पातयते क्विप्, "नभ्राण्नपाद्" इति निपातनाद् नञ. प्रकृतिभाव, तन्वा नपात् तनूनपाद्। धूमस्य वितान धूमवितानम्। महीयसाम् महच्छब्दादीयसुन्। महतो भावो महिमा तेन महिम्ना, महच्छब्दात् "पृथ्वादिभ्य इमनिज् वा"। तिरस्करणकर्तरि तृतीया। आधेर्जातै आधिजै, "पञ्चम्यामजातौ" इति जनेर्ड.। द्वौ * गुणौ (आवृत्ती) यस्य तद् द्विगुणम्। अद्विगुणं द्विगुण कृत द्विगुणीकृतम्, च्वि। बभार-भरतेर्लिट्। बाष्पैः-हेतौ तृतीया।

व्याख्या—तस्य रावणस्य, महीयसाम्-अतिमहताम्, महसाम्-तेजसाम्, जनाभिभाविना-लोकतिरस्कारिणा, महिम्ना महत्त्वेन-प्रभावेण, मुहु-भूय, निरस्कृत-अभिभूत, अत एव तनु-कृशः, तनूनपाद्-अग्नि, † आधिजै-आधि-मानसी व्यथा, तज्जैः-तदुत्पन्नै, ‡ बाष्पै-अश्रुजलैः, यद्वा निःश्वासो-

* गुणस्त्वावृत्तिशब्दादिज्येन्द्रियामुख्यतन्तुषु-इति वैजयन्ती।

† पुंस्याधिर्मानसी व्यथा इत्यमर।

‡ बाष्पो नेत्रजलोष्मणो इति विश्व।

ष्मभि॰, द्विगुणीकृतम् द्विरावर्तितम्-द्विगुणता नीतम्, * धूमवितानम्-धूमस्य विस्तारम्, यद्वा धूमरूप मण्डपम्, बभार-दधार ।

भा॰—अग्निपराभव आख्यायते-यद्यप्यग्निरनितेजस्वी, तथापि रावणस्य लोकातिशायिनस्तेजसोऽग्रे तस्य तेजोऽभिभूतमिति पराभवशोकेनाग्नि कृशता गत', शोकजनितैरश्रुभिश्च धूममण्डल तस्य प्रवृद्धम्, तथा च तदग्रे ऽग्निर्न प्रचण्डं ज्वलति स्म धूमायमान एव दृश्यते स्म ।

अलं॰—धूमस्य द्वैगुण्यासम्बन्धेऽपि सम्बन्धाभिधानादतिशयोक्तिरिति मल्लिनाथ. । यदि त्वग्ने स्फुटमप्रज्वलन धूमायमानत्व च मुख्य मन्यते, तर्हि शोककृशत्वं वाष्पैर्धूमस्य द्विगुणीभावश्च तत्र हेतुत्वेनोत्प्रेक्षित इति गम्या हेतूत्प्रेक्षा ।

**परस्य मर्माविधमुज्झता निजं द्विजिह्वतादोषमजिह्मगामिभि ।**
**तमिद्धमाराधयितु सकर्णकैः कुलैर्न भेजे फणिना भुजङ्गता ॥६३॥**

अ॰—इद्ध तम् आराधयितु परस्य मर्माविध निज द्विजिह्वतादोषम् उज्झताम् फणिनाम् अजिह्मगामिभि सकर्णक कुलै भुजङ्गता न भेजे ।

व्याक॰—द्वे जिह्वे यस्य, तस्य भाव द्विजिह्वता, तत्र ( सैव ) वा दोष., तं द्विजिह्वतादोषम् । न जिह्म गच्छन्तीति तै अजिह्मगामिभि. । क्रियाविशेषण-जिह्मोपपदाद् गच्छतेर्णिनि ततो नञ्समास । कर्णाभ्या सह वर्तन्ते इति सकर्णा , तुल्ययोगे बहुव्रीहि , सकर्णा एव सकर्णका , स्वार्थे क । मल्लिनाथोक्तः 'शेषाद् विभा॰" इति समासान्त कप् तु न, शेषाधिकारस्थादेव बहुव्रीहे तेन कब्विधानात् । पक्षे कर्णेन शृण्वन्ति इति कर्णका., कर्णकै. सह वर्तमानै. सकर्णकै । कर्णशब्दात् "प्रातिपदिकाद् धात्वर्थे बहुलमिष्ठवच्च" इति णिच्, ततो ण्वुल् । 'ञिइन्धी दीप्तौ' धातो कर्तरि क्तप्रत्यये इद्धम् । मर्म विध्यति त मर्माविधम्, मर्मोपपदाद् 'व्यध्' धातोः क्विप्, "ग्रहिज्या" इति सम्प्रसारणम्, "नहिवृति " इत्यनेन पूर्वपदस्य दीर्घ । उज्झताम्-'उज्झ उत्सर्गे' धातो शतरि रूपम् । भुजङ्गता-भुजैर्गच्छन्तीति भुजोपपदात् गच्छते 'गमे सुपि वाच्य" इति ड ।

* वितानो यज्ञ उल्लोचे विस्तारे पुनपुसकम्-इति मेदिनी ।

"खच्च डिद्वा वाच्य" इति डित्त्वाट्टिलोपः, खित्वान्मुर, भावे तल्। भजनक्रियाया उक्ते कर्मणि प्रथमा । भेजे-भजतेः कर्मणि लिट्, कुलैरिति तत्कर्तरि तृतीया, फणिनामिति कुलसम्बन्धे षष्ठी ।

व्याख्या —इद्धम्-दीप्तम्-अत्युग्रम्, तम्-रावणम्, आराधयितुम्-प्रसादयितुम्, परस्य-स्वेतरस्य, मर्माविधम्-यस्मिन् शरीरावयवे पीडिते प्राणोत्क्रमण भवति तन्मर्म, हृदयादि, ( खलपक्षे कुलाचारव्रतानि मर्मशब्देनोच्यन्ते ) तद् विध्यति भिनत्ति तथा भूतम्, निजम्-स्वकीयम्, द्विजिह्वतादोषम्-*द्विजिह्वतायाम्-सर्पत्वे, यो दोष-दृष्टिविषत्वादि, यद्वा-द्विजिह्वाधारणरूप एव दोष, ( खलपक्षे द्विजिह्वता सूचकता पैशुनता, सैव दोष ) तम्, उज्झताम्-त्यजताम्, फणिनाम् सर्पाणाम्, अजिह्मगामिभि-अकुटिलगतिभि -करचरणादिमद्विग्रहधारित्वाद् ऋज्वीं गतिं स्वीकृतवद्भिः, ( खलपक्षे अकुटिला, गति -व्यापार व्यवहारो येषा तथा भूतैः ) सकर्णकै -(चक्षु श्रवस्त्वं विहाय) आविष्कृतकर्णै ( खलपक्षे कर्णको नियन्ता-नायक, तत्सहितै. ) कुलै - समूहै, †भुजङ्गता-सर्पता-भुजगामित्वम् ( खलपक्षे विटत्वम् ) न भेजे-न रक्षिता, अपि तु त्यक्ता ।

भा०—सर्पा अपि रावणभयात् स्वीय सर्पवेष सर्पधर्म च विहाय मनुष्यवद्विग्रह विधाय विचेरु । द्विजिह्वता, कुटिला गतिः, भुजगमन, कर्णाभावश्च तेषा शारीरा धर्मा, ते तैस्त्यक्ताः, मनुष्यवद्विग्रहो धृत । दर्शनेन परस्य मर्मणि विष सक्रमय्य तन्मारण तेषा जातिधर्म, सोऽपि तै परित्यक्त, न कमपि सर्पा दशन्ति स्मेति । अत्र पद्ये सर्पवर्णनपरे विशेषणसाम्यात् खलवृत्तमपि प्रतीयते । खला अपि स्वीयेन पिशुनतादोषेण प्रभुसविधे तत्तदुच्चावच ससूच्य परस्य मर्मसु-कुलाचारव्रतादिषु प्रहरन्ति-तानि दूषयन्ति, कुटिलव्यवहाराश्च भवन्ति, परस्त्रीषु प्रवृत्तिरूप विटत्व च तेषा स्वाभाविकम् । तानेतान् दोषान् रावणभयाद्विहाय वेषेण व्यवहारेण च तेऽपि ऋजवो बभूवु । रावणेन खलाननीदृशाना नियन्तार स्थापिता तद्भयात्ते न कदाप्यन्यथाकर्तुं प्रबभूवुरिति ।

---

* द्विजिह्वो सर्पसूचकौ इत्यमर. । † भुजङ्गो विटसर्पयोः इतिहलायुध ।

अल०—प्रस्तुतेन सर्पवृत्तान्तेन अप्रस्तुतखलव्यवहारप्रतीते समासोक्ति । यद्वा—खलवृत्तमपि राज्ञ प्रभावे वर्ण्यमाने प्रकृतमेवेति प्रकृतेन प्रकृतान्तर-प्रतीते. प्रस्तुताङ्कुर कुवलयानन्दमते, श्लेषस्तदङ्गम् ।

**तदीयमातङ्गघटाविघट्टितै कटस्थलप्रोषितदानवारिभि. ।**

**गृहीतदिक्कैरपुनर्निवर्तिभिश्चिराय याथार्थ्यमलम्भि दिग्गजः ॥६४॥**

अ०—तदीयमातङ्गघटाविघट्टितै कटस्थलप्रोषितदानवारिभि गृहीतदिक्कै अपुनर्निवर्तिभि: दिग्गजै· चिराय याथार्थ्यम् अलम्भि ।

व्याक०—तदीयाना मातङ्गाना ( कर्म० ) घटाभि. ( ५० तत्पु० ) विघट्टितै ( तत्पु० ) तदीयमातङ्गघटाविघट्टितै, तस्य इमे तदीया., "वृद्धाच्छ." । घटाभिरिति घटधातो. "घटादय षित" इति षित्त्वात् 'षिद्भिदादिभ्योऽङ्" । विघट्टितेति विपूर्वात् घट्टयते क्त । कटस्थलेभ्य प्रोषितानि दानवारीणि येषा तै· कटस्थलप्रोषितदानवारिभिः । प्रोषितेति प्रपूर्वाद् वसतेः कर्तरि क्त, "वसतिक्षुधोरिट्" । गृहीता दिश यैस्तै गृहीतदिक्कैः । "शेषाद विभाषा" इति कप् । दिश् शब्द दिशते क्विन्नन्त । शस्य षडगक्त । न पुनर्निवर्तन्ते इति तै अपुनर्निवर्तिभि । निपूर्वाद् वर्ततेर्णिनि, तत पुनरित्यव्ययेन केवलसमास, ततो नञ्समास. । दिशा गजै दिग्गजैः । याथार्थ्यम्-अर्थमनतिक्रम्य यथार्थम्, पदार्थानतिवृत्तावव्ययी-भाव । ततो भावे ष्यञ् । लभते उक्ते कर्मणि प्रथमा । अलम्भि-लभते कर्मणि लुङ् । 'विभाषा चिण्णमुलो " इति विकल्पान्नुमागम ।

व्याख्या—तदीयानाम्-रावणस्य, मातङ्गानाम्-हस्तिनाम्, *घटाभि.-घटनाभि -व्यूहै., विघट्टितै -अभिहतै , अत एव †कटस्थलेभ्यः गण्डस्थलेभ्य प्रोषितानि-अपगतानि, दानवारीणि-मदजलानि, येषा तथाभूतै, गृहीताः-संश्रिता , दिश , ( दिशामन्ताः ) यैस्तादृशै , अपुनर्निवर्तिभिः-पुनर्देशमिम-मनागच्छद्भि , भयात् तत्रैव स्थितै, दिग्गजै -ऐरावतपुण्डरीकादिभि, चिराय-बहुकालपर्यन्तम्, याथार्थ्यम्-अनुगतार्थनामकत्वम्-दिगवस्थितिरूपम्, अलम्भि-प्राप्तम् ।

---

* गजाना घटना घटा इत्यमर । † गण्ड. कटो मदो दानमित्यमरः ।

भा०—ऐरावतादीना दिग्गजाना पराभव उत्प्रेक्षामुखेन वर्ण्यते । नन्वेते गजाः सदा दिशामन्तेष्वेव स्थिता श्रूयन्ते, न कदाप्यत्रागच्छन्ति, न च कस्यापि दृष्टिपथमवतरन्तीति को हेतु ? एव सभाव्यते-रावणस्य गजघटाभिरेते सघर्षेषु कदर्थिता । तत एव पराभवदु खेन एषा मदजलमपि शुष्कम् । भयाच्च पलायिता एते दिगन्तान् श्रिताः । तथा च भय जातम्, यदद्यापि न निवर्तन्ते । अत एव नामसाफल्यमेभिर्लब्धम् । दिगाश्रिता गजा-दिग्गजाः-इति दिगाश्रयणेन नाम्नोऽनुगतार्थता जाता ।

अल०—गम्या हेतूत्प्रेक्षा । नाम्नो निरुक्त्या विचित्रार्थकल्पनान्निरुक्तिना-मालकार कुवलयानन्दमते ।

**अभीक्ष्णमुष्णैरपि तस्य सोष्मण सुरेन्द्रबन्दीश्वसितानिलैर्यथा ।**
**सचन्दनाम्भ कणकोमलैस्तथा वपुर्जलार्द्रापवनैर्न निर्ववौ ॥६२॥**

अ०—सोष्मणः तस्य वपुः अभीक्ष्णम् उष्णै अपि सुरेन्द्रबन्दीश्वसितानिलै यथा निर्ववौ, तथा सचन्दनाम्भःकणकोमलः जलार्द्रापवनैः न ( निर्ववौ ) ।

व्याक०—ऊष्मणा सहितस्य सोष्मण. । सुरेन्द्रस्य बन्द्य , तासा श्वसितानि, तेषाम् अनिलै सुरेन्द्रवन्दीश्वसितानिलै । करणे तृतीया, श्वसितानि श्वस् धातो “ नपुसके भावे क्त ” । चन्दनस्य अम्भः, तस्य कणा , तै सह वर्तमाना कोमलाश्च सचन्दनाम्भ कणकोमला , तै । जलार्द्राणा पवनै जलार्द्रापवनै । करणे तृतीया । निर्ववौ-निरुपसर्गाद् ‘ वा गतिगन्धनयो ’ धातोर्लिट् “आत औ णल ” ।

व्या०—सोष्मण -ऊष्मणा-गर्वेण सहितस्य-दृप्तस्य, तस्य-रावणस्य, वपु -शरीरम्, अभीक्ष्णम्-अत्यर्थम्, उष्णै -शोकसतप्तैरपि, सुरेन्द्रस्य-देवराज-स्य, वन्द्य -रावणेन वन्दीकृता स्त्रिय., तासा श्वसितानिलैः-नि.श्वासमारुतैः, यथा-येन प्रकारेण, निर्ववौ-निर्वृतिम्-शान्तिम्, आप, तथा, सचन्दनाम्भ कणै -चन्दनोदकबिन्दुसहितै , कोमलै -मृदुभि , † जलार्द्राणाम्-जलेनार्द्राणा ताल-

* निर्वाण निवृतौ मोक्षे इति वैजयन्ती ।

† धुवित्र तालवृन्त स्यादुत्क्षेपव्यजन च तत्, जलेनार्द्रे जलार्द्रा स्यात्-इति वैजयन्ती ।

वृन्तानाम्, पवनैः-समीरैः, न निर्वृतिः। मल्लिनाथस्तु सोष्मणः-स्मरज्वरेण सहितस्येति व्याख्यातवान्। तत्र स्मरज्वरार्तस्य स्त्रीणां शोकोष्णैर्निःश्वासमारुतैः कथं निर्वृतिर्भवेदिति स एव मनाक् निध्यायतु। गर्वितस्य तु शत्रुस्त्रियो दुःखिनीर्दृष्ट्वा निर्वृतिरुपपन्नैवेति।

भावा०—रावणः सतत गर्वोष्मणाभिभूतः, तस्य चोष्मशान्तिर्न चन्दनजलार्द्रतालवृन्तपवनैर्बभूव, अपि तु बन्दीकृतानां सुरस्त्रीणामुष्णोष्णैर्निःश्वासमारुतैर्बभूव। निःश्वसतीः शत्रूणां स्त्रियो दृष्ट्वा तस्य मनसि कापि शान्तिरुदियायेति। गर्विष्ठानां स्वभावसिद्धमिदम् यत्ते शत्रून् स्वेन पीडितान् दृष्ट्वा कमप्यानन्दं विन्दन्तीति।

अल०—उष्णैः श्वसितैर्निर्वृतिरिति विरूपकार्यजननाद्विषमः।

**तपेन वर्षाः शरदा हिमागमो वसन्तलक्ष्म्या शिशिरः समेत्य च।**
**प्रसूनक्लृप्तिं दधतः सदर्तवः पुरेऽस्य वास्तव्यकुटुम्बितां ययुः ॥६६॥**

अ०—वर्षाः तपेन हिमागमः शरदा च शिशिरः वसन्तलक्ष्म्या समेत्य सदा प्रसूनक्लृप्तिं दधतः ऋतवः अस्य पुरे वास्तव्यकुटुम्बितां ययुः।

व्याक०—प्रसूनानां क्लृप्तिः प्रसूनक्लृप्तिम्, क्लृप्तिमिति 'कृपू सामर्थ्ये' धातोः क्तिन्नन्तम्। "कृपो रो लः" इति लत्वम्। वास्तव्याश्च ते कुटुम्बिनः वास्तव्यकुटुम्बिनः, वसन्तीति वास्तव्याः, "वसेस्तव्यत् कर्तरि णिच्च"। कुटुम्बीति कुटुम्बशब्दात् "अत इनिठनौ"। समेत्य- 'सम्' 'आङ्' एतत्पूर्वाद् इण् धातोर्ल्यप्। प्रत्येकमृतवोऽत्र कर्तारः, समुदायस्तु ययुरिति क्रियायाः कर्तेति 'अवयवान्नातिरिच्यते समुदायः' इति पक्षमाश्रित्य समानकर्तृकतोपपाद्या। तपेनेत्यादिसर्वास्तृतीयाः सहार्थयोगे। विनापि तद्योगं तृतीयेति स्वीकारात्।

व्याख्या— वर्षाः-प्रावृट्-ऋतुः*, तपेन-ग्रीष्मेण, हिमागमः-हेमन्तः, शरदा-शरदृतुना, च-किञ्च, शिशिरः-शीतर्तुः-वसन्तलक्ष्म्या-कुसुमाकरश्रिया, समेत्य-संयुज्य-मिथुनीभूय-एकतां प्राप्य, सदा-सर्वदा, † प्रसूनक्लृप्तिम्-कुसुम-

* स्त्रियां प्रावृट् स्त्रियां भूम्नि वर्षाः -इत्यमरः।

† प्रसूनं पुष्पफलयोः -इत्यमरः।

सम्पत्तिम्, दधतः-धारयन्तः ऋतवः-वसन्ताद्याः, अस्य रावणस्य, पुरे नगरे लङ्कायाम्, वास्तव्यकुटुम्बिनाम्-सकुटुम्बसततनिवासित्वम् ययुः प्रापुः तत्र निवासिनः गृहमेधिन इवाभवन्निति यावत् ।

भावा०—षड्ऋतुषु त्रये कुसुमसम्पत्तिर्भवति, त्रये च न, परमृतुभिरपि रावणस्यानुगति कर्तव्यमासीदिति कुसुमवता त्रयेण कुसुमाभाववत्त्रयं स्वस्वरूपेऽनुप्रवेशितम् । वर्षासु कुसुमसमृद्धिः, ग्रीष्मे च नेति वर्षा ग्रीष्मेण सङ्गताः, तथैव पुष्पसमृद्धिमती शरद् हेमन्तेन, तथाभूतो वसन्तश्च शिशिरेण सङ्गत एव च रावणस्य पुरे सर्वेषु ऋतुषु पुष्पादिसमृद्धिरविच्छिन्नासीत् । सतत च ऋतव इव नगरवासिन इव पूर्णसमृद्धया लङ्कायां न्यवात्सुः । इह एकैकस्य ऋतोर्नाम पुल्लिङ्गमभिहितम्, तत्सङ्गतस्यापरस्य च स्त्रीलिङ्गम्, तदर्थमेव पुल्लिङ्गस्यापि वसन्तशब्दस्य लक्ष्मीशब्दसामानाधिकरण्यं प्रकल्प्य स्त्रीत्वमुपकल्पितम्, तत्रापि च पुष्पादिसमृद्धिमतां सुकुमाराणां स्त्रीत्वम्, कर्कशप्रायाणाञ्च पुंस्त्वं विन्यस्तम् । प्रसूनशब्दश्च पुत्रं स्मारयति, तेन कृतविवाहा इव पुत्रपौत्रादिकुटुम्बमुत्पादयन्तस्तत्र निवसन्ति स्मेति सचमत्कारं स्थिरनिवासिता सिध्यति, सोऽयमर्थः-वास्तव्यकुटुम्बिता ययुरित्यनेन स्फुटतां नीत इति गुणीभूतव्यङ्ग्यम् ।

अल०—सर्वर्तूणां युगपत्सम्बन्धाभावेऽपि सम्बन्धाभिधानात्सम्बन्धातिशयोक्तिरिति मल्लिनाथः । वास्तव्यकुटुम्बिता ययुरिति गम्योत्प्रेक्षा । व्यङ्ग्य भावार्थे दर्शितम् ।

**अमानवं जातमजं कुले मनोः प्रभाविनं भाविनमन्तमात्मनः ।**
**मुमोच जानन्नपि जानकीं न यः सदाभिमानैकधना हि मानिनः ॥६७॥**

अ०—अमानवम् अजम् ( अपि ) मनोः कुले जातं प्रभाविनं ( भवन्तम् ) आत्मनः भाविनम् अन्तं जानन् अपि यः जानकीं न मुमोच, हि मानिनः सदा अभिमानैकधनाः ( भवन्ति ) ।

व्याक०—अभिमानः ( एव ) एकं धनं येषां ते अभिमानैकधनाः । अमानवम्-मनोरिमम् इति 'तस्येदम्' इति शैषिकोऽण् । न जायत इत्यजम्-'अन्येष्वपि दृश्यते' इति जनेर्डः । जातमिति जनेः क्तः । "जन-

सन " इत्यान्वम । प्रभाविनम-प्रभवतीति भवते ' आमीच्दण्ये णिनि "। " प्रातिपदिकान्तनुम्विभक्तिपु च " इति विकल्पाद् णत्वाभाव । भाविनमिति भवतेः " भविष्यति गम्यादयः " इति भविष्यदर्थे णिनि । अन्तम्-अन्तयतीति तत्करोतिणिजन्तात् पचाद्यच् । जानन्-जानातेर्लक्षणे शतृप्रत्ययं, तस्य अपिशब्देन सर्वा " ङमो ह्रस्वादचि ङमुण् नित्यम् " इति नुडागम । जनकस्यापत्य स्त्री जानकी, तस्यापत्यमित्यण्, अण्णन्तत्वाद् ङीप् । मानिनः-" अत इनिठनौ " ।

व्याख्या—अमानवम्-मनोरसम्बन्धिनम्-अमानुषम्, अजम्-अजन्मानमपि, मनोः कुले जातम्-मनुवंशे रामस्वरूपेणोत्पन्नम्, प्रभाविनम्-प्रभाव शालिनम्-तेजस्विनम्, भवन्तम्, आत्मन -स्वस्य, भाविनम् अन्तम्-भविष्यद्-विनाशहेतुम्, जानन्-विदन्नपि, य.-रावण, जानकीम्-सीताम्, न मुमोच-न तत्याज, हि-यत ,मानिन -मनस्विन , सदा-सर्वदा, अभिमानः-अहङ्कार एव, एकम्-मुख्यम्-अद्वितीयम्, धन येपा तथाभूता भवन्ति ।

भावा०—भगवन् कृष्ण ! यदा भवान् अमानुषोऽपि, अजन्मापि देवैरभ्यर्थितस्तस्य रावणस्य वधाय मायामधिष्ठाय वैवस्वतस्य मनोर्वंशे समवतीर्णस्तदा रावणो भवत्प्रिया जानकी जहार । भवताभियुक्तश्च स सर्व. प्रबोधितोऽपि ता न प्रत्यर्पयत् । यद्यपि भवतो नारायणावतारत्वं स्वस्यैव च वधायावतरणं तस्य विदितमासीत्तथापि हृतस्य वस्तुन प्रत्यर्पणे भीरुत्वप्रतीत्या-मानहानि स्यादिति मान एव तेन मुख्यतया रक्षितो न तु तदग्रे प्राणा अपि गणिताः, इदमपि तस्य परममहत्त्व यन्मानस्य प्राणाधिक्येन गणनमिति । अजो ऽपि कथ जात इति विरोधपरिहाराय प्रभाविनमिति विशेषणमुक्तम्, महानुभावाना विरुद्धधर्माश्रयणेऽपि न काचिदनुपपत्तिरिति ।

अल०—सामान्येन समर्थनादर्थान्तरन्यास , अमानव मनो कुले जातमिति विरोधाभास , स चापेरभावाद् गम्य. । प्रभाविनमिति साभिप्रायविशेषणदानात्परिकर. ।

स्मरत्यदो दाशरथिर्भवन् भवानमु वनान्ताद् वनितापहारिणम् ।
पयोधिमाबद्धचलज्जलाविल विलङ्घ्य लङ्का निकषा हनिष्यति ॥६८॥

अ०—भवान् दाशरथि भवन् आबद्धचलज्जलाविल पयोधिं विलङ्घ्य लङ्का निकषा वनान्ताद् वनितापहारिणम् अमुम् हनिष्यति अद स्मरति ।

व्याक०—चलन्ति जलानि यस्य स चलज्जल, आवद्धश्चासौ-चलज्जलश्च, स चासौ आविलश्च आवद्धचलज्जलाविलः, वहुव्रीहिगर्भ कर्मधारयद्वयम् । अथवा आवद्ध चलद्भिर्जलैराविलश्चेति कर्मधारयतृतीयातत्पुरुषगर्भ कर्मधारय । भवान्-भातेर्डवतु, दशरथस्यापत्य पुमान् दाशरथिः "अत इञ्" भवन्-भवते 'धातुसम्बन्धे प्रत्ययाः" इति भूते लट्, तस्य हेतौ शत्रादेश । सयोगान्तलोपस्यासिद्धत्वाद् दीर्घाभावः । विलङ्घ्य-विपूर्वाल्लघि धातोर्ल्यप् । हनिष्यति-"अभिज्ञावचने लृट्" इति भूतार्थे लृट् । अद इत्यनेन परामृश्यमानो वाक्यार्थ स्मरतौ कर्म । वनान्ताद्-अपादाने पञ्चमी । लङ्काम् " अभित परित समयानिकषाहाप्रतियोगेऽपि " इति निकषाशब्दयोगे द्वितीया ।

व्याख्या—भवान्, दाशरथि भवन् दशरथपुत्ररूपेणावतीर्णः सन्, आवद्धम्-शिलादिभिर्वद्धसेतुम्, अत एव चलन्ति-क्षोभं प्राप्तानि, जलानि यस्य तथाभूत ( चलद्भि -सक्षुभ्यद्भि जलैर्वा ) आविलम्-पङ्किलम्, पयोधिम्-समुद्रम्, विलङ्घ्य उत्तीर्य, लङ्का * निकषा-लङ्कायाः समीपे, वनान्ताद्-दण्डकारण्यप्रदेशाद, वनितापहारिणम्-सीतापहर्तारम्, अमुम्-रावणम्, हनिष्यति-अवधीत्, इत्यद, स्मरति प्रत्यभिजानाति, प्रश्नकाकुः ।

भा०—भगवन् कृष्ण ! जानकीनिमित्ते वैरे त्वयैवासौ रावणोऽपि समुद्रे सेतु वद्ध्वा निहत.-इति मन्ये त्वया विस्मृत न स्यात् ।

अल०—वनितापहारिणमिति हननेन हेतुगर्भमिति काव्यलिङ्गम् । विलं विलमिति यमकम् ।

**अथोपपत्तिं छलनापरोऽपरामवाप्य शैलूष इवैष भूमिकाम् ।**
**तिरोहितात्मा शिशुपालसञ्ज्ञया प्रतीयते सम्प्रति सोऽप्यसः परैः ॥६९॥**

अ०—अथ सम्प्रति छलनापर एष शैलूष भूमिकामिव अपराम् उपपत्तिम् अवाप्य शिशुपालसञ्ज्ञया तिरोहितात्मा सः अपि परैः असः प्रतीयते ॥

व्याक०—छलना परा यस्य स छलनापर, छलनेति तत्करोतिणिजन्ताद्

* समयानिकषाशब्दौ सामीप्ये त्वव्यये मतौ । इति हलायुधः ।

" श्यामश्चन्थो युच् " युवोरनाकौ । शिशुपाल इति संज्ञा शिशुपालसंज्ञया, सज्ञायतेऽनयेति संज्ञा, सपूर्वाद् ज्ञाधातो " आतश्चोपसर्गे " इत्यङ् । तिरोहित आत्मा यस्य स तिरोहितात्मा, तिरोहितेति तिरस्पूर्वाद् दधाते क्तः । न स असः, " एतत्तदो सुलोपोऽकोरनञ्समासे हलि " इत्यत्रानञ् समासेति पर्युदासात् सुलोपो न । उपपत्तिमिति पद्यते क्तिन्नन्तम् । अवाप्य-अवपूर्वाद् आप्लृधातोर्ल्यप् । स्थित इत्य याहृतस्थितिक्रियया समानकर्तृकत्व निर्वाह्यम् । प्रतीयते-प्रतिपूर्वाद् एतेः कर्मणि लट्, परैः-इति कर्तरि तृतीया, स इति उक्त कर्म । अस इति तस्य विधेयविशेषणम् ।

व्याख्या—अथ राक्षसदेहत्यागानन्तरम्, सम्प्रति, छलनापर -परप्रतारणाकुशल, एष -रावण , *शैलूष -नट , †भूमिकाम्-रूपान्तरमिव, अपराम , उपपत्तिम-द्वितीय जन्म, अवाप्य-प्राप्य, स्थित , शिशुपालसंज्ञया-शिशुपाल इति नाम्ना, तिरोहित -अन्तर्हित -अप्रकटितता गत', आत्मा-स्वरूप यस्य तथाभूत सन्, स अपि-रावणोऽपि परैः -इतरैः, रहस्यानभिज्ञैरिति यावत्, अस -तद्भिन्न', प्रतीयते-ज्ञायते ।

भा०—यथा कश्चिन्नट रङ्गशालाया पूर्व रूप परित्यज्य रूपान्तर गृह्णाति, तदा च स रूपवेषभाषादिभि -अन्य एव लोकाना प्रतिभाति, तथा रावणोऽपीदानीं रूपान्तर स्वीकृत्य पुनर्भूम्या जात , स इदानीं शिशुपाल इति नाम्ना प्रसिद्ध्यति । साधारणैर्लोकैश्च रावणादन्य एव प्रतीयते । परन्तु रहस्याभिज्ञास्तु जानन्ति यदय रावण एवेति । एतेन शिशुपालस्य वधार्हता सूचिता ।

अल०—शैलूष इवेत्युपमा । रूपान्तरपरिग्रह साधारणो धर्म । छलनापर इति रूपान्तरपरिग्रहे साभिप्रायमिति परिकर । सोऽप्यस इति विरोधाभास ।

स बाल आसीद् वपुषा चतुर्भुजो मुखेन पूर्णेन्दुनिभस्त्रिलोचनः ।
युवा कराक्रान्तमहीभृदुच्चकैरसशय सम्प्रति तेजसा रवि ॥७०॥

---

* शैलूषो नटभिल्लयो -इति विश्व ।

† भूमिका रचनया स्यान्मूर्त्यन्तरपरिग्रहे—इति विश्वः ।

अ०—सः बालः ( सन् ) वपुषा चतुर्भुजः आसीत्, मुखेन पूर्णेन्दुनिभः त्रिलोचनः, ( आसीत् ) सम्प्रति युवा ( सन् ) कराक्रान्तमहीभृत् उच्चकैः तेजसा असंशयं रविः ( अस्ति ) ।

व्याक०—चत्वारो भुजा यस्य स चतुर्भुजः । पूर्णेन इन्दुना सदृशः, पूर्णेन्दुनिभः, करैः आक्रान्ता महीभृतो येन स कराक्रान्तामहीभृत् । आक्रान्तमहीभृतौ व्याख्यातपूर्वौ । संशयस्याभावोऽसंशयम्, अर्थाभावेऽव्ययीभावः । उच्चकैः-अकजन्तम् । वपुषा मुखेनेत्युभयमपि "येनाङ्गविकार" इत्यनेन तृतीयान्तम्, हानिवदाधिक्यस्यापि विकारत्वाद् इति मल्लिनाथः । यद्यपि वपुर्नाङ्गम् तथापि वपुष्मदपेक्षया तस्याङ्गत्वं न विरुद्धम् । प्रकृत्यादित्वाद् वा तृतीया बोध्या । रवित्वारोपे तेजसो हेतुत्वात् तेजसेति हेतौ तृतीया, प्रकृत्यादित्वात् तृतीया इति मल्लिनाथः ।

व्याख्या—सः-शिशुपालः, बालः सन्-बाल्यावस्थायामितियावत्, वपुषा-शरीरेण, चतुर्भुजः-भुजचतुष्टयवान्, ( विष्णुः ) आसीत्, मुखेन, पूर्णेन्दुनिभः-पूर्णचन्द्रमस्तुल्यः, त्रिलोचनः-लोचनत्रयवान्, ( शङ्करः ) आसीत् । सम्प्रति तु, युवा सन्-यौवने वर्तमानः, *करैः-राजग्राह्यभागैः ( पक्षे अंशुभिः ) आक्रान्ता -अधिष्ठिताः, करदीकृता इति यावत्, ( पक्षे व्याप्ताः ) महीभृतः-राजानः, ( पक्षे पर्वताः ) येन तादृशः सन्, उच्चकैः-अतिमहता, तेजसा-प्रतापेन, असंशयम्-निस्सन्देहम्, रविः-रविसदृशः, अस्ति ।

भा०—यदा शिशुपालो जन्म लेभे, तदा तस्य चत्वारो भुजाः, त्रीणि लोचनानि आसन्, मुखं चातिगौरं पूर्णचन्द्रतुल्यमासीत् । अत एव स तदानीं हरिहरसदृशः प्रतीयते स्म ( इदं चतुर्भुजत्रिलोचनपदाभ्यां व्यञ्जितम् ) परं पश्चात् तस्य भुजद्वयमेकं नेत्रं चान्तर्हितम् । इदानीं तु स द्विभुजद्विनेत्रोपि यौवनावस्थां प्राप्तः स्वप्रतापेन सूर्यसदृशो लक्ष्यते, यथा सूर्यः स्वकरैः ( किरणैः ) सर्वान् महीभृतः ( पर्वतान् ) व्याप्नोति, तथैवैतेनापि करैः सर्वे महीभृतः राजानः आक्रान्ताः-सर्वे राजानस्तदधीनतां स्वीकृत्य तस्मै करं ददति ।

अल०—पूर्णेन्दुनिभ इत्युपमा, रवित्वारोपाद् रूपकम्, तच्चाक्रान्तेत्यादि-

---

* बलिहस्तांशवः कराः ।

श्लेषानुप्राणितम् । चतुर्भुजत्रिलोचनपदाभ्यामभिधामूलको हरिहरयोस्ताभ्या शिशुपालोपमायाश्च ध्वनि । मल्लिनाथस्तु रविरम्मशयमित्युत्प्रेक्षामाह । मतान्तरे रत्नावल्यलङ्कारोऽपि । क्रमिकाप्रकृतार्थाना न्यास रत्नावली विदु. ।

**स्वय विधाता सुरदैत्यरक्षसामनुग्रहावग्रहयोर्यदृच्छया ।**
**दशाननादीनभिराद्धदेवतावितीर्णवीर्यातिशयान् हसत्यसौ ॥ ७१ ॥**

अ०—यदृच्छया स्वय सुरदैत्यरक्षसाम् अनुग्रहावग्रहयोः विधाता असौ अभिराद्धदेवतावितीर्णवीर्यातिशयान् दशाननादीन् हसति ।

व्याक०—सुराणा दैत्याना रक्षसा च, सुरदैत्यरक्षसाम् , दैत्यशब्दोऽपत्य एयान्त । अनुग्रहस्य अवग्रहस्य च अनुग्रहावग्रहयो । 'अनु' 'अव' एतत्पूर्वात् ग्रहेरप् । विधातेति तृजन्तस्य योगे कर्मणि षष्ठी । अभिराद्धाभि _देवताभि वितीर्णः वीर्यस्य अतिशयो येभ्यस्तान् अभिराद्धदेवतावितीर्णवीर्यातिशयान् । अभिराद्धेति राध्नोते क्तान्त । वितीर्णशब्दे तरतेर्निष्ठा । अतिशय -शेते एरच् । दश आननानि यस्य स आदिर्येषा तान् दशाननादीन् । बहुव्रीहिद्वयम् । यदृच्छयेति हेतौ प्रकृत्यादित्वाद् वा तृतीया ।

व्याख्या—यदृच्छया-स्वेच्छया, अपरतन्त्र सन्निति यावत्, स्वयम्-स्वसामर्थ्येन, देवताप्रसादाद्यन्तरेणैव, सुराणाम्-इन्द्रादीनाम्, दैत्यानाम्-दितिसुतानाम्, रक्षसाम्-यातुधानाना च, अनुग्रहावग्रहयो दयादण्डयो , विधाता-कर्ता, असौ-शिशुपाल॰, अभिराद्धाभिः-चिरं तपस्तप्त्वा आराधिताभिः, देवताभि॰-ब्रह्मादिभि , वितीर्ण -प्रसादरूपेण दत्त , वीर्यातिशय॰-पराक्रमाधिक्यम्, येभ्यस्तथाभूतान्, दशाननादीन्-रावणादीन्, हसति-तुच्छान् मन्यते ।

भावा०—अय शिशुपाल पराक्रमविषये रावणादीनप्युपहसति, स्वापेक्षया तान् निकृष्टान् मन्यते । ते हि सुचिर तपस्तप्त्वा देवताप्रसादेन पराक्रमातिशय प्राप्तवन्त , अय तु स्वभावेनैव पराक्रमशाली यथा कामयते तथा देवान् दानवान् यातुधानाश्च, अनुकम्पते, दण्डयति च । तथा च देवतायाचकैर्देवशास कस्यास्य कथ तुल्यता ।

अल०—रावणाद्यपेक्षया शिशुपालस्योत्कर्षवर्णनाद् व्यतिरेकः । शिशुपालगतो गर्वो भाव प्राधान्येन व्यज्यत इति भावध्वनि ।

**बलावलेपादधुनापि पूर्ववत् प्रबाध्यते तेन जगज्जिगीषुणा ।**
**सतीव योषित् प्रकृतिः सुनिश्चला पुमांसमभ्येति भवान्तरेष्वपि ॥७२॥**

अ०—जिगीषुणा तेन बलावलेपाद् अधुना अपि पूर्ववद् जगत् प्रबाध्यते । सुनिश्चला प्रकृतिः सती योषिदिव भवान्तरेषु अपि पुमांसम् अभ्येति ।

व्याक०—बलस्य अवलेपाद् बलावलेपात्, अवलेपेति लिपेर्भावे घञ् । हेतौ पञ्चमी । अन्ये भवा भवान्तराणि, तेषु । मयूरव्यंसकादिसमासः । जिगीषुणेति जायते सन्नन्तात् उः, "सन्लिटोर्जेः" इति कुत्वम् । पूर्वस्मिन्निव पूर्ववत्, "तत्र तस्येव" इति वतिः । पूर्वशब्दोऽय पूर्वजन्मपरः । प्रबाध्यते-बाधते कर्मणि लट्, तेनेति बाधनस्य कर्तरि तृतीया, जगत्-इति तस्यैव कर्म प्रथमान्तम् । सती-अस्तेः शतृप्रत्ययः, स्त्रीत्वविवक्षायां ङीप् । सुनिश्चला-चले पचाद्यजन्तः । अभ्येति-अभिपूर्वाद् एतेर्लट् ।

व्याख्या—जिगीषुणा-सर्वान् अभिभवितुमिच्छुना, (नित्योत्साहवतेति मल्लिनाथः) तेन-शिशुपालेन, बलवलेपाद्-स्वभुजबलदर्पाद्, अधुना-इदानीमपि, पूर्ववत्-पूर्वजन्मनीव, जगत्-लोकः, प्रबाध्यते-पीड्यते । सुनिश्चला-अतिस्थिरा, प्रकृतिः-स्वभावः, सती योषिदिव-पतिव्रता स्त्री-यथा, भवान्तरेषु-अन्यजन्मस्वपि पुमांसम् पुरुषम्, अभ्येति-प्राप्नोति ।

भावा०—स्वबलदर्पाध्मातः स शिशुपालः सकललोकपराभवेच्छया यथा पूर्वजन्मनि हिरण्यकशिप्वादिरूपेण प्रजाः पीडयति स्म, तथैवेदानीमपि पीडयति, एष एवार्थ उत्तरार्धेन समर्थ्यते, यथा पतिपरायणा स्त्री अन्यजन्मन्यपि तमेव पतिं प्राप्नोति, तथैव सुस्थिरः स्वभावः जन्मान्तरेऽपि पुरुषमनुगच्छत्येव । अतः शिशुपालस्य पूर्वजन्मवद् जगत्पीडनं नातिविस्मयकरम् ।

अल०—उपमापुरस्कृतोऽर्थान्तरन्यासः इति मल्लिनाथः । विकस्वरालङ्कारः इति कुवलयानन्दकृदादयः ।

**तदेनमुल्लङ्घितशासनं विधेर्विधेहि कीनाशनिकेतनातिथिम् ।**
**शुभेतराचारविपक्त्रिमापदो निपादनीया हि सतामसाधवः ॥ ७३ ॥**

अ०—तद् विधेः उल्लङ्घितशासनम् एनं कीनाशनिकेतनातिथिम् विधेहि, हि शुभेतराचारविपक्त्रिमापदः असाधवः सतां निपादनीयाः (भवन्ति) ।

व्याक०-उल्लङ्घित शासन येन तम उल्लङ्घितशासनम उल्लङ्घितमिति उत्-पूर्वकलङ्घने क्त, "नोलि" । शासन शास्तेर्ल्युडन्तम । कीनाशस्य निकेतन अतिथि कीनाशनिकेतनातिथिम् । निकेतनेति निपूर्वात् 'कित निवासे' धातो. अधिकरणे ल्युट् । शुभाद् इतरेण आचारेण विपक्त्रिमा आपद येषा ते शुभेतराचारविपक्त्रिमापद. । विपक्त्रिमेति विपाकेन निर्वृत्ता इति 'डुपचष्' धातो "ड्वित. क्त्रि:" "क्त्रेर्मम् नित्यम्" । एनम-' द्वितीयाटौस्स्वेन " इत्यन्वादेश एनादेश । विधेहि-दधातेः प्रार्थनाया लोट्, "श्नसोरेद्धावभ्यासलोपश्च" इत्येत्वाभ्यासलोपौ । विपादनीयाः-विपूर्वात् पद्यतेर्णिजन्ताद् अनीयर् । सतामिति "कृत्याना कर्तरि वा" इत्यनेन षष्ठी ।

व्याख्या—तत्-तस्मात् कारणात्, विधे -ब्रह्मण , उल्लङ्घितम् अतिक्रान्तम्, शासनम्-आज्ञा, येन तथाभूतम, एनम्-पूर्ववर्णितम्-शिशुपालम्, कीनाशस्य-यमस्य, निकेतनम्-गृहम्, तत्र अतिथिम्-अभ्यागतम विधेहि-कुरु, यमगृह प्रापय-मारयेतियावत् । हि-यत , शुभेतरेण आचारेण-दुर्वृत्तेन, विपक्त्रिमा -कालपरिपाकेन प्राप्ता', आपद -विपत्तय पतनानि, येषा तथोक्ता , असाधव -दु शीला जना , सताम्-सज्जनानाम् (भवादृशाम् ) विपादनीया.-विनाशनीया , भवन्तीतिशेषः ।

भा०—हे भगवन् ! अनेन शिशुपालेन विधे.शासनमुल्लङ्घितम् , यतोऽय सुरासुराणा स्वयमेव शासक सवृत्तः, यथेच्छ व्यवहरति, प्रजा. पीडयति च, तदेन जहि । न चैतत् प्राघुणिकहस्तेन सर्पमारणम्, कुत ? परपीडनपरा दुष्टा भवादृशा लोकरक्षणदीक्षिताना हन्तव्या एव भवन्ति। अतस्त्वयाय मारणीय एव । किञ्च तादृशदुष्टविनाशे तव निमित्तमात्रत्व स्यात्, वस्तुतस्तु तेषा दुष्कर्म-विपाक एव तद्विनाशहेतु ।

अल०—यमगृहप्रेषणस्य हेतुना समर्थनात् काव्यलिङ्गम् । उत्तरार्धे सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यास , शुभेतरेत्यादिविशेषण साभिप्रायम् इति परिकर. ।

**हृदयमरिवधोदयादुदूढद्रढिम दधातु पुन पुरन्दरस्य ।**

---

- 'कीनाश कर्षके क्षुद्रे कृतान्तोपांशुघातिनो ' इति विश्व ।

**घनपुलकपुलोमजाकुचाग्रद्रुतपरिरम्भनिपीडनक्षमत्वम् ॥७५॥**

अ०—अरिवधोदयाद् उदूढद्रढिम पुरन्दरस्य हृदय पुन घनपुलकपुलोमजाकुचाग्रद्रुतपरिरम्भनिपीडनक्षमत्व दधातु ।

व्याक०—अरेर्वधस्य उदयात् अरिवधोदयात् । वध शब्दो व्याख्यात' । उदयादिति उत्पूर्वाद् एते "एरच" । हेतौ पञ्चमी । उदूढः द्रढिमा येन तत् उदूढद्रढिम । उदूढेति उत्पूर्वाद् वहते क्तान्तम् । यजादित्वात् सम्प्रसारणम् । दृढस्य भावो द्रढिमा, दृढशब्दात् "पृथ्वादिभ्य इमनिज्वा" 'र ऋतो हलादेर्लघो" इति ऋकारस्य रेफ । उदूढद्रढिम, द्रढिम्नी-द्रढिमनी, द्रढिमानि इत्यादिरूपाणि अवधेयानि । घना' पुलका ययो., तयो पुलोमजाया कुचाग्रयो द्रुत परिरम्भे निपीडनम्, तस्य क्षमत्वम् घनपुलकपुलोमजाकुचाग्रद्रुतपरिरम्भनिपीडनक्षमत्वम । घनेति "मूर्तौ घन " इत्यनेन हन्तेरप्, घनादेशश्च निपात्यते । पुलोम्न जाता पुलोमजा "पञ्चम्यामजातौ" जनेर्ड । द्रुतेति द्रवते क्तान्त. । परिरम्भ इति रभेर्घञन्त, "रभेरशब्लिटो" इति नुमागम । निपीडनमिति पीडयतेर्ल्युडन्तम्, क्षमत्वम्-पचाद्यजन्तात् क्षमते भावे त्व' । पुरन्दरस्य-पुरो दारयतीति पुरुपपदाद् दारयतेः "पूः सर्वयोर्दारिसहो" इति खच् । खचि ह्रस्व." "वाचयमपुरन्दरौ च" इति निपातनाद् अदन्तत्व मुमागमश्च ।

व्याख्या—अरिवधस्य-शत्रुनाशस्य. उदयात् जननात्, ( निश्चिन्ततया ) उदूढ -भृत , द्रढिमा-दृढता-धैर्यम, येन तथाभूतम्, पुरन्दरस्य-इन्द्रस्य, हृदयम्-चेत , पुनः-भूयोऽपि-पूर्ववदेवेति यावत्, घनपुलकयो -सान्द्ररोमाञ्चयो., पुलोमजायाः-इन्द्राण्या., कुचाग्रयो -स्तनाग्रभागयोः, द्रुतपरिरम्भ -औत्सुक्यात् शीघ्रालिङ्गनम्, तत्र यन्निपीडनम्-विमर्द , तस्य क्षमत्वम् सामर्थ्यम्, दधातु-धारयतु ।

भा०—नारद स्वामुक्तिमुपसहरति-इत्थ शिशुपालोपद्रवैरिन्द्रस्य हृदय सर्वदा चिन्तातुर चञ्चल च वर्तते । चित्तविक्षेपान्न मनागपि राज्योपभोगेऽस्य प्रवृत्तिर्भवति । वय त्वाशसामहे-यत् भवता शिशुपाले हते शत्रुविनाशात् इन्द्रस्य हृदय चिन्तात्यागेन दृढता प्राप्नोतु, पुनरपि चाय पूर्ववद् ऐश्वर्योपभोगे

नाम-र्यमासादयतु ।

अल०—उद्धृष्टाटेमेति विशेषणगत्या हार्थपदार्थस्य निपातनक्षमताया हेतुत्वोक्त्या काव्यलिङ्गम् । हृदयनिपातनक्षमत्वमन्यन्येऽप्यसम्बन्धेऽक्ला अतिशयोक्ति, वृत्त्यनुप्रासश्च, एषा परस्पर ससृष्टिरिति मल्लिनाथ ।

ओमित्युक्तवतोऽथ शार्ङ्गिण इति व्याहृत्य वाच नभ-
स्तस्मिन्नुत्पतिते पुरः सुरमुनाविन्दोः श्रिय बिभ्रति ।
शत्रूणामनिशं विनाशपिशुन. क्रुद्धस्य चैद्य प्रति
व्योम्नीव भ्रुकुटिच्छलेन वदने केतुश्चकारास्पदम् ॥७५॥

इति श्रीमाघकृतौ शिशुपालवधे महाकाव्ये कृष्ण-
नारदसम्भाषणं नाम प्रथम सर्ग ।

अ०—तस्मिन् सुरमुनो इति वाच व्याहृत्य नभ उत्पतिते पुर इन्दो श्रिय बिभ्रति ( सति ) अथ ओम् इति उक्तवत चैद्य प्रति क्रुद्धस्य शार्ङ्गिण वदने व्योम्नि इव अनिश शत्रूणा विनाशपिशुनः केतु भ्रुकुटिच्छलेन आस्पद चकार ।

व्याक०—भ्रुकुटिरेवच्छलम्, भ्रुकुट्या वा छल तेन भ्रुकुटिच्छलेन, प्रकृत्यादित्वात् तृतीया । व्याहृत्य-'वि'-'आङ्' एतत्पूर्वाद् हृतेर्ल्यप् । उत्पतित इति पतते क्तान्तम् । सति सप्तमी । बिभ्रति-बिभर्तें शतरि रूपम् । चैद्यम् चेदीना जनपदानामय-चैद्य । "वृद्धेत्कोसलाजादाञ्ञ्यङ्" इतिञ्यङ् प्रत्ययः । प्रतिशब्दयोगे द्वितीया । क्रुद्धस्य क्रुध्यते. क्तान्तम् । शार्ङ्गिण - शार्ङ्गशब्दाद् मत्वर्थीय इनि । शार्ङ्गम् ( शृङ्गनिर्मित धनुर्विशेषः ) अस्यास्तीतिविग्रह । आस्पद व्याख्यातम् । नभ इति उत्पतनकर्मणि द्वितीया ।

व्याख्या—तस्मिन्-इन्द्रसदेश श्रावयितरि, सुराणा मुनौ-नारदे, इति-पूर्वोक्ताम्, वाचम्-वाणीम्, व्याहृत्य-उक्त्वा, नभ -आकाशम्, उत्पतिते-उद्गते-आकाशमार्गेण प्रस्थिते, पुर -अग्रे, इन्दो -चन्द्रमस., श्रियम् शोभाम्, बिभ्रति-धारयति सति, अथ-नारदवाक्यश्रवणसमनन्तरम्, ओम् इति तथास्तु इति, उक्तवत -कथितवत., चैद्य प्रति-शिशुपाल प्रति, क्रुद्धस्य-कोपवत , शार्ङ्गिण - हरे -श्रीकृष्णस्य, वदने-मुखमण्डले, व्योम्नीव-आकाशे यथा, अनिशम्-सर्वदा, शत्रूणाम्, विनाशस्य, पिशुन -सूचक , केतु -उत्पातसूचको ग्रहविशेष ,

ऋपुटिन्छलेन भ्रूभङ्गव्याजेन आस्पदम्-प्रतिष्ठाम्-स्थितिम्. चकार।

भा०—नारद श्रीकृष्णाय इन्द्रसदेश श्रावयित्वा आकाशमार्गेण प्रतस्थे, प्रस्थिताय तस्मै कृष्णेनापि इन्द्रसदेशानुकूल शिशुपालहनन प्रतिश्रुतम । प्रतिनिवर्तितुमना नारदो यदाकाशमुद्गत तदानीं प्रफुल्ला स्वच्छशुभ्र स चन्द्रवच्छोभते स्म । चन्द्रशोभा दधति नारदे व्योममार्गेण प्रस्थिते सति तदनुपदमेव चैद्यापकृतानि श्रुत्वा तदुपरि समुत्पन्नकोपस्य भगवतः कृष्णस्य मुखे भ्रुकुटि स्थिता । सा च तदानीं तथा प्रतीयते स्म यथाकाशे चन्द्रमसमनुस्थितः शत्रुनाशसूचक केत्वाख्य उत्पातग्रहो भवेत् । तदुक्त 'चन्द्रमस्युत्थित केतु क्षितीशाना विनाशकृत्' इति ।

अल०—मुनेरिन्दुश्रियोऽयोगात् सादृश्याक्षेपान्निदर्शना । व्योम्नीवेत्युपमा । स्थानत्व व्योमवदनयो साधर्म्यम् । छलशब्देन भ्रुकुटित्वमपह्नुत्य केतुत्वारोपात् कैतवापन्हुति । तत्र पूर्वोक्तयोरपन्हवोपकारकत्वाद् अङ्गाङ्गिभावेन सङ्कर । अनेन वाक्यार्थभूतस्य वीररससहकारिणो रौद्रस्य स्थायी क्रोधः स्वानुभावेन भ्रुकुट्या कारणभूतोऽनुमेय, तथा तदविनाभूतस्याङ्गिनो वीरस्य स्थायी प्रयत्नोपनेय उत्साहोप्युत्पन्न एवेत्यनु संधेयम्' इति मल्लिनाथ. । शार्दूलविक्रीडित वृत्तम् । यथा किरातार्जुनीये सर्गान्तिमश्लोकेषु मङ्गलाचरणरूपेण लक्ष्मीपदप्रयोगो दृश्यते, तथा तच्छायानुहारिण्यत्रापि सर्गान्त्यश्लोकेषु श्रीशब्दप्रयोग, अत एव श्र्यङ्कमिद काव्यम् ॥

इतिच्छात्रोपकारिण्या महाकाव्यसग्रहव्याख्यायाम्
अष्टम. सर्ग ।



❀ श्री ❀

# महाकाव्य-संग्रहः।

## संग्रहे नवमः शिशुपालवधे द्वितीयः सर्गः।

यियक्षमाणेनाहूतः पार्थेनाथ मुरं द्विषन्।
अभिचैद्यं प्रतिष्ठासुरासीत् कार्यद्वयाकुलः ॥ १ ॥

अ०—अथ यियक्षमाणेन पार्थेन आहूतः अभिचैद्यं प्रतिष्ठासुः मुरं द्विषन् कार्यद्वयाकुलः आसीत्।

व्याक०—चैद्यमभिलक्ष्य अभिचैद्यम्। "लक्षणेनाभिप्रती आभिमुख्ये" इत्यनेनाव्ययीभावसमासः। अथवा 'अभि' इति पृथक् पदम्, तस्य 'अभिरभागे" इति कर्मप्रवचनीयसञ्ज्ञा, चैद्यमिति तद्योगे "कर्मप्रवचनीययुक्ते द्वितीया"। कार्ययोः द्वयेन आकुलः कार्यद्वयाकुलः। कार्येति "विभाषा कृवृषोः" इति करोतेर्वैभाषिकण्यदन्तः। द्वयेति द्विशब्दादवयवे तयप्, तस्य "द्वित्रिभ्यां तयस्यायज्वा"। यष्टुमिच्छता यियक्षमाणेन, यजतेः सन्नन्ताच्छानच्। पार्थेन 'तस्येदम्" इति शैषिकोऽण्। तन्नामिकाण् तु न शङ्क्यः "घ्यच" इति ढका तद्बाधात्, आह्वानकर्तरि तृतीया। आहूतः-आङ्पूर्वाद् 'ह्वेञ्' धातोः क्तः, सम्प्रसारणम्। प्रस्थातुमिच्छुः प्रतिष्ठासुः-प्रपूर्वात् तिष्ठतेः सन्, ततः उः। द्विषन्-द्वेष्टि "द्विषोऽमित्रे" इति शतृप्रत्ययः। "द्विषः शतुर्वा" इति वैकल्पिकषष्ठीनिषेधात् 'मुरम्' इति कर्मणि द्वितीया।

व्याख्या—अथ-इन्द्रसंदेशश्रवणसमनन्तरम्, यियक्षमाणेन-राजसूयेन यष्टुमिच्छता, पार्थेन-पृथापुत्रेण, युधिष्ठिरेण, आहूतः-निमन्त्रितः, अभिचैद्यम्-शिशुपालं प्रति, प्रतिष्ठासुः-युद्धार्थं प्रस्थातुमिच्छुः, मुरं द्विषन्-मुरारिः-श्रीकृष्णः, कार्यद्वयेन-कार्ययोः-यज्ञोपगमनशिशुपालनिहननरूपयोः कर्तव्ययोः, द्वयेन-द्वितयेन, आकुलः-सचिन्तः, आसीत्। राजसूययज्ञं उपस्थाय सुहृत्कार्यं वा

तन्शायन इन्द्रसंदेशेन शिशुपालं निगृह्य देवकार्यं वा साध्यमिति कार्ययोविपचे संदिहानोभूदित्यर्थः।

भा०—भगवान कृष्णो यावद् इन्द्रसंदेशेन प्रजोपद्रवकारिणं शिशुपाल-मभिषेणयितुमिच्छति तावत् स राजसूयेन यष्टुमिच्छता युधिष्ठिरेण यज्ञे सन्नि-धातु निमन्त्रित., तत स युगपदावश्यककार्यद्वयप्रसक्तया शिशुपालो वा निह-न्तव्य यज्ञे वा सन्निधातव्यमित्येव निर्धारयितु नाशकत्। तन्मन सन्देहदो-लायितमभूत्।

अल०—अत्र पद्ये कविना वक्ष्यमाणमन्त्रणावतारणय तद्बीजरूपेण सदेह उपन्यस्तः। पार्थेनेतिविशेष्य पितृष्वसु पृथायाः पुत्रस्याह्वान पालनीयमिति साभिप्रायम्, एवं मुर द्विषन्-इति देवोपद्रवकारिमुरवृत्तान्तस्मारणेन कृष्णस्य शिशुपालप्रत्यवस्थाने साभिप्रायमिति परिकराङ्कुर ।

**साधमुद्धवसीरिभ्यामथासावासदत् सदः।**
**गुरुकाव्यानुगा बिभ्रचान्द्रीमभिनभः श्रियम् ॥ २ ॥**

अ०—अथ असौ अभिनभ. गुरुकाव्यानुगा चान्द्रीं श्रिय बिभ्रत् उद्धवसी-रिभ्यां सार्धं सद आसदत्।

व्याक०—अभिनभ -पूर्ववदव्ययीभाव , कर्मप्रवचनीययोगे द्वितीया वा । अनुगच्छत इत्यनुगौ, " अन्यत्रापि दृश्यते " इति गच्छतेर्ड । गुरुकाव्यौ अनुगौ यस्या ता गुरुकाव्यानुगाम्। गुरुकाव्ययोर्द्वन्द्व । उद्धवेन सीरिणा च उद्धवसीरिभ्याम्, " सहयुक्तेऽप्रधाने " इति सार्धशब्दयोगे तृतीया। सीरीति-सीरशब्दाद् " अत इनिठनौ " सीरोऽस्यास्तीति। चन्द्रस्येमा चान्द्रीम्, शैषि-केण्, अरणन्तत्वाद् ङीप्। आसदत्-आङ्पूर्वात् ' पद्लृ विशरणगत्यवसाद-नेषु ' इति धातोर्लुङि रूपम्, लृदित्वाद् च्लेरङ्। सद इति सान्तस्य सदश-ब्दस्य द्वितीयैकवचनम्, आसदनस्य कर्म।

व्याख्या—अथ-सन्देहानन्तरम्, असौ-हरि., * अभिनभ -आकाशम् अभिलक्ष्य-आकाश इति यावत्, † गुरुकाव्यौ-बृहस्पतिशुक्रौ, अनुगौ-अनु-

* नभ ख श्रावणो नभा -इत्यमर ।

† गीष्पतिर्धिषणो गुरु , शुक्रो दैत्यगुरु काव्य -इत्युभयत्रामर ।

गामिनौ, यस्या तथाभूताम्, चान्द्रीम्-चन्द्रस्य, श्रियम्-शोभाम् बिभ्रत्-धार-यन्, उद्धवेन, सीरिणा-बलभद्रेण च, सार्धम्-सह, सदः-सभाम्-मन्त्रणास्था-नम्, आसदत्-अगमत्, प्राविशदिति यावत् ।

भा०—तदनन्तर कृष्ण उद्धवबलभद्राभ्या सह मन्त्रणार्थ सभामन्दिरम-विशत्, अग्रे कृष्ण आसीत्, पश्चाच्चोद्धवबलभद्रावास्ताम् । तदानी ताभ्या-मनुगम्यमान कृष्ण आकाशे बृहस्पतिशुक्राभ्यामनुगम्यमानस्य चन्द्रस्य शोभामुवाह ।

अल०—अन्यस्य श्रियोऽन्येनावहनादुपमापर्यवसाने निदर्शना । पूर्वार्धे छेकवृत्त्यनुप्रासयोः संसृष्टिः । उद्धवसीरिणोर्गुरुकाव्यसादृश्यप्रयोजक नीतिवि-शारदत्वम्, तेन च तयोर्मन्त्रणायोग्यत्व व्यज्यते । अविकाव्कलेऽपि उद्धव-शब्दस्य पूर्वनिपात अभ्यर्हितत्वात्, तेन उद्धवेनोपन्यसिष्यमाणपक्षस्य सिद्धा-न्तत्व सूच्यते ।

**जाज्वल्यमाना जगत शान्तये समुपेयुषी ।**
**व्यद्योतिष्ट सभावेद्यामसौ नरशिखित्रयी ॥ ३ ॥**

अ०—जगत शान्तये समुपेयुषी जाज्वल्यमाना असौ नरशिखित्रयी सभा-वेद्या व्यद्योतिष्ट ।

व्याक०—नरा एव शिखिन , नरा शिखिन इव वा तेषा त्रयी । शिखीति शिखाशब्दात् "व्रीह्यादिभ्यश्च" इतीनि , त्रयीत्ययजन्त , "टिड्ढाणञ्" इति ङीप् । सभैव वेदि , सभावेदिरिव, वा, तस्या सभावेद्याम् । शान्तये-शाम्यते क्तिन्, तादर्थ्ये चतुर्थी । समुपेयुषी-' सम् ' ' उप् ' एतत्पूर्वाद् इण् धातो क्वसु , उगित्त्वात् ङीप् , ' वसोः सम्प्रसारणम् " । अतिशयेन ज्व-लन्ती जाज्वल्यमाना । ज्वलते " धातोरेकाचो हलादे क्रियासमभिहारे यङ्" तत शानच् । व्यद्योतिष्ट-विपूर्वाद् द्योततेर्लुङ् ।

व्याख्या—जगत -ससारस्य, शान्तये-उपद्रवशमनाय, समुपेयुषी-सङ्गता-एकत्र मिलिता, जाज्वल्यमाना-देदीप्यमाना, असौ पूर्वोक्ता, नरा -पुरुषा एव, शिखिन -श्रुतिप्रसिद्धा गार्हपत्यादयोऽग्नय , ( गार्हपत्याद्यग्निसदृशा नरा वा ) तेषा त्रयी-त्र्यवयवकसमुदाय , सभावेद्याम्-सभा-मन्त्रणार्थमास्थाननिकेतनम्,

सैव * वेदि -परिष्कृता भूमिः, ( वेदिसदृशी सभा वा ) तस्याम्, व्यद्योतिष्ट-अशोभिष्ट ।

भा॰ – असुरोपद्रवपरिहारेण प्रजासु शान्तिप्रचाराय समवेता अतितेजस्विन इमे रामकृष्णोद्धवाः सभायामुपविविशु, सभाया तिष्ठता तेषा तथा शोभाभूत्, यथा यज्ञवेद्यामाहिताना प्रज्वलता त्रयाणा गार्हपत्याहवनीयदक्षिणाग्नीना शोभा भवति ।

अल—रूपकोपमयो सन्देहकर, ज्वलनस्याग्नौ मुख्यत्वाद् रूपकमेव वा ।

**रत्नस्तम्भेषु सक्रान्तप्रतिमास्ते चकाशिरे ।**
**एकाकिनोऽपि परितः पौरुषेयवृताइव ॥ ४ ॥**

अ॰—रत्नस्तम्भेषु सक्रान्तप्रतिमा ते एकाकिन अपि परित पौरुषेयवृताइव चकाशिरे ।

व्याक॰—रत्नाना स्तम्भेषु रत्नस्तम्भेषु । सक्रान्ता प्रतिमा येषा ते सक्रान्तप्रतिमा । संक्रान्तेति क्रामते क्रान्त । प्रतिमेति-प्रतिपूर्वान् माङ्धातोः " आतश्चोपसर्गे " इत्यङ् । पौरुषेयेण वृताइव पौरुषेयवृता इव, पुरुषाणा समूह पौरुषेयम्, पुरुषशब्दात् " सर्वपुरुषाभ्या णढञौ " इति समूहे ढञ् । एकाकिन॰-एकशब्दाद् " एकादाकिनिच्चासहाये " इत्याकिनिच् । परित " पर्यभिभ्या च " इति तसिल् । चकाशिरे-काशतेर्लिट् ।

व्याख्या—रत्नस्तम्भेषु-गृहोपष्टम्भार्थं रत्ननिर्मितेषु स्तम्भेषु, सक्रान्ता॰-अतिनैर्मल्यात् प्रतिफलिता, प्रतिमा -प्रतिविम्बानि, येषा तथाभूता, ते-त्रय - उद्धवादय, एकाकिन -असहायाः-चतुर्थादिरहिता अपि, परितः-सर्वत॰, पौरुषेयेण-पुरुषसमूहेन, आवृता -परिवृताइव, चकाशिरे-प्रतीयन्ते स्म ।

भा॰ - तत्र सभाया रत्नजटिता भूयास स्तम्भा आसन्, तेषु रत्नानामतिस्वच्छतया तदाकृतय प्रतिफलिता, अत एव स्तम्भाना मध्ये स्थितास्ते केवल त्रयोऽपि स्वचतुर्दिक्षु प्रतिविम्वबाहुल्यात् तथा प्रतीयन्ते स्म यथेमे पुरुषसमूहेन आवृता भवेयु ।

अल॰—पौरुषेयवृताइवेत्युत्प्रेक्षा ।

---

* वेदि परिष्कृता भूमि —इत्यमर ।

अध्यासामासुरुत्तुङ्गहेमपीठानि यान्यमी ।
तैरूहे केसरिक्रान्तत्रिकूटशिखरोपमा ॥८॥

अ०—अमी यानि उत्तुङ्गहेमपीठानि अध्यासामासु, तैः केसरिक्रान्तत्रिकूट शिखरोपमा ऊहे ।

व्याक०—उत्तुङ्गानि हेम्न पीठानि उत्तुङ्गहेमपीठानि । ' अधिशीङ्स्थासां कर्म " इत्यधिकरणस्य कर्मत्वम् । त्रीणि * कूटानि (शृङ्गाणि) यस्य स त्रिकूट., केसरिभिः क्रान्तानां ( तृ० ) त्रिकूटस्य शिखराणाम् ( ष० तत्पु० कर्म० ) उपमा केसरिक्रान्तत्रिकूटशिखरोपमा । केसरीति केसरशब्दात् ' अत इनिठनौ " । उपमानमुपमा-उपपूर्वात् माङ्धातो ' आतश्चोपसर्गे " इत्यङ् । वहनक्रियाया उक्ते कर्मणि प्रथमा । अध्यासामासु.-अधिपूर्वाद् आस् उपवेशने' धातोर्लिटि उसि रूपम् । ' दयायासश्च " इत्याम् । अस्तेरनुप्रयोग. । ऊहे-वहे कर्मणि लिट् । सम्प्रसारणम् । तैरिति तत्कर्तृपदम् ।

व्याख्या—अमी-पूर्वोक्ता उद्धवादय , यानि, उत्तुङ्गानि-अत्युच्चानि, हेम-पीठानि-स्वर्णसिंहासनानि, अध्यासामासु -अधितष्ठु -येष्वासनेषूपविष्टा , तै.-हेमपीठै , केसरिभि -सिंहै , क्रान्तानाम्-अधिष्ठितानाम्, त्रिकूटस्य-तन्नामक-पर्वतस्य, शिखराणाम्-शृङ्गाणाम, उपमा-सादृश्यम्, ऊहे-धृता ।

भा०—इमे रामकृष्णादयस्तत्र सभाया सन्निवेशितेषूच्चेषु स्वर्णसिंहासने-षूपविविशु । तदधिष्ठितानां तेषां सिंहासनानां तदानी तादृशी शोभाभवत्, यादृशी सिंहाधिरूढाणां त्रिकूटपर्वतशिखराणां भवति । त्रिकूट इति तत्पर्वतस्या-न्वर्थसंज्ञा, यतस्तस्य त्रीणि कूटानि-शिखराणि सन्ति । सिंहासनानां त्रिकूट-शिखरोपमया तत्समुदायस्य त्रिकूटसादृश्य व्यङ्ग्यम्, एवं रामादीनां सिंह-सादृश्यमपि ।

अल०—उपमा ।

गुरुद्वयाय गुरुणोरुभयोरथकार्ययो ।
हरिर्विप्रतिषेधं तमाचचक्षे विचक्षणः ॥६॥

अ०—अथ विचक्षण. हरि. गुरुद्वयाय गुर्व्णो उभयो. कार्ययो. त विप्रति-

* कूटोऽस्त्री शिखरं शृङ्गमित्यमर. ।

षेधम् आचचक्षे ।

व्याक०—गुर्वो द्वयाय गुरुद्वयाय । द्वयेति द्विशब्दादयजन्त । "क्रियया गमभिप्रैति सोपि सम्प्रदानम्" इति सम्प्रदानत्वाच्चतुर्थी । विचक्ष इति विचक्षण चक्षिङ् व्यक्ताया वाचि' धातो 'अनुदात्तेतश्च हलादे" इति युच् । गुरुणो - कार्यविशेषणमिदम्, अत एव 'इकोचि विभक्तौ" इति नुम् । विप्रतिषेधम्- विप्रतिपूर्वात् षिध्' धातोर्घञ् । आचचक्षे-चक्षिङ्धातोर्लिटि तप्रत्यये रूपम् । तस्यैशादेश ।

व्याख्या—अथ-उपवेशनानन्तरम्, विचक्षण -वाग्मिवरः-चतुर प्रवक्ता, हरि -कृष्ण, गुरुद्वयाय-द्वाभ्या गुरुभ्याम्-पितृव्यायोद्धवाय, ज्येष्ठभ्रात्रे बलरामाय च, गुरुणो -अवश्यकर्तव्यतया महतो, उभयो -द्वयो, कार्ययो -यज्ञोपगमन- शिशुपालाभियानरूपयो तम् पूर्वोक्तम्-विप्रतिषेधम्-(एककालावच्छेदेन दुर्घट- त्वरूपम्) विरोधम्, आचचक्षे-विशद प्रतिपादयामास ।

भा०—सभायामुपवेशनानन्तर वचनोपन्यासपटुर्भगवान् कृष्ण क्रमश पितृव्यत्वेन ज्येष्ठभ्रातृत्वेन च स्वपूज्ययोरुद्धवबलभद्रयोरग्रे पूर्वोक्तयोर्महतोः कार्ययोर्विरोधमुपन्यस्यति स्म । उभयोर्युगपदसम्भव एव विरोध, न चैकतरम- प्युपेक्षितु शक्यम् ।

अल०-गुरुभ्या गुरुकार्यनिवेदनोक्त्या समालङ्कार । विचक्षण इति विशे- षण कृष्णवचनस्य युक्त्युपेतताया साभिप्रायमिति परिकर ।

द्योतितान्त.सभै कुन्दकुड्मलाग्रदत स्मितैः ।
स्नपितेवाभवत्तस्य शुद्धवर्णा सरस्वती ॥ ७ ॥

अ०—कुन्दकुड्मलाग्रदत तस्य सरस्वती द्योतितान्त सभै स्मितै स्नपितेव शुद्धवर्णा अभवत् ।

व्याक०—कुन्दस्य कुड्मलानाम् (ष० त०) अग्राणीव दन्ता यस्य तस्य कुन्दकुड्मलाग्रदत । "अग्रान्तशुद्धशुभ्रवृषवराहेभ्यश्च" इत्यनेन दन्तशब्दस्य वैभाषिको दत्रादेशः, कुड्मलाग्रदन्-दन्तौ-दन्त -इत्यादि रूपाण्यवधेयानि । अन्त प्रधाना सभा अन्त सभा, शाकपाथिवादित्वान्मध्यमपदलोप । अथवा सभाया मध्यमित्यन्त सभम्, अव्ययमिति योगविभागात् समास, अपदिशवत् ।

द्योतितेति द्योतते क्त । (शुद्धा वर्णा एव) शुद्धो वर्ण यस्या सा शुद्धवर्णा । शुद्धेति शुध्यते क्तान्त । सरस्वती-सरस्शब्दान्मतुप् । स्मितै -स्मयते क्तो भावे । स्नपिता-स्नातेर्ण्यन्तात् क्त , 'अर्तिह्री " इति पुगागम । 'ग्लास्नावनुवमा च" इति मित्त्वाद् "मिता ह्रस्वः" । अभवत् भवतेर्लङ् ।

व्याख्या—*कुन्द-माघमासभव पुष्पविशेष , तस्य कुड्मलानाम्-कोरकाणाम्, अग्राणीव-अग्रभागा इव, दन्ता यस्य, तथाभूतस्य, तस्य हरे , सरस्वती-वाणी, द्योतिता-अन्त.सभा-मभाभ्यन्तरम् (अथवा द्योतितम्-अन्त सभन्-सभामध्यम्) यै , तादृशै स्मितै -मन्दहासै , स्नपितेव-स्नानेन क्षालितेव, शुद्ध-वर्णा-शुद्धा वर्णाः-स्फुटाक्षराणि, तान्येव शुद्धो वर्ण.-स्वच्छ-रूपम्, यस्या॰, तथाभूता, अभवत् ।

भा०—भगवत कृष्णस्य दन्ताः कुन्दकुसुमकलिकावत् स्वच्छशुभ्रा आसन् , किं च स प्रकृत्या स्मितपूर्वाभिभाषी आसीत्, स्मितमपि कविसम्प्रदाये स्वच्छशुभ्रमुच्यते, अतो वचनसमये स्वच्छशुभ्रैस्तस्य स्मितैर्दन्तकान्त्या च सभा-मध्यभागो नितरा प्रकाशित , किं च यद्यपि तद्वाणी यथास्थानप्रयत्नोच्चारणेन स्वभावत शुद्धवर्णा आसीत्, तथापि तत्र कविरुत्प्रेक्षते यत् स्मितप्रक्षालनेन तस्या. शुद्धवर्णत्व जातम् ।

अल०—स्वाभाविकवर्णशुद्धे स्नानहेतुकत्वोत्प्रेक्षणादुत्प्रेक्षा । वर्णेषु स्वरूपत्वस्य, स्मितेषु जलत्वस्य चारोपाद् रूपकम, तच्चैकदेशविवर्ति । अनयोश्चाङ्गाङ्गिभावेन सङ्कर । कुन्देत्यादिविशेषण सभाद्योतने साभिप्रायमिति परिकर. ।

**भवद्गिरामवसरप्रदानाय वचासि न ।**
**पूर्वरङ्ग प्रसङ्गाय नाटकीयस्य वस्तुन ॥ ८ ॥**

अ०—न वचासि भवद्गिराम् अवसरप्रदानाय (एव) (सन्ति) पूर्वरङ्ग नाटकीयस्य वस्तुन. प्रसङ्गाय (भवति) ।

व्याक०—अवसरस्य प्रदानाय अवसरप्रदानाय । तादर्थ्ये चतुर्थी । अवसरेति अवपूर्वात् सरते " पुसि सज्ञाया घ प्रायेण " । न -अस्मच्छब्दस्य षष्ठीबहुवचनम्, " बहुवचनस्य वस्नसौ " " अस्मदो द्वयोश्च " इति

* माघ्य कुन्दमित्यमर. ।

बहुवचनम् । पूर्वश्चासौ रङ्ग पूर्वरङ्ग । रञ्जेर्घञि रङ्ग । नाटकस्येद नाटकीयम्, तस्य । " वृद्धाच्छ " तस्येयादेश । प्रसङ्गाय-षञ्जधातोर्घञन्त । " तुमर्थाच्च भाववचनात् " इत्यनेन तादर्थ्ये वा चतुर्थी । भवद्गिरामिति सम्बन्धसामान्ये षष्ठी ।

व्याख्या—नः-अस्माकम्, वचांसि-वचनानि, भवद्गिराम्-युष्मद्वचसाम्, अवसरप्रदानाय-प्रसञ्जनायैव, न तु सिद्धान्तरूपाणि, सन्ति । पूर्वरङ्ग -रङ्गविघ्नोपशान्तये नाट्यादौ क्रियमाणो नान्दीपाठगीतवादित्रादिः, नाटकीयस्य-नाटकसम्बन्धिन , वस्तुन'-वृत्तस्य, प्रसङ्गाय-प्रसञ्जनाय-उपक्रमाय, भवति ।

भा०—कृष्ण कथयति यद् यथा नाट्यादौ क्रियमाण पूर्वरङ्ग केवलमभिनेष्यमाणवस्तुप्रसञ्जनाय भवति तथैवादौ प्रयुज्यमान मद्वचनमपि भवद्वचनोपन्यासप्रसङ्गोत्थापनायैव न तु सिद्धान्तरूपम् । यतोऽह कर्तव्यार्थे साशयिक सिद्धान्त निर्णेतुमिच्छामि ।

अल०—हरिवाक्यपूर्वरङ्गयो॰ प्रसञ्जकत्वरूपसामान्यस्य वाक्यद्वये शब्दान्तरेण पृथङ्निर्देशात् प्रतिवस्तूपमेति मल्लिनाथ ।

**करदीकृतभूपालो भ्रातृभिर्जित्वरैर्दिशाम् ।**
**विनाप्यस्मदल भूष्णुरिज्यायै तपसः सुतः ॥६॥**

अ०—दिशा जित्वरः भ्रातृभि करदीकृतभूपाल॰ तपस सुत अस्मद् विना अपि इज्यायै अल भूष्णुः ( अस्ति ) ।

व्याक०—अकरदा करदा॰ कृता भूपाला येन स करदीकृतभूपालः । करदेति ' कर ददति ' ददाते " आतोऽनुपसर्गे क " ततश्च्वि । जित्वरैः-जयते " इण्नशजिसर्तिभ्य क्वरप् " । इज्यायै-यज्धातो॰ " सञ्ज्ञाया समजनिषद ·· " इति भावे क्यप्, सम्प्रसारणम् । अलशब्दयोगे चतुर्थी । भूष्णुः-" ग्लाजिस्थश्च ग्स्नु " इत्यत्र चकाराद् भवतेरपि ग्स्नु । " क्ङिति च " " श्र्युक' किति " उभयत्र गकारप्रश्लेषाद् गुण इडागमश्च न । भ्रातृभि॰-करणे हेतौ वा तृतीया । अस्मद्-विनाशब्दयोगे " पृथग्विनानानाभिस्तृतीयान्यतरस्याम् " इत्यनेन पञ्चमी ।

व्याख्या—दिशा जित्वरै॰-दिग्विजयशीलै , भ्रातृभि॰-भीमादिभि॰, करदी-

कृता -षष्ठभागप्रदता नीता -स्ववशीकृता इति यावत्, भूपाला -राजान , येन स , *तपस सुत -धर्मपुत्रो युधिष्ठिर , अस्मद्विना-अस्माक माहाय्यमन्तरेणापि, इज्यायै-यागाय, अल भूष्णु -समर्थोऽस्ति ।

भा०—युधिष्ठिरस्य भीमादयो भ्रातर स्वपराक्रमेण दिग्विजयिनः सन्ति, तत्साहाय्येन स सर्वान् राज्ञः स्वाधीनान् अकरोत् । अत एव ते तस्मै कर ददति । तथा च स अस्मत् साहाय्य विनापि स्वभ्रातृणा साहाय्येनैव यज्ञ निर्विघ्न सपादयितु समर्थ । तदधीना राजानोऽपि तत्साहाय्याय यज्ञ उपतिष्ठेरन्नेव । अतो यज्ञेऽस्माक सन्निधान नात्यावश्यकम् ।

अल०—युधिष्ठिरविशेषणाना साभिप्रायत्वात् परिकर ।

**उत्तिष्ठमानस्तु परो नोपेक्ष्य पथ्यमिच्छता ।**
**समौ हि शिष्टैराम्नातौ वर्त्स्यन्तावामयः स च ॥१०॥**

अ०—तु पथ्यम् इच्छता ( पुरुषेण ) उत्तिष्ठमान परः न उपेक्ष्य. । हि शिष्टै वर्त्स्यन्तौ आमय स च समौ आम्नातौ ।

व्याक०—पथोऽनपेत पथ्यम्, " धर्मपथ्यर्थन्यायादनपेते " इति यत् । इषे. कर्मणि द्वितीया । इच्छतेति इषेः शतरि रूपम्, उपलक्षणकर्तरि तृतीया । उत्तिष्ठमान.-उत्पूर्वात्तिष्ठतेर्लट्, तस्य ' उदोऽनूर्ध्वकर्मणि" इत्यात्मनेपदे शानच् । उपेक्ष्य-उपपूर्वाद् ईक्षतेः "ऋहलोर्ण्यत्" । शिष्टैरिति 'शासु अनुशिष्टौ' धातो क्तान्त , "शास इदङ्हलो" 'शासिवसिघसीना च" इति षत्व च । आम्नानकर्तरि तृतीया । वर्त्स्यन्तौ वर्ततेर्लृट्, तस्य "वृद्भ्य स्यसनो" इति परस्मैपदे " लृट सद् वा " इत्यनेन शत्रादेश , " न वृद्भ्यश्चतुर्भ्य " इतोऽभावः । आम्नातौ-आङ्पूर्वात् 'म्ना अभ्यासे' धातो. कर्मणि क्त ।

व्याख्या—तु-किन्तु, पथ्यम्-हितम्, आरोग्य च, इच्छता-कामयमानेन-पुरुषेण, उत्तिष्ठमान -वर्धमान , पर -शत्रु , न उपेक्ष्य -नौदासीन्येन द्रष्टव्य - अवश्यप्रतिकर्तव्य इति यावत् । हि-शिष्टैः-नीतिविशारदै , वर्त्स्यन्तौ-वर्धिष्यमाणौ, आमय. रोग , स च-शत्रुश्च, समौ-तुल्यकक्षौ, आम्नातौ-कथितौ।

भा०—यज्ञगमनस्यावश्यकत्व निरस्य शिशुपालाभिषेणन सामान्येनाह-

---

* तपश्चान्द्रायणादौ स्याद् धर्मे लोकान्तरेऽपि च-इति विश्व ।

हितमिच्छता पुरुषेण वर्धमान स्वशत्रु कदापि नोपेक्ष्य । यथाल्पीयमोऽपि वर्धमानस्य रोगस्य यदि समये चिकित्सा न क्रियते तर्हि स पश्चात् वृद्धि प्राप्तो रोगिण हिनस्ति, तथैव प्रारम्भे स्वल्पबलोऽपि शत्रुर्यदि न प्रतिक्रियते तदा स क्रमशो दृढबलो भूत्वा महान्तमनर्थमुत्पादयति । अत एव नीतिविदो वृद्धिशील शत्रु रोग च तुल्यावाहु ।

अल०—विशेषस्य सामान्येनाभिधानाद् अप्रस्तुतप्रशसा। उपमार्थान्तरन्यासौ च।

**न दूये सात्वतीसूनुर्यन्मह्यमपराध्यति ।**
**यत्तु दन्दह्यते लोकमदो दु खाकरोति माम् ॥११॥**

अ०—सात्वतीसूनु. यद् मह्यम् अपराध्यति ( तत ) न दूये, तु यद् लोक दन्दह्यते अद मा दु खाकरोति ।

व्याक०—सत्वतोऽपत्य स्त्री सात्वती, सत्वच्छब्दाद् "उत्सादिभ्योऽञ्" ङीप् । तस्याः सूनु सात्वतीसूनु । अपराध्यति 'राधोऽकर्मकाद् वृद्धावेव' इति दैवादिकाद् कर्तरि लट् । मह्यमिति तद्योगे "क्रुधद्रुहेर्ष्यासूयार्थाना यं प्रतिकोप" इत्यनेन सम्प्रदानत्वाच्चतुर्थी । दूये-'दूङ् परितापे' लट्, उत्तमपुरुषै-कवचनम् । गर्हित दहति दन्दह्यते-दहते "लुपसदचर ' इत्यनेन गर्हाया यङ्।"जपजभदहदशभञ्जपशा च" इत्यनेनाभ्यासस्य नुगागम । दु खाकरोति-'दु.खात् प्रातिलोम्ये" इत्यनेन करोतेर्योगे दु खशब्दाद् डाच् प्रत्यय ।

व्याख्या—सात्वती-कृष्णस्य पितृष्वसा, तस्या सूनु -पुत्र.-शिशुपाल , यद्, मह्यम्, अपराध्यति-द्रुह्यति-ममापराध करोतीति यावत्, तत -तस्मादपराधाद्, न दूये-न परितप्यामि, सम्बन्धिनः अपराधस्य सन्तव्यत्वात्। तु-किन्तु, यत्, लोकम्-प्रजावर्गम्, दन्दह्यते-गर्हित दहति-पीडयति, अद -गर्हित लोकपीडनम्, माम्, दु.खाकरोति व्यथयति-दु खमनुभावयति ।

भा०—शिशुपालो मामभिद्रुह्यति-इत्यतो नाह मनागपि खिद्ये । यत स सात्वत्या मत्पितृष्वसुः पुत्र , अतो बन्धुपक्ष्यतया स्वापकारविषये कथचित् क्षन्तु शक्यते । पर यत् स प्रजापीडन करोति तदतिगर्हितम्, तेन च मम दु ख जायते । बन्धुरपि यदि प्रजापीडकस्तर्हि दण्डनीय एव ।

अल०—सात्वतीसूनुरिति विशेष्य परितापाभावे साभिप्रायमिति

परिकराङ्कुर ।

**मम तावन्मतमिद श्रूयतामङ्गवामपि ।**
**ज्ञातसारोऽपि खल्वेक सदिग्धे कार्यवस्तुनि ॥१२॥**

अ०—तावत् इदम् मम मतम्, अङ्ग वाम् अपि ( मतम् ) श्रयनाम् ज्ञातमार अपि एकः कार्यवस्तुनि मदिग्धे खलु ।

व्याक०—ज्ञात' सारो येन स ज्ञातमार, जानाते कर्मणि क्ते ज्ञात । तावदित्यव्ययम्, मतम्-मन्यते 'मतिबुद्धिपूजार्थेभ्यश्च" इत्यनेन क्त । अङ्गेत्यामन्त्रणार्थकमव्ययम् । वाम्-युष्मच्छब्दस्य षष्ठीद्विवचने रूपम्, "युष्मदस्मदोः षष्ठी चतुर्था " इत्यनेन वामादेश. । अध्याहृतमतशब्दयोगे "क्तस्य च वर्तमाने" इत्यनेन, सम्बन्धसामान्ये वा षष्ठी । श्रूयताम्-श्रणोते अर्हार्थे कर्मणि लोट् । विधौ लोडिति मल्लिनाथः । सदिग्धे-मपूर्वात् दिह् धातोर्लट् । कार्यवस्तुनि इति विषयसप्तमी ।

व्याख्या—तावत्-भवन्मतश्रवणपर्यन्तम्, इदम्-पूर्वोक्तम्, मम मतम्-मया मन्यते । अङ्ग, वाम् युवयोरपि, मतम्, श्रूयताम्-श्रोतुमर्हम्, ज्ञातसार - विदिततत्त्वार्थोऽपि, एक -एकाकी, कार्यवस्तुनि कर्तव्यार्थे, सदिग्धे-सशेते, खलु-निश्चयेन ।

भा०—इद पूर्वपक्षरूपेण मम मतमस्ति, सिद्धान्तरूपेण युवयोरपि मत मया श्रोतव्यमेव । अन्यथा मम सन्देहो न निवर्तिष्यते । एककिनो विदुषोऽपि पुरुषस्य कर्तव्यार्थेषु सन्देहो जायत एव, मादृशोऽविद्वान् सशेत इत्यत्र किमु वक्तव्यम् ।

अल०—सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यास । भावार्थोक्तरीत्या काव्यार्थापत्ति कृष्णस्य विनयातिशयश्च व्यङ्ग्यौ ।

**यावदर्थपदा वाचमेवमादाय माधवः ।**
**विरराम महीयास. प्रकृत्या मितभाषिण. ॥ १३ ॥**

अ०—माधवः यावदर्थपदा वाचम् एवम् आदाय विरराम, महीयास प्रकृत्या मितभाषिणः ।

व्याक०—यावन्त अर्थास्तावन्ति पदानि इति यावदर्थम्, " यावदवा-

रणे ' इत्यव्ययीभाव । यावदर्थं पदानि यस्या ता यावदर्थपदाम् । आदायेति आङ्पूर्वाद् ददातेर्ल्यप् । विरराम-विपूर्वाद् रमतेर्लिट्, " व्याङ्परिभ्यो रमः ' इति परस्मैपदम् । अतिशयेन महान्तो महीयास , महच्छब्दादीयसुन् । मित भाषन्त इति मितभाषिण. । भाषतेर्णिनिः, मितमिति ' माङ् माने शब्दे च ' धातो क्तान्तम्, " घुमास्थागापा " इति इत्वम् । प्रकृत्येति प्रकृत्यादित्वात् तृतीया ।

व्याख्या—माधव., मायाः-लक्ष्म्या रुक्मिणीरूपाया, धव'-पति, श्रीकृष्ण', यावदर्थम्-अर्थसम्मितानि, पदानि-शब्दा., यस्या तथाभूता मिताक्षराम्, वाचन्-वाणीम्, एवम्-उक्तप्रकारेण, आदाय-गृहीत्वा-उक्त्वेतियावत्, विरराम-तूष्णीं बभूव । महीयास -महानुभावा , प्रकृत्या-निसर्गेण, मितभाषिण.-वृथाशब्दविस्तरपरिहारेण अपेक्षितशब्दप्रवक्तार', भवन्तीति शेषः ।

भा०—पूर्वोक्तरीत्या परिमिताक्षरै स्वपक्ष स्थापयित्वा हरिस्तूष्णीं बभूव । महतामेष स्वभावो यत्त यावदपेक्षित तावदेव भाषन्ते ।

अल०—पूर्ववदर्थान्तरन्यास' ।

अथाष्टभि' कुलकेन राम वर्णयंस्तद् वाक्यमवतारयति ।

**तत. सपत्नापनयस्मरणानुशयस्फुरा ।**
**ओष्ठेन रामो रामोष्ठबिम्बचुम्बनचुञ्चुना ॥ १४ ॥**

अ०—तत सपत्नापनयस्मरणानुशयस्फुरा रामोष्ठबिम्बचुम्बनचुञ्चुना ओष्ठेन ( उपलक्षित ) राम ( जगाद ) ।

व्याक०—सपत्नस्य अपनय , तस्य स्मरणम्, तेन अनुशयः, तेन स्फुरति इति सपत्नापनयस्मरणानुशयस्फूः, तेन, सोपपदात् स्फुरते क्विप्, प्रथमाया " र्वोरुपधायादीर्घ इक " । अपनयानुशयशब्दौ नयते शेतेश्च एरजन्तौ । ओष्ठो बिम्बमिव ओष्ठबिम्बम्, रामाया ओष्ठबिम्बस्य चुम्बनेन वित्तः रामोष्ठबिम्बचुम्बनचुञ्चु । चुम्बनान्तात् " तेन वित्तश्चुञ्चुप्चणपौ " इति चुञ्चु । रामोष्ठेत्यत्र " ओत्वोष्ठयो. समासे वा " इत्यनेन पररूपम् । चुम्बनमिति ' चुबि वक्त्रसंयोगे ' धातोर्ल्युडन्त. । ओष्ठेनेति उपलक्षणे तृतीया ।

व्याख्या —तत -कृष्णस्य तूष्णीभावानन्तरम्, * सपत्न -शत्रु', तस्य-तत्कृत इति यावत्, अपनय -अपकार ,तस्य स्मरणेन-स्मृत्या, य अनुशय -पश्चात्ताप ( अथवा द्वेष तेन स्फुरति-स्पन्दत इति तथाभूतेन, रामाया -स्त्रियाः-रेवत्या इति यावत , ओष्ठबिम्बस्य-बिम्बसदृशस्य अधरस्य, चुम्बनेन चिन्त इति तादृशेन, ओष्ठेन, उपलक्षित., राम -बलभद्र , जगादेत्येकविंशेन श्लोकेनान्वय ।

भा०—कृष्णकथनानन्तर बलभद्र उवाच । कृष्णोक्तया शत्रुकृतापकार-स्मरणेन बलभद्रहृदयमतितताप । ( अथवा तस्य शत्रुविषये द्वेष उद्भूत )
तेन च क्रोधोदयाद् वचनसमये तस्योष्ठ स्फुरति स्म ।

अल०—उत्तरार्धे यमकानुप्रासयो. संसृष्टि । सपत्नेत्यादिविशेषणाभ्या बलभद्रस्य समरसुरतयो समरसत्व व्यज्यते इति मल्लिनाथ ।

**विवक्षितामर्थविदस्तत्क्षणप्रतिसंहृताम् ।**
**प्रापयन् पवनव्याधेर्गिरमुत्तरपक्षताम् ॥ १२ ॥**

अ०—विवक्षिताम् तत्क्षणप्रतिसंहृताम् अर्थविदः पवनव्याधे गिरम् उत्तर-पक्षता प्रापयन् ।

व्याक०—तस्मिन् क्षणे प्रतिसंहृताम् तत्क्षणप्रतिसंहृताम्, प्रतिसंहृतेति हरतेः क्तान्त., अर्थस्य विद् अर्थविद्, तस्य, विदिति वेत्ते कर्तरि क्विप् ।
पवनसम्बन्धी व्याधिर्यस्य तस्य पवनव्याधे । मध्यमपदलोप । पवनेति प्रङ्-गतो करणल्युडन्त । व्याधेरिति व्याङ्पूर्वाद् दधाते. उपसर्गे घो कि" ।
उत्तर पक्ष उत्तरपक्ष , तस्य भावस्तत्ता, ताम् । अकथितकर्मणि द्वितीया ।
गिरमिति प्रधान कर्म । विवक्षितामिति सन्नन्ताद् ब्रुवे वचेर्वा कर्मणि क्तान्त ।
प्रापयन्-प्रपूर्वाद् आप्नोतेर्णयन्ताल्लक्षणे शतृप्रत्यय ।

व्याख्या—विवक्षिताम् वक्तुमिष्टाम् । तत्क्षणे-विवक्षाक्षणे, प्रतिसंहृताम्-बलभद्रानुरोधात् प्रतिरुद्धाम्, अर्थविद -अर्थज्ञस्य-कार्याकार्यविवेकवत इति यावत्, पवनव्याधे ( वातरोगवत ) उद्धवस्य, गिरम्-वाचम्, उत्तरपक्षताम्-सिद्धान्तपक्षताम्, प्रापयन्-नयन्, जगादेति पूर्ववच्छेय ।

भा०—कृष्णोक्त्यनन्तर यावद् उद्धवो वक्तुमिच्छति, तत प्रागेव वचन-

* रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृद -इत्यमरः ।

व्यग्रतया बलभद्रेण वक्तुमारम्भम्, उद्धववचनं च सिद्धान्तत्वेन स्वीकरणाय मवशेषितम् । उद्धवस्तु बलभद्रानुरोधात् तूष्णीमतिष्ठत् ।

अल०—अर्थविद इति विशेषणं साभिप्रायमिति परिकर ।

**घूर्णयन् मदिरास्वादमदपाटलितद्युती ।**
**रेवतीवदनोच्छिष्टपरिपूतपुटे दृशौ ॥ १६ ॥**

अ०—मदिरास्वादमदपाटलितद्युती रेवतीवदनोच्छिष्टपरिपूतपुटे दृशौ घूर्णयन् ।

व्याक०—मदिराया आस्वाद , तेन मद , तेन पाटलिता द्युतिः ययोस्ते मदिरास्वादमपाटलितद्युती, आस्वाद इति स्वदतेर्घञन्त । मदेति माद्यतेः " मदोऽनुपसर्गे " इत्यबन्त । पाटलितेति गुणवाचिन पाटलशब्दात् " तदस्य संजातमिति तारकादिभ्य इतच् " । अथवा तत्करोतिण्यन्तात् पाटलशब्दान्निष्ठा, रेवत्या वदने उच्छिष्टम्, तेन परिपूते पुटे ययोस्ते रेवतीवदनोच्छिष्टपरिपूतपुटे । उच्छिष्टमिति उत्पूर्वाच्छिष्लृधातोः क्त । परिपूतेति पुनाते पवतेर्वा क्तान्तम् । घूर्णयन्-घूर्णतेर्ण्यन्ताच्छतरि रूपम् । दृशाविति प्रयोज्यकर्म, दृशौ घूर्णेते, ते प्रेरयति इति दृशौ घूर्णयति इति ।

व्याख्या—*मदिराया -सुराया , आस्वादेन-पानेन, यो मद , तेन पाटलिता-ईषद्रक्तीकृता, द्युति कान्ति , ययोस्तथाभूते, रेवत्या -तन्नाम्न्या स्वभार्याया , वदने-आनने, यदुच्छिष्टम्-मद्यलेपताम्बूलादि, तेन (अक्षिचुम्बनावगैरे ) परिपूते-शुद्धे, पुटे, ययोस्तादृश्यौ दृशौ, घूर्णयन्-भ्रामयन्, जगाद ।

भा०—कथनसमये रतिकालिकरेवतीकृतचुम्बनेन तन्मुखसंक्रान्तमद्यलेपादिना पवित्रे बलभद्रस्य अक्षिणी मदिरापानमदेन रक्ते घूर्णमाने चास्ताम् ।

अल०—उच्छिष्टस्य पावित्र्यजनकत्वविरोधस्याभासत्वाद् विरोधाभासोलङ्कार , आभासत्वं च 'रतिकाले मुखं स्त्रीणां शुद्धमाखेटके शुनाम्' इति स्मरणात्-इति मल्लिनाथ ।

**आश्लेषलोलुपवधूस्तनकार्कश्यसाक्षिणीम् ।**
**म्लापयन्नभिमानोष्णैर्वनमालां मुखानिलै ॥१७॥**

अ०—आश्लेषलोलुपवधूस्तनकार्कश्यसाक्षिणीम् वनमालाम् अभिमानोष्णै

* मदिरा कश्यमद्ये च इत्यमर ।

मुखानिलै म्लापयन् ।

व्याक०—आश्लेषे लोलुपाया वध्वा स्तनयोः कार्कश्यस्य साक्षिणीम्, आश्लेषलोलुपवधूस्तनकार्कश्यसाक्षिणीम् । आश्लेषेति श्लिष्यतेर्घञ् । लोलुपेति लुम्पतेर्यङन्तादच् । कर्कशस्य भाव कार्कश्यम्, भावे ष्यञ् । साक्षिणीम्-"साक्षाद् द्रष्टरि सञ्ज्ञायाम्" इति साक्षाच्छब्दाद् इनिप्रत्यय, अव्ययाना भमात्रे टिलोप, स्त्रीत्वाद् ङीप् । अभिमानेनोष्णै अभिमानोष्णै, मुखस्यानिलै मुखानिलै । म्लापयन्-'म्लै हर्षक्षये' णयन्ताच्छतृप्रत्यय, पुगागम ।

व्याख्या—आश्लेषे आलिङ्गने, लोलुपाया -लुब्धाया, वध्वा -स्त्रिया, स्तनयो -कुचयो, कार्कश्यस्य-काठिन्यस्य, साक्षिणीम्-उपद्रष्ट्रीम्-आलिङ्गनसमये कठिनाभ्या कुचाभ्या नित्य पीड्यमानाम्, वनमालाम्-आपादलम्बिनीं स्रजम्, अभिमानोष्णैः-अहङ्कारततै, मुखानिलै -नि श्वासमारुतै, म्लापयन्-म्लानता प्रापयन्, जगाद ।

भा०—साहङ्कार वदतस्तस्योष्णैर्निश्वासमारुतैर्वनस्तमाला मालिन्यमवाप, या कठिनाभ्या रेवतीकुचाभ्यामालिङ्गनसमये नित्य पीड्यते स्म ।

अल०—अम्लाने म्लानिसम्बन्धादतिशयोक्ति इति मल्लिनाथ ।

दधत् सन्ध्यारुणव्योमस्फुरत्तारानुकारिणी ।
द्विषद्द्वेषोपरक्ताङ्गसङ्गिनी स्वेदविप्रुष ॥ १८ ॥

अ०—सन्ध्यारुणव्योमस्फुरत्तारानुकारिणीः द्विषद्द्वेषोपरक्ताङ्गसङ्गिनीः स्वेद-विप्रुषः दधत ।

व्याक०—सन्ध्यायाम् अरुणे व्योम्नि स्फुरन्तीना ताराणाम् अनुकारिणी सन्ध्यारुणव्योमस्फुरत्तारानुकारिणी । स्फुरदिति स्फुरते शत्रन्तम्, कर्मधारय-कृत पुस्त्वम्, अनुकारिणी -अनुपूर्वात् करोतेर्णिनि, नान्तत्वाद् ङीप् । द्विषत द्वेषेण उपरक्ते अङ्गे सङ्गिनी द्विषद्द्वेषोपरक्ताङ्गसङ्गिनी । द्विषदिति "द्विषोऽमित्रे" इति द्विषेः शत्रन्तम् । द्वेषेति घञन्तम्, उपरक्तेति रञ्जे. क्त । सङ्गिनी -सजतेर्घञ्, तत सङ्गोऽस्या अस्तीति "अत इनिठनौ" स्त्रीत्वाद् ङीप्, उभे अपि स्वेदविप्रुषा विशेषणे, द्वितीयाबहुवचनान्ते । स्वेदस्य विप्रुष स्वेदविप्रुष, दधाते कर्माणि द्वितीया ।

व्याख्या —सध्यायाम्-सायकाले, अरुणे रक्तवर्णे, *व्योम्न-आकाशे, स्फुरन्तीनाम्-प्रकाशमानाना †ताराणाम्-नक्षत्राणाम्, अनुकारिणा सदृशा, द्विपन -शत्रो ,द्वेषेण क्रोधेन, उपरक्ते रक्तिमान प्राप्ते, अङ्गे-शरीरे, गलितो गलन्त्या ‡स्वेदविप्रुष स्वेदविन्दून्, दधन्-धारयन्, जगादेति पूर्ववच्छेप ।

भा०—भाषणकाले शत्रुक्रोधेन बलभद्रमुख ताम्रवर्णमभवत्, स्वेदविन्दवश्च तत्र प्रादुरभवन् । कोपोपरक्ते तन्मुखे ते स्वेदविन्दव तथा भान्ति स्म यथा सन्ध्याकालिके स्वभावतो रक्ते व्योम्नि तारा भान्ति ।

अल०—उपमा ।

**प्रोल्लसत्कुण्डलप्रोतपद्मरागदलत्विपा ।**
**कृष्णोत्तरासङ्गरुच विदधच्चौतपल्लवीम् ॥१६॥**

अ०—प्रोल्लसत्कुण्डलप्रोतपद्मरागदलत्विषा कृष्णोत्तरासङ्गरुच चौतपल्लवी विदधत् ।

व्याकृ०—प्रकर्षेण उल्लसताम् कुण्डलयो प्रोताना पद्मरागाणा दलानि, तेषा त्विषा प्रोल्लसत्कुण्डलप्रोतपद्मरागदलत्विषा । उल्लसदिति उत्पूर्वाल्लसतेः शत्रन्तम्, " तोर्लि " । प्रोतेति प्रपूर्वाद ' वेञ् तन्तुसताने ' धातो. कर्मणि क्त. । यजादित्वात् सम्प्रसारणम्, " आद्गुण. " । त्विषेति त्विषतेः क्विप् । उत्तरश्चासौ आसङ्ग उत्तरासङ्ग, कृष्णस्य उत्तरासङ्गस्य रुच कृष्णोत्तरासङ्गरुचम् । आसङ्गे आङ्पूर्वात् सजते कर्मणि घञ् । रुचमिति रोचतेः क्विप् । चूतपल्लवस्य इमा चौतपल्लवीम्, शैषिकोऽण् । आदिवृद्धि , अणन्तत्वाद् ङीप् ।

व्याख्या—प्रकर्षेण उल्लसताम्-दीप्यमानानाम्, कुण्डलयो कर्णभूषणयो., प्रोतानाम्-स्यूतानाम्, पद्मरागाणाम्-पद्मरागमणीनाम्, दलानि-शकलानि, तेषा त्विषा-कान्त्या, कृष्णस्य-नीलवर्णस्य, उत्तरासङ्गस्य-उत्तरीयवासस , रुचम्-कान्तिम्, चौतपल्लवीम्-नूतनाम्रपल्लवसम्बन्धिनीम्-ताम्रवर्णाम्, विदधत्-कुर्वन्, जगाद ।

भा०—बलभद्रेण कर्णयो पद्मरागमणिजटिते कुण्डले धृते आस्ताम्,

---

* व्योम पुष्करमम्बरम् इत्याकाशनामस्वमर. ।

† नक्षत्रमृक्ष भ तारा—इत्यमर ।

‡ पृषन्ति बिन्दुपृषता पुमासो विप्रुष स्त्रियाम्—इत्यमर ।

वपुषि च नीलवर्णमुत्तरीयमाच्छादितमासीत् । तत्र पद्मरागमणे रक्तया कान्त्या सङ्कीर्णा नीलवर्णोत्तरीयस्य कान्तिर्नूतनाम्रपल्लवकान्तिसदृशी धूम्रवर्णा जाता ।

अल०—अन्यरुचोऽन्यदायत्तायोगात् सादृश्याक्षेपान्निदर्शना-इति मल्लिनाथ ।

ककुद्मिकन्यावक्त्रान्तर्वासलब्धाधिवासया ।
मुखामोदं मदिरया कृतानुव्याधमुद्वमन् ॥२०॥

अ०—ककुद्मिकन्यावक्त्रान्तर्वासलब्धाधिवासया मदिरया कृतानुव्याधं मुखामोदम् उद्वमन् ।

व्याक०—ककुद्मिन कन्या,तस्या. वक्त्रस्य अन्त ,तत्र वास , तेन लब्ध. अधिवास यया तया ककुद्मिकन्यावक्त्रान्तर्वासलब्धाधिवासया । वासाधिवासौ-वसतेर्घञन्तौ । लभेर्निष्ठाया लब्धेति । कृत. अनुव्याधो यस्मिन् त कृतानुव्याधम् । अनुव्याधेति अनुपूर्वाद् 'व्यध् ताडने' धातोर्घञ् । अप् तु न "व्यधजपोरनुपसर्गे" इत्यविधायके अनुपसर्गे इति निषेधात् । आमोदेति आङ्पूर्वान्मोदतेर्घञन्तः 'आमुद्यतेऽनेन' । उद्वमन्निति वमते शतरि रूपम् । मदिरयेति तृतीया कृतेति क्तान्तस्य कर्तरि सहयोगे वा ।

व्याख्या—ककुद्मिकन्यायाः-रेवत्याः, वक्त्रस्य-मुखस्य, अन्त -अभ्यन्तरे, वासेन-स्थित्या, लब्ध -अधिगत , अधिवास -वासना-सौरभम्, यया तादृश्या रेवतीमुखसौरभेण वासितया, मदिरया-सुरया, कृत , अनुव्याध -संसर्ग , यत्र तथाभूतम्-( रेवतीधृतसुरागण्डूषस्वीकारेण तद्गन्धयुक्तम् ) मुखामोदम्-अतिनिर्हारिणं स्वमुखस्य गन्धविशेषम्, उद्वमन्-उद्गिरन्, जगाद ।

भा०—तदानीं बलभद्रमुखात् गन्धविशेषो निस्सरति स्म, यस्मिश्च रेवत्या मदिरागण्डूषगन्धोऽपि समृष्ट आसीत् । रतिकाले प्रियागण्डूषग्रहणस्य कामशास्त्रविहितत्वात् ।

अल०—स्वगुणत्यागेनान्यगुणग्रहणात्तद्गुण इति मल्लिनाथ ।

जगाद वदनच्छद्मपद्मपर्यन्तपातिन. ।
नयन् मधुलिह. श्वैत्यमुदग्रदशनांशुभि. ॥२१॥

अ०—वदनच्छद्मपद्मपर्यन्तपातिनः मधुलिहः उदग्रदशनांशुभिः श्वैत्य नयन् जगाद ।

व्याक०—वदनमेव च्छद्म यस्य तस्य पद्मस्य (अथवा वदनच्छद्मना पद्मस्य) पर्यन्ते पतन्ति इति वदनच्छद्मपद्मपर्यन्तपातिनः, पतन्ते णिनि । मधुलिहा विशेषणम्, मधुनो लिह् मधुलिह्, लिह् धातो क्विप्। नयते प्रधान कर्म । उदग्रै दशनानाम अंशुभि उदग्रदशनांशुभि । श्वेतस्य भाव श्वैत्यम्, भावे ष्यञ् । नयतेरप्रधान कर्म । नयन् शत्रन्त नयतिरिति ।

व्याख्या—वदनम्-मुखमेव च्छद्म-कपटम्, यस्य तादृशस्य पद्मस्य (अथवा वदनच्छद्मना-मुखव्याजेन यत् पद्म तस्य) पर्यन्ते-प्रान्ते (मधुलि-पासया) पतन्ति-सञ्चरन्तीति तथाभूतान्, मधुलिह्-मधुव्रतान्, उदग्रै-उच्छ्रितैः, दशनानाम्-दन्तानाम्, अंशुभिः-किरणैः, श्वैत्यम्-श्वेतवर्णतान्, नयन्-प्रापयन्, जगाद-उवाच ।

भा०—कथनसमये बलभद्रमुखात् सौरभ निस्सरति स्म । तदाकृष्टा भ्रमरा मधुपानेच्छया कमलसदृश तन्मुख परितः सञ्चेरुः । किन्तु प्रकृत्या श्यामा अपि ते भ्रमरास्तदानीमतिश्वेतैर्बहिर्निःसरद्भिर्बलभद्रस्य दन्तांशुभि धावल्यमाप्नुवन् ।

अल०—छद्मशब्देन वदनत्वापह्नवात् कैतवापह्नुति, भ्रमराणा स्वगुणत्यागेन दन्तगुणग्रहणात् तद्गुण, मधुलिह् इति विशेष्य मधुव्रताना वदनपर्यन्तपतने साभिप्रायमिति परिकराङ्कुर । छद्मपद्मेत्याद्यनुप्रास । चतुर्दशमारभ्यैकविंशपर्यन्तमष्टानामेक एवान्वय इति कुलकमिदम् ।

**यद्वासुदेवेनादीनमनादीनवमीरितम् ।**
**वचसस्तस्य सपदि क्रिया केवलमुत्तरम् ॥२२॥**

अ०—वासुदेवेन अदीनम् अनादीनवम् यद् ईरित तस्य वचस सपदि क्रिया केवलम् उत्तरम् ( अस्ति ) ।

व्याक०—नदीनमदीनम्, 'दीङ् क्षये' निष्ठा, "ओदितश्च" इति नत्वम् । न आदीनवो यस्मिंस्तद् अनादीनवम् । "तस्मान्नुडचि" इति नुडागम । वासुदेवेन-वसुदेवस्यापत्यमिति "तस्यापत्यम्" इत्यण् । ईरणकर्तरि तृतीया । केवलशब्द एवार्थ । वचस इति उत्तरसम्बन्धे षष्ठी ।

व्याख्या—वासुदेवेन-श्रीकृष्णेन, अदीनम्-( अर्थभिषेणनपक्षपातित्वाद् ) अकातरम्-ओजस्वि, *अनादीनवम्-दोषरहितम् यद्-वच , ईरितम्-उक्तम्, तस्य वचस , सपदि क्रिया केवलम-झटित्यनुष्ठानमेव-कार्यरूपेण परिणमनमेव, उत्तरम्-प्रतिवचनम्, अस्ति-इति शेष ।

भा०—शिशुपालाभिषेणनविषये 'उत्तिष्ठमानस्तु पर ' इत्यादिना कृष्णेन यदुक्त तदोजस्वि निर्दोष चास्ति, अतो विचारान्तर नापेक्षते, तदेव सिद्धान्तत्वेनाभ्युपगम्य तदनुकूलमेव झटिति कार्यमारब्धव्यम् ।

अल०—अदीनानादीनवत्वयो सद्योनुष्ठाने हेतुत्वात् काव्यलिङ्गम् । क्रियैवोत्तर न तु तत्प्रतिकूल प्रतिवचनान्तरमपीति परिसंख्यापि ।

**नैतल्लघ्वपि भूयस्या वचो वाचातिशय्यते ।**
**इन्धनौघधगप्यग्निस्त्विषा नात्येति पूषणम् ॥२३॥**

अ०—लघु अपि एतद् वच. भूयस्या वाचा न अतिशय्यते इन्धनौघधग् अपि अग्निः त्विषा पूषण न अत्येति ।

व्याक०—इन्धनानाम् ओघं दहतीति इन्धनौघधक्, दहतेः कर्तरि क्विप्, इन्धनेति इन्धेर्ल्युडन्तम् । भूयस्येति बहुशब्दादीयसुन्, "बहोर्लोपो भू च बहो." इतीकारलोप , बहोश्च भूरादेश । उगित्त्वाद् ङीप् । अतिशय्यते-अतिपूर्वात् शीङ्धातोः कर्मणि लट् । "अयङ्यिङ्कितिʼ इत्ययङादेशः । वाचेति तत्कर्तरि तृतीया, वच इति कर्मणि प्रथमा । पूषणम्-कर्मणि द्वितीयान्तम्, "इन्हन्पूषार्यम्णा शौ" इति नियमाद् दीर्घाभाव. । अत्येति-अतिपूर्वाद् एतेर्लट् । त्विषेति करणतृतीयान्तम् ।

व्याख्या—लघु-अल्पाक्षरमपि, ( सारगर्भितम् ) एतत्-कृष्णोक्तम्, वच - वाक्यम्, भूयस्या-अतिविस्तृतयापि, वाचा-वाक्येन, न अतिशय्यते-नातिक्रम्यते, इन्धनौघधगपि-काष्ठसमूहदाहकोऽपि, भूयानपीतियावत् , अग्नि , त्विषा-प्रभया, पूषणम्-सूर्यम्, न अत्येति-न अतिक्रामति ।

भा०—यद्यपि कृष्णवाक्यमतिसङ्क्षिप्तम्, तथापि ( अर्थगौरववत्त्वात् ) अपुष्टार्थे. शब्दैरतिविस्तृतापि वाणी नैतदपेक्षया अधिका भवितुमर्हति ।

* दोष आदीनवो मत —इत्यमर ।

यथा महान्त काष्ठराशि दहन्नतिभूयानपि वन्हि स्वप्रभया सयमतिशयितु न क्षम, सूर्यस्यातितेजस्वित्वात्, तद्वद् ।

अल०—वाक्यद्वये अतिशयनरूपसमानधर्मस्य भिन्नशब्दाभ्या प्रतिपादनात प्रतिवस्तूपमा । मल्लिनाथस्तु दृष्टान्तमाह । युक्तायुक्तत्व सुधीभिर्विचार्यम ।

**संक्षिप्तस्याप्यतोऽस्यैव वाक्यस्यार्थगरीयसः ।**
**सुविस्तरतरा वाचो भाष्यभूता भवन्तु मे ॥२४॥**

अ०—अत. सुविस्तरतरा मे वाचः संक्षिप्तस्य अपि अर्थगरीयसः अस्य एव वाक्यस्य भाष्यभूता भवन्तु ।

व्याक०—सुष्ठु विस्तरो यासा ता सुविस्तरा., अतिशयेन सुविस्तरा सुविस्तरतराः, "प्रथने वावशब्दे" इत्यत्र अशब्द इति प्रतिषेधाद् घञोऽभावे विपूर्वात् स्तृणाते ऋदोरप्' । ततस्तरप् । अर्थेन गरीयस अर्थगरीयस, गुरुशब्दादीयसुनि गरीयसः । "प्रियस्थिर ··" इत्यनेन गुरोर्गरादेश । भाष्यमिवेति भाष्यभूता, निभादिशब्दवन्नित्यसमास । भवन्तु-भवतेः अर्हार्थे लोट् ।

व्याख्या—अत -कृष्णवचसोऽनतिशयनीयत्वादेव, सुविस्तरतरा·-अतिविस्तीर्णा, मे-मम, वाच, संक्षिप्तस्यापि-अल्पाक्षरस्यापि, अर्थगरीयस सूत्रवद् गुर्वर्थस्य, अस्यैव-कृष्णोक्तस्यैव, वाक्यस्य, †भाष्यभूता -व्याख्यानरूपा., भवन्तु-भवितुमर्हन्तीत्यर्थ. ।

भा०—ननु यथैव कृष्णवचन सर्वातिशायि तर्हि तदग्रे त्वद्वचनोद्योगोऽपि व्यर्थ एवेत्यत आह कृष्णवाक्य मिताक्षरत्वाद् अर्थगौरवाच्च सूत्रकल्पमस्ति, अतस्तत् सविस्तर व्याख्यानमपेक्षते । यथा व्याख्याया मूलोक्त एवार्थो झटिति बुद्ध्युपारोहाय विशद प्रपञ्चयते युक्त्यन्तरै समर्थ्यते च, तथैव मद्वचसापि कृष्णोक्त एवार्थो विस्तृत्य विवरिष्यते, समर्थयिष्यते च । न तु

* अल्पाक्षरमसंदिग्ध सारवद् विश्वतोमुखम्, अस्तोभमनवद्य च सूत्र सूत्रविदो विदु ।

† सूत्रस्थ पदमादाय वाक्यै. सूत्रानुसारिभि स्वपदानि च वर्ण्यन्ते भाष्य भाष्यविदो विदु ।

तद्विरुद्धमक्षरमपि वक्ष्यते, अत कृष्णवचसो व्याख्यानरूपा एव मद्वाचो भवेयु. ।

अल०—भाष्यभूता इत्युपमेति मल्लिनाथ । सन्निमस्यार्थगरीयस -इति वाक्यविशेषणाभ्या बलभद्रोक्तौ हेतूपन्यासात् काव्यलिङ्गम्, परिकरो वा ।

**विरोधिवचसो मूकान् वागीशानपि कुर्वते ।**
**जडानप्यनुलोमार्थान् प्रवाच कृतिना गिर ॥२५॥**

अ०—कृतिना गिरः विरोधिवचस वागीशान् अपि मूकान् कुर्वन अनुलोमार्थान् जडान् अपि प्रवाच ( कुर्वते )।

व्याक०—विरोधि वचो येषा तान् विरोधिवचस , विरोधीति विपूर्वाद् 'रुधिर्' धातोर्णिन्यन्त । वाचाम् ईशान् वागीशान् । अनुलोम अर्थो येषा तान् अनुलोमार्थान् । अनुलोमेत्यत्र लोमानि अनुगत इति प्रादिसमास । "अच् प्रत्यन्ववपूर्वात् सामलोम्न" इत्यच् समासान्त । प्रकृष्टा वाग् येषा तान् प्रवाच , जडाना विधेयविशेषणम्, एव मूकानिति वागीशानाम् । कृतिनाम्-कृतमेभिरिति कृतशब्दाद् इष्टादिभ्यश्च" इति कर्तरि 'इनि' ।

व्याख्या—कृतिनाम्-कुशलानाम्, गिर -वाच., विरोधि प्रतिकूलम्, वच -वाक्य येषा तथाभूतान्, वागीशान् वाक्पतीन्-वाग्मिनोऽपि, मूकान्-रुद्धवाच -डान्, कुर्वते-विदधते। अनुलोम -स्वानुकूल , अर्थ -अभिधेय , येषा तादृशान् , अनुकूलवादिन , जडानपि-मूढानपि, प्रवाच -प्रगल्भान्, कुर्वते ।

भा०—चेदियात्राविषये उद्धवविरोध मनसि निधाय बलभद्र आह-ये पुरुषा भाषणेऽतिपाटव दधते तेऽपि यदि विद्वद्वचनप्रतिकूल किमपि वदेयुस्तर्हि लोकैर्जडा उच्यन्ते । अथ जडा अपि यदि विद्वद्वचनपक्ष एव भाषन्ते तर्हि लोके 'प्रवक्तार इमे' 'व्याख्याननिपुणा इमे' इत्येव प्रसिद्धिं प्राप्नुवन्ति। अत कृष्णवचनविरोधे न किमपि वक्तव्यम्। स हि विद्वान्, विचक्षणस्य तस्य विरोधो न सुकर , प्रत्युत जडत्वख्यापक , अतस्तदनुकूलमेव भाषित्वा वाग्मित्व किं न लभ्यताम् ? अनुकूलभाषण हि सुगमम् ।

अल०—विरोधे कृष्णवचसि प्रस्तुते सामान्याभिधानाद् अप्रस्तुतप्रशसा । वागीशाना मूकीकरणाज्जडाना प्रवाक्त्वकरणाच्च (अ) शक्यवस्तुकरणरूपो

विशेषालङ्कार स च अमम्बन्धे मम्बन्धातिशयोक्तिप्रतिभोत्थापित इति तत्त्व इति मल्लिनाथ ।

षड् गुणा शक्तयस्तिस्र सिद्धयश्चोदयास्त्रय ।
ग्रन्थानधीत्य व्याकर्तुमिति दुर्मेधसोऽप्यलम् ॥ ७६ ॥

अ०—दुर्मेधम अपि ग्रन्थान् अधीत्य गुणा षट्, शक्तय तिस्र, च सिद्धय (तिस्र) उदया त्रय, (भवन्ति) इति व्याकर्तुम् अलम् ।

व्याक०—दुष्टा मेधा येषा ते दुर्मेधस., "नित्यमसिच् प्रजामेधयो" इत्यनेनासिच् प्रत्यय । अधीत्य-अधिपूर्वाद् इट् धातोर्ल्यप् । शक्तय.-शक्नोते करणे क्तिन् । सिध्यन्तु इति सिद्धय.-सिध्यते क्तिच्, उदया -उत्पूर्वादेतेरच् । व्याकर्तुम् अलम्-व्याङ्पूर्वात् करोते "पर्याप्तिवचनेष्वलमर्थेषु" इति तुमुन ।

व्याख्या—दुर्मेधम -मन्दबुद्धयोऽपि, ग्रन्थान्-चाणक्यादिनिर्मितान् नीतिग्रन्थान्, अधीत्य-पठित्वा, गुणा.-सन्धिविग्रहादय , षट्-षट्सख्याका , भवन्ति, शक्तय -प्रभुमन्त्रोत्साहाख्या , तिस्र -भवन्ति, च पुनः, सिद्धय पूर्वोक्तशक्तित्रितयसाध्या.-पुरुषार्थलाभात्मिका प्रभुत्वमन्त्रोत्साहसिद्धय., तिस्र , भवन्ति, उदया -वृद्धिक्षयावस्थानानि, त्रय -भवन्ति, इत्येव व्याकर्तुम्-व्याख्यातुम्, अलम्, समर्था सन्तीति शेष. ।

मा०—ननु हितमिच्छता राज्ञा दुराग्रह परित्यज्य स्वप्रतिकूलमपि नीतिशास्त्रविदो वचन ग्राह्यमेवेत्यत आह-मन्दबुद्धयोऽपि नीतिग्रन्थान् पठित्वा गुणशक्त्यादीना नामानि तत् सख्या वा प्रतिपादयितुमीशते, पर न ते तावता नीतिशास्त्रपण्डिता ग्राह्यवचना वा भवितुमर्हन्ति । सन्धिविग्रहादीना यथार्थोपयोगे पटुरेव नीतिशास्त्रपण्डितेतिव्यपदेशमर्हति, तदुपदेश एव च ग्राह्यः । सध्यादिसख्यामात्रपाठका उद्धवादयस्त्वशास्त्रज्ञत्वादुपेक्ष्यवचना एवेति बलभद्रस्य हृदयम् । प्रसङ्गवशात् सक्षिप्य गुणादीना स्वरूप लिख्यते—

सधिर्ना विग्रहो यानमासन द्वैधमाश्रय ।
षड् गुणा शक्तयस्तिस्र प्रभावोत्साहमन्त्रजा ॥
क्षय स्थान च वृद्धिश्च त्रिवर्गो नीतिवेदिनाम् ।

तत्र अरिविजिगीष्वोर्व्यवस्थाकरणमैक्य सधि., विरोधो विग्रह , अरि प्रति यात्रा यानम्, कालप्रतीक्षया तूष्णीमवस्थानम् आसनम, बलिक्रमात्मसमर्पण

द्रवीभाव , अरिणा पीड्यमानस्य बलवदाश्रयण मश्रय । कोशदण्डो‌ऽस्य तेज प्रभाव:, स्थेयान प्रयत्न उत्साह, षड्गुणचिन्तनमन्त्र । शक्तिसिद्ध्यो-रुपचयापचयौ वृद्धिक्षयौ, वृद्धिक्षययोरभाव स्थानम ।

अनिर्लोडितकार्यस्य वाग्जाल वाग्मिनो वृथा ।
निमित्तादपराद्धेषोर्धानुष्कस्येव वल्गितम् ॥२७॥

अ०—अनिर्लोडितकार्यस्य वाग्मिन वाग्जाल निमित्ताद् अपराद्धेषो: धानुष्कस्य वल्गितमिव वृथा ( अस्ति ) ।

व्याकृ०—न निर्लोडित कार्यं येन तस्य अनिर्लोडितकार्यस्य । निर्लोडित-मिति लोडयते क्तान्तम् । अपराद्ध इषुर्यस्य तस्य अपराद्धेषो । अपराद्धेति राध्यतेर्दैवादिकात् कर्तरि क्तान्तम् । वाग्मिन.-प्रशस्ता वाच सन्त्यस्येति "वाचो ग्मिनि" धानुष्कस्य-धनु प्रहरणमस्येति धनु शब्दात् "प्रहरणम्" इति ठक् "तस्य इसुसुक्तान्तात् क." इति क । वल्गितमिति वल्गते. क्तान्तम् ।

व्याख्या—अनिर्लोडितम्-कर्तव्याकर्तव्यत्वेन सम्यग् अविवेचितम्, कार्यम्-विधेयम, येन तादृशस्य, वाग्मिनः-व्याख्यानमात्रप्रदातु -वावदूकस्य, वाग्जा-लम्-वागाडम्बर, *निमित्ताद्-लक्ष्यात्, अपराद्ध -च्युत, इषु.-वाण, यस्य तादृशस्य, †धानुष्कस्य-धन्विन, वल्गितमिव-विकत्थितमिव, वृथा-निष्फलम् । अस्तीति शेष ।

भा०—यो धानुष्क केवलम् आत्मनो लक्ष्यवेधचातुर्यं विकत्थते, लक्ष्य-वेधावसरे च यस्य सायको लक्ष्याच्च्यवते, यथा तस्य विकत्थन निस्सार तथैव यो व्याख्यानमात्रपण्डित. कार्याकार्यविवेकसामर्थ्यं यस्य मात्रयापि न विद्यते, कार्यकाले च पश्चात्पदो भवति, वाङ्मात्रशूरस्य तस्य वागाडम्बरोऽपि निस्सार । तथा च शास्त्रज्ञातुरपि कार्यज्ञस्य वचो ग्राह्य न पुनर्वृथा वावदूकस्य ।

अल०—उपमा ।

सर्वकार्यशरीरेषु मुक्त्वाङ्गस्कन्धपञ्चकम् ।

---

* वेध्य लक्ष्य निमित्त च शरव्य च सम विदु इति वैजयन्ती ।

† अपराद्धपृषत्कोऽसौ लक्ष्याद् यश्च्युतसायक, धन्वी-धनुष्मान् धानुष्क.—इत्यमर ।

सौगतानामिवात्मान्यो नास्ति मन्त्रो महीभृताम् ॥२=॥

अ०—सर्वकार्यशरीरेषु अङ्गस्कन्धपञ्चकम मुक्त्वा सौगतानाम्। अन्य आत्मेव महीभृताम् ( अन्य ) मन्त्र· नास्ति।

व्याक०—सर्वेषु कार्येषु शरीरेष्विव सर्वकार्यशरीरेषु, सर्वकार्ययो " पूर्व कालैक " इत्यनेन समास उत्तरत्र " उपमित व्याघ्रादिभि: " इत्यनेन। अङ्गाना स्कन्धानामिव ( उपमित० ) पञ्चकम् अङ्गस्कन्धपञ्चकम्। पञ्चकमिति पञ्चशब्दात् कन्। मुक्त्वेति मुचे क्त्वान्तम्। सुगतो भक्ति: ( भजनीय ) येषा तेषा सौगतानाम्, " भक्ति " इत्यनेन सुगतशब्दादण्। महीभृतान-व्याख्यातम्।

व्याख्या—सर्वकार्यशरीरेषु-सर्वेषु शरीरेष्विव सर्वेषु कार्येषु-सन्धिविग्रहा-दिषु अङ्गस्कन्धपञ्चकम्--स्कन्धानाम्-रूपविज्ञानवेदनासंज्ञासंस्काराणा बौद्ध-शास्त्रप्रसिद्धाना पञ्चकमिव, अङ्गानाम्-नीतिशास्त्रोक्ताना सहायसाधनोपायादीनाम्, पञ्चकम्, मुक्त्वा-त्यक्त्वा, सौगतानाम्-सुगतमेविना बौद्धानाम्, अन्य -रूप विज्ञानादिपञ्चस्कन्धातिरिक्त, आत्मेव-आत्मपदाभिधेय इव, महीभृताम्-राज्ञाम्, अन्य -सहायसाधनोपायादिपञ्चाङ्गातिरिक्त, मन्त्र -विचार -विचारविषय इति यावत्, नास्ति-न विद्यते।

भा०—रूपविज्ञानवेदनासंज्ञासंस्कारा. पञ्चस्कन्धा इति बौद्धा, भूतव्यति-रिक्तानि अमूर्तानि तत्त्वानि स्कन्धशब्देनोच्यन्ते, तत्र सविषयाणीन्द्रियाणि रूपस्कन्ध, आलयविज्ञानप्रवृत्तिविज्ञानप्रवाहो विज्ञानस्कन्ध, प्रागुक्तस्कन्ध-द्वयसम्बन्धजन्य सुखदु खादिप्रत्ययप्रवाहो वेदनास्कन्ध, गौरित्यादि-शब्दोल्लेखिसविन्प्रवाह संज्ञास्कन्ध, वेदनास्कन्धनिबन्धना रागाद्वेषादय: क्लेशा उपक्लेशाश्च मदमानादयो धर्माधर्मौ च संस्कारस्कन्ध। यथा बौद्धाना मते भौतिकेषु शरीरेषु प्रागुक्तस्कन्धपञ्चकव्यतिरेकेण ज्ञानसुखाद्याश्रयीभूत क-श्चिदात्मपदार्थो नास्ति, किन्तु तत्सन्तान एवात्मपदेनोच्यते, तथैव राज्ञामपि सन्धिविग्रहादिषु कर्तव्येषु सहायादिपञ्चाङ्गविनिर्णय एव मन्त्र·, नान्यत् किमपि। अय सहायादिसम्पन्ना सो नवेत्येव मन्त्रणा राजभि: कर्तव्या। यदि सहायादयो

* स्कन्ध प्रकाण्डे कायेंऽसे विज्ञानादिषु पञ्चसु—इति हैम।

विद्यन्ते नहि शत्रुर्यातव्यो भवति, इतरथा सन्ध्यादिषु यथावसरं किमप्येकतम स्वीकर्तव्यमापतति । तथा च वयमिदानीं सहायादिसम्पन्ना स्म, अतोऽत्र शिशुपालाभिषेणनमस्य समुचित कालः । सहायादिपञ्चाङ्गानि मध्ये(त्य) पञ्चमसर्गे द्वादशपद्ये उक्तानि ।

अल०—उपमा ।

मन्त्रो योध इवाधीरः सर्वाङ्गैः संवृतैरपि ।
चिरं न सहते स्थातुं परेभ्यो भेदशङ्कया ॥ २६ ॥

अ०—संवृतैः सर्वाङ्गैः (उपलक्षितः) अपि मन्त्रः अधीरः योध इव परेभ्यः भेदशङ्कया चिरं स्थातुं न सहते ।

व्याक०—सर्वे अङ्गैः सर्वाङ्गैः, उपलक्षणे तृतीया । संवृतैः सम्पूर्वात् वृणोतेः क्तः, युध्यत इति योधः, युध्यते पचाद्यच् । भेदशङ्कया-भेदेति भिदेः घञन्तम्, शङ्केति शकिधातोः "गुरोश्च हलः" इत्यप्रत्ययान्तम् । स्थातुम्-सहता-वुपपदे तिष्ठतेस्तुमुन् । परेभ्यः -"भीत्रार्थानां भयहेतुः" इत्यपादानत्वात् पञ्चमी । सहते-सहेर्लट् ।

व्याख्या—संवृतैः -गुप्तैः (एकत्राप्रकाशितैरपरत्र रक्षितैः) सर्वैः अङ्गैः -सहायादिभिः, (योधपक्षे उरःस्थलादिभिः) उपलक्षितः अपि, मन्त्रः -विचारः, अधीरः-भीरुः, योधइव-भटइव, *परेभ्यः-अन्येभ्यः (योधपक्षे शत्रुभ्यः) भेदस्य-तृतीयगामित्वस्य-प्राकट्यस्य (योधपक्षे विदारणस्य) शङ्कया-भीत्या, चिरं स्थातुम्-बहुकालपर्यन्तम् अक्रियात्मकतयाऽवस्थानाय, (पक्षे सङ्ग्रामे बहुकालपर्यन्तमवस्थातुम्) न सहते-न क्षमते ।

भा०—मन्त्रितार्थक्रियायां विलम्बो न कर्तव्यः, मन्त्रो हि भीरुयोद्धेव भवति, यथा स कवचादिधारणेन स्वाङ्गेषु रक्षितेष्वपि कदाचिच्छत्रुर्ममाङ्गानि छिन्द्यादितिभिया सङ्ग्रामे स्थिरो न भवति, अपि तु ततः पलायते, तथैव मन्त्रोऽपि उपायादिषु गोपितेष्वपि कदाचिच्छत्रवो जानीयुरिति भीत्या चिरमक्रियात्मकः स्थातुं नार्हति, मन्त्रणानन्तरमेव कार्यमारब्धव्यम्, विलम्बे तु कार्यारम्भात् प्रागेव मन्त्रप्रकाशे शत्रुभिः सावधानं तद्विरुद्धोपायानुष्ठानेन राज्ञा

* परेऽरिपरमौ मतौ इति वैजयन्ती ॥

महती हानि संभाव्यते ।

अलं०—चिरावस्थानहेतौ सर्वाङ्गमन्तरगाम्यत्वेऽपि चिरावस्थानाभाव-वर्णनात् विशेषोक्ति । श्लेषानुप्राणितोपमा च ।

**आत्मोदय परज्यानिर्द्वय नीतिरितीयती ।**
**तदूरीकृत्य कृतिभिर्वाचस्पत्य प्रतायते ॥ ३० ॥**

अ०—आत्मोदय परज्यानिः इति द्वयम् इयती नीति, तद् ऊरीकृत्य कृतिभि वाचस्पत्य प्रतायते ।

व्याक०—आत्मन उदय आत्मोदय, परस्य ज्यानि परज्यानिः, 'ज्या वयोहानौ' "वीज्याहाज्वारिभ्यो नि" इत्यौणादिको नि । द्वय व्याख्यातम् । इयती-इद परिमाणमस्येति इदशब्दात् परिमाणे वतुप्, "किमिदभ्या वो घ" इति वस्य घादेश, घस्येयादेश, उगित्वात् ङीप् । नीति -नयते क्तिन । ऊरीकृत्य-"ऊर्यादिच्विडाचश्च" इत्यनेन गतिसज्ञा "कुगतिप्रादयः" इति समासः, 'समासेनञ्पूर्वे क्त्वो ल्यप्'। कृतिभि व्याख्यातम्। कर्तरि तृतीया। वाचस्पतेर्भावः वाचस्पत्यम्, ब्राह्मणादित्वाद् भवे ष्यञ् । वाचस्पतिशब्दे षष्ठ्या अलुक् सत्व च कस्कादित्वाद् इति मल्लिनाथ । हरदत्तदीक्षितादयस्तु "तत्पुरुषे कृति बहुलम्" इति बाहुलकात् षष्ठ्या अलुकमाहु । प्रतननक्रियाया उक्ते कर्मणि प्रथमा । प्रतायते-तनोते कर्मणि लट् । "तनोतेर्यकि" इत्यनेनात्वम् ।

व्याख्या—आत्मोदय -स्वसमृद्धि., परस्य-शत्रोः, ज्यानि हानि, इति, द्वयम्, इयती-एतावती, नीति.-नीतिशास्त्रस्य सार इति यावत्, अस्ति । तत्-स्वाभ्युदय शत्रुक्षय च, ऊरीकृत्य-उद्दिश्य, कृतिभि -नीतिशास्त्रज्ञै, वाचस्पत्यम्-षाड्गुण्यादिवर्णनपर विविध व्याख्यानम्, प्रतायते-विस्तार्यते ।

भा०—इदमेव नीतेस्तत्त्व यत् स्वस्याभ्युदयाय चेष्टनीयम्, तदन्तराय-भूतस्य शत्रोश्च हानि कर्तव्येति । एतदेव द्वयमवलम्ब्य नीतिविद सन्धि-विग्रहादीन् विविध व्याचक्षते । तथा-चाभ्युदयार्थिभिरस्माभि स्वशत्रुः शिशु-पालस्त्वरितमुच्छेत्तव्यः ।

अलं०—विशेषे प्रस्तुते सामान्याभिधानादप्रस्तुतप्रशसा ।

**तृप्तियोग परेणापि महिम्ना न महात्मनाम् ।**

**पूर्णश्चन्द्रोदयाकाङ्क्षी दृष्टान्तोऽत्र महार्णवः ॥३१॥**

अ०—महात्मना परेण अपि महिम्ना तृप्तियोग न ( अस्ति ) अत्र पूर्णः ( अपि ) चन्द्रोदयाकाङ्क्षी महार्णव दृष्टान्त ( अस्ति )

व्याक०—महान् आत्मा येषा तेषा महात्मनाम् तृप्तियोगसम्बन्धे षष्ठी । चन्द्रस्य उदयः, तस्य आकाङ्क्षी चन्द्रोदयाकाङ्क्षी. आकाङ्क्षीति आङ्पूर्वात् काङ्क्षि धातो णिनि' । महान् अर्णव. महार्णव, अर्णवे "अर्णसो लोपश्च" इति मत्वर्थीयवप्रत्ययसलोपौ । दृष्ट अन्तो यस्य स दृष्टान्त । महिम्ना-महच्छब्दात् इमनिच्, हेतौ तृतीया । पूर्ण.-"वादान्तशान्तपूर्ण " इत्यनेन पूरयते क्तान्त निपात्यते ।

व्याख्या—महात्मनाम्-महामनसाम्-महाशयाना पुरुषाणा, परेण-प्रभूतेनापि, महिम्ना-महत्त्वेन-ऐश्वर्येण, तृप्तियोग -सन्तोषलाभ , नास्ति । अत्र-महैश्वर्येणापि तृप्तेरयोगे पूर्ण -अद्भि परिपूर्णोऽपि, ( वृद्ध्यर्थम् ) चन्द्रोदयाकाङ्क्षी-विधूदयापेक्षा, महार्णवः-महासमुद्र , दृष्टान्तः-उदाहरणम् (अस्ति) ।

भा०—ननु प्राप्ताभ्युदयानामस्माक व्यर्थ एव शत्रूच्छेदप्रयत्न इत्यत आह-प्राप्तमहैश्वर्या अपि महात्मानः ऐश्वर्ये अलबुद्धि न कुर्वते, एतावदेवैश्वर्यमस्माभिरभिलषित नान्यदपेक्ष्यत इत्येव न तुष्यन्ति 'असन्तुष्टा द्विजा नष्टा सन्तुष्टाश्च महीभृत ' इति राज्ञा सतोषोदयस्य निन्द्यत्वोक्ते । किन्तु यथा परिपूर्णोऽपि महार्णव स्ववृद्धये चन्द्रोदयमपेक्षत एव, तथैव तेऽपि स्वाभ्युदयाय यतन्त एव । चन्द्रोदये समुद्रवृद्धिरिति निसर्ग ।

अल०—उपमालङ्कार , दृष्टान्तस्तु न, बिम्बप्रतिबिम्बभावेनौपम्यस्य गम्यत्व एव तद्भावात्, अत्र तु दृष्टान्तशब्देन तदभिहितम् इति मल्लिनाथ ।

**सम्पदा सुस्थिरम्मन्यो भवति स्वल्पयापि य ।**
**कृतकृत्यो विधिर्मन्ये न वर्धयति तस्य ताम् ॥३२॥**

अ०—य स्वल्पया अपि सम्पदा सुस्थिरम्मन्य भवति, कृतकृत्य. विधि. तस्य ताम् न वर्धयति इति मन्ये ।

व्याक०—कृत कृत्य येन स कृतकृत्य , कृत्यशब्द "विभाषा कृवृषो " इति करोते क्यबन्त आत्मानं सुस्थिर मन्यते इति सुस्थिरम्मन्य आत्म-

माने खश्च" इत्यनेन मन्यते खश् प्रत्ययः मुम् च। वर्धयति णिजन्ताद् वर्धतेर्लट् । सम्पदा-हेतौ तृतीया ।

व्याख्या – यः-पुरुष स्वल्पयापि-स्तोकयापि, सम्पदा समृद्धया, सुस्थि-रम्मन्य भवति-आत्मानं सुस्थिरं मन्यते-पर्याप्त मनोभिमानी तस्य-अल्पसम्पत्त्यैव मतुष्टस्य पुरुषस्य, नाम-अल्पायत्या सम्पदम्, न वर्धयति, इति मन्ये ।

भा०—प्रत्युत सतोऽपि उन्नते प्रतिबन्धक य पुरुष स्वल्पयापि सम्पत्त्या प्रसीदति, आत्मान सुदशापन्न मनुते तस्य सा स्वल्पा सम्पत् वृद्धि न प्राप्नोति, दैव हि सपदा वर्धकम्, तद्धि स्वल्पसपदापि सतुष्ट तदुद्दये पौरुषमकुर्वाण नर निरीक्ष्य आत्मान कृतकृत्य मन्यते, अयमेतावतैव सतुष्यति किमस्य मुधा सपद्वर्धनेन, यद्ययं सम्पदभिवृद्धिमभ्यल्लपिष्यत्, तर्हि तदर्थमुदयोद्यत, पर नोद्युङ्क्ते इतिनास्य सपद वर्धयति । दैवमप्युद्योगिन एव सहायकम्, अनुद्योगिनस्तु तदपि जुगुप्सत इति तत्त्वम् ।

अल०—उत्प्रेक्षालङ्कारः ।

**समूलघातमघ्नन्त पराह्नोद्यन्ति मानिन ।**
**प्रध्वसितान्धतमसस्तत्रोदाहरण रवि ॥३३॥**

अ०—मानिन परान् समूलघातम् अघ्नन्त नोद्यन्ति तत्र प्रध्वसितान्धतमस, रवि उदाहरणम् ।

व्याक०—अन्ध तम अन्धतमसम्, "अवसमन्धेभ्यस्तमस" इत्यच् समासान्त । प्रध्वसितम् अन्धतमस येन स प्रध्वसितान्धतमस, ध्वसितेति णिजन्ताद् ध्वसते क्तान्तम् । समूल हत्वेति समूलघातम्, "समूलाकृतजीवेषु हनकृञ्ग्रह " इति समूलोपपदाद् हन्तेर्णमुल्, 'अमैवाव्ययेन" इति उपपद-समास । 'कषादिषु यथाविध्यनुप्रयोग " इति नियमाद् अघ्नन्त इति हन्तेरनुप्रयोग शत्रन्त रूपम्, ततो नञ्समास । उद्यन्ति-उत्पूर्वादेतेर्लट्, उदाहरणम्-उदाह्रियतेऽनेनेति 'उत्' 'आङ्' एतत्पूर्वाद् हरते करणे ल्युट् ।

व्याख्या—मानिन -अभिमानवन्त, परान्-शत्रून्, समूलघातम् अघ्नन्त -

समूलमविनाश्य, नोद्यन्ति-नोन्नमन्ति । किन्तु विनाश्यैवोद्यन्ति । तत्र-शत्रून्मूलनमन्तरेणानुदये, प्रश्मितम-निःशेषतो नाशितम्, अन्धनमसम-गाढान्धकारो येन, तथाभूतो रविः-सूर्यः, उदाहरणम-दृष्टान्तः, अस्ति ।

भा०—शत्रून् निर्मूल्यैव मानिनोऽभ्युदयं प्राप्नुवन्ति, शत्रवो हि तदुन्नतिपथे कण्टकायिताः, तेषां साकल्येनापाकरणमत्यावश्यकम्, अन्यथा तेऽन्तरायमुत्पादयेयुः । सवितापि यदोदयते तदा स्वप्रसररोधकमन्धतमसं विनाश्यैव, नान्यथा, अतोऽस्माभिरपि स्वशत्रुः शिशुपालो हन्तव्य एव ।

अल०—अप्रस्तुतप्रशंसा । उत्तरार्धे उदाहरणशब्दोपादानादुपमा, न दृष्टान्त इति मल्लिनाथः ।

**विपक्षमखिलीकृत्य प्रतिष्ठा खलु दुर्लभा ।**
**अनीत्वा पङ्कतां धूलिमुदकं नावतिष्ठते ॥३४॥**

अ०—विपक्षम् अखिलीकृत्य प्रतिष्ठा दुर्लभा खलु, उदकम् धूलिम् पङ्कताम् अनीत्वा न अवतिष्ठते ।

व्याक०—अखिलम् खिलं कृत्वेति खिलीकृत्य, च्विः, च्व्यन्तस्य गतित्वात्, "कुगतिप्रादयः" इति समासे क्त्वो ल्यप्, ततो नञ्समासे अखिलीकृत्य । प्रतिष्ठा-प्रपूर्वात् तिष्ठतेः "आतश्चोपसर्गे" इत्यङ् । पङ्कस्य भावं पङ्कताम्, भावतलन्तम्, नयनक्रियायाः अकथितं कर्म । अनीत्वा नयतेः क्त्वा, अवतिष्ठते-अवपूर्वात् तिष्ठतेर्लट्, "समवप्रविभ्यः स्थः" इत्यनेनात्मने-पदम् । धूलिमिति नयतेः प्रधानकर्म ।

व्याख्या—विपक्षम्-शत्रुपक्षम्, अखिलीकृत्य-खिलम्-उत्सन्नम्, अकृत्वा, अनुन्मूल्येत्यर्थः । प्रतिष्ठा-राज्यस्य स्थितिः-दृढमूलता, दुर्लभा-कष्टेन प्राप्यते । उदकम्-जलम्, धूलिम्-( स्वमालिन्यापादकम् ) रजः, पङ्कताम् अनीत्वा-अवःकारेण कर्दमत्वमप्रापय्य, नावतिष्ठते, किन्तु पङ्कतां नीत्वैव तिष्ठतीत्यर्थः ।

भा०—किंच लोकेऽनुच्छिन्नशत्रोः स्थैर्यमेव दुर्घटम्, उन्नतिस्तु दूरे । जीवन्तः शत्रवस्तन्मूलं कर्तितुं घुणा इव प्रयतेरन्, अतस्तदुच्छेद आवश्यकः । जलमपि आत्मानं मलिनीकुर्वद् रजः अवःकरणेन पङ्कतां नीत्वैव तिष्ठति । जडमपि जलं यदि स्वाभिभावकं न सहते, तर्हि चेतनैरस्माभिस्तु सुतरां न सोढव्यम् ।

अल०—पूर्ववदप्रस्तुतप्रशसा दृष्टान्तश्च ।

घ्रियते यावदेकोऽपि रिपुस्तावत् कुत सुखम् ।
ग्रसति सोम हि सैंहिकेयोऽसुरद्रुहाम् ॥ ३५ ॥

अ०—एक, अपि रिपु यावत् घ्रियते, तावत् सुख कुत, हि सैंहिकेय
असुरद्रुहा पुरः सोम ग्रसति ।

व्याक०—घ्रियते-धृङ् धातोर्लट् । "रिङ् शयग्लिङ्क्षु" । कुत -किमस्तसिल्, 'कु तिहो" इति कुरादेश । सिंहिकाया अपत्य सैंहिकेयः "स्त्रीभ्यो ढक्" । असुरेभ्यो द्रुह्यन्ति तेषाम् असुरद्रुहाम्, कर्तरि क्विप् । ग्रसति-ग्रसेर्लट् ।

व्याख्या—एक अपि, रिपु शत्रु, यावत्-यावत् कालपर्यन्तम्, घ्रियते जीवति, तावत् तदवधि, सुख कुत ? सुख दुर्लभमिति यावत् । हि तथाहि सैंहिकेयः-सिंहिकासुत राहु, असुरद्रुहाम्-देवानाम्, पुर -अग्रे, सोमम्-चन्द्रमसम् । ग्रसति-पीडयति ।

भा०—शिशुपाल एवास्माक शत्रु किमयमेकाकी नः करिष्यतीत्यपि न चिन्तनीयम्, यत -यावदेकोऽपि शत्रुर्जीवति तावत् सुखप्राप्तेराशापि न कर्तव्या। यद्यपि देवै स्वशत्रवोऽसुरा निहता, पर तेषा मध्य एको राहुरवशिष्टः स एव पश्यता देवाना चन्द्रमस (सूर्य च) पर्वसु बाधते । अत 'अग्नेः शेषमृणाच्छेष शत्रो शेष न शेषयेत्' इत्यभियुक्तोक्त्या एकोऽपि शत्रुरुच्छेत्तव्य एव । चन्द्रोपरागस्य प्राचुर्यात् सोमग्रहणम् ।

अल०—विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यास ।

सखा गरीयाञ्छत्रुश्च कृत्रिमस्तौ हि कार्यत. ।
स्यातामभित्रौ मित्रे च सहजप्राकृतावपि ॥ ३६ ॥

अ०—कृत्रिम सखा शत्रुश्च गरीयान्, हि तौ कार्यत, (भवत ) सहजप्राकृतौ अपि अमित्रौ मित्रे च स्याताम् ।

व्याक०—सहजश्च प्राकृतश्च सहजप्राकृतौ, सह जात सहज, "अन्येष्वपि दृश्यते" इति जनेर्डः । प्रकृत्या सिद्ध. प्राकृत, शैषिकोऽण् । कृत्रिम.-क्रियया निर्वृत्त इति करोते ड्वित क्त्रि" 'क्त्रेर्मम् नित्यम्" । सखा-"अनङ्-

मा'' इत्यनेन अनङ् । गरीयान-व्याख्यात । कार्यत -कार्यशब्दात तसिल् । अपिशब्दस्त्वर्थे । स्याताम्-अस्तेर्लिङ्, प्रथमपुरुषद्विवचनम् ।

व्याख्या — कृत्रिमः-उपकारापकारान्यतररूपया क्रियया, निर्वृत्त -जात, सखा-मित्रम्, शत्रुश्च रिपुश्च, गरीयान्-गुरुतर, हि यत, तौ कृत्रिमो मित्रामित्रौ कार्यतः-उपकारापकारलक्षणाभ्या कार्याभ्याम्, भवत. । सहज:-(एकशरीराव-यवत्वात् ) सहजात, सखा-मातृष्वसेय-पितृष्वसेयादि, तादृशः शत्रुश्च-पितृव्य-तत्पुत्रादि, एव प्राकृत -प्रकृत्या सिद्ध -सहजकृत्रिमलक्षणरहित, शत्रु -स्वदेश सीमान्तवर्ती नृप, तद्देशसीमान्तवर्ती नृपश्च प्राकृत. सखा, एवलक्षणौ सह-जप्राकृतौ सखायौ, शत्रू च, स्वकार्यवशात् कदाचित्-अमित्रौ-शत्रू, मित्रे-सखायौ च, स्याताम्-भवेताम् ।

भा०—कृत्रिमसहजप्राकृतभेदेन मित्राणि शत्रवश्च त्रिधा भिद्यन्ते, स्वरूपाणि चैषा व्याख्याया स्फुटानि। एतेषा मध्ये कृत्रिमौ मित्रशत्रू महान्तावुच्येते, उपकारापकारजन्यसौहार्दवैरभावस्य यावज्जीवमनपायाद् एतयोर्मित्रशत्रुभाव स्थायी, न जातु विपर्येति, एतदेवानयोर्महत्त्वम् ।

सहजप्राकृतौ तु सुहृदावपि कदाचित् स्वकार्यवशाच्छत्रुभावम्, एव शत्रू अपि स्वकार्यानुरोधेन मित्रभाव प्राप्नुत, कार्यौपाधिको हि तयोर्मित्रशत्रु-भावः, अतो न नियत. । कृत्रिमस्तु शत्रुश्चेत् शत्रुरेव, सुहृच्चेत् सुहृदेव । तथा च शिशुपालोऽस्माक सहजमित्रमपीदानीं परस्परापकारेण कृत्रिम शत्रुरिति नोपेक्षितव्य. ।

उपकर्त्रारिणा सन्धिर्न मित्रेणापकारिणा ।
उपकारापकारौ हि लक्ष्य लक्षणमेतयो॰ ॥३७॥

अ०—उपकर्त्रा अरिणा ( अपि ) सन्धि ( कार्यं ) अपकारिणा मित्रेण ( अपि ) ( सन्धि ) न कार्य, हि उपकारापकारौ एतयो. लक्षण लक्ष्यम् ।

व्याक०—उपकर्त्रा-उपपूर्वात् करोतेस्तृच् । सन्धि -सपूर्वाद् दधातेः कि । अपकारिणा-अपपूर्वात् करोतेर्णिनि, उपकारापकारौ-करोते शत्रन्तौ । लक्षणम, लक्ष्यम्-लक्ष्यते. क्रमेण करणे कर्मणि च ल्युडन्तम्, यदन्त च।

व्या०—उपकर्त्रा-उपकारकारिणा, अरिणा ( सहजेन प्राकृतेन वा )

शत्रुणापि, साधि.-मेल कार्य, अपकारिणा-अपकारकर्त्रा मित्रेण-( सहजेन प्राकृतेन वा ) सुहृदापि, सधि , न कार्य , हि-यत , उपकारापकारौ कस्यचिदिष्टकरणमुपकार , अनिष्टकरण चापकार तौ एतयो -मित्रामित्रयो , लक्षणम-असाधारणो धर्म.। स्वरूप वा, लक्ष्यम्-ज्ञेयम् ।

भा०—ननु शिशुपालोऽस्माक पैतृष्वसेय इति सहजमित्रत्वात् स यातव्य एवेत्यत आह-सहज प्राकृतो वा शत्रुरपि यद्यात्मन उपकरोति तर्हि तेन सह साधि कर्तुमुचित । स हि तदानीमस्थायिशत्रुभाव परिहृत्य स्थायिना कृत्रिममित्रता प्राप्त । एव सहज प्राकृतो वा सुहृदपि यद्यपकरोति तर्हि न स सधियोग्यः, यत सोऽस्थायि मित्रत्व परित्यज्य स्थायिन कृत्रिमशत्रुभाव प्राप्त । उपकारापकारावेव मित्रामित्रयोर्लक्षणमस्ति । तथा च शिशुपाल सहजमित्रमपि साम्प्रत परस्परापकारेणास्माक शत्रुरित्यभियेणयितव्य एव, न पुन. सधातव्य ।

अल०—अप्रस्तुतप्रशसा । परिसख्या च ।

**त्वया विप्रकृतश्चैद्यो रुक्मिणीं हरता हरे ।**
**बद्धमूलस्य मूल हि महद् वैरतरो. स्त्रिय ॥३८॥**

अ०—( हे ) हरे, रुक्मिणीं हरता त्वया चैद्य विप्रकृत., ( अस्ति ) स्त्रिय· बद्धमूलस्य वैरतरो महद् मूलम् ( सन्ति ) हि ।

व्याक०—बद्ध मूल यस्य येन वा तस्य बद्धमूलस्य । वैरस्यैव तरो. वैरतरोः । मूलसम्बन्धे षष्ठी । हरता-हरते हेतौ शत्रन्तम्, रुक्मिणीहरणेनेत्यर्थ । चैद्यो व्याख्यातः । विप्रकृत इति करोते कर्मणि क्तान्तम् । त्वयेति तस्य कर्तरि तृतीया ।

व्या०—हे हरे-हेकृष्ण, रुक्मिणीम्, हरता-प्रसह्यापहृत्य राक्षसविवाहेनोद्वहता त्वया-भवता, चैद्य -चेदीना राजा, शिशुपाल , विप्रकृत.-तिरस्कृत । स्त्रिय , बद्धमूलस्य-दृढमूलस्य, वैरतरो -वैरवृक्षस्य, महत् प्रधानम्, मूलम्-कारणम्, सन्तीतिशेष , हि-निश्चयेन ।

भा०—चैद्यस्य कृत्रिमशत्रुत्वसमर्थनायाह-हेकृष्ण ! रुक्मिणीहरणेन त्वया चैद्यस्य विप्रियमाचरितम्, अतस्त्व तस्य कृत्रिम शत्रुरसि । स्त्रियो हि

रूढमूलस्य ( गृहीतमूलस्य ) वैरपादपस्य प्रधान कारणम । अत्र रुक्मिणी-शिशुपालस्य वाग्दत्तासीन्, ता कृष्णो राक्षसविवाहेन उपयेमे-इति पुरावृत्त-मनुसंधेयम । न चेद परस्वापहरणमिवानुचितम्, 'गान्धर्वो राक्षसश्चैव धर्मो क्षत्रस्य तौ स्मृतौ' इति क्षत्रियस्य कृते राक्षसविवाहस्य धर्म्यत्वस्मरणात् ।

अल०—शत्रुतारूपे कार्ये प्रस्तुते तत्कारणाभिधानादप्रस्तुतप्रशसा । कारणस्यापि प्रस्तुतत्वे प्रस्तुताङ्कुरो वा । वैरतरोरितिरूपकम् । मल्लिनाथस्तु रूपकससृष्टोऽयमर्थान्तरन्यास इत्याह ।

**त्वयि भौम गते जेतुमरौत्सीत् स पुरीमिमाम् ।**
**प्रोषितार्यमणं मेरोरन्धकारस्तटीमिव ॥३६॥**

अ०—( हे हरे ) त्वयि भौम जेतु गते ( सति ) स इमा पुरीम् प्रोषितार्यमण मेरोः तटीम् अन्धकारइव अरौत्सीत् ।

व्याक०—प्रोषित अर्यमा यस्या ता प्रोषितार्यमणम् 'मन" इति ङीपो निषेध, "इन्हन्" इतिनियमाद् दीर्घाभाव. । प्रोषितेति प्रपूर्वाद् वसते क्तान्तम्, भौममिति भूमिशब्दादपत्यार्थेऽण् । जेतुमिति जयते तुमुन् । तटीम्-तटशब्दात् "जातेरस्त्रीविषयादयोपधात्" इति ङीप् । अरौत्सीत्-'रुधिर् आवरणे' लुङ् । "वदव्रजहलन्तस्याच" इति वृद्धि । गते इति सतिसप्तमी ।

व्याख्या—हे हरे, त्वयि-भवति, भौमम्-भूमेरपत्य नरकासुरम्, जेतुम्-अभिभवितुम्, गते सति, स.-शिशुपालः, इमाम्-पुरीम्-द्वारकानगरीम्, प्रोषित-परित्यज्यान्यत्र गत, *अर्यमा-सूर्य., यस्यास्तथाभूताम्, मेरो-सुमेरुपर्वतस्य, तटीम्-सानुम्, अन्धकारइव तमइव, अरौत्सीत्-आवव्रे ।

भा०—यथा सूर्यासन्निधाने सुमेरोः सानुमन्धकार आवृणोति, तथैव स शिशुपालस्त्वयि नरकासुरविजयव्यापृते सत्यवसर लब्ध्वेमा द्वारकापुरा परित स्वसेनयावृणोत् । तथा च तस्य त्वमिव सोऽपि तव कृत्रिम. शत्रु. इति नोपेक्षणीय. ।

अल०—उपमा ।

**आलप्यालमिदं बभ्रोर्यत् स दारानपाहरत् ।**

---

* सूरसूर्यार्यमादित्यद्वादशात्मदिवाकरा —इत्यमर. ।

**कथापि खलु पापानामलमश्रेयसे यत ॥४०॥**

अ०—स बभ्रो दारान् अपाहरत् इति यत् इदम् आलप्य अलम् यत पापाना कथा अपि अश्रेयसे अल खलु ।

व्याक०—आलप्य अलम्-आङ्पूर्वाल्लपतेः "अलखल्वोः प्रतिषेधयो प्राचा क्त्वा" तस्य ल्यबादेशः । अपाहरत् अपपूर्वाद् हरतेर्लङ् । यतः-यच्छब्दात्तसिल् । कथा-कथयते "चिन्तिपूजिकथिकुम्बिचर्चश्च" इत्यनेन अङ् । अश्रेयसे अलम्, श्रेयश्शब्दो व्याख्यात, "नम स्वस्तिस्वाहा " इत्यनेनालमो योगे चतुर्थी । दाराशब्दस्य नित्यबहुवचनान्तत्वाद् दारानिति बहुवचनम् । पूर्वार्धे अलशब्दो निषेधार्थक, उत्तरार्धे तु पर्याप्त्यर्थक ।

व्याख्या—शिशुपाल, बभ्रो-तन्नामकस्य यादवस्य, दारान्-स्त्रियम्, अपाहरत्-प्रसह्य अपहृतवान्, इति यत्, इदम्-प्रसह्य परदारापहरणम्, आलप्य-उच्चार्य, अलम्-नास्य चर्चापि न कर्तव्येत्यर्थ, यतः-यस्मात् कारणात्, पापानाम्-दुश्चरितानाम्, कथापि-चर्चामात्रमपि, अश्रेयसे-अकल्याणाय, अलम-पर्याप्तम्, खलु-निश्चयेन ।

भा०—अपकारान्तरमाह-शिशुपालो बभ्रोर्भार्यामपहृत्य परदाराभिमर्शन चकारेति नैतद्विषये किमप्युच्यते, यत पापाना कथामात्रमप्यकल्याणजननाय पर्याप्त भवति ।

अल०—निषिध्यमानालपननिषेधनसमर्थनात् कार्येण कारणसमर्थको-ऽर्थान्तरन्यास इति मल्लिनाथ ।

**विराद्ध एव भवता विराद्धा बहुधा च न. ।**
**निर्वर्त्यतेऽरि क्रियया स श्रुतश्रवस सुत ॥४१॥**

अ०—एव भवता विराद्ध च बहुधा न विराद्धा स श्रुतश्रवस सुत. क्रियया अरि निर्वर्त्यते ।

व्याक०—श्रुत श्रवो यस्या तस्या श्रुतश्रवस । विराद्ध इति राधे कर्मणि क्त, तत एव कर्तरि तृचि विराद्धा, बहुधा-बहुशब्दात् "सख्याया-विधार्थे धा", निर्वर्त्यते-निर्पूर्वाद् णिजन्ताद् वृतुधातो कर्मणि लट्, क्रिययेति हेतौ करणे वा तृतीया, अस्माभिरिति तत्कर्तृपदमध्याहर्तव्यम् ।

व्याख्या—एवम-रुक्मिणीहरणेन, भवता, विराद्ध-अपकृत , च-पुन , नः-अस्माकम्, बहुधा-बहुभि प्रकारैः द्वारकादाहवनदाराहरणादिभि विराद्धा अपकर्ता, स -पूर्वं वर्णित. ( अति दुर्वृत्तत्वान्नामाग्रहणम ) श्रुतश्रवस -श्रुतश्रवोनाम्न्या कृष्णस्य पितृष्वसुः, सुत -पुत्र -शिशुपाल., ( पैतृष्वसेयत्वात् सहजमित्रमपि ) क्रियया-परस्परापराधरूपया, अरि. शत्रु', निर्वर्त्यते-क्रियते ।

भा०–एव शिशुपालो न सहजमित्रमपि परस्परापराधेन साम्प्रत कृत्रिम शत्रुरिति सर्वथानुपेक्षणीय एव ।

**विधाय वैर सामर्षे नरोऽरौ य उदासते ।**
**प्रक्षिप्योदर्चिष कक्षे शेरते तेऽभिमारुतम् ॥४२॥**

अ०—ये नर सामर्षे अरौ वैर विधाय उदासते ते कक्षे उदर्चिष प्रक्षिप्य अभिमारुत शेरते ।

व्याक०—अमर्षेण सह वर्तमाने सामर्ष । उद्गतानि अर्चीषि यस्य तम् उदर्चिषम् । मारुतम् अभिलक्ष्य अभिमारुतम्, "लक्षणेनाभिप्रती आभिमुख्ये" इत्यव्ययीभावः । नर -नृशब्दस्य जसि रूपम्, " ऋतो ङिसर्वनामस्थानयो. " इति गुण । उदासते-उत्पूर्वात् आस् धातोर्लट्, प्रथमपुरुषबहुवचनम् । प्रक्षिप्य-प्रक्षिपतेर्ल्यप् । शेरते-शीङ् धातोर्लटि झप्रत्यये रूपम्, अरौ-अधिकरणत्वविवक्षया सप्तमी ।

व्याख्या—ये नर.-मनुष्या , सामर्ष कारणान्तरत. प्रागेव क्रुद्धे, अरौ-शत्रौ, वैरम्-अपकारम्, विधाय, उदासते-उदासीना भवन्ति-किमयमस्माक कर्तुं शक्ष्यतीत्युपेक्षन्ते, ते नर , कक्षे-तृणे, ( गुल्मे वा ) उदर्चिषम्-उद्गतज्वालमग्निम्, प्रक्षिप्य, अभिमारुतम्-वायोराभिमुख्येन, शेरते-स्वपन्ति ।

भा०—शुष्के तृणसमहे गुल्मे वने वोद्गतज्वालमग्नि प्रक्षिप्य पवनप्रवाहाभिमुख शयान. पुरुषो यथा पवनप्रेरितया ज्वालया भस्मीभूय विनश्यति, तथैव य पुरुष स्वोपरि कारणान्तरत प्रागेव क्रुद्धस्य शत्रोरपकारान्तर विधायोपेक्षते-न सावधानस्तिष्ठति, सोप्याकस्मिकेन शत्रोराक्रमणेनाशु विनश्यति अत. शिशुपालो नोपेक्षणीयः ।

अल०—अप्रस्तुतप्रशसा, वाक्यार्थवृत्तिनिदर्शना च ।

**मनागनभ्यावृत्त्या वा कामं क्षाम्यतु यः क्षमी ।**
**क्रियासमभिहारेण विराध्यन्तं क्षमेत कः ॥४३॥**

अ०— यः क्षमी ( सः ) मनाग् वा अनभ्यावृत्त्या ( विराध्यन्तम् ) कामं क्षाम्यतु ( परन्तु ) क्रियासमभिहारेण विराध्यन्तं कः क्षमेत ।

व्याक०—न अभ्यावृत्त्या अनभ्यावृत्त्या, 'अभि' 'आङ्' पूर्वात् वर्ततेः क्तिन्, ततो नञ्समासः प्रकृत्यादित्वात् तृतीया, क्रियाणां समभिहारेण क्रियासमभिहारेण, समभिहारेति सम्अभिपूर्वात् हरतेर्घञन्तम्, अत्रापि पूर्ववत् तृतीया । क्षमी-क्षाम्यतेर्देवादिकात् "शमित्यष्टाभ्यो घिनुण्" क्षमतेर्वा भौवादिकात् ग्रहादित्वाण्णिनिः, उदात्तोपदेशत्वाद् वृद्ध्यभावः । क्षाम्यतु-क्षाम्यतेः सम्भावनायां लोट्, इति मल्लिनाथः । विराध्यन्तम्-विपूर्वकराधेः शत्रन्तम् । क्षमेत-क्षमते. "शकि लिङ् च" इति शक्यार्थे लिङ् ।

व्याख्या—यः क्षमी-क्षमाशीलः, सः, मनाग्-अल्पम् (अभ्यावृत्तावपीति-शेषः) वा, अनभ्यावृत्त्या-अपौनःपुन्येन-सकृदेव ( अनल्पमपीतिशेषः ) विराध्यन्तम्-अपकुर्वन्तं पुरुषम्, कामम्-यथेच्छम् (भृशमिति मल्लिनाथः) क्षाम्यतु-सहताम्, परन्तु, क्रियासमभिहारेण-भृशम्, पौनःपुन्येन च, विराध्यन्तम्, कः क्षमेत-कः सोढुं शक्नुयात्, न कोऽपीत्यर्थः ।

भा०—क्षमाशीलोऽपि पुरुषः अल्पम्, सकृदेव कृतं भूयांसमपि वापराधं क्षन्तुं शक्नोति, परं पुनः पुनर्भृशं च क्रियमाणमपराधं सहिष्णुरसहिष्णुर्वा कोऽपि सोढुं न शक्नोति, शिशुपालोऽस्माकं बलवत् पुनः पुनश्चापकरोतीति न स क्षन्तव्यो भवितुमर्हति ।

अल०—अप्रस्तुतप्रशंसा ।

**अन्यदा भूषणं पुंसः क्षमा लज्जेव योषितः ।**
**पराक्रमः परिभवे वैयात्यं सुरतेष्विव ॥४४॥**

अ०—योषितः सुरतेषु वैयात्यमिव पुंसः परिभवे पराक्रमः भूषणम् (अस्ति) अन्यदा (तु) (योषितः) लज्जेव (पुंसः) क्षमा (भूषणम्) अस्ति ।

व्याक०—सुरतेषु-रमतेः भावक्तान्तम्, अधिकरणत्वविवक्षया सप्तमी, सतिसप्तमी वा । वैयात्यम्-विरुद्धं यातो वियातः (अविनीतः) कर्तरि क्तः, वि-

यातस्य भावो वैयात्यम्, भावे ष्यञ् । परिभवे-परिपूर्वात् भवतेः ' ऋदोरप्" । अन्यदा-अन्यशब्दात् "सर्वैकान्यकियत्तदः काले दा" । लज्जा-'ओलस्जी व्रीडायाम' "गुरोश्च हलः" इत्यप्रत्ययः, स्त्रीत्वाट्टाप् । क्षमा-'क्षमूष् सहने' षित्वात् "षिद्भिदादिभ्योऽङ्" । योषितः, पुंसः, भूषणमित्यन्वये षष्ठ्यौ ।

व्याख्या—योषितः-स्त्रियाः, सुरतेषु सुरतक्रियाकालेषु, (सुरतक्रियासु सतीषु वा) वैयात्यमिव-दन्तक्षतादिकरणधाष्टर्यं यथा, तथा पुंसः- मनुष्यस्य, परिभवे-निरस्कारकाले, पराक्रमः-शौर्यम्,भूषणम्, अस्ति । अन्यदा-सुरतव्यतिरिक्ते तिरस्कारातिरिक्ते च काले योषितः, लज्जेव-व्रीडा यथा, तथा पुंसः, क्षमा-सहिष्णुता, भूषणमस्ति ।

भा०—ननु क्षमा पुंसो भूषणमिति सर्वदैव एष्टव्या-इत्यत आह-अपरिभवे क्षमा भूषणमुच्यते, न पुनः सर्वदा । शत्रुकृतपरिभवप्राप्तौ तु तत्प्रतीकाराय पराक्रम एव भूषणम् ,अन्यत् स्पष्टम् ।

अल०—उपमा ।

**मा जीवन् यः परावज्ञा दुःखदग्धोऽपि जीवति ।**
**तस्याजननिरेवास्तु जननीक्लेशकारिणः ॥ ४५ ॥**

अ०—यः परावज्ञादुःखदग्धः अपि मा जीवन् जीवति, जननीक्लेशकारिणः तस्य अजननिः एव अस्तु ।

व्याक०-परस्य अवज्ञया दुःखम्, तेन दग्धः, परावज्ञादुःखदग्धः । परस्येति कर्तरि षष्ठी, अवज्ञेति अवपूर्वात् ज्ञाधातोः "आतश्चोपसर्गे" इत्यङ् । जनन्याः क्लेशं करोतीति तस्य जननीक्लेशकारिणः । करोतेर्णिनिर्हेतौ । जन्यतेऽनया सा जननी, जनयतेर्ल्युट् , टित्वान्ङीप् । मा जीवन्-"माङ्याक्रोशे" इति जीवतेः शतृप्रत्ययः । अजननिः-न जायतामिति नञुपपदाज्जायतेः ' आक्रोशे नञ्यनिः ' इत्यनिप्रत्ययः , अस्तु-अस्तेर्लोट्, प्रार्थनायाम् ।

व्याख्या—यः पुरुषः, परस्य-शत्रोः-शत्रुकृतया, अवज्ञया-अवमानेन, यद् दुःखम्, तेन दग्धः-अन्तर्व्यथितोऽपि, मा जीवन्-कुत्सितं जीवनं निर्वहन्, जीवति-प्राणान् धरति, जनन्याः-मातुः, क्लेशकारिणः-केवलगर्भधारणप्रसवादिवेदना-हेतोः, तस्य, अजननिः-अनुत्पत्तिरेव, अस्तु-भवत्विति प्रार्थ्यते ।

भा०—य पुरुषः शत्रुनिरस्कारद् गमनतोऽपि जानाति न तत्प्रत्यप-राय किमपि चेष्टते। तस्य जीवनमतिगर्हितम्, यदि केवल मातुगर्भ गरणावर-णादिवेदनाहेतु, अप्रयोजक तस्य जन्म, मातृक्लेशनिवृत्तये तादृशजन्मानुत्पत्तिरेव प्रार्थ्यते।

अल०—अनुत्पत्तिरूपदोषाभ्यनुज्ञानादनुज्ञालङ्कृतिः तथा च जननक्लेश-मात्रकारित्वेन समर्थित इति काव्यलिङ्ग च।

पादाहत यदुत्थाय मूर्धानमधिरोहति।
स्वस्थादेवावमानेऽपि देहिनस्तद् वर रज॥ ४६ ॥

अ०—यद् रज. पादाहत (सत्) उत्थाय मूर्धानम् अधिरोहति, तद् (रजः) अवमाने अपि स्वस्थाद् एव देहिन वरम् (अस्ति)।

व्याक०—पादेनाहत पादाहतम्, "कर्तृकरणे कृता बहुलम्" उत्थाय उत्पूर्वात् तिष्ठतेल्र्यप्, अधिरोहति-रोहतेर्वर्तमाने लट्। अवमानशब्दो मन्यते-र्भावघञन्त। सतिसप्तमी। स्वस्मिन् प्रकृतौ) तिष्ठति-तस्मात् स्वस्थात्, 'सुपि स्थ' इति क। देहिन -' पञ्चमी विभक्ते" इत्यनेन पञ्चमी।

व्या०-यद् रज -धूलि, पादाहतम्-चरणोत्ताडित सत्, उत्थाय-उद्गम्य मूर्धानम्-शिर अधिरोहति-आक्रामति, तद् रज (अचेतनमपि) अवमाने-तिर-स्कारे सत्यपि, स्वस्थाद्-अविकृतचित्तात्, देहिन -शरीरभृतश्चेतनात्, वरम्-श्रेष्ठम्-अस्ति।

भा०—य पुरुष शत्रुकृतापमान निश्चिन्तस्तूर्णी सहते, वृथापुष्टोऽसौ, (इद देहिन इति निन्दार्थमत्वर्थीयेन, प्रकृत्या च गम्यते) तदपेक्षया तद् रजः (जड, नपुसकमपि सत्) श्रेष्ठ यत् पुभि पादोद्धूनितमुद्धूनयतामेव मस्तक-माक्रामति।

अल०-अप्रस्तुतप्रशसा। देह्यपेक्षया रजसो व्यतिरेकवोधनाद् व्यतिरेकोपि।

असम्पादयत कश्चिदर्थं जातिक्रियागुणै।
यदृच्छाशब्दवत् पुस. सज्ञायै जन्म केवलम्॥ ४७ ॥

अ०—जातिक्रियागुणै कञ्चिद् अर्थम् असम्पादयत पुस जन्म यदृच्छाशब्द-वत् सज्ञायै केवलम् (अस्ति)

व्याक०-जात्या च क्रियया च गुणेन च जातिक्रियागुणैः, करणे तृतीया। असम्पादयतः-सम्पूर्वकाणिजन्तात् पद्यते. शत्रन्तम । ततो नञ्समास । यदृच्छया प्रवृत्त शब्द यदृच्छाशब्द , शाकपार्थिवादित्वान्मध्यमपदलोप , तस्येव यदृच्छाशब्दवत् , "तत्र तस्येव" इति षष्ठ्यन्ताद् वतिः । यदृच्छाशब्दो व्याख्यात । सज्ञायै-जानाते. "आतश्चोपसर्गे" इत्यङ्, तादर्थ्ये,अप्रयुज्यमानतुमुन्नन्तकर्माणि वा, चतुर्थी । सज्ञामनुभवितुमित्यर्थ । केवलशब्द एवार्थः ।

व्याख्या—जाति -ब्राह्मणत्वादि (पक्षे गोत्वघटत्वादि ) क्रिया-इज्याध्ययनादि (पक्षे पचनपठनादि ) गुण , शौर्योदार्यादि (पक्षे शुक्लनीलादिः) एते , कश्चिदर्थम्-सुकृतकीर्त्यादिरूपम् (पक्षे घटपट-पाचकपाठक-शुक्लनीलादिव्यवहाररूपम् ) प्रयोजनम् , असम्पादयत.-असाधयत , पुस -पुरुषस्य, जन्म-उत्पत्ति , यदृच्छाशब्दवत्-वक्त्रा स्वेच्छया कल्पितस्य जात्यादिप्रवृत्तिनिमित्तशून्यस्य डित्थादिशब्दस्येव, सज्ञायै केवलम्-पारिभाषिक किञ्चिन्नाममात्रमनुभवितुमेवास्ति (पक्षे जात्यादिप्रतिपादनव्यतिरेकेण डित्थामानयेत्यादिव्यवहारसिद्धय एवास्ति, नाहत्नाम-(सज्ञाशब्दताम् ) अनुभवितुमिति मल्लिनाथ ।

भा०—यथा घटादयो जातिशब्दा , शुक्लादयो गुणशब्दा., पाचकादय क्रियाशब्दा स्वाभिधेयेषु घटत्वादिरूप कञ्चन विशेषमपि प्रतिपादयन्ति, न तथा यदृच्छाशब्द., स हि जात्यादिव्यतिरेकेण धर्मिमात्रमेव बोधयति, व्यवहार एव तस्य मुख्य प्रयोजनम्, तथैव य पुरुषः स्ववर्तिब्राह्मणत्वादिजात्यनुरूपाध्ययनादिना, इज्यादिक्रियानुष्ठानेन वा, शौर्योदार्यादिगुणैर्वा न कञ्चन सुकृतकीर्त्यादिरूप धर्माद्यन्यतम वा पुरुषार्थं साधयति, तस्य जन्म केवल ब्राह्मणादिसज्ञाधारणार्थमेव । व्यवहारसिद्धये नाममात्रेण स ब्राह्मणादिरुच्यते । यथा अकारादिषु वैयाकरणाना गुणपदप्रयोग पारिभाषिक , न स वस्तुनो गुण , तथैव तस्मिन्नपि ब्राह्मणादिपदप्रयोग , न स वस्तुनो ब्राह्मणादि ।

अल०—उपमा ।

तुङ्गत्वमितरा नाद्रौ नेदं सिन्धावगाधता ।
अलङ्घनीयताहेतुरुभयं तन्मनस्विनि ॥ ४८ ॥

अ०—अद्रौ तुङ्गत्वम् (अस्ति) इतरा (अगाधता) न (अस्ति) सिन्धौ अगा-

धना (अस्ति) इदर (तुङ्गत्वम) न, मनस्विनि (तु) अलङ्घनीयताहेतु तद् उभयम (अपि) (अस्ति)

व्याक०—न लङ्घनीयताया हेतु अलङ्घनीयताहेतु, लङ्घितु योग्यं लङ्घनीयम्, तस्य भावो लङ्घनीयता, लङ्घतेरनीयर्, ततस्तल् भावे। नित्यालिङ्गत्वाद हेतुशब्द पुंसि। तच्च गा च तत्, "नपुसकमनपुसकेनैकवचास्यान्यतरस्याम्" इत्यनेन नपुसकैकशेष, एकवच। उभयम्-"उभादुदात्तो नित्यम्" इत्ययच्। मनस्विनि-मनसो विनि।

व्याख्या—अद्रौ-पर्वते, तुङ्गत्वम्-उच्चत्वमस्ति, इतरा-अगाधता, नास्ति, सिन्धौ-समुद्रे, अगाधता-गभीरता, अस्ति, किन्तु इदम्-तुङ्गत्वम्, नास्ति, मनस्विनि-अभिमानवति वीरे तु, अलङ्घनीयताया-अनतिक्रमणीयताया हेतु-कारणम्, तदुभयम्-तुङ्गत्वम्-(विशालहृदयता) अगाधता (गाम्भीर्यम्) इति द्वयमपि, अस्ति।

भा०—तुङ्गत्वमगाधता च लोकेऽलङ्घनीयताया हेतू भवतः, तत्र पर्वते केवल तुङ्गत्वमेवास्ति, समुद्रे च केवलागाधतैव, मनस्विनि तु पुरुषे तदुभयमपि विद्यते-इति स पर्वतसमुद्रापेक्षयाप्यतिदुर्लङ्घ्य।

अल०—व्यतिरेकालङ्कार।

**तुल्येऽपराधे स्वर्भानुर्भानुमन्त चिरेण यत्।**
**हिमांशुमाशु ग्रसते तन्म्रदिम्न. स्फुट फलम्॥४६॥**

अ०—स्वर्भानु अपराधे तुल्ये (अपि) भानुमन्तम् चिरेण, हिमांशुम् आशु ग्रसते (इति) यत् तत् म्रदिम्न. फलम् स्फुटम्।

व्याक०—अपराध इति राधेर्घञन्त, भानवो विद्यन्तेऽस्य त भानुमन्तम् प्राशस्त्ये भूम्नि वा मतुप्। हिमा अंशवो यस्य त हिमांशुम्, ग्रसते-'ग्रसु अदने' लट्। म्रदिम्न-मृदोर्भाव इति मृदुशब्दात् "पृथ्वादिभ्य इमनिज् वा" "रऋतो हलादेर्लघो."।

व्याख्या—स्वर्भानु-राहु*, अपराधे तुल्ये-समानेऽपि, भानुमन्तम्-प्रखरकिरण सूर्यम्, चिरेण-विलम्बेन, हिमांशुम्-शीतकिरण चन्द्रमसम्,

* तमस्तुराहु स्वर्भानु-रित्यमर।

आशु-शीघ्रम, ग्रसते-गिलति, इति यत्, तत्, म्रदिम्न -मार्दवस्य, फलम-
परिणाम , स्फुटम-प्रत्यक्षम् । अस्तीतिशेष. ।

भा०—शत्रुषु मृदुव्यवहार सर्वथानर्थायेत्याह-यद्यपि सूर्याचन्द्रमसो-
स्तुल्य एवापराधस्तथापि राहुरविक्रयेन चन्द्रमसमेव ग्रसते, न पुन सूर्यम्,
तत्र कारण स्पष्टमेव, चन्द्रमा खलु मृदुतेजा , इति स सुखेन ग्रसितु शक्यते
सूर्यस्तु प्रखरप्रताप इति न तत्र राहो महसा प्रवृत्ति । तथा च शत्रुपक्षे
तीव्रमेव व्यवहर्तव्यम ।

अल०—आशुग्रासे मृदुत्वस्य हेतुत्वमुत्प्रेक्षितमित्युत्प्रेक्षा भानुमन्तम्'
हिमांशुम्' इति विशेष्ये साभिप्राय इति परिकराङ्कुर. ।

**स्वय प्रणमतेऽल्पेऽपि परवायावुपेयुषि ।**
**निदर्शनमसाराणा लघुर्बहुतृण नर ॥२०॥**

अ०—असाराणा निदर्शन बहुतृण लघु नर अल्पे अपि परवायौ
उपेयुषि ( सति ) स्वय प्रणमते ।

व्याकृ०—परो वायुरिव, तस्मिन् परवायौ, उपमितसमास । निदर्शनम्-
निदर्श्यते ऽनेनेति णिजन्ताद् दृशे करणे ल्युट् । ईषदून तृणम बहुतृणम्,
"विभाषा सुपो बहुच् पुरस्तात्" इति बहुच् प्रत्यय , स च पुरस्तात्' इति
वचनात् प्रकृते. पूर्वमेव जायते । उपेयुषि-व्याख्यातम । सति सप्तमी । स्वय
प्रणमते-अन्तर्भावितण्यर्थात् नमते -कर्मकर्तरि लट्, "कर्मवत् कर्मणा तुल्य-
क्रिय" इति कर्मवद्भावात् यकि प्राप्ते न दुहस्नुनमा यक्चिणौ "
इति तन्निषेध. ।

व्याख्या— असाराणाम्-दुर्बलानाम् निदर्शनम्-दृष्टान्त , बहुतृणम्-
तृणसदृशम्, लघु -अल्प निर्णायक , नर. अल्पेऽपि स्वल्पबलेऽपि ( वायावपि
विशेषणमिद योज्यम् ) परवायौ वायुसदृशे शत्रौ, उपेयुषि-स्वसमीप प्राप्तवति-
अभिषेणितवति सति, स्वय प्रणमते-स्वयमेव-पराक्रमशून्यत्वात् युद्ध विनैव,
प्रणमते-प्रह्वीभवति ( तृणपक्षे मृदुत्वात् स्वयमेव नत भवति ) ।

भा०—वायुना तृणमिव अल्पीयसापि रिपुणा नि-र्धौत्य पुरुषोऽक्लेशेन

---

* सारो बले स्थिरांशे च-इत्यमर ।

परिभूयत इति तत्त्वम्, इतरत् स्पष्टम् ।

अल०—उपमा ।

**तेजस्विमध्ये तेजस्वी दवीयानपि गण्यते ।**

**पञ्चम पञ्चतपसस्तपनो जातवेदसाम् ॥२१॥**

अ०—दवीयान् अपि तेजस्वी तेजस्विमध्ये गण्यते, पञ्चतपस ( पुरुषस्य ) तपन जातवेदसा पञ्चम ( अस्ति ) ।

व्याक०—तेजस्विना मध्ये तेजस्विमध्ये, तेज शब्दाद् प्राशस्त्ये विनी तेजस्वी । पञ्चाग्निसाध्य तपो यस्य तस्य पञ्चतपस, मध्यमपदलोप । दवीयान्-दूरशब्दाद् ईयसुन्, "स्थूलदूर " इति पूर्वगुणयणादिपरलोपौ । गण्यते-गणयते कर्मणि लट् । तपन -तप् धातो नन्द्यादित्वाद् ल्यु । पञ्चाना पूरण. पञ्चम , "तस्य पूरणे" डट्, तस्य मडागम ।

व्याख्या—दवीयान्-दूरस्थोऽपि, तेजस्वी-प्रशस्ततेजोयुक्त पुरुष., ( गणनावसरे ) तेजस्विना मध्ये, गण्यते-सख्यायते, पञ्चतपस.-पञ्चाग्निमध्ये तपस्यत पुरुषस्य, *तपनः-सूर्य , †जातवेदसाम्-अग्नीना मध्ये, पञ्चम - पञ्चाना पूरण , पञ्चमोऽग्निर्मन्यत इत्यर्थ. ।

भा०—तेजस्विना गणनाया प्रस्तुताया यदि कश्चन तेजस्वी दूरस्थोऽपि भवेत् तदापि गण्यते, स हि दूरस्थितोपि स्वतेजसा लोकान् अभिभवितु क्षम । इममेवार्थमर्थान्तरन्यासेनाह-पञ्चाग्निमध्ये तपस्यत पुरुषस्य अतिदूरवर्त्यपि सूर्य पञ्चमाग्निस्थानीयो मन्यते।

अल०—अर्थान्तरन्यास ।

**अकृत्वा हेलया पादमुच्चैर्मूर्धसु विद्विषाम् ।**

**कथङ्कारमनालम्बा कीर्तिर्द्यामधिरोहति ॥२२॥**

अ०—उच्चै विद्विषा मूर्धसु हेलया पादम् अकृत्वा अनालम्बा कीर्तिः कथङ्कार द्याम् अधिरोहति ।

व्याक०—न आलम्बो यस्याः सा अनालम्बा, अकृत्वेत्यत्र कीर्तितद्-

---

* भानुर्हंस सहस्रांशुस्तपन सविता रवि इत्यमर ।

† जातवेदास्तनूनपात इत्यग्निनामस्वमर. ।

वतोरभेदोपचारात् समानकर्तृकत्व निर्वाह्यम् । कथ कृत्वा कथङ्कारम- 'अन्यथैवकथमित्थसुसिद्धाप्रयोगश्चेत्' इति कथम्युपपदे करोतेर्णमुल् । द्याम्- द्योशब्दस्य अमि रूपम्, "औतोऽम्शसो." इत्याकारैकादेश । हेलया हेतौ प्रकृत्यादित्वाद् वा तृतीया ।

व्याख्या—उच्चैः-उन्नतेषु, विद्विषाम्-शत्रूणाम्, मूर्धसु-शिरस्सु, हेलया- तिरस्कारपूर्वकम्, पादम्-चरणम्, अकृत्वा-अविन्यस्य, शत्रुमानमर्दनमन्तरेणेति यावत्, अनालम्बा-निराधारा, कीर्ति -यश , कथङ्कारम्-केन प्रकारेण, द्याम्- दिवम्, अधिरोहति, न कथमपीत्यर्थ ।

भा०—दुरारोहसौधादिषु सोपानमारुह्यैवारोढु शक्यते, तथा च यदि भवद्भि काम्यते यदस्माक कीर्ति. स्वर्गमप्यारोहेत् तर्हि तदर्थमपि कश्चन सोपानाद्यालम्बोऽपेक्षित । शत्रुशिरास्येव तस्या उचित आलम्बो भवितुमर्हन्ति तत्रैव सा पादौ दृढ न्यस्य स्वर्गमारोक्ष्यति, नान्यथा । शत्रुमानभङ्ग एव कीर्तिप्रसारस्य उपाय इति तत्त्वम् ।

अल०—अत्र प्रस्तुताया कीर्तै विषयमहिम्ना अप्रस्तुतप्रासादरोहणकर्तृ- व्यवहारप्रतीते समासोक्तिरिति मल्लिनाथः ।

**अङ्काधिरोपितमृगश्चन्द्रमा मृगलाञ्छन. ।**
**केसरी निष्ठुरक्षिप्तमृगयूथो मृगाधिप. ॥५३॥**

अ०—अङ्काधिरोपितमृग चन्द्रमा मृगलाञ्छन ( कथ्यते ) निष्ठुर क्षिप्तमृगयूथः केसरी ( तु ) मृगाधिप ( उच्यते ) ।

व्याक०—अङ्कम् अधिरोपित मृग. येन स अङ्काधिरोपितमृग । अधि रोपित इति रोहतेर्ण्यन्तात् क्त., "रुह पोऽन्यतरस्याम्" । मृग. लाञ्छन यस्य स मृगलाञ्छन , लाञ्छनमिति 'लाछि' धातोर्ल्युडन्त । निष्ठुर क्षिप्त मृगाणा यूथो येन स निष्ठुरक्षिप्तमृगयूथ ।

व्याख्या—अङ्कम्-उत्सङ्गम्, अधिरोपित -निवेशित , मृग -हरिण , येन तथोक्त. चन्द्रमा , मृग , लाञ्छनम्-कलङ्को यस्य तथाभूत , मृगाङ्क , कथ्यते । निष्ठुरम्-निर्दयं यथा स्यात् तथा क्षिप्त -हिंसित , मृगाणा यूथ -समूहो येन, तथाभूत , केसरी सिहस्तु, मृगाधिप -मृगराज इति उच्यते ।

भा०—चन्द्रमसा कृपया स्वाङ्कमारोपितो मृगस्तस्य कृते कलङ्करूपो बभूव, तेनैव मृगेण लोकाश्चन्द्रमसं मृगाङ्कमाचक्षते । परं यः सिंहो मृगान् निर्दयं पीडयति, स मृगराज इत्युच्यते । अतः शत्रुषु मार्दवं दुष्कीर्तये पौरुषं तु कीर्तये इति भावः ।

अल०—अप्रस्तुतकथनात् प्रस्तुतार्थप्रतीतेः अप्रस्तुतप्रशंसा ।

**चतुर्थोपायसाध्ये तु रिपौ सान्त्वमपक्रिया ।**
**स्वेद्यमामज्वरं प्राज्ञः कोऽम्भसा परिषिञ्चति ॥५४॥**

अ०—चतुर्थोपायसाध्ये रिपौ तु सान्त्वम् अपक्रिया, स्वेद्यम् आमज्वरम् कः प्राज्ञः अम्भसा परिषिञ्चति ।

व्याक०—चतुर्थेन उपायेन साध्ये चतुर्थोपायसाध्ये । चतुर्णां पूरणश्चतुर्थः, "षट्कतिपयचतुरां थुक्" । उपाय इति उपपूर्वाद् एतेः करणे "एरच्" । सान्त्वनं सान्त्वमिति सान्त्वयतेश्चौरादिकाद् घञ् । 'साम सान्त्वमुभे समे' इति कोशप्रामाण्यान्नपुंसकत्वम् । स्वेद्यम्-स्विद्धातोर्ण्यत् । परिषिञ्चति-परिपूर्वात् सिञ्चतेर्लट्, मुचादित्वान्नुम् "उपसर्गात्०" इति षत्वम् । रिपौ-अधिकरणसप्तमी, अम्भसा अभिषेककरणे तृतीया ।

व्याख्या—चतुर्थोपायेन-सामादिषु चतुर्षूपायेषु दण्डाख्येनान्तिमोपायेन, साध्ये-वशीकर्तुं शक्ये, रिपौ-शत्रौ, सान्त्वम्-साम्नः प्रयोगः, अपक्रिया-अपचारः-मिथ्यायोगः अस्ति, स्वेद्यम्-स्वेदार्हम्, आमज्वरम्-अपक्वज्वरम् (प्राप्य-इति-शेषः इति मल्लिनाथः, अथवा आमः-अपक्वः, ज्वरः, यस्मिन् तथाभूतमामज्वरार्तं शरीरम्) कः प्राज्ञः-को बुद्धिमान्, अम्भसा-जलेन, परिषिञ्चति-स्नपयति (प्राप्येत्यध्याहारपक्षे परिषिञ्चति-स्नाति, सकर्मकस्यापि सिञ्चतेः कर्मणोऽविवक्षयाकर्मकत्वम्)

भा०—यथा आमज्वरः प्रस्वेदनेनैव शाम्यति, स्नानं तु क्रियमाणं प्रत्युत तं प्रकोपयति, तथैव क्रुद्धः शिशुपालः इदानीं दण्डेनैव (युद्धेन) वशीकर्तुं शक्यते, न सामादिना । शान्त एव सामादिप्रयोगः फलति, नाशान्ते, अतोऽभिषेणयितव्य एव सः ।

अल०—वाक्यभेदेन प्रतिबिम्बकरणापेक्षो दृष्टान्तालङ्कार इति मल्लिनाथः ।

**सामवादाः सकोपस्य तस्य प्रत्युत दीपकाः ।**
**प्रतप्तस्येव सहसा सर्पिषस्तोयबिन्दवः ॥२५॥**

अ०सकोपस्य तस्य सामवादाः प्रतप्तस्य सर्पिषः तोयबिन्दवइव प्रत्युत सहसा दीपकाः ( भविष्यन्ति )

व्याक०—कोपेन सह वर्तमानस्य सकोपस्य । साम्नो वादाः सामवादाः, दीपकाः-दीपेर्णिजन्तात्ण्वुल् । तस्येति दीपकशब्दयोगे कर्मणि षष्ठी, सहसेति प्रकृत्यादित्वात् तृतीया ।

व्याख्या—सकोपस्य-अस्मासु क्रुद्धस्य, रूढवैरस्येति वा, तस्य-शिशुपालस्य, सामवादाः-अनुनयोक्तयः, प्रतप्तस्य-क्वथितस्य, सर्पिषः-घृतस्य, तोयबिन्दवः-इव-जलकणाइव, प्रत्युत-वैपरीत्येन-शान्तिं विहाय, सहसा-शीघ्रम्, दीपकाः-प्रज्वलनकारिणः, भविष्यन्ति-तं पूर्वापेक्षयाप्याधिकमुत्तेजयिष्यन्तीत्यर्थः । यावत् । सहसा प्रतप्तस्येति मल्लिनाथो योजितवान् ।

भा०—यथा अतितप्तं घृतं जलप्रक्षेपेण शीतं न भवति, प्रत्युताधिकं दीप्यते, ज्वालास्ततो निस्सरन्ति, तथैव प्रियोक्तयः कोपकषायितचेतसं शिशुपालं शान्तं न करिष्यन्ति, किन्त्वधिकं प्रकोपयिष्यन्ति, अतो दण्ड्य एव सः ।

अल०—उपमा ।

**गुणानामायथातथ्यादर्थं विप्लावयन्ति ये ।**
**अमात्यव्यञ्जना राज्ञा दूष्यास्ते शत्रुसञ्ज्ञिताः ॥२६॥**

अ०—ये गुणानाम् आयथातथ्याद् अर्थं विप्लावयन्ति अमात्यव्यञ्जनाः शत्रुसञ्ज्ञिताः ते राज्ञा दूष्याः ।

व्याक०—अमात्यानां व्यञ्जनं येषां ते अमात्यव्यञ्जनाः, ' अवर्ज्यो बहुव्रीहिर्व्यधिकरणो जन्माद्युत्तरपद " इति वामनवचनात् समास इति मल्लिनाथः । अमात्येति अमाशब्दाद् " अव्ययात्त्यप् " । शत्रुरिति सञ्ज्ञा सञ्जाता येषां ते शत्रुसञ्ज्ञिताः, तारकादित्वादितच् । आयथातथ्यात्-तथात्वमनतिक्रम्येति यथातथम्, यथार्थेऽव्ययीभावः, ततो नञ्समासे, ब्राह्मणादित्वात् ष्यञ्, " यथातथयथापुरयोः पर्यायेण " इति विकल्पान्नञ्पूर्वपदवृद्धिः । विप्लावयन्ति-प्लवतेर्णिजन्ताल्लट्, अर्थमिति विप्लावनस्य प्रयोज्यकर्म, दूष्याः-दुष् धातोर्णिजन्तात्

" अचो यत् " " दोपो णौ " इत्युपधाया ऊकार । राज्ञामिति " कृत्याना कर्तरि वा " इत्यनेन षष्ठी ।

व्याख्या—ये-अमात्या , गुणानाम्-सन्धिविग्रहादीनाम्, आयथातथ्यान-विपरीतप्रयोगात्, अर्थम्-प्रयोजनम्, विप्लावयन्ति-विनिघ्नन्ति, कार्यहानि कुर्वन्तीति यावत् । अमात्यानाम्-मन्त्रिणाम्, व्यञ्जनम्-चिन्हम्, येषा तथाभूता - केवल पदाधिकारेणामात्यपदव्यपदेश्याः, वस्तुतस्तु स्वकर्तव्यविपरीतमाचरन्त अतएव शत्रुसंज्ञिता -शत्रुनाम्ना निर्दिष्टा , ते-अमात्या , राज्ञाम दूप्या - दूपयितुमर्हा -स्वपदात् प्रच्याव्या , सन्तीतिशेष. ।

भा०—ये सन्धिविग्रहादीनामुपयोग सम्यग् न विजानन्ति, संधियोग्ये विग्रह विग्रहयोग्ये वा संधि विधाय राज्ञा हानि कुर्वन्ति, ते मन्त्रिणो राजभिर्दूरतस्त्याज्या , न ते वस्तुतो मन्त्रिण , अपि तु मन्त्रिलिङ्गधारिणो राज्ञा शत्रव । उद्धवस्य युद्धपक्षविरोधो न मन्तव्यः, युद्धकाल एवायम् इति बलस्य हृदयम् ।

**स्वशक्त्युपचये केचित् परस्य व्यसनेऽपरे ।**
**यानमाहुस्तदासीन त्वामुत्थापयति द्वयम् ॥२७॥**

अ०—केचित् स्वशक्त्युपचये, अपरे परस्य व्यसने यानम् आहु , तद् द्वयम् उदासीन त्वाम् उत्थापयति ।

व्याक०—स्वस्य शक्ते उपचये स्वशक्त्युपचये, उपचय इति चिनोतेरजन्त । आहु -ब्रवीतेर्लटि प्रथमपुरुषबहुवचने रूपम्, " ब्रुव पञ्चानाम् " इति ब्रुव आहादेश । उदासीनम्-उत्पूर्वादास्ते शानच्, " ईदास " इत्याकारस्य ईत्वम् । उत्थापयति-उत्पूर्वात् तिष्ठतेर्णिजन्ताल्लटि रूपम्, पुगागम ।

व्याख्या—केचित्-कामन्दकादयो नीतिशास्त्रविद , स्वशक्ते -स्वसामर्थ्यस्य, उपचये- आधिक्ये, अपरे-†मन्वादय , परस्य शत्रो , ‡व्यसने-विपदि, यानम्-

* प्रायेण सन्तो व्यसने रिपूणा यातव्यमित्येव समादिशन्ति, तथा विपक्षे व्यसनानपेक्षी यमो द्विपन्न मुदित प्रतीयात् इति कामन्दक ।

† तदा यायाद् विगृह्यैव व्यसने चोत्थिते रिपो इति मनु । ‡व्यसनं विपदि भ्रंशे–इत्यमर ।

**सामवादाः सकोपस्य तस्य प्रत्युत दीपकाः ।**
**प्रतप्तस्येव सहसा सर्पिषस्तोयबिन्दवः ॥७५॥**

अ०सकोपस्य तस्य सामवादाः प्रतप्तस्य सर्पिषः तोयबिन्दवइव प्रत्युत सहसा दीपकाः ( भविष्यन्ति )

व्याक०—कोपेन सह वर्तमानस्य सकोपस्य । साम्नो वादाः सामवादाः, दीपकाः-दीपेर्णिजन्तारण्वुल् । तस्येति दीपकशब्दयोगे कर्मणि षष्ठी, सहसेति प्रकृत्यादित्वात् तृतीया ।

व्याख्या—सकोपस्य-अस्मासु क्रुद्धस्य, रूढवैरस्येति वा, तस्य-शिशुपालस्य, सामवादाः-अनुनयोक्तय, प्रतप्तस्य-क्वथितस्य, सर्पिषः-घृतस्य, तोयबिन्दवइव-जलकणाइव, प्रत्युत-वैपरीत्येन-शान्तिं विहाय, सहसा-शीघ्रम्, दीपकाः-प्रज्वलनकारिणः, भविष्यन्ति-त पूर्वापेक्षयाप्याधिकमुत्तेजयिष्यन्तीत्यर्थः । यावत् । सहसा प्रतप्तस्येति मल्लिनाथो योजितवान् ।

भा०—यथा अतितप्तं घृतं जलप्रक्षेपेण शीतं न भवति, प्रत्युताधिकं दीप्यते, ज्वालास्ततो निस्सरन्ति, तथैव प्रियोक्तय कोपकषायितचेतसं शिशुपालं शान्तं न करिष्यन्ति, किन्त्वधिकं प्रकोपयिष्यन्ति, अतो दण्ड्य एव सः ।

अल०—उपमा ।

**गुणानामायथातथ्यादर्थं विप्लावयन्ति ये ।**
**अमात्यव्यञ्जना राज्ञा दूष्यास्ते शत्रुसञ्ज्ञिताः ॥७६॥**

अ०—ये गुणानाम् आयथातथ्याद् अर्थं विप्लावयन्ति अमात्यव्यञ्जनाः शत्रुसञ्ज्ञिताः ते राज्ञा दूष्याः ।

व्याक०—अमात्यानां व्यञ्जनं येषां ते अमात्यव्यञ्जनाः, "अवर्ज्यो बहुव्रीहिर्व्यधिकरणो जन्माद्युत्तरपदः" इति वामनवचनात् समास इति मल्लिनाथः । अमात्येति अमाशब्दाद् "अव्ययात्त्यप्" । शत्रुरिति सञ्ज्ञा सञ्जाता येषां ते शत्रुसञ्ज्ञिताः, तारकादित्वादितच् । आयथातथ्यात्-तथात्वमनतिक्रम्येति यथातथम्, यथार्थेऽव्ययीभावः, ततो नञ्समासे, ब्राह्मणादित्वात् ष्यञ्, "यथातथयथापुरयोः पर्यायेण" इति विकल्पान्नञ्पूर्वपदवृद्धिः । विप्लावयन्ति-प्लवतेर्णिजन्ताल्लट्, अर्थमिति विप्लावनस्य प्रयोज्यकर्म, दूष्याः-दुष् धातोर्णिजन्तात्

" अचो यत् " " दोषो णौ " इत्युपधाया ऊकार । राज्ञामिति " कृत्यानां कर्तरि वा " इत्यनेन षष्ठी।

व्याख्या—ये-अमात्या , गुणानाम्-सन्धिविग्रहादीनाम्, अयथात-यात-विपरीतप्रयोगात्, अर्थम्-प्रयोजनम्, विप्लावयन्ति-विनिघ्नन्ति, कार्यहानि कुर्वन्तीति यावत्। अमात्यानाम्-मन्त्रिणाम्, व्यञ्जनम्-चिन्हम्, येषां तथाभूता-केवल पदाधिकारेणामात्यपदव्यपदेश्याः, वस्तुतस्तु स्वकर्तव्यविपरीतमाचरन्त अतएव शत्रुसंज्ञिता-शत्रुनाम्ना निर्दिष्टा , ते-अमात्या , राज्ञाम , दूष्या-दूषयितुमर्हा -स्वपदात् प्रच्याव्या , सन्तीतिशेष. ।

भा०—ये सन्धिविग्रहादीनामुपयोग सम्यग् न विजानन्ति, सधियोग्ये विग्रह विग्रहयोग्ये वा सधिं विधाय राज्ञा हानिं कुर्वन्ति, ते मन्त्रिणो राजभिर्दूरतस्त्याज्या , न ते वस्तुतो मन्त्रिण , अपि तु मन्त्रिलिङ्गधारिणो राज्ञा शत्रव । उद्धवस्य युद्धपक्षविरोधो न मन्तव्यः, युद्धकाल एवायम् इति बलस्य हृदयम् ।

स्वशक्त्युपचये केचित् परस्य व्यसनेऽपरे ।
यानमाहुस्तदासीन त्वामुत्थापयति द्वयम् ॥४७॥

अ०—केचित् स्वशक्त्युपचये, अपरे परस्य व्यसने यानम् आहु , तद् द्वयम् उदासीन त्वाम् उत्थापयति ।

व्याक०—स्वस्य शक्ते उपचये स्वशक्त्युपचये, उपचय इति चिनोतेरजन्त । आहु -ब्रवीतेर्लटि प्रथमपुरुषबहुवचने रूपम्, " ब्रुव पञ्चानाम् • " इति ब्रुव आहादेश. । उदासीनम्-उत्पूर्वादास्ते शानच्, " ईदास " इत्याकारस्य ईत्वम् । उत्थापयति-उत्पूर्वात् तिष्ठतेर्णिजन्ताल्लटि रूपम्, पुगागम ।

व्याख्या—केचित्-कामन्दकादयो नीतिशास्त्रविद , स्वशक्ते -स्वसामर्थ्यस्य, उपचये- आधिक्ये, अपरे †मन्वादय , परस्य शत्रो , ‡व्यसने-विपदि, यानम्-

---

* प्रायेण सन्तो व्यसने रिपूणा यातव्यमित्येव समादिशन्ति, तथा विपक्षे व्यसनानपेक्षो क्षमो द्विषन्त मुदित प्रतीयात् इति कामन्दक ।

† तदा यायाद् विगृह्यैव व्यसने चोत्थिते रिपो इति मनु । ‡व्यसन विपदि भ्रशे—इत्यमर ।

अभिषेणनम्, आहुः-कथयन्ति । तद् द्वयम्-स्वशक्त्युपचय. शत्रुव्यसन च, उदासीनम्-अनुयुञ्जानम्, त्वाम्, उत्थापयति-उद्योजयति, यानाय प्रेरयतीत्यर्थ., तवोभयमपि यानकारण विद्यतेऽतस्त्वया यातव्यमेवेति भाव. ।

भा०—नीतिविद स्वशक्त्युपचय शत्रुपक्षव्यसन च पृथक् पृथग् यानकारणमाहु । तव तु दैवादुभयमप्यस्ति-इति त्वया योद्धव्यमेव ।

लिलङ्घयिषतो लोकानलङ्घ्यानलघीयस ।
यादवाम्भोनिधीन्रुन्धे वेलेव भवत क्षमा ॥२८॥

अ०—लोकान् लिलङ्घयिषत अलङ्घ्यान् अलघीयस· यादवाम्भोनिधीन् भवत' क्षमा वेलेव रुन्धे ।

व्याक०—यादवा अम्भोनिधय इव तान् यादवाम्भोनिधीन् । अम्भसा निधि , अम्भोनिधिः, लङ्घयितुमिच्छन्ति तान् लिलङ्घयिषतः, णिजन्ताल्लघिधातो सन्, तत शतृप्रत्यय । अलङ्घ्यान्-लङ्घतेर्ण्यत्, अलघीयस -लघुशब्दादीयसुन् । रुन्धे-' रुधिर् आवरणे ' लट् " रुधादिभ्य श्नम् " ।

व्याख्या—लोकान्-जनान्, ( पक्षे भुवनानि च ) लिलङ्घयिषत -लङ्घयितुम्-अतिक्रमितुम् ( पक्षे-स्वजलप्रवाहेण आच्छादयितुम् ) इच्छत -कामयमानान्, स्वय च, अलङ्घ्यान्-अनतिक्रमणीयान् ( पक्षे दुस्तरान ) अलघीयस -सख्यया वलेन च अतिमहतः ( पक्षे अतिबृहदाकारान् ) यादवाम्भोनिधीन्-समुद्रसदृशान् यादवान्-यदुवशीयान्, भवतः-तव ( कृष्णस्य ) क्षमा-तितिक्षा, वेलेव-कूलमिव, रुन्धे-प्रतिबध्नाति ।

भा०—स्वशक्त्युपचयमाह-यादवसैन्यमतिमहत्, न तत् केनाप्यतिक्रमितु शक्यते, स्वय च तच्छत्रुपक्षक्षय कर्तुमिच्छति पर वेला समुद्रमिव भवत क्षमैव तत् तथाकरणाद् व्यावर्तयति, अन्यथेत प्रागेव शत्रून् सहरेत् ।

अल०—उपमा ।

विजयस्त्वयि सेनाया. साक्षिमात्रेऽपदिश्यताम् ।
फलभाजि समीक्ष्योक्ते बुद्धेर्भोग इवात्मनि ॥२९॥

अ०—सेनाया विजय. साक्षिमात्रे फलभाजि त्वयि समीक्ष्योक्ते आत्मनि बुद्धे. भोग इव अपदिश्यताम् ।

व्याक०—समीक्ष्ये उक्तम्, तस्मिन् समीक्ष्योक्ते । समीक्ष्येति सपूर्वादीक्षते· "ऋहलोर्ण्यत्" समीक्षितु योग्यमिति । इनेन सह वर्तमानायाः सेनाया । विजयनकर्तरि षष्ठी । विजय -जयतेरजन्त । उक्ते कर्मणि प्रथमा । साक्षिण्येव इति साक्षिमात्रे-मयूरव्यसकादित्वान्नित्यसमास । फल भजति तस्मिन् फलभाजि, "भजो ण्वि" । अपदिश्यताम्-अपपूर्वाद् दिशे कर्मणि लोट् । लोकैरिति तत्कर्तृपदमध्याहरणीयम् । त्वयीत्यधिकरणे सप्तमी ।

व्याख्या—सेनाया -सैन्यस्य, विजय, साक्षिमात्रे-केवल द्रष्टरि ( इद विशेषणमात्मन्यपि योज्यम् ) फलभाजि-फलभोक्तरि, त्वयि-भवति ( कृष्णे ) *समीक्ष्योक्ते-साख्यशास्त्रप्रतिपादिते, आत्मनि-पुष्करपलाशवन्निर्लिप्ते अकर्तरि पुरुषे, बुद्धे भोगइव-बुद्धिकर्तृकसुखाद्यनुभवइव, अपदिश्यताम्-व्यवह्रियताम् ।

भा०—साख्यदर्शने बुद्धिरेव वस्तुतः कर्त्री सुखदु.खयोरनुभवित्री च, पुरषस्तु नित्यशुद्धबुद्धमुक्तस्वभाव कर्तृत्वादिधर्मशून्यो बुद्धे· साक्षिमात्रम्, असङ्गो ह्यय पुरुष इति श्रुते । परमेव सर्वथा तटस्थेऽपि पुरुषे यथा सुखदु·-खादयो बुद्धिधर्मा अह सुखी दु खीत्यादिना व्यपदिश्यन्ते, तथैव हे कृष्ण ! यादवसेना शिशुपाल विजेष्यते, पर स विजय तटस्थस्यापि तवैव व्यपदेक्ष्यते, नृत्यजयपराजययो स्वामिगम्यत्वात्, तथा चाक्लेशेनैव विजयलाभावसरमेतं मास्मोपेक्षिष्ठाः ।

अल०—उपमा ।

हते हिडिम्बरिपुणा राज्ञि द्वैमातुरे युधि ।
चिरस्य मित्रव्यसनी सुदमो दमघोषजः ॥६०॥

अ०—युधि द्वैमातुरे राज्ञि हिडिम्बारिपुणा हते ( सति ) चिरस्य मित्रव्यसनी दमघोषज सुदम ।

व्याक०—द्वयोर्मात्रोः अपत्ये पुसि द्वैमातुरे, "मातुरुत् सख्यासभद्रपूर्वाया." इत्यण् उकारश्चान्तादेश, "तद्धितार्थोत्तरपदसमाहारे च" इत्यनेन समास । मित्रस्य व्यसनमस्यास्तीति मित्रव्यसनी, "अत इनिठनौ" युधि-युध्यते भावे क्विप् । दमघोषाज्जात दमघोषज, "पञ्चम्याम् अजातौ" इति

* साख्य समीक्ष्यन्—इत्यमर ।

जनेर्ड । सुदम -सुपूर्वाद् दमधातो खल् । भवतेति तत्कर्तृपदम् अध्याहरणीयम् ।

व्याख्या—युधि-सङ्ग्रामे, द्वैमातुरे द्वयो मात्रोरपत्ये जरासन्धे, राज्ञि, हिडिम्बस्य-तन्नामकस्य दैत्यस्य, रिपुणा-शत्रुणा, भीमेन, हते-मारिते सति, चिरस्य-चिरकालेन, मित्रस्य-सुहृद , ( जरासन्धस्य ) व्यसनम् भ्रश , सोऽस्यास्तीति, तथाभूत , दमघोषज -दमघोषसुतः शिशुपाल , सुदम -सुखेन दमितु शक्यते, भवतेतिशेष ।

भा०—शत्रुव्यसनमाह-मगधेश्वरो जरासध शिशुपालस्य मित्रमासीत् स च भीमेन युद्धे हत । अतोऽसौ मित्रव्यसनाक्रान्तत्वादिदानीं सुखेन पराभवितु शक्यते ।

अल०—काव्यलिङ्गम् ।

**नीतिरापदि यद् गम्य परस्तन् मानिनो ह्रिये ।**
**विधुर्विधुन्तुदस्येव पूर्णस्तस्योत्सवाय स ॥६१॥**

अ०—पर आपदि गम्य इति यत् तत् मानिन ह्रिये नीतिः ( अस्ति ) पूर्ण स तस्य, विधुन्तुदस्य विधुरिव, उत्सवाय ( कल्पते )

व्याक०—विधु तुदतीति तस्य विधुतुदस्य, विध्रूपपदात् तुदते. " विध्वरुषोस्तुदः" इत्यनेन खश्, उपपदसमास, खित्वान्मुम् । उत्सवसम्बन्धे षष्ठी । गम्य गमेर्यत् । ह्रिये-ह्रीधातो क्विप्, पूर्ण -पूरयतेःक्तान्तम् । उत्सवाय-उत्सूते हर्षमिति षूङ् धातो " ऋदोरप् ", क्लृपिमध्याहृत्य " क्लृपि सपद्यमाने च " इत्यनेन चतुर्थी । आपदि-सति सप्तमी ।

व्याख्या—पर -शत्रु , आपदि-विपत्तौ सत्याम्, गम्य-गमनार्ह -अभिषेणयितव्य , इति यत्, तत्-शत्रोरापदि गमनम्, मानिन -शौर्याभिमानिन , ह्रियेलज्जायै-लज्जामुत्पादयितुम्, नीति , अस्ति । पूर्ण -सर्वथा शक्तिसम्पन्नः, (चन्द्रपक्षे पूर्णमण्डल ) स -शत्रु , तस्य-मानिन , विधुतुदस्य-राहो, विधुरिव-चन्द्रो यथा, तथा *उत्सवाय-महाय अमर्षाय वा, कल्पते इतिशेष । मल्लिनाथस्तु पर आपदि गम्य नीति इति यत् इत्यादि योजयित्वा व्याख्यातवान् ।

---

* उत्सेकामर्षयोरिच्छा प्रसवे मह उत्सव इत्यमर , उत्सवो मह उत्सेक इच्छाप्रसवकोपयो.-इति मेदिनी ।

भा०—स्वशक्त्युपचये परस्य व्यसने वा अभिषेणन कर्त्तव्यमिति पूर्व-मुक्तम्, तत्रोत्तरपक्षोऽभ्युपेत्यवादेनोक्त, वस्तुतस्तु प्रथमपक्ष एव मानिनामिष्ट, यत आपदाक्रान्तः शत्रुरभिषेणनीय इति नायं शूराणा पन्था., प्रत्युत विपन्नाक्रमणे शूराणा लज्जा स्यात्, स्वयं मृतस्य मारणे किं शौर्यम् । सर्व-शक्तिसम्पन्न शत्रुरेव शौर्याभिमानिना हर्षहेतु, तत्रैव ते पराक्रमन्ते यत शक्तिमत शत्रोरेव विजये ख्यात्यादिलाभसंभव । अथवा शक्तिसम्पन्न एव शत्रु शूराणामनर्षविषयो भवति, न तु विपदाक्रान्तो निर्वल, यथा राहु. पौर्णमास्या पूर्णमण्डलनेव चन्द्रमस ग्रसते, न तु तिथ्यन्तरेषु क्षीणम्, तद्वत् । तथा च साम्प्रत बलिनो वयम्, बलवतामस्माक शिशुपालोऽभियातव्य एव ।

अल०—वैधर्म्यविधया विशेषेण सामान्यस्य समर्थनादर्थान्तरन्यास । उपमा च । अत्र मानिनो राहूपमापकृष्टा ।

अन्यदुच्छृङ्खल सत्त्वमन्यच्छास्त्रनियन्त्रितम् ।
सामानाधिकरण्य हि तेजस्तिमिरयो कुत ॥६२॥

अ०—उच्छृङ्खल सत्त्वम् अ यत् ( अस्ति ) शास्त्रनियन्त्रित ( सत्त्वम् ) अन्यद्, ( अस्ति ) हि तेजस्तिमिरयोः सामानाधिकरण्य कुत ? ( सभवति ) ।

व्याक०—शृङ्खलाम् उत्क्रान्तम् उच्छृङ्खलम्, प्रादिसमास । शास्त्रेण नियन्त्रित शास्त्रनियन्त्रितम् । निपूर्वाद् यन्त्रयते. क्तान्तम् । तेजश्च तिमिर च, तयो तेजस्तिमिरयो. । सामानाधिकरण्यसम्बन्धे षष्ठी । समानम् अधिकरण ययो, तयोर्भाव सामानाधिकरण्यम्, बहुव्रीहेर्भावे ष्यञ्, प्रथमान्तम् । अन्यत्—सो "अद्ड्तरादिभ्य पञ्चभ्यः" इत्यनेनाद्डादेश । कुत'-किंशब्दात्तसिल्, किम कुरादेश । सत्त्वमित्यध्याहृतास्तिक्रियाया कर्तृपद प्रथमान्तम् ।

व्याख्या—उच्छृङ्खलम्-अतिक्रान्तबन्धनम्-स्वतन्त्रम्-प्रसह्य परपीडनक्षमम्, सत्त्वम्-बलम्, अन्यद्-भिन्नम्, अस्ति । शास्त्रेण-मन्वादिना, नियन्त्रितम्—परव्यसनादावेवाभियान कर्तव्यमित्येव परिस्थित्यनुरोधेन नियमितम्, ( उदाहृतम् इति मल्लिनाथ ) सत्त्वम्, अन्यद्, अस्ति । अनयो पूर्वस्य निरपेक्षत्वाद्, अपरस्य च शत्रुव्यसनसापेक्षत्वाद् महदन्तरमस्ति । नेमे परस्पर

विरुद्धे समानविषयत्वेन प्रतिपादयितु शक्येते । हि-यत , तेजस्तिमिरयोः-प्रकाशतमसो., सामानाधिकरण्यम्-एकाश्रयत्वम्, कुत -परस्परविरोधाद् न सभवतीत्यर्थ ।

भा०—प्रसह्य परपीडनक्षम बल भिन्नमेव, तद्वता कृते 'इदानीं शत्रुर्यातव्य , इदानीं न' इति न कश्चन नियम । सर्वदैव ते शत्रुमभिषेणयितु शक्नुवन्ति । परव्यसनकाले प्रयोगयोग्य मन्वाद्युदाहृत बल तु भिन्नम्, साधारणत्वेन तस्य प्रबलशत्रुपीडनाक्षमत्वात् । प्रकाशतमसोरिव परस्पर-विरुद्धयोरनयोरेकाश्रयत्व न घटते । अयं स्फुटो भाव -बलवत शत्रोरभियाने 'तदा यायाद् विगृह्यैव व्यसने चोत्थिते रिपो' इति व्यसनग्रस्ते रिपावभियान प्रतिपादयद् मनुवचन विरुध्येतेत्यपि न शङ्कनीयम्, कुतः ? ये स्वय प्रशस्तबलहीना शत्रु पराभवितुमक्षमास्तेषा कृते मनुवचनमस्ति । ये तु प्रसह्य परपीडनक्षमाः, तेषा कृते तु 'तथा विपक्षे व्यसनानपेक्षी क्षमो द्विषन्तं मुदित प्रतीयात्' इति कामन्दकेन व्यसनानपेक्षयैवाभिषेणनं प्रतिपादितम् । तथा च यथा विभिन्नशाखाध्येतृविषयत्वेन उदितानुदितहोमयोः परस्पर विरोधो न बाधक । तथैव भिन्नविषयत्वेन व्यसनाव्यसनयोरभिषेणान प्रतिपादयतोर्मनु-कामन्दकवचसोर्विरोधोपि न बाधक. ।

अल०—पूर्वार्धे विषम । उत्तरार्धे दृष्टान्त ।

इन्द्रप्रस्थगमस्तावत् कारि मा सन्तु चेदय ।
आस्माकदन्तिसान्निध्याद् वामनीभूतभूरुहः ॥६३॥

अ०—( अस्माभि ) इन्द्रप्रस्थगम मा कारि तावत्, चेदय आस्माक-दन्तिसान्निध्याद् वामनीभूतभूरुहः सन्तु ।

व्याक०—इन्द्रप्रस्थे गम इन्द्रप्रस्थगम । गम इति गच्छते "ग्रहवृदृ" इत्यबन्त., करोते उक्ते कर्मणि प्रथमा । अस्माभिरिति तत्कर्तृपदमध्याहार्यम् । आस्माकाना दान्तिना ( कर्म० ) सान्निध्याद् आस्माकदन्तिसान्निध्यात् । आस्माकेति अस्माकमिमे इति विग्रहे अस्मच्छब्दात् "युष्मदस्मदोरन्यतरस्या खञ् च" इत्यनेन अण् । "तस्मिन्नणि च युष्माकास्माकौ" इत्यस्मकादेश' । सन्निधि. एव सान्निध्यम्, स्वार्थे ष्यञ् , सन्निधिशब्दो दधाते किप्रत्ययान्त. ।

हेतौ पञ्चमी । वामनीभूताः भूरुहः येषु ते वामनीभूतभूरुह । वामनीभूता इति वामनशब्दात् भवतेर्योगे च्विः । भूरुह इति भुवि रोहन्तीति रुहे क्विप् । मा कारि–करोतेः कर्मणि लुङ् । माङ्योगेऽडागमाभाव । चेदीना निवासो जनपद चेदय, 'तस्य निवास." इत्यण "जनपदे लुप्" इत्यनेन लुप् । 'लुपि युक्तवद् व्यक्तिवचने" । सन्तु-अस्ते प्राप्तकाले विधौ वा लोट् । तावदित्यव्यय परिच्छेदे ।

व्याख्या—अस्माभि, इन्द्रप्रस्थे-दिल्लीतिप्रसिद्धाया युधिष्ठिरराजधान्याम् गन -युधिष्ठिरयज्ञे सन्निधातु गमनम्, मा कारि तावत्-न कर्तव्य एव । इदानीं तु चेदय -चेदिक्षत्रियाणा निवासो जनपद -शिशुपालराष्ट्रम्, आस्माकानाम्-अस्मदीयानाम्, दन्तिनाम्-हस्तिनाम्-हस्तिवलस्य, सान्निध्यात्-सन्निधानाद्, वामनीभूता -शाखाभङ्गात् खर्वीभूता, भूरुह -वृक्षा, यत्र तथाभूता., सन्तु-भवन्तु ।

भा०—युधिष्ठिरयज्ञे सन्निधानाय इन्द्रप्रस्थयात्रा न कर्तव्या, इदानीं तु अभिषेणयतानस्माक हस्तिवलेन निखिलस्य चेदिराष्ट्रस्य उद्यानादिविनाशेन वस एव प्राप्तकाल ।

अल०—प्रस्तुता चेदियात्रा प्रस्तुतेन स्वकार्येण गम्यत इति पर्यायोक्तालङ्कृति ।

**निरुद्धवीवधासारप्रसारा गा इव व्रजम् ।**
**उपरुन्धन्तु दाशार्हा पुरीं माहिष्मतीं द्विषः ॥६४॥**

अ०—दाशार्हा. निरुद्धवीवधासारप्रसारा (सन्त) माहिष्मतीं पुरीं द्विषः व्रज गाइव उपरुन्धन्तु ।

व्याक०—दाशान् अर्हन्ति दाशार्हा, अर्हते. कर्मण्यण्, उपपदसमास । यद्वा दशार्हेति यादवदेशसज्ञा, दशार्हाणामिमे दाशार्हा, शैषिकोऽण् । यद् वा दशार्हो यादवविशेष, तस्यापत्यानि दाशार्हा, अण् । निरुद्ध वीवधश्च, आसारश्च प्रसारश्च (द्वन्द्व०) यै (वहु०) ते निरुद्धवीवधासारप्रसारा । पक्षे निरुद्धौ वीवधानाम् आसारप्रसारौ (द्वन्द्व०, ष० तत्पु०) यै (वहु०) ते इति विग्रहीतव्यम् । माहिष्मतीम्-महिषाणा निवास इति महिषशब्दात्

"महिषाच्चेति वक्तव्यम" इति इमतुपि महिष्मान्, तत्र भवा पुरी माहिष्मती । भवार्थेऽण् । व्रजम-व्रजन्त्यस्मिन्निति विग्रहे "गोचरसञ्चर" इत्यनेन व्रजेर्घान्तो निपात्यते । पुरीव्रजौ रुधेरकथितकर्मणी, द्विषो गावश्च प्रधानकर्माणि । उपरुन्धन्तु-रुधेराशंसाया लोट् ।

व्या०—दाशार्हा -यादवा , निरुद्धा -वारिता , *वीवध -अन्नादेःप्राप्ति , आसार -सुहृद्बलम्, प्रसार -तृणकाष्ठादेःप्रवेश , यै तथाभूता , व्रजपक्षे निरुद्धो, वीवधानाम् पर्याहारापरपर्याय उभयतो बद्धशिक्य स्कन्धवाह्य काष्ठ (बहंगी इति लोके प्रसिद्धम्) वीवध† उच्यते, तेषाम्, आसारप्रसारौ-प्रवेशनिर्गमौ, यैस्तथाभूता सन्त , माहिष्मतीं पुरीम्-माहिष्मत्या नगर्याम्-चेदिराजस्य राजधान्याम्, द्विष -शत्रून्, ‡व्रजम्-व्रजे-गोष्ठे, गाइव-धेनूरिव, उपरुन्धन्तु-आवृणवन्तु ।

भा०—यादवाना सेना माहिष्मतीं शत्रुराजधानीं परितस्तथावृणोतु यथा शत्रवस्तत्रैव निरुद्धास्तिष्ठन्तु । न च बहिरागन्तु शक्नुयु । किं च सर्वाणि प्रवेशद्वाराणि तथा रोद्धव्यानि यथा तत्र भोजनसामग्री, तत्साहाय्यार्थं सैन्यम्, पशूना कृते घास., काष्ठादिकं चावश्यक वस्तु किमपि कथमपि प्रवेशयितु न शक्येत। यथा रात्रौ दोहानन्तर गावो गोष्ठे प्रवेश्य निरुध्यन्ते, न च तत्र तदानीं क्षीराद्याहरणार्थं विहङ्गिकावाहकाना प्रवेशनिर्गमौ भवत , तद्वत । तथा सति बुभुक्षादिपीडित शत्रु· सुजय स्यात् ।

अल०—श्लेषानुप्राणितोपमा । गवोपमया शत्रूणामतिकातरत्वात् सुजयत्व व्यज्यते । दाशार्हा इति विशेष्य वय दाशान् ( दासान् ) अर्हाम इति वयमेव प्रभुत्वयोग्या , चेदिराज्येऽस्माकमेव प्रभुत्वमुचितमिति व्यनक्ति ।

यजता पाण्डव स्वर्गमवत्विन्द्रस्तपत्विन ।
वय हनाम द्विषत. सर्व स्वार्थं समीहते ॥ ६२ ॥

अ०—पाण्डव यजताम्, इन्द्र स्वर्गम् अवतु, इन. तपतु, वय द्विषत· हनाम, सर्व स्वार्थं समीहते ।

---

* धान्यादेर्वीवध प्राप्तिरासारस्तु सुहृद्बलम्, प्रसारस्तृणकाष्ठादे प्रवेश , इति वैजयन्ती। † विवधो वीवधो भारे पर्याहाराध्वनोरपि इति हेमचन्द्र । ‡ व्रजः स्यात् गोकुल गोष्ठम् इति वैजयन्ती ।

व्याक०—पाण्डोरपत्य पाण्डव , पाण्डुशब्दात् अपत्यार्थेण् । यजताम्, अवतु, तपतु, हनाम-यजत्यवतितपतिहन्तिभ्य प्राप्तकाले लोट् । द्विपत.-द्विषेः शत्रन्तम्, हन्ते कर्मणि द्वितीया । स्वार्थम्, स्वस्मा इति स्वार्थम्, स्वस्यार्थं वा स्वार्थम् । समीहते-सपूर्वादीहतेर्लट् ।

व्या०—पाण्डव -पाण्डुपुत्र युधिष्ठिर , यजताम् यज्ञ करोतु, इन्द्र -देव-राट्, स्वर्गम्, अवतु-रक्षतु, इन -सूर्य . तपतु-प्रकाशताम, वयम्, द्विषत -शत्रून्, हनाम-मारयाम, सर्व लोक , स्वार्थम्-स्वस्मै-आत्मने-आत्मप्रयोजनसाधनायेति यावत् (अथवा स्वार्थम्-स्वस्यार्थम्-स्वप्रयोजनम्, उद्दिश्येतिशेष ) समीहते-चेष्टते। मल्लिनाथस्तु 'स्वार्थम्-स्वप्रयोजनम्, समीहते-अनुसन्धत्ते' इति व्याचख्यौ ।

भा०—जगति सर्वो लोक स्वार्थसिद्धये यतते, इन्द्रस्य स्वर्गरक्षणम्, सूर्यस्य तपन च स्वार्थयुक्तमेव, तथैव युधिष्ठिरस्य राजसूययागोऽपि स्वार्थमुद्दिश्यैव नास्मदर्थ परार्थो वा । तथा च यदि सर्वो लोकः स्वार्थसाधनव्यग्र तर्हि वयमपि कुतो न स्वशत्रून् निहत्य स्वार्थं साधयेम । इन्द्रादिसमानयोगक्षेमो न पार्थ इति भाव ।

अलं०—सामान्येन विशेषसमर्थनादर्थान्तरन्यास. ।

**प्राप्यता विद्युता सम्पत् सम्पर्कादर्करोचिषाम् ।**
**शस्त्रैर्द्विषच्छिरश्छेदप्रोच्छलच्छोणितोक्षितै ॥ ६६ ॥**

अ०—द्विषच्छिरश्छेदप्रोच्छलच्छोणितोक्षितै शस्त्रै अर्करोचिषा सम्पर्काद् विद्युता सम्पत् प्राप्यताम् ।

व्याक०—द्विषता शिरासि, तेषा छेद ,तेन प्रोच्छलता शोणितेन उक्षितै द्विषच्छिरश्छेदप्रोच्छलच्छोणितोक्षितै । द्विषत्-व्याख्यातम् । छिदेर्घञि च्छेद । प्रोच्छलत्-'प्र' 'उत्' एतत्पूर्वात् छलते शतृप्रत्यय । उक्षितै -उक्षते कर्मणि क्तान्तम् । शस्त्रै -शस्धातो "दाम्नीशस्" इति करणे ष्ट्रन् कर्तरि तृतीया । सम्पर्काद्-सपूर्वात् पृचीधातोर्घञ्, हेतौ पञ्चमी। विद्युताम्-विपूर्वाद् द्योतते क्विप्, प्राप्यताम्-प्रपूर्वात् आप्नोते कर्माणि लोट् । सम्पदिति कर्मणि प्रथमा ।

व्या०—द्विषताम्-शत्रूणाम, शिरसाम्-मस्तकानाम्, छेदेन-कर्तनेन, प्रो-

चञ्चलता-वेगवाहिनया उपरि गच्छता-उत्पतद्वारेण, शोणितेन-रुधिरेण, उचितैः - प्रसिक्तैः, शस्त्रैः -खड्गैः , अर्कस्य-सूर्यस्य, रोचिषाम्-कान्तीनाम्-किरणानामिति यावत्, सम्पर्कात्-सम्बन्धात्, विद्युताम्-विद्योतनवतीनां तडिताम्, सम्पत्-शोभा, प्राप्यताम्-अधिगम्यताम् ।

भा०—अस्माकं सैनिकाः शत्रूणां शिरांसि च्छिन्दन्तु, शत्रुशिरःक्ताः सैनिकानामसयः सूर्यकिरणसम्पर्केण विद्योतमाना विद्युत इव भान्तु ।

अलं०—खड्गेषु विद्युत्सम्पदोऽयोगादुपमापर्यवसाने निदर्शना, अनुप्रासश्चमत्कारी, बलभद्रगतः क्रोधः स्थायी प्राधान्येन व्यज्यते ।

**इति संरम्भिणो वाणीर्बलस्यालेख्यदेवताः ।**
**सभाभित्तिप्रतिध्वानैर्भयादन्ववदन्निव ॥ ६७ ॥**

अ०—इति संरम्भिणः बलस्य वाणीः आलेख्यदेवताः सभाभित्तिप्रतिध्वानैः भयाद् अन्ववदन् इव ।

व्याक०—आलेख्यानां देवताः आलेख्यदेवताः, अथवा आलेख्यरूपाः देवताः आलेख्यदेवताः । आलेख्येति आङ्पूर्वाद् लिखतेर्ण्यत् । देवता-देवशब्दात् स्वार्थे तल् । सभायाः भित्तीनां प्रतिध्वानैः सभाभित्तिप्रतिध्वानैः । प्रतिध्वनिः-प्रतिपूर्वाद् ध्वनेर्घञ् । करणे तृतीया, प्रकृत्यादित्वाद् वा, प्रतिध्वनिरूपमनुवादमकुर्वन्नित्यर्थः । संरम्भिणः -संरम्भशब्दाद् "अत इनिठनौ" । संरम्भ इति रभेर्घञन्तम् । अन्ववदन्-अनुपूर्वाद् वदतेर्लङ् । भयाद् हेतौ पञ्चमी ।

व्याख्या—इति-इत्थम्, संरम्भिणः-संरम्भः-क्षोभः, तद्वत -क्षुभितस्य, बलस्य-बलभद्रस्य, वाणीः -वाचः, आलेख्यदेवताः-चित्रलिखितदेवताः, सभायाः-सभाभवनस्य, भित्तीनाम्-कुड्यानाम्, प्रतिध्वानैः-प्रतिशब्दैः, ( प्रतिध्वनिव्याजेन इति मल्लिनाथः ) भयाद्-बलभद्रभीतेः, अन्ववदन्निव-अन्ववोचन्निव, अन्वमोदयन्निवेति यावत् ।

भा०—पूर्वोक्तमुक्त्वा बलदेवस्तूष्णीं बभूव । सभाभित्तिभ्यस्तद्वाचां प्रतिध्वनिरुद्बभूव । तत्र कविरुत्प्रेक्षते, नैष प्रतिध्वनिः, किन्तु सभाभित्तिषु चित्रिताभिर्देवताभिर्बलभद्रभयात् तदुक्तार्थसमर्थनाय तद्वाचामनुवादः कृत इति ।

अल०—उत्प्रेक्षा । संरम्भिण इति भये साभिप्रायमिति परिकरः ।

निशम्य ता शेषगवीरभिधातुमधोक्षज ।
शिष्याय वृहता पत्यु प्रस्तावमदिशद् दृशा ॥ ६८ ॥

अ०—अधोक्षज ता शेषगवी निशम्य वृहता पत्युः शिष्याय अभिधातुम् दृशा प्रस्तावम् अदिशत् ।

व्याक०—अध कृतम् अक्षजम् येन स अधोक्षज, अथवा अक्षजाद् अध अधोक्षज । अक्षजेति अक्षोपपदाद् जनेर्ड । शेषस्य गा. शेषगवी । "गोरतद्धितलुकि" इति टच्, टित्त्वाद्-ङीप् । निशमनकर्मणि द्वितीया । निशम्य व्याख्यातम् । शिष्याय-शास्ते. क्यपि, "शास इदङ्हलो" । सम्प्रदाने चतुर्थी । अदिशत्-दिशेर्लङ् । दृशा करणे तृतीया ।

व्याख्या—अधोक्षज -अध कृतम्, अक्षजम्-इन्द्रियज ज्ञानं येन स - इन्द्रियाणि विनैव नित्यज्ञानवान्, अथवा अक्षजान्-प्रत्यक्षाद्, अध -इन्द्रिया-विषय हरि, ता -पूर्वोक्ताः, शेषस्य-शेषावतारस्य-वलभद्रस्य, †गा.-वाच, निशम्य-श्रुत्वा, वृहता पत्यु -वृहस्पते, शिष्याय, उद्धवायेति यावत् । अभि-धातुम्-कथयितुम्, दृशा-नेत्रसङ्केतेन, ‡प्रस्तावम्-अवसरम्, अदिशत्-अददात् ।

भा०—वलभद्रोक्त श्रुत्वा हरिरुद्धवं स्वमत वक्तु नेत्रसज्ञया प्रैरयत् ।

भारतीमाहितभरामथानुद्धतमुद्धव. ।
तथ्यामुतथ्यानुजवज्जगादाग्रे गदाग्रजम् ॥ ६९ ॥

अ०—अथ उद्धव आहितभराम् तथ्या भारतीम् अनुद्धतम् गदाग्रजम् अग्रे उतथ्यानुजवत् जगाद ।

व्याक०—आहितः भरो यस्या ताम् आहितभराम् । न उद्धतम् अनुद्धतम्, उद्धतमिति हन्ते.क्तान्तम् । गदनक्रियाविशेषणम् । उतथ्यस्य अनुजेन तुल्यम् उतथ्यानुजवत्, "तेन तुल्य क्रिया चेद् वति" । भारतीमिति गदनस्य प्रधानकर्म, गदाग्रजमिति अकथितकर्म ।

व्याख्या—अथ-कृष्णानुज्ञानन्तरम्, उद्धवः, आहितभराम्-अर्थगौरवयुक्ताम्,

---

* कसारातिरधोक्षज इति विष्णुनामस्वमर. ।

† स्वर्गेषुपशुवाग्वज्रदिङ्नेत्रघृणिभूजले लक्ष्यदृष्ट्या स्त्रिया पुसि गौ. इत्यमरः ।

‡ प्रस्ताव स्यादवसर –इत्यमर ।

तथ्याम्-यथार्थाम्, भारतीम्-वाचम्, अनुद्धतम-अनुच्छृङ्खलम् ( अगर्वितमिति मल्लिनाथ ) यथा स्यात् तथा, शान्त्येतियावत्, गदाग्रजम्- गद -कृष्णानुज तस्य अग्रजम्-ज्येष्ठ कृष्णम्, अग्रे-पुर., कृष्णाभिमुखीभूय, उत्तथ्यस्य-तत्सञ्ज्ञकस्य महर्षे , अनुज -बृहस्पति , तद्वत्, जगाद-उवाच ।

भा०—भावार्थ सुगम ।

अल०—उतथ्यानुजवदिति ताद्धितगा/युपमा, अनुप्रासश्चमत्कारी ।

**सम्प्रत्यसाम्प्रत वक्तुमुक्ते मुसलपाणिना ।**
**निर्धारितेऽर्थे लेखेन खलूक्त्वा खलु वाचिकम् ॥७०॥**

अ०—सम्प्रति मुसलपाणिना उक्ते सति वक्तुम् असाम्प्रतम्, अर्थ लेखेन निर्धारिते ( सति ) वाचिकम् खलु उक्त्वा खलु ।

व्याक०—मुसल पाणौ यस्य तेन मुसलपाणिना । "प्रहरणार्थेभ्य. परे निष्ठासप्तम्यौ" इति पाणिशब्दस्य परनिपातः । वक्तुमिति अर्हार्थसाम्प्रत-शब्दयोगे वचेस्तुमुन्। व्याहृतार्था वाग् वाचिकम्- वाचो व्याहृतार्थायाम्" इति ठक् । खलु उक्त्वा-†खलुरय प्रतिषेधार्थ , तद्योगे वचे 'अल खल्वो प्रतिषेधयो प्राचा क्त्वा" । अत्र यद्यपि 'न पादादौ खल्वादय ' इति निषेधात् पादादौ खलुशब्दप्रयोगो नोचित , तथापि उक्तनिषेधस्य उद्वेजकाभिप्रायत्वात्, नञर्थखलुशब्दस्य अनुद्वेजकत्वाद् नञ्वदेव पादादौ प्रयोगो न दुष्यति–इति मल्लिनाथ । द्वितीयखलुपद वाक्यालङ्कारे ।

व्याख्या—सम्प्रति-इदानीम्, मुसलपाणिना-मुसलधारिणा बलभद्रेण, उक्ते, सति, वक्तुम्, असाम्प्रतम्-न युज्यते । अर्थे-वाच्ये, लेखेन-लेखद्वारा-पत्रेण, निर्धारिते-निश्चिते सति, वाचिकम्-सदेशवचनम्, उक्त्वा खलु-न वक्तव्यम् , खलु ।

भा०—उद्धव आह-यथा लेखद्वाराभिप्रायावगतौ सत्या वाचिकश्रवण निष्प्रयोजन भवति । तथैव बलभद्रेण कर्तव्यार्थे निर्धारिते न मद्वचनस्य प्रयोजन किमप्यवशिष्यते ।

* गद कृष्णानुजे रोगे–इति हेम ।

† निषेधवाक्यालङ्कारजिज्ञासानुनये खलु–इत्यमरः ।

अल०—वाक्यार्थयोर्बिम्बप्रतिबिम्बभावाद् दृष्टान्तालङ्कार । मुसलपाणिनेति पद 'तीव्रप्रकृतेर्बलभद्रस्याग्रे कथनप्रयासो निष्फल' इति बलभद्रनिन्दामवगमयतीति व्याजस्तुतिरपि ।

**तथापि यन्मय्यपि ते गुरुरित्यस्ति गौरवम् ।**
**तद् प्रयोजककर्तृत्वमुपैति मम जल्पत ॥७१॥**

अ०—तथापि ते मयि अपि गुरु इति यद् गौरवम् अस्ति, तद् जल्पत मम प्रयोजककर्तृत्वम् उपैति ।

व्याक०—प्रयोजकस्य कर्तु (कर्म०) भाव प्रयोजककर्तृत्वम् । प्रयोजकेति युजेर्ण्यन्ताद् ण्वुल् । जल्पत -जल्पे शत्रन्तम्, ते-गौरवसम्बन्धे षष्ठी । मयि-विषयसप्तमी । मम-कर्तृत्वसम्बन्धे षष्ठी ।

व्याख्या—तथापि-बलभद्रेण कर्तव्यार्थे निर्णीतेऽपि, ते-तव, मयि अपि-(बलभद्र इव) मद्विषयेऽपि, गुरु -पूज्य इति यद्, गौरवम्-आदर, अस्ति तद् गौरवम्, जल्पत-भाषमाणस्य, मम, प्रयोजककर्तृत्वम्-प्रेरकत्वम्, उपैति-प्राप्नोति, मा वक्तु प्रेरयतीत्यर्थः ।

भा०—यद्यपि बलभद्रेणोक्ते मद्वचनमनवसरग्रस्तम्, तथापि यत् त्व वयसा विद्यया वा ज्येष्ठोयामिति बुद्ध्वा बलभद्रस्येव ममापि वचन सादर श्रोतुमुत्कण्ठसे, तदेव मा वक्तु प्रेरयति, अतो वक्ष्यामि । न हि पण्डितैः सादर पृष्टस्य विशेषज्ञस्याज्ञवत् तूष्णींभावो युक्त ।

अल०—गौरवस्य भाषणे हेतुत्वात् काव्यलिङ्गम् ।

**वर्णैः कतिपयैरेव ग्रथितस्य स्वरैरिव ।**
**अनन्ता वाङ्मयस्याहो गेयस्येव विचित्रता ॥७२॥**

अ०—कतिपयै एव वर्णै स्वरैरिव ग्रथितस्य वाङ्मयस्य गेयस्येव विचित्रता अनन्ता (अस्ति) अहो ।

व्याक०—न अन्तो यस्या सा अनन्ता । वाङ्मयस्य-वाचा विकार इति वाक्शब्दाद् 'एकाचो नित्यम्" इति मयट् । स्वार्थे मयडिति मल्लिनाथ । गेयस्य-गीयत इति गैधातो कर्मणि "अचो यत्" । उभयत्र विचित्रतासम्बन्धे षष्ठी । वर्णे, स्वरै ग्रन्थनकरणे तृतीया

व्याख्या—कतिपयैः-परिमितैः, स्वल्पसंख्यकैरेव, वर्णैः-अकारादिभिः मातृकाक्षरैः, स्वरैरिव-षड्जादिभिः (सप्तभिः) स्वरैर्यथा, ग्रथितस्य-गुम्फितस्य, वाङ्मयस्य-शास्त्रस्य, शब्दजातस्य वा, गेयस्येव-गानस्य यथा, विचित्रता-विविधता-भेदः, अनन्ता-अपरिमिता, अस्ति, अहो आश्चर्यम् ।

भा०—ननु रामेणैव सप्रपञ्चमभिहिते मदुक्तिरनवकाशेत्याशङ्क्याह—यद्यपि स्वराः षड्जादिभेदेन सप्तैव, परं तदुपनिबद्धं गानं तेषां स्वराणां पौर्वापर्यविपर्ययेण तालजयादिभेदेन च यथानन्तभेदं भवति, तथैव परिमितैरकारादिभिर्वर्णैर्निर्मितं वाङ्मयमप्यनन्तम्, अनेके तत्रावान्तरविशेषाः, न हि ते सर्वे एकेनैव विज्ञातुं शक्याः, कश्चिदेकं कश्चिच्चापरं जानाति । अतो बलभद्रेण साधूक्तेऽपि विशेषान्तराभिधित्सया न मदुक्तिरनवकाशा । तस्य दुरुक्तत्वाद् मयैव वक्तव्यमिति गूढाभिसन्धिः ।

अल०—उपमा ।

बह्वपि स्वेच्छया कामं प्रकीर्णमभिधीयते ।
अनुज्झितार्थसम्बन्धः प्रबन्धो दुरुदाहरः ॥७३॥

अ०—स्वेच्छया प्रकीर्णम् बहु अपि कामम् अभिधीयते, अनुज्झितार्थसम्बन्धः प्रबन्धः दुरुदाहरः ।

व्याक०—न उज्झितः अर्थेन अर्थस्य वा सम्बन्धः यस्मिन् सः अनुज्झितार्थसम्बन्धः । उज्झितः इति उज्झतेः क्तान्तम् । सम्बन्धप्रबन्धौ-बध्नातेर्घञन्तौ । प्रकीर्णम्-किरतेः क्तान्तम् । अभिधीयते-दधातेः कर्मणि लट् । दुरुदाहरः-दुरुपपदाद् उदाहरतेः खल् । स्वेच्छया-करणे तृतीया ।

व्याख्या—स्वेच्छया-स्वप्रतिभानुसारेण, प्रकीर्णम्-असम्बद्धम्, बहु अपि, कामम्-यथेष्टम्, अभिधीयते-उच्यते, किन्तु अनुज्झितः-अत्यक्तः, अर्थसम्बन्धः-पदार्थसङ्गतिः, यत्र तादृशः, प्रबन्धः-सन्दर्भः, दुरुदाहरः-दुर्वचः ।

भा०—भावार्थः सुगमः, रामेण सगतमेवोक्तमिति स्तुतिः, असङ्गतमेवोक्तमिति निन्दा च गम्यते ।

म्रदीयसीमपि घनामनल्पगुणकल्पिताम् ।
प्रसारयन्ति कुशलाश्चित्रां वाचं पटीमिव ॥७४॥

अ०—कुशलाः म्रदीयसीम् अपि घनाम् अनल्पगुणकल्पिताम् चित्रां

वाच पटीमिव प्रसारयन्ति ।

व्याक०—अनल्पैः गुणै कल्पिताम् अनल्पगुणकल्पिताम्, अतिशयेन मृद्वीं म्रदीयसीम्, मृदुशब्दादीयसुन्, "र ऋतो हलादेर्लघोः" इति ऋकारस्य रेफ । घनाम्-"मूर्तौ घन." इत्यनेन निपात्यते । प्रसारयन्ति-सरतेर्णिजन्ताल्लट् ।

व्याख्या—कुशलाः-कृतिन, म्रदीयसीम्-अतिसुकुमाराक्षरामपि (पटीपक्षे लक्ष्णामपि) घनाम्-अर्थगौरववतीम् (पटीपक्षे सान्द्राम्-कदलीदलकल्पाम्) अनल्पै -बहुभि, गुणै -श्लेषादिभि, (पटीपक्षे तन्तुभि ) कल्पिताम्-रचिताम्, चित्राम्-शब्दार्थालङ्कारयुक्ताम् ( पटीपक्षे चित्ररूपयुक्ताम्, अद्भुतस्वरूपा वा ) वाचम्-वाणीम्, पटीमिव-शाटीमिव, प्रसारयन्ति-वितन्वन्ति ।

भा०—यथा कुशलस्तन्तुवायो बहुभिस्तन्तुभि सुकोमलामपि सान्द्रा ( सश्लिष्टसूत्राम् ) चित्ररूपा मनोहरा शाटा वयते, तथैव वाग्मिजन सुकुमाराक्षरामप्यपरिहृतार्थगौरवा श्लेषादिगुणयुक्ताम् उपमानुप्रासादिभिरलंकृता वाणीं ब्रूते, सा हि श्रोतॄणा मनोहारिणी भवति । रामवागप्येवविधेतिस्तुति., नैवमिति निन्दा च गम्यते । अत्र कविना मदीय काव्यमपीदृगेवेति सूचितम् ।

अल०—उपमा ।

**विशेषविदुषः शास्त्र यत्तवोद्ग्राह्यते पुर ।**
**हेतुः परिचयस्थैर्ये वक्तुर्गुणनिकैव सा ॥ ७५ ॥**

अ०—विशेषविदुष तव पुर शास्त्रम् उद्ग्राह्यते ( इति ) यत् सा वक्तु परिचयस्थैर्ये हेतु गुणनिका एव ।

व्याक०—विशेष विद्वान्, तस्य विशेषविदुष, गम्यादिपाठात् द्वितीयासमास इति मल्लिनाथ । विदुष इति विदे शतरि रूपम् । "विदेः शतुर्वसु" । परिचयस्य परिचये वा स्थैर्ये परिचयस्थैर्ये, परिचय इति चिनोते "एरच्" । स्थैर्ये स्थिरशब्दाद भावे ष्यञ् । अधिकरणत्वविवक्षया सप्तमी । उद्ग्राह्यते-ग्रहेर्णिजन्तात् कर्मणि लट्, मयेति तत्कर्तृपदमभ्याहार्यम् । गुणन्येव गुणनिका, गुणनीशब्दात् स्वार्थे क, "केऽण" इति ह्रस्व, अथवा चौरादिकात् गुणयते युचि गुणना, सैव गुणनिका, स्वार्थे कनि ह्रस्व.,

'प्रत्ययस्थात् कात्" इति इत्वम् । सा इत्यत्र विधेयप्राधान्यात् स्त्रीत्वम ।

व्याख्या—विशेषविदुष -विशेषज्ञस्य, तव-भवत , पुर -अग्रे, शास्त्रम-नीतिशास्त्रम्,,*उद्ग्राह्यते-उपन्यस्यते, इति यत् शास्त्रोद्ग्राहणम, सा, वक्तु -उद्ग्राहयितु ,परिचयस्य-ज्ञानस्य, अभ्यासस्य वा, स्थैर्ये-दार्ढ्ये, हेतु -कारणम, †गुणनिका एव-अभ्यासः-पुनरावृत्तिरेव । नान्यत् तस्य किमपि प्रयोजनम् ।

भा०—उद्धवो गर्वं परिहरन्नाह-हेकृष्ण ! त्व स्वय नीतिशास्त्रस्य सर्वान् अवान्तरविशेषान् सम्यग् विजानासि । अत एव यथा ज्ञानदार्ढ्याय अभ्यास-स्थिरीकरणाय वाधीतस्य शास्त्रस्य पुनः पुनरावृत्ति क्रियते, तथैव त्वदग्रे मम नीतिशास्त्रोपन्यासप्रयासोऽपि ज्ञानस्थैर्याय आवृत्तिमात्रम् । न तु तस्य किमपि विशिष्ट प्रयोजनमस्ति ।

**प्रज्ञोत्साहावत स्वामी यतेताधातुमात्मनि ।**
**तौ हि मूलमुदेष्यन्त्या जिगीषोरात्मसपद* ॥ ७६ ॥**

अ०—अतः स्वामी आत्मनि प्रज्ञोत्साहौ आधातु यतेत हि तौ उदेष्यन्त्या जिगीषो आत्मसपद* मूलम् ।

व्याक०—प्रज्ञा च उत्साहश्च प्रज्ञोत्साहौ, प्रपूर्वाद् ज्ञाधातो 'अङ्'। स्वामी "स्वामिन्नैश्वर्ये" इत्यनेन निपात्यते। यतते-यततेर्विधिलिङ्। उदेष्यन्त्या -उत्पूर्वाद् एतेर्लृट्, तस्य शत्रादेश. । सम्पद्विशेषण षष्ठ्यन्तम् । जिगीषोः-जयतेः सन्नन्ताद् उ. ।

व्या०—अत.-अस्मात् कारणात्, स्वामी-प्रभुः, आत्मनि-स्वस्मिन्, प्रज्ञो-त्साहौ-मन्त्रोत्साहशक्ती, आधातुम्-सम्पादयितुम्, यतेत-यत्नमनुतिष्ठेत् , हि-यत., तौ-प्रज्ञोत्साहौ, उदेष्यन्त्या -वर्त्स्यन्त्या -प्रादुर्भविष्यन्त्या वा, जिगीषो -अभ्युदयकामस्य-राज्ञ , आत्मसपद -प्रभुशक्ते., मूलम्-प्रधानकारणम् ।

भा०—सम्प्रति उद्धव स्वमतमाह-प्रभुशक्तिकामेन राज्ञा न केवलमुत्साह-शक्तय एव यतनीयम्, अपि तु मन्त्रशक्तयेऽपि, यत. मन्त्रोत्साहौ मिलित्वैव प्रभुशक्तिमुत्पादयत , न पुनर्व्यस्तौ, तथा च बलभद्रस्य केवलोत्साहवादो न समी-चीनः ।

---

*उद्ग्राहितमुपन्यस्तमितिवैजयन्ती । †अभ्यासे गुणनी योग्या इति त्रिकाण्डशेषः ।

**सोपधाना धियं धीराः स्थेयसीं खट्वयन्ति ये ।**
**तत्रानिशं निषण्णास्ते जानते जातु न श्रमम् ॥ ७७ ॥**

अ०—ये धीरा सोपधाना स्थेयसीं धियं खट्वयन्ति, ते तत्र अनिशं निषण्णा (सन्त) जातु श्रमं न जानते ।

व्याक०-उपधानेन सह वर्तमाना सोपधानाम्, उपधानमिति दधातेर्ल्युड-न्तम् । अतिशयेन स्थिरा स्थेयसीम् । स्थिरशब्दादीयसुन्, "प्रियस्थिर" इति स्थादेश । खट्वा कुर्वन्ति खट्वयन्ति। खट्वाशब्दात् "तत्करोति" इति णिच् । निषण्णाम्-निपूर्वात् सीदते क्तान्तम् "रदाभ्याम्" इति नत्वम्।जानते-जानाते-र्लट्, प्रथमपुरुषबहुवचनम्, "अनुपसर्गाज् ज्ञ" इत्यात्मनेपदम् ।

व्या०—ये धीरा -धीमन्त , सोपधानाम्-उपधानम्-विशेषः, तत्सहिता सविशेषाम्-युक्तियुक्ताम् (खट्वापक्षे उपधानम्-उपबर्ह.-शिरोनिधानम्, तत्सहिताम्) स्थेयसीम्-स्थिरतराम्-अचञ्चलाम्, (खट्वापक्षे दृढतराम्) धियम्-प्रज्ञाम्, खट्व-यन्ति-खट्वा कुर्वन्ति-खट्वामिवाश्रयन्तीतियावत्, ते, तत्र-धीरूपायां खट्वायाम्, अनिशम्-निरन्तरम्, निषण्णाः-स्थिताः सन्त., जातु-कदाचिदपि, श्रमम्-खेदम्, (एकत्र कार्यबाहुल्यजन्यम्-अपरत्र सुरताध्वादिजम्) न जानते-नानुभवन्ति ।

भा०—यथा अध्वगमनादिपरिश्रमश्रान्त पुरुष सोपबर्हां द्रढीयसीं श-य्यामधिशय्य विश्रान्त. श्रान्तिं नानुभवति, तथैव ये पुरुषा सर्वव्यवहारेषु युक्ति-युक्तां स्थिरां प्रज्ञामाश्रयन्ते-अवान्तरविशेषपर्यालोचनया बुद्धिपूर्वकमेव कार्यं विद-धते, न केवलम् उत्साह एव निषीदन्ति, तेषामनेकविधकार्यसंपातेऽपि न जातु मनाङ् मानसिकः श्रम व्याकुलता वा जायते। सुखेन ते कार्यं निर्वाहयन्ति । अत· उत्साहवद् धीरप्याश्रयणीयैव ।

अल०—अत्र धियि आरोप्यमाणाया प्रकृतश्रमापनोदरूपोपकारपर्यन्ततया परिणामालङ्कार इति मल्लिनाथ ।

**स्पृशन्ति शरवत् तीक्ष्णाः स्तोकमन्तर्विशन्ति च ।**
**बहुस्पृशापि स्थूलेन स्थीयते बहिरश्मवत् ॥ ७८ ॥**

अ०—तीक्ष्णा शरवत् स्तोकं स्पृशन्ति, च अन्त. विशन्ति, किन्तु स्थूलेन बहुस्पृशा अपि अश्मवद् बहिः स्थीयते ।

व्याकृ०—शरैस्तुल्य शरवत्, शरशब्दात् "तेन तुल्यं क्रिया चेद् वतिः"। एतेनाश्मना तुल्यमश्मवदिति व्याख्यातम्। स्पृशन्ति, विशन्ति-स्पृशिविशिभ्या लट्। बहु स्पृशति, तेन बहुस्पृशा, बहूपपदात् स्पृशे 'स्पृशोऽनुदके क्विन्"। स्थीयते-तिष्ठतेर्भावे लट्, स्थूलेनेति तत्कर्तरि तृतीया, स्तोकमिति द्वितीयान्त स्पर्शनक्रियाविशेषणम्।

व्या०—तीक्ष्णाः-तीव्रबुद्धय, (पक्षे निशिता) शरवत्-बाणवत्, स्तोकम-अल्पमेव, स्पृशन्ति, च-पुन, अन्त-कार्यस्य अन्तरम्, विशन्ति, अल्पायासेन बहु कार्यम् साधयन्तीत्यर्थ। किन्तु स्थूलेन-मन्देन (पक्षे बृहता च) बहुस्पृशा-व्यापिनापि, अश्मवत्-अश्मना-उपलेन, तुल्यम्, बहिरेव (कार्यस्य-अकार्यस्य च) स्थीयते-स्थिति क्रियते।

भा०—यथा तीक्ष्णो बाणः लक्ष्यस्य अल्पमेव प्रदेश स्पृशति, किन्तु भित्त्वा तदन्त.प्रविशति, तथैव तीव्रबुद्धय परिश्रमं स्वल्पमेव कुर्वते, पर बहु कार्यं साधयन्ति। यथाप्रस्तरो यत्र प्रदेशे पात्यते स तत्र पतितो यद्यपि भूयास प्रदेश व्याप्नोति पर तत्प्रदेशस्य पृष्ठ एव तिष्ठति, नान्तः प्रवेष्टु शक्नोति, तद्वत्। मूपकग्रहणाय शिखरिखनन परिहासास्पद भवतीति भाव।

अलं०—तद्धितगोपमा।

**आरभन्तेऽल्पमेवाज्ञा काम व्यग्रा भवन्ति च।**
**महारम्भा कृतधियस्तिष्ठन्ति च निराकुला ॥ ७६ ॥**

अ०—अज्ञा अल्पम् एव आरभन्ते, च काम व्यग्रा. भवन्ति, कृतधिय. महारम्भाः (भवन्ति) च निराकुलाः तिष्ठन्ति।

व्याकृ०—कृता धी. येषा ते कृतधिय। महान् आरम्भ येषा ते महारम्भाः, आरम्भशब्दो रभेर्घञन्त। निराकुला -न आकुला निराकुला, नञर्थे निरुपसर्गः, अथवा आकुलेभ्य. निर्गता (पृथग्भूताः) निराकुलाः। प्रादिसमास। न जानन्तीत्यज्ञा, जानाते "इगुपधज्ञा" इति क, ततो नञ्समास।

व्या०—अज्ञा-अविशेषविदः-मूढा, अल्पम्-स्तोकमेव, आरभन्ते-उपक्रमन्ते, च-पुन, कामम्-अत्यन्तम्, व्यग्रा-आकुला, भवन्ति। कृता-शिक्षया परिष्कृता, धी-बुद्धि, येषा तथोक्ता विशेषज्ञाः, महान्, आरम्भः-

उद्योगः, येषा तादृशा भवन्ति, च, निराकुलाः-अव्यग्रा , तिष्ठन्ति ।

भा०—पूर्वं तु मूढा लघ्वेव कार्यमारभन्ते, पर तत्रापि ते अधीरा भवन्ति । न च तदारब्ध कार्यं यथायथ समाप्तिं नयन्ति । बुद्धिमन्तस्तु महत्यप्युद्योगे सलग्ना न मात्रयाप्यधैर्य दधते, आरब्ध च कार्यं समाप्तिं नीत्वैव विरमन्ति ।

**उपायमास्थितस्यापि नश्यन्त्यर्था प्रमाद्यत॰ ।**
**हन्ति नोपशयस्थोपि शयालुर्मृगयुर्मृगान् ॥ ८० ॥**

अ०—उपायम् आस्थितस्य अपि प्रमाद्यत अर्था नश्यन्ति । उपशयस्थः अपि शयालु मृगयु मृगान् न हन्ति ।

व्याक०—उपशये तिष्ठतीति उपशयस्थ., तिष्ठतेः क , उपपदसमास । उपशय्यतेऽस्मिन्नित्युपशय , शेते अधिकरणे "एरच्" । आस्थितस्येति क्तान्तकर्मणि द्वितीया । प्रमाद्यत -मदीधातोर्हेतौ शत्रन्तम् । शयालुः-शेतेस्ताच्छील्ये 'आलुच्' । मृगान् यातीति मृगयु -"मृगय्वादयश्च" इत्यौणादिक कुप्रत्ययान्तो निपातः ।

व्या०—उपायम्-साधनम्, आस्थितस्य-आश्रितस्यापि, उपायेनैव कार्यं साधयतोऽपीत्यर्थ॰, प्रमाद्यत -अनवदधतः, पुरुषस्य, अर्था.-प्रयोजनानि, नश्यन्ति-न सिध्यन्तीत्यर्थ । तथाहि-उपशयस्थ -उपशय.-मृगमार्गस्थायिनो व्याधस्य आत्मगुप्तिस्थान गर्तविशेषः, तत्र स्थितोऽपि,शयालु -निद्रालु ,†मृगयु -व्याध , मृगान्, न हन्ति-न मारयितु शक्नोति ।

भा०—यथा मृगाणा यातायातमार्गे आत्मान गोपायित्वा स्थितोऽपि व्याधो यदि चतुष्कर्णो ( सावधानो ) न भवेत् तन्द्राक्रान्त स्यात्, तर्हि न मृगान् हन्तु समर्थो भवति, तथैव साधनवानपि पुरुषो यदि प्रमादी भवति, तर्हि न जातु कार्यसिद्धिं लभते ।

अल०—विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यास ।

**उदेतुमत्यजन्नीहा राजसु द्वादशस्वपि ।**

॰ प्रमादोऽनवधानता इत्यमर ।

† व्याधो मृगवधाजीवो मृगयुर्लुब्धकश्च स —इत्यमरः ।

जिगीषुरेको दिनकृदादित्येष्विव कल्पते ॥ ८१ ॥

अ०—जिगीषु एकः द्वादशसु अपि राजसु आदित्येषु दिनकृदिव ईहाम् अत्यजन् उदेतुम् कल्पते ।

व्याक०—द्वादशसु-द्वौ च, दश च, द्वादश, तेषु । द्वन्द्व । द्व्यधिका दश द्वादश, तेष्विति मध्यमपदलोपी तत्पुरुषो वा । "द्व्यष्टन सङ्ख्यायाम" इति द्विशब्दस्यात्वम् । जिगीषुर्व्याख्यात । आदित्येषु, अदितेरपत्यमिति अदिति-शब्दाद् "दित्यदित्यादित्य" इत्यनेन ण्यप्रत्यय. । दिन करोति दिनकृत, कर्तरि क्विप् । ईहाम्-ईहते "गुरोश्च हल" इत्यप्रत्यय । कल्पते क्ळृपूधातो-र्लट्, "कृपो रो लः" । राजसु, आदित्येषु-निर्धारणे सप्तमी ।

व्या०—जिगीषु -जेतुमिच्छु , एक , अपि द्वादशसु राजसु-अरि-मित्रादीना द्वादशाना राज्ञा मध्ये, द्वादशसु † आदित्येषु-अर्यमादीना द्वादश-सूर्याणा मध्ये, दिनकृदिव दिनकरणे व्याप्रियमाण आदित्य इव, ईहाम्-उद्यो-गम्, अत्यजन्, उद्युञ्जान एवेति यावत्, उदेतुम्-उदयाय, कल्पते-प्रभवति ।

भा०—यथा द्वादशादित्याना मध्ये दिनकरणे व्यापृतो य आदित्य स एव उदेति नान्ये, तथैव अरि*मित्रादिद्वादशराजमण्डले स एवाभ्युदय प्राप्नोति यो विजिगीषया निरन्तरमुद्योग करोति, नान्ये । तथाचोद्योग एवाभ्युदयस्य मूलम ।

अल०—उपमा ।

बुद्धिशस्त्र. प्रकृत्यङ्गो घनसंवृतिकञ्चुक ।
चारेक्षणो दूतमुख पुरुष कोऽपि पार्थिव ॥ ८२ ॥

---

* अरिर्मित्रमरेर्मित्र मित्रमित्रमत परम्, तथारिमित्रमित्र च विजिगीषो. पुरस्सरा पार्ष्णिग्राहस्तत. पश्चादाक्रन्दस्तदनन्तरम्, आसारावनयोश्चैव विजिगीषो-स्तु पृष्ठत. । इति नव, दशमो विजिगीषु । अरेश्च विजिगीषोश्च मध्यमो भूम्य-नन्तर, अनुग्रहे संहतयो समर्थो व्यस्तयोर्वधे । मण्डलाद् बहिरेतेषामुदासीनो बलाधिक । इति मध्यमोदासीनाभ्या सह द्वादश ।

† यद्यप्यादित्य एक एव, तथापि तस्य प्रतिमासमुपाधिभेदाद् द्वादशत्वम् । अत एव 'द्वादशात्मदिवाकराः' इत्यादित्यनामसु द्वादशात्मेति पठ्यते । तेचा-र्यमादय. पुराणोक्ता द्रष्टव्या ।

अ०—बुद्धिशस्त्र प्रकृत्यङ्ग घनसंवृतिकञ्चुक चारेक्षण पार्थिव क अपि पुरुष ( अस्ति )।

व्याक०—बुद्धि. एव शस्त्र यस्य स बुद्धिशस्त्र । प्रकृतय एव अङ्गानि यस्य स प्रकृत्यङ्ग । घना सवृति. एव कञ्चुको यस्य स घनसवृतिकञ्चुक । घनशब्दो व्याख्यात । चारा एव ईक्षणानि यस्य स चारेक्षण । चार इति चरते पचाद्यजन्तात् स्वार्थिक प्रज्ञाद्यण्। दूत एव मुख यस्य स दूतमुखः । पृथिव्या ईश्वर पार्थिव , पृथिवीशब्दादण् ।

व्या०—बुद्धि -प्रज्ञैव, शस्त्रम्-खड्गः, यस्य तादृश , प्रकृतयः-स्वाम्य-मात्यादीनि राज्याङ्गान्येव, अङ्गानि-पाणिपादाद्यवयवा यस्य तथोक्त , घना-सान्द्रा-दुर्भेदा, सवृतिः-सवरणम्-मन्त्रगुप्तिरेव, कञ्चुक -कवच , यस्य तथाविध , चारा -प्रणिधय.-गूढपुरुषा एव, ईक्षणानि-ईक्षणसाधनानि नेत्राणि,यस्य तथाभूतः दूत सदेशहर एव, मुखम् वाक्, यस्यैवभूत , पार्थिव -राजा, कोपि-अलौकिकः, पुरुषः, अस्ति ।

भा०—न खलु नरपति साधारण पुरुष -तस्य हि बुद्धिरेव प्रधानं शस्त्रम्, तस्या एवामोघघातित्वात् । अमात्यादिसप्तराज्याङ्गान्येव तस्यावयवा , तद्वैकल्ये राज्ञोपि वैकल्य स्यात्, मन्त्रगोपनमेव तस्य कवचम् । कवचभेदे तु शरीरमेव नश्यति, मन्त्रभेदे तु राज्यनाशप्रसङ्ग । चारद्वारैव स्वपरराष्ट्रवृत्तान्तवेदनाचारा एव तस्येक्षणानि, तदभावे राज्ञ' स्वपरमण्डलवृत्तान्ताज्ञानाद् अन्धतमस्यान्धस्येव पदे पदे विनिपात । दूतद्वारैव तस्य यावान् वाग्व्यवहारो जायते इति दूत एव तस्य वाग्, तदभावे मूकस्येव वाग्व्यवहारासिद्धौ सर्वकार्यप्रतिबन्ध. स्यात् । तथा च राज्ञा बुद्ध्यादिसम्पन्नेन भवितव्यम् ।

अल०—अत्र कोपीत्यनेन राज्ञो लोकसम्बन्धेऽप्यलौकिकत्वोक्त्यातिशयोक्ति , सा च बुद्धिशस्त्रेत्यादिरूपकसकीर्णा ।

तेज' क्षमा वा नैकान्त कालज्ञस्य महीपते ।
नैकमोज. प्रसादो वा रसभावविद कवे ॥ ८३ ॥

अ०—कालज्ञस्य महीपते. तेज क्षमा वा एकान्त न ( अस्ति ) रसभावविद कवेः एकम् ओज प्रसादो वा न अस्ति ।

व्याक०—कालं जानाति, तस्य कालज्ञस्य, " आतोऽनुपसर्गे कः " । एक अन्तः यस्य तदेकान्तम् । रसान् भावांश्च वेत्ति, तस्य रसभावविदः वेत्तेः क्विप् । क्षमा-क्षमूष् धातोः " षिद्भिदादिभ्योऽङ् ।"

व्या०—कालज्ञस्य-अयमस्य उचितः कालः, अयं न, इत्येवं समयज्ञस्य, महीपतेः-राज्ञः, तेजः-क्षात्रतेजः अभिषेणनम्, क्षमा-तितिक्षा वा, एकान्तम्-नियमः, नास्ति, अवसरानुरूपमुभयमप्याश्रयणीयं भवतीत्यर्थः । रसान् शृङ्गारादीन्, भावान्-निर्वेदादीन् सञ्चारिभावान्, वेत्ति-विजानाति, इति तथाभूतस्य, कवेः-कवयितुः, एकम्-केवलम्, ओजः-बन्धदार्ढ्यम्, प्रसादः-बन्धसौकुमार्यम्, वा, न, अस्ति, किन्तु रसानुरूपमुभयमपि भवति ।

भा०—यथा रसिकः कवी रसानुगुण्येन ओजस्विनां सुकुमारां वा उभयीमपि रचनामाश्रयति, शृङ्गारादिषु सुकुमाराम्, रौद्रादिषु ओजस्विनीम्, न तस्य रचनाविशेषे आग्रहः, तथैव समयज्ञस्य राज्ञोऽपि तेजसि क्षमायां वा नाग्रहः, किन्तु यथा कालं पश्यति तथा करोति, अभिषेणनोचिते काले अभिषेणयति, क्षमाकाले च क्षमते ।

अलं०—दृष्टान्तालङ्कारः ।

**कृतापचारोऽपि परैरनाविष्कृतविक्रियः ।**
**असाध्यः कुरुते कोपं प्राप्ते काले गदो यथा ॥ ८४ ॥**

अ०—परैः कृतापचारः अपि अनाविष्कृतविक्रियः असाध्यः ( सन् ) गदः यथा काले प्राप्ते कोपं कुरुते ।

व्याक०—कृतः अपचारः यस्य स कृतापचारः, अपचार इति चरेर्घञन्तः । न आविष्कृता विक्रिया येन सः अनाविष्कृतविक्रियः । न साध्यः असाध्यः, साधयतेः "अचो यत्" । परैः-कृतेति क्तान्तकर्तरि तृतीया । काले प्राप्ते-सति सप्तमी ।

व्या०—परैः-शत्रुभिः, कृतः, अपचारः-अपकारः, (गदपक्षे अपथ्यं च) यस्य तथाभूतः अपि, न आविष्कृता-प्रकटिता, विक्रिया-विकारः, येन तादृशः, अन्तर्गूढविकार इति यावत्, असाध्यः-अप्रतिसमाधेयः सन्, गदः यथा-रोगइव, काले प्राप्ते-बलक्षयावसरे, कोपं कुरुते-प्रकुप्यति ।

भा०—यथा रोग अपथ्यसेवनेन तत्काल न कचन विकार बहि प्रकटयति, पर कालक्रमेणान्तरवास्थितेन तेन विकारेणासाध्यता प्राप्नोति, रोगिणः शक्तिक्षयावसरे च प्रकुप्यति, अन्ततस्त निहन्ति च । तथैव चतुरो नृपतिरपि परकृतापकार कालप्रतीक्षया सहते, नात्मनो मनोविकार बहि· प्रकटयति, वैर-निर्यातनार्थमलक्षितमेव शक्तिसचय करोति, एव च अप्रतिवार्यवीर्यः सन् शत्रु-पक्षे क्षयोन्मुखे सति त विनाशयति । तदुक्त–

वहेदमित्र स्कन्धेन यावत्कालविपर्ययः,
तमेव चागते काले भिन्द्याद् घटमिवाश्मना इति ।

तथा च शिशुपाला भिषेणनाय कालः प्रतीक्ष्य ।

अल०—उपमा, श्लेषश्च तत्राङ्गम् ।

**मृदुव्यवहित तेजो भोक्तुमर्थान् प्रकल्पते ।**
**प्रदीपः स्नेहमाधत्ते दशयाभ्यन्तरस्थया ॥ ८५ ॥**

अ०—मृदुव्यवहित तेज अर्थान् भोक्तु प्रकल्पते, प्रदीप अभ्यन्तरस्थया दशया स्नेहम् आदत्ते ।

व्याक०—मृदुना व्यवहित मृदुव्यवहितम्, व्यवहितमिति 'वि' 'अव' एतत्पूर्वाद् दधाते क्त । भोक्तुमिति शक्यर्थक्लृपेर्योगे भुजेस्तुमुन्नन्तम् । प्रदी-प्यत इति प्रदीपः, इगुपधत्वात् कः । अभ्यन्तरे तिष्ठति, तया अभ्यन्तरस्थया, 'सुपि स्थ '' इति क. । दशया-करणे तृतीया ।

व्या०—मृदुना मृदुवस्तुना, व्यवहितम् अन्तर्हितम्, तेज , अर्थान् भोक्तुम्-प्रयोजनानि साधयितुम् प्रकल्पते-प्रभवति । प्रदीप , अभ्यन्तरस्थया मध्यस्थितया, दशया-वर्त्या, स्नेहम्-तैलम्, आदत्ते-आकर्षति ।

भा०—यथा दीप कोमलया तूलवर्तिकयैव तैलमाकृष्य ज्वलति, तदभावे तु दूर तैलाकर्षणम्, स्वयमेव शाम्यति, तथैव क्षान्तिपूर्वकमेव क्षात्रतेज फलति, नान्यथा, अत पूर्व क्षन्तव्यमेव ।

अल०—विशेषेण सामान्यसमर्थनादर्थान्तरन्यासः ।

**नालम्बते दैष्टिकता न निषीदति पौरुषे ।**
**शब्दार्थौ सत्कविरिव द्वय विद्वानपेक्षते ॥ ८६ ॥**

अ०—विद्वान् दैष्टिकता न आलम्बते, पौरुषे न निषीदति, सत् कविः शब्दार्था इव द्वयम् अपेक्षते ।

व्याक०—दैष्टिकताम्-दिष्ट मतिर्यस्य स दैष्टिक, तस्य भावस्तत्ता, ताम्। 'अस्ति नास्ति दिष्ट मति" इत्यनेन ठक्। पौरुषे-पुरुषशब्दात् युवादित्वात् भावेऽण्। निषीदति-सीदतेर्लट्, 'सदिरप्रते" इति षत्वम्। द्वयम्-व्याख्यातम्। अपेक्षते-ईक्षतेर्लट् ।

व्या०—विद्वान्-अभिज्ञ, *दैष्टिकताम्-दैववादिताम्, न आलम्बते-नाश्रयते, पौरुषे-केवले पराक्रमेऽपि, न निषीदति-न तिष्ठति, किन्तु, सत्कवि श्रेष्ठ• कवि, शब्दार्थौ इव, द्वयम्-दैव पौरुष चोभयमपि, अपेक्षते-आश्रयति ।

भा०—यथा काव्य निर्मिमाण श्रेष्ठ कविः शब्दार्थयोरन्यतर नोपेक्षते, किन्तु काव्यशरीरत्वादुभयमप्याश्रयति, तथैव विद्वान् पुरुषोऽपि, न केवल दैवमेवावलम्बते, पुरुषकार विना दैवस्याकिञ्चित्करत्वात्, न हि पाणिमस्पन्दयत समुखस्थमपि भोजन स्वय मुखे प्रविशति। एव न स केवले पुरुषकारे विश्वसिति, दैवप्रातिकूल्ये पुरुषकारस्यापि वैफल्यदर्शनात् । तथाचोभयमपि मिलित्वा कार्यसाधक भवतीत्युभयमप्याश्रयति ।

अल०—उपमा ।

**स्थायिनोर्थे प्रवर्तन्ते भावा सचारिणो यथा ।**
**रसस्यैकस्य भूयासस्तथा नेतुर्महीभृत• ॥ ८७ ॥**

अ०—यथा भूयासः सचारिण भावा एकस्य रसस्य स्थायिन• अर्थ प्रवर्तन्ते तथा महीभृत नेतुः (अर्थे प्रवर्तन्ते) ।

व्याक०—भूयासः-वहुशब्दादीयसुन्, "वहोर्लोपो भू च वहो"। सचारिण -सचरतेस्ताच्छील्ये णिनि । स्थायिन -तिष्ठतेर्ग्रह्यादित्वाद् णिनि, प्रवर्तन्ते-वर्ततेर्लट्, महीभृत -व्याख्यातम्, नेतु -नयतेस्तृच्, अर्थसम्बन्धे षष्ठी ।

व्या०—यथा-येन प्रकारेण, भूयासः-वहुसख्याका, सचारिणः भावा -निर्वेदादयो व्यभिचारिभावा, (सचारिपदस्योपलक्षणत्वाद् विभावा अनुभावाश्च) एकस्य-केवलस्य, रसस्य-शृङ्गारादिरसरूपतामापद्यमानस्य †स्थायिन -रत्यादिस्था-

* दैव दिष्ट भागधेयमित्यमर । † रतिर्हासश्च क्रोधश्च शोकोत्साहभयानि च जुगुप्साविस्मयशमा स्थायिभावाः प्रकीर्तिता ।

यिभावस्य, अर्थे-आस्वादयोग्यताप्राप्तिरूपे प्रयोजने, प्रवर्तन्ते-व्याप्रियन्ते, तथा-तेनैव प्रकारेण, भूयास , महीभृत -राजान , स्थायिन -स्थिरस्य-क्षान्त्या काल प्रतीक्षमाणस्येतियावत्, नेतुः-नायकस्य विजिगीषोरेव, अर्थे प्रवर्तन्ते-स्वयमेवास्य कार्यं साधयन्ति। केचित्तु भावपदस्यापि रसपरत्वमाश्रित्य-यथा सचारिण -प्रसङ्गाद् (वर्ण्यमाना ) आगन्तुका अन्ये रसा स्थायिन -स्थिरस्य एकस्य-मुख्यस्य (अङ्गीभूतस्य) अर्थे प्रवर्तन्ते, यथास्मिन्नेव काव्ये वीरस्य (अङ्गिन॰) शृङ्गारादय प्रसङ्गोपात्ता ) इति व्याचक्षते इति मल्लिनाथ ।

भा॰—यथा विभावानुभावसचारिभावा सभूय आस्वाद्योग्यतापादनद्वारा रत्यादे स्थायिन एव उपकुर्वते तत्कृत एव तेषा व्यापार , तथैव राजानोऽपि क्षान्त्यावसर प्रतीक्षमाणस्य नायकस्य विजिगीषोरेव साहाय्यं प्रतिपद्यन्ते,नान्यस्य, तथाचेदानीं शिशुपाल क्षन्तव्य एव। अथवा यथा काव्ये प्रसङ्गाद् वर्णिता अन्ये रसा अङ्गिरसोपकारायैव तथैव राजानोऽपि स्थायिन नायकमेवोपकुर्वन्ति।

अल॰—उपमा।

**तन्त्रावापविदा योगैर्मण्डलान्यधितिष्ठता ।**
**सुनिग्रहा नरेन्द्रेण फणीन्द्राइव शत्रवः ॥ ८८ ॥**

अ॰-तन्त्रावापविदा योगै मण्डलानि अधितिष्ठता नरेन्द्रेण शत्रव फणीन्द्रा इव सुनिग्रहा॰ ।

व्याक॰—तन्त्र च आवाप च ( द्वन्द्व॰ ) वेत्ति, तेन तन्त्रावापविदा, तन्त्राणाम् आवाप वेत्ति, तेन इति च विग्रहीतव्यम् । सुनिग्रहा -सुखेन निगृह्यन्ते-इति ग्रहे खल् । योगै -अधिष्ठानकरणे तृतीया । मण्डलानि-"अधिशीङ्स्थासा कर्म" इत्यधिष्ठानकर्मणि द्वितीया । नरेन्द्रेण-निग्रहकर्तरि तृतीया ।

व्याख्या—*तन्त्र॰-स्वराष्ट्रचिन्तनम्, आवाप -परराष्ट्रचिन्तनम्, तौ, वेत्ति-विजानाति, इति तथोक्तेन ( पक्षे तन्त्रावाप -शास्त्रौषधप्रयोगः, तद्विदा )

* तन्त्र. स्वराष्ट्रचिन्तायामावाप परचिन्तने, शास्त्रौषधान्नमुख्येषु तन्त्रम्-इति वैजयन्ती ।

†योगैः-सामाद्युपायैः, ( पक्षे देवताध्यानैश्च ) मण्डलानि-स्वपरराष्ट्राणि, ( पक्षे महेन्द्रादिदेवतायतनानि च ) अधितिष्ठता-अधिष्ठाय वर्तमानेन ( अतिक्रामतेति मल्लिनाथः ) नरेन्द्रेण-राज्ञा ( पक्षे विषवैद्येन ) शत्रवः, फणीन्द्राइव-महान्तः सर्पा यथा, तथा सुनिग्रहाः-सुखेन निगृह्यन्ते ।

भा०—यथा विषवैद्य शास्त्रौषधप्रयोगकौशलेन देवतास्मरणादिना च महत सर्पानपि वशमानयति, तथैव यो नृपति स्वपरराष्ट्रवृत्त मम्यगवबुध्यते, स्वपरराष्ट्रयो यथायथ सामाद्युपायप्रयोगेण स्वातङ्कमास्थापयति, स स्वशत्रू-ननायासेनैव निग्रहीतु शक्नोति ।

अल०—श्लेपानुप्राणितोपमा ।

करप्रचेयामुत्तुङ्ग प्रभुशक्तिं प्रथीयसीम् ।
प्रज्ञाबलबृहन्मूल फलत्युत्साहपादप. ॥८९॥

अ०—उत्तुङ्ग प्रज्ञाबलबृहन्मूलः उत्साहपादप करप्रचेया प्रथीयसीं प्रभुशक्तिं फलति ।

व्याक०—प्रज्ञाया बलम् एव ( ष० त० ) बृहत् मूल यस्य स. प्रज्ञाबलबृहन्मूल । उत्साह एव पादप उत्साहपादप । करैः करेण वा प्रचेया करप्रचेयाम्, प्रचेयामिति चिनोते. "अचो यत्" । अतिशयेन पृथ्वी प्रथीयसीम्, ईयसुन् । "र ऋतो हलादेर्लघो" इति ऋकारस्य रेफ. ।

व्याख्या—उत्तुङ्ग -महोन्नत , प्रज्ञाबलम्-मन्त्रशक्तिरेव, बृहत्-महत्-मुख्यमितियावत्, मूलम्-कारणम्, यस्य तथोक्त , उत्साहः-उत्साहशक्तिरेव, पादप -वृक्ष , करैः-राज्यदेयभागै , प्रचेयाम्-वर्धनीयाम्, ( पक्षे हस्तग्राह्या च ) प्रथीयसीम्-पृथुतराम्, प्रभुशक्तिम्-प्रभुत्वसामर्थ्यम्-प्रभाव वा, फलति-प्रसूते ।

भा०—उत्साहशक्ते मन्त्रशक्तिरेव प्रधान मूलम्, मन्त्रपुरस्सर एव उत्साहो विस्तारिणीं समृद्धिशालिनीं च प्रभुशक्तिमुत्पादयति । मन्त्रोपेक्षया तु च्छिन्नमूलो वृक्षइव शुष्यति, अतो मन्त्रो नोपेक्षणीय. ।

अल०—रूपक श्लेपश्च ।

---

† योगः सनहनोपायध्यानसगतियुक्तिपु—इत्यमर ।

‡ नरेन्द्रो वार्तिके राज्ञि विषवैद्ये च कथ्यते—इति विश्व. ।

**अनल्पत्वात् प्रधानत्वाद् वशस्येवेतरे स्वराः ।**
**विजिगीषोर्नृपतय प्रयान्ति परिवारताम् ॥६०॥**

अ०—अनल्पत्वात् प्रधानत्वाद् वशस्य इतरे स्वराइव नृपतय विजिगीषो परिवारता प्रयान्ति ।

व्याक०—परिवारताम्-परिपूर्वाद् वृधातोर्घञ्, ततस्तल् । अनल्पत्वात्-प्रधानत्वाद्-हेतौ पञ्चम्यौ । वशस्य, विजिगीषो -परिवारतासम्बन्धे षष्ठी ।

व्याख्या०—अनल्पत्वाद-मन्त्रोत्साहशक्तिभ्याम् अधिकत्वात् ( वशपक्षे-उच्चैस्तरत्वात् ) अत एव प्रधानत्वाद्-मुख्यत्वात्-मण्डलाभिज्ञत्वाद् इतिमल्लिनाथ । ( वशपक्षे नायकस्वरत्वाच्च ) वशस्य-( लक्षणया ) वशवाद्यस्वरस्य, इतरे-अन्ये, स्वराइव-वीणागानादिशब्दा यथा, तथा नृपतय -अन्ये मण्डल-परिवर्तिनो राजानः, विजिगीषो -जेतुमिच्छो राज्ञ , परिवारताम्-पोष्यताम्-आत्मीयता वा, प्रयान्ति-गच्छन्ति, तत्कार्यमेव साधयन्तीत्यर्थ ।

भा०—यथा सगीतके वीणादिशब्दा वेणुवाद्यस्वरमेवानुगच्छन्ति, यतो वेणुस्वरस्तारतरत्वान्नायकस्वर । तथैव यो नृपतिर्मन्त्रोत्साहसम्पन्नतया राजमण्डले नायकत्वमधिगतवान् ( अथवा य मन्त्रोत्साहाधिक , स्वपरमण्डलाभिज्ञश्चास्ति ) तस्यान्ये राजानः परिवाररूपता भजन्ते । यथा परिवारजन परिवारस्वामिन एव स्वार्थसिद्धये यतते, तथैव तेऽपि नायककार्यमेव साधयन्ति ।

अल०—उपमा ।

**अप्यनारभमाणस्य विभोरुत्पादिताः परै ।**
**व्रजन्ति गुणतामर्थाः शब्दाइव विहायसः ॥६१॥**

अ०—अनारभमाणस्य अपि विभो परैः उत्पादिता अर्थाः विहायस शब्दाइव गुणता व्रजन्ति ।

व्याक०—न आरभमाणस्य अनारभमाणस्य, रभतेः शानजन्तम् । विभो , विहायस -गुणतासम्बन्धे षष्ठ्यौ, परै -कर्तरि तृतीया ।

व्याख्या—अनारभमाणस्य—स्वयमकिञ्चित् कुर्वाणस्यापि ( पक्षे निष्क्रियस्यापि ) विभो -प्रभुशक्तिसम्पन्नस्य राज्ञ ( पक्षे व्यापकस्य ) परै -अन्यै

राजभि , ( पक्षे शङ्खभेर्यादिभि ) । उत्पादिता -साधिता , ( पक्षे जनिता ) अर्था -प्रयोजनानि, विहायस -आकाशस्य, शब्दाइव, *गुणताम्-विशेषणताम्-अङ्गताम्, ( पक्षे गुणत्व च ) व्रजन्ति-प्राप्नुवन्ति ।

भा०—शक्तो हि राजा स्वयमुदासीन एव आकाशवत् स्वमहिम्नैव कार्यदेशं व्याप्नुवन् शब्दानिव परोत्पादितान् सर्वार्थानपि स्वकीयता नयति ।

अल०—कारणाभावेऽपि कार्योत्पत्तेरभिधानाद् विभावना सा च विभोरिति कारणोपादानात् सनिमित्ता, उपमा तु स्पष्टैव ।

**यातव्यपार्ष्णिग्राहादिमालायामधिकद्युति ।**
**एकार्थतन्तुप्रोताया नायको नायकायते ॥९२॥**

अ०—एकार्थतन्तुप्रोताया यातव्यपार्ष्णिग्राहादिमालायाम् अधिकद्युति नायक नायकायते ।

व्याक०—एकः अर्थ , स एव तन्तु , तत्र प्रोतायाम् एकार्थतन्तुप्रोतायाम् । प्रोतायाम्-पूर्ववाद् वेञ् धातो. क्तान्तम्, सम्प्रसारण च । यातव्यश्च पार्ष्णिग्राहश्च, तौ आदी येषाम् , ते एव माला, तस्याम्-यातव्यपार्ष्णिग्राहादिमालायाम् । यातव्येति यातेः तव्यत् , पार्ष्णि गृह्णातीति पार्ष्णिग्राह , ग्रहे "कर्मण्यण्" । अधिका द्युति यस्य सः अधिकद्युति । नायक इवाचरति नायकायते "कर्तु क्यङ् सलोपश्च" । नायकेति नयतेः ण्वुल् ।

व्याख्या—एकार्थ -समानप्रयोजनम्, स एव तन्तु -सूत्रम्, तत्र प्रोतायाम्-गुम्फितायाम्-तुल्यप्रयोजनाभिलाषिण्याम्, यातव्यः-अभिषेणयितव्य अरि , पार्ष्णिग्राह -पृष्ठानुधावी, तौ आदी येषा ते-पूर्वोक्ताः पङ्क्तिश स्थिता द्वादश राजान , ते एव माला-रत्नमालिका, तस्याम्, अधिकद्युति -महातेजा , नायक -शक्तिसम्पन्नो जिगीषु , नायकायते-नायकः-†मध्यमणि , मइवाचरति सर्वोत्कर्षेण वर्तत इत्यर्थ ।

भा०—अरिमित्रादयो द्वादश राजान. पूर्वमुक्ता , त एवात्र यातव्यपार्ष्णिग्राहादिशब्देन विवक्षिता , ते सर्वेप्यन्योन्यस्मात् स्वोत्कर्षमिच्छन्ति, इति

---

* गुणस्त्वावृत्तिशब्दादिज्येन्द्रियामुख्यतन्तुषु इति वैजयन्ती ।

† नायको नेतरि श्रेष्ठे हारमध्यमणावपि इति विश्व ।

न्वोत्कर्पसिद्धिस्तेपा तुल्य प्रयोजनम्, एव तुल्यार्थाभिलापिरया तस्या राजमालायामधिकतेजस्वी शक्तिसम्पन्नो जिगीषुरेव मणिमालाया मध्यमणिरिव शोभते ।

अल०—उपमारूपकयोरङ्गाङ्गिभावेन सङ्कर इति मल्लिनाथ॰ ।

पाड्गुण्यमुपयुञ्जीत शक्त्यपेक्षो रसायनम् ।
भवन्त्यस्यैवमङ्गानि स्थास्नूनि बलवन्ति च ॥६३॥

अ०—शक्त्यपेक्ष ( सन् ) षाड्गुण्यम् रसायनम् उपयुञ्जीत, एवम् अस्य अङ्गानि स्थास्नूनि बलवन्ति च भवन्ति ।

व्याक०—शक्तिमपेक्षते इति शक्त्यपेक्ष, " ईक्षिक्षमिभ्या च " इति ण॰ । षड् गुणा एव षाड्गुण्यम्, स्वार्थे ष्यञ्, तद्धितार्थे द्विगु । रसानाम् अयनम् रसायनम्, अयनमिति अयतेः करणे ल्युट् । उपयुञ्जीत-युजेर्विधि-लिङ्, " प्रोपाभ्याम् " इत्यात्मनेपदम् । स्थास्नूनि-तिष्ठतेः ग्लाजिस्थश्चग्स्नु॰ ।

व्या०—शक्त्यपेक्ष -शक्तिम्-प्रभावादित्रयम्*, ( पक्षे बलम् ) अपेक्ष-माण सन्-यथाशक्तीतियावत्, षाड्गुण्यम्-सन्धिविग्रहादिषड्गुणरूपम्, रसा-यनम्†-औपधविशेपम्, उपयुञ्जीत-सेवेत । एवम् सति, अस्य-प्रयोक्तु, अङ्गानि-स्वाम्यमात्यादीनि, ( पक्षे गात्राणि च ) स्थास्नूनि-स्थिराणि-कालान्त-रक्षमाणि, बलवन्ति-दृढानि-परपीडाक्षमाणि च भवन्ति ।

भा०—पूर्वं श्लोकत्रयेण शक्तिसपदमभिधायेदानीं षाड्गुण्यप्रयोगप्रकार-माह-राज्ञा स्वपरयोर्मन्त्रोत्साहादिशक्त्यनुसारेणैव सधिविग्रहादीनामुपयोग कर्तव्य । इत्थ कृते तस्यामात्यादिसप्तप्रकृतय स्थिरा दृढाश्च भवन्ति । शक्ति-मुपेक्ष्य सन्ध्यादीनुपयुञ्जानस्तु आपदाक्रान्तः क्षयमेति । यथा रोगी जराजीर्णो वा जन यदि स्वबलानुसारेण मात्रया रसायनमुपयुङ्क्ते, तर्हि स्वस्थो भवति, तस्य गात्राणि कार्यक्षमतामासाद्य कालान्तरेऽप्युपयोगमावहन्ति । बलादधिका मात्रा गृह्णानस्य तु तदेव रसायन विनाशहेतुर्भवति ।

अल०—श्लिष्टपरम्परितरूपकम् ।

---

* शक्तिर्बले प्रभावादौ इति विश्वः ।

† रसायन विडङ्गेऽपि जराव्याधिनिदौपधे-इति विश्व ।

**स्थाने शमवतां शक्त्या व्यायामे वृद्धिरङ्गिनाम्।**
**अयथावलमारम्भो निदान क्षयसम्पद ॥६४॥**

अ०—स्थाने शमवताम् अङ्गिना शक्त्या व्यायामे वृद्धि ( भवति ) अयथा-वलम् आरम्भ क्षयसम्पदः निदानम् ( अस्ति )।

व्याक०—वलमनतिक्रम्य यथावलम्, न यथावलम् अयथावलम्, क्रिया-विशेषणम्। क्षयस्य सम्पद क्षयसम्पद.। व्यायामे-' वि ' ' आङ् ' एतत्पूर्वाद् यमधातोर्घञ्। सति सप्तमी। आरम्भो व्याख्यात । निदानम्-निदीयतेऽनेनेति निपूर्वाद् दा धातोर्ल्युट्। शक्त्या-करणे तृतीया।

व्या०—स्थाने-योग्यावसरे-अशक्यविषय इति यावत् शमवताम्-क्षमा-वनाम् ( पक्षे प्रवृत्तिरहितानाम् ) अङ्गिनाम्-स्वाम्यमात्यादिसप्तराज्याङ्गवताम राज्ञाम्, ( पक्षे शरीरधारिणाम् ) शक्त्या-प्रभावाद्यनुसारेण (पक्षे यथावलम्) व्यायामे-व्यापारे-षाडगुण्यप्रयोगे, अभिषेणने वा, ( पक्षे गमनादौ ) सति, वृद्धि -उपचय' ( एकत्र राज्यस्य अपरत्र शरीरस्य ) भवति। अयथावलम्-शक्त्यतिक्रमेण, आरम्भ -व्यायामः, क्षयसम्पद.-विनाशप्राप्ते, निदानम्-आदिकारणम्, अस्ति।

भा०—यथा य पुरुष अशक्यकर्मणो निवर्तते, शक्ये च गमनादावपि यथाशक्ति प्रवर्तते, तस्य शरीरमुपचीयते, परिपुष्ट भवति, यश्च तद्विपरीत-माचरति, तस्य वलक्षयाद् विनाशो निश्चित, तथैव यो नृपति. क्षमाकाले क्षमाम्, व्यायामकाले च स्वशक्त्यनतिक्रमेण व्यायाममनुतिष्ठति, तस्य राज्य-मुपचित भवति। अतथाकुर्वाणस्य तु राज्यक्षयो दुर्निवार। तथाचास्माक-मकस्माच्चैद्यावस्कन्दनमश्रेयस्करम्।

अल०—प्रकरणाद् अङ्ग्यादिपदाना शक्तौ राजतत्सम्वन्धिष्वर्थेषु निय-न्त्रिताया शरीरिरूपोर्थः शब्दशक्तिमूलव्यञ्जनया व्यज्यते। व्यक्तेन प्राकरणि-कस्यौपम्य च गम्यते। समासोक्तिस्तु न, विशेष्यस्यापि श्लिष्टत्वात्।

**तदीशितार चेदीना भवॉस्तमवमस्त मा।**
**निहन्त्यरीनेकपदे य उदात्त. स्वरानिव ॥६५॥**

अ०—तद् भवान् त चेदीनाम् ईशितार मा अवमस्त, य अरीन् उदात्तः

स्वरानिव एकपदे निहन्ति ।

व्याक०—ईशितारम्-ईशेस्तृजन्तम् । चेदीनामिति तत्कर्मणि षष्ठी । मा अवमंस्त-अवपूर्वाद् मन्यते "माङि लुङ्" अडागमाभावः ।

व्या०—तत्-तस्माद्-अशक्यार्थस्य अकार्यत्वात्, भवान्, तम्-शक्तिशालिनम्, चेदीनाम् ईशितारम्-चेदिराष्ट्राधिपति शिशुपालम्, मा अवमस्त-अभिषेणनेन न तिरस्कुरु । य -शिशुपाल., अरीन्-शत्रून्, उदात्त -उदात्ताख्यस्वर, स्वरान्-इतरान् स्वरान्, एकपदे-एकस्मिन् पदविन्यास एव-*तत्क्षणे वा ( पक्षे-एकस्मिन् सुबन्ततिङन्तलक्षणे पदे ) निहन्ति-अतिशूरत्वाद् नीचै करोति, ( पक्षे "अनुदात्त पदमेकवर्जम्" इति सूत्रबलाद् अनुदात्तान् करोति) ।

भा०—यस्मिन् पदे यस्योदात्त. स्वरितो वा विधीयते तमेकमच वर्जयित्वा शेष तत्पदमनुदात्ताच्कं भवति इति वैयाकरणाः । तथा च यथैकस्मिन् पदे उदात्तस्वर इतरान् सर्वानपि स्वराननुदात्तान् करोति, तथैवातिशक्तिशाली चैद्यः स्वशत्रून् एकपदविन्यास एव ( तत्क्षणे वा ) निहन्तुं समर्थ., अत इदानीं नाभियातव्य ।

अल०—चैद्यानभियानस्य हेतुना समर्थनात् काव्यलिङ्गम्, उपमा तु स्पष्टैव ।

**मा वेदि यदसावेको जेतव्यश्चेदिराडिति ।**
**राजयक्ष्मेव रोगाणा समूह. स महीभृताम् ॥६६॥**

अ०—असौ चेदिराट् एक जेतव्यः इति मा वेदि । यत् सः राजयक्ष्मा रोगाणाम् इव महीभृता समूहः ( अस्ति )

व्याक०—चेदिषु राजत इति चेदिराड्, उक्ते कर्मणि प्रथमा, राडिति राजे क्विबन्तम् । राज्ञ ( चन्द्रस्य ) यक्ष्मा, राजा चासौ यक्ष्मा वा राजयक्ष्मा† । जेतव्य -जयतेः शक्यार्थे तव्य । मा वेदि-माङ्युपपदे-वेत्ते कर्मणि लोडर्थे लुङ्, चिण्, इतिपरामृष्टो वाक्यार्थ कर्म । रोगाणामिति रुजेर्घञन्तम् ।

---

* स्यात् तत्क्षण एकपदम्-इति विश्वः ।

† नक्षत्राणा द्विजाना च राज्ञोऽभूद् यदय पुरा, यच्च राजा च यक्ष्मा च राजयक्ष्मा ततो मत -इति वाग्भट. ।

व्या०—असौ चेदिराट्-शिशुपाल , एक -एकाकी, अत एव जेतव्य -जेतु शक्य , इति मा वेदि-इति न मन्तव्यम्,यद् यत , स -शिशुपाल , राजयक्ष्मा*—क्षयरोग , रोगाणामिव-व्याधीना यथा, तथा महीभृताम्-राज्ञाम्, समूह -समष्टिरूप , अस्ति ।

भा०—जरासन्धमित्रस्य नाशेन शिशुपाल इदानीमेकाकी वर्तते इति सुखेन जेष्यत इति मा स्म मनसि कृथा । सन्त्यन्येऽपि राजानस्तत्सहाया , ये चोदासीनास्तेपीदानीं तस्मिन्नभियास्यमाने तत्साहाय्य प्रतिपत्स्यन्ते । तथा च यथा रोगराजः क्षय एकाकी न तिष्ठति अपि तु अन्येऽपि रोगास्तेन सह वर्तन्ते-वर्तितु सभाव्यन्ते चेति हेतो स रोगसमष्टिरुच्यते, तथैवाय शिशुपालोपीदानीं राजसमष्टिरूप इति नास्यापचार कर्तव्य ।

अल०—उपमा । राजयक्ष्मोपमया चैद्यस्य दु साध्यत्व व्यङ्ग्यम् ।

**सम्पादितफलस्तेन सपक्ष परभेदन ।**
**कार्मुकेणेव गुणिना बाण. सधानमेष्यति ॥१७॥**

अ०—सम्पादितफल सपक्ष परभेदन बाण. गुणिना तेन कार्मुकेणेव सधानम् एष्यति ।

व्याक०—सम्पादित फल यस्य स सम्पादितफल । पक्षै सह वर्तमान सपक्ष । परेषा भेदन. परभेदन , भेदनशब्दो भिदे कर्तरि ल्युप्रत्ययान्त । कार्मुकशब्दो व्याख्यात. । सधानम्-दधातेर्ल्युडन्तम् । गुणिना, कार्मुकेण-उभयत्र सहार्थयोगे तृतीया । एष्यति-एतेर्लृट् ।

व्याख्या—सम्पादितम्-अनुष्ठितम्, ( पक्षे योजितम् ) †फलम्-लाभ -उपकार इतियावत्, ( पक्षे बाणाग्रम् ) यस्य तथोक्त , सपक्षः-समित्र , ( पक्षे वेगार्थं कङ्कादिपत्त्रयुक्त ) परेषाम् शत्रूणाम्, भेदन -विदारणः, बाण -बाणासुर ( पक्षे शरश्च ) गुणिना शौर्यादिगुणवता ( पक्षे प्रत्यञ्चासहितेन )

---

* अनेकरोगानुगतो बहुरोगपुरस्सर राजयक्ष्मा क्षय शोषो रोगराडिति च स्मृत इति वाग्भट ।

† फल हेतुसमुत्थे स्यात् फलके व्युष्टिलाभयो , जातीफलेपि कक्कोले सस्यबाणाग्रयोरपि—इति विश्व ।

तेन शिशुपालेन सह, संधानम्-सन्धिम्, तत्साहाय्यमितियावत्, ( पक्षे सधानम् सयोगम् ) एष्यति-प्राप्स्यति ।

भा०—शिशुपालस्य राजसमष्टितामेव समर्थयते-यथा मशल्य वेगगतये योजितकङ्कपत्रस्तीक्ष्ण.शर आरूढप्रत्यञ्चेन धनुषा सयुज्यते, तथैव बाणासुरोऽपि शिशुपालेन सधास्यति, अयमभिसधि -शिशुपालेन बाणासुरस्य बहूपकृतमिति कृतज्ञतया बाणासुर शिशुपालेऽभिषेण्यमानेऽवश्य तत्साहाय्यं स्वीकरिष्यति । न च बाणासुर एकाकी निर्बलो वेति तत्साहाय्ये ऽपि न काचन क्षतिरिति मनसि करणीयम्, स हि ससुहृद्वर्ग शिशुपालसाहाय्यायोपतिष्ठेत, स्वयमपि च स न निर्बल, अपि तु शत्रुभेदनक्षम, अतोऽनाय चैद्यप्रत्यवस्कन्दनावसर ।

भा०—श्लेषानुप्राणितोपमा । विशेषणाना साभिप्रायत्वात् परिकरोऽपि ।

**ये चान्ये कालयवनशाल्वरुक्मिद्रुमादयः ।**
**तम स्वभावास्तेप्येन प्रदोषमनुयायिन ॥६८॥**

अ०—च ये अन्ये कालयवनशाल्वरुक्मिद्रुमादय, तम स्वभावा ते अपि प्रदोषम् एनम् अनुयायिन ।

व्याक०—कालयवनश्च शाल्वश्च रुक्मी च द्रुमश्च ( द्वन्द्व० ) ते आदय येषा ते कालयवनशाल्वरुक्मिद्रुमादय । तम स्वभावो येषा ते तम स्वभावा.। अथवा तमस. स्वभाव इव स्वभावो येषा त इति विग्रह, "सप्तम्युपमानपूर्वस्योत्तरपदलोपश्च" । प्रदोषम्-प्रकृष्टा दोषा यस्य प्रारब्धा दोषा ( रात्रिः ) यस्मिन्निति च स प्रदोष, तम् । "प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोप" । अनुयास्यन्ति इति अनुयायिन -याते "भविष्यति गम्यादय" इति णिनि । एनम् "अकेनोर्भविष्यदाधमर्ण्ययो" इति षष्ठीनिषेधात् कर्मणि द्वितीया ।

व्याख्या—किं च, ये, अन्ये, कालयवन-शाल्व-रुक्मि-द्रुमादय राजान, सन्ति, तम स्वभावा.-तामसप्रकृतय, ( तमासि ) तेऽपि, प्रदोषम्-अतिदुष्टम्-तामसम्, ( रजनीमुखम् ) एनम्-शिशुपालम्, अनुयायिन -अनुयास्यन्ति ।

भा०—किं च न केवल बाणासुरः शिशुपाल सधास्यति, अपि तु यथा ध्वान्त रजनीमुखमनुयाति, तथैव दुष्टस्वभावा कालयवनादयोपि तुल्यधर्मतया

दुष्टस्वभावमेन शिशुपालमेवानुयास्यन्ति ।

अल०—तामसाना तामसानुगतिरिति समालङ्कृति । अप्रस्तुतध्वान्त-रजनीमुखवृत्तान्तप्रतीत्या समासोक्तिरपि । यथा ध्वान्त रजनीमुखमनुयाति तद्वत् इति वस्तुनालङ्कारध्वनिरिति मल्लिनाथ. ।

**उपजाप कृतस्तेन तानाकोपवतस्त्वयि ।**
**आशु दीपयितात्पोऽपि साग्नीन् एधानिवानल ॥९९॥**

अ०—तेन कृत अल्प अपि उपजापः त्वयि आकोपवत तान् अनिलः साग्नीन् एधानिव आशु दीपयिता ।

व्याक०—अग्निना सह वर्तमानान् साग्नीन् । उपजाप -जपेर्भावे घञ् । आकोपवतः-आङ्पूर्वात् कुपेर्घञन्ताद् मतुप् । दीपयिता-दीपेर्णिजन्ताल्लुट् । त्वयि-विषयसप्तमी ।

व्या०—तेन-चैद्येन, कृत , अल्प , अपि, उपजाप -भेद , त्वयि-त्वद्विषये, आकोपवत -क्रोधवत -अन्तर्वैरान्, तान्-बाणासुरादीन्, अनिल -वायुः, साग्नीन्-वन्हिसहितान्, एधान्-इन्धनानीव, आशु-शीघ्रम्, दीपयिता-प्रज्वलयिष्यति ।

भा०—बाणादय अस्माभि कृतसधयो नेदानीं विराध्यन्ति इत्यपि न मन्तव्यम् । अन्तर्वैराः सहिता अपि काले विश्लिष्यन्ति । यद्यपि ते कारणान्तरेण भवता कृतसधय सन्ति, तथापि तेषा हृदये त्वद्विषये वैराग्निरप्रकटरूपेण विद्यत एव, यदीदानीं शिशुपालोऽभिपेरयेत, तर्हि स स्वल्पेनाप्युत्तेजनेन अन्तर्वैरास्तान् त्वत्तो भेत्स्यति, यथा च वायु अग्निसहितानि काष्ठानि प्रज्वलयति, तथैव तत्कृतो भेदस्तान् पूर्ववैरनिर्यातनार्थं त्वद्विरुद्धान विधास्यति ।

अल०—उपमालङ्कारः, आकोपवत इति साभिप्रायमिति परिकरः ।

**बृहत्सहाय कार्यान्त क्षोदीयानपि गच्छति,**
**सम्भूयाम्भोधिमभ्येति महानद्या नगापगा ॥१००॥**

अ०—बृहत्सहाय क्षोदीयान् अपि कार्यान्त गच्छति,
नगापगा महानद्या सम्भूय अम्भोधिम् अभ्येति ॥

व्याक०—बृहन् सहायो यस्य स बृहत्सहायः, अतिशयेन क्षुद्रः क्षोदीयान्, क्षुद्राद् ईयसुन् यणादिपरलोप, पूर्वस्य गुणश्च । नगस्य आपगा। नगापगा, नगशब्दो व्याख्यात । अपा समूह आपम्, "तस्य समूह" इत्यण्, तेन गच्छति आपगा, "अन्येष्वपि दृश्यते" इति गमेर्डः। अम्भोधिम्-दधाते अधिकरणे कि.। सम्भूय-सभवतेर्ल्यप्। महनद्या-सहार्थयोगे तृतीया।

व्या०—बृहन्-महान्, सहाय -पृष्ठपोषकः, यस्य तथोक्त, क्षोदीयान्-क्षुद्रतरोऽपि, कार्यस्य, अन्तम्-पारम्, गच्छति। तथा हि-नगापगा-गिरिणदी, महत्या, नद्या-गङ्गादिकया सह, सम्भूय-मिलित्वा, अम्भोधिम्-समुद्रम्, अभ्येति-प्राप्नोति।

भा०—क्षुद्रोप्येवम्, तादृक् महावीरश्चेद्यस्तु किमु वक्तव्य इत्यपिशब्देन सूच्यते, इतरत् स्पष्टम्।

अल०—विशेषेण सामान्यसमर्थनादर्थान्तरन्यास, भावार्थोक्तरीत्या काव्यार्थापत्तिर्व्यज्यते।

**तस्य मित्राण्यमित्रास्ते ये च ये चोभये नृपाः।**
**अभियुक्तं त्वयैनं ते गन्तारस्त्वामतः परे ॥१०१॥**

अ०—ये च तस्य मित्राणि ये च ते अमित्राः ते उभये नृपाः त्वया अभियुक्तम् एनं गन्तारः, अत परे त्वाम् ( गन्तार )।

व्याक०—उभये-व्याख्यातम्, जसि रूपम्, "प्रथमचरम" इति सर्वनामत्वाद् "जस शी"। गन्तार -गमे. कर्तरि लुट्।

व्या०—ये च, तस्य-शिशुपालस्य, मित्राणि, ये च, ते तव अमित्राः-शत्रव, ते, उभये-द्वयेऽपि, नृपा -राजान, त्वया भवता, अभियुक्तम्-अभिषेणितम्, एनम्-शिशुपालम्, गन्तारः-सगमिष्यन्ति। अतः परे-उक्तोभयव्यतिरिक्ता -तव मित्राणि तस्य अमित्राश्च, त्वाम्, गन्तार -इतिशेष।

भा०—किंचेदानीं चैद्याभिषेणने क्रियमाणे राजसु केचित् तत्पक्ष केचिच्च त्वत्पक्षमवलम्ब्य युद्धे व्याप्रियेरन् इत्थ सकलस्यापि राजमण्डलस्य युद्धव्याप्टततया युधिष्ठिरयज्ञे न कोप्युपस्थातु शक्नुयात्। तथा चैवमनिच्छतापि त्वया मित्रविरोध कृत. स्यात्।

**मखविघ्नाय सकलमित्थमुत्थाप्य राजकम् ।**
**हन्त जातमजातारेः प्रथमेन त्वयारिणा ॥१०२॥**

अ०—इत्थम् मखविघ्नाय सकलं राजकम् उत्थाप्य हन्त त्वया अजातारेः प्रथमेन अरिणा जातम् ।

व्याक०—मखस्य विघ्नाय मखविघ्नाय, तादर्थ्ये चतुर्थी । न जातः अरिः यस्य तस्य अजातारेः, अरिसम्बन्धे षष्ठी । इत्थम्-" इदमस्थमु " । राज्ञां समूहो राजकम्, " गोत्रोक्ष "-इत्यनेन 'वुञ्' । जातम् जायते भावे क्तः, त्वयेति तदनुक्ते कर्तरि तृतीया ।

व्या०—इत्थम्-पूर्वोक्तप्रकारेण, मखविघ्नाय-यज्ञविघाताय, सकलम्, राजकम्-राजसमूहम्, उत्थाप्य-क्षोभयित्वा, हन्त इति खेदे, त्वया-भवता, अजातारेः-अजातशत्रोः-युधिष्ठिरस्य, प्रथमेन, अरिणा-शत्रुणा, जातम्-अर्जनि ।

भा०—तदेव सर्वस्मिन् राजवर्गे रणभूमिमवतीर्णे युधिष्ठिरस्य यज्ञसमारोहो विघ्नितः स्यात्, न तत्र कोप्युपतिष्ठेत, एतस्य च मूलकारणं चैद्याभिषेणनप्रसङ्गेन सकलराजमण्डलं युद्धे व्यापारयन् त्वमेव भवेः, किं च मखविघ्नोत्पादनेन त्वमेवाजातशत्रोः प्रथमं शत्रुर्भस्यसे-इति सर्वथा युद्धाद् विरमणीयम् ।

**संभाव्य त्वामतिभरक्षमस्कन्धं स बान्धवः ।**
**सहायमध्वरधुरां धर्मराजो विवक्षते ॥१०३॥**

अ०—बान्धवः स धर्मराजः त्वाम् अतिभरक्षमस्कन्धं सहायं संभाव्य अध्वरधुरां विवक्षते ।

व्याक०—धर्मयुक्तो राजा धर्मराजः । शाकपार्थिवादित्वान्मध्यमपदलोपः, टच् समासान्तः । अतिभरस्य क्षमः स्कन्धो यस्य तम् अतिभरक्षमस्कन्धम् । अध्वरस्य धुरम् अध्वरधुराम्, ' ऋक्पूरब्धूःपथामानक्षे " इत्यप् । बन्धुरेव बान्धवः, स्वार्थेऽण् । विवक्षते-वोढुमिच्छतीति वहतेः सन् ।

व्या०—बान्धवः-पितृष्वसुः पुत्र इति यावत्, सः, धर्मराजः-युधिष्ठिरः, त्वाम्-भवन्तम्, अतिभरस्य, क्षमः-समर्थः, स्कन्धः-असप्रदेशः, यस्य तथाभूतम्-दृढम्, सहायम्, संभाव्य अभिसन्धाय, अध्वरधुराम्-यज्ञभारम्, विवक्षते-

वोढुमिच्छति ।

भा०—यथा कश्चिदेकाकी स्वस्कन्धे भार वोढुमसमर्थः दृढस्कन्धं सहायान्तरमपेक्षते, तद्वद् युधिष्ठिरोऽपि त्वामेव दृढ स्वसहाय मत्वा यज्ञमारिप्सते न च त्वया स कार्यान्तरव्यग्रताव्याजेन उपेक्षणीय , यत. स पैतृष्वसेयत्वाद् तव बन्धु , तदुपेक्षणे बन्धुद्रोहो विश्वासघातश्च स्यात् । बन्धुरपि दुर्वृत्त शक्यत उपेक्षितुम्, न स तादृशः, किं तु धर्मराज , तथा च त्वया युद्धाद् विरम्य यज्ञ एव सन्निधातव्यम् ।

अल०—भावार्थोक्तरीत्या विशेषणसाम्याद् अप्रस्तुतार्थ.प्रतीते समासोक्तिः । अम्बरधुरा विवक्षणस्य हेतुना समर्थनात् काव्यलिङ्ग च ।

**महात्मानोऽनुगृह्णन्ति भजमानान् रिपूनपि ।**
**सपत्नी प्रापयन्त्यब्धि सिन्धवो नगनिम्नगा ॥१०४॥**

अ०—महात्मानः भजमानान् रिपून् अपि अनुगृह्णन्ति, सिन्धव. सपत्नी. (अपि) नगनिम्नगाः अब्धि प्रापयन्ति ।

व्याक०—महान् आत्मा येषा ते महात्मान । समान पति॰ यासा ता सपत्नी । "नित्य सपत्न्यादिषु" इत्यनेन नकारः, नान्तत्वाद् ङीप् । नगाना निम्नगा नगनिम्नगा , निम्न गच्छन्ति इति निम्नगा "अन्येष्वपि दृश्यते" इति गमेर्ड । अब्धिम्-आपो धीयन्तेऽस्मिन् इति दधाते कि. । प्रापणस्याकथित कर्म । प्रापयन्ति-आप्नोतेर्णिजन्तम् ।

व्या०—महात्मान -उदाराशयाः, निग्रहानुग्रहसमर्था वा, भजमानान्-सेवमानान्-शरणागतान्, रिपून्-शत्रूनपि, अनुगृह्णन्ति-अनुकम्पन्ते, बन्धून् अनुकम्पन्त इत्यत्र किमु वक्तव्यम् । सिन्धवः-महानद्य , सपत्नी -समान -एक॰, पति , यासा तथोक्ता , नगनिम्नगा -गिरिणदी , अब्धिम्-समुद्रम् , प्रापयन्ति-गमयन्ति, स्वसौभाग्य ताभ्यः प्रयच्छन्ति ।

भा०—ननु प्रतिज्ञायाकरणे दोष , प्रागेव निषेधे तु को दोष इत्यत आह-उदारहृदयै प्रार्थ्यमाना शत्रवोऽपि दत्तहस्तावलम्बा भवन्ति, युधिष्ठिरस्तु तव बन्धु , तत्प्रार्थना सुतरा नोपेक्षितव्या, इतरत् स्पष्टम् ।

अल०—विशेषेण सामान्यसमर्थनादर्थान्तरन्यास । व्याख्योक्तरीत्या

काव्यार्थापत्तिर्व्यज्यते ।

**चिरादपि बलात्कारो बलिनः सिद्धयेऽरिषु ।**
**छन्दानुवृत्तिदु साध्याः सुहृदो विमनीकृता ॥१०९॥**

अ०—वलिन अरिषु बलात्कार· चिराद् अपि सिद्धये ( कल्पते ) विमनीकृता. सुहृद· छन्दानुवृत्तिदु साध्या (भवन्ति)

व्याक०—अविमनस· विमनस सम्पद्यमाना कृता विमनीकृता, च्वि, " अरुर्मनश्चक्षुश्चेतोरहोरजसा लोपश्च " इति च्विप्रत्ययसलोपौ । शोभन हृदय येषा ते सुहृद·, " सुहृद्दुर्हृदौ " इत्यनेन निपात्यते । छन्दस्य अनुवृत्त्या ( तत्पु० ) अपि दु साध्या ( तत्पु० ) छन्दानुवृत्तिदु साध्या । बलात् करण बलात्कार, करोतेर्घञ्, बलादित्यव्ययम् । अरिषु-अधिकरणसप्तमी, सिद्धये-क्लृपिमध्याहृत्य " क्लृपि सपद्यमाने च " इत्यनेन चतुर्थी ।

व्या०—वलिन -प्रशस्तबलस्य, अनेकवलस्य वा, अरिषु-शत्रुषु, वलात्कार -अभिषेणनम्, चिरादपि विलम्ब्य क्रियमाणोऽपि, सिद्धये-शत्रुपराजय-सिद्धये, कल्पते । किन्तु, विमनीकृता.-वैमनस्यमापादिता, सुहृद -हित-चिन्तका -मित्राणि, * छन्दस्य—अभिप्रायस्य, अनुवृत्त्या—अनुवर्तनेनापि—अभीप्सितानुष्ठानेनापीति समस्तार्थः, दु साध्या -अनुनेतुमशक्या भवन्ति ।

भा०—न चेदानीमुपेक्षितोपि पार्थ पश्चादनुनेष्यत इति मनसि करणीयम्, यत सकृदप्रियकरणेन वैमनस्य प्रापिता सुहृद पुन शतशस्तदनुरोधपालनेनापि अनुकूलयितु न शक्यन्ते । अतस्तद्विरोध सर्वथा परिहरणीय । किं च चैद्यविजयाय का ते त्वरा, बलवान् अद्य श्वो वा शीघ्र चिराद् वा यदा कदापि शत्रुमभिषेणयेत्, तस्य निश्चितो विजय, तथा च यदि मित्रद्रोहमनुत्पाद्यापि विजयस्ते निश्चितस्तर्हि, किमर्थं मुधा मित्रमुपेक्षसे ।

अल०—विशेषस्य सामान्यमुखेनाभिधानादप्रस्तुतप्रशसा । विमनीकृताना सुहृदामनुकूलन सर्वथापि दु शकमिति प्रतिपिपादयिषया छन्दानुवृत्तिदु साध्या इत्यत्रापिपदोपादानमावश्यकम् । अतोऽनभिहितवाच्यत्वमत्रदोष प्रतीम ।

* अभिप्रायश्छन्द आशय इत्यमर ।

मन्यसेऽरिवधःश्रेयान् प्रीतये नाकिनामिति ।
पुरोडाशभुजामिष्टमिष्ट कर्तुमलन्तराम् ॥१०६॥

अ०—नाकिना प्रीतये अरिवध. श्रेयान् इति मन्यसे (चेत्) (तदा) पुरोडाशभुजाम् इष्ट कर्तुम् इष्टम् अलन्तराम् ॥

व्याक०—पुरोडाशं भुञ्जत इति तेषा पुरोडाशभुजाम् । भुजे क्विबन्तम पुरो दाश्यत इति पुरोडाश, दाशेर्घञ्, "व्रीहेश्च पुरोडाशे" इति निपातनाद् दस्य ड । वध., श्रेयान्-व्याख्यातपूर्वौ । इष्टम्-इषे· कर्मणि, यजेः भावे वा क्तान्तम् । अतिशयेन अलम् अलन्तराम्, तरप्प्रत्यय, तदन्ताद् "किमेत्तिङ्" इत्यामु. । प्रीतये-तादर्थ्ये चतुर्थी ।

व्या०—त्वम्, नाकिनाम्-देवानाम्, प्रीतये-सतोषाय, अरे.-शत्रोः, चैद्यस्य वध -मारणम्, श्रेयान्-प्रशस्यतर, इति मन्यसे, चेत् तदा, पुरोडाशभुजाम्-पुरोडाश.-हविर्विशेषः, तद्भोजिनाम्-देवानाम्, इष्टम्-अभीप्सितम्, कर्तुम्, इष्टम्-याग, अलन्तराम्-(शत्रुवधापेक्षया) अतिशयेन पर्याप्तम् ।

भा०—ननु सुहृत्कार्यापेक्षया सुरकार्यं वलीय इतीन्द्रसंदेशमनुरुध्य शिशुपालहननेन देवसंतोष एव पूर्वं सपादनीय, इतिचेत्, सत्यम्, यदि चैद्यविनाशनेन देवप्रसादनमेव ते समुद्दिष्ट तर्हि तदपेक्षया यज्ञेनैव देवाना प्रीति विशेषत साधयितु शक्यते, हवि प्रिया वै देवा यज्ञ एव हवींषि लभन्ते, नान्यत्र । (शत्रुवधस्तु यज्ञानन्तरमपि सुकर., तथा सति देवानामुभयथा प्रीति, हविर्लाभेन शत्रुवधेन च) तथा च मित्राविरोधेनापि देवप्रीतौ सम्पद्यमानाया मित्रविरोधो न कर्तव्य । यज्ञे सन्निधातव्यमेव ।

अल०—यथा देवप्रीत्या अरिवधश्रेयस्त्वोपन्यासेन यज्ञोपेक्षणं समर्थितं तथैव यज्ञानुपेक्षणस्याऽपि समर्थनाद् व्याघात । पुरोडाशभुजामिति साभिप्राय विशेषणमिति परिकर ।

अमृत नाम यत् सन्तो मन्त्रजिह्वेषु जुह्वति ।
शोभैव मन्दरक्षुब्धक्षुभिताम्भोधिवर्णना ॥ १०७ ॥

अ०—सन्त· मन्त्रजिह्वेषु यद् जुह्वति (तद्) अमृत नाम, मन्दरक्षुब्धक्षुभिताम्भोधिवर्णना (तु) शोभा एव ।

व्याक०—मन्त्रा एव जिह्वा येषां तेषु मन्त्रजिह्वेषु । मन्दर एव क्षुब्ध तेन क्षुभितस्य अम्भोधेः वर्णना, मन्दरक्षुब्धक्षुभिताम्भोधिवर्णना । क्षुब्ध-क्षुभितौ-क्षुभ्यतेः क्रान्तौ, पूर्वत्र " क्षुब्धस्वान्त–" इत्यनेनेडभावो निपातनात्। वर्णना वर्णयतेः युच्, जुह्वति-जुहोतेर्लट्-झौ रूपम् ।

व्या०—सन्तः-विद्वांसो याज्ञिकाः, * मन्त्रजिह्वेषु-अग्निषु, यत् पुरोडाशादिकं हविः, जुह्वति-विधिपूर्वकं क्षिपन्ति, तदेव, अमृतं नाम-वस्तुतः अमृतम्, उच्यते । मन्दरः-मन्दराख्यपर्वत एव, क्षुब्धः-मन्थनदण्डः, तेन-क्षुभितस्य-मथितस्य, अम्भोधेः-समुद्रस्य, वर्णना तु, शोभा एव-अलङ्कार एव ।

भा०-ननु अमृताशिनो देवाः, तेषां किमेभिः पिष्टपुरोडाशभक्षणप्रलोभनैरित्यत आह अग्नौ विधिपूर्वकं हुतं पुरोडाशादिद्रव्यमेवामृतमुच्यते, नान्यदस्त्यमृतान्तरम्, देवासुरैः संभूय मन्दरं मन्थदण्डं प्रकल्प्य समुद्रो मथितः, ततश्चामृतं प्रादुर्भूतमिति तु लोकविनोदाय कविकल्पनाप्रसूतमालङ्कारिकवर्णनमात्रम् ।

**सहिष्ये शतमागांसि सूनोस्त इति यत् त्वया ।**
**प्रतीक्ष्यं तत् प्रतीक्ष्यायै पितृष्वस्रे प्रतिश्रुतम् ॥ १०८ ॥**

अ०—प्रतीक्ष्यायै पितृष्वस्रे ' ते सूनोः शतम् आगांसि सहिष्ये ' इति यत् त्वया प्रतिश्रुतम्, तत् प्रतीक्ष्यम् ।

व्याक०—पितुः स्वस्रे पितृष्वस्रे, " विभाषा स्वसृपत्योः " इति विकल्पाल्लुगभावः, " मातापितृभ्यां स्वसा " इति षत्वम्, " प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता " इतिसम्प्रदानत्वाच्चतुर्थी । प्रतीक्ष्यायै प्रतिपूर्वादीक्षेः कर्मणि " ऋहलोर्ण्यत् " एवं प्रतीक्ष्यमित्यत्रापि । त्वयेति तत्कर्तरि तृतीया ।

व्या०—† प्रतीक्ष्यायै पूज्यायै, पितृष्वस्रे पितृभगिन्यै-शिशुपालजनन्यै, ' ते-तव, सूनोः-सुतस्य शिशुपालस्य, शतम्-शतसंख्यानि, ‡ आगांसि-अपराधान्, साहिष्ये क्षमिष्ये ' । इति यत् त्वया, प्रतिश्रुतम् प्रतिज्ञातम्, तत्-अपराधशतक्षमणम्, प्रतीक्ष्यम्-पालनीयम् ।

---

* मन्त्रजिह्वः सप्तजिह्वः सुजिह्वो हव्यवाहनः इत्यमरः ।

† पूज्यः प्रतीक्ष्य इत्यमरः । ‡ आगोऽपराधो मन्युश्च—इत्यमरः ।

भा०—न केवल मित्रद्रोह एव त्वा सग्रामात् प्रतिरुणद्धि, अपि तु त्वत्-प्रतिज्ञापि, तथा हि त्वया शिशुपालजननीं प्रति प्रतिज्ञात यदहं शिशुपालस्य शतमपराधान् क्षमिष्ये, न चाद्यापि तदपराधा शतसख्यामिता, तत पूर्वमेव तद्वधे प्रतिज्ञाभङ्गो महान् दोष प्राप्नोति, अत प्रतिज्ञानुरोधेनापि त्वया चैद्योऽधुना नाभिषेणनीयः।

अल०—प्रतीक्ष्यायै-इति विशेषण प्रतिश्रुतस्य प्रतीक्ष्यत्वे साभिप्रायमिति परिकर।

**तीक्ष्णा नारुन्तदा बुद्धिः कर्म शान्तं प्रतापवत्।**
**नोपतापि मन सोष्म वागेका वाग्मिन सत ॥ १०६ ॥**

अ०—सत बुद्धिः तीक्ष्णा ( अपि ) अरुन्तुदा न, कर्म प्रतापवद् (अपि) शान्तम्, मन सोष्म अपि उपतापि न, वाग्मिनः वाग् एका।

व्याक०—अरुस्तुदतीति अरुन्तुदा "विध्वरुषोस्तुदः" इति खश्। "खित्यनव्ययस्य" इति मुमागम। सोष्म व्याख्यातम्। प्रतापवद्-प्रतापशब्दान्मतुप्। उपतपति तच्छीलमुपतापि-तपेर्णिनि। वाग्मिन-'वाचो ग्मिनिः"। वाक्सम्बन्धे षष्ठी। सत. बुद्धि मनः-कर्मसम्बन्धे षष्ठी।

व्या०—सतः-सत्पुरुषस्य, बुद्धिः, तीक्ष्णा-निशिताऽपि, अरुन्तुदा न-शस्त्रवन्मर्मच्छेदिनी न भवेत्, कर्म-व्यापारः, प्रतापवत्-तेजस्वि भयदमपि, शान्तम्, भवेत्, न तु सिंहादिवद् हिंस्रम्, मन, सोष्म-अभिमानोष्णमपि, उपतापि न अग्न्यादिवत् सतापक न स्यात्, वाग्मिन -प्रशस्तवाचः-सत्यभाषिणः, वाक्-वाणी, एका-एकरूपा-अपरिवर्तिनी, भवेत्।

भा०—सत्पुरुषाणा बुद्धिर्यद्यपि निशिता तथापि सा न शस्त्रादिवत् परमर्माणि भिनत्ति, अहिंसयैव कार्यं साधयति, तथैव तेषा कर्माणि परास्तत्-प्रभावाक्रान्तान् विदधते, पर पीडोत्पादकानि न भवन्ति। एवमेव तेषा मनोऽभिमानज्वलित भवति, न मात्रयाप्यपमान सहते, तथापि अनुचितात् परसंतापनाद् विरमति। इत्थमेव सत्यसन्धोऽपि सत्यमेव वदति-न जातु तदुक्तं विपर्येति। तथा च सत्यसन्धस्य तव प्रतिश्रुतार्थहानिरनर्हा।

अल०—अत्र प्रकृताया वाचोऽप्रकृताना बुद्धिकर्ममनना च तुल्यधर्मादी-

पम्याावगमाद्दीपकालङ्कारः, बुद्ध्यादीना शस्त्रादिव्यतिरेको व्यज्यते इति च मल्लिनाथ । पूर्वपद्योक्तार्थस्य सामान्येन समर्थनादर्थान्तरन्यासोऽपि ।

**स्वयकृतप्रसादस्य तस्याह्नो भानुमानिव ।**
**समयावधिमप्राप्य नान्तायाल भवानपि ॥ ११० ॥**

अ०—अह्न भानुमानिव स्वयकृतप्रसादस्य तस्य अन्ताय समयावधिम् अप्राप्य भवान् अपि न अलम् ।

व्याक०—स्वय कृत प्रसाद. यस्य तस्य स्वयंकृतप्रसादस्य, समयस्य अवधि समयावधिम् । अवधिमिति दधाते कि । अन्ताय-" नम स्वस्ति " इत्यलमो योगे चतुर्थी । अह्न , तस्य-उभयत्र षष्ठी-अन्तायेत्यनेन सम्बन्धे ।

व्या०—अह्नः-दिनस्य, भानुमानिव-सूर्यइव, स्वय कृत , प्रसाद.-शतापराधक्षमारूपोऽनुग्रह , ( दिनपक्षे प्रकाश ) यस्य तथोक्तस्य, तस्य, चैद्यस्य, अन्ताय विनाशाय, समयावधिम्-नियतकालावसानम् , अप्राप्य, भवानपि, नालम्-न समर्थः ।

भा०—अपराधशतक्षमारूपवरदानेन * त्वया शिशुपाल स्वयमनुगृहीत. तथा च अपराधशतात् पूर्वं न त्वयापि स हन्तु शक्यते, त्वयेदानीं तदभियेण-नम्, अपराधसङ्ख्यापूर्तये कालः प्रतीक्षणीय । यथा सूर्य' स्वयमेव दिन प्रकाश्य न मध्य एव तदन्त विधातु प्रभवति, अपि त्वस्तमनकाल एव, तद्वत् ।

अल०—श्लेषानुप्राणितोपमा ।

**कृत्वा कृत्यविदस्तीर्थेष्वन्त प्रणिधय. पदम् ।**
**विदाङ्कुर्वन्तु महतस्तल विद्विपदम्भस ॥ १११ ॥**

अ०—कृत्यविद. प्रणिधय तीर्थपु अन्त पद कृत्वा महत विद्विपदम्भस तल विदाङ्कुर्वन्तु ।

व्याक०—कृत्य वेत्ति तस्य कृत्यविद , विदे क्विप् । विद्विषत एव अम्भस विद्विपदम्भस । प्रणिधीयन्त इति प्रणिधय. प्र-नि-पूर्वाद् दधाते कि । "नेगर्दनद–" इति नेर्णत्वम् । विदाङ्कुर्वन्तु-विदेर्लोट् । " विदाङ्कुर्वन्त्वित्यन्यतर-

---

* अपराधशत क्षाम्य मयाह्यस्य पितृष्वस !, पुत्रस्य ते वधार्हस्य मा त्व शोके मन. कृथा । इत्यादिशतापराधक्षमावरदानकथा महाभारते सभापर्वतोऽनुसन्धेया ।

स्याम् " इति विकल्पादाम्प्रत्ययनिपातः ।

व्या०-कृत्यविद -कार्यज्ञा , प्रणिधय -गूढपुरुषा , *तीर्थेषु-तरन्त्येभिरिति तीर्थानि तेषु—मन्त्रि–पुरोहित-सेनापति–युवराजाद्यष्टादशस्थानेषु, ( पक्षे जलावतारेषु च ) अन्त , पदम्-स्थानम् ( पक्षे पादप्रक्षेप च ) कृत्वा, महत.-बृहत , ( पक्षे दुरवगाहस्य च ) विद्विषतः-शत्रोरिव, अम्भसः-जलस्य, †तलम्-स्वरूपम्-प्रमाणमितियावत्, ( उभयत्र-समानम्, अथवा जलपक्षे तलम्-अधः-गम्भीर्यमितियावत् ) विदाङ्कुर्वन्तु-जानन्तु ।

भा० —तर्हि शिशुपाल सर्वथेदानीमुपेक्ष्य एव, नेत्याह, न मे सर्वथा शिशुपालोपेक्षणे तात्पर्यम्, इद तु वच्मि, यथा कस्मिंश्चिदज्ञातगाम्भीर्ये महति जलाशये कुशलपुरुषद्वारा जलावतरणसाधनसोपानेषु पादन्यासेन तद्गाम्भीर्यं विज्ञाय तत्र प्रविश्यते, तथा सति न तत्र निमज्जनादिभय भवति, तथैवाभिषेणनात् प्राग् भवतो निपुणा गुप्तचरा शत्रो राष्ट्रे गत्वा तत् मन्त्रि-पुरोहितादिष्वन्त प्रविश्य–'कियत्यस्य शक्ति ' 'कानि चास्य च्छिद्राणि' इत्यादि निपुण गवेषयन्तु, तथा सति शत्रुः सुपरिभव स्यात् ।

अल०—श्लिषपरम्परितरूपकमिति मल्लिनाथः ।

**अनुत्सूत्रपदन्यासा सद्वृत्ति. सन्निबन्धना ।**
**शब्दविद्येव नो भाति राजनीतिरपस्पशा ॥११२॥**

अ०—अनुत्सूत्रपदन्यासा सद्वृत्ति. सन्निबन्धना राजनीति अपस्पशा शब्दविद्येव नो भाति ।

व्याक०—सूत्राणि सूत्रेभ्यो वा उत्क्रान्त उत्सूत्रः, प्रादिसमासः । न उत्सूत्र. पदस्य न्यासः यस्या सा अनुत्सूत्रपदन्यासा पक्षे-न उत्सूत्राणि पदानि यस्मिन् स. अनुत्सूत्रपद , तादृश. न्यासो यस्या सा अनुत्सूत्रपदन्यासा-इति बहुव्रीहिगर्भो बहुव्रीहिः । सती वृत्ति. यस्या सा सद्वृत्ति । "स्त्रिया पुवद्' इति पुवद्भाव । सन्ति निबन्धनानि सत् निबन्धन वा यस्या सा

* योनौ जलावतारे च मन्त्रा(न्त्या)द्यष्टादशस्वपि पुण्यक्षेत्रे तथा पात्रे तीर्थं स्याद्–इति हलायुध ।

† अध स्वरूपयोरस्त्री तलम्—इत्यमर. ।

सन्निबन्धना । निबध्यतेऽनेन अस्मिन् वेति करणे ऽधिकरणे वा ल्युट् । अपगताः स्पशाः यस्या, अविद्यमान पस्पश यस्या वा सा अपस्पशा । स्पश-पस्पशशब्दौ क्रमेण केवलाद् यङन्ताच्च स्पशधातोः अचि माधू । उत्तरत्र "यङोचि च" इति यङो लुक्, पृषोदरादित्वात् "दीर्घो ऽकित " इतिदीर्घाभाव. । शब्दस्य विद्या शब्दविद्या, "सञ्ज्ञायां समज–" इति विदेः करणे क्यपि विद्या ।

व्याख्या—अनुत्सूत्रपदन्यासा-न उत्सूत्र -उच्छास्त्र.-'नीतिशास्त्रविरुद्ध ' पदन्यास –एकपदप्रक्षेपोऽपि- स्वल्पव्यवहारोपीतियावत्, यस्या तथोक्ता, नीतिपूर्वकसर्वव्यहारेत्यर्थ , ( पक्षे अनुत्सूत्रपदः—अनुत्सृष्टसूत्राक्षरः—इष्ट्युपसख्याननैरपेक्ष्येण सूत्राक्षरैरेव सर्वार्थप्रतिपादक, अथवा सूत्रविरुद्ध यत्रैकपदमपि नास्ति तादृश , न्यास -न्यासनामा वृत्तिव्याख्यानग्रन्थविशेषो यस्या तथाभूता ) सद्वृत्तिः-सती-शोभना-योग्यतानुरूपा ., वृत्ति -भृत्यादीनाम् आजीविका, यस्या तादृशी, ( पक्षे सती-श्रेष्ठा-वैशद्येनार्थप्रतिपादिका, वृत्ति.-काशिकाख्यसूत्रव्याख्यानग्रन्थविशेप , यस्या तथोक्ता ) सन्निबन्धना-सन्ति निबन्धनानि-अनुजीव्यादीना क्रियावसानेषु दत्तानि गोहिरण्यादिपारितोषिकदानानि यस्या तथाभूता, ( पक्षे-सत्, निबन्धनम्-महाभाष्याख्याकरग्रन्थ., यस्या तथाविधा ) राजनीति., अपस्पशा-अपगत., † स्पश -चार, यस्यास्तथाभूता स्वपरवृत्तान्तज्ञानार्थं चाररहिता ( पक्षे-अविद्यमान पस्पशः-शास्त्रारम्भसमर्थकः उपोद्घातसदर्भग्रन्थ -महाभाष्यस्याद्य पस्पशाह्निकमितियावत, यस्या तथोक्ता ) शब्दविद्येव-व्याकरणशास्त्रमिव, नो भाति-न शोभते ।

भा०—यथा व्याकरणशास्त्र सूत्रानुसारिन्यास-वृत्ति-महाभाष्यग्रन्थैरुपबृंहितमपि पस्पशाह्निकं विना त्रुटितमिव न शोभते, तदध्ययनमन्तरेण व्याकरणाध्ययनमसकल मन्यते, तथैव चारप्रचार विना राजनीतिरप्यसमग्रेव, काम तत्र सकलव्यवहारा नीतिशास्त्राविरोधेनैव सम्पाद्येरन्, मन्त्र्यादिपदाधिकारिण पुष्कलवृत्तय क्रियेरन्, समये समये च ते गोहिरण्यादिपा-

* वृत्तिर्ग्रन्थजीवनयो. इति वैजयन्ती ।

† यथार्हवर्णं प्रणिधिरपसर्पश्चर स्पश. चारश्च गूढपुरुषश्च—इत्यमरः ।

रितोषिकादिनापि सभाव्येरन्, पर नैतावता चारोपेक्षण शक्यते विधातुम्। चार विना राज्ञोऽन्धप्रायत्वात् न तस्य परराष्ट्रनीति सफला भवितुमर्हति। अत प्रणिधिप्रचारो नितरामावश्यक ।

अल०—श्लेषानुप्राणितोपमा।

अज्ञातदोषैर्दोषज्ञैरुद्दूष्योभयवेतनै ।
भेद्या शत्रोरभिव्यक्तशासनै सामवायिका: ॥११३॥

अ०—अज्ञातदोषै दोषज्ञै अभिव्यक्तशासनै उभयवेतनैः ( चरैः ) शत्रो सामवायिका उद्दूष्य भेद्या ।

व्याक०—न ज्ञातो दोषो येषा तैः अज्ञातदोषै । दोषान् जानन्ति तै दोषज्ञैः। "आतोऽनुपसर्गे कः"। अभिव्यक्तानि शासनानि यै तै अभिव्यक्त-शासनै, मल्लिनाथस्तु येषा तैरिति विजग्राह, तन्मते येषामिति सम्बन्धसामान्ये षष्ठी। उभयस्मिन् उभयस्माद् वा वेतन येषा तै उभयवेतनै । समवाय समवयन्ति इति सामवायिका, समवायशब्दात् "समवायान् समवैति" इति ठक्। उद्दूष्य-उत्पूर्वाद् दूषयतेर्ल्यप्। भिदेरर्ण्यति भेद्याः।

व्या०—अज्ञात-परैः अविदित, दोष-स्वकर्म, येषा तादृशै, दोषज्ञै-परमर्मज्ञैः, अभिव्यक्तानि-भेद्यस्य राज्ञ अग्रे प्रकटितानि, शासनानि-तदमात्याद्य-विश्वासकराणि कूटलिखितानि, यैः तथोक्तै ( अथवा शत्रूणा शासनानि यैर्विदितानि, तै ) उभयवेतनै-शत्रुपक्षात् स्वपक्षाच्च भृतिं लभमानैः, भेद्य-नगरवास्तव्यै चरै, शत्रोः-शत्रुसम्बन्धिन, सामवायिकाः-सङ्घमुख्या-मन्त्र्यादय, उद्दूष्य-द्विषामेते दत्तहस्ता, अस्माभिरेषा लिखितान्येव गृहीतानि, इति उच्चैर्दूषयित्वा, भेद्या-उपजप्तव्या-विघटनीया ।

भा०—न केवल चारमुखेन परवृत्तान्तज्ञानम्, अपि तु शत्रुपक्षे चारद्वारा उपजापश्च कर्तव्य, तथाहि-एतादृशा निपुणाः प्रणिधय शत्रुराष्ट्रे प्रहेतव्या ये तत्र गत्वा अमात्यादिप्रधानपुरुषेषु विश्रम्भोत्पादनद्वाराऽनुप्रविश्य तत्कृपया तत्रैव वैतनिक किमपि राजकीयपदमधिष्ठाय तथा निपुण प्रचरन्तु यथा तद्रहस्य नोद्घाट्येत, स्वय च ते शत्रुमर्माणि जानीयु, किं च प्रधानामात्यादीना कूटलेखान् ( तै लिखितान्, स्वय कपटकल्पितान् वा ) सगृह्य, सत्यवसरे

राज्ञः अग्रे प्रकाश्य, 'इमे भवत्प्रधानपुरुषा उत्कोचादिना द्विषा दत्तहस्ता भवद्राज्यमुन्मूलयितु यतन्ते,' इत्येव ते महान्त दोषमारोप्य राज्ञो भेदनीयाः।

**उपेयिवांसि कर्तारः पुरीमाजातशात्रवीम् ।**
**राजन्यकान्युपायज्ञैरेकार्थानि चरैस्तव ॥११४॥**

अ०—उपायज्ञैः तव चरैः एकार्थानि राजन्यकानि आजातशात्रवीम् पुरीम् उपेयिवांसि कर्तारः ।

व्याक०—उपायान् जानन्ति, तैः उपायज्ञैः । एक अर्थो येषा तानि एकार्थानि । न जातः शत्रुः यस्य सोऽजातशत्रुः, तस्येमाम् आजातशात्रवीम् । शैषिकोऽण् । अनुशतिकादित्वादुभयपदवृद्धिः । राज्ञामपत्यानि राजन्यानि, तेषा समूहा राजन्यकानि, पूर्वं राजशब्दात् "राजश्वशुराद्यत्" ततः "गोत्रोक्ष" इत्यनेन सामूहिको वुञ् । करोते अनुक्ते कर्मणि प्रथमा । उपेयिवच्छब्दो व्याख्यातः, 'उपेयिवांसि' इति तस्यैव क्लीबे रूपम्, राजन्यकाना विधेय-विशेषणम् । कर्तारः-कर्मणि लुट्, चरैरिति तत्कर्तरि तृतीयान्तम् । पुरीमिति-उपयनक्रियाकर्मणि द्वितीया ।

व्या०—उपायज्ञैः-कार्यसाधनकुशलैः, तव, चरैः-गूढपुरुषैः, एक -त्वया सह समानः, अर्थः-प्रयोजन येषा तथाभूतानि, तव मित्राणि चैद्यस्य अमित्रा-श्चेति यावत्, राजन्यकानि-राज्ञा समूहा, आजातशात्रवीम्-अजातशत्रोः-युधिष्ठिरस्य, पुरीम्-इन्द्रप्रस्थम्, उपेयिवांसि-प्राप्तानि, कर्तारः-करिष्यन्ते ।

भा०—किं च ये तव सुहृदः चैद्यस्य असुहृदश्च राजानः सन्ति, ते उभयेऽपि त्वत्तुल्यमेव चैद्यपराभव कामयन्ते, अतस्ते निपुणैः स्वप्रणिधिभिः तथा गूढ सदेष्टव्याः यथा ते अध्वरयात्राव्याजेन युद्धार्थं सुसज्जिता भूत्वा इन्द्रप्रस्थ उपतिष्ठेरन्, तेषु तत्रागतेष्वनायासेनैव ते महत् कार्यं सेत्स्यति ।

**सविशेष सुते पाण्डोर्भक्ति भवति तन्वति ।**
**वैरायितारस्तरला स्वय मत्सरिणः परे ॥११५॥**

अ०—पाण्डोः सुते भवति सविशेष भक्ति तन्वति (सति) तरलाः मत्सरिणः परे स्वयं वैरायितारः ।

व्याक०—विशेषेण सह सविशेषम्, अव्ययीभावः, क्रियाविशेषणम् ।

तन्वति-तनोते हेतौ शत्रन्तम् । सति सप्तमी । मत्सरशब्दात् निन्दायाम् इनौ मत्सरिण । वैर कर्तार वैरायितार, "शब्दवैर–" इति क्यङन्तात् कर्तरि लुट् ।

व्या०—पाण्डोः सुते-युधिष्ठिरे, भवति-पूज्ये त्वयि, सविशेषम्-सातिशयम्, भक्तिम्-आदरम्, तन्वति-विदधति सति, तरला -चपला -सङ्कीर्ण-हृदया, मत्सरिण -अन्यशुभद्वेषिण -परोत्कर्षमसहमाना, परे-शत्रव, स्वयमेव, वैरायितार.-वैर करिष्यन्ति ।

भा०—ननु तत्राध्वरे कीदृशो युद्धप्रसङ्ग., यदर्थं सज्जितो राजवर्ग आहूयेत-इत्यतस्तत्र महत् कलहबीजमुपन्यस्यति-युधिष्ठिरो यज्ञे सम्मिलितस्य तव महान्त सत्कार करिष्यति, तथाविध च ते समुत्कर्षं चैद्य, तन्मित्राणि, अन्ये च त्वच्छत्रवो न सहिष्यन्ते, असहमानाश्च ते तत्रावश्य कलहमुत्पादयेयु, न च विचारयेयुर्यन्नाय कलहावसर इति, यतस्ते तरला', विवेकस्तान् दूरतोऽपि न स्पृशेत्-इत्यस्ति यज्ञे महती युद्धसभावना ।

अल०—शत्रुविशेषणयो साभिप्रायत्वात् परिकर । प्रश्नोन्नयनादुत्तरा लङ्कारश्च ।

**य इहात्मविदो विपक्षमध्ये सहसवृद्धियुजोऽपि भूभुज. स्युः ।**
**बलिपुष्टकुलादिवान्यपुष्टैः पृथगस्मादचिरेण भाविता तैः ॥११६॥**

अ०—ये इह विपक्षमध्ये सहसवृद्धियुज अपि आत्मविद भूभुज स्यु', तैः बलिपुष्टकुलाद् अन्यपुष्टैरिव अचिरेण अस्मात् पृथग् भाविता ।

व्याक०—सत्रृद्ध्या युज्यन्त इति सत्रृद्धियुजः । आत्मान विदन्ति आत्मविद । भुव भुञ्जते भूभुज । युजि-विदि-भुजिभ्य क्विप् । बलिभिः पुष्टाना कुलाद् बलिपुष्टकुलात् । "पृथग्विना–" इत्यनेन पञ्चमी, तत्रान्यतरस्याग्रहणस्य समुच्चयार्थत्वाद्, एवमस्मादित्यत्रापि । अन्यैं पुष्टैः अन्यपुष्टैः । कर्तरि तृतीया, तैरित्यत्रापि सैव । भाविता-भावे लुट्, चिरवदिट् ।

व्या०—ये, इह, विपक्षाणाम्-शत्रूणाम्, मध्ये, सह सत्रृद्धियुज -चैद्येन सहैश्वर्य गता अपि, ( अन्यपुष्टपक्षे-बलिपुष्टै सह पोष्यमाणा अपि ) आत्मविद -स्वाभिजनवेदिन., ( स्वस्वरूपवेदिनो वा ) भूभुज.-राजान., स्यु., तै -

गजैभि, बलिपुष्टानाम्-*काकानाम्, कुलात्, अन्यपुष्टैरिव-परभृतैरिव, अचिरेण-सद्यः, अस्मात्-विपक्षमध्यात्, पृथग् भाविता-पृथग् भविष्यते।

भा०—किं च शत्रुपक्षगा सर्वेऽपि त्वां द्वेक्ष्यन्ति, इत्यपि न मन्तव्यम्, यतस्तेषु सन्ति भूयांसो यादवा, ये यद्यपि बाल्यात् प्रभृति शिशुपालेन सह मित्रत्वमुपगम्येदानीं तत्समानवैभवमुपभुञ्जते, परन्तु त्वया सह कलहावसरे न ते शिशुपालपक्षमवलम्बिष्यन्ते। यतस्ते स्वान् यदुवंशवरान् विज्ञाय त्वया सह विरोधेन स्ववंशविद्वेषं न कामयेरन्, अथवा पराश्रिता अपि ते आत्माभिमानिनो न स्वजातिविरोधे प्रवर्तेरन्। प्रत्युत तदानीं तस्मात् पृथग् भूत्वा त्वामनुप्रविशेयुः। यथा पिकपोता काकशावकैः सहैकस्मिन्नीडे काकैरेव संवर्ध्यमाना अपि सति सामर्थ्ये काककुलं परित्यज्य, स्वकुलमनुप्रविशन्ति, तद्वत्। पिक्यो निभृतं काकनीड एव स्वाण्डानि प्रसुवते, तानि च काक्य स्वीयबुद्धया रक्षन्तीति लोकवृत्तमत्रानुसन्धेयम्।

अल०—उपमा। आत्मविद इति विशेषणं साभिप्रायमिति परिकर। वृत्तमौपच्छन्दसिकम्, तदुक्तं रत्नाकरे-'पर्यन्ते यौ तथैव शेषमौपच्छन्दसिकं सुधीभिरुक्तम्' इति।

**सहजचापलदोषसमुद्धतश्चलितदुर्बलपक्षपरिग्रहः।**
**तव दुरासदवीर्यविभावसौ शलभतां लभतामसुहृद्गण ॥ ११७ ॥**

अ०—सहजचापलदोषसमुद्धतः चलितदुर्बलपक्षपरिग्रह असुहृद्गणः तव दुरासदवीर्यविभावसौ शलभतां लभताम्।

व्याक०—सहज चापलम् एव दोष, तेन समुद्धत सहजचापलदोषसमुद्धत। चापलमिति चपलशब्दात् भावेऽण्। चलित. दुर्बल पक्षस्य परिग्रह· (पक्षे चलितौ दुर्बलौ पक्षपरिग्रहौ) यस्य स चलितदुर्बलपक्षपरिग्रह। दुरासदे वीर्ये एव विभावसौ दुरासदवीर्यविभावसौ। दुरासदवीर्यशब्दौ व्याख्यातपूर्वौ। शलभताम्-भावतलन्तम्। लभताम्-लभेराशिषि लोट्।

व्या०—सहजम्-स्वाभाविकम्, यत् § चापलम्-दुर्विनीतत्वं (पक्षे अन-

* काके तु करटारिष्टबलिपुष्टसकृत्प्रजा —इत्यमर।

§ चपलं पारदे शात्रे दुर्विनीतेऽनवस्थिते इति वैजयन्ती।

वस्थितत्वम् ) तदेव दोप., तेन समुद्धतः-दृप्त , चलित -अस्थिर , दुर्बल.-अल्पशक्ति , पक्षपरिग्रह -परिगृहीत * पक्षः-सहायवर्ग , ( पक्षे चलितौ, दुर्बलौ पक्षपरिग्रहौ-गरुतौ इति यावत् ) यस्य तथाभूत., असुहृदाम्-शत्रूणाम्. गण समूह , तव-भवतः, दुरासदे-दु सहे, वीर्यविभावसौ, †-पराक्रमाग्नौ, ‡ शलभताम् पतङ्गताम्, लभताम्-प्राप्नोतु ।

भा०—पतङ्ग. खलु स्वभावतश्चञ्चलो नैकत्रावतिष्ठते, अनवरतव्यापृतौ तस्य पक्षावप्यतिदुर्बलौ न किञ्चिदप्यसह्य सोढु शक्नुत , स यथा निजनैसर्गिकेण चापलेन प्रेरितः दुर्धर्षां वन्हिशिखामाक्रम्य तत्र सहसात्मान जुहोति, तथैव तत्र शत्रवोऽपि निसर्गदुर्विनीततया ( अधीरतया वा ) उद्धताः सन्ति ( ते यद्यपि राजसूये युधिष्ठिरकृत तव सम्मानमसहमाना अवश्य कलहमुत्पादयिष्यन्ति ) पर तेषा पक्षोऽति दुर्बल. ( यतस्तत्पक्ष्याः केचन कलहावसरे स्वकुलाभिमानेनावश्य त्वत्पक्ष स्वीकरिष्यन्ति ) अतस्त्वया सह वैरायिष्यमाणा तव दु सहतेजसि भस्मसाद् भविष्यन्तीत्यस्माभिराशास्यते ।

अल०—रूपकालङ्कार इति मल्लिनाथ , लभता लभतामिति यमकम् । द्रुतविलम्बित वृत्तम, तदुक्तम्-द्रुतविलम्बितमाह नभौ भरौ ।

**इति विशकलितार्थामौद्धवीं वाचमेना—**
**मनुगतनयमार्गामर्गला दुर्नयस्य ।**
**जनितमुदमुदस्थादुच्चकैरुच्छ्रितोर —**
**स्थलनियतनिषण्णश्रीश्रुता शुश्रुवान् स ॥११८॥**

इति श्रीमाघकृतौ शिशुपालवधे महाकाव्ये द्वितीयः सर्गः ।

अ०—स इति विशकलितार्थाम् अनुगतनयमार्गां दुर्नयस्य अर्गला जनितमुदम् उच्छ्रितोर स्थलनियतनिषण्णश्रीश्रुताम् औद्धवीम् एना वाच शुश्रुवान् उच्चकै उदस्थात् ।

---

* पक्षः पार्श्वगरुत्साध्यसहायबलभित्तिषु—इति वैजयन्ती ।

† सूर्यवन्ही विभावसू—इत्यमर ।

‡ समौ पतङ्गशलभौ—इत्यमर ।

व्याक०—विशकलिता अर्थाः यस्या ता विकशलितार्थाम्, विशकलितेति तत्करोतिरिणजन्ताद् विशकलशब्दात् क्त । अनुगत नयस्य मार्गः यया ताम् अनुगतनयमार्गाम् । जनिता मुद् यया ता जनितमुदम्, जनितेति जनयतेः क्तान्तम् । उच्छ्रिते उरस्थले नियत निषएणया श्रिया श्रुताम् उच्छ्रितोरस्थलनियतनिषएणश्रीश्रुताम् । उच्छ्रितेति उत्पूर्वात् श्रयते क्तान्तम् । उरस्थलेति प्रशसावाचिस्थलशब्देनोरश्शब्दस्य "प्रशसावचनैश्च" इत्यनेन समास । उर स्थलमिवेत्युपमितसमासो वा । नियतनिषएणशब्दौ व्याख्यातपूर्वौ । उद्धवस्येमाम् औद्धवीम् । शैषिकोण्, ततो ङीप् । शुश्रुवान्-श्रणोते क्वस्वन्त. । उदस्थात्-उनपूर्वात् तिष्ठतेर्लुङ् । "गातिस्था" इति सिचो लुक् ।

व्याख्या—स -हरि', इति-इत्थम्, विशकलिता -विवेचिता अर्था., यस्या तादृशीम्, अनुगतनयमार्गाम्-नीतिमार्गानुसारिणीम्, दुर्नयस्य-बलभद्राद्युक्तदुनति , अर्गलाम्-निवारयित्रीम्, जनिता-उत्पादिता, मुद्-आनन्द , यया तथोक्ताम्, उच्छ्रिते-उन्नते, उरस्थले-प्रशस्ते ( स्थलवदतिविस्तीर्णे वा ) वक्षसि, नियतम्-अविश्रान्तं यथा स्यात्तथा, निषएणया-आश्रितया, श्रिया-लक्ष्म्या, ( नान्येन ) श्रुताम्, औद्धवीम्-उद्धवोक्ताम्, एना वाचम्, शुश्रुवान्-श्रुतवान्, उच्चकै -उन्नत सन्, उदस्थात्-आसनादुत्थितवान् ।

भा०—हरिरुद्धवस्य व्याख्यान श्रुत्वा नितरामतुष्यत् । यतस्तत्रोद्धव. प्रतिविषयं नीतिशास्त्रानुसारिणी समीचीं विवेचनामतनोत् । नीतिविरुद्धं बलभद्रोक्तमपि युक्त्या प्रतिचिक्षेप । अन्ते च हरि सभा विसृज्योदस्थात् । न चैषातिगुप्तस्थानविहिता मन्त्रणा कस्याप्यन्यस्य श्रुतिपथमवतीर्णा । यद्यपि हरिवक्षस्थलवासिनी श्रीरिमा श्रुतिगोचरमकरोत्, तया च स्त्रीस्वभावात् कदाचिदस्या' प्रकाशन सभाव्यते, पर तथापि नात्र तथा सभावनावसर , यत सा नित्य हरेर्उरस्थलवासिनी न क्षणमपि हरेः पृथग्भवति—इति दुर्लभस्तस्यास्तत्प्रकाशनावसर । किंचोच्चै पदमारूढया तया नैतत् क्षुद्रकर्म-

---

* मतल्लिकोद्धमिश्रा. स्यु. प्रकाण्डस्थलभित्तय., हस्तपाशतटा. पादपाली-मचर्चिकादयः—इति प्रशसावाचका. ।

नभाव्यते । इद नियतोच्छ्रितपदाभ्या सूचितम् ।

अल०—रूपकानुप्रासालङ्काराविति मल्लिनाथ , भावार्थोक्तरीत्या परिकर , मुदमुदेति यमक च । मालिनी वृत्तम्, 'ननमयययुतेय मालिनी भोगिलोकै' इति तल्लक्षणम् । काव्यस्य श्रयङ्कतानिर्वाहाय श्रीपदम् ।

सगृह्य सर्गनवक महाकाव्यचतुष्टयात् ।
सच्छात्राणा प्रबोधाय व्याख्येय तस्य सुग्रहा ॥१॥
परमेश्वरसाहाय्यमाप्य* सपादिता मया ।
परमेश्वरपादाब्जयुगे† भक्त्या समर्प्यते ॥२॥
दोषानुपेक्ष्य दोषज्ञा मनुष्यसुलभानिह ।
यदि स्याद् गुणलेशस्त गृह्णीरन्निदमर्थये ॥३॥
जयपुरराजसभादृतकविपदमधितिष्ठतो द्विजाग्रयस्य ।
चातुर्वेदिक-माथुर-गोकुलचन्द्रस्य तनुजन्मा ॥४॥
कविवरधुर्य-पितामह-जीवनलालेन सम्यगुपनीतः ।
जयपुरसस्कृतविद्याशालामासेव्य‡ प्राप्तसद्विद्यः ॥५॥
शास्त्रप्रवेशमाप्तो महात्मनो जानकीलालात्§ ।
श्रीहरिदत्तसुधीवरमुखचन्द्रात्|| कौमुदीं¶ लब्ध्वा ॥६॥
+लक्ष्मीनाथकृपालवविदिताखिलशब्दशास्त्रसर्वस्व ।

---

* श्रीपरमेश्वरानन्दशास्त्रिण स्वान्तेवसिन सहकारितान् ।

† जगदीश्वरस्य ।

‡ महाराजसस्कृतकालेजनाम्नीम् ।

§ तस्या पाठशालाया प्रवेशिकाप्रधानाध्यापकमाथुरचतुर्वेदश्रीजानकीलाल-पण्डितेभ्य ।

|| व्याकरणाध्यापक-जयपुरराजगुरु-श्रीहरिदत्तशर्ममैथिलेभ्यः ।

¶ वैयाकरणसिद्धान्तकौमुदीमधीत्य ।

+ जयपुरसस्कृतपाठशालाध्यक्ष-द्राविडश्रीलक्ष्मीनाथशास्त्रिभ्य ।

श्रीजीवनाथगुरुत *समधीतन्यायसाहित्य ॥७॥
श्रीमधुसूदनविद्यावाचस्पतिपदयुग† तरीकृत्य ।
उत्तीर्णदर्शनोदधिरासादितधर्ममर्मनिधिः ॥८॥
शास्त्राण्यध्यापयितु व्याख्यातु वा सनातन धर्मम् ।
पर्यटितविविधदेशो विद्वद्भि प्रणयपात्रता नीतः ॥९॥
भारतसम्राडर्पितविबुधजनोचितगरिष्ठपद ।
महामहोपाध्यायो गिरिधरशर्मा चतुर्वेद ॥१०॥
जयनगरराजकीये सस्कृतविद्यालयेऽधुना सोऽयम् ।
मुख्य पदमधितिष्ठन् दर्शनशास्त्राणि पाठयन्नास्ते ॥११॥

इति च्छात्रोपकारिण्या महाकाव्यसग्रहव्याख्याया नवमः सर्ग ।
समाप्तं चेदं सग्रहस्य द्वितीय खण्डम् ।
शुभमस्तु ।

---

* न्यायप्रधानाध्यापक–सर्वशास्त्रपारङ्गत–-गुरुपदख्यातश्रीजीवनाथशर्म–मैथिलेभ्य., स्वस्य दीक्षागुरुभ्य ।

† जयपुरराजसभाप्रधानपण्डित–विश्वविदितवैदुष्य–वेदशास्त्रपारदृश्व–सर्वतन्त्रस्वतन्त्र–विद्यावाचस्पतिश्रीमधुसूदनशर्ममैथिलानाम् अनेकग्रन्थनिर्मातॄणाम् ।

श्रीः

# महाकाव्यसंग्रहः ।



( परिशिष्टखण्डम् )

म. म. श्रीगिरिधरशर्म्मचतुर्वेदेन

सम्पादितः—प्रकाशितश्च ।



मनोहरइलैक्ट्रिक प्रेस सैदमिट्ठा बाजार लाहौर ।

# भूमिका

विदितमेवैतत्पञ्चनद विश्वविद्यालय-परीक्षार्थिनश्छात्रवृन्द-स्य, तदध्यापकवर्गस्य च, यद्विशारदपरीक्षार्थिच्छात्रहिताय 'महाकाव्यसंग्रह' इति नाम्ना काव्यानां संग्रह एकश्छात्रहित-कारिण्या स्वीयया व्याख्यया समायोज्य प्रकाशितोऽस्माभि, स च वर्षसप्तकं यावद्विश्वविद्यालयपरीक्षायां सन्निविष्टोऽभूत्, यादृशश्च योग्यतालाभस्तेन जातश्छात्रवृन्दस्य, तं छात्रा एव विदन्ति न वयं तद्विषये किमपि वक्तुं प्रगल्भामहे। इदानीन्तु १९३३ खिस्ताब्दमारभ्य संपत्स्यमानासु विशारदपरीक्षासु तत्स्थाने कश्चिदभिनवः संग्रहः 'विशारदीयकाव्यसंग्रह' इति नाम्ना विश्वविद्यालयपरिषदा नियुक्तः, स्वयमेव विश्वविद्याल-येन प्रकाशितश्च । तस्मिन्नेतस्मिन्नभिनवे संग्रहे महाकाव्यसं-ग्रहापेक्षया किञ्चिदेव वैलक्षण्यं दृश्यते । महाकाव्यसंग्रहे संगृहीतेषु नवसु सर्गेषु सप्त सर्गा अभिनेव संग्रहेऽपि यथाव-दवोद्धृता आलोक्यन्ते, केवलं कालिदासस्य प्राकृतवस्तुवर्णन-नैपुण्य-निकषायितम्, रघुवंशस्य त्रयोदशं सर्गम्, प्रतिज्ञापालने जीवनाध्यकञ्च, किरातार्जुनीयस्यैकादशं सर्गं निस्सार्य, त-त्स्थाने बुद्धचरितस्य तृतीयः सर्गः, मेघदूतखण्डकाव्यात्पूर्व-मेघस्य कतिचन पद्यानि, किरातार्जुनीयस्य प्रथमः सर्गः, भामिनीविलासस्य कतिचित्पद्यानि संनिवेशितानि । तत्र च महाकाव्याना मल्लिनाथकृतैव टीका, भामिनीविलासस्यापि च काचित्प्राक्तनी टीका संग्रहीना, बुद्धचरितस्य च जीवद्दाक्षि-णात्यविद्वत्प्रकाशिताऽभिनवा व्याख्या विन्दुविसर्गादिभिः किञ्चिदिव परिवर्त्याभिनवं रूपमापाद्य संनिवेशिता ता एता व्याख्याश्छात्राणामध्ययन-पद्धतौ न तथोपकुर्युर्यथा च्छात्रहि-

नकारिणी व्याख्येति बहूनां विदुषामस्ति विश्वासः । बहवश्च च्छात्रास्तामेव हितकारिणीं व्याख्यां पठितुं कामयन्ते । ते मा-भूवन् वञ्चिता इति-अभिनव-संनिवेशितस्यांशस्य प्राक्तनीः व्याख्याः संगृह्य, बुद्धचरितस्य चाभिनवा संक्षिप्ता व्याख्यां निर्माय 'महाकाव्यसंग्रह' परिशिष्टरूपेण झटिति खण्डमिदं मया सम्पादितम् । महाकाव्यसंग्रहश्चैतत्खण्ड-सहितो विशा-रदीयकाव्यसंग्रहमूल्येनैव प्रदेयश्छात्रेभ्य. इत्येतत्प्रकाशकेन मेहरचन्द्रलक्ष्मणदास पुस्तकालयाध्यक्षेणोररीकृतम्, तदिमं संग्रहं संगृह्य सप्तसु सर्गेषु याऽस्ति च्छात्रहितकारिणी व्यख्या, तया सम्यक् काव्याध्ययनपद्धतौ साहाय्यमाप्स्यन्ति च्छात्रा, न तया व्याख्यया ते वञ्चिताः स्युः । अभिनव-संगृहीतस्य त्वंशस्याभिनवव्याख्या विरचने प्रकाशन कालविलम्बं सम्भा-व्य न स प्रयत्नोऽनुष्ठित इदानीम् । परं यद्यस्यैव संग्रहस्य सं ग्रणे छात्राणा विशेषेण रुचिरुपलभ्येत, तर्ह्यचिरादेव छात्र-हितकारिण्या व्याख्यया सनाथं खण्डमिदमपि प्रकाशयितुं प्रयत्येतास्माभिरिति—

गिरिधर शर्म्मा चतुर्वेदः

[ सम्पादकः ]

अथ

# मेघदूतम् ।

## संजीविन्या समेतम् ।

### पूर्वमेघः ।

( जिन श्लोको को ऐसा  चिन्ह  लगा है वह परीक्षा मे नियत नहीं हैं )

मातापितृभ्यां जगतो नमो वामार्धजानये ।
सद्यो दक्षिणदृक्पातसंकुचद्वामदृष्टये ॥

अन्तरायतिमिरोपशान्तये शान्तपावनमचिन्त्यवैभवम् ।
तन्नर वपुषि कुञ्जर मुखे मन्महे किमपि तुन्दिलं महः ॥
शरण करवाणि कामद ते चरण वाणि ! चराचरोपजीव्यम् ।
करुणामसृणै कटाक्षपातै कुरु मामम्ब ! कृतार्थसार्थवाहम् ॥

इहान्वयमुखेनैव सर्वं व्याख्यायते मया ।
नामूल लिख्यते किंचिन्नानपेक्षितमुच्यते ॥

"आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम्" इति शास्त्रात्काव्यादौ वस्तुनिर्देशात्कथा प्रस्तौति—

कश्चित्कान्ताविरहगुरुणा स्वाधिकारात्प्रमत्तः
शापेनास्तंगमितमहिमा वर्षभोग्येण भर्तुः ।
यक्षश्चक्रे जनकतनयास्नानपुण्योदकेषु

१ स्वाधिकारप्रमत्त

स्निग्धच्छायातरुषु वसतिं रामगिर्याश्रमेषु ॥ १ ॥

कश्चिदिति ॥ स्वाधिकारात्स्वनियोगात्प्रमत्तोऽनवहित ॥ "प्रमादोऽनवधानता" इत्यमर । "जुगुप्साविरामप्रमादार्थानामुपसंख्यानम्" इत्यपादानत्वम् । तस्मात्पञ्चमी ॥ अतएवापराधाद्धेतो । कान्ताविरहेण गुरुणा दुर्भरेण । दुस्तरेणेत्यर्थ ॥ "गुरुस्तु गीष्पतौ श्रेष्ठे गुरौ पितरि दुर्भरे" इति शब्दार्णवे ॥ वर्षभोग्येण सवत्सरभोग्येण ॥ "कालाध्वनोरत्यन्तसयोगे" इति द्वितीया । "अत्यन्तसयोगे च" इति समास । "कुमति च" इति णत्वम् । भर्तु स्वामिन शापेन । अस्तगमितो महिमा सामर्थ्यं यस्य सोऽस्तगमितमहिमा ॥ अस्तमिति मकारान्तमव्ययम् ॥ तस्य 'द्वितीया–" इति योगविभागात्समास ॥ कश्चिदनिर्दिष्टनामा यक्षो देवयोनिविशेष ॥ "विद्याधराप्सरोयक्षरक्षोगन्धर्वकिंनरा । पिशाचो गुह्यक सिद्धो भूतोऽमी देवयोनय " इत्यमर ॥ जनकतनयाया सीताया स्नानैरवगाहनै पुण्यानि पवित्राण्युदकानि येषु तेषु । पावनेष्वित्यर्थ ॥ छायाप्रधानास्तरवश्छायातरव ॥ शाकपार्थिवादित्वात्समास ॥ स्निग्धा सान्द्राश्छायातरवो नमेरुवृक्षा येषु तेषु । वसतियोग्येष्वित्यर्थ ॥ "स्निग्ध तु मसृणे सान्द्रे" इति । "छायावृक्षो नमेरु स्यात्" इति च शब्दार्णवे ॥ रामगिरेश्चित्रकूटस्याश्रमेषु वसतिम् ॥ "वहिवस्यर्तिभ्यश्च" इत्यौणादिकोऽतिप्रत्यय ॥ चक्रे कृतवान् ॥ अत्र रसो विप्रलम्भाख्य शृङ्गार । तत्राप्युन्मादावस्था । अतएवैकत्रानवस्थान सूचितमाश्रमेष्विति बहुवचनेन ॥ सीता प्रति रामस्य हनुमत्सदेश मनसि निधाय मेघसदेश कवि कृतवानित्याहु ॥ अत्र काव्ये सर्वत्र मन्दाक्रान्तावृत्तम् । तदुक्तम्—"मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद्गुरू चेत्" इति ॥

तस्मिन्नद्रौ कतिचिदबलाविप्रयुक्तः स कामी
नीत्वा मासान्कनकवलयभ्रंशरिक्तप्रकोष्ठः ।
आषाढस्य प्रथमदिवसे मेघमाश्लिष्टसानुं

वप्रक्रीडापरिणतगजप्रेक्षणीयं ददर्श ॥ २ ॥

तस्मिन्निति ॥ तस्मिन्नद्रौ चित्रकूटाद्रौ । अबलाविप्रयुक्त कान्ताविरही । कनकस्य वलय कटकम् । "कटकं वलयोऽस्त्रियाम्" इत्यमर ॥ तस्य भ्रंशेन पातेन रिक्त शून्य प्रकोष्ठ कूर्पराधः प्रदेशो यस्य स तथोक्त ॥ "कक्षान्तरे प्रकोष्ठ स्यात्प्रकोष्ठ कूर्परादध" इति शाश्वत ॥ विरहदु खात्कृश इत्यर्थ । कामी कामुक स यक्ष । कतिचिन्मासान् । अष्टौ मासानित्यर्थ । "शेषान्मासान्गमय चतुर" इति वक्ष्यमाणत्वात् ॥ नीत्वा यापयित्वा । अषाढानक्षत्रेण युक्ता पौर्णमास्याषाढी ॥ "नक्षत्रेण युक्त काल" इत्यण् । "टिड्ढाणञ्–" इत्यादिना ङीप् ॥ साषाढ्यास्मिन्पौर्णमासी स्याषाढो मास ॥ 'सास्मिन्पौर्णमासीति संज्ञायाम्" इत्यण् ॥ तस्य प्रथमदिवसे आश्लिष्टसानुमाक्रान्तकूटम् । वप्रक्रीडा उत्खातकेलय ॥ 'उत्खातकेलि शृङ्गाद्यैर्वप्रक्रीडा निगद्यते" इति शब्दार्णवे ॥ तासु परिणतास्तिर्यग्दन्तप्रहार ॥ "तिर्यग्दन्तप्रहारस्तु गज परिणतो मत" इति हलायुध ॥ स चासौ गजश्च तमिव प्रेक्षणीय दर्शनीय मेघ ददर्श ॥ गजप्रेक्षणीयमित्यत्रैवलोपाल्लुप्तोपमा ॥ केचित् "आषाढस्य प्रथमदिवसे" इत्यत्र "प्रत्यासन्ने नभसि" इति वक्ष्यमाणनभोमासप्रत्यासत्त्यर्थं "प्रथमदिवसे" इति पाठ कल्पयन्ति तदसगतम् । प्रथमातिरेके कारणाभावात् । नभोमासस्य प्रत्यासत्त्यर्थमित्युक्तमिति चेन्न । प्रत्यासत्तिमात्रस्य मासप्रत्यासत्त्यैव प्रथमदिवसस्याप्युपपत्ते । अत्यन्तप्रत्यासत्तेरुपयोगाभावेनाविवक्षितत्वात् । विवक्षितत्वे वा स्वपक्षेऽपि प्रथमदिवसातिक्रमेण मेघदर्शनकल्पनाया प्रमाणाभावेन तदसभवात् । प्रत्युतास्मत्पक्ष एव कुशलसदेशस्य भाव्यनर्थप्रतीकारार्थस्य पुरत एवानुमानमुक्त भवतीत्युपयोगसिद्धि ॥ ननून्मत्तस्य नाय विवेक इति चेन्न । उन्मत्तस्य नानर्थस्य प्रतीकारार्थं प्रवृत्तिरपीति सदेश एव मा भूत् । तथा च काव्यारम्भ एवाप्रसिद्ध स्यादित्यहो मूलच्छेदो पाण्डित्यप्रकर्ष ॥ कथ तर्हि 'शापान्तो मे भुजगशयनादुत्थिते शार्ङ्गपाणौ" इत्यादिना भगवत्प्रबोधावधिकस्य शापस्य मासचतुष्टयावशिष्टस्योक्ति, दशदिवसाधिक्यादिति चेत्–स्वपक्षेऽपि कथ मा, विंशतिदिवसैर्न्यूनत्वादिति सतोष्टव्यम् । तस्मादीषद्वैषम्यमवि-

वद्वितमिति सुष्ठूक्त "प्रथमदिवसे" इति २ ॥

* तस्य स्थित्वा कथमपि पुरः कौतुकाधानहेतो-
रन्तर्बाष्पश्चिरमनुचरो राजराजस्य दध्यौ ।
मेघालोके भवति सुखिनोऽप्यन्यथावृत्ति चेतः
कण्ठाश्लेषप्रणयिनि जने किं पुनर्दूरसंस्थे ॥ ३ ॥

* प्रत्यासन्ने नभसि दयिताजीवितालम्बनार्थी
जीमूतेन स्वकुशलमयीं हारयिष्यन्प्रवृत्तिम् ।
स प्रत्यग्रैः कुटजकुसुमैः कल्पितार्घाय तस्मै
प्रीतः प्रीतिप्रमुखवचनं स्वागतं व्याजहार ॥४॥

* धूमज्योतिः सलिलमरुतां संनिपातः क्व मेघः
संदेशार्थाः क्व पटुकरणैः प्राणिभिः प्रापणीयाः ।
इत्यौत्सुक्यादपरिगणयन्गुह्यकस्तं ययाचे
कामार्ता हि प्रकृतिकृपणाश्चेतनाचेतनेषु ॥ ५ ॥

* जातं वंशे भुवनविदिते पुष्करावर्तकानां
जानामि त्वां प्रकृतिपुरुषं कामरूपं मघोनः ।
तेनार्थित्वं त्वयि विधिवशाद्दूरबन्धुर्गतोऽहं
याच्ञा मोघा वरमधिगुणे नाधमे लब्धकामा ॥ ६ ॥

* संतप्तानां त्वमसि शरणं तत्पयोद ! प्रियायाः
संदेशं मे हर धनपतिक्रोधविश्लेषितस्य ।
गन्तव्या ते वसतिरलका नाम यक्षेश्वराणां
बाह्योद्यानस्थितहरशिरश्चन्द्रिकाधौतहर्म्या ॥ ७ ॥

* त्वामारूढं पवनपदवीमुद्गृहीतालकान्ताः

---

१ केतकाधान

२ लम्बनार्थाम्, लम्बनार्थम्. ३ सप्रत्यग्रैः .

४ प्रणय

५ वन्ध्या.

६ धनपते

प्रेक्षिष्यन्ते पथिकवनिताः प्रत्ययादाश्वसन्त्य ।
क सनद्धे विरहविधुरां त्वय्युपेक्षेत जायां
न स्यादन्योऽप्यहमिव जनो यः पराधीनवृत्तिः ॥ ८ ॥
* मन्दं मन्दं नुदति पवनश्चानुकूलो यथा त्वां
वामश्चायं नदति मधुरं चातकस्ते सगन्ध ।
गर्भाधानक्षणपरिचयान्नूनमाबद्धमालाः
सेविष्यन्ते नयनसुभगं खे भवन्त बलाकाः ॥ ९ ॥
तां चावश्यं दिवसगणनातत्परामेकपत्नी-
मव्यापन्नामविहतगतिर्द्रक्ष्यसि भ्रातृजायाम् ।
आशाबन्धः कुसुमसदृशं प्रायशो ह्यङ्गनानां
सद्यः पाति प्रणयि हृदयं विप्रयोगे रुणद्धि ॥ १० ॥
कर्तुं यच्च प्रभवति महीमुच्छिलीन्ध्रामवन्ध्यां
तच्छ्रुत्वा ते श्रवणसुभगं गर्जितं मानसोत्काः ।
आ कैलासाद्बिसकिसलयच्छेदपाथेयवन्तः
संपत्स्यन्ते नभसि भवतो राजहंसाः सहायाः ॥ ११ ॥
आपृच्छस्व प्रियसखममुं तुङ्गमालिङ्ग्य शैलं
वन्द्यैः पुंसां रघुपतिपदैरङ्कितं मेखलासु ।
काले काले भवति भवतो यस्य संयोगमेत्य
स्नेहव्यक्तिश्चिरविरहजं मुञ्चतो बाष्पमुष्णम् ॥ १२ ॥
मार्गं तावच्छृणु कथयतस्त्वत्प्रयाणानुरूपं
संदेशं मे तदनु जलद श्रोष्यसि श्रोत्रपेयम् ।
खिन्नः खिन्नः शिखरिषु पदं न्यस्य गन्तासि यत्र
क्षीणः क्षीणः परिलघु पयः स्रोतसां चोपभुज्य ॥ १३ ॥

मार्गमिति ॥ हे जलद, तावदिदानीं कथयत । मत्त इति शेष ।

---

१ तोयगृध्नु, ते सगर्व २ क्षमपरिचयम्, स्थिरपरिचयम् ३ प्रेक्षिष्यन्ते.
४ उच्छिलीन्ध्रातपत्राम्
५ त्वत्प्रयाणानुकूलम् ६ उपयुज्य

त्वत्प्रयाणस्यानुरूपमनुकूलं मार्गमध्वानम् ॥ "मार्गो मृगपदे मासि सौम्यर्क्षे-ऽन्वेषणेऽध्वनि" इति यादव ॥ शृणु । तदनुमार्गश्रवणानन्तरं श्रोत्राभ्या पेय पानार्हम् । अतितृष्णया श्रोतव्यमित्यर्थं ॥ पेयग्रहणात्सदेशस्यामृत-साम्य गम्यते ॥ मे सदेश वाचिकम् ॥ "सदेशवाग्वाचिक स्यात्" इत्यमर ॥ श्रोष्यसि । यत्र मार्गे खिन्न खिन्नोऽभीक्ष्ण क्षीणवल सन् ॥ "नित्यवी-प्सयो " इति नित्यार्थे द्विर्भाव ॥ शिखरिषु पर्वतेषु पद न्यस्य निक्षिप्य । पुनर्वललाभार्थं क्वाचिद्विश्रम्येत्यर्थ । क्षीण क्षीणोऽभीक्ष्ण कृशाङ्ग सन् ॥ अत्रापि कृदन्तत्वात्पूर्ववद्द्विरुक्ति ॥ स्रोतसा परिलघु गुरुत्वदोषरहितम् । उपलास्फालनखेदितत्वात्पथ्यमित्यर्थ ॥ तथा च वाग्भट —"उपलास्फाल-नक्षेपविच्छेदै खेदितोदका । हिमवन्मलयोद्भूता पथ्या नद्य भवन्त्यमू ॥" इति ॥ पय पानीयमुपभुज्य शरीरपोषणार्थमभ्यवहृत्य च गन्तासि गमिष्यसि ॥ गमेर्लुट् ॥

**अद्रेः शृङ्गं हरति पवन. किंस्विदित्युन्मुखीभि-**
**र्दृष्टोत्साहश्चकितचकितं मुग्धसिद्धाङ्गनाभि ।**
**स्थानादस्मात्सरसनिचुलादुत्पतोदङ्मुख. खं**
**दिङ्नागानां पथि परिहरन्स्थूलहस्तावलेपान् ॥ १४ ॥**

अद्रेरिति ॥ पवनो वायुरद्रेश्चित्रकूटस्य शृङ्ग हरति किंस्वित् ॥ किंस्वि-च्छब्दो विकल्पवितर्कार्थादिषु पठित ॥ इति शङ्कयोन्मुखीभिरुन्नतमुखीभि ॥ "स्वाङ्गाच्चोपसर्जनादसयोगोपधात्" इति ङीप् ॥ मुग्धाभिर्मूढाभि ॥ ' मुग्ध सुन्दर मूढयो " इत्यमर । सिद्धाना देवयोनिविशेषाणामङ्गनाभिश्चकितचकितं चकितप्रकार यथा तथा ॥ "प्रकारे गुणवचनस्य" इति द्विर्भाव ॥ दृष्टोत्साहो दृष्टोद्योग सन् । सरसा आर्द्रा निचुला स्थलवेतसा यस्मिंस्तस्मात् ॥ "वानीरे कविभेदे स्यान्निचुल· स्थलवेतसे" इति शब्दार्णवे ॥ अस्मात्स्थानादाश्रमा-त्पथि नभोमार्गे दिङ्नागाना दिग्गजाना स्थूला ये हस्ता करास्तेषामवलेपाना क्षेपान्परिहरन् ॥ "हस्तो नक्षत्रभेदे स्यात्करेभकरयोरपि" इति । "अवले-पस्तु गर्वे स्यात्क्षेपणे दूषणेऽपि च" इति च विश्व ॥ उदङ्मुख सन्

१ वहति २ दृष्टोच्छ्राय . ३ अवलेहान्.

अलकाया उदीच्यत्वादित्याशय ॥ खमाकाशमुत्पतोदङ्मुखः ॥ अत्रेदमप्यर्थान्तर ध्वनयति—रसिको निचुलो नाम महाकवि कालिदासस्य सहाध्यायी परापादितानां कालिदासप्रबन्धदूषणानां परिहर्ता यस्मिन्स्थाने तस्मात्स्थानादुदङ्मुखो निर्दोषत्वादुन्नतमुख सन्पथि सारस्वतमार्गे दिङ्नागानाम् ॥ पूजाया बहुवचनम् ॥ दिङ्नागाचार्यस्य कालिदासप्रतिपक्षस्य हस्तावलेपान्हस्ताविन्यासपूर्वकाणि दूषणानि परिहरन् ॥ "अवलेपस्तु गर्वे स्याल्लेपने दूषणेऽपि च" इति विश्व ॥ अद्रेरद्रिकल्पस्य दिङ्नागाचार्यस्य शृङ्ग प्राधान्यम् ॥ "शृङ्ग प्राधान्यसान्वोश्च" इत्यमर ॥ हरति किंस्विदिति हेतुना सिद्धैः सारस्वतसिद्धैर्महाकविभिरङ्गनाभिश्च दृष्टोत्साह सन्खमुत्पतोच्चैर्भवेति स्वप्रबन्धमात्मान वा प्रति कवेरुक्तिरिति ॥ "संसर्गजा दोषगुणा भवन्तीत्येतन्मृषा येन जलाशयेऽपि । स्थित्वानुकूल निचुलश्चलन्तमात्मानमारक्षति सिन्धुवेगात् ॥" इत्येतच्छ्लोकनिर्माणात्तस्य कवेर्निचुलसंज्ञेत्याहु ॥

रत्नच्छायाव्यतिकर इव प्रेक्ष्यमेतत्पुरस्ता-
द्वल्मीकाग्रात्प्रभवति धनुःखण्डमाखण्डलस्य ।
येन श्यामं वपुरतितरां कान्तिमापत्स्यते ते
बर्हेणेव स्फुरितरुचिना गोपवेषस्य विष्णोः ॥ १५ ॥
त्वय्यायत्तं कृषिफलमिति भ्रूविलासानभिज्ञैः
प्रीतिस्निग्धैर्जनपदवधूलोचनैः पीयमानः ।
सद्य सीरोत्कषणसुरभि क्षेत्रमारुह्य मालं
किंचित्पश्चाद्व्रज लघुगति भूय एवोत्तरेण ॥ १६ ॥

त्वयीति ॥ कृषेर्हलकर्मण फल सस्य त्वयि ॥ अधिकरणविवक्षाया सप्तमी ॥ आयत्तमधीनम् ॥ "अधीनो निघ्न आयत्त" इत्यमरः ॥ इति हेतो प्रीत्या स्निग्धै । अकृत्रिमप्रेमार्द्रैरित्यर्थ । भ्रूविलासाना भ्रूविकाराणामनभिज्ञै । पामरत्वादिति शेष । जनपदवधूना पल्लीयोषिता लोचनै पीयमान सादरं वीक्ष्यमाण सन् । माल मालाख्य क्षेत्र शैलप्रायमुन्नतस्थलम् ॥ "मालमुन्नतभूतलम्" इत्युत्पलमालायाम् ॥ सद्यस्तत्कालमेव सीरैर्हलैरुत्कषणेन कर्षणेन

१ भ्रूविकारानभिज्ञै २ प्रचलय गतिम्. ३ किंचिदेव.

सुरभि घ्राणतर्पणं यथा तथाऽऽघ्राय । तत्राभिवृष्येत्यर्थ ॥ "सुरभिर्घ्राणतर्पण" इत्यमर ॥ किंचित्पश्चाल्लघुगतिस्तत्र निर्वृष्टत्वात्क्षिप्रगमन सन् ॥ "लघु क्षिप्रमर द्रुतम्" इत्यमर ॥ भूय पुनरप्युत्तरेणैवोत्तरमार्गेणैव व्रज गच्छ ॥ तृतीयाविधाने "प्रकृत्यादिभ्य उपसंख्यानम्" इति तृतीया ॥ यथा कश्चिद्बहुवल्लभ पति कुत्रचित्क्षेत्रे कलत्रे गूढ विहृत्य ॥ "क्षेत्रं शरीरे केदारे सिद्धस्थानकलत्रयो" इति विश्व ॥ दाक्षिण्यभङ्गभयान्नीचमार्गेण निर्गत्य पुन सर्वाध्यक्ष इव सचरति तद्वदिति ध्वनि ॥

**त्वामासारप्रशमितवनोपप्लवं साधु मूर्ध्ना**
**वक्ष्यत्यध्वश्रमपरिगतं सानुमानाम्रकूटः ।**
**न क्षुद्रोऽपि प्रथमसुकृतापेक्षया संश्रयाय**
**प्राप्ते मित्रे भवति विमुखः किं पुनर्यस्तथोच्चैः ॥१७॥**

त्वामिति ॥ आम्राश्चूता कूटेषु शिखरेषु यस्य स आम्रकूटो नाम सानुमान्पर्वत ॥ 'आम्रश्चूतो रसालोऽसौ" । "कूटोऽस्त्री शिखर शृङ्गम्" इति चामर । आसारो धारावृष्टि ॥ "धारासपात आसार" इत्यमर ॥ तेन प्रशमितो वनोपप्लवो दावाग्निर्येन तम् । कृतोपकारमित्यर्थ । अध्वश्रमेण परिगत व्याप्तं त्वा साधु सम्यङ्मूर्ध्ना वक्ष्यति वोढा ॥ वहेर्लृट् । तथाहि । क्षुद्र कृपणोऽपि ॥ "क्षुद्रो दरिद्रे कृपणे नृशसे" इति यादव ॥ सश्रयाय सश्रयणाय मित्रे सुहृदि ॥ 'अथ मित्र सखा सुहृत्" इत्यमर ॥ आगते सति । प्रथमसुकृतापेक्षया पूर्वोपकारपर्यालोचनया विमुखो न भवति यस्तथा तेन प्रकारेणोच्चैरुन्नत स आम्रकूट कि पुनर्विमुखो न भवतीति किमु वक्तव्यमित्यर्थ ॥ एतेन प्रथमावसथे सौख्यलाभात्ते कार्यसिद्धिरस्तीति सूचितम् । तदुक्त निमित्तनिदाने—"प्रथमावसथे यस्य सौख्य तस्याखिलेऽध्वनि । शिव भवति यात्रायामन्यथा त्वशुभ ध्रुवम् ॥" इति ॥

*** छन्नोपान्तः परिणतफलद्योतिभिः काननाम्रै-**
**स्त्वय्यारूढे शिखरमचलः स्निग्धवेणीसवर्णे ।**
**नूनं यास्यत्यमरमिथुनप्रेक्षणीयामवस्थां**
**मध्ये श्यामः स्तन इव भुवः शेषविस्तारपाण्डुः ॥१८॥**

स्थित्वा तस्मिन्वनचरवधूभुक्तकुञ्जे मुहूर्तं
तोयोत्सर्गद्रुततरगतिस्तत्परं वर्त्म तीर्णः ।
रेवां द्रक्ष्यस्युपलविषमे विन्ध्यपादे विशीर्णां
भक्तिच्छेदैरिव विरचितां भूतिमङ्गे गजस्य ॥ १९ ॥

स्थित्वेति ॥ हे मेघ, वने चरन्ति ते वनचरा ॥ "तत्पुरुषे कृति बहुलम्" इति बहुलग्रहणाद् लुग्भवति ॥ तेषा वधूभिर्भुक्ता कुञ्जा लतागृहा यत्र तस्मिन् ॥ "निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे" इत्यमर ॥ तत्र ते नयनविनोदोऽस्तीत्यर्थ । तस्मिन्नाम्रकूटे मुहूर्तमल्पकालम् । न तु चिरं, स्वकार्यविरोधादिति भाव ॥ "मुहूर्तमल्पकाले स्याद्घटिकाद्वितयेऽपि च" इति शब्दार्णवे ॥ स्थित्वा विश्रम्य । तोयोत्सर्गेण "त्वामासार–" इत्युक्तवर्षणेन द्रुततरगतिर्लाघवाद्धेतोरतिक्षिप्रगमन सन् । तस्मादाम्रकूटात्परमनन्तर तत्पर वर्त्म मार्गं तीर्णोऽतिक्रान्त । उपलै पाषाणैर्विषमे विन्ध्यस्याद्रे पादे प्रत्यन्तपर्वते ॥ "पादा प्रत्यन्तपर्वता "इत्यमर ॥ विशीर्णां समन्ततो विसृमराम् ॥ एतेन कस्याश्चित्कामुक्या प्रियतमचरणपातोऽपि ध्वन्यते ॥ रेवा नर्मदाम् ॥ "रेवा तु नर्मदा सोमोद्भवा मेकलकन्यका" इत्यमर ॥ गजस्याङ्गे शरीरे भक्तयो रचना रेखा इति यावत् ॥ "भक्तिर्निषेवणे भागे रचनायाम्" इति शब्दार्णवे ॥ तासा छेदैर्भङ्गिभिर्भाभिर्विरचिता भूतिं शृङ्गारमिव भसितमिव वा ॥ "भूतिर्मातङ्गशृङ्गारे जातौ भस्मनि संपदि" इति विश्व ॥ द्रक्ष्यसि । अयमपि महास्ते नयनकौतुकलाभ इति भाव ॥

* तस्यास्तिक्तैर्वनगजमदैर्वासितं वान्तवृष्टि-
र्जम्बूकुञ्जप्रतिहतरयं तोयमादाय गच्छेः ।
अन्त सारं घन तुलयितुं नानिलः शक्ष्यति त्वां
रिक्तः सर्वो भवति हि लघु पूर्णता गौरवाय ॥२०॥

* नीपं दृष्ट्वा हरितकपिशं केसरैरर्धरूढै-
राविर्भूतप्रथममुकुलाः कन्दलीश्चानुकच्छम् ।

---

१ तोयोत्सर्गात् २ लघुतरगति
३ सएट.

जग्ध्वारण्येष्वधिकसुरभिं गन्धमाघ्राय चोर्व्याः
सारङ्गास्ते जललवमुचः सूचयिष्यन्ति मार्गम् ॥२१॥

उत्पश्यामि द्रुतमपि सखे मत्प्रियार्थं यियासोः
कालक्षेपं ककुभसुरभौ पर्वते पर्वते ते ।
शुक्लापाङ्गैः सजलनयनैः स्वागतीकृत्य केकाः
प्रत्युद्यातः कथमपि भवान्गन्तुमाशु व्यवस्येत् ॥२२॥

पाण्डुच्छायोपवनवृतयः केतकैः सूचिभिन्नै-
र्नीडारम्भैर्गृहबलिभुजामाकुलग्रामचैत्याः ।
त्वय्यासन्ने परिणतफलश्यामजम्बूवनान्ताः
संपत्स्यन्ते कतिपयदिनस्थायिहंसा दशार्णाः ॥२३॥

पाण्डिविति ॥ हे मेघ, त्वय्यासन्ने संनिकृष्टे सति दशार्णा नाम जनपदाः सूचिभिन्नैः सूचिषु मुकुलाग्रेषु भिन्नैर्विकासितैः ॥ "केतकीमुकुलाग्रेषु सूची स्यात्" इति शब्दार्णवे ॥ केतकैः केतकीकुसुमैः पाण्डुच्छायाः हरितवर्णा उपवनानां वृतयः कण्टकशाखावरणा येषु ते तथोक्ताः ॥ "प्राकारो वरणः सालः प्राचीरं प्रान्ततो वृतिः" इत्यमरः ॥ तथा गृहबलिभुजां काकादिग्रामपक्षिणां नीडारम्भैः कुलायनिर्माणैः ॥ "कुलायो नीडमस्त्रियाम्" इत्यमरः ॥ चित्याया इमानि चैत्यानि रथ्यावृक्षाः ॥ "चैत्यमायतने बुद्धवन्द्ये चोद्देशपादपे" इति विश्वः ॥ आकुलानि संकीर्णानि ग्रामेषु चैत्यानि येषु ते तथोक्ताः । तथा परिणतैः पक्वैः फलैः श्यामानि यानि जम्बूवनानि तैरन्ता रम्याः ॥ "मृताववसिते रम्ये समाप्तावन्त इष्यते" इति शब्दार्णवे ॥ तथा कतिपयेष्वेव दिनेषु स्थायिनो हंसा येषु ते तथोक्ताः एवंविधाः संपत्स्यन्ते भविष्यन्ति ॥ "पोटायुवतिस्तोककतिपय–" इत्यादिना कतिपयशब्दस्योत्तरपदत्वेऽपि न तच्छब्दस्योत्तत्वमस्त्यस्य शास्त्रस्य प्रायिकत्वात् ॥

तेषां दिक्षु प्रथितविदिशालक्षणां राजधानीं

---

१ नवजलमुचः

२ सनयनजलैः ३ प्रत्युद्गतः ४ नीडारम्भे ५ परिणतिफल, फलपरिणति

गत्वा सद्यः फलमविकलं कामुकत्वस्य लब्धा।
तीरोपान्तस्तनितसुभगं पास्यसि स्वादु यस्मा-
त्सभ्रूभङ्गं मुखमिव पयो वेत्रवत्याश्चलोर्मि ॥ २४ ॥

तेषामिति ॥ दिक्षु प्रथित प्रसिद्ध विदिशेति लक्षण नामधेयं यस्यास्ताम्॥ "लक्षण नाम्नि चिह्ने च" इति विश्व ॥ तेषा दशार्णाना सवन्धिनीम्। धीयन्तेऽस्यामिति धानी ॥ "करणाधिकरणयोश्च" इति ल्युट् ॥ राज्ञा धानी राजधानी ॥ 'कृद्योगलक्षणा षष्ठी समस्यते" इति वक्तव्यात्समास ॥ ता प्रधाननगरीम् ॥ 'प्रधाननगरी राज्ञा राजधानीति कथ्यते" इति शब्दार्णवे ॥ गत्वा प्राप्य सद्य कामुकत्वस्य विलासिताया 'विलासी कामुक कामी स्त्री-परो रतिलम्पट" इति शब्दार्णवे ॥ अविकल समग्र फल प्रयोजन लब्धा लप्स्यते। त्वयेति शेष ॥ कर्मणि लुट् ॥ कुत । यस्मात्कारणात्स्वादु मधुरम् चला उर्मयो यस्य तच्चलोर्मि तरङ्गितं वेत्रवत्या नाम नद्या पय सभ्रूभङ्ग भ्रूकुटियुक्तम् । दशनपीडयेति भाव । मुखमिवाधरमिवेत्यर्थ । तीरोपान्ते तटप्रान्ते यस्तनित गर्जित तेन सुभग यथा तथा । स्तनितशब्देन भणितमपि व्यपदिश्य ते। 'ऊर्ध्वमुच्चलितकण्ठनासिक हुङ्कृतं स्तनितमल्प-घोषवत्" इति लक्षणात् ॥ पास्यसि ॥ पिबतेर्लृट्॥ 'कामिनीनामधरास्वाद सुरतादतिरिच्यते" इति भाव ॥

नीचैराख्यं गिरिमधिवसेस्तत्र विश्रामहेतो-
स्त्वत्संपर्कात्पुलकितमिव प्रौढपुष्पैः कदम्बैः।
य पण्यस्त्रीरतिपरिमलोद्गारिभिर्नागराणा-
मुद्दामानि प्रथयति शिलावेश्मभिर्यौवनानि ॥ २५ ॥

* विश्रान्त सन्व्रज वननदीतीरजातानि सिञ्च-
न्नुद्यानानां नवजलकणैर्यूथिकाजालकानि।
गण्डस्वेदापनयनरुजाक्लान्तकर्णोत्पलानां

१ अतिमहत् २ लब्ध्व।
३ स्वादुयुक्तम्.
४ नव, नग

छायादानात्क्षणपरिचितः पुष्पलावीमुखानाम् ॥ २६ ॥
वक्र पन्था यदपि भवत प्रस्थितस्योत्तराशां
सौधोत्सङ्गप्रणयविमुखो मा स्म भूरुज्जयिन्याः ।
विद्युद्दामस्फुरितचकितैस्तत्र पौराङ्गनानां
लोलापाङ्गैर्यदि न रमसे लोचनैर्वञ्चितोऽसि ॥ २७ ॥

वक्र इति ॥ उत्तराशामुदीचीं दिशं प्रति प्रस्थितस्य भवत पन्था उज्जयिनीमार्गो वक्रो यदपि । दूरो यद्यपीत्यर्थ ॥ विन्ध्यादुत्तरवाहिन्या निर्विन्ध्या प्राग्भागे कियत्यपि दूरे स्थितोज्जयिनी । उत्तरपथस्तु निर्विन्ध्याया पश्चिम इति वक्रत्वम् ॥ तथाप्युज्जयिन्या विशालनगरस्य ॥ "विशालोज्जयिनी समा" इत्युत्पल ॥ सौधानामुत्सङ्गेषूपरिभागेषु प्रणय परिचय ॥ "प्रणय स्यात्परिचये याच्ञाया सौहृदेऽपि च" इति यादव ॥ तस्य विमुख पराङ्मुखो मा स्म भू । न भवेत्यर्थ ' स्मोत्तरे लङ् च" इति चकारादाशीरर्थे लुङ् । "न माङ्योगे" इत्यडागमप्रतिषेधः ॥ तत्रोज्जयिन्या विद्युद्दाम्नो विद्युल्लताना स्फुरितेभ्य स्फुरणेभ्यश्चकितैर्लोलापाङ्गैश्चञ्चलकटाक्षै पौराङ्गनाना लोचनैर्न रमसे यदि तर्हि त्व वञ्चित प्रतारितोऽसि । जन्मवैफल्य भवेदित्यर्थ ॥

संप्रत्युज्जयिनीं गच्छतस्तस्य मध्येमार्गं निर्विन्ध्यासवन्धमाह—

वीचिक्षोभस्तनितविहगश्रेणिकाञ्चीगुणाया
संसर्पन्त्या. स्खलितसुभगं दर्शितावर्तनाभे ।
निर्विन्ध्याया पथि भव रसाभ्यन्तर सन्निपत्य
स्त्रीणामाद्यं प्रणयवचनं विभ्रमो हि प्रियेषु ॥ २८ ॥

वीचीति ॥ हे सखे, पथ्युज्जयिनीपथे वीचिक्षोभेण तरङ्गचलने स्तनिताना मुखराणाम् ॥ कर्तरि क्त ॥ विहगाना हसाना श्रेणि पङ्क्तिरेव काञ्चीगुणो यस्यास्तस्या स्खलितेनोपस्खलनेन मदस्खलितेन च सुभग यथा तथा संसर्पन्त्या प्रवहन्त्या गच्छन्त्याश्च । तथा दर्शित प्रकटित आवर्तोऽम्भसा भ्रम एव नाभिर्यया ॥ ' स्यादावर्तोऽम्भसा भ्रम." इत्यमर ॥ निष्क्रान्ता

१ च. २ स्फुरण. ३ वञ्चित
४ रसाभ्यन्तरम् ५ प्रणयि

विन्ध्यान्निर्विन्ध्या नाम नदी ॥ "निरादयः क्रान्ताद्यर्थे पञ्चम्या" इति समास. । "द्विगुप्राप्तापन्नालम्-" इत्यादिना परवल्लिङ्गताप्रतिषेध ॥ तस्या नद्या सन्निगत्य सगत्य । रसो जलमभ्यन्तरे यस्य स । अन्यत्र रसेन शृङ्गारेणाभ्यन्तरोऽन्तरङ्गो भव । सर्वथा तस्या रसमनुभवेत्यर्थ । "शृङ्गारादौ जले वीर्ये सुवर्णे विषशुक्रयो. । तिक्तादावमृते चैव निर्यासे पारदे ध्वनौ ॥ आस्वादे च रस प्राहु" इति शब्दार्णवे ॥ यत्तु तत्प्रार्थनामन्तरेण कथ तत्रानुभवो युज्यत इत्यत आह—स्त्रीणामिति ॥ स्त्रीणा प्रियेषु विषये विभ्रमो विलास एवाद्य प्रणयवचन प्रार्थनावाक्य हि । स्त्रीणामेष स्वभावो यद्विलासैरेव रागप्रकाशनम् । नतु कण्ठत इति भाव ॥ विभ्रमश्चात्र नाभिसदर्शनादिरुक्त एव ॥

निर्विन्ध्याया विरहावस्था वर्णयस्तन्निराकरण प्रार्थयते—

वेणीभूतप्रतनुसलिलासावतीतस्य सिन्धुः ।
पाण्डुच्छाया तटरुहतरुभ्रंशिभिर्जीर्णपर्णैः ।
सौभाग्यं ते सुभग विरहावस्थया व्यञ्जयन्ती
कार्श्यं येन त्यजति विधिना स त्वयैवोपपाद्यः ॥ २९ ॥

प्राप्यावन्तीनुदयनकथाकोविदग्रामवृद्धा-
न्पूर्वोद्दिष्टामनुसर पुरीं श्रीविशालां विशालाम् ।
स्वल्पीभूते सुचरितफले स्वर्गिणां गां गतानां
शेषैः पुण्यैर्हृतमिव दिवः कान्तिमत्खण्डमेकम् ॥ ३० ॥

प्राप्येति ॥ विदन्तीति विदा ॥ इगुपधलक्षण कः ॥ ओकसो वेद्यस्थानस्य विदा कोविदा ॥ ओकारलुप्ते पृषोदरादित्वात्साधु ॥ उदयनस्य वत्सराजस्य कथाना वासवदत्ताहरणाद्यद्भुतोपाख्यानाना कोविदास्तत्त्वज्ञा ग्रामेषु ये वृद्धास्ते सन्ति येषु तानवन्तींस्तन्नाम जनपदान्प्राप्य तत्र पूर्वोद्दिष्टा पूर्वोक्ता 'सौधोत्सङ्गप्रणयविमुखो मा स्म भूरुज्जयिन्या' इत्युक्ता श्रीविशाला सपत्तिमतीम् ॥ "शोभासपत्तिपद्मासु लक्ष्मी श्रीरिव दृश्यते" इति शाश्वत ॥ विशाला पुरीं

१ सलिलाम् २ सा तु, ताम् ३ सिन्धुम्.
४ शीर्ण ५ असुभग ६ व्यञ्जयन्तीम्.
७ अतन्तीम् ८ ज्ञान

ज्जयिनीमनुसर व्रज ॥ कथमिव स्थिताम् । सुचरितफले पुण्यफले स्वर्गोपभोगलक्षणे स्वल्पीभूते । अत्यल्पावशिष्टे सतीत्यर्थः । गां भूमिं गतानाम् ॥ "गौरिला कुम्भिनी क्षमा" इत्यमरः ॥ पुनरपि भूलोकगतानामित्यर्थः । स्वर्गिणां स्वर्गवतां जनानां शेषैर्भुक्तशिष्टैः पुण्यैः सुकृतैर्हृतमानीतम् । स्वर्गार्थानुष्ठितकर्मशेषाणां स्वर्गदानावश्यंभावादिति भावः । कान्तिरस्यास्तीति कान्तिमदुज्ज्वलम् । सारभूतमित्यर्थः । एकं मुक्तादन्यत् ॥ "एके मुख्यान्यकेवलाः" इत्यमरः ॥ दिवः स्वर्गस्य खण्डमिव स्थितामित्युत्प्रेक्षा । एतेनातिक्रान्तसकलभूलोकनगरसौभाग्यसारत्वमुज्जयिन्या व्यज्यते ॥

* दीर्घीकुर्वन्पटु मदकलं कूजितं सारसानां
प्रत्यूषेषु स्फुटितकमलामोदमैत्रीकषायः ।
यत्र स्त्रीणां हरति सुरतग्लानिमङ्गानुकूलः
शिप्रावातः प्रियतम इव प्रार्थनाचाटुकारः ॥३१॥

* जालोद्गीर्णैरुपचितवपुः केशसंस्कारधूपै-
र्बन्धुप्रीत्या भवनशिखिभिर्दत्तनृत्योपहारः ।
हर्म्येष्वस्याः कुसुमसुरभिष्वध्वखेदं नयेथा
लक्ष्मीं पश्यंल्ललितवनितापादरागाङ्कितेषु ॥३२॥

भर्तुः कण्ठच्छविरिति गणैः सादरं वीक्ष्यमाणः
पुण्यं यायास्त्रिभुवनगुरोर्धाम चण्डीश्वरस्य ।
धूतोद्यानं कुवलयरजोगन्धिभिर्गन्धवत्या-
स्तोयक्रीडानिरतयुवतिस्नानतिक्तैर्मरुद्भिः ॥३३॥

भर्तुरिति भर्तुः ॥ स्वामिनो नीलकण्ठस्य भगवतः कण्ठस्येव छविर्यस्यासौ कण्ठच्छविरिति हेतोर्गणैः प्रमथैः ॥ "गणास्तु गणनायां स्याद्गणेशे प्रमथे चये" इति शब्दार्णवे ॥ सादरं यथा तथा वीक्ष्यमाणः सन् । प्रियवस्तुसादृश्यादतिप्रियत्वं भवेदिति भावः । त्रयाणां भुवनानां समाहारस्त्रिभुव-

१ धूमैः २ नृत्तोपचारः
३ अ नरिन्नान्तरात्मा ४ मुक्त्वा खेदम्, त्यक्त्वा खेदम्, रात्रिं नीत्वा. ५ दृश्यमानः ६ चण्डेश्वरस्य. ७ विरत

नम् 'तद्धितार्थ-' इत्यादिना समास ॥ तस्य गुरे स्त्रलोकनाथस्य चण्डी-श्वरस्य कात्यायनीवल्लभस्य पुण्य पावन धाम महाकालाख्य स्थान याया गच्छ ॥ विध्यर्थे लिङ् ॥ श्रेयस्करत्वात्सर्वथा यातव्यमिति भाव ॥ उक्त च स्कान्दे—"आकाशे तारक लिङ्ग पाताले हाटकेश्वरम् । मर्त्यलोके महाकाल दृष्ट्वा काममवाप्नुयात् ॥' इति ॥ न केवल मुक्तिस्थानमिद किंतु विला-सस्थानमपीत्याह—धूतेति ॥ कुवलयरजोगन्धिभिरुत्पलपरागगन्धवद्भिस्तोय-क्रीडासु निरतानामासक्ताना युवतीना स्नान स्नानीय चन्दनादि ॥ करणे ल्युट् ॥ "स्नानीयेऽभिषवे स्नानम्" इति यादव ॥ तेन तिक्तै सुरभिभि ॥ "कटु-तिक्तकषायास्तु सौरभे च प्रकीर्तिता" इति हलायुध ॥ सौगन्ध्यातिशयार्थं विशेषणद्वयम् । गन्धवत्या नाम नद्यास्तत्रत्याया मरुद्भि मारुतैर्धूतोद्यानं कम्पि-ताक्रीडमिति धाम्नो विशेषणम् ॥

अप्यन्यस्मिञ्जलधर महाकालमासाद्य काले
स्थातव्यं ते नयनविषयं यावदत्येति भानुः ।
कुर्वन्संध्यावलिपटहतां शूलिन श्लाघनीया-
मामन्द्राणां फलमविकलं लप्स्यसे गर्जितानाम् ॥३४॥

पादन्यासैः क्वणितरशनास्तत्र लीलावधूतै
रत्नच्छायाखचितवलिभिश्चामरैः क्लान्तहस्ताः ।
वेश्यास्त्वत्तो नखपदसुखान्प्राप्य वर्षाग्रबिन्दू
नामोक्ष्यन्ते त्वयि मधुकरश्रेणिदीर्घान्कटाक्षान् ॥३५॥

पश्चादुच्चैर्भुजतरुवनं मण्डलेनाभिलीनः
सान्ध्य तेज प्रतिनवजपापुष्परक्तं दधानः ।
नृत्यारम्भे हर पशुपतेरार्द्रनागाजिनेच्छां
शान्तोद्वेगस्तिमितनयनं दृष्टभक्तिर्भवान्या ॥३६॥

---

१ अन्येति. २ आनन्द्राणाम्, आमार्द्राणाम् ३ पादन्यास. ४ रचित.
५ कान्त
६ नृत्तारम्भे.

* गच्छन्तीनां रमणवसतिं योषितां तत्र नक्तं
रुद्धालोके नरपतिपथे सूचिभेद्यैस्तमोभिः ।
सौदामन्या कनकनिकषस्निग्धया दर्शयोर्वी
तोयोत्सर्गस्तनितमुखरो मा स्म भूर्विक्लवास्ताः ॥ ३७ ॥
* तां कस्यांचिद्भवनवलभौ सुप्तपारावतायां
नीत्वा रात्रिं चिरविलसनात्खिन्नविद्युत्कलत्रः ।
दृष्टे सूर्ये पुनरपि भवान्वाहयेदध्वशेषं
मन्दायन्ते न खलु सुहृदामभ्युपेतार्थकृत्याः ॥ ३८ ॥
तस्मिन्काले नयनसलिलं योषितां खण्डितानां
शान्तिं नेयं प्रणयिभिरतो वर्त्म भानोस्त्यजाशु ।
प्रालेयास्रं कमलवदनात्सोऽपि हर्तुं नलिन्याः
प्रत्यावृत्तस्त्वयि कररुधि स्यादनल्पाभ्यसूयः ॥ ३९ ॥
* गम्भीरायाः पयसि सरितश्चेतसीव प्रसन्ने
छायात्मापि प्रकृतिसुभगो लप्स्यते ते प्रवेशम् ।
तस्मादस्याः कुमुदविशदान्यर्हसि त्वं न धैर्या-
न्मोघीकर्तुं चटुलशफरोद्वर्तनप्रेक्षितानि ॥ ४० ॥

गम्भीराया इति ॥ गम्भीरा नाम सरित् ॥ उदात्तनायिका च ध्वन्यते ॥ तस्या प्रसन्नेऽनुरक्तत्वाद्दोषरहिते चेतसीव प्रसन्नेऽतिनिर्मले पयसि । प्रकृत्या स्वभावेनैव सुभग सुन्दर ॥ 'सुन्दरेऽधिकभाग्ये च दुर्दिनेतरवासरे । तुरीयांशे श्रीमति च सुभग" इति शब्दार्णवे ॥ ते तव छाया चासावात्मा च । सोऽपि प्रतिबिम्बशरीर च प्रवेश लप्स्यते । अपिशब्दात्प्रवेशमनिच्छोरपीति भाव । तस्माच्छायाद्वारापि प्रवेशावश्यभावित्वादस्या गम्भीराया । कुमुदवद्विशदानि धवलानि चटुलानि शीघ्राणि शफराणा मीनानामुद्वर्तनान्युल्लुण्ठनान्येव प्रेक्षितान्यवलोकनानि ॥ "त्रिषु स्याच्चटुल शीघ्रम्" इति विश्व ॥ एतावदेव गम्भी

१ रात्रौ २ छायया ३ विमुख ४ च
५ नयनात्.
६ तस्या .

राया अनुरागलिङ्गम् । धैर्याद्धाष्टर्यात् । वैयात्यादिति यावत् । मोघीकर्तुं विफलीकर्तुं नार्हसि । नानुरक्ता विप्रलब्धव्येत्यर्थः ॥ धूर्तलक्षण तु—'क्लिश्नाति नित्य गमिता कामिनीमिति सुन्दर । उपेत्यरक्ता यत्नेन रक्ता धूर्ता विमुचति ॥" इति ॥

*** तस्याः किंचित्करधृतमिव प्राप्तवानीरशाखं**
**नीत्वा नीलं सलिलवसनं मुक्तरोधोनितम्बम् ।**
**प्रस्थानं ते कथमपि सखे लम्बमानस्य भावि**
**ज्ञातास्वादो विवृतजघना को विहातुं समर्थः ॥४१॥**
**त्वन्निष्यन्दोच्छ्वसितवसुधागन्धसंपर्करम्यः**
**स्रोतोरन्ध्रध्वनितसुभगं दन्तिभिः पीयमानः ।**
**नीचैर्वास्यत्युपजिगमिषोर्देवपूर्वं गिरिं ते**
**शीतो वायुः परिणमयिता काननोदुम्बराणाम् ॥४२॥**

त्वदिति ॥ त्वन्निष्यदेन तव वृष्ट्योच्छ्वसिताया उपबृंहिताया वसुधाया भूमेर्गन्धस्य सपर्केण रम्य । सुरभिरित्यर्थः ॥ स्रोत. शब्देनेन्द्रियवाचिना तद्विशेषो घ्राण लक्ष्यते ॥ "स्रोतोऽम्बुवेगेन्द्रिययो." इत्यमर ॥ स्रोतोरन्ध्रेषु नासाग्रकुहरेषु यद्ध्वनित शब्दस्तेन सुभग यथा तथा दन्तिभिर्गजै पीयमान । वसुधागन्धलोभादाघ्रायमाण इत्यर्थ अनेन मान्द्यमुच्यते । काननेषु वनेषूदुम्बराणा जन्तुफलानाम् "उदुम्बरो जन्तुफलो यज्ञाङ्गो हेमदुग्धक "इत्यमर ॥ परिणमयिता परिपाकयिता ॥ "मिता ह्रस्व," इति ह्रस्व ॥ शीतो वायु । देवपूर्वं देवशब्दपूर्वं गिरिम् । देवगिरिमित्यर्थ । उपजिगमिषोरुपगन्तुमिच्छो ॥ गमे सन्नन्तादुप्रत्यय ॥ ते तव नीचै शनै र्वास्यति । त्वा वीजयिष्यतीत्यर्थ ॥ सबन्धमात्रविवक्षाया षष्ठी । "देवपूर्वं गिरिम्" इत्यत्र देवपूर्वत्वं गिरिशब्दस्य न तु संज्ञिनस्तदर्थस्येति संज्ञाया सज्ञित्वाभावादवाच्यवचन दोषमाहुरालकारिका । तदुक्तमेकावल्याम्—"यदवाच्यस्य वचनमवाच्यवचन हि तत्" इति ॥ समाधान तु देवशब्दविशेषितेन गिरिशब्देन शब्दपेरण मेघोपगमनयोग्यो देवगिरिर्लक्ष्यत इति कथ-

१ हृत्वा. २ पुलिनजघनाम्. ३ पुण्य .

चित्संपाद्यम् ॥

तत्र स्कन्दं नियतवसतिं पुष्पमेघीकृतात्मा
पुष्पासारैः स्नपयतु भवान्व्योमगङ्गाजलार्द्रैः ।
रक्षाहेतोर्नवशशिभृता वासवीनां चमूना-
मत्यादित्यं हुतवहमुखे संभृतं तद्धि तेजः ॥४३॥

तत्रेति ॥ तत्र देवगिरौ नियता वसतिर्यस्य तम् । नित्यसंनिहितमित्यर्थः ॥ पुरा किल तारकाख्यासुरविजयसंतुष्टः सुरप्रार्थनावशाद्भगवान्भवानीनन्दनः स्कन्दो नित्यमहमिह सह शिवाभ्यां वसामीत्युक्त्वा तत्र वसतीति प्रसिद्धिः ॥ स्कन्दं कुमारं स्वामिनम् । पुष्पाणां मेघः पुष्पमेघः पुष्पमेघीकृतात्मा कामरूपत्वात्पुष्पवर्षुकमेघीकृतविग्रहः सन्व्योमगङ्गाजलार्द्रैः पुष्पासारैः पुष्पसंपातैः ॥ "धारासंपात आसारः" इत्यमरः ॥ भवान्स्वयमेव स्नपयत्वभिषिञ्चतु । स्वयंपूजाया उत्तमत्वादिति भावः ॥ तथा च शंभुरहस्ये—"स्वयं यजति चेद्देवमुत्तमा सोदरात्मजैः । मध्यमा या यजेद्भृत्यैरधमा याजनक्रिया ॥" इति । स्कन्दस्य पूज्यत्वसमर्थनेनार्थेनार्थान्तरं न्यस्यति—रक्षेति ॥ तत् भगवान् स्कन्द इत्यर्थः । विधेयप्राधान्यान्नपुंसकनिर्देशः ॥ वासवस्येति वासवी ॥ "तस्येदम्" इत्यण् ॥ तासां वासवीनामैन्द्रीणां चमूनां सेनानां रक्षाहेतो रक्षायाः कारणेन । रक्षार्थमित्यर्थः ॥ "षष्ठी हेतुप्रयोगे" इति षष्ठी ॥ नवशशिभृता भगवता चन्द्रशेखरेण । वहतीति वहः ॥ पचाद्यच् ॥ हुतस्य वहो हुतवहो वह्निस्तस्य मुखे संभृतं संचितम् । आदित्यमतिक्रान्तमत्यादित्यम् ॥ "अत्यादयः क्रान्ताद्यर्थे द्वितीयया" इति समासः ॥ तेजो हि साक्षाद्भगवतो हरस्यैव मूर्त्यन्तरमित्यर्थः अतः पूज्यमिति भावः । मुखग्रहणं तु शुद्धत्वसूचनार्थम् । तदुक्तं शंभुरहस्ये—"गवां पश्चाद्द्विजस्याङ्घ्रिर्योगिनां हृत्कवेर्वचः । परं शुचितमं विद्यान्मुखं स्त्रीवह्निवाजिनाम् ॥" इति ॥

* ज्योतिर्लेखावलयि गलितं यस्य बर्हं भवानी
पुत्रप्रेम्णा कुवलयदलप्रापि कर्णे करोति ।
धौतापाङ्गं हरशशिरुचा पावकेस्तं मयूरं

---

१ वसूनाम् २ प्रीत्या ३ पद. ४ आप्यायते..

पश्चादद्रिग्रहणगुरुभिर्गर्जितैर्नर्तयेथाः ॥४३॥

आराध्यैनं शरवणभवं देवमुल्लङ्घिताध्वा
सिद्धद्वन्द्वैर्जलकणभयाद्वीणिभिर्मुक्तमार्गः ।
व्यालम्बेथाः सुरभितनयालम्भजां मानयिष्य-
न्स्रोतोमूर्त्या भुवि परिणतां रन्तिदेवस्य कीर्तिम् ॥४५॥

आराध्येति ॥ एन पूर्वोक्त शरा वाणतृणानि ॥ "शरो वाणो वाणतृणे" इति शब्दार्णवे ॥ तेपा वन शरवणम् ॥ "प्रनिरन्त शर–" इत्यादिना णत्वम् ॥ तत्र भवो जन्म यस्य तं शरवणभवम् ॥ "अवर्ज्यो वहुव्रीहिर्व्यधिकरणे जन्माद्युत्तरपद" इति वामन अवर्ज्योऽगतिकत्वादाश्रयणीय इत्यर्थः ॥ देवं स्कन्दम् ॥ 'शरजन्मा षडानन" इत्यमर ॥ आराध्योपास्य वीणिभिर्वीणा-वद्भि ॥ व्रीह्यादित्वादिनि ॥ सिद्धद्वन्द्वै सिद्धमिथुनैः । भगवन्तं स्कन्दमुप-वीणयितुमागतैरिति भाव । जलकणभयात् । जलसेकस्य वीणाक्वणनप्रति-वन्धकत्वादिति भाव । मुक्तमार्गस्त्यक्तवर्त्मा सन्नुल्लङ्घिताध्वा । कियन्तमध्वान गत इत्यर्थ । सुरभितनयाना गवामालम्भेन संज्ञपनेन जायत इति तथोक्ताम् । भुवि लोके स्रोतोमूर्त्या प्रवाहरूपेण परिणता रूपविशेषमापन्ना रन्तिदेवस्य दशपुरपतेर्महाराजस्य कीर्तिम् । चर्मण्वत्याख्या नदीमित्यर्थ । मानयिष्यन्स-त्कारयिष्यन्व्यालम्बेथा । आलम्ब्यावतरेरित्यर्थ । पुरा किल राज्ञो रन्तिदेव-स्य गवालम्भेष्वेकत्र समृताद्रक्तनिष्यन्दाच्चर्मराशे काचिन्नदी सस्यन्दे । सा चर्मण्वतीत्याख्यायत इति ॥

* त्वय्यादातुं जलमवनते शार्ङ्गिणो वर्णचौरे
तस्याः सिन्धोः पृथुमपि तनुं दूरभावात्प्रवाहम् ।
प्रेक्षिष्यन्ते गगनगतयो नूनमावर्ज्य दृष्टी-
रेकं मुक्तागुणमिव भुवः स्थूलमध्येन्द्रनीलम् ॥४६॥
तामुत्तीर्य व्रज परिचितभ्रूलताविभ्रमाणां
पक्ष्मोत्क्षेपादुपरिविलसत्कृष्णशारप्रभाणाम् ।
कुन्दक्षेपानुगमधुकरश्रीमुषामात्मबिम्बं

---

१ दत्तमार्गः, दत्तवर्त्मा. २ दूरम्. ३ मुषाम.

पात्रीकुर्वन्दशपुरवधूनेत्रकौतूहलानाम् ॥४७॥

तामिति ॥ ता चर्मण्वतीमुत्तीर्य भ्रुवो लता इव भ्रूलता ॥ उपमितसमास ॥ तासा विभ्रमा विलासा. परिचिता क्लृप्ता येषु तेषा पक्ष्माणि नेत्रलोमानि ॥ "पक्ष्म सूत्रे च सूक्ष्मांशे किञ्जल्के नेत्रलोमनि" इति विश्व ॥ तेषामुत्क्षेपादुन्नमनाद्धेतो । कृष्णाश्च ता शाराश्च कृष्णशारा नीलशबला ॥ "वर्णो वर्णेन" इति समास ॥ "कृष्णरक्तसिता शारा" इति यादव ॥ ततश्च शारशब्दादेव सिद्धे कार्ष्ण्ये पुनः कृष्णपदोपादान कार्ष्ण्यप्राधान्यार्थम् । रक्तत्व तु न विवक्षितमुपमानानुसारात्तस्य स्वाभाविकस्य स्त्रीनेत्रेषु सामुद्रिकविरोधादितरस्याप्रसङ्गात् । क्वचिद्भावकथन तूपपत्तिविषयम् ॥ उपरि विलसन्त्य कृष्णशारा प्रभा येषा तेषाम् । कुन्दानि माध्यकुसुमानि ॥ "माध्य कुन्दम्" इत्यमर ॥ तेषा क्षेप इतस्ततश्चलनं तस्यानुगा अनुसारिणो ये मधुकरास्तेषा श्रिय मुष्णन्तीति तथोक्तानाम् । क्षिप्यमाणकुन्दानुविधायिमधुकरकल्पानामित्यर्थ । दशपुर रन्तिदेवस्य नगर तस्य वध्व स्त्रिय ॥ "वधूर्जाया स्नुषा स्त्री च" इत्यमर ॥ तासा नेत्रकौतूहलाना नेत्राभिलाषाणाम् । साभिलाषदृष्टीनामित्यर्थ । आत्मबिम्ब स्वमूर्तिं पात्रीकुर्वन्व्रज गच्छ ॥

ब्रह्मावर्तं जनपदमथ च्छायया गाहमानः
क्षेत्रं क्षत्रप्रधनपिशुनं कौरवं तद्भजेथाः ।
राजन्यानां सितशरशतैर्यत्र गाण्डीवधन्वा
धारापातैस्त्वमिव कमलान्यभ्यवर्षन्मुखानि ॥४८॥

ब्रह्मावर्तमिति ॥ अथानन्तर ब्रह्मावर्तं नाम जनपद देशम् ॥ अत्र मनु —"सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम् । त देवनिर्मित देश ब्रह्मावर्तं प्रचक्षते ॥" इति ॥ छायया नातपमण्डलेन गाहमान प्रविशन्न तु स्वरूपेण । "पीठक्षेत्राश्रमादीनि परिवृत्यान्यतो व्रजेत्" इति वचनात् । क्षत्रप्रधनपिशुनम् । अद्यापि शिर कपालादिमत्तया कुरुपाण्डवयुद्धसूचकमित्यर्थ "युद्धमायोधन जन्य प्रधन प्रविदारणम्" इत्यमरः तत्प्रसिद्ध कुरूणामिद कौरव क्षेत्र भजेथा । कुरुक्षेत्र व्रजेत्यर्थ । यत्र कुरुक्षेत्रे गाण्डयस्यास्तीति गाण्डीव धनु-

१ अथ, अदु २ अभ्यषिञ्चत्

विशेष ॥ "गाण्डयजगात्संज्ञायाम्" इति मत्वर्थीयो वप्रत्ययः ॥ "कपिध्वजस्य गाण्डीवगाण्डिवौ पुंनपुंसकौ" इत्यमरः ॥ तद्धनुर्यस्य स गाण्डीवधन्वाऽर्जुनः ॥ "वा संज्ञायाम्" इत्यनङादेशः ॥ सितशरशतैर्निशितवाणसहस्रै राजन्यानां राज्ञां मुखानि धारायामुदकधाराणां पातैः कमलानि त्वमिवाभ्यवर्षदभिमुखं वृष्टवान् । शरवर्षेण शिरांसि चिच्छेदेत्यर्थः ॥

**हित्वा हालामभिमतरसां रेवतीलोचनाङ्कां**
**बन्धुप्रीत्या समरविमुखो लाङ्गली याः सिषेवे ।**
**कृत्वा तासामभिगममपां सौम्य सारस्वतीना-**
**मन्तः शुद्धस्त्वमपि भविता वर्णमात्रेण कृष्णः ॥४६॥**

हित्वेति ॥ बन्धुप्रीत्या कुरुपाण्डवस्नेहेन ॥ न तु भयेन । समरविमुखो युद्धनिःस्पृहः । लाङ्गलमस्यास्तीति लाङ्गली हलधरः । अभिमतरसामभीष्टस्वादां तथा रेवत्याः स्वप्रियाया लोचने एवाङ्कः प्रतिबिम्बितत्वाच्चिह्नं यस्यास्तां हालां सुराम् ॥ "सुरा हलिप्रिया हाला" इत्यमरः ॥ "अभिप्रयुक्तं देशभाषापदमित्यत्र सूत्रे हालेति देशभाषापदमप्यतीव कविप्रयोगात्साधु" इत्युदाजहार वामनः ॥ हित्वा त्यक्त्वा । दुस्त्यजामपीति भावः । या सारस्वतीरपः सिषेवे । हे सौम्य सुभग, त्वं तासां सरस्वत्या नद्या इमाः सारस्वत्यस्तासामभिगमं सेवां कृत्वान्तेऽन्तरात्मनि शुद्धो निर्मलो निर्दोषो भविता ॥ "ण्वुल्तृचौ" इति तृच् ॥ अपि सद्य एव पूतो भविष्यसीत्यर्थः ॥ "वर्तमानसामीप्ये वर्तमानवद्वा" इति वर्तमानप्रत्ययः ॥ वर्णमात्रेण वर्णेनैव कृष्णः श्यामः । न तु पापेनेत्यर्थः । अन्तःशुद्धिरेव संपाद्या न तु बाह्या । बहिःशुद्धोऽपि सूतवधप्रायश्चित्तार्थं सारस्वतसलिलसेवी तत्र भगवान्बलभद्र एव निदर्शनम् । अतो भवतापि सरस्वती सर्वथा सेवितव्येति भावः ॥

**तस्माद्गच्छेरनुकनखलं शैलराजावतीर्णां**
**जह्नोः कन्यां सगरतनयस्वर्गसोपानपङ्क्तिम् ।**
**गौरीवक्त्रभ्रुकुटिरचनां या विहस्येव फेनैः**

---

१ भूत्वा, कृत्वा, छित्त्वा २ अधिगमम्
३ एव, उच्चैः

शंभोः केशग्रहणमकरोदिन्दुलग्नोर्मिहस्ता ॥५०॥

तस्मादिति ॥ तस्मात्कुरुक्षेत्रात्कनखलस्याद्रे समीपेऽनुकनखलम् ॥ "अनुर्यत्समया" इत्यव्ययीभाव ॥ शैलराजाद्धिमवतोऽवतीर्णा सगरतनयाना स्वर्गसोपानपङ्क्तिम् । स्वर्गप्राप्तिसाधनभूतामित्यर्थ । जह्नोर्नाम राज्ञ कन्या जाह्नवी गच्छेर्गच्छ ॥ विध्यर्थे लिङ् ॥ या जाह्नवी गौर्या वक्त्रे या भ्रुकुटिरचना सापत्न्यरोषाद्भ्रूभङ्गकरण ता फेनैर्विहस्यावहस्येव । धावल्यात्फेनाना हासत्वेनोत्प्रेक्षा ।,इन्दौ शिरोमाणिक्यभूते लग्ना ऊर्मय एव हस्ता यस्या सेन्दुलग्नोर्मिहस्ता सती शंभो केशग्रहणमकरोत् । यथा काचित्प्रौढा नायिका सपत्नीमसहमाना स्ववाल्लभ्य प्रकटयन्ती स्वभर्तारं सह शिरोरत्नेन केशेष्वाकर्षति तद्वदिति भाव ॥ इद च पुरा किल भगीरथप्रार्थनया भगवतीं गगनपथात्पतन्तीं गङ्गा गङ्गाधरो जटाजूटेन जग्राहेति कथामुपजीव्योक्तम् ॥

* तस्याः पातुं सुरगज इव व्योम्नि पश्चार्धलम्बी
त्वं चेदच्छस्फटिकविशदं तर्कयेस्तिर्यगम्भ ।
संसर्पन्त्या सपदि भवतः स्रोतसि च्छाययासौ
स्यादस्थानोपगतयमुनासङ्गमेवाभिरामा ॥ ५१ ॥

आसीनानां सुरभितशिलं नाभिगन्धैर्मृगाणां
तस्या एव प्रभवमचलं प्राप्य गौरं तुषारैः ।
वक्ष्यस्यध्वश्रमविनयने तस्य शृङ्गे निषण्णः
शोभां शुभ्रत्रिनयनवृषोत्खातपङ्कोपमेयाम् ॥ ५२ ॥

आसीनानामिति ॥ आसीनानामुपविष्टाना मृगाणा कस्तूरिकामृगाणाम् ॥ अन्यथा नाभिगन्धानुपपत्ते ॥ नाभिगन्धै कस्तूरीगन्धैस्तेषा तदुद्भवत्वात् । अत एव मृगनाभिसञ्ज्ञा च ॥ "मृगनाभिर्मृगमद कस्तूरी च" इत्यमर ॥ अथवा नाभय कस्तूर्य ॥ "नाभिप्रधाने कस्तूरीमदे च क्वचिदीरित" इति विश्व ॥ तासा गन्ध सुरभिता सुरभीकृता शिला यस्य त तस्या गङ्गाया एव प्रभवत्यस्मादिति प्रभव कारणम् । तुषारैर्गौर सितम् ॥ "अवदात सितो

१ पूर्वार्धलम्बी. २ संतर्प्यन्त्या ३ सा. ४ उपनत. ५ सगमेन ६ शुभ्राम रम्याम.

गौर " इत्यमर ॥ अचल प्राप्य । विनीयतेऽनेनेति विनयनम् ॥ करणे ल्युट् ॥ अध्वश्रमस्य विनयनेऽपनोदके तस्य हिमाद्रे शृङ्गे निषण्ण सन् । शुभ्रो यस्त्रिनयनस्य त्र्यम्बकस्य वृषो वृषभ ॥ "सुकृते वृषभे वृष" इत्यमर ॥ तेनोत्खातेन विदारितेन पङ्केन सहोपमेयामुपमातुमर्हां शोभा वक्ष्यसि वोढासि । वहतेर्लृट् ॥ "त्रिनयन-" इत्यत्र "पूर्वपदात्संज्ञायामग" इति णत्व न भवति "क्षुभ्नादिषु च" इति निषेधात् ॥ तस्या प्रभवामित्यादिना हिमाद्रौ मेघस्य वैवाहिको गृहविहारो ध्वन्यते ॥

**तं चेद्वायौ सरति सरलस्कन्धसंघट्टजन्मा**
**बाधेतोल्कात्क्षपितचमरीबालभारो दवाग्नि ।**
**अर्हस्येनं शमयितुमलं वारिधारासहस्रै-**
**रापन्नार्तिप्रशमनफला· संपदो ह्युत्तमानाम् ॥ ५३ ॥**

तमिति ॥ वायौ वनवाते सरति वाति सति सरलाना देवदारुद्रुमाणा स्कन्धा प्रदेशविशेषा ॥ 'अस्त्री प्रकाण्ड स्कन्ध स्यान्मूलाच्छाखावधेस्तरो ' इत्यमर ॥ तेषा संघट्टनेन संघर्षणेन जन्म यस्य स तथोक्त ॥ जन्मोत्तरपदत्वाद्व्यधिकरणोऽपि बहुव्रीहि साधुरित्युक्तम् ॥ उल्काभिः स्फुलिङ्गै क्षपिता निर्दग्धाश्चमरीणा बालभारा केशसमूहा येन । दव एवाग्निर्दवाग्निर्वनवह्नि ॥ "वने च वनवह्नौ च दवो दाव इतीष्यते" इति यादव ॥ तं हिमाद्रिं बाधते चेत्पीडयेद्यदि । एव दवाग्निं वारिधारासहस्रै शमयितुमर्हसि ॥ युक्त चैतदित्याह—उत्तमाना महता संपद समृद्धय आपन्नानामार्तानामार्तिप्रशमनमापन्निवारणमेव फल प्रयोजन यासा तास्तथोक्ता हि । अतो हिमाचलस्य दावानलस्त्वया शमयितव्य इति भाव ॥

**ये संरम्भोत्पतनरभसाः[1] स्वाङ्गभङ्गाय[2] तस्मि-**
**न्मुक्ताध्वानं[3] सपदि शरभा लङ्घयेयुर्[4] भवन्तम् ।**
**तान्कुर्वीथास्तुमुलकरकावृष्टिपातावकीर्णा-[5]**
**न्के वा न स्युः परिभवपदं निष्फलारम्भयत्नाः ॥५४॥**

---

१ त्वा मुक्तध्वनिमसहना २ कायभङ्गाय. ३ दर्पोत्सेकादुपरि. ४ लङ्घयिष्यन्त्यलङ्घ्यम् ५ हासा

य इति ॥ तस्मिन्हिमाद्रौ सरम्भ कोप ॥ "सरम्भ सक्रमे कोपे" इति शब्दार्णवे ॥ तेनोत्पतन उत्प्लवने रभसो वेगो येषा ते तथोक्ताः ॥ "रभसो वेगहर्षयो" इत्यमर ॥ ये शरभा अष्टापदमृगविशेषा ॥ "शरभ शलभे चाष्टापदे प्रोक्ता मृगान्तरे" इति विश्व ॥ मुक्तोऽध्वा शरभोत्प्लवनमार्गो येन तं भवन्तं सपदि स्वाङ्गभङ्गाय लङ्घयेयु सभावनाया लिङ् ॥ भवतोऽतिदूरत्वादङ्गभङ्गातिरिक्तं फल नास्ति लङ्घनस्येत्यर्थ । ताञ्शरभास्तुमुला सकुला करका वर्षोपला ॥ "वर्षोपलस्तु करका" इत्यमर ॥ तासा वृष्टिस्तस्या पातेनावकीर्णान्विक्षिप्तान्कुर्वीथा कुरुष्व ॥ विध्यर्थे लिङ् ॥ क्षुद्रोऽप्याधिक्षिपन्प्रतिपक्ष सद्य प्रतिक्षेप्तव्य इति भाव । तथाहि । आरभ्यन्त इत्यारम्भा कर्माणि तेषु यत्न उद्योग स निष्फलो येषा तथोक्ता । निष्फलकर्मोपक्रमा इत्यर्थ । अत के वा परिभवपदं तिरस्कारपद न स्युर्न भवन्ति । सर्वं एव भवन्तीत्यर्थ ॥ यदत्र "घनोपलस्तु करके" इति यादववचनात्करकशब्दस्य नियतपुलिङ्गताभिप्रायेण "करकाणामवृष्टि" इति केषाचिद्व्याख्यान तदन्ये नानुमन्यन्ते । 'वर्षोपलस्तु करका" इत्यमरवचनव्याख्याने क्षीरस्वामिना "कमण्डलौ च करक सुगते च विनायक" इति नानार्थे पुस्यपि वक्ष्यतीति वदतोभयलिङ्गताप्रकाशनात् । यादवस्य तु पुलिङ्गताविधाने तात्पर्यं न तु स्त्रीलिङ्गतानिषेध इति न तद्विरोधोऽपि । "करकस्तु करङ्के स्याद्दाडिमे च कमण्डलौ । पक्षिभेदे करे चापि करका च घनोपले" इति विश्वप्रकाशवचने तूभयलिङ्गता व्यक्तैवेति न तत्रापि विरोधवार्ता । अत एव रुद्र —"वर्षोपलस्तु करका करकोऽपि च दृश्यते" इति ॥

**तत्र व्यक्तं दृषदि चरणन्यासमर्धेन्दुमौले**
**शश्वत्सिद्धैरुपचितबलिं भक्तिनम्रः परीयाः ।**
**यस्मिन्दृष्टे करणविगमादूर्ध्वमुद्धूतपापा**
**संकल्पन्ते स्थिरगणपदप्राप्तये श्रद्दधानाः ॥ ५५ ॥**

तत्रेति ॥ तत्र हिमाद्रौ दृषदि कस्याचिच्छिलाया व्यक्त प्रकट शश्वत्सदा सिद्धैर्योगिभि ॥ "सिद्धिर्निष्पत्तियोगयो" इति विश्व ॥

१ उपहृत, उपहित. २ दूरम् ३ कल्पिष्यन्ते, कल्प्यन्तेऽस्य

उपचितवलि रचितपूजाविधिम् ॥ "वलि पूजोपहारयो" इति यादव ॥ अर्ध-स्त्वासाविन्दुश्चेत्यर्धेन्दु ॥ "अर्ध खण्डे समंऽशके" इति विश्व ॥ स मौलौ यस्य तस्येश्वरस्य चरणन्यास पादविन्यासम् । भक्ति पूजेष्वनुरागस्तया नम्र सन्परीया प्रदक्षिण कुरु ॥ परिपूर्वादिणो लिङ् ॥ यस्मिन्पादन्यासे दृष्टे सत्युद्भूतपापा निरस्तकल्मषा सन्त श्रद्दधाना विश्वसन्त पुरुषा । श्रद्धा विश्वास । आस्तिक्यबुद्धिरिति यावत् ॥ 'श्रदन्तरोरुपसर्गवद्वृत्तिर्वक्तव्या" इति श्रत्पूर्वाद्धाते शानच् ॥ करणस्य क्षेत्रस्य विगमादूर्ध्वं देहत्यागानन्तरम् ॥ "करण साधकतम क्षेत्रगात्रेन्द्रियेष्वपि" इत्यमर ॥ स्थिर शाश्वत गणाना प्रमथाना पद स्थानम् ॥ "गणा प्रमथसख्यौघा" इति वैजयन्ती ॥ तस्य प्राप्तये सकल्पन्ते समर्था भवन्ति ॥ क्लृपे पर्याप्तिवचनस्यालमर्थत्वात्तद्योगे "नम स्वस्ति-" इत्यादीना चतुर्थी ॥ "अलमिति पर्याप्त्यर्थग्रहणम्" इति भाष्यकार ॥ अव्यक्त व्यञ्जयामास शिव श्रीचरणद्वयम् ॥ हिमाद्रौ शाभवादीना सिद्धये सर्वकर्मणाम् ॥ दृष्ट्वा श्रीचरणन्यास साधक स्थितये तनुम् । इच्छाधीनशरीरो हि विचरेच्च जगत्रयम् ॥" इति शभुरहस्ये ॥

**शब्दायन्ते मधुरमनिलैः कीचकाः पूर्यमाणाः**
**संसक्ताभिस्त्रिपुरविजयो गीयते किंनरीभिः ।**
**निर्ह्रादस्ते मुरज इव चेत्कन्दरेषु ध्वनिः स्या**
**त्संगीतार्थो ननु पशुपतेस्तत्र भावी समग्रः ॥५६॥**

शब्दायन्त इति ॥ हे मेघ, अनिलै पूर्यमाणाः कीचका वेणुविशेषा ॥ "वेणव कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धता" इत्यमर । "कीचको दैत्यभेदे स्याच्छुष्कवशे द्रुमान्तरे" इति विश्व ॥ मधुरं श्रुतिसुख यथा तथा शब्दायन्ते शब्द कुर्वन्ति । स्वनन्तीत्यर्थ ॥ "शब्दवैरकलहाभ्रकण्वमेघेभ्य करणे" इत्यादिना क्यङ् ॥ अनेन वशवाद्यसपत्तिरुक्ता । ससक्ताभि संयुक्ताभिर्वंशवाद्यानुषक्ताभिर्वा ॥ "सरक्ता" इति पाठे सरक्तकण्ठीभिरित्यर्थ ॥ किंनरीभि किंनरस्त्रीभि । त्रयाणा पुराणा समाहारस्त्रिपुरम् ॥ 'तद्धितार्थोत्तरपद-" इति समास । पात्रादित्वान्नपुसकत्वम ॥ तस्य विजयो गीयते । कन्दरेषु

१ निर्ह्रादी २ कन्दरासु ३ समस्त

दरीषु ॥ "दरी तु कन्दरो वा स्त्री" इत्यमरः ॥ ते तव निर्ह्रादो मुरजे वाद्यभेदे ध्वनिरिव । मुरजध्वनिरिवेत्यर्थः स्याच्चेत्तर्हि तत्र चरणसमीपे पशुपतेर्नित्यसंनिहितस्य शिवस्य संगीतम् ॥ "तौर्यत्रिकं तु संगीतं न्यायारम्भे प्रसिद्धके ॥ तूर्याणां त्रितये च" इति शब्दार्णवे ॥ तदेवार्थः संगीतार्थः संगीतवस्तु ॥ "अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु" इत्यमरः ॥ समग्रः संपूर्णो भावी ननु भविष्यति खलु ॥ "भविष्यति गम्यादयः" इति भविष्यदर्थे णिनिः ॥

प्रालेयाद्रेरुपतटमतिक्रम्य तांस्तान्विशेषा-
न्हंसद्वारं भृगुपतियशोवर्त्म यत्क्रौञ्चरन्ध्रम् ।
तेनोदीचीं दिशमनुसरेस्तिर्यगायामशोभि
श्यामः पादो बलिनियमनाभ्युद्यतस्येव विष्णोः ॥५७॥

प्रालेयेति ॥ प्रालेयाद्रेर्हिमाद्रेरुपतटं तटसमीपे ॥ "अव्ययं विभक्ति–" इत्यादिना समीपार्थेऽव्ययीभावः ॥ तांस्तान् ॥ वीप्सायां द्विरुक्तिः ॥ विशेषान्द्रष्टव्यार्थान् ॥ "विशेषोऽवयवे द्रव्ये द्रष्टव्योत्तमवस्तुनि" इति शब्दार्णवे ॥ अतिक्रम्यानुसरेर्गच्छेरित्यनागतेन संबन्धः ॥ हंसानां द्वारं हंसद्वारम् ॥ मानसप्रस्थायिनो हंसाः क्रौञ्चरन्ध्रेण संचरन्त इत्यागमः भृगुपतेर्जामदग्न्यस्य यशोवर्त्म । यशःप्रवृत्तिकारणमित्यर्थः । यत्क्रौञ्चस्याद्रे रन्ध्रमस्ति तेन क्रौञ्चबिलेन बलेर्दैत्यस्य नियमने बन्धनेऽभ्युद्यतस्य प्रवृत्तस्य विष्णोर्व्यापकस्य त्रिविक्रमस्य श्यामः कृष्णवर्णः पादः इव तिर्यगायामेन[1] क्षिप्रप्रवेशनार्थं तिरश्चीनदैर्घ्येण शोभत इति तथाविधः सन्नुदीचीमुत्तरां दिशमनुसरेरनुगच्छ ॥ पुरा किल भगवतो देवाद्धूर्जटेर्धनुरुपनिषदमधीयानेन भृगुनन्दनेन स्कन्दस्य स्पर्धया क्रौञ्चशिखरिणमतिनिशितविशिखमुखेन हेलया मृत्पिण्डभेदं भित्त्वा तत एव क्रौञ्चकोटादेव सद्यः समुज्जृम्भिते कस्मिन्नपि यशःक्षीरनिधौ निखिलमपि जगज्जालमाप्लावितमिति कथा श्रूयते ॥

गत्वा चोर्ध्वं दशमुखभुजोच्छ्वासितप्रस्थसंधेः
कैलासस्य त्रिदशवनितादर्पणस्यातिथिः स्याः ।

---

१ उपक्रम्य. २ दर्शनस्य

शृङ्गोच्छ्रायैः कुमुदविशदैर्यो वितत्य स्थितः स्वं
राशीभूतः प्रतिदिनमिव त्र्यम्बकस्याट्टहासः ॥ ५८ ॥

गत्वेति ॥ क्रौञ्चबिलनिर्गमनानन्तरमूर्ध्वं च गत्वा दशमुखस्य रावणस्य भुजैर्बाहुभिरुच्छ्वासिता विश्लेषिताः प्रस्थाना सानूना सधयो यस्य तस्य ॥ एतेन नयनकौतुकसद्भाव उक्तः ॥ त्रिर्दश परिमाणमेषामस्तीति त्रिदशाः ॥ "सख्य-याव्यया–" इत्यादिना बहुव्रीहिः । "बहुव्रीहौ सख्येये डच्–" इत्यादिना समासान्तो डजिति क्षीरस्वामी ॥ त्रिदशाना देवाना वनितास्तासा दर्पणस्य ॥ कैलासस्य स्फटिकत्वाद्रजतत्वाद्वा बिम्बग्राहित्वेनेदमुक्तम् ॥ कैलासस्यातिथि स्याः । यः कैलासः कुमुदविशदैर्निर्मलैः शृङ्गाणामुच्छ्रायैरौन्नत्यैः खमाकाशं वितत्य व्याप्य प्रतिदिनं दिने दिने राशीभूतस्त्र्यम्बकस्य त्रिलोचनस्याट्टहासो-ऽतिहास इव स्थितः ॥ "अट्टावतिशयक्षौमौ" इति यादवः ॥ धावल्याद्धास-त्वेनोत्प्रेक्षा । हासादीना धावल्यं कविसमयसिद्धम् ॥

उत्पश्यामि त्वयि तटगते स्निग्धभिन्नाञ्जनाभे
सद्यः कृत्तद्विरददशनच्छेदगौरस्य तस्य ।
शोभामद्रेः स्तिमितनयनप्रेक्षणीयां भवित्री-
मंसन्यस्ते सति हलभृतो मेचके वाससीव ॥ ५९ ॥

हित्वा तस्मिन्भुजगवलयं शंभुना दत्तहस्ता
क्रीडाशैले यदि च विचरेत्पादचारेण गौरी ।
भङ्गीभक्त्या विरचितवपुः स्तम्भितान्तर्जलौघः
सोपानत्वं कुरु मणितटारोहणायाग्रयायी ॥ ६० ॥

हित्वेति ॥ तस्मिन्क्रीडाशैले कैलासे ॥ 'कैलासः कनकाद्रिश्च मन्दरो गन्धमादनः । क्रीडार्थं निर्मिताः शंभोर्देवैः क्रीडाद्रयोऽभवन्' इति शंभुरहस्ये ॥ शंभुना शिवेन भुजग एव वलयं कङ्कणं हित्वा गौर्या भीरुत्वात्त्यक्त्वा दत्तहस्ता सती गौरी पादचारेण विचरेद्यदि तर्ह्यग्रयायी पुरोगतस्तथा स्तम्भितो घनीभाव

---

१ तुङ्गोच्छ्रायैः २ कुसुम. ३ प्रतिदिशम् ४ लीलामद्रेः स्तिमित
५ नीलम्. ६ विहरेत् ७ कुरु सुखपदारोहणायाग्रयायी, व्रज पदसुख-स्पर्शनारोहणेषु.

प्रापितोऽन्तर्जलस्योघ प्रवाहो यस्य स तथाभूतः भङ्गीना पर्वणा भक्त्या रचनया विरचितवपु कल्पितशरीर सन् मणीना तट मणितटं तस्यरोहणाय सोपानत्वं कुरु । सोपानभाव भजेत्यर्थ ॥

तत्रावश्यं वलयकुलिशोद्धट्टनोद्गीर्णतोयं
नेष्यन्ति त्वां सुरयुवतयो यन्त्रधारागृहत्वम् ।
ताभ्यो मोक्षस्तव यदि सखे घर्मलब्धस्य न स्या-
त्क्रीडालोलाः श्रवणपरुषैर्गर्जितैर्भाययेस्ता ॥ ६१ ॥

तत्रेति ॥ तत्र कैलासेऽवश्य सर्वथा सुरयुवतयो वलयकुलिशानि कङ्कण-कोटयः ॥ शतकोटिवाचिना कुलिशशब्देन कोटिमात्र लक्ष्यते ॥ तैरुद्धट्टनानि प्रहारास्तैरुद्गीर्णमुत्सृष्ट तोय येन त त्वा यन्त्रेषु धारा यन्त्रधारास्तासा गृहत्व कृत्रिमधारागृहत्वं नेष्यन्ति प्रापयिष्यन्ति ॥ हे सखे मित्र, घर्मे निदाघे लब्धस्य ॥ घर्मलब्धत्वं चास्य देव भूमिषु सर्वदा सर्वर्तुसमाहारात्प्राथमिक-मेघत्वाद्वा । यथोक्तम्—"आषाढस्य प्रथम—" इति ॥ तव ताभ्य सुरयुवतिभ्यो मोक्षो न स्याद्यति तदा क्रीडालोला क्रीडासक्ता । प्रमत्ता इत्यर्थ । ता सुरयुवती श्रवणपरुषैः कर्णकटुभिर्गर्जितै करणैर्भाययेस्त्रासये. ॥ अत्र हेतुभयाभावादात्मनेपद पुगागमश्च न ॥

हेमाम्भोजप्रसवि सलिल मानसस्याददानः
कुर्वन्कामं क्षणमुखपटप्रीतिमैरावतस्य ।
धुन्वन्कल्पद्रुमकिसलयान्यंशुकानीव वातै-
र्नानाचेष्टैर्जलद ललितैर्निर्विशेस्त नगेन्द्रम् ॥ ६२ ॥
तस्योत्सङ्गे प्रणयिन इव स्रस्तगङ्गादुकूलां
न त्वं दृष्ट्वा न पुनरलकां ज्ञास्यसे कामचारिन् ।
या व काले वहति सलिलोद्गारमुच्चैर्विमाना
मुक्ताजालग्रथितमलकं कामिनीवाभ्रवृन्दम् ॥ ६३ ॥

---

१ जनितसलिलोद्गारमन्तः प्रवेशम्. २ शर्व.

३ कामात् ४ ऐरावणस्य. ५ धुन्वन्वातै सजलपृषतै ( नयनै ) व ०५ट्टत्ताशुकानि छायाभिन्नस्फटिकविशद निर्विशे पर्वत तम ६ उच्चैर्विमाने

तस्येति ॥ प्रणयिन: प्रियतमस्येव तस्य कैलासस्योत्सङ्ग ऊर्ध्वभागे कटौ च ॥ "उत्सङ्गो मुक्तसंयोगे सक्थ्न्यूर्ध्वतलेऽपि च" इति मालतीमालायाम् गङ्गा दुकूलं शुभ्रवस्त्रमिवेत्युपमितसमास ॥ 'दुकूलं सूक्ष्मवस्त्रे स्यादुत्तरीये सिताशुके" इति शब्दार्णवे ॥ अन्यत्र तु गङ्गैव दुकूलम । तत्स्रस्त यस्यास्ता यथोक्तामलका कुवेरनगरीं दृष्ट्वा । कामिनीमिवेति शेष । हे कामचारिन्, त्व पुनस्त्व तु न ज्ञास्यस इति न । किं तु ज्ञास्यस एवेत्यर्थं कामचारिणस्ते पूर्वमपि वहुकृत्वो दर्शनसंभवादज्ञानमसभावितमेवेति निश्चयार्थ नञ्द्वयप्रयोग । तदुक्तम—"स्मृतिनिश्चयसिध्यर्थेषु नञ्द्वयप्रयोग" इति उच्चैरुन्नतानि विमानानि सप्तभूमिकभवनानि यस्या सा ॥ "विमानोऽस्त्री देवयाने सप्तभूमौ च सद्मनि" इति यादव ॥ मेघसवाहनस्थानसूचनार्थमिदं विशेषणम् ५ अन्यत्र विमाना निष्कोपा यालका । वो युष्माकं काले । मेघकाल इत्यर्थ ॥ कालस्य सर्वमेघसाधारण्याद्ब इति वहुवचनम् ॥ सलिलमुद्गिरतीति सलिलोद्गारम् । स्रवत्सलिलधारमित्यर्थ ॥ अभ्रवृन्द मेघकदम्वकं कामिनी स्त्री मुक्ताजालैर्मौक्तिकसरैर्ग्रथितं प्रत्युप्तम् ॥ 'पुश्चल्या मौक्तिके मुक्ता" इति यादव ॥ अलकमिव चूर्णकुन्तलानीव । जातावेकवचनम् ॥ "अलकाश्चूर्णकुन्तला" इत्यमर ॥ वहति विभर्ति ॥ अत्र कैलासस्यानुकूलनायकत्वमलकायाश्च स्वाधीनपतिकाख्यनायिकात्व ध्वन्यते । "एकायत्तोऽनुकूल स्यात्" इति च ' प्रियोपलालिता नित्यं स्वाधीनपतिका मता" इति च लक्षयन्ति । उदाहरन्ति च—"लालयन्नलकप्रान्तान्रचयन्पत्रमञ्जरीन् । एका विनोदयन्कान्ता छायावदनुवर्तते ॥" इति ॥

इति श्रीमहामहोपाध्यायमल्लिनाथसूरिविरचितया संजीविनीसमाख्यया
व्याख्यया समेतो महाकविश्रीकालिदासविरचिते
मेघदूते काव्ये पूर्वमेघ समाप्त ।



॥ श्रीः ॥

पण्डितराजश्रीजगन्नाथविरचितः

# भामिनीविलासः ।

अच्युतरायकृतया प्रणयप्रकाशाख्यया व्याख्यया समेतः ।

## अन्योक्त्युल्लासः ।

( जिन श्लोको को ऐसा ॰ चिन्ह लगा है वह परीक्षा मे नियत नहीं है )

प्रेम्णा प्रेक्ष्य प्राञ्चो प्रपदानि प्रेयसीप्रिययोः ।
प्रचुर प्रपञ्चयामि प्रौढ्यै प्रणयप्रकाशमहम् ॥
नहि भामिनीविलास सुखसाध्यो भवति रसविलोलधियाम् ।
प्रणयप्रकाशविरहे तस्मात्तेनैव तै स सपाद्य ॥

इह श्रीमत्परमेश्वरशिर किरीटहीरकहारीभूतसमुल्लसत्तरङ्गा सकलोपनिषदन्तरङ्गा भगवतीं गङ्गामाराध्य तत्प्रसादसमासादितसकलविद्याकमलिनीविद्योतनत्वमहिम्ना श्रीमज्जगन्नाथनाम्ना पण्डितराजेन 'काव्य यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये । सद्य. परनिर्वृतये कान्तासमिततयोपदेशयुजे ॥' इति भरतसूत्रात्, 'सुन्दरी स्वेशहृदय वशीकृत्य स्वसद्गुणै । लौकिक वैदिक चापि कुर्वतीष्ट ससाधनम् ॥ तद्वत्काव्याद्यपि श्रीमन्महारामायणादिकम् । श्रोतुर्मनो वशीकृत्य हित वक्ति सहेतुकम् ॥' इत्यादि मदुक्तसाहित्यसारप्रपञ्चितपद्धत्या धर्मादिचतुर्विधसाधनपुरुषार्थाना भामिनीविलासाख्ययथार्थलघुकाव्यप्रणयने-

नोपदिदिक्षया तन्निष्प्रत्यूहतादिप्रयोजन शिष्टाचाराद्यनुमितश्रुतित प्राप्तविधान वस्तुनिर्देशलक्षण मङ्गल तावदन्योक्त्युल्लासेऽत्र तयैवाप्रस्तुतप्रशसारूपया शिष्यानुशासनार्थं ग्रन्थारम्भेऽपि द्योत्यते—

**दिगन्ते श्रूयन्ते मदमलिनगण्डाः करटिनः**
**करिण्यः कारुण्यास्पदमसमशीलाः खलु मृगाः ।**
**इदानीं लोकेऽस्मिन्ननुपमशिखानां पुनरयं**
**नखानां पाण्डित्यं प्रकटयतु कस्मिन्मृगपतिः ॥१॥**

दिगन्त इति । अय बुद्धिस्थत्वेनापरोक्षो मृगपति , 'सिंहो मृगेन्द्र ' इत्यमरात्सिंहः, इदानीं वर्तमानकाले, न तु भविष्यत्कालेऽपि, अस्मिन्प्रत्यक्षे लोके भूर्लोके पुनरप्रथमे । एतेन पूर्वं शतश करिवरा विदारिता एवेति ध्वनितम् । अनुपमशिखानामतितीक्ष्णाग्राणा नखाना पाण्डित्य नैपुण्य कस्मिन्प्रकटयतु । न क्वापि प्रकटयत्वित्यन्वयः । तत्र हेतु पूर्वार्धेनाह—यत , मदमलिनगण्डा दानदिग्धकपोला करटिनः । 'करटो गजगण्डे स्यात्कुसुम्भे निन्द्यजीविनि । एकादशाहश्राद्धेऽपि दुर्दुरूढेऽपि वायसे ॥' इति विश्व' । विशालगण्डस्थलमण्डता गजा इत्यर्थ । दिगन्ते प्राच्यादिदिक्प्रान्ते श्रूयन्ते । 'ऐरावत पुण्डरीको वामन कुमुदोऽञ्जन । पुष्पदन्त सार्वभौम सुप्रतीकश्च दिग्गजा ॥' इत्यमरात्केवल परोक्षमेव श्रवणद्वारावगम्यन्ते, न त्वपरोक्षीक्रियन्त इत्यर्थ । तथा करिण्यो गजिन्यः कारुण्यास्पद खलु तद्यूथनाथाना प्रागेवानेन विदारितत्वा त्तासा स्त्रीत्वेन वधानर्हत्वाच्च तास्तावदनुकम्पापात्रमेवेति भावः । किंच मृगा हरिणा असमशीला अतुल्यबला खलु । तस्माद्युक्तमेवोक्तमृगपते शौर्यकटनस्थानाभाववर्णनमित्याशय । इय हि मुख्योक्त्या व्याख्या ॥ अन्योक्तिस्तु— स्वस्य कस्याचिदन्यस्य वा पण्डितमाण्डलिकचक्रवर्तिनः स्तुतिरियमिति पाण्डित्यपदान्यथापत्त्योह्यते । वस्तुतस्तु तस्या सर्वतोमुखत्वेन यथाप्रसङ्ग यथायोग प्रकल्पनेऽपि न क्षति । इयमेव व्यवस्था यावदग्रिमान्योक्तिष्वपीति दिक् ॥ मङ्गलपक्षे तु वस्तुनिर्देशलक्षणमङ्गलपरतया श्लेषेणार्थत्रय ज्ञेयम् । तद्यथा—मृगपति । अत्र अजहत्स्वार्थलक्षणया नृमृगपतिर्नरसिंहो ग्राह्य । तथा चेद प्रह्लादस्य हिरण्यकशिपुवधोत्तर ब्रह्मादीन्प्रति भगवत्प्रभाव-

वर्णनवचनम्। हे ब्रह्मादयः, अयमपोढो मृगपतिरुक्तवृत्त्या नृहरिः। इदानी-मित्याद्युत्तरार्धशेषः प्राग्वदेव एव करटिशब्देनाप्येतद्गम्यत्वेनासुरा एव ज्ञेयाः। ते तु दिगन्ते श्रूयन्ते। समुद्रपातालादिनिविष्टत्वाद्दूरतरवर्तमानत्वेन केवलमा-कर्ण्यन्त एवेत्यर्थः। तद्वत्करिणीपदेनापि कयाधूप्रभृतयोऽसुरस्त्रियो बोध्याः। तथा मृगयन्त्यन्वेषयन्तीति व्युत्पत्त्या शुक्रपुत्रादयस्तन्मन्त्रिण एव मृगश-ब्दिताः। तस्माद्भगवतो नारसिंहस्य पुनः शौर्यप्रकाशने न किमपि प्रकृते पात्रमिति हिरण्यकशिपुवधादितच्चरितात्मकवस्तुव्यञ्जनेन विचित्रं तच्छौ-र्यैश्वर्यमिति द्योतितम्। तेन तस्य कविकर्तृकनमस्क्रियात्मकमपि मङ्गलं ध्वन्यते। तस्मात्त्वत्तोऽहं निकृष्टो मत्तस्त्वमुत्कृष्ट इति भावनापूर्वककायिकादित्रिविधप्रह्वी-भावरूपत्वात्॥ पक्षे 'शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च। ज्ञानं विज्ञा-नमास्तिक्यं ब्रह्मकर्म स्वभावजम्॥' इति स्मृतेर्मृगयन्त्यन्वेषयन्ति सदसद्वस्तु विचारयन्ति ते मृगा ब्राह्मणास्तान्पातिं त्रिःसप्तवारं क्षत्रक्षपणपूर्वकं पृथ्वी-प्रदानेन पालयतीति तथा। श्रीमत्परशुराम इत्यर्थः। नखानां न विद्यते खमा-काशपदवाच्यमवकाशजातं येषां ते तथा। वध्यराहित्येन निरवकाशानां शरा-णामित्यर्थः। ननु कुत एवमिति चेत्तत्राह—दिगन्त इति पूर्वार्धेन। करटिन ऐरावताद्यष्टदिग्गजोपलक्षिता जहत्स्वार्थलक्षणया तत्स्वामिन इन्द्रादिलोकपाला इत्यर्थः। तेषां मदमलिनगण्डत्वं तु मदजन्यस्वेदादेव बोध्यम्। एवं करिण्यः करा राजग्राह्यनियतधनभागास्ते विद्यन्ते येषां नृपाणां तेषां स्त्रिय इत्यर्थः। स्वनिहतराजरमण्य इति यावत्। तद्वन्मृगा निरुक्तव्युत्पत्त्या विचारशीला-जनकादिक्षत्रिया इत्यर्थः। इदं हि श्रीमत्परशुरामविजयोत्तरं स्वगतमेव कश्यपादिसप्तर्षिवचनम्॥ उक्तार्थमेवान्यत्॥ पक्षे गोपीसान्त्वनार्थं भगवता प्रेषितमुद्धवं प्रति राधिकावाक्यमिदम्॥ तथा हि। हे उद्धव, अयमस्मद्बुद्धि-स्थत्वेन प्रत्यक्षः। एतेन प्रीत्यतिशयः सूचितः। मृगेति। मृगो हरिणास्तद्व-त्पातीति। स यथा वन एव प्रायः क्रीडति तद्वदयं श्रीकृष्णो वृन्दावन एवास्म-द्भर्ता। न तु ग्रामादौ प्रसिद्धस्तथेत्यर्थः। अस्मजारः। श्रीकृष्ण इति यावत्। एवं चास्मान्वञ्चयित्वा गतस्तस्येदं वक्ष्यमाणफलमित्याकूतम्। उत्तरार्धशेषस्तु यथाश्रुत एव। तदेतत्कालावच्छेदनास्मिल्लोके माद्दग्विलासा-

स्पदं तस्य नास्त्येवेति भावः । तदेवोपपादयति—दिगन्त इति । मदेति । मदेन मृगमदेन मलिना चित्रितत्वेन श्यामा गण्डाः कपोला यासां तास्तथा । कस्तूरीकलुषितकपोला इत्यर्थः । एतादृशाः करटिनः करटाः पूर्वोक्तविश्वान्निन्द्य-जीविनः शतशोऽसुराः सन्ति यस्येति स तथा । अनेकदुष्टासुरचमूनायकस्य । भौमासुरस्येति यावत् । तेन स्वगृहे रोधितत्वेन तत्सबन्धिन्यः करिण्यः करशब्दितवलिग्रहणशालिन्योऽनेकराजानां षोडशसहस्रसंख्याकाः कन्यका इत्यर्थः । तास्तु निरुक्तरोधनवशात्कारुण्यास्पदं यथा स्यात्तथा दिगन्ते क्वचि-द्दिक्प्रान्ते श्रयन्त इति यावत् तस्मात्ता अपि न सद्यः संभोगार्हा भवन्तीति भावः । तथा मृगा मृगयन्ति राधादिगोप्युपभोग्यत्वकीर्तिश्रवणेन श्रीकृष्णम-न्वेषयन्तीति मृगाः । कुब्जादिमथुरानार्य इत्यर्थः । तास्त्वसमशीलाः सामान्य-वनितात्वेनातुल्यस्वभावाः खलु । तस्मात्तासु तु पुरुषोत्तमस्य भगवतः कदा-प्यनुचित एव विहार इति रहस्यम् । एवं युक्तमेवास्यास्मान्वञ्चयतः संभोगस्थल-राहित्यमधुनेति तत्त्वम् ॥ अत्र प्रथमतृतीयचतुर्थेषु युद्धवीरः, तथा द्वितीये पाण्डित्यवीरः, पञ्चमे विप्रलम्भशृङ्गारानुप्राणितः सौन्दर्यवीरश्च रसः । अर्थचतु-ष्टयेऽपि धीरोदात्तो नायकः । पञ्चमे तु कितवः । परकीया प्रगल्भा सौन्दर्य-गर्विता विप्रलब्धा नायिका । अप्रस्तुतप्रशंसा श्लेषः काव्यलिङ्गं परिकराङ्कुर-संकरश्चालंकाराः । एतेषां लक्षणानि तु सोदाहरणमुक्तानि कुवलयानन्दकारि-कासु—'अप्रस्तुतप्रशंसा स्यात्सा यत्र प्रस्तुताश्रया । एकः कृती शकुन्तेषु योऽन्यं शक्रान्न याचते ॥ नानार्थसंश्रयः श्लेषो वर्ण्यावर्ण्योभयात्मकः । सर्वदो माधवः पायात्स यो गङ्गामदीधरत् ॥ अब्जेन त्वन्मुखं तुल्यं हरिणा-हितसक्तिना । उच्चरद्भूरिकीलालः शुशुभे वाहिनीपतिः ॥ समर्थनीयस्यार्थस्य काव्यलिङ्गं समर्थनम् । जितोऽसि मन्द कन्दर्प मच्चित्तेऽस्ति त्रिलोचनः ॥ अलंकारः परिकरः साभिप्राये विशेषणे । सुधांशुकलितोत्तंसस्तापं हरतु नः शिवः ॥ साभिप्राये विशेष्ये तु भवेत्परिकराङ्कुरः । चतुर्णां पुरुषार्थानां दाता देवश्चतुर्भुजः ॥' इति । संकरलक्षणं तूक्तं कुवलयानन्द एव—'नारत्नोरन्या-येनास्फुटभेदालंकारमेलने संकरः' इति । एवं रसादिलक्षणान्यपि मदीयसा-हित्यसारतो ज्ञेयानि । विस्तरभयात्तानि नेह प्रपञ्च्यन्ते । अत्र यद्यपि

अन्योक्त्याद्यक्षरसापेक्षयाप्रस्तुतप्रशंसाद्यलंकारस्यैवाधिकचमत्कारकारित्वेन प्राधान्यादस्यार्थचित्राख्यमध्यमकाव्यत्वेऽपि निरुक्तालंकारापेक्षयापि तद्व्यञ्जितयुद्धवीरस्यैवाधिक्येनाह्लादजनकत्वाद्ध्वनिसंज्ञकोत्तमोत्तमकाव्यत्वमेव ज्ञेयम्। अथ काव्यभेदस्तु रसगङ्गाधराख्यैतद्ग्रन्थ एव प्रसिद्धः। तदिहान्योक्त्याख्यप्रथमोल्लासे नीत्युपदेशात्ससाधनयोर्धर्मार्थयोः प्रतिबोधनम्। नीतिमत एव धर्मार्थयोः संभवात्। द्वितीये शृङ्गारोल्लासे तु स्वकीयाया नायिकायाः सवर्णनेन 'धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ' इति स्मृतेस्तादृशस्य तस्योपपादनम्। अवशिष्टोल्लासद्वये तु ससाधनस्य मोक्षस्यैव प्रबोधनमिति। न च वेदेनैव धर्माद्यखिलपुमर्थोपदेशस्य ससाधनं विस्तरतः कृतत्वात्किमनेन पौरुषकाव्येनेति चेत्सत्यम्। तस्यार्थित्वादिविशेषणविशिष्टाधिकारिविषयत्वात्। यथाहुः—'अर्थी समर्थो विद्वाञ्शास्त्रेणापर्युदस्तो यजेत याजयेत्' इति। उपलक्षणमिदं सामान्यतो यावद्वेदार्थग्रहणतदनुष्ठानादेः। तस्माद्ये तावद्वेदाद्यर्थश्रवणादितः प्रभुसंमितोपदेशत्वादिना समुद्विजन्ति तथा पुरुषार्थमप्यभिवाञ्छन्त्येतादृग्विषयिजनैकविषयत्वादस्य काव्यादेर्नैव नैरर्थ्यशङ्कापीति ध्येयम्। एवं चात्र विषयित्वे सति पुमर्थेच्छुर्वोऽधिकारिणः। व्यञ्जनया पुमर्थचतुष्टयबोधनं विषयः तत्प्राप्त्यानर्थनिवृत्तिः प्रयोजनम्। व्यङ्ग्यव्यञ्जकभावः संबन्धश्च सिद्धः। अत्र शिखरिणीवृत्तम्—'रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी' इति वृत्तरत्नाकरोक्तेरिति शिवम्॥

एवमलौकिकपाण्डित्येऽपि पुरुषेण तावद्गर्वः स्वप्नेऽपि नैव कर्तव्यः, किंतु 'श्रुतं प्रज्ञानुगं यस्य यस्य प्रज्ञा श्रुतानुगा। असंभिन्नार्थमर्यादः पण्डिताख्यां लभेत सः॥' इति महाभारतोक्तपाण्डित्यरीतिमतैव भाव्यम्, नो चेद्दुर्वारदुःखापत्तिः स्यात्। गर्वापादकख्यातिलाभपूजादिप्रयोजनस्य पाण्डित्यस्य, 'क्षयान्ता निचयाः सर्वे पतनान्ताः समुच्छ्रयाः। संयोगा विप्रयोगान्ता मरणान्तं च जीवितम्॥' इति वचनात्तत्साध्योपभोगानां नश्वरत्वात्तथा प्रतिक्षणमनुभवाच्च अत एवाहुः—'वेदाभ्यासात्पुरा तापत्रयमात्राच्च शोकिता। पश्चादभ्यासविस्मारभङ्गगर्वैश्च शोकिता॥' इति। तस्मात्पाण्डित्याभिमानो नैव विधेय इति तात्पर्यं राजहंसान्योक्त्या द्योतयति—

पुरा सरसि मानसे विकचसारसालिस्खल-
त्परागसुरभीकृते पयसि यस्य यातं वयः ।
सपल्वलजलेऽधुना मिलदनेकभेकाकुले
मरालकुलनायकः कथय रे कथं वर्तताम् ॥२॥

पुरेति । इयं हि सार्वभौमाश्रितोऽथ्य सूरीश्वरस्तद्विरहायतो निराश्रयस्ततोऽद्य क्षुद्रशूद्राद्याश्रयेन तिष्ठत्विति धनयौवनाद्युन्मादेन वदन्तं काचित्प्रति कस्यचिदभिज्ञस्योक्तिः । रे इति नीचसंबोधने । यस्य पुरा प्राक् मानसे मानसाह्वये सरसि सरोवरे । विकचेति । विकचानि प्रफुल्लानि यानि सारसानि 'सारसं सरसीरुहम्' इत्यमरात्कमलानि, तेषामालिः पङ्क्तिस्तस्याः सकाशात्स्खलन्तश्च्यवन्तो ये परागाः पुष्परेणवस्तैः सुरभि सुगन्धि यथा संपेदे तथा कृतं तस्मिन्नित्यर्थः एतादृशे पयसि जले यस्य वयो यातम् । तारुण्यमतिक्रान्तमिति यावत् । ननु सारसानामालिः पङ्क्तिरिति त्वयोक्तम् । सा च संयोगविशेष एव । एकतानिकटसंयोगस्यैव तादृशकिंचिद्विरलमासानाविकरणयद्वारकसंयुक्तसंयोगस्य वा 'भुक्ता पङ्क्तिर्विप्रपङ्क्तिः' इत्यादौ तच्छक्यताया दृष्टत्वात् । तस्य च गुणत्वात्परागरूपद्रव्यस्य ततः स्खलनवर्णनमनुचितमेवेति चेन्न । आद्ये 'वर्षत्यम्बुदमालेयम्' इत्यादिवत्, द्वितीये 'द्विजपङ्क्तिर्भुङ्क्ते' इत्यादिवच्च संबन्धविशेषकल्पनया निरूढलक्षणाया वोपपत्तेः । एतेन 'चकोरीगणे' (१।३) इत्यादि व्याख्यातम् । एवं चेतादृशस्यापि पण्डितवरस्य पाण्डित्याभिमानेन संपादितभोगक्षये जाते नीचाश्रयोऽप्यधुनानेन कार्य इति पामरेणापि बोध्यते शाण्ड्यते चेतरेण । तथापि भोगाभावस्तु नैव हत इति विकपाण्डित्याभिमानमित्याशयः । स मरालेति । मराला हंसाः । अत्र मरालपदस्य हंसे शक्तिग्रहस्तावन्मानसादिसिद्धपदसांनिध्यादेव । तदुक्तम्—'शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्यव्यवहारतश्च । वाक्यस्य शेषाद्विवृतेर्वदन्ति सांनिध्यतः सिद्धपदस्य वृद्धाः ॥' इति मदीये साहित्यसारेऽपि । 'रौत्याम्रे पिकः' इत्यादौ प्रसिद्धपदसंनिधेरिति तेषां कुलं वंशस्तस्य नायकः, तत्र वा नायको धुरीण इत्यर्थः मिलदिति मिलन्तः समुच्चयीभवन्तो येऽनेके भेका बहवो मण्डूकास्तैराकुलं व्याप्तं तत्रेति

यावत्। एतादृशे। पल्वलेति 'वेशन्त पल्वल चाल्पसरो वापी तु दीर्घिका' इत्यमरात्क्षुद्रसरोवारिणीत्यर्थ अधुनाद्य कथ वर्तता कथ निवसतामिति कथयेत्यन्वयः तस्मादत्रैतद्वर्तनमनुचितमेवेति भाव । अन्योक्तिस्तत्कथ । अत्रोदात्तो नायक करुणो रस । अप्रस्तुतप्रशंसालंकारस्तु प्रायो यावदुल्लासममाप्तिसाधारण एव। इह काव्यलिङ्गमपि। पृथ्वीवृत्तम्। तदुक्तम्—'जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरु' इति॥

एव निजैश्वर्यमदेन कस्यापि प्रभावापह्नवेन केषाचिदप्याशोच्छेदो नैव कर्तव्य इति विधान्नन्योक्त्या ध्वनयति—

तृष्णालोलविलोचने कलयति प्राचीं चकोरीगणे
मौनं मुञ्चति किं च कैरवकुले कामे धनुर्धुन्वति।
माने मानवतीजनस्य सपदि प्रस्थातुकामेऽधुना
धात· किं नु विधौ विधातुमुचितो धाराधराडम्बरः॥ ३ ॥

अयि दलदरविन्द स्पन्दमानं मरन्दं
तव किमपि लिहन्तो मञ्जु गुञ्जन्तु भृङ्गाः।
दिशि दिशि निरपेक्षस्तावकीनं विवृण्व-
न्परिमलमयमन्यो बान्धवो गन्धवाहः॥ ४ ॥

अयीति। इद हि कोमलामन्त्रणे सबोधनम्। तेन वक्तरि शिक्षकत्वेऽपि कारुण्य व्यज्यते। दलदिति। भो। विकसितकमलेत्यर्थः। एतेन मरन्दे स्पन्दमानताया हेतु सूचित। भृङ्गा भ्रमरा, न तु हसाः। तेन क्षुद्रत्वादि द्योत्यते। तव त्वत्सबन्धिनमित्यर्थ। एव च भृङ्गेष्वर्थमात्रलोलत्वं ध्वन्यते। स्पन्दमान किंचित्स्रवमाणम्। तेन मयि भूय· सपद्यते ततो भक्षयन्तु नाम ये केचन यथेच्छमित्यौदासीन्यव्युदास। मरन्द मकरन्दम्। किमपि कथंचिदपि। एतेन स्वामित्वाभावः सूचितः। लिहन्त। आस्वादयन्त सन्त इत्यर्थ। एव च यावदर्थमेवैते मधुर भाषन्ते तदूर्ध्वं तु स्वप्नेऽप्येते नैव गोचरीभविष्यन्तीत्यनुचितपात्रत्व तेषु व्यज्यते। मञ्जु मनोज्ञम्। मञ्जु मञ्जुलम्' इत्यमर। क्रियाविशेषणमिदम्। मनोहर यथा स्यात्तथा गुञ्जन्तु गुञ्जारवाख्यस्वर्णजाप कुर्वन्त्वित्यर्थ। एतेनातिनीचत्व तेषु ध्वन्यते।

उक्तं हि महाभारते—'सुलभाः पुरुषा लोके सततं प्रियवादिनः । अप्रियस्य च पथ्यस्य वक्ता श्रोतापि दुर्लभः ॥' इति । न च सर्वेऽप्येवमेवेति पूर्वपद्याशयोपदेष्टुरस्य तथात्वाभावादित्याह—दिशिदिशीत्युत्तरार्धेन । दशदिशास्वपीत्यर्थः । एतेनाचिन्त्यशक्तिः सूचिता । तावकीनं त्वत्सबन्धिनं परिमलं सुगन्धं विदूरयान्विशदयन् । 'वितन्वन्' इति पाठे विस्तारयन्नित्यर्थः । किं लोभेन, नेत्याह—निरपेक्ष इति । एतादृशोऽयं प्रत्यक्षो गन्धवाहः पवनाख्यो बान्धवः सखा अन्य एव अलौकिक एवास्तीति सबन्धः । तस्मादेतदादरणमेव करणीयमिति तात्पर्यम् । अत्रोदात्तो नायकः । शान्तो रसः । भेदकातिशयोक्तिरप्यलंकारः । मालिनी वृत्तम् । तदुक्तम्—'ननमयययुतेयं मालिनी भोगिलोकैः' इति ॥

एवं जीवनैकनिर्वाहार्थं कंचिदुपागतमर्थिनं नेवावजानीयादिति कुटजान्योक्त्या द्योतयति समुपागतवतीत्यार्यावृत्तविशेषेण—

समुपागतवति दैवादवहेलां कुटज मधुकरे मा गाः ।
मकरन्दतुन्दिलानामरविन्दानामयं महामान्यः ॥ ५ ॥

तावत्कोकिल विरसान्यापय दिवसान्वनान्तरे निवसन् ।
यावन्मिलदलिमालः कोऽपि रसालः समुल्लसति ॥ ६ ॥

हे कोकिल, त्वं तावद्वनान्तरेऽन्यारण्यमध्ये। एतेन धैर्यभङ्गहेतुविपर्यासङ्गव्युदासः सूचितः निवसन्नितरां तिष्ठसन्नित्यर्थः, न तु क्षणमात्रं विहरन् एव च तत्संभवाभावो व्यज्यते । विरसान्दिवसान्यापय । नयेत्यर्थः तावत्पदापेक्षितं पूरयति—यावदित्युत्तरार्धेन । रसालः आम्रः । 'आम्रश्चूतो रसालोऽसौ' इत्यमरः मिलदिति मिलन्त्याश्लिष्यन्ति मिलन्त्योऽभिसमालिङ्गन्त्यो वालिमाला भ्रमरपङ्क्तयो यस्मिन्स तथेत्यर्थः तस्मात्स्वाभीष्टदविकासपर्यन्तं धैर्यमेवावलम्ब्य विपन्नेन वन एव विहर्तव्यमिति तात्पर्यम् । इह करुणो नायकः । शान्तो रसः लोकोक्तिरप्यलंकारः तदुक्तम्—'लोकप्रवादानुकृतिर्लोकोक्तिरिति भण्यते । सहस्व कतिचिन्मासान्मीलयित्वा विलोचने ॥' इति ॥

ननु भवता भूयुपदेशे क्रियमाणेऽपि मम संशयः पुनः पुनर्नवो नव एवाविर्भवतीति विद् मामतिनीचमिति स्वमनसि खिन्नमिव शिष्यमालक्ष्य

गुरुस्तु कूपान्योक्त्या प्रोत्साहयति—

नितरां नीचोऽस्मीति त्वं खेदं कूप मा कदापि कृथाः ।
अत्यन्तसरसहृदयो यतः परेषां गुणग्रहीतासि ॥ ७ ॥

कमलिनि मलिनीकरोषि चेतः किमिति बकैरवहेलितानभिज्ञैः ।
परिणतमकरन्दमार्मिकास्ते जगति भवन्तु चिरायिषो मिलिन्दाः ॥ ८ ॥

येनामन्दमरन्दे दलदरविन्दे दिनान्यनायिषत ।
कुटजे खलु तेनेहा तेने हा मधुकरेण कथम् ॥ ९ ॥

अमन्देति । प्रचुरमकरन्द इत्यर्थः । दलदिति । विकसितकमल इति यावत् । एतेन सकलसुखसामग्री सूचिता । अनायिषत । नीतानीत्यर्थः खल्वित तेनेत्यनेनान्वेति । तथा च तेनैव न त्वन्येन । एतेनानौचित्यं सूचितम् । मधुकरेण कुटजे प्रागुक्तद्रुमे ईहा इच्छापि । हा इति खेदे । कथं तेने किमिति विस्तारितेति सम्बन्धः । इह विपन्नो नायकः । करुणो रसः परिकरोऽप्यलंकारः ॥

ननु यदि कश्चिदनेकगुणाधिकरणमपि गुण्यादिषु तुल्यदृष्ट्यैव तत्पोषकश्चेत्तत्र गुणिनो मे कथमाधिक्यं स्यादिति चेत्तत्स्तुत्यैवेति चन्दनान्योक्त्या व्यनक्ति अयीत्यार्याविशेषेण—

अयि मलयज महिमायं कस्य गिरामस्तु विषयस्ते ।
उद्गिरतो यद्गरलं फणिनः पुष्णासि परिमलोद्गारैः ॥ १० ॥

पाटीर तव पटीयान्कः परिपाटीमिमामुरीकर्तुम् ।
यत्पिपतामपि नृणां पिष्टोऽपि तनोषि परिमलैः पुष्टिम् ॥ ११ ॥

पाटीरेति । पाटीरेति चन्दनसंबोधनम् । पटाः सन्ति यस्य स पटी तन्तुवायः तद्वत् ईरयति स्वगुणानन्यत्र पटादौ स यथा प्रेरयति तद्वत्स्वानेष्टसौरभ्यादिधर्मांश्चन्दनद्रुमादौ प्रेरयतीति पटीरो मलयाचलस्तत्र भवः पाटीरस्तत्संबुद्धावयि मलयानिलस्य चन्दनेत्यर्थः । तवेमां वक्ष्यमाणत्वेन प्रत्यक्षां परिपाटीं रीतिमुरीकर्तुं स्वीकर्तुं कः पटीयानस्ति । न कोऽपीत्यर्थः । तस्मात्त्वमेव धन्य इत्याशयः । तत्र हेतुमाह—यदित्युत्तरार्धेन । यद्यस्माद्धेतोस्त्वं पिपतामपि पेषणेन चूर्णीकुर्वतामपि । एतेन परमतितिक्षुत्वं ध्वनितम् । एतादृशां नृणां

मनुष्याणां पिष्टोऽपि परिमलः पुष्टिं तनोति । विस्तारयमान्यर्थ । इह क्षमी नायकः । शान्तो रसः । काव्यलिङ्गमलंकारः ॥

नन्वेवमपि स यदि मत्कार्यं नैव विवेचयिष्यति तदा किं वक्तव्यमिति चेद्धमान्योक्त्या तद्ध्वनयति—

* नीरक्षीरविवेके हंसालस्यं त्वमेव तनुषे चेत् ।
विश्वस्मिन्नधुनान्यः कुलव्रतं पालयिष्यति कः ॥ १२ ॥

उपरि करवालधाराकाराः क्रूरा भुजंगमपुंगवात् ।
अन्तः साक्षाद्‌द्राक्षादीक्षागुरवो जयन्ति केऽपि जनाः ॥ १३ ॥

उपरीति । बहिः । करवालेति । करवाले खड्गस्तस्य धारा तद्वदाकारो रोपठ्यज्ञकव्याक्तिविधेशो येषाम् । तत्र हेतुः—भुजगमेति । भुजगमाः सर्पास्तेषु पुंगवः श्रेष्ठस्तस्मात्सर्पराजादपि क्रूराः । कोपना इत्यर्थः । तर्ह्यन्तरपि ते तथैव स्युरिति सर्वोत्कटत्वेनोक्ततद्वर्णनं कथम् । तत्राह—अन्तरिति शेषण । द्राक्षेति । मृद्वीकानामपि माधुर्योपदेशदेशिका इति यावत् । एतादृशा केऽपि जना जयन्तीति योजना । अर्थात्तादृशा भवन्ति एवेति द्योत्यते । इह निष्कपटो नायकः । शान्त एव रसः । प्रतीपमलंकारः ॥

स यदि दुर्जनोपदेशादेतन्न मनुते चेत्तत्रोक्तमेव 'अयि दलद्' (११८) इति कमलान्योक्तिं भङ्गयन्तरेण पठितुं स्पष्टयति—

* स्वच्छन्दं दलदरविन्द ते मरन्दं
विन्दन्तो विदधतु गुञ्जितं मिलिन्दाः ।
आमोदानथ हरिदन्तराणि नेतुं
नैवान्यो जगति समीरणात्प्रवीणः ॥ १४ ॥

याते मय्यचिरान्निदाघमिहिरज्वालाशतैः शुष्कतां
गन्ता कं प्रति पान्थसंततिरसौ संतापमालाकुला ।
एवं यस्य निरन्तराधिपटलैर्नित्यं वपुः क्षीयते
धन्यं जीवनमस्य मार्गसरसो धिग्वारिधीनां जनुः ॥ १५ ॥

यात इति । मयि । निदाघेति । ग्रीष्मकालीनोष्णरश्मिजन्यातपार्चि-सहस्रैरित्यर्थः । गत एव अचिराच्छीघ्रं शुष्कतां नीरसतां याते प्राप्ते सति ।

असौ विप्रकृष्टा। रतापेति। उत्क्रान्तपावलितरालितेत्यर्थः एतादृशा। पान्थेति- पथिकपरम्परेति यावत्। क प्रति गन्ता क वदान्य प्रति जीवनयाचनार्थं गमिष्यति। नैव कमपि गमिष्यतीत्यर्थः। उत्तरार्ध तु सरलमेव। मार्गपद सन्मार्गद्योतकम्। एव जीवनपदमपि श्लेषेणोदकस्य प्राणनस्य च सूचकम्। जनु। जन्मेत्यर्थः। 'जनुर्जननजन्मानि' इत्यमर। तस्मादल्पसत्वोऽपि भाविमकटप्राप्त वधिवमुख्यसभावनया पूर्वमेव क्षीयमाणतनुर्वदान्य एव धन्यो न त्वन्ये भूरिभाग्यसंपन्ना अपीत्याशय। अत्र पूर्वार्धे सदयकरुणौ परार्धे धीरदानवीरौ च नायकरसौ। काव्यलिङ्गमप्यलकार। शार्दूलविक्रीडित वृत्तम्। तल्लक्षण तु प्रागेवोक्तम॥

ननु तत्राप्यसौ नैव प्रसीदतीति चेत्स्वानन्यगतिकत्वध्वननेन प्रसादमूली भूत तत्र स्वविषयकपरमकरुणोत्पादनमेव मीनान्योक्त्या विधेयमिति व्यनक्ति-

**आपेदिरेऽम्बरपथं परितः पतङ्गा**
**भृङ्गा रसालमुकुलानि समाश्रयन्ति।**
**सकोचमञ्चति सरस्त्वयि दीनदीनो**
**मीनो नु हन्त कतमां गतिमभ्युपैतु॥१६॥**

आपेदिर इति। हे सर सरोवर त्वयि सकोच ग्रीष्मण्णा ह्रासम- ञ्चति स्वीकुर्वति सतीत्यर्थः। पतङ्गा 'पतङ्गौ पक्षिसूर्यौ च' इत्यमराद्धसमार- सादय पक्षिण परित समन्तादम्बरपथमाकाशमार्गमापेदिरे। प्रापुरित्यर्थः। न केवलमेत एव तथा किं त्वन्येऽपीत्याह—भृङ्गा इति द्वितीयपादेन। रसा- लेति। रसाल आम्र। 'आम्रश्चूतो रसालोऽसौ' इत्यमरः। 'कुड्मलो मुकुलोऽस्त्रियाम्' इति च। अतो दीनदीनो दीनेभ्योऽनन्यगतिकेभ्यो नक्रा- दिभ्योऽपि दीन। परमानन्यगतिक इत्यर्थः। मीनो मत्स्य। नु वितर्के। हन्तेति खेदे। कतमा का गतिमभ्युपैतु। तस्य त्वदुदकप्राचुर्यं विना गत्यन्त राभावान्न कामपि गतिमभ्युपैत्वित्यर्थः। तस्मादनेन त्वत्पङ्क एव विकलीभूय लोकान्तरे गन्तव्यमिति भाव। एतेन त्वयाय नैवोपेक्षणीय इति व्यज्यते। अत्र करुणावेव नायकरसौ। परिकरोऽप्यलकार। वसन्ततिलका वृत्तम्। तदुक्तम्—'उक्ता वसन्ततिलका तभजा जगौ ग' इति॥

ननु स यदि ब्रूयात्किमेव मदनिष्टं चिन्तयसीत्यत्र किं कार्यमिति चेत्कमलिन्यन्योक्त्या स्वस्य परहितैकनिरतत्वं व्यञ्जनमेवेति वदन्नामेवाह—

* मधुप इव मारुतेऽस्मिन्मा सौरभलोभमम्बुजिनि मंस्था ।
लोकानामेव मुदे महितोऽप्यात्मामुनार्थितां नीतः ॥१७॥

* गुञ्जति मञ्जु मिलिन्दे मा मालति मौनमुपयासीः ।
शिरसा वदान्यगुरवः सादरमेनं वहन्ति सुरतरवः ॥१८॥

* यैस्त्वं गुणगणवानपि सतां द्विजिह्वैरसेव्यतां नीतः ।
तानपि वहसि पटीरज किं कथयामस्त्वदीयमौन्नत्यम् ॥१९॥

* अपनीतपरिमलान्तरकथे पदं न्यस्य देवतरुकुसुमे ।
पुष्पान्तरेऽपि गन्तुं वाञ्छसि चेद्भ्रमर धन्योऽसि ॥२०॥

* तटिनि चिराय विचारय विन्ध्यभुवस्तव पवित्रायाः ।
शुष्यन्त्या अपि युक्तं किं खलु रथ्योदकादानम् ॥२१॥

* पत्रफलपुष्पलक्ष्म्या कदाप्यदृष्टं वृतं च खलु शूकैः ।
उपसर्पेम भवन्तं बर्बुर वद कस्य लोभेन ॥२२॥

एकस्त्वं गहनेऽस्मिन्कोकिल न कलं कदाचिदपि कुर्याः ।
साजात्यशङ्कयामी न त्वां निघ्नन्ति निर्दयाः काकाः ॥२३॥

एकस्त्वमिति । हे कोकिल, यत एकस्त्वमस्मिन्गहने । 'गहनं ... वनम्' इत्यमरादरण्ये । अतः कदाचिदपि कलमव्यक्तमधुरध्वनिं न कुर्याः । मैव कुर्वित्यर्थः ॥ तत्र हेतुः—साजात्येति । यतोऽमी निर्दयाः काकास्त्वां साजात्यशङ्कया निजजातीयभ्रान्त्या न निघ्नन्तीत्यन्वयः । उक्तध्वनिरचने तु भ्रान्त्यपगमान्निर्दयत्वस्वाभाव्येन मारयिष्यन्त्येवेति भावः । इह करुणैव नायकरसः । भ्रान्तिमानप्यलंकारः ॥

अथ कदाचित्स राजा स्वगुणाकृष्टतयानुनेतुमायास्यति चेत्तत्र वक्तव्या हिमाचलान्योक्तिमाह—

* तरुकुलसुषमापहरां जनयन्तीं जगति जीवजातार्तिम् ।
केन गुणेन भवानीतात हिमानीमिमां वहसि ॥२४॥

* कलभ तवान्तिकमागतमलिमेनं मा कदाप्यवज्ञासीः ।

अपि दानसुन्दराणां द्विपधुर्याणामयं शिरोधार्यः ॥२५॥

* अमरतरुकुसुमसौरभसेवनसंपूर्णसकलकामस्य ।
पुष्पान्तरसेवेयं भ्रमरस्य विडम्बना महती ॥ २६ ॥

* पृष्टाः खलु परपुष्टाः परितो दृष्टाश्च विटपिनः सर्वे ।
माकन्द न प्रपेदे मधुपेन तवोपमा जगति ॥ २७ ॥

तोयैरल्पैरपि करुणया भीमभानौ निदाघे
मालाकार व्यरचि भवता या तरोरस्य पुष्टिः ।
सा किं शक्या जनयितुमिह प्रावृषेण्येन वारां
धारासारानपि विकिरता विश्वतो वारिदेन ॥ २८ ॥

तोयैरिति । हे मालाकार । माला पुष्पस्रजः करोतीति तथा तत्संबुद्धौ । भवता कर्त्रा करुणया अल्पैरपि तोयैर्वाप्याद्युद्धृतैर्जलैः करणैरस्य तरोर्या पुष्टिर्भीमभानौ भीमश्चण्डो भानुः सूर्यो यस्मिंस्तत्र निदाघे ग्रीष्मर्तौ व्यरचि अकारीत्यन्वयः । किं ततस्तत्राह—सेत्युत्तरार्धेन । सा पुष्टिरिह लोके प्रावृषेण्येन प्रावृषि वर्षाकाले भवः प्रावृषेण्यः प्रावृट्कालीनस्तेनेत्यर्थः । अत एव विश्वतः सर्वतः वाराम् 'आपः स्त्री भूम्नि वार्वारि' इत्यमराज्जलानामित्यर्थः धारासारानपि धाराश्चासाराश्च धारासारास्तान् । धारा जलधारा प्रसिद्धा एव । तथा आसाराः 'धारासंपात आसारः' इत्यमराद्धाराणां संभूयपतनमिति रामाश्रमकृतद्व्याख्यानाच्च धाराणां समुच्चितपरिपातास्तानपीत्यर्थः । एतेन पुष्टिसामग्रीप्राचुर्यं सूचितम् । विकिरता वर्षता एतादृशेन वारिदेन मेघेन जनयितुं कर्तुं शक्या योग्या किम् । अपितु नैव योग्येति योजना । तस्मात्त्वं निरुपमत्वेन स्तोतुं योग्य एवेति भावः । अत्रोक्त एव नायको भावश्च । प्रतीपविशेषोऽलंकारोऽपि । मन्दाक्रान्तावृत्तम् । तदुक्तम्—'मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद्गुरू चेत्' इति ॥

एवं निरुक्तलोकेऽल्पपदक्षुद्रत्वं गुरुत्वाचि व्यनक्तीत्यस्वरसान्मेघान्योक्त्या पुनः स्तौति—

आरामाधिपतिर्विवेकविकलो नूनं रसा नीरसा
वात्याभिः परुषीकृता दश दिशश्चण्डातपो दुःसहः ।

**एव धन्वनि चम्पकस्य सकले संहारहेतावपि**
**त्वं सिञ्चन्नमृतेन तोयद कुतोऽप्याविष्कृतो वेधसा ॥२९॥**

आरामेति । हे तोयद जलद । आरामेति । 'आराम स्यादुपवनम्' इत्यमरादुद्याननायकः । विवेकेति । विचारहीन । नून निश्चितम् । अस्तीति शेष । एव 'रसा विश्वंभरा स्थिरा' इत्यमरादिमा पृथ्वी । नीरसा निर्गता रसा उदकानि यस्या सकाशात्तया । जलहीनेत्यर्थ । तद्वद्वात्याभिश्चक्रवाते देशादिश परपीकृताः स्वीकृता सन्तीति यावत् । तथा चण्डेति । चण्डस्तीव्र आतप । 'प्रकाशो द्योत आतप ' इत्यमरात्प्रकाशो यस्य स तथा सूर्य इत्यर्थ । दु सहो ग्रीष्मकालिकत्वेन सोढुमशक्योऽस्तीति यावत् । एव धन्वनि । 'समानौ मरुध वानौ' इत्यमरान्मरुदेशे चम्पकस्य । सकले सहारेपि । ध्वसकारणे सत्यपीत्यर्थ । त्वममृतेन 'पय कीलालममृतम्' इत्यमराज्जलेन । पक्षे पीयूषेण । सिञ्चन्नाप्लावयन् । एतादृशो वेधसा 'स्रष्टा प्रजापतिर्वेधा' इत्यमराद्ब्रह्मणा कुतोऽप्यस्यादृष्टाद्धेतो । आविष्कृत प्रकटीकृतोऽसीति सबन्ध अतस्त्वल्लाभ एव पुमर्थ इत्याशय , इहोक्तावेव नायकरतिभावा । प्रहर्षणमप्यलंकार । शार्दूलविक्रीडित वृत्त तृक्तमेव ॥

एव स्तुतिमाकर्ण्य निर्विण्ण श्रीगुरु. ''किमनया स्तुत्या । यदुक्तम्— 'अद्यापि दुर्निवार स्तुतिकन्या वहति कौमारम् । सद्भ्यो न रोचते सा सन्तोऽप्यस्यै न रोचन्ते ॥' इति । किंच 'येषा निमिषमात्रेण जगत प्रलयोदयौ । तादृशा पुरुषा याता मादृशा गणनात्र का ॥' इति वचनादलमस्मदीयस्तवेन'' इति द्योतयन्महानुभावशरीरनाशमनुमवाय शोचति न यत्रेति सिंहान्योक्त्या—

**न यत्र स्थेमानं दधुरतिभयभ्रान्तनयना**
**गलद्दानोद्रिक्तभ्रमदलिकदम्बा· करटिन. ।**
**लुठन्मुक्ताभारे भवति परलोकं गतवतो**
**हरेरद्य द्वारे शिवशिव शिवाना कलकल ॥३०॥**

यत्र हरेर्द्वारे । गलदिति । गलन्स्रवद्यद्दान मदोदक तस्योद्रेकेण बाहुल्येन भ्रमन्ति अलिकदम्बानि भ्रमरवृन्दानि येषु ते तथा । न तु साधारणा । एतेन

मदोन्मत्तत्व सूचितम् । एतादृश करटिनः । उत्तरार्धमिदं प्राक् । गजेन्द्रा इत्यर्थः । अतीति । अतुलभीतिचकितलोचना सन्त इति यावत् । स्थेमानं स्थिरीभाव न दधुनेव वत्रिरित्यन्वय । तत्र परलोक स्वर्गादिलोकान्तरं गतवत । जगामेति गतवास्तस्य पञ्चत्व प्राप्तस्येत्यर्थ । एतादृशस्य हरेः । 'हर्यक्ष केसरी हरि' इत्यमरात्सिंहस्य । लुठदिति । लुठन्ति श्वापदपादे प्रचलन्ति ते तथा मुक्ताना विदारितमतङ्गजगण्डस्थलजातमौक्तिकाना भारा प्रचुरानिकरा यस्मिंस्तत्तथा । एतादृशे द्वारे दरीमुखेऽद्य । शिवाशिवेति । रौद्राद्भगवन्नामस्मरणम् । शिवाना क्रोष्टॄणा कलकल कोलाहलो भवतीति योजना । तस्मान्नश्वरमेवेदमखिल दृश्यवैभवमिति भाव । इहोदात्तो नायक । वीरकरुणभयानकशान्ता रसाः । पर्यायस्वभावोक्ती अलंकारौ । तदुक्तम्—'एकस्मिन्यद्यनेक वा पर्यायः सोऽपि समत । अधुना पुलिन तत्र यत्र स्रोत पुराजनि ॥' इति,स्वभावोक्तिः स्वभावस्य जात्यादिस्थस्य वर्णनम् । कुरङ्गैरुत्तरङ्गाक्षैः स्तब्धकर्णैरुदीक्ष्यताम् ॥' इति च । शिखरिणी वृत्तम् । तल्लक्षण तूक्तमेवाधस्तात् ॥

अथ निरुक्तस्वनिर्वेदेन शिष्यमुखं म्लानमिवालक्ष्य तं प्रोत्साहयितुं वकुलान्योक्त्या तद्गुणवर्णन ध्वनयति—

**दधानः प्रेमाणं तरुषु समभावेन विपुलां**
**न मालाकारोऽसावकृत करुणां बालवकुले ।**
**अयं तु द्रागुद्यत्कुसुमनिकराणां परिमलै-**
**र्दिगन्तानातेने मधुपकुलझङ्कारभरितान् ॥ ३१ ॥**

दधान इति । तरुषु समभावेन समानदृष्ट्या प्रमाण दधानोऽन एवासौ मालाकारो यद्यपि बालवकुले नूतनवकुलद्रुमे विपुला करुणा नाकृत नैव चकार । तथापि । तु पुनरय द्राक्शीघ्रम् । 'द्राङ्मङ्क्षु सपदि द्रुतम्' इत्यमर । उद्यदिति । आविर्भवत्पुष्पगुच्छाना परिमलै सुगन्धैर्दिगन्तान् । मधुपेति पुष्पधयनिचयगुञ्जारवपूरितानेतादृशानातेने विस्तारयामासेति सबन्ध । इह ललितो नायक । वीर एव रसः । असभवोऽयलकार । तदुक्तम्—'अस-

मवोऽर्थनिष्पत्तेरसभाव्यत्ववर्णनम् । को वेद गोपाशिशुक शैलमुत्पाटयेदिति॥'—इति ॥

तत्राप्येक काम एव तव शत्रुर्जेतव्य इति ध्वनयति मूलमित्यादि वृक्षपत्यन्योक्त्या—

**मूल स्थूलमतीव बन्धनदृढं शाखाः शत मांसला**
**वासो दुर्गमहीधरे तरुपते कुत्रास्ति भीतिस्तव ।**
**एकः किंतु मनागयं जनयति स्वान्ते ममाधिज्वरं**
**ज्वालालीवलयीभवन्नकरुणो दावानलो घस्मरः॥३२॥**

हे तरुपते । वृक्षाणा पति श्रेष्ठस्तत्सबुद्धौ । भो वृक्षराजेत्यर्थ । अत्र तज्जातिविशेषस्याकथनात्तच्छ्रवणापदेश्ये अश्वावभ्युत्तमत्वादिजात्यनिर्णयादप्रौढत्व व्यज्यते । यतस्तव मूलमतीवात्यन्तमेव स्थूल महत्तरम् । तथा बन्धनदृढ बन्धन भूमेरन्तर्गते महापापणादौ वेष्टन तेन दृढमचल चास्तीत्यर्थः । एतेन चक्रवातादिभीत्यपनुति सूचिता। शाखा स्कन्धत्वेन प्रसिद्धास्ता शत नतु स्वल्पा । तत्रापि मासला लक्षणया पल्लवपरिपुष्टा नतु शुष्का । एतादृश्य. सन्तीति यावत् । न चैवमपि राजमार्गनिष्ठत्वेन मे छेदनादि भयमस्त्येवेति वाच्यम् । तव पर्वतदुर्गनिष्ठत्वादित्याह—वास इति । दुर्गो दु खेन गन्तु शक्य दुर्ग. । स चासौ महीधर पर्वतस्तस्मिन्वासोऽपि भवतीत्यतो हेतोस्तव भीति कुत्रास्ति । न क्वापि भय सभवतीत्यर्थ । किंत्वेकोऽय दावानलो दावाग्निर्मम स्वान्तेऽन्त करणे मनागीपदाधिज्वरम् । 'पुस्याधिर्मानसी व्यथा' इत्यमरादाधिर्मानसी व्यथा तया ज्वर संतापस्त जनयति । सपादयतीत्यर्थः । तत्र हेतु वदस्त विशिनष्टि—ज्वालेत्यादिचरमपादगतविशेषणाभ्याम् । कीदृश । अकरुणो निर्दय । पुनः कीदृश । ज्वालेति । ज्वालानामर्चिषामाली पङ्क्तिस्तया वलयीभवन्कटकाकारीभवन्सन् । घस्मरः । बहुभक्षक इति यावत् । 'भक्षको घस्मरोऽद्मर.' इत्यमर । एतेन तत्र स्वभीतिर्हेतुसामग्री द्योतिता । तस्मादेतस्मात्त्वया भेतव्यमेवेति भाव । पक्षे तरव एव पतय फलादिप्रदानेन पालयितारो यस्य तत्सबुद्धौ । अत एव तव वासो दुर्गमहीधर इति सगतम् । एतेनारण्यविहारित्वेन विरक्तत्व सूचितम् । यतस्तव मूलम्

'ऊर्ध्वमूलम्-' इति स्मृतेराधिष्ठानीभूतं ब्रह्म स्थूलमतीव परममहत्परिमाणम्। परिच्छेदत्रयशून्यमेवास्तीत्यर्थः । कादृशं तत्। वन्धनेति । वन्धने ममारब-न्धने त्वदृशानुभूतेऽपि दृढम् । अविनाशीति यावत् । एत ज्ञाने सामग्री केत्यत्राह—शाखा इति तित्तिरीयादिरूपा इत्यर्थः । दावानलपदादौ गौणी लक्षणा । तेन लुप्तोपमा । एतेन दावानलो यथा वनस्थवृक्षगोरेवान्योन्यस-घर्षादुत्पन्नस्तद्दाहकोऽन्यदाहकश्च भवति, तद्वद्वारण्ये स्त्रीपुंसयो परस्पर-सन्निकर्षत प्रादुर्भूत कामोऽपि तद्धातक श्रवणादिनान्यघातकश्चेति व्यक्तम् । एतादृश । अघेति छेद । अघहेतु परस्त्रीविषयकत्वेन पापकारणी-भूतो य स्मर काम स तथेत्यर्थः । शेषं तुक्तार्थम् । तस्मात् जहि शत्रु महाबाहो कामरूपं दुरासदम्' इति स्मृतेः काम एव जेय इत्याशयः । अत्र विरक्तो नायक । शान्तो रस । श्लेषोऽप्यलंकार ॥

एवं गुरुवाक्यमाकर्ण्य भवत्प्रतापाग्रे कोऽयं मशकः कामो यन्मामे-वैतज्जयं कर्तव्यतयोपदिश्यते श्रीमद्भिर्मम त्वेतत्प्राणान्तसंकटमेव परिस्फुर-त्यत. स्वप्रभावादेवायमुपशमनीय इति मेघान्योक्त्या व्यनक्ति—

**ग्रीष्मे भीष्मतरैः करैर्दिनकृता दग्धोऽपि यश्चातक-**
**स्त्वां ध्यायन्घन वासरान्कथमपि द्राघीयसो नीतवान् ।**
**दैवाल्लोचनगोचरेण भवता तस्मिन्निदानीं यदि**
**स्वीचक्रे करकानिपातनकृपा तत्कं प्रति ब्रूमहे ॥ २३॥**

ग्रीष्म इति। अत एव। भीष्मेति । दारुणं भीषणं भीष्मं घोरं भीमं भयानकम्' इत्यमरादतिभयकरैरित्यर्थ । एतादृशैः करैः किरणैः कृत्वा दिनकृता दिवसकारेणकर्त्रा दग्धोऽपि । दाहवत्प्राणान्तसंतापितोऽपी-त्यर्थ । एतादृशोऽपि यश्चातकः । हे घन, त्वां ध्यायन्मनसा जीवनदातृत्वेन चिन्तयन्सन् द्राघीयसोऽतिशयेन दीर्घा इति द्राघीयामस्तान् । ग्रीष्मर्तौ दिवस-विस्तीर्णत्वं प्रसिद्धमेव । एतादृशानपि । एतेन परमासह्यत्वं व्यज्यते । वास-रान्दिवसान्कथमपि येनकेनाप्यनिर्वाच्यप्रकारेणापि नीतवाननयदिति संबन्ध । लोचनेति । नेत्रविषयीभूतेन । प्रत्यक्षेणेत्यर्थ । एतादृशेन भवता त्वया । तस्मिन्ननुकम्प्ये चातके । करकेति । 'वर्षोपलस्तु करका' इत्यमरात्पाषाणाका-

रत्नारिपरिणामविशेषा एव करकान्तामा निपातन तद्रूपा या कृपा सा यदा-दाना स्वीचक्रेऽङ्गीकृता तर्हि क प्रति भ्रमह इत्यन्वयः । तस्मादतुलश्रद्धालु-रनन्यगतिकश्च मादृशो भक्तजन कदापि नैवोपेक्षणीय किन्तु स्वसामर्थ्यले-शेनैव कामादिविघ्नमहत्वतोऽप्यमृतप्रदानेन सरक्षणीय एवेति भाव । अत्र दत्वोऽर्पत्येनेन श्रद्धातिशय सूचित । एव इवादित्यनेनाचार्यदौर्लभ्य ध्वनितम् । इदानीमित्यनेन स्वाभ्युदयसमये हि वदान्यचक्रवर्तिना प्रायेण पात्राद्यविचार्येव वितरणप्रवीणत्व प्रसिद्ध किमुत निजैकजीवने परमसुजने तत्प्रकटीकरणमिति द्योतितम् । अत्र पूज्यतमो नायक । करुण एव रस । विषमविशेषोऽलकार । तदुक्त विषम प्रकृत्य—‘अनिष्टस्याप्यवाप्तिश्च तदिष्टार्थ समुद्यमात् । भक्ष्याशया हि मञ्जूषा भक्त्वाखुस्तेन भक्षित ॥’ इति ॥

तत एव शिष्यवाक्य श्रुत्वाप्यश्रुतामिव भावयस्तदुत्तरमविचार्येवान्य जन सहैव वार्तान्तरासक्तमाचार्यमालक्ष्य स तावत्तस्य तद्वैमुख्यपूर्वक स्वैक-परायणत्व संपादयितु तस्मै निजौत्सुक्य मेघान्योक्त्यैव व्यनक्ति—

**दवदहनजटालज्वालजालाहतानां**
**परिगलितलतानां म्लायतां भूरुहाणाम् ।**
**अयि जलधर शैलश्रेणिशृङ्गेषु तोयं**
**वितरसि बहु कोऽयं श्रीमदस्तावकीन. ॥३४॥**

दवेति । अयि जलधर । इद हि कोमलामन्त्रणे स्वकारुण्योत्पादनार्थम । भो जलपदवाच्यानाममृताना जीवनाना च धारक सेनेत्यर्थ । एतेनाखिलपुरुषार्थदा-नदक्षत्व द्योतितम् । त्वम् । दवदहनेति । ‘दवदावौ वनारण्यवह्नी, इत्यमराद्दवस्या-रण्यस्य सबन्धी यो दहनो वह्निस्तस्य जटाला जटा इव येन दीर्घतरा अशविशे-षास्तद्विशिष्टा ये ज्वाला वह्नेर्द्वयोर्ज्वालकीलौ’ इत्यमर तेषा जालानि तैरा-समन्ताद्धतास्ताडिता । त्वगादौ दग्धा इति यावत् । तेषामित्यर्थ । अत एव । परिगलितेति । च्युतलतानामत एव म्लायता म्लायन्ति ग्लानि प्राप्नुवन्ति ते म्लायन्तस्तेषाम् । म्लानानामित्यर्थ । एतादृशा भूरुहाणाम् । ‘वृक्षो महीरुह शाखी’ इत्यमराद्वृक्षाणामिति यावत् । ‘षष्ठी चानादरे’ इति षष्ठी ।ताननादृत्ये-त्यर्थ. । शैलेति । पर्वतशिखरेषु तोय जल बहु विपुल वितरसि वर्षसि पर्वतेषु

हि भूयसी वृष्टिर्भवतीति प्रसिद्धमेव। अथ निरुक्तस्तावकीनस्त्वदीय. श्रीमदः सपद्युन्माद कः। आक्षेपार्थको ऽयं किंशब्द । अनुचित एवेत्यर्थ । तस्माद-स्मास्वेवामृतवृष्टि पात्रतया कार्येति तात्पर्यम्। इह स्थूललक्ष्यो नायकः । करुणो रस. । परिकरोऽप्यलङ्कार । मालिनी वृत्तम् । तल्लक्षण तूक्तमव-स्तात्॥

इत्थं शिष्यवचनं श्रुत्वा श्रीगुरुस्तमाश्वासयति श्रृण्वन्निति पान्थान्योक्त्या--

श्रृण्वन्पुरः परुषगर्जितमस्य हन्त
रे पान्थ विह्वलमना न मनागपि स्याः।
विश्वार्तिवारणसमर्पितजीवनोऽयं
नाकर्णितः किमु सखे भवताम्बुवाहः॥ ३५॥

सौरभ्यं भुवनत्रयेऽपि विदितं शैत्यं तु लोकोत्तरं
कीर्तिः किं च दिगङ्गनाङ्गणगता किं त्वेतदेकं श्रृणु।
सर्वानेव गुणानियं निगिरति श्रीखण्ड ते सुन्दरा-
नुज्झन्ती खलु कोटरेषु गरलज्वालां द्विजिह्वावली॥ ३६॥

सौरभ्यमिति। हे श्रीखण्ड श्री खण्डेषु यस्य तत्सवुद्धौ। चन्दनस्य हि यादृशी काष्ठखण्डदशावच्छेदेन सौरभ्यशोभोपलभ्यते न तादृग्द्रुमादिदशावच्छे-देनेति सुप्रसिद्धमेव। अतो युक्तैवोक्तव्युत्पत्तिः। अयि चन्दनेत्यर्थ । तव सौरभ्य सौगन्ध्यम्। भुवनेति। लोकत्रयेऽपि विदित सर्वमान्यतया प्रख्या-तम्। वर्तते इति यावत्। तथा शैत्य तु सतापोपशामकत्व तु लोकोत्तरमलौ-किकमेव। अस्तीत्यर्थ । किंच तव कीर्तिर्दाहादावपि परिमलपौष्कल्यख्यातिः। दिगिति। प्राच्यादिचपलविलोचनाजिरसचारिणीत्यर्थ । भवतीति शेष । किं तत इति चेत्तदाह—किं त्वित्यादि। तदेव स्फुटयति—इय प्रत्यक्षा द्विजिह्वा-वलि सर्पराजिस्तव कोटरेष्वनायाससपन्नत्वात्काष्ठबिलेष्वित्यर्थ । गरलज्वाला गरलानि वान्तविषाणि तैर्या स्वनिष्ठसूक्ष्माग्निना सह त्वत्काष्ठसयोगाज्ज्वाला-चिस्तान्। यद्वा तान्येव ज्वालेव दाहकत्वाज्ज्वाला ताम्। यद्वा तानि ज्वालेव ज्वाला तानित्यर्थ । उज्झन्ती उद्भावयन्ती सती ते सर्वानेव तव सपूर्णान्सु-न्दरानेव रम्यानेव निरुक्तसौरभ्यादीन्गुणान्। धर्मानित्यर्थ । निगिरति खलु

भक्षयत्येवेति योजना। तस्मादेतस्याः परिग्रहस्तव परमनाशहेतुत्वादनुचित एवेति भावः। अत्र सुन्दरपदेन गुणेष्ववश्य मरक्षणीयत्व द्योत्यते। इह सवोध्यनायकपक्षेऽपि कोटरपदमात्रे गौणीं वृत्तिमाश्रित्यान्तःपुरादिगृहैकान्तदेशविशेषार्थकत्वमुररीकृत्यार्थान्वयो विधेयः। तद्यथा—भो देवदत्त, ते सौरभ्य सुरभे 'सुगन्धे च मनोज्ञे च वाच्यवत्सुरभि स्मृत' इति विश्वान्मनोज्ञस्य भाव सौरभ्यम्। रम्यत्वमित्यर्थः। शैत्य 'शितशीतौ कृशे तीक्ष्णे' इति हैमात्तैक्ष्ण्यम्। तेजस्वित्वमिति यावत्। द्विजिह्वेति द्विजिह्वा सर्पसूचकौ' इत्य मरात्परच्छिद्रसूचकपदुक्तिरित्यर्थ। गरलेति। गरलमिव दुरुपदेशजात मारकत्वाद्गरल तेन ज्वालेव कोपाभिजन्या या परध्वसनेच्छा तामित्यर्थ। शेष तूक्तार्थमेव। तस्मात्पिशुनवचो नैवादरणीयमित्याशय। अत्रोपदेश्यो नायक। करुणो रस। श्लेपलुप्तोपमे अप्यलकारौ। शार्दूलविक्रीडित वृत्तम् ॥

एव श्रीगुरुवाक्य श्रुत्वा दुर्जनवचनश्रोतरि स्वस्मिन्नौदासीन्यमिवालक्ष्य तस्य सर्वत्र निरपेक्षसर्वोपकारित्व सूचयन्नात्मनि तत्कारुण्यमुत्पादयति नापेक्षेति मेघान्योक्त्या—

**नापेक्षा न च दाक्षिण्यं न प्रीतिर्न च संगतिः**
**तथापि हरते तापं लोकानामुन्नतो घन. ॥३७॥**

**समुत्पत्तिः स्वच्छे सरसि हरिहस्ते निवसन**
**निवासः पद्मायाः सुरहृदयहारी परिमलः।**
**गुणैरेतैरन्यैरपि च ललितस्याम्बुज तव**
**द्विजोत्तंसे हंसे यदि रतिरतीवोन्नतिरियम् ॥३८॥**

समुत्पत्तिरिति। हे अम्बुज भो कमल, तव समुत्पत्ति. प्रादुर्भाव स्वच्छे निर्मले सरसि मानसादौ सरोवरे। नतु पल्वलेऽस्तीत्यर्थ एवं निवसनमपि वसतिरपि हरिहस्ते विष्णुपाणौ। तवेत्यस्तीति चाद्यन्तयोरनुबन्धनीयम्। किंच त्व पद्मायाः लक्ष्म्या निवासो वसतिस्थानम्। असीति शेष। तथा तव परिमल सुगन्धोऽपि। सुरेति। देवमनोहर इत्यर्थ। भवतीत्यध्याहार एतेन गोदुग्धादेरुत्तमस्थानजन्यत्वेऽपि ताम्रपात्रादिस्थित्या तस्य पुनस्तदितरपात्रादिगन्धे शर्करादियोग्यममेलनाभावेन लवणाद्ययोग्यममेलनेन वा तथा शोभि-

तत्वादगन्यादिसंस्कृततैलादिसुवासितत्वाभावेन दुःस्पर्शत्वादि दुर्गन्धित्वादिना वा त्याज्यत्वमिवास्यापि निन्द्यजत्वादिना हेयत्वं व्युदस्तम्। तर्हि किमेतावन्त एव मयि गुणा सन्ति नेत्याह—गुणैरिति। अन्यैरपि निरुक्तेतरैः स्वीयसुन्दरीस्मितसदनसादृश्याद्यैरपीत्यर्थः। ललितस्य। रम्यस्येति यावत्। एतादृशस्य तव यदि। द्विजेति। पक्षिश्रेष्ठे। पक्षे त्रैवर्णिकशिरोमणौ। हंसे राजहंसे, पक्षे परमहंसे। कस्मिंश्चिद्ब्रह्मनिष्ठे इत्यर्थः। रतिः प्रीतिरस्ति। तर्ह्ययमतीवानुपमैवोन्नतिरुत्कृष्टता भवतीत्यन्वयः। तस्मादेवमेव सार्वदिकी श्रद्धा वर्धनीयेति तत्त्वम्। अत्र द्विजेत्यादरणीया शब्दब्रह्मनिष्णातत्वादिवहि सामग्री हंसेत्यन्त सामग्री च सूचिता। इह बुभुत्सुर्नायकः। शान्तो रसः। काव्यलिङ्गादिरप्यलंकारः। शिखरिणी वृत्तम्॥

ननु तर्हि किं सर्वपालकेन राज्ञा मया नीचजनोज्जीवनं नैव विधेयमिति चेत्सर्वजीवनं त्वया संपादनीयमेव परंतु तत्तद्योग्यतातारतम्यं विवेकेनैव न त्वन्यथेति क्षीराब्ध्यन्योक्तितो ध्वनयति—

**साकं ग्रावगणैर्लुठन्ति मणयस्तीरेऽर्कबिम्बोपमा**
**नीरे नीरचरैः समं स भगवान्निद्राति नारायणः।**
**एवं वीक्ष्य तवाविवेकमपि च प्रौढिं परामुन्नतेः**
**किं निन्दान्यथवा स्तवानि कथय क्षीरार्णव त्वामहम्॥ ३९**

साकमिति। ग्रावेति। 'पाषाणप्रस्तरग्रावोपलाश्मानः' इत्यमरात्पाषाणगणैः साकं सार्धम्। नीरे नीरवत्सर्वतः परिपूर्णे क्षीर एव। ननु फलवादिवत्क्वचित्कदाचित्केनचिदुपलभ्यमान इति यावत्। एतेन क्षीरार्णवे नीरासंभवान्नीरपदप्रयोगानौचित्यं परास्तम्। एवं नीरचरपदेऽपि तेषामतितुच्छत्वबोधनार्थमेव नीरपदम्। तेन वक्ष्यमाणाविवेकपरिपोषोऽपि ध्वन्यते। नीरचरैः। मकरादिभिर्जलचरैरित्यर्थः। स भगवानिति पदाभ्यां श्रुतिप्रसिद्धत्वं सर्वेश्वरत्वं ततोऽतिपूज्यत्वं च व्यज्यते। हे क्षीरार्णव, त्वामहं किं निन्दान्यथवा स्तवानीति त्वमेव कथयेति संबन्धः। अत्राविवेकी नायकः। संदेहोऽप्यलंकारः। शार्दूलविक्रीडितं वृत्तम्॥

एवं निन्दापदं श्रुत्वा कुपितं तं प्रति स्वयं निःस्पृहत्वेन क्षीरार्ण-

वान्योक्त्या निन्दामेव स्फुटयति—

किं खलु रत्नैरेतैः किं पुनरभ्रायितेन वपुषा ते ।
सलिलमपि यन्न तावकमर्णव वदनं प्रयाति तृषितानाम् ४०

इयत्यां संपत्तावपि च सलिलानां त्वमधुना
न तृष्णामार्तानां हरसि यदि कासार सहसा ।
निदाघे चण्डांशौ किरति परितोऽङ्गारनिकरा-
न्कृशीभूतः केषामहह परिहर्तासि खलु ताम् ॥४१॥

इयत्यामिति। पूर्वं क्षीरार्णवत्वेन संबोधनेऽपि कुपितत्वात्क्षारार्णवत्वेन निन्दा तत्रापि स्तब्धत्वादधुना पल्वलत्वेनासावुचितैव। इयत्या प्रत्यक्षतयातिविपुलाया-मित्यर्थः। सलिलाना जलाना सपत्तौ लक्ष्म्या सत्यामिति योजना। हे कासार, 'कासारसरसी सर' इत्यमरात्। सरोवर, त्वमधुना शरत्काल आर्तानां तृषाक्रान्ताना जनाना तृष्णा तृषम्। पक्षे धनाद्याशा यदि सहसा झटिति न हरसीति संबन्ध। तर्हि निदाघे' 'निदाघ उष्णोपगम' इत्यमराद्ग्रीष्म इत्यर्थः। चण्डांशौ चण्डास्तीक्ष्णा अंशव किरणा यस्य तस्मिंस्तिग्मरश्मौ। सूर्य इति यावत्। परितो न त्वेकदेशे। अङ्गारेति। अङ्गारवदतिदाहकत्वात्करतरातपविशेषा एवा-ङ्गारास्तेषा निकरान्समूहान्किरति। वर्षति सतीत्यर्थः। अत एव कृशीभूतस्त्व केषा ता तृष्णा परिहर्तासीत्यन्वय। तदानीं त्वयि तृष्णोपशामकत्वस्य सुतराम-संभव इति भाव। तस्मात्त्वयैतादृश विवेक विधाय तादृग्दशात प्रागेवार्थप-रिपालनतत्परेण भाव्यमिति हृदयम्। अत्राप्युक्ता एव नायकादय ॥

तत्रापि दृप्तत्वादाविनयित्व एव सति तत्काल तादृक्संवादश्रवणेन राज्ञि मृदुत्वमवधार्य तद्दत्तधनाद्यपि परित्यज्य गतेष्वर्थिषु स तदादानपर पुनः किंचित्सामपूर्वक समुद्रान्योक्तित एवोपदिश्यते—

अयि रोषमुरीकरोषि नो चे-
त्किमपि त्वां प्रति वारिधे वदामः ।
जलदेन तवार्थिना विमुक्ता-
न्यपि तोयानि महान्न हा जहासि ॥ ४२ ॥

न वारयामो भवतीं विशन्तीं वर्षानदि स्रोतसि जह्नुजायाः

न युक्तमेतत्तु पुरो यदस्यास्तरङ्गभंगान्प्रकटीकरोपि ॥ ४३ ॥
* पौलोमीपतिकानने विलसतां गीर्वाणभूमीरुहां
येनाघ्रातसमुज्झितानि कुसुमान्याजघ्निरे निर्जरै ।
तस्मिन्नद्य मधुव्रते विधिवशान्माध्वीकमाकाङ्क्षति
त्व चेदञ्चसि लोभमम्बुज तदा किं त्वां प्रति ब्रूमहे४४॥

* भुक्ता मृणालपटली भवता निपीता-
न्यम्बूनि यत्र नलिनानि निषेवितानि ।
रे राजहंस वद तस्य सरोवरस्य
कृत्येन केन भवितासि कृतोपकारः ॥ ४५ ॥

प्रारम्भे कुसुमाकरस्य परितो यस्योल्लसन्मञ्जरी-
पुञ्जे मञ्जुलगुञ्जितानि रचयंस्तानातनोरुत्सवान् ।
तस्मिन्नद्य रसालशाखिनि दशां दैवात्कृशामञ्चति
त्व चेन्मुञ्चसि चञ्चरीक विनय नीचस्त्वदन्योऽस्तिक ४६॥

हे चञ्चरीक भ्रमर । कुसुमेति । वसन्तस्य प्रारम्भे । यस्य । उल्लसदिति । विकसद्वल्लरीविसर इत्यर्थ. । त्वम् । मञ्जुलेति । मनोगुञ्जारवजातानीति यावत् रचयन्कुर्वन्सस्तान्प्रसिद्धानुत्सवानातनोर्विस्तारितवानसीत्यर्थः । अद्य तस्मिन् । रसालशाखिनीति । आम्रवृक्ष इत्यर्थ । न चात्र शाखीत्यविक्र तस्य परिपुष्टय-भिप्रायत्वात् दैवात्कृशा पल्लववैकल्यवतीमित्यर्थ । दशामवस्थामञ्चति स्वीकुर्वति विषये त्व विनय प्रश्रय मुञ्चसि त्यजसि चेत्तर्हि त्वत्त्वत्त सकाशादन्य इतरो नीच क न कोऽपीति योजना। तस्मादेवमौद्धत्य नैव त्वया विधेयमित्याशयः॥

एव निर्भर्त्सनमाकर्ण्य स तटस्थस्तावत्प्रहसन्निव त राजकुमार प्रति निरुक्तवाक्य त्वया स्वकीयान्त पुर एव वक्तुमुचित नतु पण्डितमण्डल्यामिति कृष्णसारान्योक्त्या व्यनक्ति—

पर्णीगणेषु गुरुगर्वनिमीलिताक्षः
किं कृष्णसार खलु खेलसि काननेऽस्मिन् ।
सीमामिमा कलय भिन्नकरीन्द्रकुम्भ-
मुक्तामयीं हरिविहारवसुधरायाः ॥ ४७ ॥

एणीति । हे कृष्णसार, त्वम् । गुर्विति । गुरुर्महान्स चासौ गर्वश्च तेन निमीलिते तादृशे अक्षिणी नेत्रे यस्य स तथा । परमाभिमानमीलितलोचन सन्नित्यर्थ । अस्मिन्कानने‌ऽरण्ये । 'अटव्यरण्य विपिन गहन कानन वनम्' इत्यमरः । एणीनि । मृगीसमूहैरित्यर्थ । खलु निश्चित किं खेलसि । किमिति क्रीडसीति यावत् । कि तर्हि कार्यमित्यत आह— सीमामित्युत्तरार्धेन । इमाम् । भिन्नेति । भिन्ना विदारितास्ते च ते करीन्द्रकुम्भा गजराजकपोलास्तेषा या मुक्ता मौक्तिकानि ते प्रचुरा तथा । तामित्यर्थ । एतादृशीम् । हरीति । सिंहविलासस्थल्या इति यावत् । सीमा मर्यादा कलयावलम्बयेति सबन्धः । तस्माद्विपश्चित्सदसि त्वया नैवैव शक्य वक्तुमिति तत्त्वम् । एतदारभ्य पद्यपञ्चकान्त वीरो रस । धीरललितो नायकश्च ॥

एव तटस्थराजकुमारयो स्वनिमित्त विवाद श्रुत्वा पण्डितवरस्तं नृपसुत प्रति स्वासमानेषु रोषो नैवोचित इति सूचयति—जठरेति सिंहान्योक्तिभ्याम् ।

**जठरज्वलनज्वलताप्यपगतशाङ्कं समागतापि पुर ।**
**करिणामरिणा हरिणा हरिणाली हन्यतां नु कथम् ॥४८॥**

करिणा गजाना न तु मशकानामरिणा शत्रुणा एतादृशेन महावीरेण हरिणा सिंहेन । जठरेति । जठरस्योदरस्य ज्वलनो वह्निस्तेन ज्वलति सतप्यत इति तथा तेन । क्षुत्परिप्यना सतापात्यर्थ । अपगतेति । अपगता निरस्ता शङ्का भीतिकल्पना यथा स्यात्तथा । पुरोऽग्रभागे न तु पश्चात् । समागतापि न त्वकस्मात्प्राप्ता । एतेन मौढ्यातिशयो व्यज्यते । एतादृशी हरिणाली मृगपङ्क्ति कथ नु हन्यताम् । न कथमपि मार्यताम्, किंतु पाल्यतामेवेति योजना । तस्मात्त्वयात्र तटस्थादौ शान्तिरेव कार्येति तात्पर्यम् ॥

येन भिन्नकरिकुम्भविस्खल-
न्मौक्तिकावलिभिरञ्चिता मही ।
अद्य तेन हरिणान्तिके कथं
कथ्यता नु हरिणा पराक्रमः ॥४९॥

येनेति। भिन्नेति। भिन्ना विदारिता। मही पृथ्वी। अर्चिता पूजिता। तेन हरिणा सिंहेन अद्य हरिणान्तिके मृगनिकटे पराक्रमः कथं नु कथ्यताम्। न कथमपि कथनीय इत्यर्थः। तस्मादसमैः सह नैव वक्तव्यमिति भावः। 'रो नराविह रथोद्धता लगौ' इत्युक्तेरिदं वृत्तम्॥

अथ तं तटस्थं प्रत्यपि स एव पण्डितवरस्तावन्मया निरुक्तरीत्योपशमितस्यास्य निकटे त्वया नैवेतः परं स्थातव्यमिति गजान्योक्त्या व्यनक्ति—

स्थितिं नो रे दध्याः क्षणमपि मदान्धेक्षण सखे
गजश्रेणीनाथ त्वमिह जटिलायां वनभुवि।
असौ कुम्भिभ्रान्त्या खरनखरविद्रावितमहा-
गुरुग्रावग्रामः स्वपिति गिरिगर्भे हरिपतिः॥५०॥

स्थितिमिति। मदेति। मदेनान्धे ईक्षणे नेत्रे यस्य स तथा। तत्संबुद्धौ। एतेनावस्थितिशीलत्वं ध्वन्यते। सखे। एवं चोपदेशार्हत्वं व्यज्यते। गजेति। रे करिकुलपते, त्वमिह जटिलायां वल्लीबाहुल्येन संजातजटायामेतादृश्यां वनभुव्यरण्यभूमौ क्षणमपि। एतेन भीत्यतिशयः सूच्यते। स्थितिं नो दध्या नैव कुर्वित्यन्वयः। तत्र हेतुः—असाविति। एतेन प्रत्यक्षत्वादविश्वासव्युदासः। कुम्भीति। गजविभ्रमेणेत्यर्थः। कुम्भिपदं भ्रान्त्यर्हत्वं व्यनक्ति—खरेति। खराणि तीक्ष्णानि यानि नखराणि नखानि तैर्विद्राविता विदारिता महागुरुग्राव्णा महापाषाणानाम्। अत्र महत्त्वं स्थूलत्वम्। गुरुत्वं तु वज्रमणिवद्दुर्भेद्यत्वमेवेति न पौनरुक्त्यम्। अत्र 'महागिरि–'इत्येव पाठः प्रामाणिकः। ग्रामाः संघा येन स तथेति यावत्। तत्र खरपदं निरुक्तकार्यक्षमत्वसूचनार्थम्। एतादृशः। अत एव—हरीति। मृगराजराजः। गिरीति। कन्दर इत्यर्थः। स्वपिति निद्रातीति योजना। तस्मादिह तवावस्थानमनुचितमेवेति भावः। भ्रान्त्यलंकारः॥

गिरिगह्वरेषु गुरुगर्वगुम्फितो
गजराजपोत न कदापि संचरेः।
यदि बुध्यते हरिशिशुः स्तनंधयो

भविता करेणुपरिशेषिता मही ॥५१॥

निसर्गादारामे तरुकुलसमारोपसुकृती
कृती मालाकारो बकुलमपि कुत्रापि निदधे ।
इदं को जानीते यदयमिह कोणान्तरगतो
जगज्जालं कर्ता कुसुमभरसौरभ्यभरितम् ॥ ५२ ॥

निसर्गादिति । निसर्गात्स्वभावात् । आरामे उपवने । तर्विति । तरूणां वृक्षाणामाम्रादीनां यत्कुलं वृन्दं तस्य यः समारोपः सम्यगुत्तमफलपर्यवसायित्वेनारोपोऽवापस्तेन यत्सुकृतं पुण्यं तदस्यास्तीति तथा । सद्वृक्षारोपणपुण्यवानित्यर्थः । एतादृशः । तत्रापि कृती कुशलः । एतेन तदारोपणस्थानविवेचनचातुर्यं सूचितम् । एतादृशः । मालेति । शिष्टं पूर्वार्धं बोधार्हमेव । अस्त्वेव किं तत इत्यत आह—इदमित्युत्तरार्धेन । किं तदित्यत्राह—यदिति । कोणेति । कोणान्तरगतोऽपीत्यर्थः । एवं च प्रतिष्ठासामग्र्यभावः सूचितः । जगदिति । विश्वमण्डलमित्यतिशयोक्तिः । तेन लोकोत्तरसौष्ठवं व्यज्यते । कुसुमेति । कुसुमानां पुष्पाणां यो भरस्तस्य यत्सौरभ्यं सौगन्ध्यं तेन भरितं पूरितमित्यर्थः । एतादृशं कर्ता करिष्यतीति । तस्माद्यद्यपि मयायं ब्राह्मणमात्रगण्यैर्नैवादृतस्तथाप्यस्य सद्गुरोरलौकिकमेव सामर्थ्यमित्यसौ माननीय एवेति भावः । अत्र ललितो नायकः । अद्भुतो रसः । असंभवोऽलंकारः ॥

अथोक्त एव तटस्थोऽपि सत्सुवन्राजकुमारानिन्दां ध्वनयति—यस्मिन्निति राघवान्योक्त्या ।

यस्मिन्खेलति सर्वतः परिचलत्कल्लोलकोलाहलै-
र्मन्थाद्रिभ्रमणभ्रमं हृदि हरिद्दन्तावलाः पेदिरे ।
सोऽयं तुङ्गतिमिंगिलाङ्गकवलीकाराक्रियाकोविदः
क्रोडे क्रीडतु कस्य केलिकलहत्यक्तार्णवो राघवः ॥५३॥

लूनं मत्तगजैः कियत्कियदपि च्छिन्नं तुषारार्दितैः
शिष्टं ग्रीष्मजभीष्मभानुकिरणैर्भस्मीकृतं काननम् ।
एषा कोणगता मुहुः परिमलैरामोदयन्ती दिशो
हा कष्टं ललिता लवङ्गलतिका दावाग्निना दह्यते ॥५४॥

स्वर्लोकस्य शिखामणिः सुरतरुग्रामस्य धामाद्भुतं
पौलोमीपुरुहूतयोः परिणतिः पुण्यावलीनामसि।
सत्यं नन्दन किं त्विदं सहृदयैर्नित्यं विधिः प्रार्थ्यते
त्वत्तः खाण्डवरङ्गताण्डवनटो दूरेऽस्तु वैश्वानरः ॥५५॥

स्वर्लोकस्येति। हे नन्दन अयि सुरोद्यान, त्वं स्वर्लोकस्येन्द्रलोकस्य शिखामणिः शिरोरत्नवदलंकारीभूतमित्यर्थः। तथा। सुरेति। सुराणां देवानां ये तरवस्तेषां कल्पद्रुमाणां यो ग्रामः समूहस्तस्येत्यर्थः। अद्भुतमाश्चर्यकरं धाम स्थानम्। तथा। पौलोमीति। शचीतद्रमणयोः। पुण्येति। सुकृतपङ्क्तीनामिति यावत्। परिणतिः परिपाकोऽसीति सत्यम्। किं तु सहृदयैः सुधीभिरिदं विधिर्देवः, ब्रह्मा वा नित्यं प्रार्थ्यते याच्यत इत्यन्वयः। इदमिति किं तदाह—त्वत्त इत्यादिचतुर्थचरणेन। खाण्डवेति। खाण्डवमेतन्नामकमैन्द्रं वनं प्रसिद्धमेव। तदेव रङ्गो नृत्यभूविशेषस्तत्र ताण्डवमुद्धतनृत्यं तत्र नट इव पटुरेतादृशो वैश्वानरो दावाग्निस्त्वत्तः सकाशाद्दूरेऽस्त्विति। तस्मादचिन्त्यमहिम्नोऽपि तवैतस्मान्नृपकुमाराद्भयं भातीत्यतः सावधानेन भाव्यमिति भावः। अत्र ललितो नायकः। भयानको रसः। रूपकमलंकारः। किंच खाण्डवरङ्गेत्यादौ रौद्ररसोऽपि परिस्फुरतीति विबुधैर्ध्येयम्॥

ततः स तटस्थोऽपि स्वमनोरथभङ्गदुःखं तं पण्डितं प्रति कारान्योक्त्या व्यनक्ति—

स्वस्वव्यापृतिमग्नमानसतया मत्तो निवृत्ते जने
चञ्चूकोटिविपाटितारलकुटो यास्याम्यहं पञ्जरात्।
एवं कीरवरे मनोरथमयं पीयूषमास्वादय-
त्यन्तः संप्रविवेश वारणकराकारः फणिग्रामणीः ॥५६॥

स्वस्वेति। जने लोके। स्वस्वेति। स्वस्वव्यापारसमासक्तचित्ततयेत्यर्थः। मत्तो मत्सकाशात्। निवृत्ते परावृत्ते सति। एतेनैकान्तलाभः सूच्यते। चञ्च्विति। चञ्च्वाः कोटिरग्रं तेन विपाटितो विदारित आरलकुट आराख्यलोहशलाकाविशिष्टकाष्ठविशेषो येन स तथेत्यर्थः। अत्र 'विदारितारपुटः' इति पाठः प्रामाणिकः। अररपुटं कपाटपुटम्। 'कपाटमररं तुल्ये' इत्यमरः। एता-

दश सन्नहं पञ्जराद्यास्याम्युड्डीय गमिष्यामीति योजना । एव कीरवरे शुक-श्रेष्ठे । मनोरथमयं मनोराज्यैकविकार पायूपममृतमास्वादयत्यास्वादग्रहण-पूर्वक पिवति सतीति यावत् । अन्त पञ्जराभ्यन्तरे । वारणेति । गजशुण्डा-कार इत्यर्थ । महतोऽप्यहे स्वल्परन्ध्रेऽपि प्रवेशो लोके प्रसिद्ध एवेति नानुपपत्तिः फणीति । सर्पश्रेष्ठ सम्प्रविवेशेति सवन्ध । तस्मादीश्वर एवै-तत्सकटादभिरक्षत्वित्याशय. । अत्र करुणो रस । सचिन्तो नायकः । रूप-कलुप्तोपमे अलंकारौ ॥

एव नृपकुमारपण्डितवरतद्गरुतटस्थाना परस्परं सवादे जायमानोऽकस्मा-दन्तः पुराद्धर्म्यमविरूढा तद्धर्मपत्नीं निरीक्ष्य व्याकुलमनस काश्चित्तरुणमद-स्यान्प्रति स एव पण्डितवर कुरङ्गान्योक्त्योपदेश व्यनक्ति—

**रे चाञ्चल्यजुषो मृगाः श्रितनगाः कल्लोलमालाकुला-**
**मेतामम्बुधिकामिनीं व्यवसिताः संगाहितुं वा कथम् ।**
**अत्रैवोच्छलदम्बुनिर्भरमहावर्तैः समावर्तितो**
**यद्ग्रावेव रसातलं पुनरसौ यातो गजग्रामणी. ॥५७॥**

रे चाञ्चल्येति । यूयम् । श्रितेति । 'शैलवृक्षौ नगौ' इत्यमरादाश्रितकूल-द्रुमा सन्त इत्यर्थ । एतेन विवक्षितयुवकर्तृकयुवतिविशेषनिरीक्षणे सभास्त-म्भादिना निभृतत्व ध्वन्यते । कल्लोलेति । महोर्मिपङ्क्तिसपत्तिमतीमित्यर्थ । एता प्रत्यक्षाम् । एतेन नैवास्माभिरिदमनुष्ठितामिति वृथैवायमुपालम्भ इत्या-पादनं व्युदस्तम् । अम्बुधीति । समुद्रगाम् । गङ्गारूपा नदीमिति यावत् । एव चोत्तरार्धवक्ष्यमाणार्थयोग्यता द्योत्यते । सगाहितु प्रवेष्टुमिति यावत् । कथं वा व्यवसिता कृतव्यापारा भवथेति सवन्धः । ननु किमत्रानिष्टमिति चेत्त-त्राह—अत्रैवेत्युत्तरार्धेन । उच्छलदूर्ध्वं गच्छत्तच्च तदम्बु च तस्य यो निर्भर आधिक्यं तेन ये महावर्ता 'स्यादावर्तोऽम्भसा भ्रम' इत्यमरात्प्रसिद्धा महान्तो जलभ्रमास्तैरित्यर्थ । एवकारेण कान्तान्तरे तथा नाशसभावना-सत्वेऽपि नास्यामसाविति शङ्का परास्ता । समावर्तितो भ्रामित । असौ महत्त्वेन प्रसिद्धः । अत एव—गजेति । करीन्द्र पुनर्ग्रावेव पाषाणवदित्यर्थ । यद्यस्माद्रसातल यात इत्यन्वय । तस्मादयमनुचितारम्भ एव भवतामिति-

भाव। अत्र भयानकरौद्रौ रसौ। मूर्खो नायकः। उपमालंकार ॥

अथेममभिनव रोपपरुष ध्वनिमाकर्ण्य चकितमवलोकयन्त स्वपोतं सैव युवराजयुवतिः परिसान्त्वयति – पिबेति सिंहशिशुकान्योक्त्या।

पिब स्तन्यं पोत त्वमिह मददन्तावलधिया
दृगन्तानाधत्से किमिति हरिदन्तेषु परुषान्।
त्रयाणां लोकानामपि हृदयतापं परिहर-
न्नयं धीरं धीरं ध्वनति नवनीलो जलधरः ॥५८॥

हे पोत अयि बालक, त्वमिह मदीयपयोधरमण्डले स्तन्यं पिबेत्यन्वय। ननु पिबाम्येव स्तन्य किमित्यय निरनुयोज्यानुयोग इत्यत आह–मदेत्यादि-पूर्वार्धशेषेण। त्वम्। मदेति। मदो यौवनादिविकारस्तद्वत्प्रधानाश्च ते दन्तावलाश्च 'दन्ती दन्तावलो हस्ती' इत्यमराद्गजाश्चेति गन्धद्विपादिवत्समासः। तेषा या धीर्भ्रान्त्या तद्बुद्धिस्तयेत्यर्थ। इह प्रत्यक्षेषु। हरिदिति। दिक्प्रान्तेष्विति यावत्। परुषान्रोपकषायितानेतादृशान्दृगन्तान्किमिति कुतो नु हेतोराधत्से प्रसारयसीति संबन्ध। न च युक्तमेव वध्यबुद्ध्या नेत्रकोणसंचारण तद्बुद्धिर्भ्रमजन्यत्वादित्याह–त्रयाणामित्युत्तरार्धेन। यतोऽय प्रत्यक्ष। एतेनाश्रद्धेयनिरास। त्रयाणामपि। एवच महामहिमत्व द्योतितम्। लोकाना भूरादीनाम्। हृदयेति। अमृतवृष्ट्यान्तस्ताप परिहरन्सन्नत एव धीरं धीरं यथा स्यात्तथा परमगम्भीरमित्यर्थ। नवोऽभिनव. स चासौ नीलो जलधरो मेघ एव ध्वनतीति योजना। तस्माच्छान्तो भवेति भाव। अत्रोदात्तो नायकः। वीरो रस। भ्रान्तिरलंकारः॥

एव पुत्र समाधाय त पण्डितवर सा नृपकुमारतरुणी नीरदान्योक्त्या मधुरध्वनिमापण प्रार्थयते—

धीरध्वनिभिरल ते नीरद मे मासिको गर्भ।
उन्मदवारणबुद्ध्या मध्येजठरं समुच्छलति ॥५९॥

* वेतण्डगण्डकण्डूतिपाण्डित्यपरिपन्थिना
हरिणा हरिणालीषु कथ्यतां क. पराक्रमः ॥६०॥

नीरान्निर्मलतो जनिर्मधुरता रामामुखस्पर्धिनी

वासः किं च हरेः करे परिमलो गीर्वाणचेतोहरः।
सर्वस्वं तदहो महाकविगिरां कामस्य चाम्भोरुह
त्वं चेत्प्रीतिमुरीकरोपि मधुपे तत्त्वां किमाचक्ष्महे ॥६१॥

नीरादिति। हे अम्भोरुह, तव निर्मलतो नीराज्जनिरुत्पत्तिः। न च मधुध्वैवास्य गतार्थत्वात्पौनरुक्त्यापत्तिः। तत्पदस्य योगरूढत्वेऽपि 'रूढिर्योगमपहरति' इति न्यायेन शीघ्रोपस्थित्या च पद्ममात्रपरत्वात्। किंच तव मधुरता जहत्स्वार्थया 'गङ्गायां घोषः' इत्यादिवत्त्वन्मधुमाधुरीत्यर्थः। रामेति। यावत्स्त्रीगुणा या रमणी तस्या यन्मुखं निरुक्तलक्षणया तदेकदेशोऽधरस्तत्स्पर्धिनी स्वाधिक्येन तद्विरोधिनीत्यर्थः। यद्वा मधुरता 'मुखरुचा सौधाधरीमाधुरी' इत्यादिवत्सुन्दरतैव। तथा च नोक्तलक्षणाद्व्यायाम। एवं किंच। तवेति वास इत्यत्र परिमल इत्यत्र च ज्ञेयम्। गीर्वाणा देवाः। तत्तस्मादहो इत्याश्चर्ये। त्वं महाकविगिरां सर्वस्वं सर्वत्रोपमानयोग्यत्वात्तथा कामस्य सर्वस्वम्। 'अरविन्दमशोकं च' इति प्रथमबाणत्वात्। असि। अथ त्वं चेन्मधुपे भृङ्गे, पक्षे मद्यपे नीचे, प्रीतिमुरीकरोषि स्वीकरोषि तत्तर्हि त्वां किमाचक्ष्महे कथयामः। न किमपि वदाम इत्यर्थः। 'यस्य' इति पाठे यस्य तव नीरादित्यादि योजयित्वा हे अम्भोरुह, तत्त्वमहो महाकवीत्यादि योज्यम्। तस्मादिदं नैव कार्यमिति तात्पर्यम्। अत्र मूढो नायकः। श्लेषप्रतीपावलंकारौ॥

किंच बलवच्छत्रूपेक्षा नैव कार्येति गजान्योक्त्या व्यनक्ति--

लीलामुकुलितनयनं किं सुखशयनं समातनुषे।
परिणामविषमहरिणा करिनायक वर्धते वैरम् ॥६२॥

विदुषां वदनाद्वाचः सहसा यान्ति नो बहिः।
याताश्चेन्न पराञ्चन्ति द्विरदानां रदा इव ॥६३॥

अथ स एव पण्डितवरः प्रकृततटस्थं प्रति किमिति त्वमस्य मयि विश्वासं जनयसि, यद्यप्ययं वदान्यस्तथाप्यपरीक्षक इति विश्वासभावाभावयोरप्यस्माकं तु फलं पामरैस्तुल्यमेव भवतीति कल्पद्रुमान्योक्त्या व्यनक्ति--

औदार्यं भुवनत्रयेऽपि विदितं संभूतिरम्भोनिधे-
र्वासो नन्दनकानने परिमलो गीर्वाणचेतोहरः।

**एवं दातृगुरोर्गुणाः सुरतरो सर्वेऽपि लोकोत्तराः**
**स्यादर्थिप्रवरार्थितार्पणविधावेको विवेको यदि ॥६४॥**

औदार्यमिति। सभूतिरुत्पत्ति। परिमल इति। इद पद्य यद्यपि 'नीरान्निर्मलत' ( १।६१। ) इति प्राक्तनपद्ये पठितत्वाद्विशेषणपदविशिष्टमपि पुनरुक्तमेव, तथापि वक्तुरुभयत्राप्येकत्वान्नीत्युपदेशावेशवशेन पौर्वापर्यानुसधानहीनतया तथा प्रयुक्तमपि नैव दोषावहम्। प्रत्युत रसनिर्भरपोषकत्वाद्गुणावहमेव। एवमेव नैषधीयचरितेऽपि कीर्तिमण्डलपद प्राथमिकपद्यद्वयेऽपि पठित प्रसिद्धमेव। अत्र विशेषणचतुष्टयेऽपि सुरतरोरिति सबन्धनीयम्। तेनास्य क्रमात्कीर्तिसमुत्पत्तिनिवसतिगुणसपत्तीना लोकोत्तरत्व द्योत्यते। एव निरुक्तप्रकारेण दातृगुरोर्वदान्यमान्यस्येर्थ। सुरेति। कल्पद्रुमस्येति यावत्। अत्र-'दातृगुरो सुरतरो' इति सबुध्यन्तपाठ तवेत्यध्याहार्यम्। सर्वे सपूर्णा अपि गुणास्तदा लोकोत्तरा एव। अचिन्त्या एव स्युरिति शेष। तदा केत्यत्राह—स्यादित्यादिचरमचरणेन। यदि। अर्थीति। अर्थिना सामान्यतो यावद्याचकाना प्रवरमु कुट यदर्थित तस्य योऽर्पणविधिर्दानविधिस्तस्मिन्विषय इत्यर्थः। एक केवलो विवेको योग्यतादिविचारः स्यादित्यन्वय। तस्मादनेन विवेक एव सपादनीय इत्याशयः। इहोदात्तो नायक। दानवीरो रस। विनोक्तिरलकारः॥

एव वदति सति पण्डितवरे तदैश्वर्यमसहमान कश्चन पिशुन प्रकृत राजकुमार अमज्ञयैवाय त्वद्गुरुरपि त्वामविवेकिनमेव मनुत इति किमस्मिन्कृतघ्ने विफलभक्तिसपादनेनेति सूचयन्बहिरेव बहुतरविनयवानकस्मान्मृगयाविहारायागच्छत व्याध भयेद विश्वासेन मृगादिहिंसनमनुचितमेव क्रियत इति कचिदुदासीन प्रति जल्पन्सन्तमालक्ष्य तेनैव पण्डितवरेण प्रस्तुतात्कुरार्यकिरातान्योक्त्या निन्द्यते-

**एको विश्वसता हराम्यपघृणः प्राणानहं प्राणिना-**
**मित्येवं परिचिन्त्य मा स्म मनसि व्याधानुतापं कृथाः।**
**भूपाना भवनेषु किंच विमलक्षेत्रेषु गूढाशयाः**
**साधूनामरयो वसन्ति कति न त्वत्तुल्यकक्षा नराः ॥६५॥**

एक इति। रे व्याध, त्वमहमपघृणः। 'कारुण्यं करुणा घृणा' इत्यमरादपगता घृणा दया यस्मात्स तथा। निर्दय इत्यर्थः। अत एव विश्वसता हरिततृणादिदर्शनेन सदयत्वादिविश्वासशालिनामित्यर्थः। एतादृशां प्राणिनां मृगादिजीवानां प्राणानेक एव हरामीत्येवमात्ममनसि स्वचेतसि परिचिन्त्यानुताप सनाप स। कृथा। नैव कुर्विति संबन्धः। 'मा स्म' इत्यपि पाठः। तत्र हेतु -भूपानामित्युत्तरार्धेन। गूढेति। अप्रकटपरघातकरणाद्यभिप्राया इति यावत्। एतादृशाः। तत्रापि माधूनामरयः। अत एव—त्वत्तुल्येति। त्वया सह तुल्या समाना कृता गूढहिंसनादिकल्पना येषां ते तथा। एतादृशो नराः। 'खलाः' इत्यपि पाठः। कति न वसन्ति। अपि तु सहस्रशो वसन्तीति योजना। तस्माद्भवता निरुक्तपिशुनानामस्मास्थ्येनानुमत्यायोक्तानुतापस्त्याज्य एवेति भावः। अत्र शठो नायकः। करुणो रसः। अलंकारस्तूक्त एव॥

ततोऽतिक्षुब्धचेतस्तया स एव पण्डितः पृथ्वीमप्युपालभते—

**विश्वास्य मधुरवचनैः साधून्ये वञ्चयन्ति नम्रतमाः।**
**तानपि दधासि मातः काश्यपि यातस्तवापि च विवेकः॥६६॥**

**अन्या जगद्धितमयी मनसः प्रवृत्ति-**
**रन्यैव कापि रचना वचनावलीनाम्।**
**लोकोत्तरा च कृतिराकृतिरार्तहृद्या**
**विद्यावतां सकलमेव गिरां दवीयः॥ ६७॥**

अन्येति। निरुपमगुणत्वेन विलक्षणैवेत्यर्थः। कृतिराचारः। दवीयः। 'दवीयश्च दविष्ठं च सुदूरे' इत्यमरादतिदूरमेवास्तीत्यन्वयः। इह ललितो नायकः। अद्भुतो रसः। भेदकातिशयोक्तिरलंकारः॥

अथ स एव नरवरकुमारस्तमेव स्वगुरुं प्रति निजापराधक्षमापनप्रार्थनं व्यनक्ति—

**आपद्गतः खलु महाशयचक्रवर्ती**
**विस्तारयत्यकृतपूर्वमुदारभावम्।**
**कालागुरुर्दहनमध्यगतः समन्ता-**
**ल्लोकोत्तरं परिमलं प्रकटीकरोति॥ ६८॥**

आपद्गत इति। महाशयेति। महान्निशालो गम्भीर आशयोऽभिप्रायो येषां तेषां बुद्धिशालिनां पुंसां यश्चक्रवर्ती। सार्वभौम इत्यर्थः। स कश्चिद्धीरवरस्तावदापद्गतोऽपि विपद्ग्रस्तोऽपि एव चात्र सावधानत्वानर्हत्वं ध्वन्यते। अकृतेति। पूर्वं कृतं प्राक्केनचिदनुष्ठित इति कृतपूर्वः। तादृशो न भवतीत्यकृतपूर्वस्तम्। विचित्रमिति यावत्। एतादृशमुदारभावमौदार्यमित्यर्थः। विस्तारयति खल्विति योजना। युक्तमेवार्थं दृष्टान्तेन द्रढयति—कालेति। कृष्णागुरुसंज्ञकप्रसिद्धश्चन्दनविशेष दहनेति। दहनो वह्निस्तस्य मध्यस्तं गतोऽपि परमदह्यमानोऽपीत्यर्थः। समन्तात्परितः, नत्वेकदेशे। तत्रापि लोकोत्तरमलौकिकं न तु सामान्यं परिमलं सुगन्धं प्रकटीकरोतीति संबन्धः। तस्मान्मदपराधाः श्रीमद्भिः स्वाभाव्यादेव क्षम्यन्ते, तथाप्यधीरतयाहं व्यर्थमेव प्रार्थयामीत्याशयः। अत्र धीरो नायकः। निरुक्त एव रसः। दृष्टान्तोऽलंकारः॥

न चास्त्वेवमस्माकं स्वभावाच्छमस्तथापि त्वयि राजप्रकृतित्वेन 'यौवनं धनसंपत्तिः प्रभुत्वमविवेकिता। एकैकमप्यनर्थाय किमु यत्र चतुष्टयम्॥' इति, 'यत्र श्रीर्यौवनं वापि शारदा वापि तिष्ठति। तत्र सर्वान्धता नित्यं मूर्खत्वमपि जायते॥' इति च बृहन्नारदीये कपिलाचार्यवचनाच्च मद्वचसा 'हितं मनोहारि च दुर्लभं वचः' इति न्यायेन कोपश्चेदनुचितमेवेति वाच्यम्। गुरूणां भवादृशामस्मदेकार्टितार्थं कोपघटितत्वेन परुषवाक्यस्यापि काश्मीरकटुत्ववत्तोषकपोषकत्वादित्याशयेन महता कोपमपि सामान्यतो रम्यत्वेनैव वर्णयति—

विश्वाभिरामगुणगौरवगुम्फितानां
रोषोऽपि निर्मलधियां रमणीय एव।
लोकंपृणैः परिमलैः परिपूरितस्य
काश्मीरजस्य कटुतापि नितान्तरम्या॥६९॥

लीलालुण्ठितशारदापुरमहासंपद्भराणां पुरो
विद्यासद्मविनिर्गलत्कणमुषो वल्गन्ति चेत्पामराः।
अद्य श्वः फणिनां शकुन्तशिशवो दन्तावलानां शशाः
सिंहानां च सुखेन मूर्धसु पदं धास्यन्ति शालावृकाः॥७०॥

गीर्भिर्गुरूणां परुषाक्षराभि-

गीर्भिस्तिरस्कृता यान्ति नरा महत्त्वम् ।
अलब्धशाणोत्कषणा नृपाणां
न जातु मौलौ मणयो वसन्ति ॥ ७१ ॥

गीर्भिरिति । नरा गुरूणां परुषाक्षराभिर्न तु तादृगर्थाभिर्गीर्भिस्तिरस्कृताः सन्तो महत्त्वं यान्तीति सम्बन्धः । तमेवार्थमर्थान्तरन्यासेन द्रढयति —अलब्धेति । न लब्धं शाणोत्कषणं यैस्ते तथा एतादृशा मणयो जातु कदाचिदपि नृपाणां मौलौ मुकुटे नैव वसन्तीत्यन्वयः । तस्मान्न मम रोषलेशोऽपीत्याशयः । तस्मादुक्ततिरस्करणमिष्टमेवेति भावः । इह वीरो नायकः । शान्तो रसः । अर्थान्तरन्यासोऽलङ्कारः ॥

एवं नरवरकुमारेण सम्प्रार्थितोऽपि प्रकृतः पण्डितः प्राक्तनं 'एको विश्वसताम्' (१।६५।) इति पद्यावतरणे समुपक्षिप्तं कंचित्पिशुनं पुनरपि निन्दंस्तं स्वशिष्यं प्रति दुर्जनाः सर्वथा त्याज्या एव, नो चेद्राजकानुवर्तिनीनां सर्वप्रजानामपि तथात्वापाताद्राष्ट्रभङ्गप्रसङ्ग इति द्योतयति-

वहति विषधरान्पटीरजन्मा
शिरसि मषीपटलं दधाति दीपः ।
विधुरपि भजतेतरां कलङ्कं
पिशुनजनं च बिभर्ति यतिर्नृपेन्द्रः ॥ ७२ ॥
सत्पूरुषः खलु हिताचरणैरमन्द-
मानन्दयत्यखिललोकमनुक्त एव ।
आराधितः कथय केन करैरुदारै-
रिन्दुर्विकासयति कैरविणीकुलानि ॥ ७३ ॥

सदिति । पुरुष एव पूरुषः । सच्चासौ पूरुषश्चेति तथा । साधुजन इत्यर्थः । अनुक्त एवाप्रार्थित एव सन्नित्यर्थः । अखिलेति । सर्वजगदपीति यावत् हितेति । तत्कल्याणव्यापारैरित्यर्थः । ननु तात्कालिकसुखाभासजनकैः स्रक्चन्दनवनितासङ्गसङ्घटनैरिति यावत् । अमन्दं प्रचुरं यथा स्यात्तथा । आनन्दयति खलुसतोषयत्येवेत्यन्वयः । तदेवार्थान्तरन्यासेन द्रढयति-आराधित इत्युत्तरार्धेन । इन्दुः केनाराधितः सन्कैरविणीकुलान्युदारैः करैर्विकासयतीति कथयेति योजना ।

एतेनानेन व्याप्तिरिति प्रत्युक्तम्। एत्र च निरुक्तप्रयोजनार्थं सद्भिर्दुर्जना अपि रञ्जनीया एवेति भावः। नो चेत्स्वभावभङ्गप्रसङ्ग इति तत्त्वम्। अत्र ललितो नागरः। करुणो रसः। उक्त एवालंकारः॥

परार्थव्यासङ्गादुपजहदथ स्वार्थपरता-
मभेदैकत्वं यो वहति गुणभूतेषु सततम्।
स्वभावाद्यस्यान्तः स्फुरति ललितो दातृमहिमा
समर्थो यो नित्यं स जयतितरां कोऽपि पुरुषः॥ ७४॥

परार्थेति। स कोऽप्यनिर्वाच्यगुणगणः पुरुषो जयतितरामित्यन्वयः। तरपापरिच्छिन्नसर्वोत्कर्षवर्तनव्युदासः। कोऽसावित्यत आह—परार्थेत्यादिविशेषणत्रयेण। यः परार्थेति। परस्मा अयं परार्थः। स चासौ व्यासङ्गो व्यापारश्चेति तथा तस्मादित्यर्थः। स्वार्थेति। स्वपुरुषार्थपरायणतामपीति यावत्। उपजहदुपजहाति त्यजतीति तथैतादृशः सन्। अभेदेति। न विद्यते भेदो जलतरङ्गादिन्यायेन द्वैतावभासो यस्मिंस्तच्च तदेकत्वं चेति तथा। विशुद्धैकामिति यावत्। एतेनौपचारिकप्रेम प्रत्यस्तम्। सततं सर्वदा। इदं च देहलीदीपन्यायेनोभयत्राप्यन्वेति। तेन प्रेम्णः क्षणिकत्वं गुणानां च तथात्वं प्रत्युक्तम्। गुणेति।'युक्ते क्ष्मादावृते भूतम्'इत्यमराद्भूतपदस्य ऋतशब्दितसत्यार्थकत्वेनावधारणफलकत्वाद्गुणा एवेति तथा। तेषु मूर्तिमच्छान्त्यादिगुणेष्वित्यर्थः। सुजनेष्विति यावत्। वहति स्वीकरोतीति संबन्धः। पुनः कः स स्वभावादिति। यस्यान्तः स्वभावादेव न तु लोकप्रार्थनादिहेतोरित्यर्थः। अत एव ललितो निष्कामतया सुन्दरो दातृमहिमा वदान्यमाहात्म्यमित्यर्थः। 'उदात्त-' इति पाठे तु कर्मधारयः। स्फुरतीति योजना। एतेन निरातिशयौदार्यं सूचितम्। पुनः कः सः। समर्थ इति। यो नित्यं न तु क्षणमात्रं समर्थो दक्षः। अस्तीति शेषः। एतेनाचिन्त्यशक्तिमत्त्वं व्यज्यते। अत्र विशेषणत्रयेऽपि यथेच्छं हेतुहेतुमद्भावः। इह प्रथमे परमगुणज्ञत्वं द्वितीये वदान्यमान्यत्वं तृतीये तद्रक्षणक्षमत्वं च क्रमाद्ध्वनितम्। तस्माद्भवादृशा महता 'अयं निजः परो वेति गणना लघुचेतसाम्। उदारचरितानां तु वसुधैव कुटुम्बकम्॥' इति वचनान्निरवच्छिन्नमेव सर्वानुग्रहशीलत्वमित्याकूतम्। इदं नायकायोक्तमेव॥

अथ स तद्गुरुस्तथ्यमेव सर्वानुग्राहकत्व स्वाभाव्यात्मना तथापि भवादृशे राजकुमारे सत्सङ्ग एव तु सङ्गवर्जनपूर्वकं विधेय इत्यन्वयव्यतिरेकाभ्यामर्थान्तरन्यासाभ्यामुपदिशन्न्यासौ प्रतिबोधयति—वंशभव इत्यादिद्वाभ्याम् ।

वंशभवो गुणवानपि सङ्गविशेषेण पूज्यते पुरुषः ।
न हि तुम्बीफलविकलो वीणादण्डः प्रयाति महिमानम् ।७१

वंशेति । वंशः कुलम्, पक्षे वेणुः । गुणः शमादिः, पक्षे तन्त्री । इह सर्वोऽप्यो नायकः । शिष्टं स्पष्टमेव ॥

* अमितगुणोऽपि पदार्थो दोषेणैकेन निन्दितो भवति ।
निखिलरसायनमहितो गन्धेनोग्रेण लशुन इव ॥७२॥

* उपकारमेव तनुते विपद्गतः सद्गुणो नितराम् ।
मूर्च्छां गतो मृतो वा निदर्शनं पारदोऽत्र रसः ॥७३॥

* वनान्ते खेलन्ती शशकशिशुमालोक्य चकिता
भुजप्रान्तं भर्तुर्भजति भयहर्तुः सपदि या ।
अहो सेयं सीता दशवदननीता हलरदैः
परीता रक्षोभिः श्रयति विवशा कामपि दशाम् ७४

पुरो गीर्वाणानां निजभुजबलाहोपुरुषिका-
महो कारंकारं पुरभिदि शरं संमुखयतः ।
स्मरस्य स्वर्बालानयनसुममालार्चनपदं
वपुः सद्यो भालानलभसितजालास्पदमभूत् ॥७५॥

पुर इति । गीर्वाणानां देवानां पुरोऽग्रे । अहो इत्याश्चर्ये । निजेति । निजस्यात्मनो यद्भुजबलं बाहुबलं तेन आहोपुरुषिका 'आहोपुरुषिका दर्पाद्या स्यात्सम्भावनात्मनि' इत्यमराद्रवेण वन्यमन्यतां तामित्यर्थः । कारंकारं भयं कृत्वेति यावत् । पुरेति । साभिप्रायमिदम् । त्रिपुरदर्पमर्पयोत्यर्थः । एवं च येन परमदुर्जयत्रिपुरासुरः सपरिवारपुरोऽपि क्षणाद्भस्मीकृतस्तत्र त्रिलोचने भगवति केव गणना पञ्चशरमशकस्येति द्योत्यते । शरं बाणं संमुखयतोऽभिमुखं सन्धानं कुर्वत इत्यर्थः । एतादृशस्य स्मरस्य वपुः शरीरम् ।

स्वरिति। स्व स्वर्गभवन्तियन्त्यो या वाला अप्सरसस्तासां यानि नयनानि नेत्राणि तान्येव सुमानि पुष्पं सुतरां वा मा लक्ष्मीर्येषु तानि 'लक्ष्मी पद्मालया' इत्यमरात्कमलानि तेषां या मालेव माला। कटाक्षपरम्परेति यावत्। तया यदर्चनं पूजनं तस्य पदं स्थानं पात्रमित्यर्थः। एतादृशमपि सत्। सद्यस्तत्का-लमेव, नतु विलम्बेन। भालेति। भालस्य धूर्जटिललाटस्य सम्बन्धी योऽनलः पावकस्तेन यद्भ्रमितजालं 'भूतिर्भसितभस्मनि' इत्यमराद्भस्मपुञ्जस्तस्यास्पदं स्थानमभूदिति सरलमेव। यस्माज्जगज्जयिनोऽपि मन्मथस्य क्षणाद्भस्मीभू-तत्वं सुप्रसिद्धमेव, तदा कैव कथाधुनिकवीराणाम्। अतो नैवैश्वर्यादिमात्रेण धर्मविधानात्पापपरिजिहीर्षाशया तत्सपादको दुःसङ्गः कालत्रयेऽपि विधेय इत्याशयः। इह साहनी नायकः। पूर्वार्धे वीरस्तृतीयपादे शृङ्गारश्चतुर्थपादे करुणः सर्वैर्मिलित्वा शान्तश्च रसः। परिकरोऽलङ्कारः॥

एवं तदुक्तिं श्रुत्वा तत्रत्य एव प्रागुक्तः पिशुनस्तावद्विदूषक इव तद्वाक्यस्य अहहेति शब्दपूर्वकं हस्ताभिनयेनोपहासमेवाकरोत्। अतः क्रुद्धः स पण्डितवरः पुनः स्फुटमेव मर्कटदृष्टान्तेन तन्निन्दनं ध्वनयति—

युक्तं सभायां खलु मर्कटानां
शाखास्तरूणां मृदुलासनानि।
सुभाषितं चीत्कृतिरातिथेयी
दन्तैर्नखाग्रैश्च विपाटितानि॥८०॥

युक्तमिति। मर्कटानां सभायां तरूणां शाखा मृदुलासनानि। तथा चीत्कृतिश्चीत्कारः सुभाषितम्। तथा दन्तैर्नखाग्रैश्च विपाटितानि परस्पर विदारणान्यातिथेयी अतिथौ साधुस्तया। तत्पूजेत्यर्थः। इति युक्तं खल्विति योजना॥

एवं श्रीगुरोः क्षोभमवलोक्य तदुपशमनार्थमतिनम्रीभूय 'भो भो श्रीनदाचार्य, क्षम्यतामस्मदादीनामपराधवृन्दम्, तथा मया यत्किंचित्पृ-च्छ्यते प्रश्नपद्येन प्रपञ्चरहस्य तन्निर्णयोपदिश्यतां च' इति राजकुमारः सप्रार्थनं पृच्छति—

किं तीर्थं हरिपादपद्मभजनं किं रत्नमच्छा मतिः

किं शास्त्रं श्रवणेन यस्य गलति द्वैतान्धकारोदयः।
किं मित्रं सततोपकाररसिकं तत्त्वावबोधः सखे
कः शत्रुर्वद खेददानकुशलो दुर्वासनानां चयः ॥८१॥

किं तीर्थमिति। तदुत्तरयति—हरीति। एवमेव प्रश्नोत्तरपरम्परेयं पर्यायचतुष्टयेऽप्यग्रे बोध्या। अच्छेति। स्वच्छेत्यर्थः। विपश्चित्स्वभावशाली राजतनूजो भेदवादाभिनिवेशात्तत्प्रतिपादकशास्त्रेषु किमुत्तमं शास्त्रं यस्य श्रवणे तात्पर्यनिर्णये जाते सति द्वैतं तिष्ठत्येव, येन विषयसुखं मोक्षसुखं चास्माकं स्यादित्याशयेन पृच्छति—किं शास्त्रमित्यादिना। गुरुः स्वचातुरीमाहात्म्येन तदभिमतविशेषणं एवाद्वैतित्वेन तृतीयान्तविवक्षया समाधत्ते—श्रवणेनेति। द्वैतेति। द्वैतरूपध्वान्ताभ्युदय इति यावत्। अत्र यच्छब्दानुरोधेन पूर्वं तच्छास्त्रं किमिति प्रश्नेऽपि तच्छब्दाध्याहारो बोध्यः। सततेति। निरन्तरोपकारतत्परमित्यर्थः। मित्रम्। विशेषणादेवात्र क्लीबत्वम्। पुलिङ्गपाठस्तु किं शास्त्रमित्यादिप्राक्तनप्रश्ने, तथा कः शत्रुरित्याद्युत्तरप्रश्नेऽपि विशिष्टस्यैव पृष्टत्वेन तत्स्वारस्यात्मध्यवर्तिनः किं मित्रमित्यादिप्रश्नस्यापि सदृशन्यायेन तथैव वक्तुमुचितत्वादसततोपकाररसिकस्य तत्त्वावबोधस्यादृष्टत्वेन तद्व्युदासार्थं निरुक्तविशेषणानपेक्षणाच्चानुचित एव। हे सखे इति सम्बोधनं तु हरिपादेत्यादिसमाधानपञ्चकेऽपि ज्ञेयम्। तेन सौहार्दातिशयध्वननान्निरुक्तोक्तेरप्यविश्वसनीयतमत्वं व्यज्यते। तत्त्वेति। अद्वयात्मसाक्षात्कारेति यावत्। अत्रैव सखे इति संबोधनप्रयोगादेतदपेक्षयान्यद्रहस्यं नैवेति द्योत्यते। एवं वदेति पदमपि प्रश्नपञ्चकेऽपि। तथा तदनुरोधात्त्वपदाध्याहारश्च कर्तव्य एव। खेदेति। दुःखदानदक्ष इत्यर्थः। दुर्वासनानामन्तःकरणादिनिष्ठदुष्टसंस्काराणां चयः संघ एवेति योज्यम्। 'सखा' इति प्रथमान्तपाठे 'सचयः' इति पाठश्च कः सखेत्यध्याहारापत्तेः क्रमभङ्गापत्तेः प्रश्नसरणित्यागापत्तेः सखिमित्रयोरेवान्तराविशेषेऽपि हितकारित्वविशेषणे पौनरुक्त्यापत्तेः खेददानकुशल इत्यत्रापि क्रमभङ्गभिया प्रश्नान्तरत्वाद्यापत्तेरन्यथा दुर्वासनेत्यादावनन्वितत्वापत्तेश्च संबुद्ध्यन्तपाठेऽपि क्रमभङ्गदोषस्य तु प्रथमे चरण एवाविशिष्टपृष्टत्वेन प्राकरणिकत्वादनुचित एव। तथा 'सम्' पदेन गुणाधानात्प्रत्युत पदचतुष्टयसमा-

सघटकत्वाच्च तस्य मधुररसे प्रकृतेऽनुपयुक्तत्वाच्च तथैव सोऽपीति ज्ञेयं धीरैः। अत्र किं शास्त्रमित्यादिविशिष्टप्रश्नत्रयेऽपि क्रमाद्धर्ममीमांसाया सुग्रीवादिवद्यत्किंचित्कालावच्छेदेनोपकारपरायणमित्रस्य, शिशुपालादिलक्षणस्य रौद्रदानाकुलस्य शत्रोरपि व्युदासः सूचितः। तस्माद्धरिपादपद्मभजनादिचतुष्टयं पुमर्थचतुष्टयेच्छुना संपादनीयमेव तथा दुर्वासनाध्वमनं चेति तत्त्वम्। इह बुभुत्सुर्नायकः। शान्तो रसः। उक्तिप्रत्युक्तिरलंकारः॥

निष्णातोऽपि च वेदान्ते साधुत्वं नैति दुर्जनः।
चिरं जलनिधौ मग्नो मैनाक इव मार्दवम्॥८२॥
नैर्गुण्यमेव साधीयो धिगस्तु गुणगौरवम्।
शाखिनोऽन्ये विराजन्ते खण्ड्यन्ते चन्दनद्रुमाः॥८३॥
परोपसर्पणानन्तचिन्तानलशिखाशतैः।
अचुम्बितान्तःकरणा साधु जीवन्ति पादपाः॥८४॥

अथैवं सद्गुरोर्निर्वेदमालक्ष्य स राजपुत्रः श्रीगुरुं प्रति 'भो भो भगवन्, अनेन तटस्थेन 'निष्णातोऽपि च' (१।८२) इत्यादि पद्यं यत्त्वया प्रत्युक्तं तत्त्वामुद्दिश्य नैवोक्तम्, किं तु यन्मया पूर्वपद्ये 'किं शास्त्रम्' (१।८१) इत्यादिना भेदवादाभिनिवेशेन पृष्टम्, तत्त्वादृशाचार्यचरणान्तेवासिनो मेऽनुचितमेवेत्यभिप्राय मदुद्देशेनैवोक्तम्, अतो नैतदपराधबुद्ध्या मनः खेदनीयमिति प्रार्थयस्तेन सज्जनसामान्यस्तुत्या ध्वनिपद्धतितः स्तौति—

शून्येऽपि च गुणवत्तामातन्वानः स्वकीयगुणजालैः।
विवराणि मुद्रयन्द्रागूर्णायुरिव सज्जनो जयति॥८५॥

शून्येऽपि चेति। सज्जनः ऊर्णायुरिव लूताकीट इव शून्येऽपि च शून्यहृदये पुंस्यपि विषये। पक्षे गृहाकाशदेशेऽपीत्यर्थः। स्वकीयेति। नैजवाग्मित्वादिसद्धर्मसंघैः। पक्षे सूत्रपटलैरित्यर्थः। गुणवत्ता पक्षद्वयेऽपि यथाक्रमं निरवद्यगुणवैशिष्ट्यमिति यावत्। आतन्वानः आतनोतीति तथा विस्तारयन्। अत एव विवराणि दोषस्थानानि परच्छिद्राणि। पक्षे गवाक्षादिगृहरन्ध्राणि मुद्रयन्मुद्रितानि कुर्वन्। आच्छादयन्नित्यर्थः। पक्षे सजातचक्राणि विदधत्सन्। द्राक् शीघ्रं जयतीति योजना। तस्मात्त्वत्पाटवमेवेदं यदनेन

दूषितमपि मा भूषयसीति भावः । अत्र ललितो नायकः । शिष्यरतिभावो रसः । उपमालङ्कारः ॥

ततः पुनरपि खलमेव निन्दन्ध्वनिस्तमेव नरपतिसुतः स गुरुः स्तौति—खल इत्यादित्रिभिः ।

खलः सज्जनकार्पासरक्षणैकहुताशनः ।
परदुःखाग्निशमनो मारुतः केन वर्ण्यताम् ॥८६॥

परगुह्यगुप्तिनिपुणं गुणमयमखिलैः समीरितं नितराम् ।
ललिताम्बरमिव सज्जनमाखव इव दूषयन्ति खलाः ॥८७॥

यश सौरभ्यलशुनः शान्तिशैत्यहुताशनः ।
कारुण्यकुसुमाकाशः खलः सज्जनदुःखलः ॥८८॥

एवं स राजकुमारः खलनिन्दामाकर्ण्य ततः परमक्षुब्धः श्रीगुरुमालक्ष्य 'गुरुः प्रणतिभिः' इति न्यायादुक्तनिन्दाप्रधानपद्यत्रयेणातितरस्वस्तुतिलः प्रचुरप्रमुदितः सन्स्त वृक्षान्योक्त्या प्रणमति—

धत्ते भरं कुसुमपत्रफलावलीनां
घर्मव्यथां वहति शीतभवां रुजं च ।
यो देहमर्पयति चान्यसुखस्य हेतो-
स्तस्मै वदान्यगुरवे तरवे नमोऽस्तु ॥८९॥

धत्ते भरमिति । यो वक्ष्यमाणगुणस्तरुवरः । कुसुमेति भरं भारम् । अन्यसुखस्य हेतोरितरानन्दकरणार्थमित्यर्थः । न हि तेन तस्य किंचिद्धितम् । धत्ते धरति । तथा घर्मव्यथामातपपीडां शीतभवां हिमसंभवां रुजं पीडां च वहति । इदं वृष्ट्यादेरप्युपलक्षणम् । किंबहुना, देहमप्यर्पयति । इन्धनार्थिभ्य इत्यर्थः । तस्मायित्यादि यथाश्रुतमेव योज्यम् । वदान्येति । अनेनेतादृशो दातृशिरोमणिस्त्वमेव, अहं तु वदान्याभास एवेति भावः । अत्र चरणत्रयेण क्रमेण विद्यासंभारसंभरणश्रमशालित्वं खलपीडासहिष्णुत्वं प्राणप्रायब्रह्मविद्याप्रदातृत्वं चेति वदान्यगुरुत्वे हेतवो द्योतिताः । नमनेन च तत एव सर्ववन्द्यत्वं व्यज्यते । इहोदात्तो नायकः । दानवीरो भक्तिश्च रसः । काव्यलिङ्गमलङ्कारः ॥

अथाय निरस्तापराधी तटस्थादिरपि मूढजनः श्रीमद्भिः करुणयानुग्राह्य एवेति श्रीगुरु प्रार्थयन्राजकुमारस्तेन प्रबोध्यत—

हालाहलं खलु पिपासति कौतुकेन
कालानलं परिचुचुम्बिषति प्रकामम्।
व्यालाधिपं च यतते परिरब्धुमद्धा
यो दुर्जनं वशयितुं तनुते मनीषाम् ॥९०॥

हालाहलमिति। यो दुर्जनं वशयितुं मनीषाम्। 'बुद्धिर्मनीषा' इत्यमरात्तद्गतिविशेषरूपामिच्छामित्यर्थः। तनुते विस्तारयति। स हालाहलम्, न तु जलम्। तत्रापि कौतुकेन, न तु मृतीच्छया। खलु निश्चितम्। विषमेवे- [illegible] वह्निम्, न तु सामान्याग्निम्। तत्रापि प्रकाममत्युत्कटम्, न तु यत्किंचित्। तत्रापि परिचुचुम्बिषति भूयोऽपि समन्तादपि वक्त्रसंयुक्तीकर्तुमिच्छति। न केवलमेतावदेव, किं तु—व्यालेति। सर्पराजं तक्षकमपि। तत्राप्यद्धा साक्षादव्यवहितम्। तत्रापि परिरब्धुम्, न तु द्रष्टुम्। यतते प्रयत्नं करोतीत्यन्वयः। तस्मादिदं दुर्घटमेवेति भावः। इह मूर्खो नायकः। औदासीन्यध्वनितः शान्तो रसः। दृष्टान्तविशेषोऽलंकारः॥

दीनानामिह परिहाय शुष्कसस्या-
न्यौदार्यं प्रकटयतो महीधरेषु।
औन्नत्यं विपुलमवाप्य दुर्मदस्य
ज्ञातोऽयं जलधर तावको विवेकः ॥९१॥

* गिरयो गुरवस्तेभ्योऽप्युर्वी गुर्वी ततोऽपि जगदण्डम्।
तस्मादप्यतिगुरवः प्रलयेऽप्यचला महात्मानः ॥९२॥

व्योमनि वासं कुरुते चित्रं निर्माति यत्नतः सलिले।
स्नपयति पवनं सलिलैर्यः क्षुद्रे चरति सत्कारम् ॥९३॥

* हारं वक्षसि केनापि दत्तमज्ञेन मर्कटः।
लेढि जिघ्रति संक्षिप्य करोत्युन्नतमासनम् ॥९४॥

* मलिनेऽपि रागपूर्णां विकसितवदनामनल्पजल्पेऽपि।

**त्वयि चपलेऽपि च सरसां भ्रमर कथं वा सरोजिनीं त्यजसि ॥९५**

अथ तत्रैवावस्थित प्रागुक्त कश्चित्तटस्थ स्वमनसि यदयं पण्डिततर-स्तावदिम राजतनूज स्वसुन्दरीत्यागानौचित्योपदेशान्यथानुपपत्त्या प्रागुक्तरीत्या चतुर्वर्गोपदिष्टुरपि नास्मान्प्रति करुणालेशेनपत्पदमप्यनुगृह्णात्यतो विड्मामिति परमविषण्णस्तेनानुकम्पया किमिति त्व खिन्नोऽसीति पृष्टस्तदपलाप्यानुता-पवशात्सत्त्वप्रधानचेता सन् धनलोभलक्षण स्वापराधमेव तत्र हेतु द्योत-यन्सामान्यत स्वार्थं परार्थं वा धनार्थित्वावच्छेदेन मुखमालिन्यव्याप्ति स्प-ष्टयति—

**स्वार्थं धनानि धनिकात्प्रतिगृह्णतोऽपि**
**स्वास्यं भजेन्मलिनतां किमिदं विचित्रम् ।**
**गृह्णन्परार्थमपि वारिनिधेः पयोऽपि**
**मेघोऽयमेति सकलोऽपि च कालिमानम् ॥९६॥**

स्वार्थमिति । प्रतिगृह्णतोऽपि, न तु स्तेयादिना हरत । स्वास्य स्वस्य प्रतिग्रहीतुरस्मदादेरास्य वदनमित्यर्थ । शोभन मुख वा । 'यदास्यम्' इति पाठे तु यत्पदमिदमा संबध्यते । ननु कुतो नेद विचित्र प्रत्युत धनलाभजन्य-सतोषात्प्रमादिनैव भाव्यमित्याशङ्क्य कैमुतिकन्यायेन समादधत्तत्रार्थान्तरन्या-समुपन्यस्यति—गृह्णन्नित्युत्तरार्धेन । सकलोऽपि सपूर्णोऽपि न त्वेकदेश एव । अय बुद्धिस्थः सर्वलोकप्रत्यक्षो वा । मेघ परार्थमपि, न तु स्वार्थम् । वारि-निधे. सकाशात्पयोऽपि जलमपि । तेनास्य तुच्छत्व व्यज्यते । गृह्णन्कालिमान कार्ण्यमेतीति योजना । तस्माद्धिग्धनयाचनमित्याकूतम् । अत्रोदासीनो नायक । शान्तो रस. । काव्यार्थापत्त्यनुप्राणितोऽर्थान्तरन्यासोऽलकारः ॥

**जनकः स्थाणुविशेषो जातिः काष्ठ भुजगमैः सङ्गः ।**
**स्वगुणैरेव पटीरज यातोऽसि तथापि महिमानम् ॥ ९७ ॥**

ततस्त तटस्थ स एव पण्डितः प्रश्नोत्तरसरण्या सजातानुतापत्वेन राजतनूजापेक्षयापि मोक्षसाम्राज्यलक्ष्मीप्रासादे द्रुतमारुरुक्षुमालक्ष्य सर्वोपदे-शरहस्यं विषयसुखोपलक्षित यावद्दृष्टत्यागमेव सक्षिपति—

**कस्मै हन्त फलाय सज्जन गुणग्रामार्जने सज्जसि**

स्वात्मोपस्करणाय चेन्मम वचः पथ्यं समाकर्णय ।
ये भावा हृदयं हरन्ति नितरां शोभाभरैः संभृताः
स्तैरेवास्य कलेः कलेवरपुषो दैनंदिनं वर्तनम् ॥ ९८ ॥

कस्मा इति । हे सज्जन, त्वं हन्त सखेद कस्मै फलाय । गुणेति । वाग्मित्वादिचारुधर्मसंघसंपादन इत्यर्थः । सज्जसि । ससक्तो भवसीति यावत् । स्वान्तःकरणादि सत्संस्कारसंपादनार्थं सद्गुणगणसंग्रहे किमिति न यतितव्यमित्याशङ्क्य समाधातुमवधानप्रदानं वोधयति—स्वात्मेति । स्वात्मनो निजान्तःकरणादेरुपस्करणं संस्करणं तस्मा इत्यर्थः । किमिति त्वद्वच समाकर्णनीयमित्यतस्तत्र हेतुगर्भं विशेषणम्—पथ्यमिति । परिणामहितमित्यर्थः । एवं चास्य प्रथममप्रियत्वेऽप्यनादरणानर्हत्वं ध्वन्यते । 'सम्'पदेनावधानश्रद्धाविक्यापेक्षा व्यज्यते । किं तदित्यत्राह—य इत्युत्तरार्धेन । ये भावा अनल्पपदार्था । नितरां शोभाभरैः संभृता परिपुष्टा । अत एव हृदयं मनः । नितरामिति काकाक्षिगोलकन्यायेनोभयत्रान्वेति । हरन्ति वशीकुर्वन्ति । तैरेव प्रागुक्तरम्यानल्पपदार्थैरेव न त्वन्यैः । अस्य साक्षिप्रत्यक्षस्य । कलेवरेति । कलेवरं शरीरं पुष्णातीति तथैतादृशस्य कलेः कलियुगाख्यस्य । वर्तमानकालस्थेत्यर्थः दैनंदिनं दिने दिने भवं दैनंदिनम् । प्रतिदिवससंभवमिति यावत् । वर्तनम् । जीवननिर्वहणमित्यर्थः । अस्तीति शेषः । कलियुगेऽस्मिन्प्रायशो रम्यपदार्थानामेव प्रतिदिवसं भूरिक्षयो भवतीत्यतो धिग्देहादिरम्यतासंपादकगुणगणासादनमिति हृदयम् । अत्र सज्जनेत्युपदेशार्हत्वं व्यज्यते । इहोदासीनो नायकः । शान्तो रसः । आक्षेपोऽलंकारः ॥

* धूमायिता दश दिशो दलितारविन्दा
देहं दहन्ति दहना इव गन्धवाहाः ।
त्वामन्तरेण मृदुतालकलाम्र मञ्जु-
गुञ्जन्मधुव्रतमधो किल कोकिलस्य ॥ ९९ ॥

भिन्ना महागिरिशिला करजाग्रजाग्र-
दुद्दामशौर्यनिकरैः करटिभ्रमेण ।
दैवे पराचि करिणामरिणा तथापि

कुत्रापि नापि खलु हा पिशितस्य लेशः ॥ १९९ ॥

भिन्नेति। करिणा गजानामरिणा शत्रुणा सिंहेन । अत एव यद्यपि दैवेऽदृष्टे पराचि पराङ्मुखे सति करटिभ्रमेण। 'काकेभगण्डौ करटौ' इत्यमरात्, 'करट कारिगण्डे स्यात्कुसुम्भे निन्द्यजीवने । काके वाद्ये दुर्दुरूढे नवश्राद्धे' इति हैमाच्च करटशब्दितगण्डपिण्डद्वन्द्वशाली करटी । गजेन्द्र इति यावत् । तद्भ्रमेण स्थूलत्वनीलत्वादिसाधर्म्याद्गजेन्द्रभ्रान्त्येत्यर्थ । करजेति । करजा नखास्तेषां यान्यग्राणि तेषां ये जाग्रन्तोऽनन्द्रा अत एव उद्दामा उत्कटा एतादृशा ये शौर्यनिकरा वीर्यसमूहास्तैरित्यर्थ । महागिरिशिला भिन्ना विदारिताः । हा इति खेदे ।। तथापि कुत्रापि पिशितस्य । 'पिशित तरस मासम्' इत्यमरान्मांसस्येत्यर्थ । लेशोऽपि स्वल्पांशोऽपि नापि खलु नैव लब्ध इति योजना । तस्माद्दुरदृष्टपुष्टमिथ्यादृष्टिवशादेव मयैते शत्रव पराजिता सर्वेऽपि । वास्तविकविजयस्तु तेभ्य सकाशात्तेषामेवावास्तविकत्वात्क्वचिदपि देशे काले नैव लब्ध । अत सर्वं परित्यज्यान्त शत्रुविजयार्थमेवाह यतिष्या-मात्याकूतम् । इह निर्विण्णो नायक । वीरानुप्राणित शान्तो रसः । उक्त एवालंकार ॥

* गर्जितमाकर्ण्य मनागङ्के मातुर्निशार्धजातोऽपि ।
हरिशिशुरुत्पतितु द्रागङ्गान्याकुञ्च्य लीयतेऽतिभृशम् ॥ १०१ ॥

इति पण्डितराजश्रीजगन्नाथविरचिते भामिनीविलासे
अन्योक्त्युल्लास प्रथमः ।

---

॥ श्रीः ॥

महाकविश्रीभारविप्रणीतं

# किरातार्जुनीयम् ।

## मल्लिनाथकृतया घण्टापथव्याख्यया समेतम् ।

### प्रथमः सर्गः ।



अर्धाङ्गीकृतदाम्पत्यमपि गाढानुरागि यत् ।
पितृभ्यां जगतस्तस्मै कस्मैचिन्महसे नमः ॥
आलम्बे जगदालम्बं हेरम्बचरणाम्बुजम् ।
शुष्यन्ति यद्रजःस्पर्शात्सद्यः प्रत्यूहवार्धयः ॥
तद्दिव्यमव्ययं धाम सारस्वतमुपास्महे ।
यत्प्रसादात्प्रलीयन्ते मोहान्धतमसश्छटाः ॥
वाणीं काणभुजीमजीगणदवाशासीच्च वैयासकी-
मन्तस्तन्त्रमरंस्त पन्नगगवीगुम्फेषु चाजागरीत् ।
वाचामाचकलद्रहस्यमखिलं यश्चाक्षपादस्फुरां
लोकेऽभूद्यदुपज्ञमेव विदुषां सौजन्यजन्यं यशः ॥
मल्लिनाथकविः सोऽयं मन्दात्मानुजिघृक्षया ।
तत्किरातार्जुनीयाख्यं काव्यं व्याख्यातुमिच्छति ॥
नारिकेलफलसम्मितं वचो भारवेः सपदि तद्विभज्यते ।
स्वादयन्तु रसगर्भनिर्भरं सारमस्य रसिका यथेप्सितम् ॥
नानानिबन्धविषमैः कुपदैर्नितान्तं साशङ्कचङ्क्रमणखिन्नधियामशङ्कम् ।
गन्तुं प्रवेशमिह भारविकाव्यबन्धे घण्टापथं कमपि नूतनमातनिष्ये ॥
इहान्वयमुखेनैव सर्वं व्याख्यायते मया ।

नामूलं लिख्यते किंचिन्नानपेक्षितमुच्यते ॥

अथ तत्रभवान्भारविनामा कविः 'काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये। सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे ॥' इत्याद्यालंकारिकवचनप्रामाण्यात्काव्यस्यानेकश्रेयःसाधनताम्, 'काव्यालापांश्च वर्जयेत्' इति निषेधशास्त्रस्यासत्काव्यविषयतां च पश्यन्किरातार्जुनीयाख्यं महाकाव्यं चिकीर्षुश्चिकीर्षितार्थाविघ्नपरिसमाप्तिसंप्रदायाविच्छेदलक्षणफलसाधनत्वात् 'आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम्' इत्याद्याशीर्वादाद्यन्यतमस्य प्रबन्धमुखलक्षणत्वाच्च वनेचरस्य युधिष्ठिरप्राप्तिरूपं वस्तु निर्दिशन्कथामुपक्षिपति—

**श्रियः कुरूणामधिपस्य पालनीं प्रजासु वृत्तिं यमयुङ्क्त वेदितुम्।**
**स वर्णिलिङ्गी विदितः समाययौ युधिष्ठिरं द्वैतवने वनेचरः ॥१॥**

श्रिय इति ॥ आदितः श्रीशब्दप्रयोगाद्वर्णगणादिशुद्धिर्नात्रातीवोपयुज्यते। तदुक्तम् 'देवतावाचकाः शब्दा ये च भद्रादिवाचकाः। ते सर्वे नैव निन्द्याः स्युर्लिपितो गणतोऽपि वा ॥' इति। कुरूणां निवासाः कुरवो जनपदाः। 'तस्य निवासः' इत्यण्प्रत्ययः। जनपदे लुप्। तेषामधिपस्य दुर्योधनस्य संबन्धिनीम्। शेषे षष्ठी। श्रियो राजलक्ष्म्याः। 'कर्तृकर्मणोः कृति' इति कर्मणि षष्ठी। पाल्यतेऽनयेति पालनी ताम्। प्रतिष्ठापिकामित्यर्थः। प्रजारागस्य संपद इति भावः। 'करणाधिकरणयोश्च' इति करणे ल्युट्। 'टिड्ढाणञ्–' इत्यादिना ङीप्। प्रजासु जनेषु विषये। 'प्रजा स्यात्संततौ जने' इत्यमरः। वृत्तिं व्यवहारं वेदितुं ज्ञातुं यं वनेचरमयुङ्क्त नियुक्तवान्। वर्णः प्रशस्तिरस्यास्तीति वर्णी ब्रह्मचारी। तदुक्तम्—'स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम्। संकल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च। एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः। विपरीतं ब्रह्मचर्यमेतदेवाष्टलक्षणम् ॥' एतदष्टविधमैथुनाभावः प्रशस्तिः। 'वर्णाद्ब्रह्मचारिणि' इतीनिप्रत्ययः। तस्य लिङ्गं चिह्नमस्यास्तीति वर्णिलिङ्गी। ब्रह्मचारिवेषवानित्यर्थः। स नियुक्तः। वने चरतीति वनेचरः किरातः। 'भेदाः किरातशबरपुलिन्दा म्लेच्छजातयः' इत्यमरः। 'चरेष्टः' इति टप्रत्ययः। 'तत्पुरुषे कृति बहुलम्' इत्यलुक्। विदितं वेदनमस्यास्तीति विदितः परवृत्तान्तज्ञानवानित्यर्थः। 'अर्शआदिभ्योऽच्' इत्यच्प्रत्ययः।

अथवा कर्तरि कर्मधर्मोपचाराद्विदितवृत्तान्तो विदित इत्युच्यते । उभयत्रापि 'पाता गाव', 'भुक्ता ब्राह्मणाः', 'विभक्ता भ्रातरः' इत्यादिवत्साधुत्वम् । न तु कर्तरि क्तः । सकर्मकेभ्यस्तस्य विधानाभावात् । अतएव भाष्यकारः— 'अकारो मत्वर्थीय । विभक्तमेषामस्तीति विभक्ता पीतमेषामस्तीति पीताः, इति सर्वत्र । अथवोत्तरपदलोपोऽत्र द्रष्टव्य । विभक्तधना विभक्ता, पीतोदका पीता इति । अत्र लोपशब्दार्थमाह कैयट — गम्यार्थप्रयोग एव लोपोऽभिमत 'विभक्ता भ्रातर' इत्यत्र च धनस्य यद्विभक्तत्वं तद्भ्रातृषूपचरितम् । पीतोदका गाव ' 'इत्यत्राप्युदकस्य पीतत्व गोष्वारोप्यते' इति तद्वदत्रापि वृत्तिगतं विदित्व वेदितरि वनेचर उपचर्यते । एतेन 'वनाय पीतप्रतिबद्धवत्सा' 'पातु न प्रथम व्यवस्यति जल युष्मास्वपीतेषु' एवमादयो व्याख्याता । यथा अथवा विदितो विदितवान् । सकर्मकादप्यविवक्षिते कर्मणि क्त । यथा 'आशित कर्ता' इत्यादौ यथाह —धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात् । प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया ' इति । द्वैतवने द्वैताख्ये तपोवने । यद्वा द्वे इते गते यस्मात्तद्वीतम् । द्वीतमेव द्वैतम् । तच्च तद्वन च तस्मिन् । शोकमोहादिवर्जित इत्यर्थ । युधि रणे स्थिर युधिष्ठिर धर्मराजम् । 'हलदन्तात्सप्तम्याः सञ्ज्ञायाम्' इत्यलुक् । 'गवियुधिभ्या स्थिर ' इति षत्वम् । समाययौ सम्प्राप्तः । अत्र 'वने वनेचर इति द्वयो स्वरव्यञ्जनसमुदाययोरेकदेशावृत्त्या वृत्त्यनुप्रासो नामालकार । अस्मिन्सर्गे वशस्थवृत्तम् । तल्लक्षणम्—'जतौ तु वशस्थमुदीरित जरौ' इति ॥

**कृतप्रणामस्य महीं महीभुजे जितां सपत्नेन निवेदयिष्यतः ।**
**न विव्यथे तस्य मनो नहि प्रियं प्रवक्तुमिच्छन्ति मृषा हितैषिण.२**

कृतप्रणामस्येति ॥ कृतप्रणामस्यतत्कालोचितत्वात्कृतनमस्कारस्य सपत्नेन रिपुणा दुर्योधनेन । 'रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृद ' इत्यमर । जिता स्वायत्तीकृता मही महीभुजे युधिष्ठिराय । क्रियाग्रहणात्सम्प्रदानत्वम् । निवेदयिष्यतो ज्ञापयिष्यत 'लृट सद्वा' इति शतृप्रत्यय । तस्य वनेचरस्य मनो न विव्यथे । कथमीदृगप्रिय राज्ञे विज्ञापयामीति मनसि न चचालेत्यर्थ । 'व्यथ भयचलनयो ' इति धातोर्लिट् । उक्तमर्थमर्थान्तरन्यासेन समर्थयते— न हीति । हि यस्मात् । हितमिच्छन्तीति हितैषिण स्वामिहितार्थिन पुरुषा

मृषा मिथ्याभूत प्रिय प्रवक्तु नेच्छन्ति । अन्यथा कार्यविघातकृतया स्वामिद्रोहिणः स्युरिति भावः । 'अमौढ्यममान्यममृषाभाषित्वमभ्यूहकत्व चेति चारगुणा ' इति नीतिवाक्यामृते ॥

तथापि प्रियार्हे राज्ञि कटुनिष्ठुरोक्तिर्न युक्तेत्याशङ्क्य स्वाम्यनुज्ञया न दुष्यतीत्याशयेनाह—

**द्विषां विघाताय विधातुमिच्छतो रहस्यनुज्ञामधिगम्य भूभृतः[1] ।**
**स सौष्ठवौदार्यविशेषशालिनीं विनिश्चितार्थामिति वाचमाददे ॥३**

द्विषामिति ॥ रहस्येकान्ते स वनेचरो द्विषा शत्रूणाम् । कर्मणि षष्ठी । विघाताय । निहन्तुमित्यर्थः । 'तुमर्थाच्च भाववचनात्' इति चतुर्थी 'भाववचनाश्च' इति तुमर्थे घञ्प्रत्यय । अत्र तादर्थ्यमपि न दोष । तथापि प्रयोगवैचित्रीविशेषस्याप्यलकारत्वादेव व्याचक्षते । विधातु व्यापार कर्तुमिच्छत । 'समानकर्तृकेषु तुमुन्' द्विषो विहन्तुमुद्युक्तस्येत्यर्थ । अतएव भूभृतो युधिष्ठिरस्यानुज्ञामधिगम्य सुष्ठु भाव सौष्ठव शब्दसामर्थ्यम् । सुष्ठुशब्दादव्ययादुद्गात्रादित्वादञ्प्रत्यय । उदारस्य भाव औदार्यमर्थसंपत्ति । तयोर्द्वन्द्वः सौष्ठवौदार्ये । अत्रौदार्यशब्दस्याजाद्यदन्तत्वेऽपि 'लक्षणहेत्वो· क्रियाया ' इत्यत्राल्पस्वरस्यापि हेतुशब्दस्यपूर्वनिपातमकुर्वता सूत्रकृतैव पूर्वनिपातस्यानित्यत्वज्ञापनान्न पूर्वनिपात । उक्त च काशिकायाम्—'अयमेव लक्षणहेत्वोरिति निर्देश पूर्वनिपातव्यभिचारलिङ्गम्' इति । त एव विशेष । तयोर्वा विशेष । तेन शालते शोभते इति सौष्ठवौदार्यविशेषशालिनी ताम् । ताच्छील्ये णिनि । विनिश्चितार्थां विशेषतः प्रमाणतो निर्णीतार्थामिति वक्ष्यमाणरूपा वाचमाददे स्वीकृतवान । उवाचेत्यर्थ

प्रथम तावदप्रियनिवेदकमात्मान प्रत्यक्षोभ याचते—

**क्रियासु युक्तैर्नृप चारचक्षुषो न वञ्चनीयाः प्रभवोऽनुजीविभिः ।**
**अतोऽर्हसि क्षन्तुमसाधु साधु वा हितं मनोहारि च दुर्लभं वचः ॥**

क्रियास्वीति ॥ हे नृप, क्रियासु कृत्यवस्तुषु युक्तैर्नियुक्तैरनुजीविभिर्भृत्ये । चारादिभिरित्यर्थ । चरन्तीति चरा । पचाद्यच । त एव चारा ।

1 'भूभुज ' इति पाठ .

चरे पचाद्यजन्तात्प्रज्ञादित्वादण्प्रत्ययः। त एव चक्षुर्येषां ते चारचक्षुषः। 'स्वपरमण्डले कार्याकार्यावलोकने चाराश्चक्षूंषि क्षितिपतीनाम्' इति नीतिवाक्यामृते। प्रभवो निग्रहानुग्रहसमर्थाः स्वामिनो न वञ्चनीया न प्रतारणीयाः। सत्यमेव वक्तव्या इत्यर्थः। चारापचारे चक्षुरपचारवद्व्रज्ञा पदे पदे निपात इति भावः। अतोऽप्रतार्यत्वाद्धेतोः। असाध्वप्रियं साधु प्रियं वा। मदुक्तमिति शेषः। क्षन्तुं सोढुमर्हसि। कुतः। हितं पथ्यं च मनोहारि प्रियं च वचो दुर्लभम्। अतो मद्वचोऽपि हितत्वादप्रियमपि क्षन्तव्यमित्यर्थः॥

तर्हि तूष्णींभाव एव वरमित्याशङ्क्याह—

**स किंसखा साधु न शास्ति योऽधिपं**
**हितान्न यः संशृणुते स किंप्रभुः।**
**सदानुकूलेषु हि कुर्वते रतिं**
**नृपेष्वमात्येषु च सर्वसंपदः॥५॥**

स इति॥ यः सखामात्यादिरधिपं स्वामिनं साधु हितं न शास्ति नोपदिशति। 'ब्रुविशासि—' इत्यादिना शासेर्दुहादिपाठाद्द्विकर्मकत्वम्। स हितानुपदेष्टा। कुत्सितः सखा किंसखा। दुर्मन्त्रीत्यर्थः 'किमः क्षेपे' इति समासान्तप्रतिषेधः। तथा यः प्रभुर्निग्रहानुग्रहसमर्थः स्वामी हितादाप्तजनाद्धितोपदेष्टुः सकाशात्। 'आख्यातोपयोगे' इत्यपादानत्वात्पञ्चमी। न संशृणुते न शृणोति। हितमिति शेषः। 'समो गम्यृच्छि—' इत्यादिना संपूर्वाच्छृणोतेरकर्मकादात्मनेपदम्। अकर्मकत्वं वैवक्षिकम्। स हितमश्रोता प्रभुः किंप्रभुः कुत्सितस्वामी। पूर्ववत्समासः। सर्वथा सचिवेन वक्तव्यं श्रोतव्यं स्वामिना। एवं च राजमन्त्रिणोरैकमत्यं स्यादित्यर्थः। ऐकमत्यस्य फलमाह—सदेति। हि यस्मान्नृपेषु स्वामिषु। अमा सह भवा अमात्यास्तेषु च। 'अव्ययात्त्यप्' अनुकूलेषु परस्परानुरक्तेषु सत्सु सर्वसंपदः सदा रतिमनुरागं कुर्वते कुर्वन्ति। न जातु जहतीत्यर्थः। अतो मया वक्तव्यं त्वया च श्रोतव्यमिति भावः। अत्रैव राजमन्त्रिणोर्हितानुपदेशतदश्रवणनिन्दासामर्थ्यसिद्धैरैकमत्यलक्षणकारणस्य निर्दिष्टस्य सर्वसंपत्तिसिद्धिरूपकार्येण समर्थनात्कार्येण कारणसमर्थनरूपोऽर्थान्तरन्यासोऽलंकारः। तदुक्तम्—'सामान्यविशेषकार्यकारणभावाभ्यां नि-

र्दिष्टप्रकृतसमर्थनमर्थान्तरन्यास ' इति ॥

सम्प्रति स्वाहंकारं परिहरति—

**निसर्गदुर्बोधमबोधविक्लवाः क्व भूपतीनां चरितं क्व जन्तवः ।**
**तवानुभावोऽयमवेदि यन्मया निगूढतत्त्वं नयवर्त्म विद्विषाम् ॥६॥**

निसर्गेति ॥ निसर्गदुर्बोधं स्वभावदुर्ग्रहम् । 'ईषद्दु – इत्यादिना खल्प्रत्यय । भूपतीनां चरितं क्व । अबोधविक्लवा अज्ञानोपहता जन्तव । मादृशा पामरजना इत्यर्थ । क्व । नोभय संघटत इत्यर्थ । तथापि निगूढतत्त्वं संवृतयाथार्थ्यं विद्विषां नयवर्त्म षाड्गुण्यप्रयोग 'संधिविग्रहयानानि संस्थाप्यासनमेव च । द्वैधीभावश्च विज्ञेया षड्गुणा नीतिवेदिनाम् ।' इत्यादिरूपो यन्मयावेदि । ज्ञातमिति यावत् । विदे कर्मणि लुङ् । अयम् । इदं वेदनमित्यर्थ । विधेयप्राधान्यात्पुल्लिङ्गनिर्देश । तवानुभाव सामर्थ्यम् । अनुगतो भावोऽनुभाव इति घजन्तेन प्रादिसमास । न तूपसृष्टाद्घञ्प्रत्यय । 'श्रिणी भुवोऽनुपसर्गे' इत्यनुपसर्गाद्भवतेर्धातोर्घञ्विधानात् । अतएव काशिकायाम्— कथं प्रभावो राज्ञा प्रकृष्टो भाव इति प्रादिसमासः' इति । दोषपरिहारो सम्यग्ज्ञात्वैव विज्ञापयामि । न तु वृथा कर्णकठोरं प्रलपामीत्याशय ॥

संप्रति यद्वक्तव्यं तदाह—

**विशङ्कमानो भवतः पराभवं नृपासनस्थोऽपि वनाधिवासिनः ।**
**दुरोदरच्छद्मजितां समीहते नयेन जेतुं जगतीं सुयोधनः ॥७॥**

विशङ्कमान इति ॥ सुखेन युध्यते सुयोधनः । 'भाषायां शासियुधिदृशिधृषिमृषिभ्यो युज्वाच्य' । नृपासनस्थ सिंहासनस्थोऽपि वनमधिवसतीति वनाधिवासिनो वनस्थात् । राज्यभ्रष्टादपीत्यर्थ । भवतस्त्वत्त पराभवं पराजयं विशङ्कमान उत्प्रेक्षमाण सन् । दुष्टमुदरमस्येति दुरोदरं द्यूतम् । पृषोदरादित्वात्साधु 'दुरोदरो द्यूतकारे पणे द्यूते दुरोदरम्' इत्यमरः । तस्य च्छद्मना मिषेण जितां लब्धां दुर्नयार्जितां जगतीं महीम् । 'जगती विष्टपे मह्यां वास्तुच्छन्दोविशेषयोः' इति वैजयन्ती । नयेन नीत्या जेतुं वशीकर्तुं समीहते व्याप्रियते । न तूदास्त इत्यर्थ । बलवत्स्वामिकमविशुद्धागमं च वस्तु भुञ्जानस्य कुतो मनस समाधिरिति भाव । अत्र दुरोदरच्छद्मजिताम्

इति विशेषणद्वारेण पदार्थस्य चतुर्थपादार्थं प्रति हेतुत्वेनोपन्यासादद्वितीयं का-व्यलिङ्गमलंकारः। तदुक्तम्—'हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम्' इति॥

'नयेन जेतुं जगतीं समीहते' इत्युक्तम्। तत्प्रकारमाह—

**तथापि जिह्मः स भवज्जिगीषया तनोति शुभ्रं गुणसंपदा यशः।**
**समुन्नयन्भूतिमनार्यसंगमाद्वरं विरोधोऽपि समं महात्मभिः॥८॥**

तथापीति॥ तथापि साशङ्कोऽपि। जिह्मो वक्रः। वञ्चक इति यावत्। स दुर्योधनो भवज्जिगीषया। युष्मानाक्रमितुमिच्छयेत्यर्थः। 'हेतौ' इति तृतीया। गुणसंपदा दानदाक्षिण्यादिगुणगरिम्णा करणेन। शुभ्रं यशस्त-नोति। स खलो गुणलोभनीयां त्वत्संपदमात्मसात्कर्तुं त्वत्तोऽपि गुणवत्तामा-त्मनः प्रकटयतीत्यर्थः। नन्वेवं गुणिनः सतोऽपि सज्जनविरोधो महानस्त्यस्य दोष इत्याशङ्क्य सोऽपि तत्संसर्गालाभे नीचसंगमाद्वरमुत्कर्षावहत्वादित्याह—समिति। तथाहि। भूतिं समुन्नयन्नुत्कर्षमापादयन्। 'लटः शतृशानचौ' इत्यादिना शतृप्रत्ययः। पुनर्लड्ग्रहणसामर्थ्यात्प्रथमासामानाधिकरण्यम्। महात्मभिः समम्। सहेत्यर्थः। 'साकं सत्रा समं सह' इत्यमरः। अनार्यसं-गमाद्दुर्जनसंसर्गात्। 'पञ्चमी विभक्ते' इति पञ्चमी। विरोधोऽपि वरं मना-क्प्रियः 'देवाद्वृते वरः श्रेष्ठे त्रिषु क्लीबं मनाक्प्रिये' इत्यमरः। अत्र मैत्र्यपेक्ष-या मनाक्प्रियत्वं विरोधस्य 'भूतिं समुन्नयन्' इत्यस्य पूर्ववाक्यान्वये समाप्तस्य वाक्यार्थस्य पुनरादानात्समाप्तपुनरात्ताख्यानदोषापत्तिः। तदुक्तं काव्यप्रकाशे—'समाप्तपुनरादानात्समाप्तपुनरात्तकम्' इति। न च वाक्यान्तरमेतत् येनोक्त-दोषपरिहारः स्यात्। अर्थान्तरन्यासोऽलंकारः। स च भूतिसमुन्नयनस्य पदार्थविशेषणद्वारा विरोधवरत्वं प्रति हेतुत्वाभिधानरूपकाव्यलिङ्गानुप्राणित इति॥

ननु 'कातर्यं केवला नीतिः' इत्याशङ्क्य नीतियुक्तं पौरुषमस्येत्याह—

**कृतारिषड्वर्गजयेन मानवीमगम्यरूपां पदवीं प्रपित्सुना।**
**विभज्य नक्तंदिवमस्ततन्द्रिणा वितन्यते तेन नयेन पौरुषम्॥९॥**

कृतेति॥ षण्णां वर्गः षड्वर्गः। अरीणामन्तःशत्रूणां कामक्रोधादीनां

षड्वर्गोऽरिषड्वर्ग । शिवभागवतवत्समास । तस्य जयः कृतो येन तेन तथोक्तेन । विनीतेनेत्यर्थ । विनीताधिकारं प्रजापालनमिति भावः । अगम्य-रूपां पुरुषमात्रदुष्प्राप्याम् । मनोरिमां मानवीम् । मनूपदिष्टसदाचारस्वरूपां मित्यर्थ । पदवीं प्रजापालनपद्धतिं प्रपित्सुना प्रपत्तुमिच्छुना । प्रपद्यते सन्नन्तादुप्रत्यय । 'सनि मीमा-' इत्यादिनेसादेश । 'अत्र लोपोऽभ्यासस्य' इत्यभ्यासलोपः । अस्ता तन्द्रिरालस्यं यस्य तेनास्ततन्द्रिणा । अनलसेने-त्यर्थः । तदि संत्रो धातुः । तस्मात् 'वङ्क्यादयश्च' इत्यौणादिक क्रिन्प्र-त्यय । 'कृदिकारादक्तिनो वा ङीप् वक्तव्य' इति । 'वन्दीतरीतरीतन्द्रीति ङीपन्तोऽपि' इति क्षीरस्वामी । तथा रामायणे प्रयोग —'निस्तन्द्रिरप्रमत्तश्च स्वदोषपरदोषवित्' इति । तेन दुर्योधनेन । पुरुषस्य कर्म पौरुष पुरुषकार । उद्योग इति यावत् । युवादित्वादण्प्रत्यय । 'पौरुष पुरुषस्योक्ते भावे कर्मणि तेजसि' इति विश्व । नक्त च दिवा च नक्तदिवम् । अहोरात्रयोरित्यर्थ । 'अचतुर-'इत्यादिना सप्तम्यर्थवृत्त्योरव्यययोर्द्वन्द्वनिपातेऽचसमासान्त । विभ ज्यास्यां वेलायामिदं कर्मेति विभागं कृत्वा नयेन नीत्या वितन्यते विस्तार्यते ॥

सम्प्रति भृत्याद्यनुरागमाह—

**सखीनिव प्रीतियुजोऽनुजीविनः समानमानान्सुहृदश्च बन्धुभिः ।**
**स सनतं दर्शयते गतस्मयः कृताधिपत्यामिव साधु बन्धुताम् १०**

सखीनिवेति ॥ गतस्मयो निरहङ्कारोऽत एव स दुर्योधन सततमनारत साधु सम्यक् । अकपटमित्यर्थ । अनुजीविनो भृत्यान् । प्रीतियुज स्निग्धान्सखी-निवमित्राणीव । दर्शयते । लोकस्येति शेष । 'हेतुमति च' इति णिच् । 'णिचश्च' इत्यात्मनेपदम् । शोभन हृदय येषां तान्सुहृदो मित्राणि च । 'सुहृद्दुर्हृदौ मित्रामित्रयो' इति निपात । बन्धुभिर्भ्रात्रादिभि समानमाना-स्तुल्यसत्कारान्दर्शयते । बन्धूनां समूहो बन्धुता ताम् । 'ग्रामजनबन्धुसहाये-भ्यस्तल्' । कृतमाधिपत्य स्वाम्य यस्यास्तां कृताधिपत्यामिव दर्शयते । बन्धनिपतीनिव दर्शयतीत्यर्थ । यथा भृत्यादिषु सख्यादिबुद्धिर्जायते लोकस्य तथा तान्सभावयतीत्यर्थ । अनुजीव्यादीनाम् 'कर्तुरीप्सिततम कर्म' इति

कर्मत्वम् । पूर्वे त्वस्मिन्नेव पदान्वये वाक्यार्थमित्थं वर्णयन्ति—स राजानुजी-व्यादीन्सख्यादीनिव दर्शयते । सख्यादय इव ते तु तं पश्यन्ति । सख्याभिभावेन पश्यतस्तांस्तथा दर्शयते । स्वयमेव स्वच्छन्दानुवर्तितया स्वदर्शनं तेभ्यः प्रय-च्छतीत्यर्थः । अर्थात्त येप्सितकर्मत्वम् । अणि कर्तुरनुजीव्यादेः 'अभिवादिदृ-शोरात्मनेपदमुपसंख्यानम्' इति पाक्षिकं कर्मत्वम् । एवं चात्राण्यन्तकर्मणो राज्ञोण्य ते कर्तृत्वेऽपि 'आरोहयते हस्ती स्वयमेव' इत्यादिवदश्रूयमाणकर्मा-न्तरत्वाभावान्नाय णेरणादिसूत्रस्य विषय इति मत्वा 'णिचश्च' इत्यात्मनेपदं प्रतिपेदिरे । भाष्ये तु णेरणादिसूत्रविषयत्वमप्यस्योक्तम् । यथाह—'पश्यन्ति भृत्या राजानम्' 'दर्शयते भृत्यान्राजा' दर्शयते भृत्यै राजा' अत्रात्मनेपदं सिद्धं भवति' इति । अत्राह कैयटः—'ननु कर्मान्तरसद्भावादत्रात्मनेपदेन भाव्यम् । उच्यते—अस्मादेवोदाहरणाद्भाष्यकारस्यायमेवाभिप्राय ऊह्यते । अण्यन्तावस्थाया ये कर्तृकर्मणी तद्व्यतिरिक्तकर्मान्तरसद्भावादात्मनेपदं न भवति यथा 'स्थलमारोहयति मनुष्यान्' इति । इह त्वण्यन्तावस्थाया कर्तृणा भृत्यानां णौ कर्मत्वमिति भवत्येवात्मनेपदमिति ॥

न चाथ त्रिवर्गाश्रमाचतीत्याह—

**असक्तमाराधयतो यथायथं-**
**विभज्य भक्त्या समपक्षपातया ।**
**गुणानुरागादिव सख्यमीयिवा-**
**न्नवाधतेऽस्य त्रिगणः परस्परम् ॥११॥**

असक्तमिति ॥ यथायथं यथास्वं विभज्य । असंकीर्णरूपं विनिश्चित्येत्यर्थः । 'यथास्वे यथायथम्' इति निपातनाद्द्विर्भावो नपुंसकत्वं च । 'ह्रस्वो नपुंसके प्रातिपदिकस्य' ह्रस्वम् । पक्षे पातः पक्षपात आसक्तिविशेषः समस्तुल्यो यस्या तया समपक्षपातया । भक्त्यानुरागविशेषेण पूज्येष्वनुरागो भक्तिरित्युपदेशः । पूज्यश्चायं त्रिवर्ग इति । असक्तमनासक्तम् । अव्यसनितयेति यावत् । आराधयतः सेवमानस्यास्य दुर्योधनस्य त्रयाणां धर्मार्थकामानां गणस्त्रिगणस्त्रिवर्गः । 'त्रिवर्गो धर्मकामार्थैश्चतुर्वर्गः समोक्षकैः' इत्यमरः । गुणानुरागात्तदीयगुणेष्वनुरागात् । गुणवदाश्रयलोभादित्यर्थः ।

सख्य मैत्रीम् 'सख्युर्यः' इति यप्रत्ययः । ईयिवानुपगतवानित्युत्प्रेक्षा । 'उपेयिवाननाश्वाननूचानश्च' इति क्वसुप्रत्ययान्तो निपातः । 'नात्रोपसर्गस्तन्त्रम्' इदि काशिकाकार आह स्म । परस्परं न बाधते । समवर्तित्वादस्य धर्मार्थकामाः परस्परानुपमर्देन वर्धन्त इत्यर्थः । उक्तं च—'धर्मार्थकामाः सममेव सेव्या यो ह्येकसक्तः स जनो जघन्यः' इति ॥

अथ श्लोकत्रयेणोपायकौशलं दर्शयन्नादौ सामदाने दर्शयति—

**निरत्ययं साम न दानवर्जितं न भूरि दानं विरहय्य सत्क्रियाम् ।**
**प्रवर्तते तस्य विशेषशालिनी गुणानुरोधेन विना न सत्क्रिया १२॥**

निरत्ययमिति ॥ तस्य दुर्योधनस्य निरत्ययं निर्बाधम् । अमायिकमित्यर्थः । अन्यथा जनानां दुर्ग्रहत्वादिति भावः । साम सान्त्वम् । 'साम सान्त्वमुभे समे' इत्यमरः । दानवर्जितं न प्रवर्तते । अन्यथा लुब्धाद्यावर्जनस्य शुष्कप्रियैर्वाक्यैर्दुष्करत्वादिति भाव. । उक्तं च—'लुब्धमर्थेन गृह्णीयात्साधुमञ्जलिकर्मणा । मूर्खं छन्दानुरोधेन तत्त्वार्थेन च पण्डितम् ॥' इति । तथा भूरि प्रभूतम् । न तु कदाचित्स्वल्पमित्यर्थः । दानं धनत्यागः । सदित्यादरार्थेऽव्ययम् । 'आदरानादरयोः सदसती' इति निपातसंज्ञास्मरणात् । तस्य क्रिया सत्क्रिया विरहय्य विहाय । 'ल्यपि लघुपूर्वात्' इत्ययादेशो न प्रवर्तते । अनादरे दानवैफल्यादिति भावः । न चैव सर्वत्र, येनाविवेकित्व कोशहानिश्च स्यादित्याह—प्रेति । विशेषशालिन्यतिशययोगिनी सत्क्रियादरक्रिया गुणानुरोधेन गुणानुरागेण विना न प्रवर्तते । 'पृथग्विना-' इत्यादिना तृतीया । गुणिष्वेवादरो भूरिदानं चेति नोक्तदोषावकाश इत्यर्थः । अत्रोत्तरोत्तरस्य पूर्वपूर्वविशेषणतया स्थापनादेकावल्यलंकारः । तदुक्तं काव्यप्रकाशे-'स्थाप्यतेऽपोह्यते वापि यथापूर्वं परं परम् । विशेषणतया वस्तु यत्र सैकावली द्विधा ॥' इति ॥

अथ दण्डप्रकारमाह—

**वसूनि वाञ्छन्न वशी न मन्युना स्वधर्म इत्येव निवृत्तकारणः ।**

---

१ 'एष' इति पाठः

**गुरूपदिष्टेन रिपौ सुतेऽपि वा निहन्ति दण्डेन स धर्मविप्लवम् १३**

वसूनीति ॥ वशी दुर्योधनो वसूनि धनानि वाञ्छन्न । लोभान्नेत्यर्थः । 'वसु तोये धने मणौ' इति वैजयन्ती । निहन्तीति शेषः । तथा मन्युना क्रोधेन न च । 'मन्युर्दैन्ये क्रतौ क्रुधि' इत्यमर । 'धर्मशास्त्रानुसारेण क्रोधलोभविवर्जित.' इति स्मरणादित्यर्थ । किंतु निवृत्तकारणो निवृत्तलोभादिनिमित्त मन्स्वधर्म इत्येव । स्वस्य राज्ञ सतो ममायं धर्मो ममेदं कर्तव्यमित्यस्मादेव हेतोरित्यर्थः । 'अदण्ड्यान्दण्डयन्राजा दण्ड्यांश्चैवाप्यदण्डयन् । अयशो महदाप्नोति नरकं चैव गच्छति ॥' इति स्मरणादिति भाव । गुरूपदिष्टेन प्राड्विवाकोपदिष्टेन । 'धर्मशास्त्र पुरस्कृत्य प्राड्विवाकमते स्थित । समाहितमति पश्येद्व्यवहारानननुक्रमात् ॥' इति नारदस्मरणात् । दण्डेन दमेन । शिक्षयेत्यर्थ. । रिपौ सुतेऽपि वा । स्थितमिति शेष । एतेनास्य समदर्शित्वमुक्तम् । धर्मविप्लव धर्मव्यतिक्रमम् । अधर्ममिति यावत् । निहन्ति निवारयति । दुष्ट एवास्य शत्रु शिष्ट एव बन्धु । न तु सबन्धननिबन्ध पक्षपातोऽस्तीत्यर्थ ॥

संप्रति भेदकौशल दर्शयति—

**विधाय रक्षान्परित परेतरानशङ्किताकारमुपैति शङ्कितः ।**
**क्रियापवर्गेष्वनुजीविसात्कृताः कृतज्ञतामस्य वदन्ति संपदः १४**

विधायेति ॥ शङ्का संजातास्य शङ्कितोऽविश्वस्त सन्परित सर्वत्र स्वपरमण्डले परेतरानात्मीयान् । अवञ्चकानिति यावत् । यद्वा परानितरयन्ति भेदनात्ममात्कुर्वन्तीति परेतरान् । तत्करोतीति ण्यन्तात्कर्मण्यण्प्रत्यय । रक्षन्तीति रक्षान्रक्षकान । मन्त्रगुप्तिममर्थानित्यर्थ । 'नन्दिग्रहि—' इत्यादिना पचाद्यच् । विधाय कृत्वा । नियुज्येत्यर्थ । अशङ्किताकारमुपैति । स्वयमविश्वस्तोऽपि विश्वस्तवदेव व्यवहरन्परमुखेनैव परान्भिनत्तीत्यर्थ । न च तान्रक्षानुपेक्षते येन तेऽपि विकुर्वारन्नित्याह—क्रियेति । क्रियापवर्गेषु कर्मसमाप्तिष्वनुजीविसात्कृता भृत्याधीना कृता । अपरावर्तितया दत्ता इत्यर्थ । 'देये त्रा च' इति सातिप्रत्यय । संपदोऽस्य राज्ञः कृतज्ञतामुपकारित्व वदन्ति ।

१ 'विभज्य' इति पाठः

प्रीतिदानैरेवास्य कृतज्ञत्वं प्रकाश्यते, न तु वाङ्मात्रेणेत्यर्थः । कृतज्ञे राजन्यनुजीविनोऽनुरज्यन्तेऽनुरक्ताश्च तं रक्षन्तीति भावः ॥

अथोपायप्रयोगस्य फलवत्तां दर्शयति—

**अनारतं तेन पदेषु लम्भिता विभज्य सम्यग्विनियोगसत्क्रियाम् ।**
**फलन्त्युपायाः परिबृंहितायतीरुपेत्य संघर्षमिवार्थसंपदः ॥१५॥**

अनारतमिति ॥ तेन राज्ञा पदेषूपादेयवस्तुषु । 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः । सम्यगसंकीर्णमव्यस्तं च विभज्य विविच्य विनियोग एव सत्क्रियानुग्रहः । सत्कार इति यावत् । यामां तां लम्भिताः । स्थानेषु सम्यक्प्रयुक्ता इत्यर्थः । उपायाः सामादयः । सघर्षं परस्परस्पर्धयेवेत्युत्प्रेक्षा । परिबृंहितायतीः प्रचितोत्तरकालाः । स्थिरा इत्यर्थः । अर्थसंपदोऽनारतमजस्रं फलन्ति । प्रसुवत इत्यर्थः ॥

अर्थसंपदमेवाह—

**अनेकराजन्यरथाश्वसंकुलं तदीयमास्थाननिकेतनाजिरम् ।**
**नयत्ययुग्मच्छदगन्धिरार्द्रतां भृशं नृपोपायनदन्तिनां मदः ॥१६॥**

अनेकेति ॥ 'अयुग्मच्छदस्य सप्तपर्णपुष्पस्य गन्ध इव गन्धो यस्यासावयुग्मच्छदगन्धिः । 'सप्तम्युपमान—' इत्यादिना बहुव्रीहिरुत्तरपदलोपश्च । 'उपमानाच्च' इति समासान्त इकारः । नृपाणामुपायनान्युपहारभूता ये दन्तिनस्तेषां मदः । 'उपायनमुपग्राह्यमुपहारस्तथोपदा' इत्यमरः । राज्ञामपत्यानि पुमांसो राजन्याः क्षत्रियाः । 'राजश्वशुराद्यत्' इति यत्प्रत्ययः । राज्ञोऽपत्ये जातिग्रहणादनः । रथाश्चाश्वाश्च रथाश्वम् । सेनाङ्गत्वादेकवद्भावः । अनेकेषां राजन्यानां रथाश्वेन संकुलं व्याप्तं तदीयमास्थाननिकेतनाजिरं सभामण्डपाङ्गणं भृशमत्यर्थमार्द्रतां पङ्किलत्वं नयति । एतेन महासमृद्धिरस्योक्ता । अनेनोदात्तालङ्कारः । तथा चालङ्कारसूत्रम्—'समृद्धिमद्वस्तुवर्णनमुदात्तम्' इति ॥

सम्प्रति जनपदस्त्रेमकरत्वमाह—

**सुखेन लभ्या दधतः कृषीवलैरकृष्टपच्या इव सस्यसंपदः ।**
**वितन्वति क्षेममदेवमातृकाश्चिराय तस्मिन्कुरवश्चकासति ॥१७॥**

१ 'चकासते' इति पाठः.

सुखेनेति ॥ चिराय तस्मिन्दुर्योधने क्षेमं वितन्वति क्षेमंकरे सति । देवः पर्जन्य एव माता येषां ते देवमातृका वृष्ट्यम्बुजीविनो देशाः । ते न भवन्तीत्यदेवमातृका नदीमातृका इत्यर्थः । 'देशो नद्यम्बुवृष्ट्यम्बुसंपन्नव्रीहिपालितः । स्यान्नदीमातृको देवमातृकश्च यथाक्रमम् ॥' इत्यमरः । एतेनास्य कुल्यादिपूर्तप्रवर्तकत्वमुक्तम् । कुरूणां निवासाः कुरवो जनपदविशेषाः कृष्टेन पच्यन्त इति कृष्टपच्याः । 'राजसूय-' इत्यादिना कर्मकर्तरि क्यप्प्रत्ययान्तो निपातः । तद्विपरीता अकृष्टपच्या इव कृषिर्येषामस्तीति कृषीवलैः कर्षकैरित्यर्थः । 'रजःकृषि-' आदिना वलच्प्रत्ययः । 'वले' इति दीर्घः । सुखेनाक्लेशेन लभ्या लब्धुं शक्याः सस्यसंपदो दधतो धारयन्तः 'नाभ्यस्ताच्छतुः' इति नुमागमप्रतिषेधः । चकासति । सर्वोत्कर्षेण वर्तन्ते इत्यर्थः । 'अदभ्यस्तात्' इति भकारादेशः । 'जक्षित्यादयः षट्' इत्यभ्यस्तसंज्ञा । संपन्नजनपदत्वादसंतापकरत्वाच्च दु साध्योऽयमिति भावः ॥

नन्वेवं जनपदानुवर्तिनः कथमर्थलाभ इत्यत आह—

**उदारकीर्तेरुदयं दयावतः प्रशान्तबाधं दिशतोऽभिरक्षया ।**
**स्वयं प्रदुग्धेऽस्य गुणैरुपस्नुता वसूपमानस्य वसूनि मेदिनी १८**

उदारेति ॥ उदारकीर्तेर्महायशसः । 'उदारो दातृमहतोः' इत्यमरः । दयावतः परदुःखप्रहाणेच्छोः । अत एव प्रशान्तबाधं प्रशमितोपद्रवं यथा स्यात्तथेति क्रियाविशेषणम् । उदयविशेषणं वा । 'वा दान्तशान्त-' इत्यादिना शमिधातोर्ण्यन्तान्निष्ठान्तो निपातः । अभिरक्षया सर्वतस्त्राणेनोदयं वृद्धिं दिशतः संपादयतो वसूपमानस्य कुबेरोपमस्य । 'वसुर्मयूखाग्निधनाधिपेषु' इति विश्वः । अस्य दुर्योधनस्य गुणैर्दयादाक्षिण्यादिभिरुपस्नुता द्राविता मेदिनी वसूनि धनानि । 'वसु तोये धने मणौ' इति वैजयन्ती । स्वयं प्रदुग्धे । अक्लेशेन दुह्यते इत्यर्थः । दुहेः कर्मकर्तरि लट् । 'न दुहस्नुनमां यक्चिणौ' इति यक्प्रतिषेधः । यथा केनचिद्विदग्धेन नवप्रसूता रक्षिता च गौः स्वयं प्रदुग्धे तद्वदिति भावः । अलङ्कारस्तु—'विशेषणमात्रसाम्यादप्रस्तुतस्य गम्यत्वे समासोक्तिः' इति सर्वस्वकारः । अत्र प्रतीयमानया गवा सह प्रकृतायाः मेदिन्या भेदेऽभे-

२. 'उपास्कृता' इति पाठः

दलक्षणातिशयोक्तिरशाद्योग्यत्वेनोक्तिरिति मन्तव्यम् ॥

वीरभटानुकूल्यमाह—

**महौजसो मानधना धनार्चिता धनुर्भृतः संयति लब्धकीर्तयः ।**
**नसंहतास्तस्य नभिन्नवृत्तयः प्रियाणि वाञ्छन्त्यसुभिः समीहितुम् ॥**

महौजस इति ॥ महौजसो महाबलाः । अन्यथा दुर्बलानामनुपकारित्वादिति भावः । मानः कुलशीलाद्यभिमान एव धनं येषां ते मानधनाः । अन्यथा कदाचिद्बलदर्पाद्विकुर्वीरन्निति भावः । धनार्चिता धनैरर्चिताः सत्कृताः । अन्यथा दारिद्र्यादेनं जह्युरिति भावः । संयति संग्रामे लब्धकीर्तयः । बहुयशस इत्यर्थः । अन्यथा कदाचिन्मुह्येयुरिति भावः । संहताः मिथः संगताः स्वार्थनिष्ठा न भवन्तीति नसंहताः । नञर्थस्य नशब्दस्य सुप्सुपेति समासः । भिन्नवृत्तयो मिथो विरोधात्स्वामिकार्यकरा न भवन्तीति नभिन्नवृत्तयः । पूर्ववत्समासः । अन्यथा स्वामिकार्यविघातकतया स्वामिद्रोहिणः स्युरित्युभयत्रापि तात्पर्यार्थः । धनुर्भृतो धानुष्काः । आयुधीयमात्रोपलक्षणमेतत् । प्राधान्याद्धनुर्ग्रहणम् । तस्य दुर्योधनस्यासुभिः प्राणैः प्रियाणि समीहितुं कर्तुं वाञ्छन्ति । आनृण्यार्थं प्राणान्दातुमिच्छन्तीत्यर्थः । अन्यथा दोषस्मरणादिति भावः । अत्र महौजसादिपदार्थानां प्राणदानकर्तव्यतां प्रति विशेषणगत्या हेतुत्वाभिधानात्काव्यलिङ्गमलङ्कारः । लक्षणं तूक्तम् । तथा साभिप्रायविशेषणत्वात्परिकरालङ्कार इति द्वयोस्तिलतण्डुलवद्विभक्ततया स्फुरणात्संसृष्टिः ॥

संप्रति स्वराष्ट्रवत्परराष्ट्रवृत्तान्तमपि वेत्तीत्याह—

**महीभृतां सच्चरितैश्चरैः क्रियाः स वेद निःशेषमशेषितक्रियः ।**
**महोदयैस्तस्य हितानुबन्धिभिः प्रतीयते धातुरिवेहितं फलैः ॥२०**

महीभृतामिति ॥ अशेषितक्रियः समापितकृत्यः । आफलोदयकर्मेत्यर्थः । स दुर्योधनः । सच्चरितैः शुद्धचरितैः । अवञ्चकैरित्यर्थः । चरन्तीति चराः तैश्चरैः प्रणिधिभिः । पचाद्यच् । महीभृतां क्रियाः प्रारम्भान्निःशेषं वेद वेत्ति । 'विदो लटो वा' इति णलादेशः । स्वरहस्यं तु न कश्चिद्वेदेत्याह—महोदये-

---

१ 'ननैदनुना.' इति पाठः.

रिति । वार्तुरिव तस्य दुर्योधनस्येहितमुद्योगः महोदयर्महाप्रद्धिभि । हितमनुबध्नन्त्यनुरुन्धन्तीति हितानुबन्धिभिः । स्वन्तारित्यर्थ । फले कार्यसिद्धिभि प्रतीयते ज्ञायते । फलानुमेयास्तस्य प्रारम्भा इत्यर्थ ॥

मित्रबलमाह—

**न तेन सज्यं कचिदुद्यत धनुः कृत न वा कोपविजिह्ममाननम् ।**
**गुणानुरागेण शिरोभिरुह्यते नराधिपैर्माल्यमिवास्य शासनम् ॥२१**

नेति ॥ तेन राज्ञा क्वचित्कुत्रापि । सह ज्यया मौर्व्या सज्यम् । 'मौर्वी ज्या शिञ्जिना गुण' इत्यमर । 'तेन सहेति तुल्ययोगे' इति बहुव्रीहि । धनुर्नोद्यत नोध्वीकृतम् । आनन वा कोपविजिह्मं कोपकुटिल न कृतम् । यस्य कोप एव नोदेति कुतस्तस्य युद्धप्रसक्तिरिति भाव । कथ तर्ह्याज्ञा कारयति राज इत्यत्राह—गुणेति । गुणेषु दयादाक्षिण्यादिष्वनुरागेण प्रेम्णा । माल्यपक्षे सूत्रानुपक्षेण । यद्वा सौरभ्यगुणलोभेन । नराधिपैरस्य शासनमाज्ञा । मालैव माल्य तदिव । 'चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञ्' इति क्षीरस्वामी । शिरोभिरुह्यते धार्यते । 'वचिस्वपियजादीना किति' इति यकि संप्रसारणम् । अत्रोपमा स्फुटैव ॥

संप्रत्यस्य धार्मिकत्वमाह—

**स यौवराज्ये नवयौवनोद्धतं निधाय दुःशासनमिद्धशासनः ।**
**मखेष्वखिन्नोऽनुमतः पुरोधसा धिनोति हव्येन हिरण्यरेतसम् २२॥**

स इति ॥ इद्धशासनोऽप्रतिहताज्ञ स दुर्योधनो नवयौवनेनोद्धतं प्रगल्भम् । धुरंधरमित्यर्थ । दु खेन शास्यत इति दु शासनस्तम् । 'भाषाया शासियुधि—' इत्यादिना खलर्थे युच्प्रत्यय । यौवराज्ये युवराजकर्मणि । ब्राह्मणादित्वात्ष्यञ । निधाय । नियुज्येत्यर्थ । पुरोधसा पुरोहितेनानुमतो ऽनुज्ञातः । तस्मिन्याजके सतीत्यर्थ । तदुल्लङ्घने दोषस्मरणादिति भाव । 'निष्ठा' इति भूतार्थे क्त । न तु 'मतिबुद्धि—' इत्यादिना वर्तमानार्थे । अन्यथा 'पुरोधसा' इत्यत्र 'क्तस्य च वर्तमाने' इति षष्ठी स्यात् । अखिलोऽनलसो मखेषु क्रतुषु हव्येन हविषा । हिरण्यं रेतो यस्य त हिरण्यरेतसमनल

१ उद्धतम्' इति पाठः.

विनोति प्रीणयति । 'चिन्वे प्रीणनार्थात्' 'चिन्विकृण्व्योर च' इत्युप्रत्यय. । अकारश्चान्तादेश ॥

न चैतावता निरुद्योगैर्भाव्यमित्याशङ्कयाशा दर्शयति—

**प्रलीनभूपालमपि स्थिरायति प्रशासदावारिधि मण्डलं भुव ।**
**स चिन्तयत्येव भियस्त्वदेष्यतीरहो दुरन्ता बलवद्विरोधिता २३॥**

प्रलीनेति ॥ स दुर्योधन प्रलीनभूपालम् । नि सपत्नमित्यर्थ स्थिरायति । चिरस्थायीत्यर्थ । भुवो मण्डलमा वारिधिभ्य आवारिधि । 'आङ्मर्यादाभिविध्यो:' इत्यव्ययीभाव । प्रशासदाज्ञापयन्नपि 'जक्षित्यादय. षट्' इत्यभ्यस्तसज्ञा। 'नाभ्यस्ताच्छतु:' इति नुमागमप्रतिषेध । त्वत्त्वत्त एष्यतीरागामिष्यती । धातुनामनेकार्थत्वादुक्तार्थसिद्धि । अथवाङ्पूर्व पाठ । 'एत्येधत्यूठ्सु' इति वृद्धे । 'लृट सद्वा' इति शतृप्रत्यय । 'उगितश्च' इति ङीप् । 'आच्छीनद्योर्नुम्' इति विकल्पान्नुमभाव । भियो भयहेतून् । विपद इत्यर्थ । चिन्तयत्यालोचयत्येव । स एवाह—अहो बलवद्विरोधिता दुरन्ता दुष्टावसाना । सार्वभौमस्यापि प्रबलै सह वैरायमाणत्वमनर्थपर्यवसाय्येवेति तात्पर्यम् । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यास ॥

ननु गूढाकारेङ्गितस्य तस्य भय त्वया कथ निरधारीत्यत्राह—

**कथाप्रसङ्गेन जनैरुदाहृतादनुस्मृताखण्डलसूनुविक्रम. ।**
**तवाभिधानाद्व्यथते नताननःसुदु: सहान्मन्त्रपदादिवोरग ॥२४॥**

कथेति ॥ कथाप्रसङ्गेन गोष्ठीवचनेन जनै । अन्यत्र कथाप्रसङ्गेन विषवैद्येन । 'कथाप्रसङ्गो वार्त्तायां विषवैद्येऽपि वाच्यवत्' इति विश्व: । एकवचनस्यातन्त्रत्वाज्जनविशेषणम् । उदाहृतादुच्चारितात्तवाभिधानान्नामधेयात्स्मारकाद्धेतो । 'हेतौ' इति पञ्चमी । 'आख्याह्वे अभिधान च नामधेय च नाम च' इत्यमर: । अन्यत्र तवाभिधानात् । 'नामैकदेशग्रहणे नाममात्रग्रहणम्' इति न्यायात्तक्ष वश्च तवौ तार्क्ष्यवासुकी तयोरभिधान यस्मिन्पदे तस्मात् । यद्वा कथाप्रसङ्ग इनाश्च ते जनाश्चेत्येक पदम् । अनुस्मृताखण्डलसूनुविक्रम स्मृतार्जुनपराक्रम सन्दु सहादतिदु सहान्मन्त्रपदान्मन्त्रशब्दात्स्मारकाद्धेतो: ।

१ 'सुदु महान्' इति पाठ .

आखण्डलसूनुरिन्द्रानुज । उपेन्द्रो विष्णुरिति यावत् । 'सूनु पुत्रेऽनुजे रवौ' इति विश्व । तस्य वि पक्षी । गरुड इत्यर्थः । तस्य क्रम पादविक्षेप । सोऽनुस्मृतो येन स तथोक्त, स्मृतगरुडमहिमा ः उरग इव । नतानन सन् । व्यथते दुःख्यते । 'पीडा बाधा व्यथा दु खम्' इत्यमरः' । अत्युत्कटभयदोपादिविकारा दुर्वारा इति भावः । 'सर्वतो जगमन्विच्छेत्पुत्रादिच्छेत्पराजगम्' इति न्यायादर्जुनोत्कर्षकथन युधिष्ठिरस्य भूषणमेवेति सर्वमवदातम् ॥

निगमयति—

**तदाशु कर्तुं त्वयि जिह्ममुद्यते विधीयतां तत्र विधेयमुत्तरम् ।**
**परप्रणीतानि वचांसि चिन्वता प्रवृत्तिसारा खलु मादृशां गिरः ॥२५**

तदिति ॥ तत्तस्मात्त्वयि जिह्म कपटं कर्तुमुद्यते । त्वा जिघांसावित्यर्थ । तत्र तस्मिन्दुर्योधने विधेय कर्तव्यमुत्तर प्रतिक्रियाशु विधीयता क्रियताम् । ननु कर्तव्यमपि त्वयैवोच्यतामिति चेत्तत्राह—परेति । परप्रणीतानि परोक्तानि वचांसि चिन्वता गवेषयता मादृशान् । वार्ताहारिणामित्यर्थः । गिर प्रवृत्तिसारा वार्तामात्रसारा खलु । 'वार्ता प्रवृत्तिर्वृत्तान्त' इत्यमरः । वार्तामात्रवादिनो वयम्, न तु कर्तव्यार्थोपदेशसमर्था । अतस्त्वयैव निर्णीय कार्यमिति भावः । सामान्येन विशेषसमर्थनादर्थान्तरन्यास ॥

**इतीरयित्वा गिरमात्तसत्क्रिये गतेऽथ पत्यौ वनसंनिवासिनाम् ।**
**प्रविश्य कृष्णासदन महीभुजा तदाचचक्षेऽनुजसंनिधौ वचः २६**

इतीति ॥ वनसंनिवासिना पत्यौ वनेचराधिप इति गिरमीरयित्वोक्त्वात्तसत्क्रिये गृहीतपारितोषिके गते सति । 'तुष्टिदानमेव चाराणा हि वेतनम् । ते हि तल्लोभात्स्वामिकार्येष्वतीव त्वरयन्ते' इति नीतिवाक्यामृते । अथ मही भुजा राजा कृष्णासदन द्रौपदीभवन प्रविश्यानुजसंनिधौ तद्वनेचरोक्त वचो वाक्यमाचचक्ष आख्यातम् । अथवा कृष्णेति पदच्छेद । सदन प्रविश्यानुजसंधौ तद्वच कृष्णाचचक्ष आख्याता । चक्षिङो दुहादेर्द्विकर्मकत्वादप्रधाने कर्मणि लिट् ॥

**निशम्य सिद्धिं द्विषतामपाकृतीस्ततस्ततस्त्या विनियन्तुमक्षमा ।**
**नृपस्य मन्युव्यवसायदीपिनीरुदाजहार द्रुपदात्मजा गिरः ॥ २७॥**

निशम्येति ॥ अथ द्रुपदात्मजा द्रौपदी द्विपतां सिद्धिं वृद्धिरूपां निशम्य ततस्तदनन्तरम् । ततो द्विषद्भ्य आगतास्ततस्त्याः । 'अव्ययात्त्यप्' इति त्यप् । अपाकृतीर्विकारान्विनियन्तु निरोद्धुमक्षमा सती नृपस्य युधिष्ठिरस्य मन्युव्यवसाययोः क्रोधोद्योगयोर्दीपिनीः सर्वा गिरो वाक्यान्युदाजहार । जगादेत्यर्थः ॥

**भवादृशेषु प्रमदाजनोदितं भवत्यधिक्षेप इवानुशासनम् ।**
**तथापि वक्तुं व्यवसाययन्ति मां निरस्तनारीसमया दुराधयः ॥२८॥**

भवादृशेष्विति ॥ भवादृशा भवद्विधाः पण्डिता इत्यर्थः । तेषु विषये । 'त्यदादिषु-' इत्यादिना कञ् । 'आ सर्वनाम्नः' इत्याकारादेशः । प्रमदाजनोदितं स्त्रीजनोक्तम् । वदेः क्तः । 'वचिस्वपि-' इत्यादिना सम्प्रसारणम् । अनुशासनं नियोगवचनमधिक्षेपस्तिरस्कार इव भवति । अतो न युक्तं वक्तुमित्यर्थः । तथापि वक्तुमनुचितत्वेऽपि निरस्तनारीसमयास्त्याजितशालीनतारूपस्त्रीसमाचाराः । 'समयाः शपथाचारकालसिद्धान्तसंविदः' इत्यमरः । दुराधयः समयोल्लङ्घनहेतुत्वाद्दुष्टा मनोव्यथाः । 'पुंस्याधिर्मानसी व्यथा' इत्यमरः । मां वक्तुं व्यवसाययन्ति प्रेरयन्ति । न किंचिदयुक्तं दुःखिनामिति भावः ॥

**अखण्डमाखण्डलतुल्यधामभि-**
**श्चिरं धृता भूपतिभिः स्ववंशजैः ।**
**त्वयात्महस्तेन मही मदच्युता**
**मतङ्गजेन स्रगिवापवर्जिता ॥२९॥**

अखण्डमिति ॥ आखण्डलतुल्यधामभिरिन्द्रतुल्यप्रभावैः । स्ववंशजैर्भूपतिभिर्भरतादिभिश्चिरमखण्डमविच्छिन्नं धृता मही त्वया । मदं च्योततीति मदच्युत् क्विप् । तेन मदस्राविणा मतङ्गजेन स्रगिवात्महस्तेन स्वकरेण । स्वचापलेनेत्यर्थः । अपवर्जिता परिहृता त्यक्ता । स्वदोषादेवागमनर्थागम इत्यर्थः ॥

स्वदोषादेवागमनर्थागम इत्युक्तम् । स च दोषः कुटिलेष्वकौटिल्यमेवेत्याह—

व्रजन्ति ते मूढधियः पराभवं
भवन्ति मायाविषु ये न मायिनः ।
प्रविश्य हि[1] घ्नन्ति शठास्तथाविधा-
नसंवृताङ्गान्निशिता इवेषवः ॥३०॥

व्रजन्तीति ॥ मूढधियो निर्विवेकबुद्धयस्ते पराभवं व्रजन्ति ये मायाविषु मायावत्सु विषये । 'अस्मायामेधा-' इत्यादिना विनिप्रत्ययः । मायिनो मायावन्तः । व्रीह्यादित्वादिनिप्रत्ययः । न भवन्ति । अत्रैवार्थान्तरं न्यस्यति-प्रविश्येति । शठा अपकारिणो धूर्तास्तथाविधानकुटिलानसंवृताङ्गानवर्मितशरीरान्निशिता इषव इव प्रविश्य प्रवेशं कृत्वात्मीया भूत्वा घ्नन्ति हि । 'आर्जवं हि कुटिलेषु न नीतिः' इति भावः ॥

न च लक्ष्मीचाञ्चल्यादयमनर्थागमः, किंतु स्वोपेक्षादोषमूलत्वादित्याशयेनाह—

गुणानुरक्तामनुरक्तसाधनः कुलाभिमानी कुलजां नराधिपः[2] ।
परैस्त्वदन्यः क इवापहारयेन्मनोरमामात्मवधूमिव श्रियम् ॥३१॥

गुणेति ॥ अनुरक्तसाधनोऽनुकूलसहायवान् । उक्तं च कामन्दकीये— 'उद्योगादनिवृत्तस्य सुसहायस्य धीमतः । छायेवानुगता तस्य नित्यं श्रीः सहचारिणी ॥' इति । कुलाभिमानी क्षत्रियत्वाभिमानी कुलीनत्वाभिमानी च त्वदन्यस्त्वत्तोऽन्यः । 'अन्यारात्-' इत्यादिना पञ्चमी । क इव नराधिपो गुणैः सध्यादिभिः सौन्दर्यादिभिश्चानुरक्तामनुरागिणीं कुलजां कुलक्रमादागतां कुलीनां च मनोरमां श्रियमात्मवधूमिव स्वभार्यामिव । 'वधूर्जाया स्नुषा स्त्री च' इत्यमरः । परैः शत्रुभिरन्यैश्चापहारयेत् । स्वयमेवापहारं कारयेदित्यर्थः । कलत्रापहारवल्लक्ष्म्यपहारोऽपि राज्ञां मानहानिकरत्वादनुपेक्षणीय इति भावः ॥

अथ दशभिः कोपोद्दीपनं करोति—

भवन्तमेतर्हि मनस्विगर्हिते विवर्तमानं नरदेव वर्त्मनि ।
कथं न मन्युर्ज्वलयत्युदीरितः शमीतरुं शुष्कमिवाग्निरुच्छिखः ॥३२॥

1. 'निघ्नन्ति' इति पाठः । 2. 'जनाधिपः' इति पाठः ।

भवन्तमिति ॥ हे नरदेव नरेन्द्र, एतर्हीदानीम् । अस्मिन्नापत्कालेऽपीत्यर्थः 'एतर्हि संप्रतीदानीमधुना साम्प्रत तथा' इत्यमर । 'इदमो र्हिल्' इति र्हिल्प्रत्यय । 'एतेतौ रथो ' इत्येतादेश ।आपदमेवाह—मनस्विगर्हिते शूरजनजुगुप्सिते वर्त्मनि मार्गे विवर्तमानम्। शत्रुकृता दुर्दशामनुभवन्तमित्यर्थ । भवन्त त्वामुदीरित उद्दीपितो मन्यु क्रोध । शुष्कं नीरसम्। शुष क ' इति निष्ठातकारस्य ककारः। शमी चासौ तरुश्चेति विशेषणसमास । तम् । शमीग्रहण शीघ्रज्वलनस्वभावात्कृतम् । उच्छिख उद्गतज्वाल । 'शृणिज्वाले अपि शिखे' इत्यमर । वह्निरिव। कथ न ज्वलयति । ज्वलयितुमुचितमित्यर्थः । 'मिता ह्रस्व' इति ह्रस्व ॥

नन्वन्त शत्रुत्वादथ कोपस्त्याज्य एवेत्याशङ्क्याह—

**अवन्ध्यकोपस्य विहन्तुरापदां भवन्ति वश्याः स्वयमेव देहिनः ।**
**अमर्षशून्येन जनस्य जन्तुना न जातहार्देन न विद्विषादर ॥३३॥**

अवन्ध्येति ॥ अवन्ध्य कोपो यस्य तस्य वन्ध्यकोपस्यात एवापदा विहन्तु निग्रहानुग्रहसमर्थस्येत्यर्थ । पुस इति शेष । देहिनो जन्तव स्वयमेव वश्या वशङ्गता भवन्ति । 'वश गत ' इति यत्प्रत्यय । अतस्त्वया कोपिना भवितव्यमित्यर्थः । व्यतिरेके त्वनिष्टमाचष्टे—अमर्षशून्येन नि.कोपेन जन्तुना । कन्यया शोक इतिवत् 'हेतौ' इति तृतीया । हृदयस्य कर्म हार्दं स्नेह । 'प्रेमा ना प्रियता हार्दं प्रेम स्नेह ' इत्यमर । युवादित्वादण् । 'हृदयस्य हृल्लेखयदण्लासेषु' इति हृदादेश । जातहार्देन जातस्नेहेन सता जनस्यादरो न । विद्विषा विद्विषा च सता दरो न । अमर्षहीनस्य रागद्वेषावकिंचित्करत्वादगण्यावित्यर्थः । अथवा विद्विषा मनादरो भय न । 'दरोऽस्त्रिया भये श्वभ्रे' इत्यमर । एतस्मिन्नेव प्रयोगे सन्धिवशाद्द्विधा पदच्छेदः । पुनरुक्तेयपु न दोष. । अत स्थाने कोप कार्यस्त्याज्यमन्यस्थाने कोप इति भाव ॥

**परिभ्रमल्लोहितचन्दनोचित. पदातिरन्तर्गिरि रेणुरूषित ।**
**महारथः सत्यधनस्य मानसं दुनोति नो कच्चिदयं वृकोदरः ३४**

परिभ्रमन्निति ॥ लोहितचन्दनोचित उचितलोहितचन्दन । 'वाहिताग्न्यादिषु' इति साधु । अभ्यस्तरक्तचन्दन इत्यर्थः । 'अभ्यस्तेऽप्युचित न्याय्यम्'

१, 'नरस्य' इति पाठः. २. 'च' इति पाठ . ३. 'चन्दनान्वित.' इति पाठः

च' इति विश्वः। विलोकयस्त्वं कथं धृतिसंयमौ संतोषनिगमौ। 'धृतिर्योगान्तरे धैर्ये धारणाध्वरतुष्टिषु' इति विश्वः। बाधितुं नोत्सहसे न प्रवर्तसे। 'शक धृष-' इत्यादिना तुमुन्। अहो ते महद्धैर्यमिति भावः॥

अथ राज्ञो दुर्दशां दर्शयितुमुपोद्धातमाह। प्रकृतार्थं वर्णयितुमर्थान्तरवर्णनमुपोद्धातः—

**इमामहं वेद न तावकीं धियं विचित्ररूपाः खलु चित्तवृत्तयः।**
**विचिन्तयन्त्या भवदापदं परां रुजन्ति चेतः प्रसभं ममाधयः॥ ३७॥**

इमामिति॥ इमां वर्तमानाम्। तवेमां तावकीं त्वदीयाम्। 'तस्येदम्' इत्यण्प्रत्ययः। 'तवकममकावेकवचने' इति तवकादेशः। धियं त्वदापद्विषयां चित्तवृत्तिमहं न वेद कीदृशी वा न वेद्मि। परबुद्धेरप्रत्यक्षत्वादिति भावः। 'विदो लटो वा' इति लटो णलादेशः। न चात्मदृष्टान्तेनापन्नत्वाद्दुःखित्वमनुमातुं शक्यते। धीरादिष्वनैकान्तिकत्वादित्याशयेनाह। चित्तवृत्तयो विचित्ररूपा धीराधीराद्यनेकप्रकाराः खलु। किंतु परामुत्कृष्टां भवदापदं विचिन्तयन्त्या भावयन्त्या मम चेतश्चित्तम्। आधयो मनोव्यथाः। 'उपसर्गे घोः किः' इति किप्रत्ययः। प्रसभं प्रसह्य रुजन्ति भञ्जन्ति। 'रुजो भङ्गे' इति धातोर्लट्। पश्यतामपि दुःसहा दुःखजननी त्वद्विपत्तिरनुभवितारं त्वां न विकरोतीति महच्चित्रमित्यर्थः। चेत इति 'रुजार्थानां भाववचनानामज्वरेः' इति षष्ठी न भवति। तत्र शेषाधिकाराच्छेषत्वस्य विवक्षितत्वादिति॥

तदापदमेव श्लोकत्रयेणाह—

**पुराधिरूढः शयनं महाधनं विबोध्यसे यः स्तुतिगीतिमङ्गलैः।**
**अदभ्रदर्भामधिशय्य स स्थलीं जहासि निद्रामशिवैः शिवारुतैः॥ ३८॥**

पुरेति॥ यस्त्वं महाधनं बहुमूल्यं श्रेष्ठम्। 'महाधनं महामूल्ये' इति विश्वः। शयनं शय्यामधिरूढः सन्। स्तुतयो गीतयश्च ता एव मङ्गलानि तैः करणभूतैः पुरा विबोध्यसे। वैतालिकैरिति शेषः। पूर्वं बोधित इत्यर्थः। 'पुरि लुङ् चास्मे' इति भूतार्थे लट्। स त्वमदभ्रदर्भां बहुकुशाम्। 'अस्त्री कुशं कुथो दर्भः' इति। 'अदभ्रं बहुलं बहु' इति चामरः। स्थलीमकृत्रिमभूमिम्। 'जानपद-' इत्यादिनाकृत्रिमार्थे ङीप्। एतेन दुःसहस्पर्शत्वमुक्तम्। 'अधि-

इति यादवः । महारथो रथचारी । उभयत्रापि प्राणीति शेषः । अयं तु रेणु-रूषितो धूलिच्छुरितः पादाभ्यामतति गच्छतीति पदातिः पादचारी । 'अज्य-तिभ्यां च' इत्यनुवृत्तौ 'पादे च' इत्यौणादिक इन्प्रत्ययः । 'पादस्य पदाज्या-तिगोपहतेषु' इति पदादेशः । अन्तर्गिरं गिरिष्वन्तः । विभक्त्यर्थेऽव्ययीभावः । 'गिरेश्च सेनकस्य' इति विकल्पात्समासान्ताभावः । परिभ्रमत्ययं वृकोदरो भीमः । सत्यवनस्येति सोल्लुण्ठनवचनम् । अत्रापि सत्यमेव रक्ष्यते, न तु भ्रातर इति भावः । तवेति शेषः । मानसं नो दुनोति काच्चिन्न परितापयति । 'कच्चित्कामप्रवेदने' इत्यमरः । स्वाभिप्रायाविष्करणं कामप्रवेदनम् ॥

**विजित्य यः प्राज्यमयच्छदुत्तरा-**
**न्कुरूनकुप्यं वसु वासवोपमः ।**
**स वल्कवासांसि तवाधुनाहर-**
**न्करोति मन्युं न कथं धनंजयः ॥३५॥**

विजित्येति ॥ वासव इन्द्र उपमा उपमानं यस्य स वासवोपम इन्द्रतुल्यो यो धनंजयः । उत्तरान्कुरून्मेरोरुत्तरान्सानुपान्देशविशेषान्विजित्य प्राज्यं प्रभू-तम् । 'प्रभूतं प्रचुरं प्राज्यम्' इत्यमरः । कुप्यादन्यदकुप्यं हेमरूप्यात्मकम् । 'स्यात्कोशश्च हिरण्यं च हेमरूप्ये कृताकृते । ताभ्यां यदन्यत्तत्कुप्यम्' इत्य-मरः । वसु धनमयच्छद्दत्तवान् । 'पाघ्रा–' इत्यादिना दाणो यच्छादेशः । स धनं जयतीति धनंजयोऽर्जुनः । 'संज्ञायां भृतॄवृजि–' इत्यादिना खच्प्रत्ययः । 'अरुर्द्विषत्–' इत्यादिना मुमागमः । अधुनास्मिन्काले । 'अधुना' इति निपा-तनात्साधुः । तव वल्कवासांस्याहरन्कथं तव मन्युं क्रोधं दुःखं वा न करोति ॥

**वनान्तशय्याकठिनीकृताकृती कचाचितौ विष्वगिवागजौ गजौ ।**
**कथं त्वमेतौ धृतिसंयमौ यमौ विलोकयन्नुत्सहसे न बाधितुम् ३६**

वनान्तेति ॥ वनान्तो वनभूमिरेव शय्या तया कठिनीकृताकृती कठिनी-कृतदेहौ । 'आकारो देह आकृतिः' इति वैजयन्ती । विष्वक्समन्तात् । 'सम-न्ततस्तु परितः सर्वतो विष्वगित्यपि' इत्यमरः । कचाचितौ कचव्याप्तौ । विशीर्णकेशावित्यर्थः । अतएवागजौ गिरिसंभवौ गजाविव स्थिताविति यमौ युग्मजातौ । माद्रीपुत्रावित्यर्थः । 'यमो दण्डधरे ध्वाङ्क्षे संयमे यमजेऽपि

शाङ्स्यासा कर्म' इति कर्मत्वम् । अधिशय्य शयित्वा । 'अयङ्यि ङ्किति' इत्ययङादेश । अशिवैरमङ्गले शिवारुतै क्रोष्टुवासितै 'शिवा हरीतकी क्रोष्ट्री शमी नद्यामलक्ष्युभे' इति वैजयन्ती । निद्रा जहासि । अद्येति शेष ॥

**पुरोपनीत नृप रामणीयकं द्विजातिशेषेण यदेतदन्धसा ।**
**तदद्य ते वन्यफलाशिनः परं परैति कार्श्यं यशसा समं वपु ३६**

पुरेति ॥ हे नृप यदेतत्पुरोवर्ति वपुः पुरा द्विजातिशेषेण द्विजभुक्ताव-शिष्टेनान्धसान्नेन । भिस्सा स्त्री भक्तमन्धोऽन्नम्, इत्यमर । रमणीयस्य भावो रामणीयक मनोहरत्वमुपनीत प्रापितम् । नयतेर्द्विकर्मकत्वात्प्रधाने कर्मणि क्त । 'प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्' इति वचनात् । अद्य वन्य-फलाशिनस्ते तव तद्वपुर्यशसा सम परमतिमात्र कार्श्यं परैति प्राप्नोति । उभ-यमपि क्षीयत इत्यर्थ । अत्र सहोक्तिरलंकार । तदुक्त काव्यप्रकाशे—'सा सहोक्ति सहार्थस्य बलादेक द्विवाचकम्' इति ॥

**अनारतं यौ मणिपीठशायिनावरञ्जयद्राजशिरः स्रजां रजः ।**
**निषीदतस्तौ चरणौ वनेषु ते मृगद्विजालूनशिखेषु बर्हिषाम् ४०**

अनारतमिति ॥ अनारतमजस्र मणिपीठशायिनौ मणिमयपादपीठस्था-यिनौ यौ चरणौ राजशिर स्रजा नमद्भूपालमौलिस्रजा रज परागोऽरञ्जयत् तौ ते चरणौ मृगैर्द्विजैश्च तपस्विभिरालूनशिखेषु छिन्नाग्रेषु बर्हिषा कुशाना-म् । 'बर्हि कुशहुताशयो ' इति विश्व । वनेषु निषीदतास्तिष्ठत ॥

ननु सर्वप्राणिसाधारण्यामापदि का परिदेवनेत्यत्राह—

**द्विषन्निमित्ता यदियं दशा ततः समूलमुन्मूलयतीव मे मनः ।**
**परैरपर्यासितवीर्यसंपदां पराभवोऽप्युत्सव एव मानिनाम् ॥४१**

द्विषदिति ॥ यद्यत कारणादियं दशावस्था । दशा वर्तावस्थायाम्' इति विश्व । द्विषन्तो निमित्त यस्या सा । 'द्विषोऽमित्रे' इति शतृप्रत्ययः । अतो मे मनः समूल साशयमुन्मूलयतीवोत्पाटयतीव । दैविकी त्वापन्न दु सायेत्याह—परैरिति । परै शत्रुभिरपर्यासितापर्यावर्तिता वीर्यसंपद्येषा तेषा मानिना परा-भवो विपदप्युत्सव एवेति वैधर्म्येणार्थान्तरन्यास । मानहानिर्दु सहा न त्वाप-दिति भाव ॥

**विहाय शान्तिं नृप धाम तत्पुनः प्रसीद संधेहि वधाय विद्विषाम् ।**
**व्रजन्ति शत्रूनवधूय निःस्पृहाः शमेन सिद्धिं मुनयो न भूभृतः ४२**

विहायेति ॥ हे नृप, शान्तिं विहाय तत्प्रसिद्धं धाम तेजो विद्विषां वधाय पुनः संधेह्यङ्गीकुरु प्रसीद । प्रार्थनायां लोट् । ननु शमेन कार्यसिद्धौ किं कोपेनेत्यत्राह—व्रजन्तीति । निःस्पृहा मुनयः । शत्रूनवधूय निर्जित्य शमेन कोपवर्जनेन सिद्धिं व्रजन्ति । भूभृतस्तु न केवल्यकार्यवद्राजकार्यं न शान्तिसाध्यमित्यर्थः ॥

**पुरःसरा धामवतां यशोधनाः सुदुःसहं प्राप्य निकारमीदृशम् ।**
**भवादृशाश्चेदधिकुर्वते रतिं निराश्रया हन्त हता मनस्विता॥४३॥**

पुर इति ॥ किं च धामवतां तेजस्विनाम् । परनिकारासहिष्णूनामित्यर्थः । पुरः सरन्तीति पुरःसरा अग्रेसराः 'पुरोऽग्रतोऽग्रेषु सर्तेः' इति टप्रत्ययः । यशोधना भवादृशाः सुदुःसहमतिदुःसहमीदृशमुक्तप्रकारं निकारं पराभवं प्राप्य रतिं संतोषमधिकुर्वते स्वीकुर्वते चेत्तर्हि । हन्त इति खेदे । मनस्विताभिमानिता निराश्रया सती हता । तेजस्विजनैकशरणत्वान्मनस्वितायाः इत्यर्थः । अतः पराक्रमितव्यमिति भावः । यद्यप्यत्र प्रसहनस्यासङ्गतेराधिपूर्वात्करोतेः 'अधेः प्रसहने' इत्यात्मनेपदं न भवति 'प्रसहनं परिभवः' इति काशिका । तथाप्यस्याः कर्त्रभिप्रायविवक्षायामेव प्रयोजकत्वात्कर्त्रभिप्राये 'स्वरितञितः—' इत्यात्मनेपदं प्रसिद्धम् ॥

**अथ क्षमामेव निरस्तविक्रमश्चिराय पर्येषि सुखस्य साधनम् ।**
**विहाय लक्ष्मीपतिलक्ष्म कार्मुकं जटाधरः संजुहुधीह पावकम्४४**

अथेति ॥ अथ पक्षान्तरे । निरस्तविक्रमः सन् । चिराय चिरकालेनापि क्षमां क्षान्तिमेव । 'क्षितिक्षान्त्योः क्षमा' इत्यमरः । सुखस्य साधनं पर्येष्यवगच्छसि तर्हि लक्ष्मीपतिलक्ष्म राजचिह्नं कार्मुकं विहाय । धरतीति धरः । पचाद्यच् । जटानां धरो जटाधरः सन्निह वने पावकं जुहुधि । पावके होमं कुर्वित्यर्थः । अधिकरणे कर्मत्वोपचारः । विरक्तस्य किं धनुषेत्यर्थः । 'हुझल्भ्यो हेर्धिः' ॥

अथ समयोल्लङ्घनाद्बिभेषि तदपि न किंचिदित्याह—

**न समयपरिरक्षणं क्षमं ते निकृतिपरेषु परेषु भूरिधाम्नः ।**
**अरिषु हि विजयार्थिन क्षितीशा विदधति सोपधि संधिदूषणानि**

नेति ॥ परेषु शत्रुषु । निकृति पर प्रधान येषु तेषु तथोक्तेष्वपकारतत्परेषु सत्सु भूरिधाम्नो महौजसः प्रतिकारक्षमस्य ते तव समयस्त्रयोदशसवत्सरान्वने वत्स्यामीत्येवरूपा सवित् । 'समया शपथाचारकालसिद्धान्तसविद' इत्यमर । तस्य परिरक्षण प्रतीक्षण न क्षम न युक्तम् । 'युक्ते क्षम शक्ते हिते त्रिषु' इत्यमर , हि यस्माद्विजयार्थिनो विजिगीषवः क्षितीशा अरिषु विषये सोपधि सकपट यथा तथा 'कपटोऽस्त्री व्याजदम्भोपधयश्छद्मकैतवे' इत्यमर. । सधिदूषणानि विदधाति केनचिद्व्याजेन दोषमापाद्य संधि दूषयन्ति । विघटयन्तीत्यर्थ । शक्तस्य हि विजिगीषो सर्वथा कार्यसाधन प्रधानमन्यत्समयरक्षणादिकमशक्तस्येति भाव ।अर्थान्तरन्यासोऽलंकारः। पुष्पिताग्रावृत्तम् ॥

उक्तमर्थमाशीर्वादपूर्वकमुपसहरति—

**विधिसमयनियोगाद्दीप्तिसंहारजिह्मं**
**शिथिलवसुमगाधे मग्नमापत्पयोधौ ।**
**रिपुतिमिरमुदस्योदीयमान दिनादौ**
**दिनकृतमिव लक्ष्मीस्त्वां समभ्येतु भूयः ॥ ४६ ॥**

**इति भारविकृतौ महाकाव्ये किरातार्जुनीये प्रथमः सर्गः ।**

विधीति ॥ विधिर्दैवम् । 'विधिर्विधाने दैवे च' इत्यमर । समयः कालस्तयोर्नियोगान्नियमनाद्धेतो ।तयोर्दुरतिक्रमत्वादिति भाव । अगाधे दुस्तरे । आपत्पयोधिरिवेत्युपमितसमास । दिनकृतमिवेति वक्ष्यमाणानुसारात्तस्मिन्नापत्पयोधो मग्नम् ।सूर्योऽपि साय सागरे मज्जति परेद्युरुन्मज्जतीत्यागम । दीप्ति प्रताप आतपश्च तस्या सहारेण जिह्ममप्रसन्नम् । ।शिथिलवसु शिथिलधनम्, अन्यत्र शिथिलरश्मिम् । 'वसुर्देवेऽग्नौ रश्मौ च वसु तोये धने मणौ' इति वैजन्ती । 'शिथिलवलम्' इति पाठे तूभयत्रापि शिथिलशक्तिकमित्यर्थ ।रिपुस्तिमिरमिवेति रिपुतिमिरमुदस्य नीरस्योदीयमानमुद्यन्तम् । 'ईङ गतौ' इति

---

१. 'उद्दीपमानम्' इति पाठः.

धातोर्दिवादिकात्कर्तरि शानच् । त्वा दिनादौ दिनकृतमिव लक्ष्मीर्भूयः समभ्येतु भजतु । 'आशिषि लिङ्लोटौ' इति लोट् । चमत्कारकारितया मङ्गलाचरणरूपतया च सर्गान्त्यश्लोकेषु लक्ष्मीशब्दप्रयोगः । यथाह भगवान्भाष्यकारः — 'मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते वीरपुरुषकाणयायुष्मत्पुरुषकाणि च भवन्त्यध्येतारश्च प्रवक्तारो भवन्ति' इति । पूर्णोपमेयम् । मालिनी वृत्तम् । सर्गान्तत्वादवृत्तभेदः । यथाह दण्डी—'सर्गैरनतिविस्तीर्णैः श्राव्यवृत्तैः सुसंधिभिः । सर्वत्र भिन्नवृत्तान्तैरुपेतं लोकरञ्जकम्, इति ॥

अथ कविः काव्यवर्णनीयाख्यानपूर्वकं सर्गपरिसमाप्तिं कथयति-इतीत्यादि । इतिशब्दः परिसमाप्तौ । भारविकृताविति कविनामकथनम् । महाकाव्य इति महच्छब्देन लक्षणसंपत्तिः सूचिता । किरातार्जुनीय इति काव्यवर्णनीययोःकथनम् । प्रथमः सर्गः । समाप्त इति शेषः । एवमुत्तरत्रापि द्रष्टव्यम् । किरातार्जुनावधिकृत्य कृतो ग्रन्थः किरातार्जुनीयम् । 'शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः' इति द्वन्द्वाच्छप्रत्ययः । राघवपाण्डवीयमितिवत् । तथा ह्यर्जुन एवात्र नायकः । किरातस्तु तदुत्कर्षाय प्रतिभटतया वर्णितः । यथाह दण्डी—'वंशवीर्यप्रतापादि वर्णयित्वा रिपोरपि । तज्जयान्नायकोत्कर्षकथनं च धिनोति नः ॥' इति । अथास्य संग्रहः—'नेता मध्यमपाण्डवो भगवतो नारायणस्यांशजस्तस्योत्कर्षकृते त्ववर्ण्यतनतरा दिव्यः किरातः पुनः । शृङ्गारादिरसोऽङ्गमत्र विजयी वीरः प्रधानो रसः, शैलाद्यानि च वर्णितानि बहुशो दिव्यास्त्रलाभः फलम् ॥' इति ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां किरातार्जुनीयकाव्यव्याख्यायां घण्टापथसमाख्यायां प्रथमः सर्गः समाप्तः ।

———————

# बुद्धचरिते तृतीयः सर्गः ।

कथासम्बन्धः—प्रथमसर्गे बोधिसत्त्वापरपर्यायस्य शुद्धोदनसुतस्य सर्वार्थसिद्धस्य जन्म वर्णितम्, द्वितीये तस्यैव युवावस्था प्राप्तस्यान्त पुरविहरणम्, तदनन्तरवृत्त तृतीये वक्ष्यते—

**ततः कदाचिन्मृदुशाद्वलानि पुंस्कोकिलोन्नादितपादपानि।**
**शुश्राव पद्माकरमण्डितानि शीतेन बद्धानि स काननानि॥१॥**

अन्वय—तत. स कदाचिद् मृदुशाद्वलानि पुस्कोकिलोन्नादितपादपानि पद्माकरमण्डितानि शीतेन बद्धानि काननानि शुश्राव ।

व्याख्या-तत इति, ततः-पुत्रोत्पत्त्यनन्तरम.स -शौद्धोदनिः,कदाचित्-कस्मिँश्चित् समये,मृदुशाद्वलानि-मृदव कोमला , शाद्वलास्तृणहरितप्रदेशा यत्र तानि, पुस्कोकिलोन्नादितपादपानि—पुस्कोकिलै पुंव्यञ्जनविशिष्टै पिकै , उन्नादिताः शब्दिता , पादपा वृक्षा यत्र तादृशानि, पद्माकरमण्डितानि-पद्माकरैः कमलवद्भि सरोभि , मण्डितानि समलङ्कृतानि, शीतेन शैत्येन, बद्धानि-सहितानि, बहुलजलाशयतया वृक्षाणा घनच्छायतया च शीतलानीति यावत्, काननानि-वनानि, शुश्राव-श्रुतवान् । मृदुशाद्वलत्वादिविशेषणैःकाननाना विहारयोग्यता सूचिता ।

**श्रुत्वा ततः स्त्रीजनवल्लभानां मनोज्ञभावं पुरकाननानाम् ।**
**बहिः प्रयाणाय चकार बुद्धिमन्तर्गृहे नाग इवावरुद्धः॥२॥**

अन्वय—ततः अन्तर्गृहे अवरुद्ध नागइव (अवस्थितः स ) स्त्रीजनवल्लभाना पुरकाननाना मनोज्ञभाव श्रुत्वा बहिः प्रयाणाय बुद्धिं चकार ।

---

१. वनविहारयात्राप्रसङ्गेन सर्वार्थसिद्धस्य निर्वेदोत्पत्तिरूपम् ।

२ शाद्वल शादहरिते, शादो जम्बालघासयोरितिचामर । शादशब्दाद् 'नडशादाद् वलच्' । ३. पद्माकरस्तडागोऽस्त्रीत्यमर. ।

व्याख्या—श्रुत्वेति, ततः, अन्तर्गृहे गृहमध्ये, अवरुद्धः-निरुद्धः, नागइव-हस्तीव, अवस्थितः सः, स्त्रीजनवल्लभानाम्-स्त्रीजनस्य कामिनीजनस्य, वल्लभाना प्रियाणाम्, पुरकाननानाम्-नगरोपवनानाम्, मनोज्ञभावम्-मनोज्ञस्य भाव रमणीयताम् श्रुत्वा-आकर्ण्य, बहि प्रयाणाय-बहिर्यातुम्, वनानि विहर्तुमितिभाव., बुद्धिम् मन., चकार कृतवान् ।

**ततो नृपस्तस्य निशम्य भावं पुत्राभिधानस्य मनोरथस्य ।**
**स्नेहस्य लक्ष्म्या वयसश्चयोग्यामाज्ञापयामास विहारयात्राम् ३॥**

अन्वय—ततः नृपः पुत्राभिधानस्य मनोरथस्य तस्य भाव निशम्य स्नेहस्य लक्ष्म्या वयस. च योग्यां विहारयात्राम् आज्ञापयामास ।

व्याख्या-तत इति, ततः, नृपः-राजा शुद्धोदनः, पुत्राभिधानस्य-पुत्र इत्यभिधान यस्य स पुत्राभिधानः, तस्य पुत्राख्यस्य, मनोरथस्य-अभिलाषस्वरूपस्य तस्य-सर्वार्थसिद्धस्य भावम् मुअभिप्रायम्, निशम्य-श्रुत्वा, स्नेहस्य-पुत्रप्रेम्ण, लक्ष्म्या वैभवस्य वयस यौवनावस्थायाश्च, योग्याम्-उचिताम् विहारयात्राम्-विहाराय वनविहरणाय, यात्राम्-गमनम्, आज्ञापयामास-आदिदेश । मनोरथपूर्तिहेतौ मनोरथत्वारोपाद् हेत्वलङ्कार ।

अथ बुद्धस्य विहारयात्रा वर्णयति—

**निवर्तयामास च राजमार्गे संपातमार्तस्य पृथग्जनस्य ।**
**मा भूत् कुमार· सुकुमारचित्त· संविग्नचेता इति मन्यमान·॥४॥**

अन्वय—(स नृप.) सुकुमारचित्त कुमार संविग्नचेता मा भूद् इति मन्यमान (सन्) राजमार्गे आर्तस्य पृथग्जनस्य च संपात निवर्तयामास ।

व्याख्या निवर्तयेति स नृप, सुकुमारचित्त सुकुमार कोमलम्, चित्त हृदय यस्य सः

---

१ गृह इत्यन्तर्गृहे, विभक्त्यर्थेऽव्ययीभाव, 'तृतीयासप्तम्योर्बहुलम्' इति सप्तम्या अलुक् । अथवा अन्तस्थ गृह तस्मिन्नन्तर्गृहे । शाकपार्थिवादित्वान्मध्यमपदलोप ।

२ चतुर्थीति योगविभागात् समास । विहारप्रयोजना यात्रा विहारयात्रामिति मध्यमपदलोपी कर्मधारयो वा ।

कुमार -सर्वार्थसिद्धः, सविग्नचेता सविग्न व्यथितम्, चेतो हृदय यस्य तादृशो मा भूत् न भवतु, इति मन्यमान विचारयन् सन् राजमार्गे-राजोचिते पथि, आर्तस्य कुष्ठादिरोगपीडितस्य, पृथग्जनस्य-चाण्डालादिनीच-जनस्य च, सपातम् आगमनम्. निवर्तयामास-निषिषेध ।

**प्रत्यङ्गहीनान्विकलेन्द्रियांश्च जीर्णातुरादीन्कृपणांश्च भिक्षून् ।**
**तत समुत्सार्य परेण साम्ना शोभां परां राजपथस्य चक्रु ॥५॥**

अन्वय.–ततः ( राजसेवकाः ) प्रत्यङ्गहीनान्, च विकलेन्द्रियान् जीर्णातुरादीन् च कृपणान् भिक्षून् परेण साम्ना समुत्सार्य राजपथस्य परां शोभां चक्रु. ।

व्याख्या-प्रत्यङ्गेति-तत, राजसेवकाः,प्रत्यङ्गहीनान्-अङ्गाना हस्त पाद-शिर आदीना मवयवा अङ्गुल्यादिनासिकादयः प्रत्यङ्गान्युच्यन्ते, तैर्हीनान् रहितान्, किं च विकलेन्द्रियान्–विकलानि स्वविषयग्रहणासमर्थानि, इन्द्रियाणि चक्षुरादीनि येषा तानन्धबाधिरादीन्, जीर्णातुरादीन्-जीर्णा जरया क्षीणकलेवरा, आतुरा रोगिण, आदयो येषा तान्, अपि च कृपणान्-दीनान्, भिक्षून्-याचकान्,परेण सातिशयेन,साम्ना-सान्त्वनेन, समुत्सार्य-निवार्य, राजपथस्य[2]-राजमार्गस्य, पराम् उत्कृष्टाम्, शोभाम्-कान्तिम्, चक्रुः-कृतवन्त ।

**ततः कृते श्रीमति राजमार्गे श्रीमान् विनीतानुचर कुमारः ।**
**प्रासादपृष्ठादवतीर्य काले कृताभ्यनुज्ञो नृपमभ्यगच्छत् ॥६॥**

अन्वय –तत राजमार्गे श्रीमति कृते ( सति ) श्रीमान् विनीतानुचर कुमारः काले प्रासादपृष्ठाद् अवतीर्य कृताभ्यनुज्ञः ( सन् ) नृपम् अभ्यगच्छत् ।

व्याख्या तत इति ततः, राजमार्गे, श्रीमति-विविधपरिष्कारे शोभायुते, कृते सति,

---

१–पामरो नीच प्राकृतश्च पृथग्जन -इत्यमर ।

२ राज्ञ पन्थास्तस्य राजपथस्य । 'ऋक्पूरब्धूः पथामानक्षे' इत्यप् समासान्त ।

श्रीमान्-राजोचितवेषभूषया रम्यकान्ति, विनीतानुचरः-विनीताः शिक्षिताः, अनुचराः अनुगामिनः सेवकाः, यस्य तादृशः, कुमारः सर्वार्थसिद्धः, काले-शुभे मुहूर्ते, प्रासादपृष्ठात्-प्रासादस्य हर्म्यस्य, पृष्ठाद् ऊर्ध्वगृहाद् अवतीर्य-अवरुह्य, कृताभ्यनुज्ञः-कृता अभ्यनुज्ञा यस्य सः-पित्रा स्व साक्षात् कर्तुं दत्तानुमतिः सन्, नृपम्-राजानं शुद्धोदनम्, अभ्याग-च्छत्-उपगतवान्।

**अथो नरेन्द्रः सुतमागताश्रुः शिरस्युपाघ्राय चिरं निरीक्ष्य।**
**गच्छेति चाज्ञापयति स्म वाचा स्नेहान्न चैनं मनसा मुमोच॥७**

अन्वयः-अथो नरेन्द्रः आगताश्रुः (सन्) सुतं शिरसि उपाघ्राय च चिरं निरीक्ष्य एनं वाचा गच्छ इति आज्ञापयति स्म, च स्नेहाद् मनसा न मुमोच।

व्याख्या-अथो इति, अथो विहारयात्रोद्यतपुत्रदर्शनानन्तरम्, नरेन्द्रः-शुद्धोदनः, भविष्यत्पुत्रविरहचिन्तया आगताश्रुः-आगतानि, अश्रूणि-नेत्रजलानि, यस्य तादृशः सन्, प्रणतं सुतम्-कुमारम्, शिरसि, उपाघ्राय-घ्रात्वा, किं च प्रेम्णा चिरं निरीक्ष्य-दृष्ट्वा, एनम्-कुमारम्, वाचा-केवलं वाण्यैव, गच्छ-कुरु विहारयात्राम्, इति, आज्ञापयति स्म, किं च-किन्तु, स्नेहाद्-अनुरागाद् हेतोः, मनसा, न मुमोच-न तत्याज।

**ततः स जाम्बूनदभाण्डभृद्भिर्युक्तं चतुर्भिर्निभृतैस्तुरङ्गैः।**
**अक्लीबविद्वच्छुचिरश्मिधारं हिरण्मयं स्यन्दनमारुरोह॥८**

अन्वयः-ततः सः जाम्बूनदभाण्डभृद्भिः निभृतैः चतुर्भिः तुरङ्गैः युक्तम् अक्लीबविद्वच्छुचिरश्मिधारं हिरण्मयं स्यन्दनम् आरुरोह।

व्याख्या-ततः इति, ततः पित्राज्ञाप्राप्त्यनन्तरम् सः-राजकुमारः, जाम्बूनदभाण्ड-भृद्भिः जाम्बूनदस्य भाण्डानि बिभर्तीति जाम्बूनदभाण्डभृत, तैः स्वर्णमयान्यश्वभूषणानि दधद्भिः, निभृतैः विनीतैः, चतुर्भिः,

१-रुक्मं कार्तस्वरं जाम्बूनदमष्टापदोऽस्त्रियाम् इति स्वर्णनामस्वमरः।

२ भाण्डं पात्रे वणिङ्मूलधने भूषाश्वभूषयोः। इति मेदिनी।

३ निभृत-विनीत-प्रश्रिताः समाः इत्यमरः।

तुरगे-अश्वे, युक्तम्, अर्चिर्विद्युच्छुचिरश्मिधारम्-अर्चिर्वा-प्रसरद्दीप्ति, या विद्युत्-तडित्, तद्वच्छुचि-उज्ज्वला, रश्मीनां किरणानाम्, धारा-पङ्क्ति, यस्य, तादृशम्, हिरण्मयम् स्वर्ण-विनिर्मितम्, स्यन्दनम्-रथम्' आरुरोह-आरूढवान्।

**ततः प्रकीर्णोज्ज्वलपुष्पजालं विपक्कमाल्यं प्रचलत्पताकम्।**
**मार्गं प्रपेदे सदृशानुयात्रश्चन्द्रः सनक्षत्र इवान्तरिक्षम् ॥९॥**

अन्वयः—ततः सदृशानुयात्रः (कुमारः) प्रकीर्णोज्ज्वलपुष्पजालं विपक्कमाल्यं प्रचलत्पताकं मार्गं अन्तरिक्षम् सनक्षत्रः चन्द्रः इव प्रपेदे।

व्याख्या—तत इति, ततः रथारोहानन्तरम्, सदृशानुयात्रः—सदृशाः स्वानुरूपाः, अनुयात्राः अनुगन्तारः, यस्य सः, राजकुमारः प्रकीर्णोज्ज्वलपुष्पजालम्-प्रकीर्णानि इतस्ततो विकीर्णानि, उज्ज्वलानि अम्लानतया कान्तिमन्ति, पुष्पाणां विकसितानां कुसुमानाम्, जालानि समूहाः, यत्र तादृशम्, विपक्कमाल्यम्-विपक्तानि आसज्जितानि, माल्यानि स्रजः, यत्र तथाभूतम्, प्रचलत्पताकम्-प्रचलन्त्यो वायुनोद्धूय-मानाः, पताकाः ध्वजाः यत्र तम्, मार्गम् राजपथम्, अन्तरिक्षम् व्योम, सनक्षत्रः-नक्षत्रैः सहितः, चन्द्रइव, प्रपेदे-प्राप।

**कौतूहलात् स्फीततरैश्च नेत्रैर्नीलोत्पलैः किं नु विकीर्यमाणः।**
**शनैः शनै राजपथं जगाहे पौरैः समन्तादभिवीक्ष्यमाणः ॥१०॥**

अन्वयः—(किं) च पौरैः कौतूहलात् स्फीततरैः नेत्रैः समन्तात् अभिवीक्ष्य-माणः किंनु नीलोत्पलैः विकीर्यमाणः (सन्) (राजकुमारः) शनैः शनैः राजपथं जगाहे।

व्याख्या—कौतूहलेति, किंच पौरैः पुरे भवाः पौराः, तैर्नगरवासिभिर्जनैः, कौतूह-लात् कुतूहलमेव कौतूहलं, तस्मात् कौतुकाद् उत्कण्ठयेत्यर्थः, स्फीत-तरैः अतिशयेन वृद्धिंगतैः प्रसारितैरितियावत्, नेत्रैः नयनैः, सम-न्तात् परितः, अभिवीक्ष्यमाणः-विलोक्यमानः, किं नु मन्ये नीलो-

१—मालैव माल्यम्—स्वार्थे ष्यञ्।

त्पलं नीलकमलैः,विकीर्यमाणः आच्छाद्यमानः सन्, राजकुमारः, शनैः शनैः-मन्दं मन्दम्, राजपथम्, जगाहे। मार्गे राजकुमाररथो मन्दं चचालेत्यर्थः। नेत्राणां नीलोत्पलसादृश्यात्--नेत्रपाते नीलोत्पलविकिरणमुत्प्रेक्षितम्।

तं तुष्टुवुः सौम्यगुणेन केचिद् ववन्दिरे दीप्ततया तथान्ये।
सौमुख्यतस्तु श्रियमस्य केचिद् वैपुल्यमाशंसिषुरायुषश्च॥११

अन्वय --केचित् तं सौम्यगुणेन तुष्टुवुः, तथा अन्ये दीप्ततया ववन्दिरे, केचित् तु सौमुख्यतः अस्य श्रियम् च आयुषः वैपुल्यं च आशंसिषुः।

व्याख्या-तमिति,केचिद् द्रष्टारः, तम्-राजकुमारम्,सौम्यगुणेन शान्ताकृतितया' तुष्टुवुः स्तुतवन्तः, तथा तेनैव प्रकारेण, अन्ये-अपरे, दीप्ततया-वर्चस्वितया, ववन्दिरे नमस्कृतवन्तः, केचित्तु, सौमुख्यतः-शोभनं मुखं यस्य स सुमुखः, तस्य भावः सौमुख्यं तस्माद् रमणीयमुखारविन्दतया,अस्य-राजकुमारस्य,श्रियम्-ऐश्वर्यम्, किं च,आयुषः-जीवनकालस्य, वैपुल्यम्-विपुलताम्-आधिक्यम्, आशंसिषुः-ऐच्छन्।

निःसृत्य नार्यश्च महाकुलेभ्यो व्यूहाश्च कैरातकवामनानाम्।
कुब्जाः कृशेभ्यश्च निवेशनेभ्यो देवानुयायिध्वजवत् प्रणेमुः॥१२॥

अन्वयः—(किं) च नार्यः महाकुलेभ्यः, च कैरातकवामनानां व्यूहाः कुब्जाः कृशेभ्यो निवेशनेभ्यः निःसृत्य देवानुयायिध्वजवत् प्रणेमुः।

व्याख्या--किं च नार्यः-स्त्रियः,महाकुलेभ्यः-महान्ति च तानि कुलानि, तेभ्यः-महागृहेभ्यः, किं च, कैरातकवामनानाम् किराता एव कैराताः, कुत्सिताः कैराताः कैरातकाः पुलिन्दाः, वामनाः खर्वशरीराः, तेषां व्यूहाः समूहाः, च-पुनः कुब्जाः गडुलाः कृशेभ्यः-स्वल्पेभ्यः,निवेशनेभ्यः-सदनेभ्यः, निःसृत्य-बहिरागत्य, देवानुयायिध्वजवत्-देवान् अनुयान्तीति देवानुयायिनः, ते च ते ध्वजाः देवानुयायिध्वजाः, त इव-देवानुगामिपताकावत्, प्रणेमुः-प्रणतवन्तः।

**तत कुमारः खलु गच्छतीति श्रुत्वा स्त्रियः प्रेष्यजनात् प्रवृत्तिम् ।**
**दिदृक्षया हर्म्यतलानि जग्मुर्जनेन मान्येन कृताभ्यनुज्ञाः ॥ १३ ॥**

अन्वयः—तत स्त्रिय कुमार गच्छति इति प्रेष्यजनात् प्रवृत्ति श्रुत्वा दिदृक्षया मान्येन जनेन कृताभ्यनुज्ञा. (सत्य ,) हर्म्यतलानि जग्मु ।

व्याख्या-तत इति, तत , स्त्रिय , कुमारः राजसूनु ,गच्छति खलु इति प्रेष्यजनात्-सेवकात्, प्रवृत्तिम्-वृत्तान्तम्, श्रुत्वा-आकर्ण्य दिदृक्षया-द्रष्टुमिच्छया, मान्येन-माननीयेन-भर्त्रादिना जनेन, कृताभ्यनुज्ञाः-कृता अभ्यनुज्ञा-अनुमतिर्यासा तथाभूता सत्यः, हर्म्यतलानि-हर्म्याणाम्, प्रासादानाम्, तलानि -पृष्ठ-भागान्, जग्मु -आरुरुहुः ।

**ताः स्रस्तकाञ्चीगुणविघ्निताश्च सुप्तप्रवुद्धाकुललोचनाश्च ।**
**वृत्तान्तविन्यस्तविभूषणाश्च कौतुहलेनापि भृतः परेयुः ॥ १४ ॥**

अन्वय --(किं) च ता स्रस्तकाञ्चीगुणविघ्निता च सुप्तप्रबुद्धाकुललोचना च वृत्तान्तविन्यस्तविभूषणा अपि कौतूहलेन भृता (सत्य ) परेयु ।

व्याख्या-ता इति, किं च,ता -राजकुमारं दिदृक्षवो नार्य स्रस्तकाञ्चीगुणविघ्निता -स्रस्ता ध्वस्ता ,काञ्च्या रशनाया , गुणास्तन्तव , तैर्जातो विघ्नो गमनान्तरायो यासा ताः, च-पुनः, सुप्तप्रवुद्धाकुललोचना -- पूर्वं सुप्ता निद्रिताः,पश्चात् प्रवुद्धा जागरिता , अत एव आकुले-तन्द्राशेषादलसे लोचने नेत्रे, यासा ता , वृत्तान्तविन्यस्तविभूषणा -वृत्तान्तेन राजकुमारागमनवृत्तान्तश्रवणेनेत्यर्थ , विन्यस्तानि-विपरीत न्यस्तानि वृतानि,विभूषणानि विविधान्याभरणानि, याभिस्तथाभूता अपि, कौतूहलेन-कुतुकेन-राजकुमारदर्शनोत्कण्ठया, भृता -पूरिताः सत्य , परेयु -जग्मु । गमनविघ्नहेतूना समुच्चयात् समुच्चय , सत्यपि गमन—प्रतिबन्धके गमनाप्रतिबन्ध इति विशेषोक्तिरपि ।

---

( १ ) तारकादित्वादितच् ।

( २ ) पूर्वं सुप्तप्रवुद्धयो 'पूर्वकालैक' इत्यादिना समास , तदनु आकुललोचनयोर्वहुव्रीहि । ततश्च द्वयो कर्मधारय - इत्थच कर्मधारयबहुव्रीहि-गर्भ कर्मधारयः ।

प्रासादसोपानतलप्रणादैः काञ्चीरवैर्नूपुरनिःस्वनैश्च ।
विभ्रामयन्त्यो गृहपक्षिसंघानन्योन्यवेगाच्च समाक्षिपन्त्यः ॥१५

अन्वय —(किं) च प्रासादसोपानतलप्रणादैः काञ्चीरवैः नूपुरनिस्वनैः गृहपक्षिसघान् विभ्रामयन्त्यः च अन्योन्यवेगात् समाक्षिपन्त्यः ।

व्याख्या—पुनस्ता एव राजकुमारदर्शनोत्सुकाः स्त्रीर्विशिनष्टि प्रासादेति,किं च, प्रासादसोपानतलप्रणादैः—प्रासादस्य भवनस्य सोपानानाम् आरोहणानाम्, तलेषु पृष्ठदेशेषु, प्रणादाः-पादाहतिशब्दाः तैः, काञ्चीरवैः-काञ्च्या रशनायाः, रवैः शब्दैः, नूपुरनिःस्वनैः-नूपुराणां मञ्जीराणाम्, निःस्वनैः शब्दैः, गृहपक्षिसघान्-गृहाणां पक्षिणो गृहपक्षिण गृहपालिता पतत्रिण, तेषां सघान् समूहान्, विभ्रामयन्त्यः-विविधं भ्रामयन्त्यः, किं च, अन्योन्यवेगात् परस्परवेगात्,समाक्षिपन्त्यः-अन्योन्यं वपुःसंघर्षं जनयन्त्यः, हर्म्यतलानि परेयुरिति शेषः । अहमहमिकया राजदर्शनाय सत्वरं सोपानमारोहन्तीनां नारीणां पादाहतिशब्दैः काञ्चीनूपुरकिङ्किणीक्वाणैश्च चकिता गृहपक्षिण इतस्ततः उत्पतन्ति स्म । तासाम् अन्योन्यं वपुःसंघर्षश्चाजनीति भावः ।

कासांचिदासां तु वराङ्गनानां जातत्वराणामपि चोत्सुकानाम् ।
गतिं गुरुत्वाज्जगृहुर्विशालाः श्रोण्यस्तथापीनपयोधराश्च ॥१६॥

अन्वयः—तु आसां कासांचिद् उत्सुकानाम् (अत एव) जातत्वराणाम् अपि वराङ्गनानां विशालाः श्रोण्यः तथा पीनपयोधराः च गुरुत्वाद् गतिं जगृहुः ।

व्याख्या—कासांचिदिति, किं तु, आसां मध्ये, कासांचित्-कतिपयानाम्, उत्सुकानाम्-कुमारदर्शनोत्कण्ठितानाम्, अत एव जातत्वराणाम्-जाता, त्वरा शीघ्रगतिर्यासां तादृशीनामपि, वराङ्गनानाम्-नारीणाम् विशालाः-पृथुलाः,श्रोण्यः-नितम्बप्रदेशाः, तथा, पीनपयोधराः-पीनाः स्थूलाः, पयोधराः स्तनाश्च, गुरुत्वात् पीनत्वात्, गतिम्, गमनम्, जगृहुः निजग्रहुः ।

**शीघ्रं समर्थापि तु गन्तुमन्या गतिं निजग्राह ययौ न तूर्णम् ।**
**ह्रिया प्रगल्भानि निगूहमाना रहःप्रयुक्तानि विभूषणानि ॥१७**

अन्वयः—तु अन्या शीघ्रं गन्तुं समर्था अपि रहःप्रयुक्तानि प्रगल्भानि विभूषणानि ह्रिया निगूहमाना गतिं निजग्राह, तूर्णं न ययौ ।

व्याख्या—शीघ्रमिति, किन्तु, अन्या–काचिद् वराङ्गना, शीघ्रम्–सत्वरम्, गन्तुम्–यातुम्, समर्था–प्रभुरपि, रहःप्रयुक्तानि एकान्ते धृतानि, प्रगल्भानि–अतिशयेन कान्तिमन्ति, विभूषणानि–आभरणानि, ह्रिया–लज्जया, निगूहमाना–अपह्नुवाना, गतिम्, निजग्राह–निगृहीतवती, तूर्णम्–शीघ्रम्, न ययौ–न जगाम । गतिनिग्रहस्य तूर्णगमनस्य च हेतुना समर्थनात् काव्यलिङ्गम् ।

**परस्परोत्पीडनपिण्डितानां संमर्दसंशोभितकुण्डलानाम् ।**
**तासां तदा सस्वनभूषणानां वातायनेष्वप्रशमो बभूव ॥१८॥**

अन्वयः–तदा परस्परोत्पीडनपिण्डितानां संमर्दसंशोभितकुण्डलानां सस्वनभूषणानां तासाम् वातायनेषु अप्रशमः बभूव ।

व्याख्या—परस्परेति, तदा नगर्यां राजकुमाररथप्रवेशकाले, परस्परोत्पीडनपिण्डितानाम् स्थानसङ्कोचात् परस्परम् अन्योन्यम्, उत्पीडनेन संमर्देन, पिण्डितानां–पिण्डीभूतानामिव, संमर्दसंशोभितकुण्डलानाम्–संमर्देन परस्परसंघर्षेण, संशोभितानि प्रासदीप्तीनि, कुण्डलानि कर्णाभरणानि, यासाम्, सस्वनभूषणानाम्–सस्वनानि समर्दवशात् परस्पराघातेन शब्दायितानि, भूषणानि–अलङ्काराः यासां तासां द्रष्ट्रीणां नारीणाम्, वातायनेषु–गवाक्षेषु, अप्रशमः–अशान्तिः, कलकल इति भावः, बभूव । वातायनेषु स्थानस्याल्पत्वाद् द्रष्ट्रीणां च बहुत्वात् समर्दवशेन ताः सुखं द्रष्टुं नाशक्नुवन्निति भावः ।

**वातायनेभ्यस्तु विनिःसृतानि परस्परोपाश्रितकुण्डलानि ।**

---

(१) निगूहमाना–'लक्षणहेत्वोः क्रियायाः' इति हेत्वर्थे शानच् । निगूहनार्थम् ।

**स्त्रीणां विरेजुर्मुखपङ्कजानि सक्तानि हर्म्येष्विव पङ्कजानि १९**

**अन्वय — तु वातायनेभ्य विनि सृतानि परस्परोपाश्रितकुण्डलानि स्त्रीणा मुखपङ्कजानि हर्म्येषु सक्तानि पङ्कजानीव विरेजु ॥**

व्याख्या — वातायनेभ्य इति, किंतु, वातायनेभ्यः-गवाक्षेभ्यः, विनि सृतानि-राजकुमारदिदृक्षया बहिर्भूतानि, परस्परोपाश्रितकुण्डलानि परस्परम् अन्योन्यम्, उपाश्रितानि मिलितानि, कुण्डलानि कर्णभूषणानि, यासां तासा स्त्रीणाम्, मुखपङ्कजानि-मुखानि पङ्कजानीव कमलसदृशानि मुखानि, हर्म्येषु-प्रासादेषु, सक्तानि-लम्बितानि, पङ्कजानीव-कमलानीव विरेजुः-शुशुभिरे । गवाक्षगतनारीमुखमण्डलस्य कमलसादृश्यात् कमलोत्प्रेक्षा ।

**ततो विमानैर्युवतीकलापैः कौतूहलोद्घाटितवातयानैः ।**
**श्रीमत्समंतान्नगरं बभासे वियद्विमानैरिव साप्सरोभिः ॥२०॥**

**अन्वय -तत कौतूहलोद्घाटितवातयानै युवतीकलापै (उपलक्षितै ) विमानै समन्तात् श्रीमद् नगर साप्सरोभिः विमानै वियदिव बभासे ।**

व्याख्या — ततइति, तत -गवाक्षजालाना युवतीभिरधिष्ठानाद् हेतो ,कौतूहलोद्घाटितवात यानै.-कौतूहलेन राजकुमारदर्शनोत्कण्ठया, उद्घाटितानि विवृतानि, वातयानानि गवाक्षा येषा तादृशैः, युवतीकलापै युवतीना सुंदरीणाम् कलापै समूहैः, उपलक्षितै विमानै -सप्तभूमै प्रासादैः, समन्तात् परित , श्रीमत् प्रशस्तशोभम्, नगरम्, साप्सरोभिः स्वर्नारीभिरधिष्ठितै , विमानै. व्योमयानैः, वियदिव-अन्तरिक्षमिव, बभासे-रुरुचे । पूर्णोपमा विमानोपमया प्रासादानामभ्रलिहत्व व्यज्यते ।

---

१— कौतूहलेत्यादिपद पूर्वागतेन 'विमानै' इति तृतीयान्तेन विशेषणतया अन्वेति, युवतीकलापैरिति तु उपलक्षणे तृतीया, युवतीकलापैरुपलक्षितानि विमानानीतिभाव । २— यान्त्येभिरिति यानानि, करणे ल्युट्, वाताना यानानि वातयानानि । ३—विमानो व्योमयाने च सप्तभूमिगृहेपि च इति मेदिनी । ४—अप्सरोभि सहितै साप्सरोभि , तुल्ययोगे बहुव्रीहिः ।

**वातायनानामविशालभावादन्योन्यगण्डार्पितकुण्डलानि ।**
**मुखानि रेजु प्रमदोत्तमानां वद्धाः कलापा इव पङ्कजानाम् २१**

अन्वय —वातायनानाम् अविशालभावाद् अन्योन्यगण्डार्पितकुण्डलानि प्रमदोत्तमाना मुखानि वद्धा. पङ्कजाना कलापाइव रेजुः ।

व्याख्या—वातायनेति, वातायनानाम्-जालमार्गाणाम्. अविशालभावाद् अविस्तृततया लघुत्वेनेत्यर्थ , अन्योन्यगण्डार्पितकुण्डलानि-अन्योन्यस्य गण्डेपु कपोलपालापु, अर्पितानि, कुण्डलानि येपा तादृशानि, प्रमदोत्तमानाम्-प्रमदासूत्तमा , तासा वराङ्गनानाम्, मुखानि आननानि, वद्धा , पङ्कजाना कलापाः समूहा इव, रेजु बभासिरे । उपमालङ्कारः।

**तस्मिन् कुमारं पथि वीक्षमाणा स्त्रियो बभुर्गामिव गन्तुकामाः**
**ऊर्ध्वोन्मुखाश्चैनमुदीक्षमाणा नरा बभुर्द्यामिव गन्तुकामाः ॥२२॥**

अन्वय.—तस्मिन् पथि कुमार वीक्षमाणा स्त्रिय गा गन्तुकामा इव बभुः, च एनम् उदीक्षमाणा (अतएव, ऊर्ध्वोन्मुखा नरा द्या गन्तुकामा इव बभु ।

व्याख्या—तस्मिन्निति, तस्मिन् अनिर्वचनीयशोभे, पथि-राजमार्गे, कुमारम्-शौद्धोदनिम्, वीक्षमाणा -विशिष्य सोत्कण्ठमीक्षमाणा स्त्रिय , गाम्-पृथ्वीम्, गन्तुकामा इव-अवतरीतुमिच्छव इव, बभु -भान्ति स्म । किं च, एनम् -राजकुमारम्, उदीक्षमाणाः-उत्कण्ठया पश्यन्त , अतएव, ऊर्ध्वोन्मुखा -ऊर्ध्वम् उर्ध्वादिशि उद्गतं मुख येषा तादृशाः सन्तो नरा , द्याम् अन्तारिक्षम्, गन्तुकामा इव-आरोढुमभिलाषुका इव, बभुः । गवाक्षस्था नार्यो ऽवाङ्मुख्य सत्य , भूमिष्ठा नराश्च उद्ग्रीवा सन्तो राजपथगामिन कुमार सोत्कण्ठमपश्यन् । परमुभयेऽपि दूरस्थतया नेत्रतृप्तिमनाप्नुवन्तस्तत्सान्निधित्सया गा द्या च गन्तुमनस इव समभाव्यन्तेतिभाव ।

**दृष्ट्वा च तं राजसुतं स्त्रियस्ता जाज्वल्यमानं वपुषा श्रिया च**

---

१—गन्तु कामो येपा यासा वेति विग्रहः, 'तुकाममनसोरपि' इति तुमुनो मलोप ।

**धन्यास्य भार्येति शनैरवोचञ् शुद्धैर्मनोभिः खलु नान्यभावात्२३**

अन्वय –(कि) च ता स्त्रियो वपुषा श्रिया च जाज्वल्यमान त राजसुत दृष्ट्वा 'अस्य भार्या धन्या' इति शुद्धै मनोभि अवोचन् खलु, अन्यभावाद् न ( अवोचन् ) ।

व्याख्या–दृष्ट्वेति, कि च ता –गवाक्षगता स्त्रिय , वपुषा-शरीरेण, श्रिया-कान्त्या च, जाज्वल्यमानम् अतिशयेन दीप्तिमन्तम्, राजसुतम्-राजकुमारम्, दृष्ट्वा-अवलोक्य, अस्य सर्वार्थसिद्धस्य, भार्या पत्नी, धन्या, यया ईदृश पतिरुपलब्ध इति, शुद्धै -पवित्रै पातिव्रतोचितैः, मनोभि - चेतोभिरभिप्रायैरितियावत्, अवोचन् अवादिषु खलु निश्चयेन । अन्यभावाद् -अन्यस्मादभिप्रायाद्-'अस्माक पतिरीदृशो न,' कथ वायमस्माभि पतिर्नाधिगत इति वा दुरभिप्रायाद् नावोचन् ।

**अयं किल व्यायतपीनबाहू रूपेण साक्षादिव पुष्पकेतु. ।**
**त्यक्त्वा श्रियं धर्ममुपैष्यतीति तस्मिन् स्त्रियो गौरवमेव चक्रुः**

अन्वय –व्यायतपीनबाहु रूपेण साक्षात् पुष्पकेतुरिव (स्थित ) अय श्रिय त्यक्त्वा धर्मम् उपैष्यति किल इति (हेतो ) स्त्रिय तस्मिन् गौरव चक्रुः एव ।

व्याख्या–अयमिति, व्यायतपीनबाहु –व्यायतौ दीर्घौ आजानुलम्बिनौ, पीनौ पुष्टौ, बाहू भुजौ यस्य स , रूपेण-सौन्दर्येण, साक्षाद्–मूर्तिधर पुष्पकेतुः-कामइव स्थित , अय राजकुमारः, श्रियम्-राज लक्ष्मीम्, त्यक्त्वा, धर्मम्-तपोलक्षण धर्मम् उपैष्यतिप्राप्स्यति किल, इति हेतो , स्त्रिय , तस्मिन्-राजकुमारे गौरवम्–गुरोर्भावम् आदरम्, चक्रुरेव-अवश्य कृतवत्यः ।

---

१–किलेति वार्तायाम् 'वार्तासम्भाव्ययो. किल' । बुद्धजन्मसमये दैवज्ञैः कथितमासाद् यदय राजलक्ष्मी तिरस्कृत्य विरक्तो भविष्यतीति ।

**कीर्ण तथा राजपथं कुमारः पौरैर्विनीतैः शुचिधीरवेषैः ।**
**तत्पूर्वमालोक्य जहर्ष किंचिन् मेने पुनर्भावमिवात्मनश्च ॥२५॥**

अन्वय – कुमारः विनीतैः शुचिधीरवेषैः पौरैः तथा कीर्णं राजपथं तत्पूर्वम् आलोक्य किंचिद् जहर्ष, (किं) च आत्मनः पुनर्भावमिव मेने ।

व्याख्या–कीर्णमिति, कुमारः–शुद्धोदनसुत, विनीतैः–विनयान्वितैः, शुचिधीरवेषैः –शुचिरुज्ज्वल, धीरो धीरजनोचितः, वेषो वस्त्राणि येषां तैः, पौरैः -पुरवासिभिर्जनैः, तथा–पूर्वोक्तेन प्रकारेण, कीर्णम् –व्याप्तम्, राजपथम्–राजमार्गम्, तत्पूर्वम्-तदेव पूर्वं यस्मिन् कर्मणि यथा भवति तथा-इदप्रथमतया, आलोक्य-दृष्ट्वा, किंचिद्-निसर्गविरक्ततया किंचिदेव नत्वाधिकम्, जहर्ष–प्रससाद, किं च आत्मन स्वस्य, पुनर्भावमिव–पुनर्जन्मेव, मेने, अद्भुत नगरपरिस्थितिनिरीक्षणेन पुनर्जन्मसभावना । यथा पुनर्जन्मनि अद्भुतस्य पूर्वापेक्षया विलक्षणस्य शरीरेन्द्रियादे सयोग, तथेहाप्यद्भुतस्य विषयस्य सबन्ध इत्यस्ति सभावनाबीजम् ।

**पुरं तु तत्स्वर्गमिव प्रहृष्टं शुद्धाधिवासा समवेक्ष्य देवा ।**
**जीर्णं नरं निर्ममिरे प्रयातुं संचोदनार्थं क्षितिपात्मजस्य ॥२६॥**

अन्वयः–तु शुद्धाधिवासाः देवाः तत् पुरं स्वर्गमिव प्रहृष्टं समवेक्ष्य क्षितिपात्मजस्य सचोदनार्थं प्रयातुं जीर्णं नरं निर्ममिरे ॥

व्याख्या–पुरमिति किं तु शुद्धाधिवासा -शुद्ध क्लेशैरसपृक्त, अधि-उपरि द्युलोके, वास, येषां ते देवा -इन्द्रादय., तत् पुरम्-कपिलवास्तुनामक नगरम्, स्वर्गमिव, प्रहृष्टम्-प्रसन्नम्, समवेक्ष्य-विलोक्य, क्षितिपात्मजस्य-राजकुमारस्य, सचोदनार्थम्-विरक्तये प्रेरणार्थम्, प्रयातुम्-प्रयाणाय- मरणायेत्यर्थ, जीर्णम्–जरयातिशीर्णकलेवरम् -मुमूर्षुमिति भाव., नरम्, निर्ममिरे-निर्मितवन्त । यद्यपि राज्ञा मा स्म मे सुतो विरक्तिमुपपादिति सावधान राजपथे दीनहीनजनाना यातायात निवारितम् । तथापि देवै राजकुमारस्य विरक्तिजननार्थं मध्येमार्ग

मुमूर्षुरेक उत्पादित ।

**तत कुमारो जरयाभिभूत दृष्ट्वा नरेभ्य पृथगाकृति तम् ।**
**उवाच संग्राहकमागतास्थस्तत्रैव निष्कम्पनिविष्टदृष्टि ॥ २७ ॥**

अन्वय --तत कुमार-जरया अभिभूतम् ( अत एव ) नरेभ्य. पृथगाकृति त दृष्ट्वा तत्र एव निष्कम्पनिविष्टदृष्टि· ( अत एव ) आगतास्थः ( सन् ) संग्राहकम् उवाच।

व्याख्या -तत इति, तत --देवैर्मुमूर्षुजनोत्पत्त्यनन्तरम्, कुमार ,जरया-वार्धक्येन, अभिभूतम्-आक्रान्तम्, अतएव नरेभ्य - शुचिवीर वेषेभ्यो युवभ्यो दृष्टपुरुषेभ्य ? पृथगाकृतिम्-पृथग् आकृतिर्यस्य त भिन्नाकारम्, त देवनिर्मित जीर्ण नर दृष्ट्वा, तत्रैव जीर्णे नरे, निष्कम्पनिविष्टदृष्टि.-निष्कम्प निश्चल यथा स्यात् तथा निविष्टा निपतिता, दृष्टिर्यस्य तादृश , अत एव आगतास्थ -आगता समुदिता, आस्था आदरो यस्य स समुत्पन्नकरुण· सन् संग्राहकम्-अश्वरश्मिग्राहक सारथिम्, उवाच ।

**क एष भोः सूत ! नरोऽभ्युपेत· केशै सितैर्यष्टिविषक्तहस्त ।**
**भ्रसंवृताक्ष शिथिलानताङ्ग· किंविक्रियैषा प्रकृतिर्यदृच्छा ॥ २८ ॥**

अन्वय --भो सूत ! सितै केशै ( उपलक्षित. ) यष्टिविषक्तहस्त असंवृताक्ष.शिथिलानताङ्ग· एष क. नर अभ्युपेत ? किम् एषा विक्रिया प्रकृति. ( उत ) यदृच्छा ?

व्याख्या--अथ जीर्ण नर वर्णयति क एष इति। भो सूत ! भो सारथे ! सितै -श्वेत., केशै --शिरोरुहैरुपलक्षित , यष्टिविषक्तहस्त.-यष्टौ, विषक्त आलम्बित , हस्तो येन स, असंवृताक्ष --भ्रूभिर्वार्धक्यवशाल्लम्बमानैः-भ्रूवाल., संवृते--आच्छादिते, अक्षिणी-नेत्रे यस्य स , शिथिलानताङ्ग -शिथिलानि-श्लथानि, आनतानि भुग्नानि, अङ्गानि पृष्ठादीनि यस्य तादृश , एष,: क - कीदृश , नर , अभ्युपेत.-अस्माक सम्मुखमुपस्थितोऽस्ति ? किम् एषा पुरो दृश्यमाना, विक्रिया-विकार., प्रकृति. स्वभाव , सर्वेषामेव जायते, उत यदृच्छा-

यदृच्छाजनित आकस्मिकोऽयं विकारो यस्य कस्यचिदेव भवति वृद्धस्वभाववर्णनात् स्वभावोक्ति ।

इत्येवमुक्तः स रथप्रणेता निवेदयामास नृपात्मजाय ।
संरक्ष्यमप्यर्थमदोषदर्शी तैरेव देवैः कृतबुद्धिमोहः ॥ २९ ॥

अन्वय -इति एवम् उक्तः स. रथप्रणेता तैः देवैः एव कृतबुद्धिमोहः ( अत एव ) अदोषदर्शी ( सन् ) संरक्ष्यम अपि अर्थं नृपात्मजाय निवेदयामास ।

व्याख्या-इत्येवमिति इत्येवम्-पूर्वोक्तप्रकारेण, उक्तः-अनुयुक्त, सः, रथप्रणेता-रथस्य यानस्य, प्रणेता-चालक सारथिरितियावत्, तै -पूर्वोक्तैर्मुमूर्षुवृद्धजनोत्पादकै, देवैरेव, कृतबुद्धिमोह -कृतो बुद्धिमोहो मतिविभ्रमो यस्य सः, अत एव अदोषदर्शी-कथने दोषमपश्यन् सन्, संरक्ष्यम्-गोपनीयमप्रकाश्यमपि, अर्थम्, नृपात्मजाय राजकुमाराय, निवेदयामास-कथितवान् ।

रूपस्य हर्त्री व्यसनं वलस्य शोकस्य योनिर्निधनं रतीनाम् ।
नाशः स्मृतीनां रिपुरिन्द्रियाणामेषा जरा नाम ययैष भग्नः ॥३०॥

अन्वय - रूपस्य हर्त्री, वलस्य व्यसनं, शोकस्य योनि, रतीनां निधनम्, स्मृतीनां नाश, इन्द्रियाणां रिपु, एषा जरा नाम (अस्ति) यया एष भग्न ।

व्याख्या—रूपस्येति, रूपस्य-सौन्दर्यस्य, हर्त्री-विनाशयित्री, वलस्य -शारीरमानस्याश्च शक्ते., व्यसनम्-ध्वंसहेतु, शोकस्य-दु खस्य, योनि -कारणम्, रतीनाम्-विषयास्वादस्य, निधनम्-विनिवर्तकम्, स्मृतीनाम्-अतीतस्मरणस्य, नाश -नाशकारणम्, इन्द्रियाणाम्-चक्षुरादीनाम्, रिपु -स्वविषयग्रहणसामर्थ्यहारकत्वाच्छत्रु., एषा--पुरोविद्यमाने नरे दृश्यमाना विक्रिया, जरा-वार्द्धक्य नाम, अस्तीति शेष । नामेति प्रसिद्धौ । यया जरया, एष - पुरोवर्तमान. पुरुष, भग्न -शिथिलतां नीत ।

पीत ह्यनेनापि पयः शिशुत्वे कालेन भूय. परिमृष्टमुर्व्याम् ।
क्रमेण भूत्वा च युवा वपुष्मान् क्रमेण तेनैव जरामुपेत ॥३१॥

अन्वय –अनेन अपि शिशुत्वे पयःपीत हि, कालेन उर्व्यां भूयः परिमृष्टम्, च क्रमेण वपुष्मान् युवा भूत्वा तेन एव क्रमेण जराम् उपेतः ।

व्याख्या–पीतमिति, अनेन-पूर्ववर्णितेन नरेणापि, अपिशब्दोऽस्मदादिसमुच्चयार्थ., यथास्मदादिभिस्तथानेनापीत्यर्थः । शिशुत्वे बाल्ये वयसि, पय –स्तन्यम्, पीतम्, हि-निश्चयेन । कालेन-कालक्रमेण, उर्व्याम् पृथिव्याम्, भूयः–भूरि, परिमृष्टम्–रिङ्गितम् धूलौ खेलितमितिभाव । किं च क्रमेण शैशवमतीत्य, वपुष्मान्-प्रशस्तशरीर, युवा, भूत्वा, तेनैव क्रमेण यौवनमतीत्य, जराम्-वृद्धत्वम्, उपेत-प्राप्तवान ।

इत्येवमुक्ते चलित स किञ्चिद् राजात्मज सूतमिदं बभाषे ।
किमेष दोषो भविता ममापीत्यस्मै ततः सारथिरभ्युवाच ॥३२॥

अन्वय -इति एवम् उक्ते, (सति) किञ्चिद् चलित स राजात्मज सूतम् इद बभाषे, किम् एष दोष. मम अपि भविता इति, तत सारथि अस्मै अभ्युवाच ।

व्याख्या–इत्येवमिति, इत्येवम्–पूर्वोक्तप्रकारेण, उक्ते प्रत्युक्ते सति, किञ्चिद, अग्रे, चलितः, स.-राजात्मज –राज शुद्धोदनस्य, आत्मज· पुत्र·, सूतम्–सारथिम्, इद बभाषे-पप्रच्छेत्यर्थ । किम्, एष.-जरा नाम, दोष.-विक्रिया, मम-राजकुमारस्यापि सत, भविता-भविष्यति, इति । तत.-एतत्प्रश्नानन्तरम्, सारथि., अस्मै-राजपुत्राय, अभ्युवाच-प्रत्युक्तवान्-प्रत्युत्तर ददाविति भावः

आयुष्मतोऽप्येष वयोऽपकर्षो नि.संशय कालवशेन भावी ।
एव जरा रूपविनाशयित्री जानाति चैवेच्छति चैष लोक ॥३३॥

अन्वय - कालवशेन (प्रवर्तमान.) एष. वयोऽपकर्ष आयुष्मत अपि नि संशय भावी, एष लोक एव रूपविनाशयित्री जरा जानाति

---

१ परिमृशते क्त । २ प्राशस्त्ये मतुप । ३ कर्तरि क्त. ।

एव च, इच्छति च ।

व्याख्या–आयुष्मत इति, कालवशेन-समयानुक्रमेण, प्रवर्तमानः, एष, वयो-ऽपकर्षः-वयसः-जीवनकालस्य अपकर्षः ह्रासः, वार्धक्यमिति यावत्, आयुष्मतः-चिरजीविनः भवत अपि, निःसंशयम्-निःसन्देहं यथा स्यात् तथा, भावी-भविष्यति, एषः, लोकः-जनः, एवम्-इत्थम्, रूपविनाशयित्रीम्, जराम् जानात्येव च, इच्छति- कामयते च । यश्चिरजीवेत् सोऽवश्य जरामुपेयात्, तथा चेतदाश्चर्यं यत् सर्वो-ऽपिलोकः प्रत्यक्षं जराया रूपविनाशहेतुत्वमवगच्छन्नपि जराहेतु-चिरजीवनमभिवाञ्छति इतिभावः ।

ततः स पूर्वाशयशुद्धबुद्धिर्विस्तीर्णकल्पाचितपुण्यकर्मा ।
श्रुत्वा जरामुद्विविजे महात्मा महाशनेर्घोषमिवान्तिके गौः ॥३४॥

अन्वयः-ततः पूर्वाशयशुद्धबुद्धिः विस्तीर्णकल्पाचितपुण्यकर्मा महात्मा सः जरां श्रुत्वा अन्तिके महाशनेः घोषं (श्रुत्वा) गौरिव उद्विविजे ।

व्याख्या—तत इति, ततः-सारथिप्रतिवचनश्रवणसमनन्तरम् पूर्वाशयशुद्धबुद्धिः पूर्वः पूर्वजन्मनि संचितः, आशयः-वासना, तेन शुद्धा निर्मला, बुद्धिः, यस्य सः विस्तीर्णेषु-विशालेषु अनेकयुगा-त्मकेषु, कल्पेषु, आचितानि-अनुष्ठितानि, पुण्यानि पुण्यजनकानि पवित्राणि वा, कर्माणि यज्ञदानादीनि येन तादृशः, अत एव महात्मा-महान् आत्मा यस्य तथोक्तः, स राजकुमारः, जराम् वार्धक्यम्, श्रुत्वा, अन्तिके-समीपे, महाशनेः- महाश्चासावशनिर्वज्रम्, तस्य घोषं नादं श्रुत्वा, गौरिव, उद्विविजे — उद्विग्नोऽभूत् ।

निःश्वस्य दीर्घं सशिरःप्रकम्पं तस्मिंश्च जीर्णे विनिवेश्य चक्षुः ।
तां चैव दृष्ट्वा जनतां सहर्षां वाक्यं स संविग्नमिदं जगाद ॥३५॥

अन्वयः (किं) च सः सशिरःप्रकम्पं तस्मिन् जीर्णे चक्षुः विनिवेश्य दीर्घं निःश्वस्य, च तां जनतां सहर्षां दृष्ट्वा संविग्नं (यथा स्यात् तथा) इदं वाक्यं जगाद ।

व्याख्या निःश्वस्येति, किञ्च सः-राजकुमारः, सशिरःप्रकम्पे-शिरसः प्रकम्पः शिरःप्रकम्पः, तेन सह वर्तत इति सशिरःप्रकम्पः, तस्मिन्-वार्धक्यजनितवायुप्रकोपेन शिरःकम्पयुक्ते, तस्मिन्-पूर्ववर्णिते, जीर्णे-जराक्रान्ते पुरुषे, चक्षुः विनिवेश्य-सावधानं दृष्ट्वेत्यर्थः, समुत्पन्नव्यथ, [1] दीर्घं निःश्वस्य-दीर्घं निःश्वासमादाय, च-पुनः, ताम् पश्यन्तीम् जनताम्[2]-जनसमूहम्, सहर्षाम्-हर्षेण सहिताम्, दृष्ट्वा, सविभ्रमं सोद्वेगं यथा स्यात् तथा, इदं वाक्यं जगाद-प्रोवाच।

**एवं जरा हन्ति च निर्विशेषं स्मृतिं च रूपं च पराक्रमं च।**
**न चैव चोद्वेगमुपैति लोकः प्रत्यक्षतोऽपीदृशमीक्षमाणः॥२६॥**

अन्वयः—जरा एवम् निर्विशेषं स्मृतिं च रूपं च पराक्रमं च हन्ति, च लोकः प्रत्यक्षतः अपि ईदृशम् ईक्षमाणः (सन्) उद्वेगम् न उपैति।

व्याख्या—एवमिति, जरा-वार्धक्यम्, एवम्-एतद्वृद्धपुरुषसादृश्येन, निर्विशेषम्-निर्गतो विशेषो यस्या क्रियाया यथा भवति तथा, अयं राजा अयं रङ्क इत्यादिविशेषमनपेक्ष्य सर्वस्यापि पुरुषस्येत्यर्थः, स्मृतिम्-स्मर्यतेऽनयेति स्मृतिः[3] ताम् स्मरणशक्तिम्, रूपम्-सौन्दर्यं च, पराक्रमम्-शारीरं बलं च, हन्ति-विनाशयति। किं च-किन्तु, लोकः, प्रत्यक्षतः[4]—चक्षूरूपेण प्रत्यक्षेण प्रमाणेनापि, ईदृशम्-स्मृत्यादिविलोपेन जराकृतं लोकवैकल्यम्, ईक्षमाणः-पश्यन् सन् उद्वेगम् त्रासम्, नोपैति न प्राप्नोतीति महच्चित्रम्। प्रत्यक्षतोऽपीत्यपिशब्देन जरायाः स्मृत्यादिविनाशकत्वे अविश्वासकारणं निराकृतम्। उद्वेगकारणे सत्यपि तदनुत्पादाद् विशेषोक्तिः, गाथे-

१—सशिरःप्रकम्पमिति पाठे द्वितीयान्तं निःश्वसनक्रियाविशेषणं बोध्यम्, शिरःकम्पसहितं यथास्यात् तथा दीर्घं निःश्वस्येत्यर्थः। २—जनशब्दात् समूहार्थे 'ग्रामजनबन्धुभ्यस्तल्'। ३—करणे क्तिन्, ४—तसिल्वर्थे, ५—आद्यादित्वात् [illegible]तसिल्।

ह्यचिन्त्यानिमित्ता ।

**एव गते सूत निवर्तयाश्वान् शीघ्र गृहाण्येव भवान् प्रयातु ।**
**उद्यानभूमौ हि कुतो रतिर्मे जराभये चेतसि वर्तमाने ॥३७॥**

अन्वय –[हे] सूत ! एव गते अश्वान् निवर्तय, भवान् गृहाणि एव प्रयातु, हि चेतसि जराभये वर्तमाने [सति] उद्यानभूमौ मे रति कुत [स्यात्]

व्याख्या--एव मिति, हे सूत ! हे सारथे ! एवं गते इत्थभूतायामवस्थितौ, अश्वान् निवर्तय परावर्तय, भवान्, गृहाण्येव, नतूद्यानभूमिम्. शीघ्रम्-त्वरितम्. प्रयातु-प्रचलतु । हि-यत, चेतसि-चित्ते, जराभये-वार्धक्यजनितभीतौ, वर्तमाने, सति उद्यानभूमौ-उपवनभुवि, मे मम, रति -प्रेम, कुत -कस्मात् कारणात् स्यात् । अव्याकुले चेतसि वनविहारादिक रुचिमुत्पादयति ।

**अथाज्ञया भर्तृसुतस्य तस्य निवर्तयामास रथं नियन्ता ।**
**ततः कुमारो भवनं तदेव चिन्तावशः शून्यमिव प्रपेदे ॥ ३८ ॥**

अन्वय --अथ नियन्ता तस्य भर्तृसुतस्य आज्ञया रथ निवर्तयामास, तत चिन्तावश कुमार. तद् एव भवन शून्यमिव ( मन्यम न. सन् ) प्रपेदे ।

व्याख्या- -अथेति, अथ राजकुमाराज्ञानन्तरम, नियन्ता-सारथि, तस्य-वृद्धदर्शनाद् निर्विण्णस्य, भर्तृसुतस्य-भर्तु -स्वामिन, सुतस्य-सूनो राजकुमारस्य, आज्ञया, रथम्, निवर्तयामास-परावर्तयामास, उद्यान भूमिगामिनो मार्गादिति शेष । तत. तदनन्तरम्[1], चिन्तावश चिन्ताया वश अधीन, जराजनितपालित्यपालि यकुब्जतादि विकारान् स्मरन्निति भाव, तदेव पूर्वानुभूत सर्वसम्पद्विशिष्ट भवनम्-प्रासादम, शून्यमिव रिक्त दरिद्रेटजमिव,मन्यमान सन्, प्रपेदे-प्राप । निरन्तर जराविकारानुध्यानेन समुत्पन्नवैराग्यस्य राजकुमारस्य

---

१-'जराभेत्र ' इति वकारविशिष्ट. पाठस्तत्र पाठः ।

कृते सकलविलाससामग्रीविशिष्टमपि तद् भवन न सुखकरमभवदिति भाव. ।

**यदा तु तत्रैव न शर्म लेभे जरा जरेति प्रपरीक्षमाण. ।**
**तदा नरेन्द्रानुमतः स भूयः क्रमेण तेनैव बहिर्जगाम ॥ ३९ ॥**

अन्वयः— तु यदा सः जरा जरा इति प्रपरीक्षमाण ( सन् ) तत्र एव न शर्म लेभे, तदा नरेन्द्रानुमत ( सन् ) भूय तेन एव क्रमेण बहिः जगाम ॥

व्याख्या— यदेति, किंतु, यदा, स-राजकुमार , 'जरा जरा' इति प्रपरीक्ष-माण -प्रकर्षेण परितो वार्धक्यविचारान् अनुध्यायन् सन् तत्रैव स्वप्रासादेऽपि, शर्म-सुखम्, न लेभे न प्राप, तदा-तर्हि, नरेन्द्रा-नुमत -नरेन्द्रेण राज्ञा स्वपित्रा, अनुमतोऽनुज्ञात सन्,, भूय -पुन , तेनैव क्रमेण-पूर्वोक्तयैव रीत्या, बहिः-नगरात् बहिरुपवनविहारा-दिकृते, जगाम-ययौ ।

**अथापर व्याधिपरीतदेहं त एव देवा. ससृजुर्मनुष्यम् ।**
**दृष्ट्वा च तं सारथिमाबभाषे शौद्धोदनिस्तद्गतदृष्टिरेव ॥४०॥**

अन्वयः- अथ ते एव देवाः व्याधिपरीतदेहम् अपर मनुष्य ससृजु , च शौद्धोदनि त दृष्ट्वा तद्गतदृष्टिः ( सन् ) एव सारथिम् आबभाषे ।

व्याख्या- -अथेति, अथ--राजकुमारस्य बहि. प्रस्थानानन्तरम्, ते एव देवा , ये पूर्वयात्रायां जीर्ण पुरुष उत्पादित , व्याधिपरीतदेहम्-- व्याधिभि -रोगै , परीतो व्याप्तो देह शरीर यस्य तादृशम्, अपरम-द्वितीयम, मनुष्यम्, ससृजु - उत्पादयामासु । किंच शौद्धोदनि -- शुद्धोदनस्य सुतो राजकुमार इति यावत् तम्- व्याधिपीडितम, नर दृष्ट्वा, तद्गतदृष्टि - तत्र व्याधिपीडिते, गता, दृष्टिर्यस्य तादृश. - तामेवलग्नचक्षु' सन्नेव, सारथिम्, आबभाषे- उक्तवान- पप्रच्छेत्यर्थ ।

१—एवकारोऽप्यर्थः, २ -शर्म-सात-सुखानि चेत्यमर ।

**स्थूलोदरः श्वासचलच्छरीरः स्रस्तांसबाहुः कृशपाण्डुगात्रः ।**
**अम्बेति वाचं करुणं ब्रुवाणः परं समाश्लिष्य नरः क एषः ॥४१॥**

अन्वय -स्थूलोदरः श्वासचलच्छरीर स्रस्तांसबाहु कृशपाण्डुगात्र (हे) अम्ब इति वाच करुण ब्रुवाणः पर समाश्लिष्य (स्थित) एष क नर (अस्ति)।

व्याख्या -स्थूलोदर इति, स्थूलोदर -स्थूल वृहत् रोगवशादाध्मातम्, उदर यस्य तादृश, श्वासचलच्छरीर श्वासेन--श्वासरोगेण, चलत् कम्पमानम् शरीर यस्य तथोक्त स्रस्तांसबाहु.--स्रस्तौ श्लथौ, असौ स्कन्धौ, बाहू भुजौ च यस्य स कृशपाण्डुगात्र.--कृशम्-क्षीणम्, पाण्डु-रक्तन्यूनतया पीतम गात्र शरीर यस्य स, हे अम्ब-हे मात, इति, वाचम्, करुणम्-दीन यथा स्यात् तथा ब्रुवाण -उच्चारयन्, अशक्ततया स्वय स्थातुमशक्नुवन्, परम्-द्वितीयम्, नरम्, समाश्लिष्य-आलम्ब्य, स्थित, एष.-पुरो दृश्यमान, नर, कः- अस्तीति शेषः ।

**ततोऽब्रवीत् सारथिरस्य सौम्य ! धातुप्रकोपप्रभव प्रवृद्धः ।**
**रोगाभिधान सुमहाननर्थः शक्रोऽपि येनैष कृतोऽस्वतन्त्र ॥४२॥**

अन्वयः-तत सारथिः अब्रवीत् (हे) सौम्य ! अस्य एषः धातुप्रकोपप्रभव· प्रवृद्ध. रोगाभिधानः सुमहान् अनर्थः (अस्ति) येन शक्रः (अपि) अस्वतन्त्रः कृतः ।

व्याख्या -तत इति, ततः-राजकुमारप्रश्नानन्तरम्, सारथिः-अब्रवीत्-प्रत्यवोचत्, हे सौम्य ! अस्य-पुरो दृश्यमानस्य नरस्य, एष इत्यङ्गुल्या निर्देश., धातुप्रकोपप्रभव -धातुना शरीरस्थितिहेतुना वातपित्तकफानाम्, प्रकोपो-वैषम्यम्, तस्मात् प्रभव -उत्पत्तिर्यस्य स, प्रवृद्ध -प्रकर्षेण वृद्धि प्राप्त, रोगाभिधानः-रोग इत्यभिधान, यस्य स, सुमहान्

---

१ प्लुतस्य वैभाषिकत्वात् सन्धि । २. असौ च बाहू च असबाहु, समाहारद्वन्द्व, प्राण्यङ्गत्वादेकवद्भाव । ततः स्रस्तशब्देन बहुव्रीहिः । ३ स्कन्धो भुजशिरोंसोऽस्त्री' इत्यमर. ।

अतिक्रहन्, अनर्थः-अत्याहितम्, अस्ति, येनानर्थेन, शक्रः-देवाधिप इन्द्रोऽपि, अस्वतन्त्र.-परतन्त्र , कृतः ।

**इत्यूचिवान् राजसुत स भूयस्तं सानुकम्पं नरमीक्षमाण· ।**
**अस्यैव जातः पृथगेष दोषः सामान्यतो रोगभय प्रजानाम् ॥४३॥**

**अन्वय –तं नरं सानुकम्पम् ईक्षमाण स राजसुत· भूय इति ऊचिवान् ( किम् ) एष दोष पृथग् अस्य एव जातः ( उत ) प्रजाना रोगभय सामान्यत ( अस्ति )**

व्याख्या– इत्यूचिवानिति, तम्–रोगिणम्, नरम्, सानुकम्पम्-अनुकम्पया करुणया सहित यथा स्यात् तथा, ईक्षमाण –पश्यन् स राजसुत – शौद्धोदनि·, भूय – पुनरपि, इति--वक्ष्यमाणम्, ऊचिवान्· उवाच–पप्रच्छेत्यर्थ । किम् एषः, दोष - रोग , पृथग्--असाधारण्येन, अस्यैव नरस्य, जात --उत्पन्न , उत, प्रजानाम्--जनानाम् रोगभयम्-- रोगेभ्यो भय भीति , सामान्यत.–साधारण्येन, अस्ति ?

**ततो बभाषे स रथप्रणेता कुमार ! साधारण एष दोषः ।**
**एवं हि रोगैः परिपीड्यमानो रुजातुरो हर्षमुपैति लोकः ॥४४॥**

**अन्वय.–ततः स रथप्रणेता बभाषे, ( हे ) कुमार ? एष दोषः साधारण एव रोगैः परिपीड्यमान रुजातुर. ( अपि ) लोकः हर्षम् उपैति हि ॥**

व्याख्या--तत इति, ततः–राजकुमारप्रश्नानन्तरम्, स –पूर्वोक्तः, रथप्रणेता-रथवाहक सूत , बभाषे-- राजकुमार प्रत्युवाच। हे कुमार ! एष – पुरोवर्तिना नरेणानुभूयमान , दोष · रोगाख्य , साधारण -- सर्वेषा जनाना भवति, नहि कश्चिदपि प्राणी रोगभयान् मुक्त इति भाव । कि च एवम्- एतत्सादृश्येन, रोगै –विविधैर्व्याधिभि –परिपीड्य-मान –परितो व्यथ्यमान , रुजातुर –रोगार्तोऽपि लोक , हर्षमुपैति–प्रसीदति–इति चित्रम् ।

**इति श्रुतार्थ स विषण्णचेता· प्रावेपताम्बूर्मिगत शशीव ।**
**इदं तु वाक्यं करुणान्वित सन् प्रोवाच किञ्चिन्मृदुना स्वरेण॥४५॥**

अन्वय-इति श्रुतार्थ स विपरणचेता (सन्) अम्बूर्मिगत शशीव प्रावेपत, च करुणान्वित सन् किञ्चिन्मृदुना स्वरेण इद वाक्य प्रोवाच ।

व्याख्या-इतीति-इति-पूर्वोक्तप्रकारेण, श्रुतार्थ - श्रुत आकर्णितः, अर्थः ससारस्य जरारोगभयजनकत्वरूप येन तादृश , स -राजकुमारः, विपरणचेता - विपरण विषादाक्रान्तम् चेताश्चित यस्य तादृशः सन्, अम्बूर्मिगत - अम्बूना जलानाम्, ऊर्मिषु वीचिषु, गत प्रतिबिम्बित , शशीव- चन्द्र-इव, प्रावेपत-प्राकम्पत, किं च करुणान्वित -करुणया दयया अन्वितो युक्तः सन्, किञ्चिन् मृदुना-किञ्चित् कोमलेन, स्वरेण, इदम् वक्ष्यमाणम्, वाक्यम्, उवाच ।

**इदं च रोगव्यसनं प्रजानां पश्यंश्च विश्रम्भमुपैति लोकः ।**
**विस्तीर्णविज्ञानमहो नराणां हसन्ति यद्रोगभयैरमुक्ता ॥४६॥**

अन्वयः-लोक प्रजानाम् इद रोगव्यसन पश्यन् च[1] विश्रम्भम् उपैति, अहो नराणा विस्तीर्णविज्ञानम् यद् रोगभयै अमुक्ता (अपि) हसन्ति ।

व्याख्या-इदमिति-लोक -जन', प्रजानाम्—अन्येषा जनानाम्, इदम्— पुरोऽनुभूयमानम्, रोगव्यसनम्-रोगजा विपत्तिम्, पश्यन्-ईक्षमाणो- ऽपि, विश्रम्भम्-अह जरारोगभयेन विमुक्तो जीविष्यामि-इति विश्वासम्, उपैति-प्राप्नोति, अहो- अद्भुतम्, नराणाम्, विस्तीर्णविज्ञानम्- विस्तीर्णं विज्ञानम्-अनुभव , उपहासोक्तिरियम्, यत्, रोगभयै , कासश्वासादिरोगोत्पन्नाभिर्भीतिभिः, अमुक्ता -अत्यक्ता अपि, हसन्ति- हृष्यन्तीत्यर्थ ।

**निवर्त्यतां सूत ! बहिः प्रयाणान्नरेन्द्रसद्मैव रथः प्रयातु ।**
**श्रुत्वा च मे रोगभयं रतिभ्यः प्रत्याहतं संकुचतीव चेतः ॥४७॥**

अन्वय.-(हे) सूत ! बहिः प्रयाणाद् निवर्त्यताम् रथ नरेन्द्रसद्म एव प्रयातु, रोगभय श्रुत्वा प्रत्याहत मे चेत रतिभ्य सकुचति इव ।

१—चकारोऽप्यर्थ. ।

व्याख्या—निवर्त्यतामिति—हे सूत—हे सारथे, बहिः प्रयाणात्—उपवनविहाराय बहिः प्रस्थानात्, निवर्त्यताम्-विरम्यताम्, रथः, नरेन्द्रसद्म-नरेन्द्रस्य सद्म-राजप्रासादमेव, प्रयातु-गच्छतु । रोगभयं श्रुत्वा, प्रत्याहृतम्-विपरणम्, मे मम, चेतः, रतिभ्यः-विषयसुखेभ्यः, सङ्कुचतीव सङ्कोचं प्राप्नोतीव जुगुप्सत इत्यर्थः ।

**ततो निवृत्तः स निवृत्तहर्षः प्रध्यानयुक्तः प्रविवेश सद्म ।**
**तं द्विस्तथा प्रेक्ष्य च संनिवृत्तं पुर्यागमं भूमिपतिश्चकार ॥४८॥**

अन्वय —ततः, निवृत्तहर्षः ( अत एव ) निवृत्तः सः प्रध्यानयुक्तः (सन्) सद्म प्रविवेश । च भूमिपतिः तथा द्विः संनिवृत्तं तं प्रेक्ष्य पुरि आगमं चकार ।

व्याख्या—तत इति, ततः—तदनन्तरम् निवृत्तहर्षः—निवृत्तो निर्गतः, हर्षः आनन्दो यस्य सः, अत एव विहारयात्रायाः निवृत्तः विरतः, सः राजकुमारः, प्रध्यानयुक्तः प्रध्यानेन-चिन्तया, युक्तः आक्रान्तः, सन्, सद्म—प्रासादम्, प्रविवेश । किं च, भूमिपतिः-राजा, तथा—तेन प्रकारेण, द्विः[1] —वारद्वयम्, संनिवृत्तम्-यात्रायाः परावृत्तम्, तं राजकुमारम्, प्रेक्ष्य—विज्ञाय, पुरि-नगरे, आगमम्-आगमनं चकार ।

**श्रुत्वा निमित्तं तु निवर्तनस्य संत्यक्तमात्मानमनेन मेने ।**
**मार्गस्य शौचाधिकृताय चैव चुक्रोश रुष्टोऽपि च नोग्रदण्डः ॥४९॥**

अन्वय —( नृपतिः ) तु निवर्तनस्य निमित्तं श्रुत्वा आत्मानम् अनेन संत्यक्तं मेने । च मार्गस्य शौचाधिकृताय एव चुक्रोश, च रुष्टः अपि उग्रदण्डः न ( अभवत् )

व्याख्या—श्रुत्वेति—नृपतिस्तु निवर्तनस्य -राजकुमारस्य विहारयात्रायाः निवृत्तेः, निमित्तम् पथि नागरीर्णोर्गरुग्णजनदर्शनरूपं कारणम् श्रुत्वा-आकर्ण्य, आत्मानम्-स्वम्, अनेन-राजकुमारेण, वैराग्याद् हेतोः संत्यक्तम्-संत्यक्तुमारब्धम्, मेने-उत्प्रेक्षते स्म । किञ्च मार्गस्य-

---

1—द्विः-द्विशब्दात् सुच्प्रत्ययः ।

राजाध्वन, शौनानिकूनाग--शोचे अत्रकरानिरमन-दीनहीनजन यातायातनिवर्तनादिना स्वच्छतोत्पादने, अनिकृताय नियुक्ताय पुरुषायेव, चुक्रोश-आकृष्टवान्-वाग्भर्त्सना कृतवान्, किंच, रुष्टोऽपि-क्रुद्धोऽपि, राजा उग्रदण्ड-उग्रो भयङ्करो दण्डो यस्य तथाभूतो नाभवत्। कदाचिद् अपराधिषु विधीयमानमुग्रदण्ड दृष्ट्वा प्रकृत्या मृदू राजकुमारो राज्याद अधिक विरज्य प्रव्रजेत् इति राज्ञो-प्रदण्डता त्यक्तेति भाव।

**भूयश्च तस्मै विदधे सुताय विशेषयुक्त विषयप्रकारम्।**
**चलेन्द्रियत्वादपि नातिशक्तो नास्मान् विजह्यादिति नाथमान॥**

अन्वय — च (नृपति) अपि चलेन्द्रियत्वाद् नातिशक्त अस्मान् न विजह्याद् इति नाथमानः सन् तस्मै सुताय भूय. विशेषयुक्त विषयप्रकार विदधे।

व्याख्या--भूय इति-किं च, नृपति, अपीति सभावनायाम्, चलेन्द्रियत्वाद् चलानीन्द्रियाणि यस्य तस्य भावस्तस्माद् इन्द्रियलौल्याद्, नाति-शक्त प्रव्रजितुमनतिसमर्थ, राजकुमार अस्मान्, न विजह्यात्-न त्यजेत्, इति-नाथमान-आशासान सन्, तस्मै, सुताय-स्वपुत्राय, भूय-पुनरपि, विशेषयुक्तम्—सविशेषम्—पूर्वापेक्षयाधिकम् विषय प्रकारम्-विषयाणाम्—शब्दस्पर्शादिभोग्यसामग्रीणाम्, प्रकारं भेदम्, विदधे, विहितवान्। राजकुमारस्य प्रव्रज्यानिवृत्तये भूयसा विषयसामग्री सन्निधापयामासेति हृदयम्।

**यदा च शब्दादिभिरिन्द्रियार्थैरन्तःपुरे नैव सुतोऽस्य रेमे।**
**तदा बहिर्व्यादिशति स्म यात्रां रसान्तरं स्यादिति मन्यमान॥५१॥**

अन्वय.-च यदा अस्य सुत अन्तःपुरे शब्दादिभि इन्द्रियार्थै न रेमे, तदा रसान्तर स्याद् इति मन्यमान. (सन्) बहि यात्रा व्यादिशति स्म।

१—नैनेत्यादिवद नशब्दस्य समास.। २.-प्रकारो भेदसादृश्ये इत्यमर।

व्याख्या—यदेति, किं च यदा, अस्य राज्ञः, सुतः, राजकुमार इत्यर्थः, अन्तःपुरे-अवरोधे, शब्दादिभिः-शब्द-स्पर्श-रूप-रस-गन्धैः, इन्द्रियार्थैः-इन्द्रियाणाम्-श्रोत्र-त्वक्-चक्षुरादीनाम् अर्थैः-विषयैः, न रेमे-रतिं न प्राप। तदा, निरन्तरमेकविधमेव विषयरसमास्वादयतः कदाचित्ततो विरक्तिरुत्पद्यत इति हेतोः, रसान्तरम् अन्यो रसो रसान्तरम्-विभिन्न विषयास्वादः, स्यात् इति मन्यमानः, सन् बहिर्यात्राम्-मृगयादिनिमित्तं नगराद् बहिर्वनगमनम्, राजकुमारस्येति शेषः, व्यादिशति स्म-आज्ञापयति स्म।

**स्नेहाच्च भावं तनयस्य बुद्ध्वा**
**संवेगदोषानविचिन्त्य कांश्चित्।**
**योग्याः समाज्ञापयति स्म तत्र**
**कलास्वभिज्ञा इति वारमुख्याः ॥५२॥**

अन्वय-(किं) च (राजा) तनयस्य भावं बुद्ध्वा कांश्चित् संवेगदोषान् अविचिन्त्य स्नेहात् तत्र कलासु अभिज्ञाः इति योग्याः वारमुख्याः समाज्ञापयति स्म।

व्याख्या-स्नेहादिति-किं च, राजा, तनयस्य पुत्रस्य राजकुमारस्य, भावम्-अभिप्रायं निर्वेदलक्षणम्, बुद्ध्वा-ज्ञात्वा, कांश्चित्-कतिपयान्-अल्पान्, संवेगदोषान् संवेगो वैराग्यम्, तदुत्पादकान् दोषान् जीर्णरुग्णपुरुषदर्शनरूपान्, अविचिन्त्य अविगणय्य, स्नेहात् पुत्रवात्सल्यवशात्, तत्र-यात्रायाम्, कलासु-विविधहावभावरूपासु-वशीकरणकलासु, अभिज्ञाः-निपुणाः, इति हेतोः, योग्याः-चतुराः, वारमुख्याः-वारे वेश्यावृन्दे, मुख्याः-श्रेष्ठाः, वारस्त्रीरित्यर्थः, समाज्ञापयति स्म-नर्तनादिविधानाय प्रेरयति स्म।

**ततो विशेषेण नरेन्द्रमार्गे स्वलङ्कृते चैव परीक्षिते च।**
**अत्यास्य सूतं च रथं च राजा प्रस्थापयामास बहिः कुमारम् ॥५३॥**

अन्वयः—ततः च राजा नरेन्द्रमार्गे विशेषेण स्वलङ्कृते च परीक्षिते

---

१ मयूरव्यंसकादित्वात् समासः।

(सति) एव सूतं च रथं च अत्यास्य कुमारं बहिः प्रस्थापयामास ।

व्याख्या--तत इति--ततः वारवनिताजापनानन्तरं च, राजा-शुद्धोदनः, नरेन्द्रमार्गे राजपथे, विशेषेण-पूर्वापेक्षया वैलक्षण्येन, स्वलङ्कृते-सुष्ठुतया विभूषिते, च-पुनः, परीक्षिते संवेगहेतुजीर्णशीर्णजनसंपातं वारयितुं परितो निरीक्षिते सत्येव, सूतम्-सारथिं च, रथम्-स्यन्दनं च, अत्यास्य- आनाय्य, कुमारम् सर्वार्थसिद्धम्, बहिः-नगराद् बहिः, प्रस्थापयामास-प्रस्थातुं प्रेरयामास ।

**ततस्तथागच्छति राजपुत्रे तैरेव देवैर्विहितो गतासुः ।**
**तं चैव मार्गे मृतमुह्यमानं सूतः कुमारश्च ददर्श नान्यः ॥५४॥**

अन्वयः—ततः, राजपुत्रे तथा गच्छति (सति) तैः देवैः एव गतासुः विहितः । च मार्गे उह्यमानं तं मृतम् एव सूतः कुमारः च ददर्श, अन्यः न ददर्श ।

व्याख्या—तत इति, ततः-प्रस्थानानन्तरम्, राजपुत्रे-सर्वार्थसिद्धे, तथा-पूर्वेण प्रकारेण, गच्छति सति, तैः पूर्वोक्तैः, देवैरेव, कश्चिद् गतासुः गता असवः प्राणा यस्य स मृत इत्यर्थः, विहितः कल्पितः, अभूदिति शेषः । च पुनः, मार्गे, उह्यमानम्-अन्त्येष्टिसंस्कारार्थं पुरुषैर्नीयमानम्, तं पूर्वोक्तं मृतपुरुषम् एव, सूतः-सारथिः, कुमारः-सर्वार्थसिद्धश्च, ददर्श-दृष्टवान्, अन्यः-राजकुमारसूताभ्यामन्यः पुरुषः, न ददर्श । राजकुमारस्य वैराग्योत्पत्तय एव देवैर्मायया मृतपुरुषस्य कल्पनं कृतमिति सूतसहितस्य तस्यैव तद्दर्शनमुचितम् इति भावः ।

**अथाब्रवीद्राजसुतः स सूतं नरैश्चतुर्भिर्ह्रियते क एषः ।**
**दीनैर्मनुष्यैरनुगम्यमानो यो भूषितोऽश्वास्यवरुध्यते च ॥५५॥**

अन्वयः—अथ सः राजसुतः सूतम् अब्रवीत्, यः दीनैः मनुष्यैः अनुगम्यमानः भूषितः अश्वासी अवरुध्यते (सः) एषः कः चतुर्भिः नरैः ह्रियते ॥

व्याख्या—अथेति–अथ–मृतपुरपदर्शनानन्तरम्, म -दीनहीनजनदर्शनेन समुत्पन्नवैराग्याङ्कुर, राजसुत सर्वार्थसिद्ध., सनम्-स्वसारथिम्, अत्र वीत्-पप्रच्छेत्यर्थ.। यन्, यः दीनै -शोकाकुलै, मनुष्यै, अनुगम्यमान -अनुस्रियमाण भूषित माल्यादिभिरलङ्कृत, अस्वामी स्वामिविवर्जित मृत इति यावत्, अवरुध्यते-काष्ठोपरि बध्यते च, स. एष क चतुर्भि., नरैः, ह्रियते नीयते ?

**तत स शुद्धात्मभिरेव देवै शुद्धाधिवासैरभिभूतचेता ।**
**अवाच्यमप्यर्थमिमं नियन्ता प्रव्याजहारार्थविदीश्वराय ॥५६॥**

अन्वयः--तत. अर्थविद् नियन्ता शुद्धात्मभि शुद्धाधिवासै देवै एव अभिभूतचेता. (सन्) अवाच्यम् अपि इमम् अर्थम् ईश्वराय प्रव्याजहार ।

व्याख्या—तत इति–तत कुमारप्रश्नानन्तरम्, अर्थविद्-अर्थज्ञ. पण्डित, नियन्ता-सारथिः, शुद्धात्मभि -शुद्ध आत्मा येषा तै. विमलहृदय, शुद्धाधिवासै -शुद्ध. पापवर्जित.,स्वर्ग, अधिवास वासस्थान येषा ते, देवैरेव, अभिभूतचेता -अभिभूतम् आक्रान्तं वशीकृतम्, चेत - हृदयम् यस्य तादृशः सन्, अवाच्यम्-अप्रकाश्यमपि, इमम्- वक्ष्यमाणम्, अर्थम्, ईश्वराय-स्वस्वामिने राजकुमाराय, प्रव्याजहार उक्तवान् ।

**बुद्धीन्द्रियप्राणगुणैर्वियुक्त. सुप्तो विसञ्ज्ञस्तृणकाष्ठभूत. ।**
**संवर्ध्य संरक्ष्य च यत्नवद्भि. प्रियाप्रियैस्त्यज्यत एष कोऽपि ॥५७॥**

अन्वय -बुद्धीन्द्रियप्राणगुणै वियुक्त सुप्त विसञ्ज्ञ तृणकाष्ठभूत एष क अपि (नर) यत्नवद्भि प्रियाप्रियै संवर्ध्य संरक्ष्य च त्यज्यते ।

व्याख्या–बुद्धीति–बुद्धीन्द्रियप्राणगुणै -बुद्धेरिन्द्रियाणि बुद्धीन्द्रियाणि ज्ञानेन्द्रियाणि चक्षुरादीनि, प्राणा -प्राणापानादयः पञ्च प्राणा. तेषा गुणाः शब्दादिविषयग्रहण निःश्वासोच्छ्वासादयश्च, तै, वियुक्तः- विरहित, सुप्तः सुप्तिमुपगत इव विसञ्ज्ञ विगता सञ्ज्ञा चैतन्य यस्य तादृश, अतएव तृणकाष्ठभूत -तृणकाष्ठवद् अचेष्ट, एष -

पुरो दृश्यमान, कोपि-अस्माभिरपरिचित, नरः, यत्नवाद्भि -सयत्नं, प्रियाप्रियै -प्रिया -बन्धुसुहृद्बान्धवा, अप्रिया शत्रवः, तैरुभयैरपि, सबध्य-शवशिबिकाया रज्ज्वा बद्ध्वा, सरक्ष्य-क्रव्यादादिभ्यो रक्षित्वा च, त्यज्यते श्मशाने त्यक्ष्यते-इत्यर्थ, वर्तमानसमीपे भविष्यति लट् ।

**इति प्रणेतुः स निशम्य वाक्य सचुक्षुभे किंचिदुवाच चैनम् ।**
**एकाकिनस्त्वेव जनस्य नाशः सर्वप्रजानामयमीदृशोन्तः ॥५८॥**

अन्वय –सः प्रणेतु इति वाक्य निशम्य सचुक्षुभे, च एनम् किंचिद् उवाच, तु एकाकिन एव जनस्य नाश ? ( अथवा ) सर्वप्रजानाम अयम् ईदृशःअन्तः ?

व्याख्या–इतीति–स -राजकुमार, प्रणेतु -सारथेः, इति-पूर्वोक्तम्, वाक्यम्, निशम्य-श्रुत्वा, सचुक्षुभे-सचलितहृदयो बभूव । च-पुन, एनम्-सारथिम्, किंचिद्, उवाच-पप्रच्छेत्यर्थ, किं तु एकाकिन -केवलस्यास्यैव, जनस्य-पुरुषस्य, अय नाश, अथवा. सर्वप्रजानाम्-सर्वेषां प्राणिनाम्, अयम्, पुरो दृश्यमान, ईदृशः-एवविध, अन्त.-विनाशः, भवति, [1]

**ततः प्रणेता वदति स्म तस्मै सर्वप्रजानामयमन्तकर्ता ।**
**हीनस्य मध्यस्य महात्मनो वा सर्वस्य लोके नियतो विनाशः ॥५९॥**

अन्वय –तत. प्रणेता तस्मै वदति स्म, अय सर्वप्रजानाम् अन्तकर्ता (अस्ति) लोके हीनस्य मध्यस्य वा महात्मनः सर्वस्य विनाशः नियतः ।

व्याख्या–तत -राजकुमारप्रश्नानन्तरम्, प्रणेता सारथिः, तस्मै-राजसूनवे, वदति स्म–प्रत्युवाच । अयम्-मृत्यु, सर्वप्रजानाम्-सर्वेषा प्राणभृताम्, अन्तकर्ता-विनाशकः, अस्ति । लोके-ससारे, हीनस्य-अधमस्य, मध्यस्य-मध्यमस्थितिकस्य वा, महात्मन - उत्तमपुरुषस्य, सर्वस्यापि, विनाश -मरणम्, नियतः-अवश्यभावी ।

---

१–एकाकिनचासहाये ।

**ततः स धीरोऽपि नरेन्द्रसूनुः श्रुत्वैव मृत्युं विषसाद सद्यः ।**
**असेन सश्लिष्य च कूबराग्रं प्रोवाच निर्ह्रादवता स्वरेण ॥६०॥**

अन्वयः—ततः धीरः अपि सः नरेन्द्रसूनुः मृत्युं श्रुत्वा एव सद्यः विषसाद । च कूबराग्रम् असेन सश्लिष्य निर्ह्रादवता स्वरेण प्रोवाच ।

व्याख्या—तत इति, ततः—सारथिप्रतिवचनश्रवणमनन्तरम्, धीरः-धैर्यवानपि, सः, नरेन्द्रसूनुः-राजपुत्रः सर्वार्थसिद्धः, मृत्युम्-मरणम्, श्रुत्वैव, सद्यः—तत्कालमेव, विषसाद-विषण्णो बभूव । च-पुनः कूबराग्रम्-कूबरस्य-रथयुगाधारस्य काष्ठस्य, अग्रम्-अग्रभागम्, असेन-स्कन्धेन, सश्लिष्य-अवलम्ब्य, निर्ह्रादवता-निर्ह्रादः घोषस्तद्वता गम्भीरेणेत्यर्थः, स्वरेण, प्रोवाच ।

**इयं च निष्ठा नियतं प्रजानां प्रमाद्यति त्यक्तभयश्च लोकः ।**
**मनांसि शङ्के कठिनानि नृणां स्वस्थास्तथा ह्यध्वनि वर्तमानाः ॥६१॥**

अन्वयः—प्रजानाम् नियतम् इयं निष्ठा च, लोकः त्यक्तभयः [सन्] प्रमाद्यति च, (अहं) नृणां मनांसि कठिनानि शङ्के, तथाहि (ते) स्वस्थाः (सन्तः) अध्वनि वर्तमानाः [सन्ति]

व्याख्या—इदमिति, प्रजानाम्-प्राणभृताम्, नियतम् अवश्यभाविनी, इयम्-पुरो दृश्यमाना, निष्ठा-मरणलक्षणं पर्यवसानम् च, लोकः-जनः, त्यक्तभयः-निर्भीकः सन् प्रमाद्यति च—प्रमादं करोति न मनागप्यवधत्ते । इत्यहो आश्चर्यम् । अहं नृणाम् जनानाम्, मनांसि-हृदयानि, कठिनानि कठोराणि मरणाघातसहिष्णूनि, शङ्के तर्कयामि, तथाहि-यतश्च, ते स्वस्थाः विगतचिन्ताः सन्तः, अध्वनि-संसारमार्गे स्वस्वकर्मणि, वर्तमानाः-निरताः, सन्तीतिशेषः ।

**तस्माद्रथः सूत ! निवर्त्यतां नो विहारयोग्यो न हि देशकालो ।**
**जानन् विनाशं कथमार्तिकाले सचेतनः स्यादिह हि प्रसक्तः ॥६२॥**

अन्वयः—तस्माद् (हे) सूत ! नः रथः निवर्त्यताम्, हि देशकालौ विहारयोग्यौ न (स्तः) सचेतनः विनाशं जानन् (अपि) आर्तिकाले कथम् इह प्रसक्तः स्यात् ।

व्याख्या—तस्मादिति, तस्मात्-सर्वासां प्रजानामन्तवत्त्वाद् हेतोः, हे सारथे, नः-अस्माकम्, रथः-स्यन्दनम्, निवर्त्यताम्-परावर्त्यताम्, हि-यतः,-देशकालौ-देशः कालश्च, विहारयोग्यौ-रमणोचितौ, न स्तः । सचेतनः चेतनया सह वर्तमानः पुरुषः, विनाशम् मरणम्, जानन्, अपि, आर्तिकाले आर्तिर्दुःखम्, तस्याः काले दुःखानुभवावसर इत्यर्थः, कथम्, केन प्रकारेण, न कथमपीत्यर्थः, इह विषयेषु, प्रसक्तः—आसक्तचित्तः, स्यात् ।

**इति ब्रुवाणेऽपि नराधिपात्मजे निवर्तयामास स नैव तं रथम् ।**
**विशेषयुक्तं तु नरेन्द्रशासनात् सपद्मखण्डं वनमेव निर्ययौ ॥६३॥**

अन्वयः—नराधिपात्मजे इति ब्रुवाणेऽपि स तं रथं न एव निवर्तयामास, तु नरेन्द्रशासनात् विशेषयुक्तं सपद्मखण्डं वनं निर्ययौ एव ।

व्याख्या—इतीति, नराधिपात्मजे-नराधिपस्य राज्ञः, आत्मजे तनये सर्वार्थसिद्धे, इति पूर्वोक्तम्, ब्रुवाणे-कथयत्यपि सति, सः-सारथिः, तम्-राजकुमारवाहिनम्, रथम्, नैव, निवर्तयामास परावर्तयामास । किंतु, नरेन्द्रशासनाद् नरेन्द्रस्य राज्ञः शुद्धोदनस्य, शासनाद्-आज्ञया, विशेषयुक्तम्-विशेषेण सुषमातिरेकेण युक्तम्, सपद्मखण्डम्-पद्मानां कमलानां खण्डेन समूहेन सह वर्तमानम्, वनम्-उपवनम्, निर्ययौ-निर्जगामैव ।

**ततः शिवं कुसुमितबालपादपं परिभ्रमत्प्रमुदितमत्तकोकिलम् ।**
**निपानवत् सकमलचारुदीर्घिकं ददर्श तद् वनमिव नन्दनं वनम् ॥६४॥**

अन्वयः—ततः (सः) कुसुमितबालपादपं परिभ्रमत्प्रमुदितमत्तकोकिलं निपानवत् सकमलचारुदीर्घिकम् (अत एव) नन्दनं वनमिव शिवं तद् वनं ददर्श ।

व्याख्या—ततइति, ततः, सः-राजकुमारः, कुसुमितबालपादपम्-कुसुमिताः सञ्जातपुष्पाः बालाः पादपाः वृक्षाः यत्र तादृशम्, परिभ्रमत्प्रमुदितमत्तकोकिलम्-परिभ्रमन्तः परितः उड्डीयमानाः, प्रमुदिताः हृष्टाः मत्ताः प्राप्तमदाः कोकिलाः पिकाः यत्र तथाभूतम्, निपानवत् निपानम्-

उपकूपजलाशय , विद्यते यस्मिन् तादृशम्, सकमलचारुदीर्घिकम्- सकमलाः कमलसहिताः,चारवो मनोज्ञा ,दीर्घिका वाप्यो यत्र तत अत एव नन्दनम्-नन्दनाख्यम्,वनमिव-सुरकाननमिव, शिवम्- सुखदम् तद्, वनम्, ददर्श-अवलोकयामास ।

**वराङ्गनागणकलितनृपात्मजस्ततो बलाद्वनमभिनीयते स्म तत् ।**
**वराप्सरोऽन्वितमलकाधिपालयं नवव्रतो मुनिरिव विघ्नकातरः॥६५**

**अन्वय.--ततः नृपात्मजः वराङ्गनागणकलित तद् वनम् वराप्सरोन्वितम् अलकाधिपालयम् नवव्रत ( अत एव ) विघ्नकातर मुनिरिव बलाद् अभिनीयते स्म ।**

व्याख्या- वराङ्गनेति, ततः-दूराद् वनदर्शनानन्तरम्, नृपात्मज राजकुमार., वराङ्गनागणकलितम्-वराङ्गनाना सुन्दरस्त्रीणाम्, गण समूहै कलित युक्तम् तद् वनम्, वराप्सरोन्वितम्-वराप्सरोऽभि श्रेष्ठ-स्वर्गसुन्दरीभि , आन्वितम् युक्तम्, अलकाधिपालयम्-अलकाधिपस्य कुबेरस्य,आलय भवनम्, नवव्रत -नव नूतन व्रत नियमो यस्य स , अत एव विघ्नकातर विघ्नभीत , मुनिरिव, बलाद्-बलपूर्वकम्, अभिनीयते स्म-प्रवेश्यते स्मेत्यर्थ ।

**इति श्रीमदश्वघोषकविविरचिते सटीके बुद्धचरिते**
**तृतीयः सर्गः ।**

# नूतन शिवराजविजय पताका

आप यह जानकर परम हर्षित होंगे कि कवितार्किक पं० नृसिंहदेव जी शास्त्री दर्शनाचार्य जिनके अनर्गल सरल तथा छात्रहितकारी उपयुक्त लेख की महिमा आप लोगों से भूली हुई नहीं होगी, उन्होंने महाकवि साहित्याचार्य अम्बिकादत्त व्यास जी के बनाए हुए " शिवराजविजय " नामक गम्भीर और वीररस प्रधान गद्य काव्य की "नूतन शिवराजविजय पताका" नामक टीका बड़े परिश्रम से रची है और वह बहुत सा धन लगने पर अब छप कर तय्यार होगई है। इस टीका में गुण, दोष, अलङ्कार, रीति आदि साहित्य के उपयुक्त विषयों को कठिन स्थलों पर भले प्रकार स्पष्ट कर दिया गया है जिससे अनिर्दिष्ट स्थल पर भी स्वयं विद्यार्थी गुण दोषादि को समझ सकें। उपयुक्त स्थलों पर व्याकरण की छटा भी भले प्रकार दर्शाई गई है। कोषादि के प्रमाण से भी अर्थ का वैशद्य कर दिया गया है, टीका ऐसी सरल बनाई गई है कि प्रत्येक विद्यार्थी सहज में समझ सके। परीक्षा में उत्तीर्ण होने की इच्छा रखने वाले विद्यार्थी कृपया शीघ्र इससे लाभ उठावें। पृष्ठ संख्या २७५ के लगभग। मूल्य २॥)